न्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति । सोऽविमुक्तः कस्मिन्प्रतिष्ठित इति वरणायां नास्यां च मध्ये प्रतिष्ठित इति । का वै वरणा का च नासीति सर्वानिन्द्रियकृतान्दोषान्वारयतीति तेन वरणा भवति सर्वानिन्द्रियकृतान्पापान्नाशयतीति तेन नासी भवतीति ॥ कतमच्चास्य स्थानं भवतीति । भ्रुवोर्घ्राणस्य च यः संधिः स एष द्यौर्लोकस्य परस्य च संधिर्भवतीति ॥ एतद्वै संधिं संध्यां ब्रह्मविद उपासत इति सोऽविमुक्त उपास्य इति । सोऽविमुक्तं ज्ञानमाचष्टे यो वै तदेतदेवं वेदेति ॥ २ ॥

इति जाबालोपनिषत्सु द्वितीयः खण्डः ॥ २ ॥

अथ हैनं ब्रह्मचारिण ऊचुः किं जाप्येनामृतत्वं ब्रूहीति ॥ स होवाच याज्ञवल्क्यः शतरुद्रियेणेत्येतानि ह वा अमृतनामधेयान्येतैर्ह वा अमृतो भवतीति ॥ एवमेवतद्याज्ञवल्क्यः ॥ ३ ॥

इति जाबालोपनिषत्सु तृतीयः खण्डः ॥ ३ ॥

अथ ह जनको ह वैदेहो याज्ञवल्क्यमुपसमेत्योवाच भगवन् संन्यासमनुब्रूहीति ॥ स होवाच याज्ञवल्क्यो ब्रह्मचर्यं समाप्य गृही भवेत्, गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत् ॥ यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा ॥ अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वा उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत् ॥ तद्धैके प्राजापत्यामेवेष्टिं कुर्वन्ति ॥ तदु तथा न कुर्यादाग्नेयीमेव कुर्यात् ॥ अग्निर्हि वै प्राणः प्राणमेवैतया करोति पश्चात्त्रैधातवीयामेव कुर्यात् ॥ एतयैव त्रयो धातवो यदुत सत्त्वं रजस्तम इति ॥ अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ॥ तं जानन्नग्न आरोहाथा नो वर्धय रयिम् इत्यनेन मन्त्रेणाग्निमाजिघ्रेत् ॥ एष वा अग्नेर्योनिर्यः प्राणः प्राणं गच्छ स्वाहेत्येवमेवैतदाह ॥ ग्रामादग्निमाहृत्य पूर्ववदग्निमाघ्रापयेत् ॥ यद्यग्निं न विन्देदप्सु जुहुयात् ॥ आपो वै सर्वा देवताः । ॐसर्वाभ्यो देवताभ्यो जुहोमि स्वाहेति हुत्वा समुद्धृत्य प्राश्नीयात्साज्यं हविरनामयं मोक्षमन्त्रस्त्रय्येवं विन्देत् ॥ तद्ब्रह्मैतदुपासितव्यम् ॥ एवमेवैतद्भगवन्निति वै याज्ञवल्क्यः ॥ ४ ॥

इति जाबालोपनिषत्सु चतुर्थः खण्डः ॥ ४ ॥

अथ हैनमत्रिः पप्रच्छ ॥ याज्ञवल्क्य पृच्छामि त्वा याज्ञवल्क्य अयज्ञोपवीती कथं ब्राह्मण इति ॥ स होवाच याज्ञवल्क्य इदमेवास्य तद्यज्ञोपवीतं य आत्मा प्राश्याचम्यायं विधिः परिव्राजकानाम् ॥ वीराध्वाने वाऽनाशके वाऽपां

प्रवेशे वाऽग्निप्रवेशे वा महाप्रस्थाने वाऽथ परिव्राड् विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति ॥ यद्यातुरः स्यान्मनसा वाचा वा संन्यसेत ॥ एष पन्था ब्रह्मणा हानुवित्तस्तेनेति संन्यासी ब्रह्म विदित्यैवमेवैष भगवन्निति वै याज्ञवल्क्यः ॥ ५ ॥

इति जाबालोपनिषत्सु पञ्चमः खण्डः ॥ ५ ॥

तत्र परमहंसा नाम संवर्तकारुणिश्वेतकेतुदुर्वासऋभुनिदाघजडभरतदत्तात्रेयरैवतकप्रभृतयोऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तस्त्रिदण्डं कमण्डलुं शिक्यं पात्रं जलपवित्रं शिखां यज्ञोपवीतं चेत्येतत्सर्वं भूः स्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेत् ॥ यथा जातरूपधरो निर्द्वन्द्वो निष्परिग्रहस्तत्त्वब्रह्ममार्गे सम्यक्संपन्नः शुद्धमानसः प्राणसंधारणार्थं यथोक्तकाले विमुक्तो भैक्षमाचरन्नुदरपात्रेण लाभालाभौ समौ भूत्वा शून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रनदीपुलिनगिरिकुहरकन्दरकोटरनिर्झरस्थण्डिलेष्वनिकेतवास्यप्रयत्नो निर्ममः शुक्लध्यानपरायणोऽध्यात्मनिष्ठोऽशुभकर्मनिर्मूलनपरः संन्यासेन देहत्यागं करोति स परमहंसो नाम स परमहंसो नामेति ॥ ६ ॥

इति जाबालोपनिषत्सु षष्ठः खण्डः ॥ ६ ॥

ॐ पूर्णमद इति शान्तिः ॥

इत्यथर्ववेदे जाबालोपनिषत्समाप्ता ॥ १४ ॥

---

## हंसोपनिषत् ॥ १५ ॥

हंसाख्योपनिषत्प्रोक्तनादादिर्यत्र विश्रमेत् ।
तदाधारं निराधारं ब्रह्ममात्रमहं महः ॥

ॐ पूर्णमद इति शान्तिः ॥

ॐ गौतम उवाच । भगवन्सर्वधर्मज्ञ सर्वशास्त्रविशारद । ब्रह्मविद्याप्रबोधो हि केनोपायेन जायते ॥ १ ॥ सनत्सुजात उवाच । विचार्य सर्ववेदेषु मतं ज्ञात्वा पिनाकिनः । पार्वत्या कथितं तत्त्वं श्रृणु गौतम तन्मम ॥ २ ॥ अनाख्येयमिदं गुह्यं योगिनां कोशसंनिभम् । हंसस्य गतिविस्तारं भुक्तिमुक्तिफलप्रदम् ॥ ३ ॥ अथ हंसपरमहंसनिर्णयं व्याख्यास्यामः । ब्रह्मचारिणे शान्ताय दान्ताय गुरुभक्ताय । हंसहंसेति सदाऽयं सर्वेषु देहेषु व्याप्तो वर्तते ॥

यथा ह्यग्निः काष्ठेषु तिलेषु तैलमिव तं विदित्वा न मृत्युमत्येति । गुदमवष्टभ्याधाराद्वायुमुत्थाप्य स्वाधिष्ठानं त्रिः प्रदक्षिणीकृत्य मणिपूरकं गत्वा अनाहतमतिक्रम्य विशुद्धौ प्राणान्निरुध्याज्ञामनुध्यायन्ब्रह्मरन्ध्रं ध्यायन् त्रिमात्रोऽहमित्येवं सर्वदा ध्यायन्नथो नादमाधाराद्ब्रह्मरन्ध्रपर्यन्तं शुद्धस्फटिकसंकाशं स वै ब्रह्म परम त्मेत्युच्यते ॥ १ ॥ अथ हंस ऋषिः, अव्यक्तगायत्री छन्दः । परमहंसो देवता । हमिति बीजम् । स इति शक्तिः । सोऽहमिति कीलकम् । षट्संख्यया अहोरात्रयोरेकविंशतिसहस्राणि षट्शतान्यधिकानि भवन्ति । सूर्याय सोमाय निरञ्जनाय निराभासाय तनुसूक्ष्म प्रचोदयादिति अग्नीषोमाभ्यां वौषट् हृदयाद्यङ्गन्यासकरन्यासौ भवतः । एवं कृत्वा हृदयेऽष्टदले हंसात्मानं ध्यायेत् । अग्नीषोमौ पक्षावोंकारः शिरो बिन्दुस्तु नेत्रं मुखं रुद्रो रुद्राणी चरणौ बाहू कालश्चाग्निश्चोभे पार्श्वे भवतः । पश्यत्यनागारश्च शिष्टोभयपार्श्वे भवतः । एषोऽसौ परमहंसो भानुकोटिप्रतीकाशो येनेदं व्याप्तम् । तस्याष्टधा वृत्तिर्भवति । पूर्वदले पुण्ये मतिः आग्नेये निद्रालस्यादयो भवन्ति याम्ये क्रूरे मतिः नैरृत्ये पापे मनीषा वारुण्यां क्रीडा वायव्ये गमनादौ बुद्धिः सौम्ये रतिप्रीतिः ईशाने द्रव्यादानं मध्ये वैराग्यं केसरे जाग्रदवस्था कर्णिकायां स्वप्नं लिङ्गे सुषुप्तिः पद्मत्यागे तुरीयं यदा हंसो नादे लीनो भवति तदा तुर्यातीतमुन्मननमजपोपसंहारमित्यभिधीयते । एवं सर्वं हंसवशात्तस्मान्मनो विचार्यते । स एव जपकोट्यां नादमनुभवति एवं सर्वं हंसवशान्नादो दशविधो जायते । चिणीति प्रथमः । चिञ्चिणीति द्वितीयः । घण्टानादस्तृतीयः । शङ्खनादश्चतुर्थम् । पञ्चमस्तन्त्रीनादः । षष्ठस्तालनादः । सप्तमो वेणुनादः । अष्टमो मृदङ्गनादः । नवमो भेरीनादः । दशमो मेघनादः । नवमं परित्यज्य दशममेवाभ्यसेत् । प्रथमे चिञ्चिणीगात्रं द्वितीये गात्रभञ्जनम् । तृतीये खेदनं याति चतुर्थे कम्पते शिरः ॥ पञ्चमे स्रवते तालु षष्ठेऽमृतनिषेवणम् । सप्तमे गूढविज्ञानं परा वाचा तथाऽष्टमे ॥ अदृश्यं नवमे देहं दिव्यचक्षुस्तथाऽमलम् । दशमं परमं ब्रह्म भवेद्ब्रह्मात्मसंनिधौ ॥ तस्मिन्मनो विलीयते मनसि संकल्पविकल्पे दग्धे पुण्यपापे सदाशिवः शक्त्यात्मा सर्वत्रावस्थितः स्वयंज्योतिः शुद्धो बुद्धो नित्यो निरञ्जनः शान्तः प्रकाशत इति ॥ ॐ वेदप्रवचनं वेदप्रवचनमिति ॥ २ ॥ ॐ पूर्णमद इति शान्तिः ॥

इत्यथर्ववेदे हंसोपनिषत्समाप्ता ॥ १५ ॥

---

# आरुणिकोपनिषत् ॥ १६ ॥

आरुणिकाख्योपनिषत्ख्यातसंन्यासिनोऽमलाः ।
यत्प्रबोधाद्यान्ति मुक्तिं तद्रामब्रह्म मे गतिः ॥

ॐ आप्यायन्त्विति शान्तिः ॥

ॐ आरुणिः प्रजापतेर्लोकं जगाम । तं गत्वोवाच । केन भगवन्कर्माण्यशेषतो विसृजानीति । तं होवाच प्रजापतिस्तव पुत्रान्भ्रातॄन्बन्ध्वादीञ्छिखां यज्ञोपवीतं च यागं च सूत्रं च स्वाध्यायं च भूर्लोकभुवर्लोकस्वर्लोकमहर्लोकजनलोकतपोलोकसत्यलोकं चातलपातालवितलसुतलरसातलतलातलमहातलब्रह्माण्डं च विसर्जयेद्दण्डमाच्छादनं चैव कौपीनं च परिग्रहेत् । शेषं विसृजेदिति ॥ १ ॥ गृहस्थो ब्रह्मचारी वानप्रस्थो वा लौकिकाग्नीनुदराग्नौ समारोपयेत् । गायत्रीं च स्ववाचाग्नौ समारोपयेदुपवीतं भूमावप्सु वा विसृजेत् । कुटीचरो ब्रह्मचारी कुटुम्बं विसृजेत् । पात्रं विसृजेत् । पवित्रं विसृजेत् । दण्डांश्च लौकिकाग्नींश्च विसृजेदिति होवाच । अत ऊर्ध्वममन्त्रवदाचरेत् । ऊर्ध्वगमनं विसृजेत् । त्रिसंध्यादौ स्नानमाचरेत् । संधिं समाधावात्मन्याचरेत् । सर्वेषु वेदेष्वारण्यकमावर्तयेदुपनिषदमावर्तयेदुपनिषदमावर्तयेदिति ॥ २ ॥ खल्वहं ब्रह्म सूत्रं सूचनात्सूत्रं ब्रह्म सूत्रमहमेव विद्वांस्त्रिवृत्सूत्रं त्यजेद्विद्वान्य एवं वेद संन्यस्तं मया संन्यस्तं मया संन्यस्तं मयेति त्रिः कृत्वाऽभयं सर्वभूतेभ्यो मत्तः सर्वं प्रवर्तते । सखा मा गोपायौजः सखायोऽसीन्द्रस्य वज्रोऽसि वार्त्रघ्नः शर्म मे भव यत्पापं तन्निवारयेति । अनेन मन्त्रेण कृतं वैणवं दण्डं कौपीनं परिग्रहेदौषधवदशनमाचरेदौषधवदशनमाचरेत् । ब्रह्मचर्यमहिंसां चापरिग्रहं च सत्यं च यत्नेन हे रक्षतो३ हे रक्षतो३ हे रक्षत इति ॥ ३ ॥ अथातः परमहंसपरिव्राजकानामासनशयनादिकं भूमौ ब्रह्मचारिणां मृत्पात्रं वाऽलाबुपात्रं दारुपात्रं वा कामक्रोधहर्षरोषलोभमोहदम्भदर्पासूयाममत्वाहंकारादीनपि त्यजेत् । वर्षासु ध्रुवशीलोऽष्टौ मासानेकाकी यतिश्चरेत् द्वावेव वा चरेद्द्वावेव वा चरेदिति ॥ ४ ॥ खलु वेदार्थं यो विद्वान्सोपनयनादूर्ध्वमेतानि प्राग्वा त्यजेत् । पितरं पुत्रमग्न्युपवीतं कर्म कलत्रं चान्यदपीह यतयो भिक्षार्थं ग्रामं प्रविशन्ति पाणिपात्रमुदरपात्रं वा । ॐ हि ॐ हि ॐ हीत्येतदुपनिषदं विन्यसेत् ॥ खल्वेतदुपनिषदं विद्वान्य एवं वेद पालाशं बैल्वमौदुम्बरं दण्डमजिनं मेखलां यज्ञोपवीतं च त्यक्त्वा शूरो य एवं वेद । तद्विष्णोः

परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदमिति । एवं निर्वाणानुशासनं वेदानुशासनं वेदानुशासनमिति ॥ ५ ॥ ॐ आप्यायन्त्विति शान्तिः ॥

इत्यथर्ववेदीयारुणिकोपनिषत्समाप्ता ॥ १६ ॥

---

# गर्भोपनिषत् ॥ १७ ॥

यद्गर्भोपनिषद्वेद्यं गर्भस्य स्वात्मबोधकम् ।
शरीरापह्नवात्सिद्धं स्वमात्रं कलये हरिम् ॥
ॐ स ह नाववत्विति शान्तिः ॥

ॐ पञ्चात्मकं पञ्चसु वर्तमानं षडाश्रयं षड्गुणयोगयुक्तम् ॥ तत्सप्तधातु त्रिमलं द्वियोनि चतुर्विधाहारमयं शरीरम् ॥ भवति पञ्चात्मकमिति कस्मात्, पृथिव्यापस्तेजोवायुराकाशमित्यस्मिन्पञ्चात्मके शरीरे । का पृथिवी का आपः किं तेजः को वायुः किमाकाशम् । तत्र यत्कठिनं सा पृथिवी यद्द्रवं ता आपो यदुष्णं तत्तेजो यत्संचरति स वायुः यत्सुषिरं तदाकाशमित्युच्यते ॥ तत्र पृथिवी नाम धारणे आपः पिण्डीकरणे तेजः प्रकाशने वायुर्व्यूहने आकाशमवकाशप्रदाने ॥ पृथुस्तु श्रोत्रे शब्दोपलब्धौ त्वक् स्पर्शे चक्षुषी रूपे जिह्वा रसने नासिकाऽऽघ्राणे उपस्थश्चानन्दनेऽपानमुत्सर्गे बुद्ध्या बुध्यति मनसा संकल्पयति वाचा वदति ॥ षडाश्रयमिति कस्मात्, मधुराम्ललवणतिक्तकटुकषायरसान्विन्दते ॥ षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाश्चेति । इष्टानिष्टा शब्दसंज्ञाप्रणिधानाद्दशविधा भवन्ति ॥ १ ॥ शुक्लो रक्तः कृष्णो धूम्रः पीतः कपिलः पाण्डुर इति ॥ सप्तधातुकमिति कस्मात्, यथा देवदत्तस्य द्रव्यादिविषया जायन्ते॥ परस्परं सौम्यगुणत्वात्षड्विधो रसो रसाच्छोणितं शोणितान्मांसं मांसान्मेदो मेदसः स्नावा स्नाव्नोऽस्थीन्यस्थिभ्यो मज्जा मज्ज्ञः शुक्रं शुक्रशोणितसंयोगादावर्तते गर्भो हृदिव्यवस्थानीति । हृदयेऽन्तराग्निः अग्निस्थाने पित्तं पित्तस्थाने वायुः वायुस्थाने हृदयं प्राजापत्यात्क्रमात् ॥ २ ॥ ऋतुकाले संप्रयोगादेकरात्रोषितं कलिलं भवति सप्तरात्रोषितं बुद्बुदं भवति अर्धमासाभ्यन्तरेण पिण्डो भवति मासाभ्यन्तरेण कठिनो भवति मासद्वयेन शिरः संपद्यते मासत्रयेण पादप्रदेशो भवति ॥ अथ चतुर्थे मासेऽङ्गुल्यजठरकटिप्रदेशो भवति ॥

पञ्चमे मासे पृष्ठवंशो भवति ॥ षष्ठे मासे मुखनासिकाक्षिश्रोत्राणि भवन्ति ॥ सप्तमे मासे जीवेन संयुक्तो भवति ॥ अष्टमे मासे सर्वसंपूर्णो भवति ॥ पितू रेतोऽतिरिक्तात्पुरुषो भवति मातू रेतोऽतिरिक्तात्स्त्रियो भवन्त्युभयोर्बीजतुल्यत्वान्नपुंसको भवति ॥ व्याकुलितमनसोऽन्धाः खञ्जाः कुब्जा वामना भवन्ति ॥ अन्योन्यवायुपरिपीडितशुक्रद्वैध्याद्द्विधा तनूः स्यात्ततो युग्माः प्रजायन्ते ॥ पञ्चात्मकः समर्थः पञ्चात्मिका चेतसा बुद्धिर्गन्धरसादिज्ञाना ध्यानात्क्षरमक्षरं मोक्षं चिन्तयतीति । तदेकाक्षरं ज्ञात्वाऽष्टौ प्रकृतयः षोडश विकाराः शरीरे तस्यैव देहिनाम् ॥ अथ मात्राऽशितपीत नाडीसूत्रगतेन प्राण आप्यायते ॥ अथ नवमे मासि सर्वलक्षणसंपूर्णो भवति पूर्वजातीः स्मरति कृताकृतं च कर्म भवति शुभाशुभं च कर्म विन्दति ॥ ३ ॥ नानायोनिसहस्राणि दृष्ट्वा चैव ततो मया ॥ आहारा विविधा भुक्ताः पीताश्च विविधाः स्तनाः ॥ जातस्यैव मृतस्यैव जन्म चैव पुनः पुनः ॥ अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम् ॥ यन्मया परिजनस्यार्थे कृतं कर्म शुभाशुभम् ॥ एकाकी तेन दह्यामि गतास्ते फलभोगिनः ॥ यदि योन्यां प्रमुञ्चामि सांख्यं योगं वा समाश्रये ॥ अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् ॥ यदि योन्यां प्रमुच्यामि तं प्रपद्ये महेश्वरम् ॥ अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् ॥ यदि योन्यां प्रमुञ्चामि तं प्रपद्ये भगवन्तं नारायणं देवम् । अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् ॥ यदि योन्यां प्रमुञ्चामि ध्याये ब्रह्म सनातनम् ॥ अथ जन्तुः स्त्रीयोनिशतं योनिद्वारि संप्राप्तो यन्त्रेणापीड्यमानो महता दुःखेन जातमात्रस्तु वैष्णवेन वायुना संस्पृश्य तदा न स्मरति जन्ममरणं न च कर्म शुभाशुभम् ॥ ४ ॥ शरीरमिति कस्मात् , साक्षादग्नयो ह्यत्र श्रियन्ते ज्ञानाग्निर्दर्शनाग्निः कोष्ठाग्निरिति ॥ तत्र कोष्ठाग्निर्नामाशितपीतलेह्यचोष्यं पचतीति ॥ दर्शनाग्नी रूपादीनां दर्शनं करोति ॥ ज्ञानाग्निः शुभाशुभं च कर्म विन्दति यस्तत्र ॥ त्रीणि स्थानानि भवन्ति हृदये दक्षिणाग्निरुदरे गार्हपत्यं मुखादाहवनीयात्मा यजमानो बुद्धिः पत्नीं मनो ब्रह्मा निधाय लोभादयः पशवो धृतिर्दीक्षा संतोषश्च बुद्धीन्द्रियाणि यज्ञपात्राणि कर्मेन्द्रियाणि हवींषि शिरः कपालं केशा दर्भा मुखमन्तर्वेदिः, चतुष्कपालं शिरः षोडश पार्श्वदन्तोष्ठपटलानि सप्तोत्तरं मर्मशतं साशीतिकं संधिशतं सनवकं स्नायुशतं सप्त शिराशतानि पञ्च मज्जाशतानि अस्थीनि च ह वै त्रीणि शतानि षष्टिश्चार्धचतस्रो रोमाणि कोट्यो हृदयं पलान्यष्टौ द्वादश पलानि जिह्वा पित्तप्रस्थं

कफस्याढकं शुक्लं कुडवं मेदः प्रस्थौ द्वावनियतं मूत्रपुरीषमाहारपरिमाणात् । पैप्पलादं मोक्षशास्त्रं परिसमाप्तं पैप्पलादं मोक्षशास्त्रं परिसमाप्तमिति ॥ ५ ॥

ॐ स ह नाववत्विति शान्तिः ।

इति गर्भोपनिषत्समाप्ता ॥ १७ ॥

---

# नारायणाथर्वशिरउपनिषत् ॥ १८ ॥

मायातत्कार्यमखिलं यद्बोधाद्यात्यपह्नवम् ।
त्रिपान्नारायणाख्यं तत्कलये स्वात्ममात्रतः ॥

ॐ स ह नाववत्विति शान्तिः ॥

ॐ अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति ॥ नारायणात्प्राणो जायते मनः सर्वेन्द्रियाणि च ॥ खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ नारायणाद्ब्रह्मा जायते ॥ नारायणाद्रुद्रो जायते ॥ नारायणादिन्द्रो जायते ॥ नारायणात्प्रजापतिः प्रजायते ॥ नारायणाद्द्वादशादित्या रुद्रा वसवः सर्वाणि च्छन्दांसि ॥ नारायणादेव समुत्पद्यन्ते ॥ नारायणात्प्रवर्तन्ते ॥ नारायणे प्रलीयन्ते ॥ एतदृग्वेदशिरोऽधीते ॥ १ ॥ अथ नित्यो नारायणः ॥ ब्रह्मा नारायणः ॥ शिवश्च नारायणः ॥ शक्रश्च नारायणः ॥ कालश्च नारायणः ॥ दिशश्च नारायणः ॥ विदिशश्च नारायणः ॥ ऊर्ध्वं च नारायणः ॥ अधश्च नारायणः ॥ अन्तर्बहिश्च नारायणः ॥ नारायण एवेदं सर्वं यद्भूतं यच्च भव्यम् ॥ निष्कलङ्को निरञ्जनो निर्विकल्पो निराख्यातः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित् ॥ य एवं वेद स विष्णुरेव भवति स विष्णुरेव भवति ॥ य एतद्यजुर्वेदशिरोऽधीते ॥ २ ॥ ओमित्यग्रे व्याहरेत् ॥ नम इति पश्चात् ॥ नारायणायेत्युपरिष्टात् ॥ ओमित्येकाक्षरम् ॥ नम इति द्वे अक्षरे ॥ नारायणायेति पञ्चाक्षराणि ॥ एतद्वै नारायणस्याष्टाक्षरं पदम् ॥ यो ह वै नारायणस्याष्टाक्षरं पदमध्येति । अनपब्रुवः सर्वमायुरेति ॥ विन्दते प्राजापत्यं रायस्पोषं गौपत्यं ततोऽमृतत्वमश्नुते ततोऽमृतत्वमश्नुत इति ॥ एतत्सामवेदशिरोऽधीते ॥ ३ ॥ प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्वरूपम् ॥ अकार उकारो मकार इति ॥ ता अनेकधा समभवत्तदेतदोमिति यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात् ॥ ॐ नमो नारायणायेति मंत्रोपासको वैकुण्ठभुवनं गमिष्यति ॥ तदिदं पुण्डरीकं विज्ञानघनं ॥ तस्मात्तडिदाभमात्रम् ॥ ब्रह्मण्यो देवकीपुत्रो

ब्रह्मण्यो मधुसूदनः ॥ ब्रह्मण्यः पुण्डरीकाक्षो ब्रह्मण्यो विष्णुरच्युत इति ॥ सर्वभूतस्थमेकं वै नारायणं कारणपुरुषमकारणं परं ब्रह्म ओम् ॥ एतदथर्वशिरो योऽधीते ॥ ४ ॥ प्रातरधीयानो रात्रिकृतं पापं नाशयति ॥ सायमधीयानो दिवसकृतं पापं नाशयति ॥ तत्सायंप्रातरधीयानोऽपापो भवति ॥ मध्यंदिनमादित्याभिमुखोऽधीयानः पञ्चमहापातकोपपातकात्प्रमुच्यते ॥ सर्ववेदपारायणपुण्यं लभते ॥ नारायणसायुज्यमवाप्नोति ॥ श्रीमन्नारायणसायुज्यमवाप्नोति य एवं वेद ॥ ५ ॥

ॐ स ह नाववत्विति शान्तिः ॥

॥ इति नारायणाथर्वशिरउपनिषत्समाप्ता ॥ १८ ॥

---

# महानारायणोपनिषत् ॥ १९ ॥

ॐ नमो महते नारायणाय ॥ अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान् । शुक्रेण ज्योतींषि समनुप्रविष्टः प्रजापतिश्चरति गर्भे अन्तः ॥ १ ॥ यस्मिन्निदं सं च वि चैति सर्वं यस्मिन्देवा अधि विश्वे निषेदुः । तदेव भूतं तदु भव्यमानमिदं तदक्षरे परमे व्योमन् ॥ २ ॥ येनावृतं खं च दिवं मही च येनादित्यस्तपति तेजसा भ्राजसा च । यदन्तः समुद्रे कवयो वदन्ति तदक्षरे परमे प्रजाः ॥ ३ ॥ यतः प्रसूता जगतः प्रसूती तोयेन जीवान्विससर्ज भूम्याम् । यत ओषधीभिः पुरुषान्पशूंश्च विवेश भूतानि चराचराणि ॥ ४ ॥ अतः परं नान्यदणीयसं हि परात्परं यन्महतो महान्तम् । यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् ॥ ५ ॥ तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम् । इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः ॥ ६ ॥ तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः । तदेव शुक्रममृतं तद्ब्रह्म तदापः स प्रजापतिः ॥ ७ ॥ सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि । कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः ॥ ८ ॥ अर्धमासा मासा ऋतवः संवत्सरश्च कल्पताम् । स आपः प्रदुघे उभे इमे अन्तरिक्षमथो सुवः ॥ ९ ॥ नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् । न तस्येशे कश्चन तस्य नाम महद्यशः ॥ १० ॥ न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ॥ ११ ॥ अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ ॥ १२ ॥

इति श्रीमहानारायणोपनिषदि प्रथमः खण्डः ॥ १ ॥

एष हि देवः प्र दिशोऽनु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः । स विजायमानः स जनिष्यमाणः प्रत्यङ्मुखस्तिष्ठति सर्वतोमुखः ॥ १ ॥ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । सं बाहुभ्यां धमति सं पतत्रैर्द्यावापृथिवी जनयन्देव एकः ॥ २ ॥ वेनस्तत्पश्यन्विश्वा भुवनानि विद्वान् यत्र विश्वं भवत्येकनीडम् । यस्मिन्निदं सं च वि चैकं स ओतः प्रोतश्च विभुः प्रजासु ॥ ३ ॥ प्र तद्वोचे अमृतं नु विद्वान् गन्धर्वो नाम निहितं गुहासु । त्रीणि पदा निहिता गुहासु यस्तद्वेद स पितुः पितासत् ॥ ४ ॥ स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा । यत्र देवा अमृतत्वमानशानास्तृतीये धामान्यभ्यैरयन्त ॥ ५ ॥ परि द्यावापृथिवी यन्ति सद्यः परि लोकान्परि दिशः परि सुवः । ऋतस्य तन्तुं विततं विवृत्य तदपश्यत्तदभवत्तत्प्रजासु ॥ ६ ॥ परीत्य लोकान्परीत्य भूतानि परीत्य सर्वाः प्रदिशो दिशश्च । प्रजापतिः प्रथमजा ऋतस्यात्मनात्मानमभिसम्बभूव ॥ ७ ॥ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम ॥ ८ ॥ उद्दीप्यस्व जातवेदोऽपघ्नन्निर्ऋतिं मम । पशूंश्च मह्यमावह जीवनं च दिशो दिशः ॥ ९ ॥ मा नो हिंसीज्जातवेदो गामश्वं पुरुषं जगत् । अबिभ्रदग्न आगहि श्रिया मा परिपातय ॥ १० ॥

इति श्रीमहानारायणोपनिषदि द्वितीयः खण्डः ॥ २ ॥

तत्पुरुषस्य विद्महे सहस्राक्षस्य महादेवस्य धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ १ ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ २ ॥ तत्पुरुषाय विद्महे नन्दिकेश्वराय धीमहि । तन्नो वृषभः प्रचोदयात् ॥ ३ ॥ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्ती प्रचोदयात् ॥ ४ ॥ षण्मुखाय विद्महे महासेनाय धीमहि । तन्नः षष्ठः प्रचोदयात् ॥ ५ ॥ पावकाय विद्महे सप्तजिह्वाय धीमहि । तन्नो वैश्वानरः प्रचोदयात् ॥ ६ ॥ वैश्वानराय विद्महे लालेलाय धीमहि । तन्नो अग्निः प्रचोदयात् ॥ ७ ॥ भास्कराय विद्महे दिवाकराय धीमहि । तन्नः सूर्यः प्रचोदयात् ॥ ८ ॥ दिवाकराय विद्महे महाद्युतिकराय धीमहि । तन्न आदित्यः प्रचोदयात् ॥ ९ ॥ आदित्याय विद्महे सहस्रकिरणाय धीमहि । तन्नो भानुः प्रचोदयात् ॥ १० ॥ तीक्ष्णशृंगाय विद्महे वक्रपादाय धीमहि । तन्नो वृषभः प्रचोदयात् ॥ ११ ॥ कात्यायन्यै विद्महे कन्याकुमार्यै धीमहि । तन्नो दुर्गा प्रचोदयात् ॥ १२ ॥ महाशूलिन्यै विद्महे महादुर्गायै धीमहि । तन्नो भगवती प्रचोदयात् ॥ १३ ॥ सुभगायै विद्महे काममालिन्यै धीमहि । तन्नो गौरी प्रचोदयात् ॥ १४ ॥

तत्पुरुषाय विद्महे सुपर्णपक्षाय धीमहि । तन्नो गरुडः प्रचोदयात् ॥ १५ ॥
नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥ १६ ॥
नृसिंहाय विद्महे वज्रनखाय धीमहि । तन्नः सिंहः प्रचोदयात् ॥ १७ ॥
चतुर्मुखाय विद्महे कमण्डलुधराय धीमहि । तन्नो ब्रह्मा प्रचोदयात् ॥ १८ ॥

इति श्रीमहानारायणोपनिषदि तृतीयः खण्डः ॥ ३ ॥

सहस्रपरमा देवी शतमूला शतांकुरा । सर्वं हरतु मे पापं दूर्वा दुःस्वप्ननाशिनी ॥ १ ॥ दूर्वा अमृतसम्भूताः शतमूलाः शतांकुराः । शतं मे घ्नन्ति पापानि शतमायुर्विवर्धति ॥ २ ॥ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषः परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ ३ ॥ अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे । शिरसा धारिता देवि रक्षस्व मां पदे पदे ॥ ४ ॥ उद्धृतासि वराहेण कृष्णेन शतबाहुना । भूमिर्धेनुर्धरित्री च धरणी लोकधारिणी । तेन या ब्रह्मदत्तासि काश्यपेनाभिमन्त्रिता ॥ ५ ॥ मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् । त्वया हतेन पापेन जीवामि शरदः शतम् ॥ ६ ॥ वाचा कृतं कर्मकृतं मनसा दुर्विचिन्तितम् । त्वया हतेन पापेन गच्छामि परमां गतिम् । मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् ॥ ७ ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ८ ॥ ॐ भूर्लक्ष्मीर्भुवर्लक्ष्मीः सुवः कालकर्णी तन्नो महालक्ष्मीः प्रचोदयात् ॥ ९ ॥ पद्मप्रभे पद्मसुन्दरि धर्मरतये स्वाहा ॥ १० ॥ हिरण्यशृंगं वरुणं प्रपद्ये तीर्थं मे देहि याचितः । यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः ॥ ११ ॥ यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम् । तन्म इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु पुनः पुनः ॥ १२ ॥ सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ १३ ॥

इति श्रीमहानारायणोपनिषदि चतुर्थः खण्डः ॥ ४ ॥

नमोऽग्नयेऽप्सुमते नम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽद्भ्यः ॥ यदपां क्रूरं यदमेध्यं यदशान्तं तदपगच्छतात् ॥ १ ॥ अत्याशनादतीपानाद्यच्च उग्रात्प्रतिग्रहात् । तन्मे वरुणो राजा पाणिना ह्यवमर्शतु ॥ २ ॥ सोऽहमपापो विरजो निर्मुक्तो मुक्तकिल्बिषः । नाकस्य पृष्ठमारुह्य गच्छेद्ब्रह्मसलोकताम् ॥ ३ ॥ इमं मे गंगे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या । असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥ ४ ॥ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ ५ ॥ समुद्रादर्णवादधि

संवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ ६ ॥ सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥ ७ ॥ यत्पृथिव्या रजः स्वमान्तरिक्षे विरोदसी । इमांस्तदापो वरुणः पुनात्वघमर्षणः ॥ ८ ॥ एष सर्वस्य भूतस्य भव्ये भुवनस्य गोप्ता । एष पुण्यकृतां लोकानेष मृत्यो हिरण्मयः । द्यावापृथिव्योर्हिरण्मयं संश्रितं सुवः । स नः सुवः संशिशाधि ॥ ९ ॥ आर्द्रं ज्वलति ज्योतिरहमस्मि । ज्योतिर्ज्वलति ब्रह्माहमस्मि । योऽहमस्मि ब्रह्माहमस्मि । अहमेवाहं मां जुहोमि स्वाहा ॥ १० ॥ अकार्यकार्यवकीर्णी स्तेनो भ्रूणहा गुरुतल्पगः । वरुणोऽपामघमर्षणस्तस्मात्पापात्प्रमुच्यते ॥ ११ ॥ रजो भूमिस्त्वमाँरोदयस्व प्रवदन्ति धीराः । पुनन्तु ऋषयः पुनन्तु वसवः पुनातु वरुणः पुनात्वघमर्षणः ॥ १२ ॥

इति श्रीमहानारायणोपनिषदि पञ्चमः खण्डः ॥ ५ ॥

अक्रान्त्समुद्रः प्रथमे विधर्मन् जनयन्प्रजा भुवनस्य राजा । वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुः ॥ १ ॥ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ २ ॥ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् । दुर्गां देवीं शरणमहं प्रपद्ये सुतरसितरसे नमः ॥ ३ ॥ अग्ने त्वं पारया नव्यो अस्मान् स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः ॥ ४ ॥ विश्वानि नो दुर्गहा जातवेदः सिन्धुर्न नावा दुरितातिपर्षि । अग्ने अत्रिवन्नमसा गृणानोऽस्माकं बोधयविता तनूनाम् ॥ ५ ॥ पृतनाजितं सहमानमग्निमुग्रं हुवेम परमात्सधस्थात् । स नः पर्षदतिदुर्गाणि विश्वा क्षामद्देवो अतिदुरितात्यग्निः ॥ ६ ॥ प्रत्नो हि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि । स्वां चाग्ने तन्वं पिप्रयस्वास्मभ्यं च सौभगमायजस्व ॥ ७ ॥ परस्ताद्यशो गुहासु मम सुपर्णपक्षाय धीमहि । शतबाहुना पुनरजायत सुवो राजा सधस्था त्रीणि च ॥ ८ ॥

इति श्रीमहानारायणोपनिषदि षष्ठः खण्डः ॥ ६ ॥

ॐ भूरग्नये पृथिव्यै स्वाहा । भुवो वायवेऽन्तरिक्षाय स्वाहा । सुवरादित्याय दिवे स्वाहा । भूर्भुवःसुवश्चन्द्रमसे दिग्भ्यः स्वाहा । नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवः सुवरग्निरोम् ॥ १ ॥ भूरन्नमग्नये पृथिव्यै स्वाहा । भुवोऽन्नं वायवेऽन्तरिक्षाय स्वाहा । सुवरन्नमादित्याय दिवे स्वाहा । भूर्भुवःसुवरन्नं चन्द्रमसे दिग्भ्यः स्वाहा । नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवःसुवरन्नमोम्

॥ २ ॥ भूरग्नये च पृथिव्यै च महते च स्वाहा । भुवो वायवे चान्तरिक्षाय च महते च स्वाहा । सुवरादित्याय च दिवे च महते च स्वाहा । भूर्भुवःसुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा । नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवःसुवर्महरोम् ॥ ३ ॥ पाहि नो अग्न एनसे स्वाहा । पाहि नो विश्ववेदसे स्वाहा ॥ यज्ञं पाहि विभावसो स्वाहा । सर्वं पाहि-शतक्रतो स्वाहा ॥ ४ ॥ यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्यश्छन्दांस्याविवेश । सतां शक्यः प्रोवाचोपनिषदिन्द्रो ज्येष्ठ इन्द्राय ऋषिभ्यो नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवःसुवश्छन्द ओँ ॥ ५ ॥ नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं मा च्योढ्वं ममामुष्य ओँ ॥ ६ ॥

इति श्रीमहानारायणोपनिषदि सप्तमः खण्डः ॥ ७ ॥

ऋतं तपः सत्यं तपः श्रुतं तपः शान्तं तपो दानं तपो यज्ञस्तपो भूर्भुवः सुवर्ब्रह्मैतदुपास्यैतत्तपः ॥ १ ॥ यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति । यथासिधारां कर्तेऽवहितामवक्रामेद्यद्युवेह वेहवा विह्वलिष्यामि कर्तं पतिष्यामीत्येवमनृतादात्मानं जुगुप्सेत् ॥ २ ॥ अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः । तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥ ३ ॥ सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः समिधः सप्त जिह्वाः । सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त ॥ ४ ॥ अतः समुद्रा गिरयश्च सर्वे अस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः । अतश्च विश्वा ओषधयो रसश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥ ५ ॥

इति श्रीमहानारायणोपनिषद्यष्टमः खण्डः ॥ ८ ॥

ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ॥ १ ॥ अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥ २ ॥ हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ ३ ॥ यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया संविदानस्त्रीणि ज्योतींषि सचते स षोडशी ॥ ४ ॥ विधर्तारं हवामहे वसोः कुविद्वनाति नः । सवितारं नृचक्षसम् ॥ ५ ॥ अद्या नो देव सवितः प्रजावत्सावीः सौभगम् । परा दुःष्वप्नियं सुव ॥ ६ ॥ विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्न आसुव ॥ ७ ॥ मधु वाता ऋतायते

मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥ ८ ॥ मधुनक्तमुतोषसो मधुमत्पार्थिवं रजः । मधु द्यौरस्तु नः पिता ॥ ९ ॥ मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥ १० ॥ घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम । अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ॥ ११ ॥ समुद्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥ १२ ॥ वयं नाम प्रब्रवामा घृतस्यास्मिन्यज्ञे धारयामा नमोभिः । उप ब्रह्मा शृणवच्छस्यमानं चतुःशृंगोऽवमीद्गौर एतत् ॥ १३ ॥

इति श्रीमहानारायणोपनिषदि नवमः खण्डः ॥ ९ ॥

चत्वारि शृंगा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश ॥ १ ॥ त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् । इन्द्र एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः ॥ २ ॥ यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जायमानं स नो देवः शुभया स्मृत्या संयुनक्ति ॥ ३ ॥ यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ ४ ॥ न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः । परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति ॥ ५ ॥ वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥ ६ ॥ दहं विपाप्मं वरं वेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दहं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम् ॥ ७ ॥ यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥ ८ ॥ अजोऽन्यः सुविभा नाभिः सर्वमस्यैव ॥ ९ ॥

इति श्रीमहानारायणोपनिषदि दशमः खण्डः ॥ १० ॥

सहस्रशीर्षं देवं विश्वाख्यं विश्वशम्भुवम् । विश्वं नारायणं देवमक्षरं परमं प्रभुम् ॥ १ ॥ विश्वतः परमं नित्यं विश्वं नारायणं हरिम् । विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति ॥ २ ॥ पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् । नारायणं महाज्ञेयं विश्वात्मानं परायणम् ॥ ३ ॥ नारायणः परं ब्रह्मतत्त्वं नारायणः परः । नारायणः परो ज्योतिरात्मा नारायणः परः ॥ ४ ॥ नारायणः परो ध्याता ध्यानं नारायणः परः । परादपि परश्चासु तस्माद्यस्तु परात्परः ॥ ५ ॥ यच्च किञ्चिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः

स्थितः ॥ ६ ॥ अनन्तमव्ययं कविं समुद्रेतं विश्वशम्भुवम् । पद्मकोशप्रतीकाशं सुषिरं चाप्यधोमुखम् ॥ ७ ॥ अधोनिष्ट्या वितस्त्यां तु नाभ्यामुपरि तिष्ठति । हृदयं तद्विजानीयाद्विश्वस्यायतनं महत् ॥ ८ ॥ सततं तु शिराभिस्तु लम्बत्या-कोशसन्निभम् । तस्यान्ते सुषिरं सूक्ष्मं तस्मिन्त्सर्वं प्रतिष्ठितम् ॥ ९ ॥ तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः । सोऽग्रभुग्विभजंस्तिष्ठन्नाहारमक्षयः कविः ॥ १० ॥ सन्तापयति स्वं देहमापादतलमस्तकम् । तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता ॥ ११ ॥ नीलतोयदमध्यस्था विद्युल्लेखेव भासुरा । नीवारशूकवत्तन्वी पीताभा स्यात्तनूपमा ॥ १२ ॥ तस्याः शिखाया मध्ये पर-मात्मा व्यवस्थितः । स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ॥ १३ ॥ अथातो योग जिह्वा मे मधुवादिनी । अहमेव कालो नाहं कालस्य ॥ १४ ॥ नारायणः स्थितो व्यवस्थितश्चत्वारि च ॥ १५ ॥

इति श्रीमहानारायणोपनिषदि एकादशः खण्डः ॥ ११ ॥

ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिंगलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः ॥ १ ॥ आदित्यो वा एष एतन्मण्डलं तपति । तत्र ता ऋचस्तदृचां मण्डलं स ऋचां लोकोऽथ य एष एतस्मिन्मण्डले अर्चिषि पुरुषस्तानि यजूंषि स यजुषां मण्डलं स यजुषां लोकोऽथ य एष एतस्मिन्मण्डले अर्चिर्दीप्यते तानि सामानि स साम्नां मण्डलं स साम्नां लोकः सैषा त्रय्येव विद्या तपति य एषोऽन्तरादित्ये हिरण्मयः पुरुषः ॥ २ ॥ आदित्यो वै तेज ओजो बलं यशश्चक्षुःश्रोत्रमात्मा मनो मन्युर्मनुर्मृत्युः सत्यो मित्रो वायुराकाशः । प्राणो लोकपालकः । किं तत्सत्यमन्नमायुरमृतो जीवो विश्वः । कतमः स्वयम्भूः प्रजा-पतिः संवत्सर इति । संवत्सरोऽसावादित्यो य एष पुरुष एष भूतानामधिपतिः । ब्रह्मणः सायुज्यं सलोकतामाप्नोत्येतासामेव देवतानां सायुज्यं सार्ष्टितां समान-लोकतामाप्नोति य एवं वेदेत्युपनिषत् ॥ ३ ॥

इति श्रीमहानारायणोपनिषदि द्वादशः खण्डः ॥ १२ ॥

घृणिः सूर्य आदित्य ओम् ॥ अर्चयन्ति तपः सत्यं मधु क्षरन्ति तद्ब्रह्म तदाप आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवःस्वरोम् ॥ १ ॥ सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु । पुरुषो वै रुद्रस्तन्महो नमो नमः । विश्वं भूतं भव्यं भुवनं चित्रं बहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥ २ ॥ कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे । वोचेम शन्तमं हृदे ॥ सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥ ३ ॥ नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्य-रूपाय हिरण्यपतये । अम्बिकापतये उमापतये नमो नमः ॥ ४ ॥ यस्य

वैकंकत्यग्निहोत्रहवणी भवति प्रतिष्ठिताः प्रत्येवास्याहुतयस्तिष्ठन्त्यथो प्रतिष्ठित्यै ॥ ५ ॥ कृणुष्व पाज इति पञ्च ॥ ६ ॥ अदितिर्देवा गन्धर्वा मनुष्याः पितरोऽसुरास्तेषां सर्वभूतानां माता मेदिनी पृथिवी महती मही सावित्री गायत्री जगत्युर्वी पृथ्वी बहुला विश्वा भूता । कतमा का या सा सत्येत्यमृतेति वसिष्ठः ॥ ७ ॥

इति श्रीमहानारायणोपनिषदि त्रयोदशः खण्डः ॥ १३ ॥

आपो वा इदं सर्वं विश्वा भूतान्यापः प्राणो वा आपः पशव आपो अन्नमापोऽमृतमापः सम्राडापो विराडापः स्वराडापश्छन्दांस्यापो ज्योतींष्यापो यजूंष्यापः सत्यमापः सर्वा देवता आपो भूर्भुवःसुवराप ओम् ॥ १ ॥ आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम् । पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम् । यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम । सर्वं पुनन्तु मामापो असतां च प्रतिग्रहं स्वाहा ॥ २ ॥ अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् । यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्तदवलुम्पतु यत्किञ्च दुरितं मयि । इदमहं माममृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा ॥ ३ ॥ सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् । यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु यत्किञ्च दुरितं मयि । इदमहं माममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा ॥ ४ ॥ अहर्नो अत्यपीपरद्रात्रिर्नो अतिपारयद्रात्रिर्नो अत्यपीपरदहर्नो अतिपारयत् ॥ ५ ॥

इति श्रीमहानारायणोपनिषदि चतुर्दशः खण्डः ॥ १४ ॥

आयातु वरदा देवी अक्षरं ब्रह्मसम्मितम् । गायत्री छन्दसां माता इदं ब्रह्म जुषस्व नः ॥ ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धाम नामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरोम् ॥ गायत्रीमावाहयामि सावित्रीमावाहयामि सरस्वतीमावाहयामि ॥ १ ॥ ओं भूः । ओं भुवः । ओं स्वः । ओं महः । ओं जनः । ओं तपः । ओं सत्यं । ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । ओमापोज्योतीरसोऽमृतं ब्रह्म भूर्भुवःस्वरोम् ॥ २ ॥ ओं भूर्भुवः सुवर्महर्जनस्तपः सत्यं मधु क्षरन्ति । तद्ब्रह्म । तदाप आपोज्योतीरसोऽमृतं ब्रह्म भूर्भुवःस्वरोम् ॥ ३ ॥ ओं तद्ब्रह्म । ओं तद्वायुः । ॐ तदात्मा । ओं तत्सर्वम् । ओं तत्पुरों नमः ॥ ४ ॥ उत्तमे शिखरे देवी भूम्यां पर्वतमूर्धनि । ब्राह्मणेभ्यो ह्यनुज्ञाता गच्छ देवि यथासुखम्

॥ ५ ॥ ॐ अन्तश्चरसि भूतेषु गुहायां विश्वमूर्तिषु । त्वं यज्ञस्त्वं विष्णुस्त्वं वषट्कारस्त्वं रुद्रस्त्वं ब्रह्मा त्वं प्रजापतिः ॥ ६ ॥ अमृतोपस्तरणमसि ॥ ७ ॥ प्राणे निविष्टोऽमृतं जुहोमि प्राणाय स्वाहा । अपाने निविष्टोऽमृतं जुहोमि अपानाय स्वाहा । व्याने निविष्टोऽमृतं जुहोमि व्यानाय स्वाहा । उदाने निविष्टोऽमृतं जुहोमि उदानाय स्वाहा । समाने निविष्टोऽमृतं जुहोमि समानाय स्वाहा ॥ ८ ॥ प्राणे निविष्टोऽमृतं जुहोमि । शिवोमाविशाप्रदाहाय । प्राणाय स्वाहा ॥ अपाने निविष्टोऽमृतं जुहोमि । शिवोमाविशाप्रदाहाय । अपानाय स्वाहा ॥ व्याने निविष्टोऽमृतं जुहोमि । शिवोमाविशाप्रदाहाय । व्यानाय स्वाहा ॥ उदाने निविष्टोऽमृतं जुहोमि । शिवोमाविशाप्रदाहाय । उदानाय स्वाहा ॥ समाने निविष्टोऽमृतं जुहोमि । शिवोमाविशाप्रदाहाय । समानाय स्वाहा ॥ ९ ॥ अमृतापिधानमसि । ब्रह्मणि म आत्मामृतत्वाय ॥ १० ॥

इति श्रीमहानारायणोपनिषदि पंचदशः खण्डः ॥ १५ ॥

श्रद्धायां प्राणे निविश्यामृतं हुतम् । प्राणमन्नेनाप्यायस्व ॥ अपाने निविश्यामृतं हुतम् । अपानमन्नेनाप्यायस्व ॥ व्याने निविश्यामृतं हुतम् । व्यानमन्नेनाप्यायस्व ॥ उदाने निविश्यामृतं हुतम् । उदानमन्नेनाप्यायस्व ॥ समाने निविश्यामृतं हुतम् । समानमन्नेनाप्यायस्व ॥ ब्रह्मणि म आत्मामृतत्वाय ॥ १ ॥ प्राणानां ग्रन्थिरसि रुद्रोमाविशान्तकस्तेनान्नेनाप्यायस्व ॥ २ ॥ अंगुष्ठमात्रः पुरुषो अंगुष्ठं च समाश्रितः । ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् ॥ ३ ॥ मेधा देवी जुषमाणा न आगाद्विश्वाची भद्रा सुमनस्यमाना । त्वया जुष्टा जुषमाणा दुरुक्तान् बृहद्वदेम विदथे सुवीराः ॥ त्वया जुष्ट ऋषिर्भवतु देवी त्वया ब्रह्मा गतश्रीरुत त्वया । त्वया जुष्टश्चित्रं विन्दते वसु सा नो जुषस्व द्रविणेन मेधे ॥ ४ ॥ मेधां मे इन्द्रो ददातु मेधां देवी सरस्वती । मेधां मे अश्विनावुभावाधत्तां पुष्करस्रजौ ॥ ५ ॥ अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः । दैवी मेधा मनुष्यजा सा मां मेधा सुरभिर्जुषताम् ॥ ६ ॥ आ मां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा जगती जगम्या । ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषताम् ॥ ७ ॥

इति श्रीमहानारायणोपनिषदि षोडशः खण्डः ॥ १६ ॥

सद्योजातं प्रपद्यामि सद्योजाताय वै नमः । भवे भवे नातिभवे भजस्व मां भवोद्भवाय नमः ॥ १ ॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ २ ॥ अघोरेभ्योऽथ घोरेभ्यो

घोर घोरतरेभ्यः । सर्वतः सर्व सर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ ३ ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ ४ ॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥५॥ ब्रह्म मेतु माम् । मधु मेतु माम् । ब्रह्म मेऽव मधु मेतु माम् । यस्ते सोम प्रजावत्सोऽभि सो अहम् । दुःस्वप्नहन्दुरुष्वहा । यांस्ते सोम प्राणांस्ताञ्जुहोमि ॥ त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । ब्रह्महत्यां वा एते घ्नन्ति ये ब्राह्मणास्त्रिसुपर्णं पठन्ति ते सोमं प्राप्नुवन्त्यासहस्रात्पंक्तिं पुनन्ति ॥ ॐ ॥ ६ ॥ ब्रह्ममेधया मधुमेधया ब्रह्म मेऽव मधुमेधया ॥ अद्या नो देव सवितः प्रजावत्सावीः सौभगं । परा दुःष्वप्नियं सुव ॥ विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्न आसुव ॥ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥ मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः । मधु द्यौरस्तु नः पिता ॥ मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥ य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । भ्रूणहत्यां वा एते घ्नन्ति ये ब्राह्मणास्त्रिसुपर्णं पठन्ति ते सोमं प्राप्नुवन्त्यासहस्रात्पंक्तिं पुनन्ति ॥ ॐ ॥ ७ ॥ ॐ ब्रह्ममेधवा मधुमेधवा ब्रह्म मेऽव मधुमेधवा ॥ ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ॥ हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । वीरहत्यां वा एते घ्नन्ति ये ब्राह्मणास्त्रिसुपर्ण पठन्ति ते सोमं प्राप्नुवन्त्यासहस्रात्पंक्तिं पुनन्ति ॥ ॐ ॥ ८ ॥

इति श्रीमहानारायणोपनिषदि सप्तदशः खण्डः ॥ १७ ॥

देवकृतस्यैनसोऽवयजनमसि स्वाहा । मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा । पितृकृतस्यैनसोऽवयजनमसि स्वाहा । आत्मकृतस्यैनसोऽवयजनमसि स्वाहा । अन्यकृतस्यैनसोऽवयजनमसि स्वाहा । यद्दिवा च नक्तं चैनश्चकृम तस्यावयजनमसि स्वाहा । यद्विद्वांसश्चाविद्वांसश्चैनश्चकृम तस्यावयजनमसि स्वाहा । यच्चाहमेनो विद्वांसश्चाविद्वांसश्चैनश्चकृम तस्यावयजनमसि स्वाहा । यत्स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा । यत्सुषुप्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा । एनस एनसोऽवयजनमसि स्वाहा ॥ १ ॥ कामोऽकार्षीन्नाहं करोमि कामः करोति कामः कर्ता कामः कारयिता । एतत्ते काम कामाय स्वाहा ॥ २ ॥ मन्युरकार्षीन्नाहं करोमि मन्युः करोति मन्युः कर्ता मन्युः कारयिता । एतत्ते मन्यो मन्यवे स्वाहा ॥ ३ ॥

इति श्रीमहानारायणोपनिषद्यष्टादशः खण्डः ॥ १८ ॥

तिलाः कृष्णास्तिलाः श्वेतास्तिलाः सौम्या वशानुगाः । तिलाः पुनन्तु मे पापं यत्किञ्चिद्दुरितं मयि स्वाहा । यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम् । दुःस्वप्नं दुर्जनस्पर्शं तिलाः शान्तिं कुर्वन्तु स्वाहा । चौरस्यान्नं नवश्राद्धं ब्रह्महा गुरुतल्पगः । गोस्तेयं सुरापानं भ्रूणहत्यां तिलाः शमयन्तु स्वाहा । गणान्नं गणिकान्नं कुष्टान्नं पतितान्नं भुक्त्वा वृषलीभोजनम् । श्रद्धा प्रजा च मेधा च तिलाः शान्तिं कुर्वन्तु स्वाहा । श्रीश्च पुष्टिश्चानृण्यं ब्रह्मण्यं बहुपुत्रिणम् । श्रद्धा प्रजा च मेधा च तिलाः शान्तिं कुर्वन्तु स्वाहा ॥ १ ॥ अग्नये स्वाहा । विश्वेभ्यो देवेभ्यः स्वाहा । ध्रुवाय भूमाय स्वाहा । ध्रुवक्षितये स्वाहा । धूमाय स्वाहा । अच्युतक्षितये स्वाहा । अग्नये स्विष्टकृते स्वाहा । धर्माय स्वाहा । अधर्माय स्वाहा । अद्भ्यः स्वाहा । ओषधिवनस्पतिभ्यः स्वाहा । रक्षोदेवजनेभ्यः स्वाहा । गृह्याभ्यः स्वाहा । अवसानेभ्यः स्वाहा । अवसानपतिभ्यः स्वाहा । सर्वभूतेभ्यः स्वाहा । कामाय स्वाहा । अन्तरिक्षाय स्वाहा । यदेजति जगति यच्च चेष्टति नान्यो भागो यत्तान्मे स्वाहा । पृथिव्यै स्वाहा । अन्तरिक्षाय स्वाहा । दिवे स्वाहा । सूर्याय स्वाहा । चन्द्रमसे स्वाहा । नक्षत्रेभ्यः स्वाहा । इन्द्राय स्वाहा । बृहस्पतये स्वाहा । प्रजापतये स्वाहा । ब्रह्मणे स्वाहा । स्वधा पितृभ्यः । नमो रुद्राय पशुपतये स्वाहा । देवेभ्यः स्वाहा । पितृभ्यः स्वधा अस्तु । भूतेभ्यो नमः । मनुष्येभ्यो हन्ता । परमेष्ठिने स्वाहा ॥ २ ॥

इति श्रीमहानारायणोपनिषद्येकोनविंशः खण्डः ॥ १९ ॥

ये भूताः प्रचरन्ति दिवानक्तं बलिमिच्छन्तो वितुदस्य प्रेष्ठाः । तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहा ॥ १ ॥ सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहञ्छूर विद्वान् । जहि शत्रूँरपमृधो नुदस्वाथाभयं कृणुहि विश्वतो नः ॥ २ ॥ त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः ॥ ३ ॥ यत इन्द्र भयामहे ततो नो अभयं कृधि । मघवञ्छग्धि तव तन्न ऊतिभिर्विद्विषो विमृधो जहि ॥ ४ ॥ स्वस्तिदा विशाम्पतिर्वृत्रहा विमृधो वशी । वृषेन्द्रः पुर एतु नः सोमपा अभयंकरः ॥ ५ ॥ ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता । ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥ ६ ॥ तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमाभासि रोचनम् ॥ ७ ॥ उपयाम गृहीतोऽसि सूर्याय त्वा भ्राजस्वत एष ते योनिः सूर्याय त्वा भ्राजस्वते ॥ ८ ॥ विष्णुमुखा वै देवाश्छन्दोभिरिमाँल्लोकाननपजय्यमभ्यजयन् ॥ ९ ॥ श्री मे

भजत । अलक्ष्मी मे नश्यत ॥ १० ॥ महाँ इन्द्रो वज्रबाहुः षोडशी शर्म यच्छतु । स्वस्ति नो मघवा करोतु हन्तु पाप्मानं योऽस्मान्द्वेष्टि ॥ ११ ॥ शरीरं यज्ञः शमलं कुसीदं तस्मिन्त्सीदतु योऽस्मान्द्वेष्टि ॥१२॥ वरुणस्य स्कम्भनमसि वरुणस्य स्कम्भसर्जनमसि । उन्मुक्तो वरुणस्य पाशः ॥ १३ ॥ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । इतो धर्माणि धारयन् ॥ १४ ॥ प्राणापानव्यानोदानसमाना मे शुध्यन्ताम् । ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा ॥ १५ ॥ वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणरेतोबुद्ध्याकूतिसंकल्पा मे० ॥ १६ ॥ शिरःपाणिपादपार्श्वपृष्ठोदरजंघाशिश्नोपस्थपायवो मे० ॥ १७ ॥ त्वक्चर्ममांसरुधिरस्नायुमेदोऽस्थिमज्जा मे० ॥ १८ ॥ शब्दस्पर्शरसरूपगन्धा मे० ॥ १९ ॥ पृथिव्यप्तेजोवाय्वाकाशा मे० ॥२०॥ अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे० ॥ २१ ॥ विविटि स्वाहा ॥ २२ ॥ खखोल्काय स्वाहा ॥ २३ ॥ उत्तिष्ठ पुरुषाहरितपिंगल लोहिताक्ष देहि देहि ददापयिता मे शुध्यन्ताम् । ज्योतिरहं० ॥ २४ ॥ शुक्रशोणितओजांसि मे शुध्यन्ताम् । ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा ॥ २५ ॥

इति श्रीमहानारायणोपनिषदि विंशः खण्डः ॥ २० ॥

ॐ स्वाहा ॥ १ ॥ सत्यं परं परं सत्यं सत्येन न सुवर्गाल्लोकाच्च्यवन्ते कदाचन सतां हि सत्यं तस्मात्सत्ये रमन्ते ॥ तप इति तपो नानशनात्परं यद्धि परं तपस्तद्दुर्धर्षं तद्दुराधर्षं तस्मात्तपसि रमन्ते ॥ दम इति नियतं ब्रह्मचारिणस्तस्माद्दमे रमन्ते ॥ शम इत्यरण्ये मुनयस्तस्माच्छमे रमन्ते ॥ दानमिति सर्वाणि भूतानि प्रशंसन्ति दानान्नातिदुष्करं तस्माद्दाने रमन्ते ॥ धर्म इति धर्मेण सर्वमिदं परिगृहीतं धर्मान्नातिदुश्चरं तस्माद्धर्मे रमन्ते ॥ प्रजननमिति भूयांसस्तस्माद्भूयिष्ठाः प्रजायन्ते तस्माद्भूयिष्ठाः । प्रजनने रमन्ते ॥ अग्नय इत्याहुस्तस्मादग्नय आधातव्याः ॥ अग्निहोत्रमित्याहुस्तस्मादग्निहोत्रे रमन्ते ॥ यज्ञ इति यज्ञो हि देवानां यज्ञेन हि देवा दिवं गतास्तस्माद्यज्ञे रमन्ते ॥ मानसमिति विद्वांसस्तस्माद्विद्वांस एव मानसे रमन्ते ॥ न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत् । य एवं वेदेत्युपनिषत् ॥ २ ॥

इति श्रीमहानारायणोपनिषदि एकविंशः खण्डः ॥ २१ ॥

प्राजापत्यो हारुणिः सौपर्णेयः प्रजापतिं पितरमुपससार किं भगवन्तः परमं वदन्तीति । तस्मै प्रोवाच सत्येन वायुरावाति सत्येनादित्यो रोचते दिवि सत्यं वाचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठितं तस्मात्सत्यं परमं वदन्ति । तपसा देवा

देवतामग्र आयंस्तपसऋषयः सुवरन्वविन्दंस्तपसा सपत्नान्प्रणुदामारातीस्तपसि सर्वं प्रतिष्ठितं तस्मात्तपः परमं वदन्ति । दमेन दान्ताः किल्बिषमवधून्वन्ति दमेन ब्रह्मचारिणः सुवरगच्छन्दमो भूतानां दुराधर्षं दमे सर्वं प्रतिष्ठितं तस्माद्दमः परमं वदन्ति । शमेन शान्ताः शिवमाचरन्ति शमेन नाकं मुनयोऽन्वविन्दन् । शमो भूतानां दुराधर्षं शमे सर्वं प्रतिष्ठितं तस्माच्छमः परमं वदन्ति । दानं यज्ञानां वरूथं दक्षिणा लोके दातारं सर्वभूतान्युपजीवन्ति दानेनारातीरपानुदन्त दानेन द्विषन्तो मित्रा भवन्ति दाने सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदन्ति । धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदन्ति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति । प्रजननं वै प्रतिष्ठा लोके साधुप्रजावांस्तन्तुं तन्वानः पितॄणामनृणो भवति तदेव तस्यानृणं तस्मात्प्रजननं परमं वदन्ति । अग्नयो वै त्रयी विद्या देवयानः पन्था गार्हपत्यमृक् पृथिवी रथन्तरमन्वाहार्यपचनो यजुरन्तरिक्षं वामदेव्यमाहवनीयः साम सुवर्गो लोको बृहत्तस्मादग्नीन् परमं वदन्ति । अग्निहोत्रं सायम्प्रातर्गृहाणां निष्कृतिः स्विष्टं सुहुतं यज्ञक्रतूनां प्रायणं सुवर्गस्य लोकस्य ज्योतिस्तस्मादग्निहोत्रं परमं वदन्ति ॥ १ ॥

इति श्रीमहानारायणोपनिषदि द्वाविंशः खण्डः ॥ २२ ॥

यज्ञ इति यज्ञो हि देवानां यज्ञेन हि देवा दिवं गता यज्ञेनासुरानपानुदन्त यज्ञेन हि द्विषन्तो मित्रा भवन्ति यज्ञे सर्वं प्रतिष्ठितं तस्माद्यज्ञं परमं वदन्ति । मानसं वै प्राजापत्यं पवित्रं मानसेन मनसा साधु पश्यति मानसा ऋषयः प्रजा असृजन्त मानसे सर्वं प्रतिष्ठितं तस्मान्मानसं परमं वदन्ति । न्यास इत्याहुर्मनीषिणो ब्रह्माणम् । ब्रह्मा विश्वः कतमः । स्वयम्भूः प्रजापतिः संवत्सर इति । संवत्सरोऽसावादित्यो य एष आदित्ये पुरुषः स एव परमेष्ठी ब्रह्मात्मा । याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति पर्जन्येनौषधिवनस्पतयः प्रजायन्त ओषधिवनस्पतिभिरन्नं भवत्यन्नेन प्राणाः प्राणैर्बलं बलेन तपस्तपसा श्रद्धा श्रद्धया मेधा मेधया मनीषा मनीषया मनो मनसा शान्तिः शान्त्या चित्तं चित्तेन स्मृतिः स्मृत्या स्मारं स्मारेण विज्ञानं विज्ञानेनात्मानं वेदयति । तस्मादन्नं ददन्सर्वाण्येतानि ददात्यन्नात्प्राणा भवन्ति भूतानां प्राणैर्मनो मनसश्च विज्ञानं विज्ञानादानन्दो ब्रह्मयोनिः । स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं च द्यौश्च दिशश्चावान्तरदिशाश्च सर्वैः सर्वमिदं जगत् ॥ १ ॥

इति श्रीमहानारायणोपनिषदि त्रयोविंशः खण्डः ॥ २३ ॥

स भूतं स च भव्यं जिज्ञासासक्तिपूरितं जारयिष्ठाः । श्रद्धासत्यो महस्वांस्तपसोपरिष्टाज्ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाहि विद्वान् । तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः ॥ १ ॥ वसुरण्यो विभूरसि प्राणे त्वमसि सन्धाता ब्रह्मन् त्वमसि विश्वसृक् तेजोदास्त्वमस्यग्नेर्वर्चोदास्त्वमसि सूर्यस्य द्युम्नोदास्त्वमसि चन्द्रमसः । उपयाम गृहीतोऽसि । ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत । एतद्वै महोपनिषदं देवानां गुह्यम् । य एवं वेद ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमित्युपनिषत् ॥ २ ॥

इति श्रीमहानारायणोपनिषदि चतुर्विंशः खण्डः ॥ २४ ॥

तस्यैवंविदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्म उरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीत् । यावद्ध्रियते सा दीक्षा यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्सञ्चरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो याव्याहुतीराहुती यदस्य विज्ञानं तज्जुहोति यत्सायम्प्रातरत्ति तत्समिधो यत्सायम्प्रातर्मध्यन्दिनं च तानि सवनानि । ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि य ऋतवस्ते पशुबन्धा ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणाः सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथः । एतद्वै जरामर्यमग्निहोत्रं सत्रं य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वादित्यस्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छति । एतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति तस्माद्ब्राह्मणो महिमानमाप्नोति तस्माद्ब्राह्मणो महिमानमाप्नोतीत्युपनिषत् ॥ १ ॥

इति श्रीमहानारायणोपनिषदि पञ्चविंशः खण्डः ॥ २५ ॥

इत्याथर्वणीया महानारायणोपनिषत्समाप्ता ।

---

## परमहंसोपनिषत् ॥ २० ॥

परमहंसोपनिषद्वेद्यापारसुखाकृति ।

त्रैपादश्रीरामतत्त्वं स्वमात्रमिति चिन्तये ॥

ॐ पूर्णमद इति शान्तिः ॥

हरिः ॐ ॥ अथ योगिनां परमहंसानां कोऽयं मार्गस्तेषां का स्थितिरिति नारदो भगवन्तमुपगत्योवाच । तं भगवानाह । योऽयं परमहंसमार्गो लोके

दुर्लभतरो न तु बाहुल्यो यद्येको भवति स एव नित्यपूतस्थः स एव वेदपुरुष इति विदुषो मन्यन्ते महापुरुषो यच्चित्तं तत्सर्वदा मय्येवावतिष्ठते तस्मादहं च तस्मिन्नेवावस्थीयते। असौ स्वपुत्रमित्रकलत्रबन्ध्वादीञ्छिखायज्ञोपवीते स्वाध्यायं च सर्वकर्माणि संन्यस्यायं ब्रह्माण्डं च हित्वा कौपीनं दण्डमाच्छादनं च स्वशरीरोपभोगार्थाय च लोकस्योपकारार्थाय च परिग्रहेत्। तच्च न मुख्योऽस्ति कोऽयं मुख्य इति चेदयं मुख्यः। न दण्डं न शिखां न यज्ञोपवीतं न चाच्छादनं चरति परमहंसो न शीतं न चोष्णं न सुखं न दुःखं न मानावमाने च षडूर्मिवर्जं निन्दागर्वमत्सरदम्भदर्पेच्छाद्वेषसुखदुःखकामक्रोधलोभमोहहर्षासूयाहंकारादींश्च हित्वा स्ववपुः कुणपमिव दृश्यते यतस्तद्वपुरपध्वस्तं संशयविपरीतमिथ्याज्ञानानां यो हेतुस्तेन नित्यनिवृत्तस्तन्नित्यबोधस्तत्स्वयमेवावस्थितिस्तं शान्तमचलमद्वयानन्दविज्ञानघन एवास्मि। तदेव मम परमधाम तदेव शिखा च तदेवोपवीतं च। परमात्मात्मनोरेकत्वज्ञानेन तयोर्भेद एव विभग्नः सा संध्या॥ सर्वान्कामान्परित्यज्य अद्वैते परमस्थितिः। ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते॥ काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः। (तितिक्षाज्ञानवैराग्यशमादिगुणवर्जितः। भिक्षामात्रेण यो जीवेत्स पापी यतिवृत्तिहा।) स याति नरकान्घोरान्महारौरवसंज्ञकान्। इदमन्तरं ज्ञात्वा स परमहंस आशाम्बरो ननमस्कारो नस्वधाकारो न निन्दा न स्तुतिर्यादृच्छिको भवेद्भिक्षुः। नावाहनं न विसर्जनं न मन्त्रं न ध्यानं नोपासनं च न लक्ष्यं नालक्ष्यं न पृथङ्नापृथगहं न न त्वं न सर्वं चानिकेतस्थितिरेव भिक्षुः सौवर्णादीनां नैव परिग्रहेन्न लोकं नावलोकं च चाबाधकः क इति चेद्बाधकोऽस्त्येव यस्माद्भिक्षुर्हिरण्यं रसेन दृष्टं च स ब्रह्महा भवेद्यस्माद्भिक्षुर्हिरण्यं रसेन स्पृष्टं चेत्स पौल्कसो भवेद्यस्माद्भिक्षुर्हिरण्यं रसेन ग्राह्यं च स आत्महा भवेत्तस्माद्भिक्षुर्हिरण्यं रसेन न दृष्टं च स्पृष्टं च न ग्राह्यं च। सर्वे कामा मनोगता व्यावर्तन्ते दुःखे नोद्विग्नः सुखे न स्पृहा त्यागो रागे सर्वत्र शुभाशुभयोरनभिस्नेहो न द्वेष्टि न मोदं च। सर्वेषामिन्द्रियाणां गतिरुपरमते य आत्मन्येवावस्थीयते। यत्पूर्णानन्दैकबोधस्तद्ब्रह्मैवाहमस्मीति कृतकृत्यो भवति कृतकृत्यो भवति॥

ॐ पूर्णमद इति शान्तिः॥

इति परमहंसोपनिषत्समाप्ता॥

# ब्रह्मोपनिषत् ॥ २१ ॥

ब्रह्मकैवल्यजाबालः श्वेताश्वो हंस आरुणिः ।
गर्भो नारायणो हंसो विन्दुनादशिरः शिखा ॥ १ ॥

ॐ स ह नाववत्विति शान्तिः ॥

ॐ शौनको ह वै महाशालोऽङ्गिरसं भगवन्तं पिप्पलादमपृच्छत् । दिव्ये ब्रह्मपुरे संप्रतिष्ठिता भवन्ति, कथं सृजन्ति, कस्यैष महिमा बभूव यो ह्येष महिमा बभूव क एषः । तस्मै स होवाच ब्रह्मविद्यां वरिष्ठाम् । प्राणो ह्येष आत्मा, आत्मनो महिमा बभूव । देवानामायुः, स देवानां निधनमनिधनं दिव्ये ब्रह्मपुरे विरजं निष्कलं शुभ्रमक्षरं यद्ब्रह्म विभाति स नियच्छति, मधुकरराजानं माक्षिकवत् । यथा माक्षीकैकेन तन्तुना जालं विक्षिपति तेनापकर्षति तथैवैष प्राणो यदा याति संसृष्टमाकृष्य । प्राणदेवतास्ताः सर्वा नाड्यः सुष्वपे श्येनाकाशवद्यथा खं श्येनमाश्रित्य याति स्वमालयमेवं सुषुप्तो ब्रूते । यथैवैष देवदत्तो यष्ट्यापि ताड्यमानो न यत्येवमिष्टापूर्तैः शुभाशुभैर्न लिप्यते । यथा कुमारो निष्काम आनन्दमुपयाति तथैवैष देवदत्तः स्वप्न आनन्दमभियाति । वेद एव परं ज्योतिः । ज्योतिष्कामो ज्योतिरानन्दयते, भूयस्तेनैव स्वप्नाय गच्छति जलौकावत् । यथा जलौकाऽग्रमग्रं नयत्यात्मानं नयति परं संधय । यत्परं नापरं त्यजति स जाग्रदभिधीयते । यथैवैष कपालाष्टकं संनयति, तमेव स्तन इव लम्बते वेददेवयोनिः । यत्र जाग्रति शुभाशुभं निरुक्तमस्य देवस्य स संप्रसारोऽन्तर्यामी खगः कर्कटकः पुष्करः पुरुषः प्राणो हिंसा परापरं ब्रह्म, आत्मा देवता वेदयति । य एवं वेद स परं ब्रह्म धाम क्षेत्रज्ञमुपैति । अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति । नाभिर्हृदयं कण्ठं मूर्धेति । तत्र चतुष्पादं ब्रह्म विभाति । जागरितं स्वप्नं सुषुप्तं तुरीयमिति । जागरिते ब्रह्मा स्वप्ने विष्णुः सुषुप्तौ रुद्रस्तुरीयं परमाक्षरम् । स आदित्यश्च विष्णुश्चेश्वरश्च स पुरुषः स प्राणः स जीवः सोऽग्निः सेश्वरश्च जाग्रत्तेषां मध्ये यत्परं ब्रह्म विभाति । स्वयममनस्कमश्रोत्रमपाणिपादं ज्योतिर्वर्जितम् । न तत्र लोका नलोका वेदा नवेदा देवा नदेवा यज्ञा नयज्ञा माता नमाता पिता नपिता स्नुषा नस्नुषा चाण्डालो नचाण्डालः पौल्कसो नपौल्कसः श्रमणो नश्रमणः पशवो नपशवस्तापसो नतापस इत्येकमेव परं ब्रह्म विभाति । हृद्याकाशे तद्विज्ञानमाकाशं तत्सुषिरमाकाशं तद्वेद्यं हृद्याकाशं यस्मिन्निदं संचरति विचरति यस्मिन्निदं सर्वमोतं प्रोतं सं विभोः प्रजा ज्ञायेरन् । न तत्र देवा ऋषयः

पितर ईशते प्रतिबुद्धः सर्वविदिति । हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः । हृदि प्राणश्च ज्योतिश्च त्रिवृत्सूत्रं च यन्महत् । हृदि चैतन्ये तिष्ठति । यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः । सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद्बुधः । यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् । सूचनात्सूत्रमित्याहुः सूत्रं नाम परं पदम् । तत्सूत्रं विदितं येन स विप्रो वेदपारगः । येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव । तत्सूत्रं धारयेद्योगी योगवित्तत्त्वदर्शिवान् । बहिःसूत्रं त्यजेद्विद्वान्योगमुत्तममास्थितः । ब्रह्मभावमयं सूत्रं धारयेद्यः स चेतनः । धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत् ॥ सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् । ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ॥ ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः । ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ॥ अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा । स शिखीत्युच्यते विद्वानितरे केशधारिणः ॥ कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः । तैः संधार्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम् ॥ शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् । ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः ॥ इदं यज्ञोपवीतं तु पवित्रं यत्परायणम् । स विद्वान्यज्ञोपवीती स्यात्स यज्ञः स च यज्ञवित् ॥ एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥ एको मनीषी निष्क्रियाणां बहूनामेकं रूपं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शांतिः शाश्वती नेतरेषाम् ॥ आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनाभ्यासादेवं पश्येन्निगूढवत् ॥ तिलेषु तैलं दधनीव सर्पिरापः स्रोतःस्वरणीषु चाग्निः । एवमात्मात्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति ॥ ऊर्णनाभिर्यथा तन्तून्सृजते संहरत्यपि । जाग्रत्स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः ॥ पद्मकोशप्रतीकाशं सुषिरं चाप्यधोमुखम् । हृदयं तद्विजानीयाद्विश्वस्यायतनं महत् ॥ नेत्रस्थं जाग्रतं विद्यात्कण्ठे स्वप्नं विनिर्दिशेत् । सुषुप्तं हृदयस्थं तु तुरीयं मूर्ध्नि संस्थितम् ॥ यदात्मा प्रज्ञयात्मानं संधत्ते परमात्मनि । तेन संध्या ध्यानमेव तस्मात्संध्याभिवन्दनम् । निरोदका ध्यानसंध्या वाक्कायक्लेशवर्जिता । संधिनी सर्वभूतानां सा संध्या ह्येकदण्डिनाम् ॥ यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दमेतज्जीवस्य यं ज्ञात्वा मुच्यते बुधः ॥ सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् । आत्मविद्यातपोमूलं तद्ब्रह्मोपनिषत्परम् । सर्वात्मैकस्वरूपेण तद्ब्रह्मोपनिषत्परमिति ॥ सह नाववत्विति शान्तिः ॥

इति ब्रह्मोपनिषत्समाप्ता ॥

---

# अमृतनादोपनिषत् ॥ २२ ॥

अमृतनादोपनिषत्प्रतिपाद्यं पराक्षरम् ।
त्रैपदानन्दसाम्राज्यं हृदि मे भातु संततम् ॥

ॐ सह नाववत्विति शान्तिः ॥ शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः । परमं ब्रह्मविद्याया उल्कावन्नान्यथोत्सृजेत् ॥ १ ॥ ओंकारं रथमारुह्य विष्णुं कृत्वाथ सारथिम् । ब्रह्मलोकपदान्वेषी रुद्राराधनतत्परः ॥ २ ॥ तावद्रथेन गन्तव्यं यावद्रथपथि स्थितः । स्थित्वा रथपथस्थानं रथमुत्सृज्य गच्छति ॥ ३ ॥ मात्रालिङ्गपदं त्यक्त्वा शब्दव्यञ्जनवर्जितम् । अस्वरेण मकारेण पदं सूक्ष्मं च गच्छति ॥ ४ ॥ शब्दादिविषयाः पञ्च मनश्चैवातिचञ्चलम् । चिन्तयेदात्मनो रश्मीन्प्रत्याहारः स उच्यते ॥ ५ ॥ प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा । तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥ ६ ॥ यथा पर्वतधातूनां दह्यन्ते धमनान्मलाः । तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात् ॥ ७ ॥ प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषम् । (प्रत्याहारेण संसर्गान्ध्यानेनानीश्वरान्गुणान् ।) ॥ ८ ॥ किल्बिषं हि क्षयं नीत्वा रुचिरं चैव चिन्तयेत् ॥ ९ ॥ रुचिरे रेचकं चैव वायोराकर्षणं तथा । प्राणायामास्त्रयः प्रोक्ता रेचकपूरककुम्भकाः ॥ १० ॥ सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ ११ ॥ उत्क्षिप्य वायुमाकाशं शून्यं कृत्वा निरात्मकम् । शून्यभावेन युञ्जीयाद्रेचकस्येति लक्षणम् ॥ १२ ॥ नोच्छ्वसेन्नानुच्छ्वसेन्नैव गात्राणि च न चालयेत् । एवं वायुर्ग्रहीतव्यः पूरकस्येति लक्षणम् ॥ १३ ॥ वक्त्रेणोत्पलनालेन वायुं कृत्वा निराश्रयम् । एवं वायुर्ग्रहीतव्यः कुम्भकस्येति लक्षणम् ॥ १४ ॥ अन्धवत्पश्य रूपाणि शृणु शब्दमकर्णवत् । काष्ठवत्पश्य ते देहं प्रशान्तस्येति लक्षणम् ॥ १५ ॥ मनः संकल्पकं ध्यात्वा संक्षिप्यात्मनि बुद्धिमान् । धारयित्वा तथात्मानं धारणा परिकीर्तिता ॥ १६ ॥ आगमस्याविरोधेन ऊहनं तर्क उच्यते । यं लब्ध्वाप्यवमन्येत स समाधिः प्रकीर्तितः ॥ १७ ॥ भूमिभागे समे रम्ये सर्वदोषविवर्जिते । कृत्वा मनोमयीं रक्षां जप्त्वा चैवाथ मण्डले ॥ १८ ॥ पद्मकं स्वस्तिकं वापि भद्रासनमथापि वा । बद्ध्वा योगासनं सम्यगुत्तराभिमुखस्थितः ॥ १९ ॥ नासिकापुटमङ्गुल्या पिधायैकेन मारुतम् । आकृष्य धारयेदग्निं शब्दमेवाभिचिन्तयेत् ॥ २० ॥ ओमित्येकाक्षरं ब्रह्म ओमित्येकेन रेचयेत् । दिव्यमन्त्रेण बहुशः कुर्यादात्ममलच्युतिम् ॥ २१ ॥ पश्चाद्ध्यायेत पूर्वोक्तं क्रमशो मन्त्र निर्दिशेत् । स्थूलातिस्थूलमात्रायां नातिमूर्ध्वमतिक्रमः ॥ २२ ॥ तिर्यगूर्ध्व-

मधो दृष्टिं विनिधार्य महामतिः । स्थिरः स्थायी विनिष्कम्पं तदा योगं समभ्यसेत् ॥ २३ ॥ ताला मात्रा तथा योगो धारणा योजनं तथा । द्वादशमात्रो योगस्तु कालतो नियतः स्मृतः ॥ २४ ॥ अघोषमव्यञ्जनमस्वरं च अकण्ठताल्वोष्ठमनासिकं च । अरेफजातमुभयोष्ठवर्जितं यदक्षरं न क्षरते कदाचित् ॥ २५ ॥ येनासौ पश्यते मार्गं प्राणस्तेन हि गच्छति । अतस्समभ्यसेन्नित्यं सन्मार्गगमनाय वै ॥ २६ ॥ हृद्द्वारं वायुद्वारं च ऊर्ध्वद्वारमतः परम् । मोक्षद्वारं बिलं चैव सुषिरं मण्डलं विदुः ॥ २७ ॥ भयं क्रोधमथालस्यमतिस्वप्नातिजागरम् । अत्याहारमनाहारं नित्यं योगी विवर्जयेत् ॥ २८ ॥ अनेन विधिना सम्यङ्नित्यमभ्यसतः क्रमात् । स्वयमुत्पद्यते ज्ञानं त्रिभिर्मासैर्न संशयः ॥ २९ ॥ चतुर्भिः पश्यते देवान्पञ्चभिस्तुल्यविक्रमः । इच्छयाप्नोति कैवल्यं षष्ठे मासि न संशयः ॥ ३० ॥ पार्थिवः पञ्चमात्राणि चतुर्मात्राणि वारुणः । आग्नेयस्तु त्रिमात्राणि वायव्यस्तु द्विमात्रकः ॥ ३१ ॥ एकमात्रस्तथाकाशो ह्यर्धमात्रं तु चिन्तयेत् । सिद्धिं कृत्वा तु मनसा चिन्तयेदात्मनात्मनि ॥ ३२ ॥ त्रिंशत्पर्वाङ्गुलः प्राणो यत्र प्राणः प्रतिष्ठितः । एष प्राण इति ख्यातो बाह्यप्राणः स गोचरः ॥ ३३ ॥ अशीतिःट्च शतं चैव सहस्राणि त्रयोदश । लक्षश्चैकोऽपि निःश्वास अहोरात्रप्रमाणतः ॥ ३४ ॥ प्राण आद्यो हृदि स्थाने अपानस्तु पुनर्गुदे । समानो नाभिदेशे तु उदानः कण्ठमाश्रितः ॥ ३५ ॥ व्यानः सर्वेषु चाङ्गेषु सदा व्यावृत्य तिष्ठति । अथ वर्णास्तु पञ्चानां प्राणादीनामनुक्रमात् ॥ ३६ ॥ रक्तवर्णमणिप्रख्यः प्राणो वायुः प्रकीर्तितः । अपानस्तस्य मध्ये तु इन्द्रगोपसमप्रभः ॥ ३७ ॥ समानस्तस्य मध्ये तु गोक्षीरधवलप्रभः । अपाण्डुर उदानश्च व्यानो ह्यर्चिःसमप्रभः ॥ ३८ ॥ यस्यैष मण्डलं भित्त्वा मारुतो याति मूर्धनि । यत्र तत्र म्रियेद्वापि न स भूयोऽभिजायते न स भूयोऽभिजायत इत्युपनिषत् ॥ ३९ ॥ ॐ सह नाववत्विति शान्तिः ॥

इत्यमृतनादोपनिषत्समाप्ता ॥

---

## अथर्वशिरउपनिषत् ॥ २३ ॥

अथर्वशिरसामर्थमनर्थप्रोतवाचकम् ।
सर्वाधारमनाधारं स्वमात्रत्रैपदाक्षरम् ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

ॐ देवा ह वै स्वर्गं लोकमायँस्ते रुद्रमपृच्छन्को भवानिति । सोऽब्रवीद-

हमेकः प्रथममासीद्वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति । सोऽन्तरादन्तरं प्राविशत् दिशो व्यन्तरं प्राविशत् सोऽहं नित्यानित्यो व्यक्ताव्यक्तो ब्रह्माहं ब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं दक्षिणाञ्च उदञ्चोऽहं अधश्चोर्ध्वं चाहं दिशश्च प्रतिदिशश्चाहं पुमानपुमान् स्त्रियश्चाहं गायत्र्यहं सावित्र्यहं त्रिष्टुब्जगत्यनुष्टुप् चाहं छन्दोऽहं गार्हपत्यो दक्षिणाग्निराहवनीयोऽहं सत्योऽहं गौरहं गौर्यहमृगहं यजुरहं सामाहमथर्वाङ्गिरसोऽहं ज्येष्ठोऽहं श्रेष्ठोऽहं वरिष्ठोऽहमापोऽहं तेजोऽहं गुह्योऽहमरण्योऽहमक्षरमहं क्षरमहं पुष्करमहं पवित्रमहमग्रं च मध्यं च बहिश्च पुरस्ताज्ज्योतिरित्यहमेव सर्वं व्योममेव स सर्वं समा यो मां वेद स देवान्वेद स सर्वांश्च वेदान्साङ्गानपि ब्रह्म ब्राह्मणैश्च गां गोभिर्ब्राह्मणान्ब्राह्मण्येन हविर्हविषा आयुरायुषा सत्येन सत्यं धर्मेण धर्मं तर्पयामि स्वेन तेजसा । ततो ह वै ते देवा रुद्रमपृच्छन् ते देवा रुद्रमपश्यन् । ते देवा रुद्रमध्यायंस्ते देवा ऊर्ध्वबाहवो रुद्रं स्तुवन्ति ॥ १ ॥ ॐ यो वै रुद्रः स भगवान्यश्च ब्रह्मा तस्मै वै नमो नमः ॥ १ ॥ यो वै रुद्रः स भगवान् यश्च विष्णुस्तस्मै वै नमो नमः ॥ २ ॥ यो वै रुद्रः स भगवान्यश्च स्कन्दस्तस्मै वै नमो नमः ॥ ३ ॥ यो वै रुद्रः स भगवान्यश्चेन्द्रस्तस्मै वै नमो नमः ॥ ४ ॥ यो वै रुद्रः स भगवान्यश्चाग्निस्तस्मै वै नमो नमः ॥ ५ ॥ यो वै रुद्रः स भगवान्यश्च वायुस्तस्मै वै नमो नमः ॥ ६ ॥ यो वै रुद्रः स भगवान्यश्च सूर्यस्तस्मै वै नमो नमः ॥ ७ ॥ यो वै रुद्रः स भगवान्यश्च सोमस्तस्मै वै नमो नमः ॥ ८ ॥ यो वै रुद्रः स भगवान्ये चाष्टौ ग्रहास्तस्मै वै नमो नमः ॥ ९ ॥ यो वै रुद्रः स भगवान्ये चाष्टौ प्रतिग्रहास्तस्मै वै नमो नमः ॥ १० ॥ यो वै रुद्रः स भगवान्या च भूस्तस्मै वै नमो नमः ॥ ११ ॥ यो वै रुद्रः स भगवान्या च भुवस्तस्मै वै नमो नमः ॥ १२ ॥ यो वै रुद्रः स भगवान्या च स्वस्तस्मै वै नमो नमः ॥ १३ ॥ यो वै रुद्रः स भगवान्यच्च महस्तस्मै वै नमो नमः ॥ १४ ॥ यो वै रुद्रः स भगवान्या च पृथिवी तस्मै वै नमो नमः ॥ १५ ॥ यो वै रुद्रः स भगवान्यच्चान्तरिक्षं तस्मै वै नमो नमः ॥ १६ ॥ यो वै रुद्रः स भगवान्या च द्यौस्तस्मै वै नमो नमः ॥ १७ ॥ यो वै रुद्रः स भगवान्याश्चापस्तस्मै वै नमो नमः ॥ १८ ॥ यो वै रुद्रः स भगवान्यच्च तेजस्तस्मै वै नमो नमः ॥ १९ ॥ यो वै रुद्रः स भगवान्यच्चाकाशं तस्मै वै नमो नमः ॥ २० ॥ यो वै रुद्रः स भगवान्यश्च कालस्तस्मै वै नमो नमः ॥ २१ ॥ यो वै रुद्रः स भगवान्यश्च यमस्तस्मै वै नमो नमः ॥ २२ ॥ यो वै रुद्रः स

भगवान्यश्च मृत्युस्तस्मै वै नमो नमः ॥ २३ ॥ यो वै रुद्रः स भगवान्यच्चामृतं तस्मै वै नमो नमः ॥ २४ ॥ यो वै रुद्रः स भगवान्यच्च विश्वं तस्मै वै नमो नमः ॥ २५ ॥ यो वै रुद्रः स भगवान्यच्च स्थूलं तस्मै वै नमो नमः ॥ २६ ॥ यो वै रुद्रः स भगवान्यच्च सूक्ष्मं तस्मै वै नमो नमः ॥ २७ ॥ यो वै रुद्रः स भगवान्यच्च शुक्लं तस्मै वै नमो नमः ॥ २८ ॥ यो वै रुद्रः स भगवान्यच्च कृष्णं तस्मै वै नमो नमः ॥ २९ ॥ यो वै रुद्रः स भगवान्यच्च कृत्स्नं तस्मै वै नमो नमः ॥ ३० ॥ यो वै रुद्रः स भगवान्यच्च सत्यं तस्मै वै नमो नमः ॥ ३१ ॥ यो वै रुद्रः स भगवान्यच्च सर्वं तस्मै वै नमो नमः ॥ ३२ ॥ २ ॥ भूस्ते आदिर्मध्यं भुवस्ते स्वस्ते शीर्षं विश्वरूपोऽसि ब्रह्मैकस्त्वं द्विधा त्रिधा वृद्धस्त्वं शान्तिस्त्वं पुष्टिस्त्वं हुतमहुतं दत्तमदत्तं सर्वमसर्वं विश्वमविश्वं कृतमकृतं परमपरं परायणं च त्वम् । अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान् । किमस्मान्कृणवदरातिः किमु धूर्तिरमृतं मर्त्यं च । सोमसूर्यः पुरस्तात् सूक्ष्मः पुरुषः । सर्वं जगद्धितं वा एतदक्षरं प्राजापत्यं सौम्यं सूक्ष्मं पुरुषं ग्राह्यमग्राह्येण भावं भावेन सौम्यं सौम्येन सूक्ष्मं सूक्ष्मेण वायव्यं वायव्येन ग्रसति तस्मै महाग्रासाय वै नमो नमः । हृदिस्था देवताः सर्वा हृदि प्राणे प्रतिष्ठिताः । हृदि त्वमसि यो नित्यं तिस्रो मात्राः परस्तु सः । तस्योत्तरतः शिरो दक्षिणतः पादौ य उत्तरतः स ओङ्कारः य ओङ्कारः स प्रणवः यः प्रणवः स सर्वव्यापी यः सर्वव्यापी सोऽनन्तो योऽनन्तस्तत्तारं यत्तारं तच्छुक्लं यच्छुक्लं तत्सूक्ष्मं यत्सूक्ष्मं तद्वैद्युतं यद्वैद्युतं तत्परं ब्रह्म यत्परं ब्रह्म स एकः य एकः स रुद्रो यो रुद्रः स ईशानो य ईशानः स भगवान् महेश्वरः ॥ ३ ॥ अथ कस्मादुच्यत ओङ्कारो यस्मादुच्चार्यमाण एव प्राणानूर्ध्वमुत्क्रामयति तस्मादुच्यते ओङ्कारः । अथ कस्मादुच्यते प्रणवः यस्मादुच्चार्यमाण एव ऋग्यजुःसामाथर्वाङ्गिरसो ब्रह्म ब्राह्मणेभ्यः प्रणामयति नामयति च तस्मादुच्यते प्रणवः । अथ कस्मादुच्यते सर्वव्यापी यस्मादुच्चार्यमाण एव यथा पललपिण्डमिव शान्तरूपमोतप्रोतमनुप्राप्तो व्यतिसृष्टश्च तस्मादुच्यते सर्वव्यापी । अथ कस्मादुच्यतेऽनन्तो यस्मादुच्चार्यमाण एव तिर्यगूर्ध्वमधस्ताच्चास्यान्तो नोपलभ्यते तस्मादुच्यतेऽनन्तः । अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव गर्भजन्मव्याधिजरामरणसंसारमहाभयात्तारयति त्रायते च तस्मादुच्यते तारम् । अथ कस्मादुच्यते शुक्लं यस्मादुच्चार्यमाण एव क्रन्दते क्लामयते च तस्मादुच्यते शुक्लम् । अथ कस्मादुच्यते सूक्ष्मं यस्मादुच्चार्यमाण

एव सूक्ष्मो भूत्वा शरीराण्यधितिष्ठति सर्वाणि चाङ्गान्यभिमृशति तस्मादुच्यते सूक्ष्मम् । अथ कस्मादुच्यते वैद्युतं यस्मादुच्चार्यमाण एवाव्यक्ते महति तमसि द्योतयते तस्मादुच्यते वैद्युतम् । अथ कस्मादुच्यते परं ब्रह्म यस्मात्परमपरं परायणं च बृहद्बृहत्या बृंहयति तस्मादुच्यते परं ब्रह्म । अथ कस्मादुच्यते एको यः सर्वान्प्राणान्संभक्ष्य संभक्षणेनाजः संसृजति विसृजति च । तीर्थमेके व्रजन्ति तीर्थमेके दक्षिणाः प्रत्यञ्च उदञ्चः प्राञ्चोऽभिव्रजन्त्येके तेषां सर्वेषामिह संगतिः । साकं स एको भूतश्चरति प्रजानंस्तस्मादुच्यत एकः । अथ कस्मादुच्यते रुद्रः यस्मादृषिभिर्नान्यैर्भक्तैर्द्रुतमस्य रूपमुपलभ्यते तस्मादुच्यते रुद्रः । अथ कस्मादुच्यते ईशानः यः सर्वान्देवानीशते ईशनीभिर्जननीभिश्च शक्तिभिः । अभि त्वा शूर नोनुमो दुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुष इति तस्मादुच्यत ईशानः । अथ कस्मादुच्यते भगवान्महेश्वरः यस्माद्भक्ताञ्ज्ञानेन भजत्यनुगृह्णाति च वाचं संसृजति विसृजति च सर्वान्भावान्परित्यज्यात्मज्ञानेन योगैश्वर्येण महति महीयते तस्मादुच्यते भगवान्महेश्वरः । तदेतद्रुद्रचरितम् ॥ ४ ॥ एषो ह देवः प्रदिशो नु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः । स एव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः । एको रुद्रो न द्वितीयाय तस्मै य इमाँल्लोकानीशत ईशनीभिः । प्रत्यङ्जनास्तिष्ठति संचुकोचान्तकाले संसृज्य विश्वा भुवनानि गोप्ता । यो योनिं योनिमधितिष्ठत्येको येनेदं संचरति विचरति सर्वम् । तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति । क्षमां हित्वा हेतुजालस्य मूलं बुद्ध्या संचितं स्थापयित्वा तु रुद्रे रुद्रमेकत्वमाहुः । शाश्वतं वै पुराणमिषमूर्जेन पशवोऽनुनामयन्तं मृत्युपाशान् । तदेतेनात्मन्नेतेनार्धचतुर्थमात्रेण शान्तिं संसृजति पाशविमोक्षणम् । या सा प्रथमा मात्रा ब्रह्मदेवत्या रक्ता वर्णेन यस्तां ध्यायते नित्यं स गच्छेद्ब्राह्मं पदम् । या सा द्वितीया मात्रा विष्णुदेवत्या कृष्णा वर्णेन यस्तां ध्यायते नित्यं स गच्छेद्वैष्णवं पदम् । या सा तृतीया मात्रा ईशानदेवत्या कपिला वर्णेन यस्तां ध्यायते नित्यं स गच्छेदैशानं पदम् । या साऽर्धचतुर्थी मात्रा सर्वदेवत्याऽव्यक्तीभूता खं विचरति शुद्धस्फटिकसन्निभा वर्णेन यस्तां ध्यायते नित्यं स गच्छेत्पदमनामकं तदेतमुपासीत मुनयोऽवाग्वदन्ति न तस्य ग्रहणमयं पन्था विहित उत्तरेण येन देवा यान्ति येन पितरो येन ऋषयः परमपरं परायणं चेति । वालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातरूपं वरेण्यम् । तमात्मस्थं ये नु पश्यन्ति धीरास्तेषां शान्तिर्भवति नेतरेषाम् । यस्मिन्क्रोधं या च तृष्णा क्षमां च तृष्णां हित्वा हेतुजालस्य मूलम् । बुद्ध्या

संचितं स्थापयित्वा तु रुद्रे रुद्रमेकत्वमाहुः । रुद्रो हि शाश्वतेन वै पुराणेनेषमूर्जेण तपसा नियन्ता । अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वꣳह वा इदं भस्म मन एतानि चक्षूंषि यस्माद्व्रतमिदं पाशुपतं यद्भस्मनाङ्गानि संस्पृशेत्तस्माद्ब्रह्म तदेतत्पाशुपतं पशुपाशविमोक्षणाय ॥ ५ ॥ योऽग्नौ रुद्रो योऽप्स्वन्तर्य ओषधीर्वीरुध आविवेश । य इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नमोऽस्त्वग्नये । यो रुद्रोऽग्नौ यो रुद्र ओषधीर्वीरुध आविवेश । यो रुद्र इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय वै नमो नमः । यो रुद्रोऽप्सु यो रुद्र ओषधीषु यो रुद्रो वनस्पतिषु । येन रुद्रेण जगदूर्ध्वं धारितं पृथिवी द्विधा त्रिधर्ता धारिता नागा येऽन्तरिक्षे तस्मै रुद्राय वै नमो नमः । मूर्धानमस्य संसीव्याथर्वा हृदयं च यत् । मस्तिष्कादूर्ध्वः प्रेरयत्पवमानोऽधि शीर्षतः । तद्वा अथर्वणः शिरो देवकोशः समुब्जितः । तत्प्राणोऽभिरक्षति शिरोऽन्नमथो मनः । न च दिवो देवजनेन गुप्ता नवान्तरिक्षाणि नव भूम इमाः । यस्मिन्निदं सर्वमोतप्रोतं यस्मादन्यन्न परं किंचनास्ति । न तस्मात्पूर्वं न परं तदस्ति न भूतं नोत भव्यं यदासीत् । सहस्रपादेकमूर्धा व्याप्तं स एवेदमावरीवर्ति भूतम् । अक्षरात्संजायते कालः कालाद्व्यापक उच्यते । व्यापको हि भगवान्रुद्रो भोगायमानो यदा शेते रुद्रस्तदा संहार्यते प्रजाः । उच्छ्वसिते तमो भवति तमस आपोऽप्स्वङ्गुल्या मथिते मथितं शिशिरे शिशिरं मथ्यमानं फेनो भवति, फेनादण्डं भवत्यण्डाद्ब्रह्मा भवति, ब्रह्मणो वायुः वायोरोंकार ॐकारात्सावित्री सावित्र्या गायत्री गायत्र्या लोका भवन्ति । अर्चयन्ति तपः सत्यं मधु क्षरन्ति यद्ध्रुवम् । एतद्धि परमं तप आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरों नम इति ॥ ६ ॥ य इदमथर्वशिरो ब्राह्मणोऽधीते अश्रोत्रियः श्रोत्रियो भवति अनुपनीत उपनीतो भवति सोऽग्निपूतो भवति स वायुपूतो भवति स सूर्यपूतो भवति स सोमपूतो भवति स सत्यपूतो भवति स सर्वपूतो भवति स सर्वैर्देवैर्ज्ञातो भवति स सर्वैर्वेदैरनुध्यातो भवति स सर्वेषु तीर्थेषु स्नातो भवति तेन सर्वैः क्रतुभिरिष्टं भवति गायत्र्याः षष्टिसहस्राणि जप्तानि भवन्ति इतिहासपुराणानां रुद्राणां शतसहस्राणि जप्तानि भवन्ति । प्रणवानामयुतं जप्तं भवति । आ चक्षुषः पङ्क्तिं पुनाति । आ सप्तमात्पुरुषयुगान्पुनातीत्याह भगवानथर्वशिरः सकृज्जप्त्वैव शुचिः स पूतः कर्मण्यो भवति । द्वितीयं जप्त्वा गणाधिपत्यमवाप्नोति । तृतीयं जप्त्वैवमेवानुप्रविशत्यों सत्यमों सत्यम् ॥ ७ ॥ ॐ स ह नाववत्विति शान्तिः ॥

इत्यथर्ववेदेऽथर्वशिरउपनिषत्समाप्ता ॥

---

# अथर्वशिखोपनिषत् ॥ २४ ॥

ओंकारार्थतया भातं तुर्योंकाराग्रभासुरम् ।
तुर्यतुर्यं त्रिपाद्रामं स्वमात्रं कलयेऽन्वहम् ॥
ॐ भद्रं कर्णेभिरिति शान्तिः ॥

ॐ पिप्पलादोऽङ्गिराः सनत्कुमारश्चाथर्वाणं भगवन्तं पप्रच्छ भगवन्किमादौ प्रयुक्तं ध्यानं ध्यायितव्यं किं तद्ध्यानं को वा ध्याता कश्चिद्ध्येय इति । अथैभ्योऽथर्वा प्रत्युवाच । ओमित्येतदक्षरमादौ प्रयुक्तं ध्यानं ध्यायितव्यमोमित्येतदक्षरस्य पादाश्चत्वारो देवाश्चत्वारो वेदाश्चतुष्पादेतदक्षरं परं ब्रह्म । पूर्वाऽस्य मात्रा पृथिव्यकारः स ऋग्भिर्ऋग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यः । द्वितीयान्तरिक्षं स उकारः स यजुर्भिर्यजुर्वेदो रुद्रो रुद्रास्त्रिष्टुब्दक्षिणाग्निः । तृतीया द्यौः स मकारः स सामभिः सामवेदो विष्णुरादित्या जगत्याहवनीयः । यावसानेऽस्य चतुर्थ्यर्धमात्रा सा लुप्तमकारः सोथर्वणैर्मन्त्रैरथर्ववेदः संवर्तकोऽग्निर्मरुत एकऋषी रुचिरा भास्वती स्वभा । प्रथमा रक्ता ब्राह्मी ब्रह्मदेवत्या द्वितीया शुभा शुक्ला रौद्री रुद्रदेवत्या तृतीया कृष्णा विष्णुमती विष्णुदेवत्या चतुर्थी विद्युन्मती सर्ववर्णा पुरुषदैवत्या । स एष ह्योंकारश्चतुष्पादश्चतुःशिराश्चतुर्थ्यर्धमात्रा स्थूलह्रस्वदीर्घप्लुत इति ॥ ॐ ॐ ॐ इति त्रिरुक्तश्चतुर्थः शान्तात्मा प्लुतप्रयोगे न सममित्यात्मज्योतिः सकृदावर्तव्य ॐ स एष सर्वान्प्राणान्सकृदुच्चारितमात्रः स एष ह्यूर्ध्वमुत्क्रामयतीत्योंकारः ॥ १ ॥

प्रणवः सर्वान्प्राणान्प्रणामयति नामयति चैतस्मात्प्रणवश्चतुर्धाऽवस्थित इति वेददेवयोनिर्धेयाश्चेति संधर्ता सर्वेभ्यो दुःखभयेभ्यः संतारयति तारणात्तानि सर्वाणीति विष्णुः सर्वाञ्जयति ब्रह्माऽबृहत्सर्वकारणानि संप्रतिष्ठाप्य ध्यानाद्विष्णुर्मनसि नादान्ते परमात्मनि स्थाप्य ध्येयमीशानं प्रध्यायन्तीशा वा सर्वमिदं प्रयुक्तम् । ब्रह्मविष्णुरुद्रेन्द्राः संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सहभूतानि करणं सर्वमैश्वर्यं संपन्नं शिवमाकाशं मध्येध्रुवस्थम् । ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च । पञ्चधा पञ्चदेवत्यः प्रणवः परिपठ्यते । तत्राधिकं क्षणमेकमास्थाय क्रतुशतस्यापि फलमवाप्नोति कृत्स्नमोंकारगतं च सर्वज्ञानेन योगध्यानाना शिव एको ध्येयः शिवंकरः सर्वमन्यत्परित्यज्यैतामधीत्य द्विजो गर्भवासान्मुच्यते गर्भवासान्मुच्यत इति ॥ २ ॥ इत्योँ सत्यमित्युपनिषत् ॥ ३ ॥ ॐ भद्रं कर्णेभिरिति शान्तिः ॥

इत्यथर्ववेदेऽथर्वशिखोपनिषत्समाप्ता ॥ १ ॥

---

# मैत्रायण्युपनिषत् ॥ २५ ॥

वैराग्योत्थभक्तियुक्तब्रह्ममात्रप्रबोधतः ।
यत्पदं मुनयो यान्ति तत्त्रैपदमहं महः ॥
ॐ आप्यायन्त्विति शान्तिः ॥

मैत्रायणी कौषितकी बृहज्जाबालतापनी । कालाग्निरुद्रमैत्रेयी सुबालक्षुरिमन्त्रिका । ॐ बृहद्रथो ह वै नाम राजा राज्ये ज्येष्ठं पुत्रं निधापयित्वेदमशाश्वतं मन्यमानः शारीरं वैराग्यमुपेतोऽरण्यं निर्जगाम स तत्र परमं तप आस्थायादित्यमीक्षमाण ऊर्ध्वबाहुस्तिष्ठत्यन्ते सहस्रस्य मुनिरन्तिकमाजगामाग्निरिवाधूमकस्तेजसा निर्दहन्निवात्मविद्भगवाञ्शाकायन्य उत्तिष्ठोत्तिष्ठ वरं वृणीष्वेति राजानमब्रवीत्स तस्मै नमस्कृत्योवाच भगवन्नाहमात्मवित्त्वं तत्त्वविच्छृणुमो वयं स त्वं नो ब्रूहीत्येतद्वृत्तं पुरस्तादशक्यं मा पृच्छ प्रश्नमैक्ष्वाकान्यान्कामान्वृणीष्वेति शाकायन्यस्य चरणावभिमृश्यमानो राजेमां गाथां जगाद ॥ १ ॥ भगवन्नस्थिचर्मस्नायुमज्जामांसशुक्रशोणितश्लेष्माश्रुदूषिते विण्मूत्रवातपित्तकफसंघाते दुर्गन्धे निःसारेऽस्मिञ्छरीरे किं कामोपभोगैः ॥ २ ॥ कामक्रोधलोभभयविषादेर्ष्येष्टवियोगानिष्टसंप्रयोगक्षुत्पिपासाजरामृत्युरोगशोकाद्यैरभिहतेऽस्मिञ्छरीरे किं कामोपभोगैः ॥ ३ ॥ सर्वं चेदं क्षयिष्णु पश्यामो यथेमे दंशमशकादयस्तृणवन्नश्यतयोद्भूतप्रध्वंसिनः ॥ ४ ॥ अथ किमेतैर्वा परेऽन्ये महाधनुर्धराश्चक्रवर्तिनः केचित्सुद्युम्नभूरिद्युम्नेन्द्रद्युम्नकुवलयाश्वयौवनाश्ववद्धियाश्व श्वपतिः शशबिन्दुर्हरिश्चन्द्रोऽम्बरीषो मनूक्तस्वयातिर्ययातिरनरण्योक्षसेनोत्थमरुत्तभरतप्रभृतयो राजानो मिषतो बन्धुवर्गस्य महतीं श्रियं त्यक्त्वास्माल्लोकादमुं लोकं प्रयान्ति ॥ ५ ॥ अथ किमेतैर्वा परेऽन्ये गन्धर्वासुरयक्षराक्षसभूतगणपिशाचोरगग्रहादीनां निरोधनं पश्यामः ॥ ६ ॥ अथ किमेतैर्वान्यानां शोषणं महार्णवानां शिखरिणां प्रपतनं ध्रुवस्य प्रचलनं स्थानं वा तरूणां निमज्जनं पृथिव्याः स्थानादपसरणं सुराणां सोऽहमित्येतद्विधेऽस्मिन्संसारे किं कामोपभोगैर्यैरेवाश्रितस्यासकृदिहावर्तनं दृश्यत इत्युद्धर्तुमर्हसीत्यन्धोदपानस्थो भेक इवाहमस्मिन्संसारे भगवंस्त्वं नो गतिस्त्वं नो गतिः ॥ ७ ॥

इति मैत्रायण्युपनिषत्सु प्रथमः प्रपाठकः ॥

अथ भगवान्शाकायन्यः सुप्रीतस्त्वब्रवीद्राजानम् । महाराज बृहद्रथेक्ष्वाकुवंशध्वज शीघ्रमात्मज्ञः कृतकृत्यस्त्वं मरुन्नाम्नेति विश्रुतोऽसीति । अयं वाव खल्वात्मा ते यः कतमो भगव इति तं होवाचेति ॥ १ ॥ अथ य एष उच्छ्वासाविष्टम्भनेनोर्ध्वमुत्क्रान्तो व्ययमानोऽव्ययमानस्तमः प्रणुदत्येष आत्मेत्याह भगवान्मैत्रिः । इत्येवं ह्याह । अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इत्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति ॥ २ ॥ अथ खल्वियं ब्रह्मविद्या सर्वोपनिषद्विद्या वा राजन्नस्माकं भगवता मैत्रिणाऽऽख्याताऽहं ते कथयिष्यामीति । अथापहतपाप्मानस्तिग्मतेजसा ऊर्ध्वरेतसो वालखिल्या इति श्रूयन्ते । अथ क्रतुं प्रजापतिमब्रुवन्—भगवन्शकटमिवाचेतनमिदं शरीरं कस्यैष खल्वीदृशो महिमाऽतीन्द्रियभूतस्य येनैतद्विधमेतच्चेतनवत्प्रतिष्ठापितं प्रचोदयिता वाऽस्य यद्भगवन्वेत्सि तदस्माकं ब्रूहीति तान्होवाचेति ॥ ३ ॥ यो ह खलु वावोपरिस्थः श्रूयते गुणेष्विवोर्ध्वरेतसः स वा एष शुद्धः पूतः शून्यः शान्तोऽप्राणो निरात्माऽनन्तोऽक्षय्यः स्थिरः शाश्वतोऽजः स्वतन्त्रः । स्वे महिम्नि तिष्ठत्यजेनेदं शरीरं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽप्यस्येति । ते होचुर्भगवन्कथमनेनेदृशेनानिष्ठेनैतद्विधमिदं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽस्य कथमिति तान्होवाच ॥ ४ ॥ स वा एष सूक्ष्मोऽग्राह्योऽदृश्यः पुरुषसंज्ञोऽबुद्धिपूर्वमिहैवावर्ततेंऽशेनेति सुप्तस्येवाबुद्धिपूर्वं विबोध एवमिति । अथ यो ह खलु वावैतस्य सोंऽशोऽयं यश्चेतामात्रः प्रतिपुरुषः क्षेत्रज्ञः संकल्पाध्यवसायाभिमानलिङ्गः प्रजापतिर्विश्वाख्यश्चेतनेनेदं शरीरं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽप्यस्येति । ते होचुर्भगवन्यद्यनेनेदृशेनानिष्ठेनैतद्विधमिदं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽस्य कथमिति तान्होवाचेति ॥ ५ ॥ प्रजापतिर्वा एकोऽग्रेऽतिष्ठत्स नारमतैकः सोऽऽत्मानमभिध्यात्वा बह्वीः प्रजा असृजत ता अश्मेवाप्रबुद्धा अप्राणाः स्थाणुरिव तिष्ठमाना अपश्यत् स नारमत सोऽमन्यतैतासां प्रतिबोधनायाभ्यन्तरं विविशामि । स वायुरिवात्मानं कृत्वाऽभ्यन्तरं प्राविशत् । स एको नाशकत्स पञ्चधात्मानं विभज्योच्यते यः प्राणोऽपानः समान उदानो व्यान इति । अथायं य ऊर्ध्वमुत्क्रामत्येष वाव स प्राणोऽथ योऽयमवाङ् संक्रामत्येष वाव सोऽपानोऽथ येन वैताऽनुगृहीतेत्येष वाव स

व्यानोऽथ योऽयं स्थविष्ठो धातुरन्नस्यापाने प्रापयत्यणिष्ठो वाऽङ्गेऽङ्गे समानयत्येष वाव स समानसंज्ञा उत्तरं व्यानस्य रूपं चैतेषामन्तरा प्रसूतिरेवोदानस्याथ योऽयं पीताशितमुद्गिरति निगिरतीति वैष वाव स उदानः । अथोपांशुरन्तर्याममभिभवत्यन्तर्याम उपांशुं चैतयोरन्तरा देवौष्ण्यं प्रासुवद्यदौष्ण्यं स पुरुषोऽथ यः पुरुषः सोऽग्निर्वैश्वानरः । अन्यत्राप्युक्तमयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन्भवति नैनं घोषं शृणोति स वा एष पञ्चधाऽऽत्मानं विभज्य निहितो गुहायाम् । मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मेति । स वा एषोऽस्माद्धृदन्तरादकृतार्थोऽमन्यतार्थानश्नानीति । अतः खानीमानि भित्त्वोदितः पञ्चभी रश्मिभिर्विषयानत्तीति बुद्धीन्द्रियाणि यानीमान्येतान्यस्य रश्मयः कर्मेन्द्रियाण्यस्य हया रथः शरीरं मनो नियन्ता प्रकृतिमयोऽस्य प्रतोदोऽनेन खल्वीरितः परिभ्रमतीदं शरीरं चक्रमिव मृत्पचेनेदं शरीरं चेतनवत्प्रतिष्ठापितं प्रचोदयिता वैषोऽप्यस्येति ॥ ६ ॥ स वा एष आत्मेहोशन्ति कवयः सितासितैः कर्मफलैरनभिभूत इव प्रतिशरीरेषु चरति अव्यक्तत्वात्सौक्ष्म्याददृश्यत्वादग्राह्यत्वान्निर्ममत्वाच्चानवस्थोऽसति कर्ताऽकर्तैवावस्थः स वा एष शुद्धः स्थिरोऽचलश्चालेप्योऽव्यग्रो निस्पृहः प्रेक्षकवदवस्थितः स्वस्थश्च । ऋतभुग्गुणमयेन पटेनात्मानमन्तर्धायावस्थिता इत्यवस्थिता इति ॥ ७ ॥

इति मैत्रायण्युपनिषत्सु द्वितीयः प्रपाठकः ॥ २ ॥

ते होचुर्भगवन्यद्येवमस्याऽऽत्मनो महिमानं सूचयसीत्यन्यो वा परः । कोऽयमात्माख्यो योऽयं सितासितैः कर्मफलैरभिभूयमानः सदसद्योनिमापद्यता इत्यवाच्यूर्ध्वा वा गतिर्द्वंद्वैरभिभूयमानः परिभ्रमति ॥ १ ॥ अस्ति खल्वन्योऽपरो भूतात्माख्यो योऽयं सितासितैः कर्मफलैरभिभूयमानः सदसद्योनिमापद्यता इत्यवाच्यूर्ध्वा वा गतिर्द्वंद्वैरभिभूयमानः परिभ्रमतीत्यस्योपव्याख्यानम् । पञ्चतन्मात्रा भूतशब्देनोच्यन्तेऽथ पञ्चमहाभूतानि भूतशब्देनोच्यन्ते । अथ तेषां यत्समुदयं तच्छरीरमित्युक्तमथ यो ह खलु वाव शरीर इत्युक्तं स भूतात्मेत्युक्तम् । अथामृतोऽस्यात्मा बिन्दुरिव पुष्करा इति स वा एषोऽभिभूतः प्राकृतैर्गुणैरिति । अथोऽभिभूतत्वात्संमूढत्वं प्रयातः

संमूढत्वात् । आत्मस्थं प्रभुं भगवन्तं कारयितारं नापश्यद्गुणौघैरुह्यमानः कलुषीकृतश्चास्थिरश्चञ्चलो लुप्यमानः सस्पृहो व्यग्रश्चाभिमानित्वं प्रयाता इत्यहं सो ममेदमित्येवं मन्यमानो निबध्नात्यात्मनात्मानम् । जालेनेव खचरः कृतस्यानु फलैरभिभूयमानः सदसद्योनिमापद्यता इत्यवाच्चयोर्ध्वा वा गतिद्वंद्वैरभिभूयमानः परिभ्रमति कतम एष इति तान्होवाचेति ॥ २ ॥ अथान्यत्राप्युक्तं—यः कर्ता सोऽयं वै भूतात्मा करणैः कारयिताऽन्तःपुरुषः । अथ यथाऽग्निनाऽयस्पिण्डोऽन्यो वाऽभिभूतः कर्तृभिर्हन्यमानो नानात्वमुपैत्येवं वाव खल्वसौ भूतात्माऽन्तःपुरुषेणाभिभूतो गुणैर्हन्यमानो नानात्वमुपैति । चतुर्जालं चतुर्दशविधं चतुरशीतिधा परिणतं भूतगणमेतद्वै नानात्वस्य रूपम् । तानि ह वा एतानि गुणानि पुरुषेणेरितानि चक्रमिव मृत्पचेनेति । अथ यथाऽयस्पिण्डे हन्यमाने नाग्निरभिभूयत्येवं नाभिभूयत्यसौ पुरुषोऽभिभूयत्ययं भूतात्मोपसंश्लिष्टत्वादिति ॥ ३ ॥ अथान्यत्राप्युक्तं—शरीरमिदं मैथुनादेवोद्भूतं संवृद्ध्युपेतं निरयेऽथ मूत्रद्वारेण निष्क्रान्तमस्थिभिश्चितं मांसेनानुलिप्तं चर्मणाऽवनद्धं विण्मूत्रपित्तकफमज्जामेदोवसाभिरन्यैश्चाऽऽमयैर्बहुभिः परिपूर्णं कोश इव वसुना ॥ ४ ॥ अथान्यत्राप्युक्तं संमोहो भयं विषादो निद्रा तन्द्री प्रमादो जरा शोकः क्षुत्पिपासा कार्पण्यं क्रोधो नास्तिक्यमज्ञानं मात्सर्यं नैष्कारुण्यं मूढत्वं निर्व्रीडत्वं निराकृतित्वमुद्धतत्वमसमत्वमिति तामसानि । अन्तस्तृष्णा स्नेहो रागो लोभो हिंसा रतिर्दृष्टिर्व्यापृतत्वमीर्ष्याऽकाममस्थिरत्वं चलत्वं व्यग्रत्वं जिगीषाऽर्थोपार्जनं मित्रानुग्रहणं परिग्रहावलम्बोऽनिष्टेष्विन्द्रियार्थेषु द्विष्टिरिष्टेष्वभिष्वङ्गः शुक्तस्वरोऽन्नतमस्त्विति राजसान्येतैः परिपूर्ण एतैरभिभूता इत्ययं भूतात्मा तस्मान्नानारूपाण्याप्नोतीत्याप्नोतीति ॥ ५ ॥

इति मैत्रायण्युपनिषत्सु तृतीयः प्रपाठकः ॥ ३ ॥

ते ह खलु वावोर्ध्वरेतसोऽतिविस्मिता अभिसमेत्योचुर्भगवन्नमस्तेऽस्त्वनुशाधि त्वमस्माकं गतिरन्या न विद्यता इति । अस्य को विधिर्भूतात्मनो येनेदं हित्वात्मन्येव सायुज्यमुपैति तान्होवाचेति ॥ १ ॥ अथान्यत्राप्युक्तं—महानदीषूर्मय इवानिवर्तकमस्य यत्पुराकृतं समुद्रवेलेव दुर्निवार्यमस्य मृत्योरागमनं सदसत्फलमयैः पाशैः पङ्गुरिव बद्धं बन्धनस्थस्येवास्वातन्त्र्यं यमविषयस्थस्येव बहुभयावस्थं मदिरोन्मत्त इव मोहमदिरोन्मत्तं पाप्मना

गृहीत इव भ्राम्यमाणं महोरगदष्ट इव विषयदष्टं महान्धकारमिव रागान्धम्, इन्द्रजालमिव मायामयं स्वप्न इव मिथ्यादर्शनं कदलीगर्भ इवासारं नट इव क्षणवेषं चित्रभित्तिरिव मिथ्यामनोरममित्यथोक्तम् । शब्दस्पर्शादयो ह्यर्था मर्त्येऽनर्था इवाऽऽस्थिताः । येषां सक्तस्तु भूतात्मा न स्मरेत्परमं पदम् ॥२॥ अयं वाव खल्वस्य प्रतिविधिर्भूतात्मनो यद्वेदविद्याधिगमः । स्वधर्मस्यानुचरणं स्वाश्रमेष्वेवानुक्रमणं स्वधर्मस्य वा एतद्व्रतं स्तम्बशाखेवापराण्यनेनोर्ध्वं-भाग्भवत्यन्यथाऽवाङित्येष स्वधर्मोऽभिहितो यो वेदेषु न स्वधर्मातिक्रमे-णाश्रमी भवति । आश्रमेष्वेवानवस्थस्तपस्वी वेत्युच्यत इत्येतदयुक्तं नात-परकस्याऽऽत्मज्ञानेऽधिगमः कर्मसिद्धिर्वेति । एवं ह्याह—तपसा प्राप्यते सत्त्वं सत्त्वात्संप्राप्यते मनः । मनसः प्राप्यते ह्यात्मा यमाप्त्वा न निवर्तत इति ॥ ३ ॥ अस्ति ब्रह्मेति ब्रह्मविद्याविदब्रवीद्ब्रह्मद्वारमिदमित्येवैतदाह यस्तप-साऽपहतपाप्मा ॐ ब्रह्मणो महिमेत्येवैतदाह यः सुयुक्तोऽजस्रं चिन्तयति तस्माद्विद्यया तपसा चिन्तया चोपलभ्यते ब्रह्म । स ब्रह्मणः पर एता भव-त्यधिदैवत्वं देवेभ्यश्चेत्यक्षय्यमपरिमितमनामयं सुखमश्नुते य एवं विद्वाननेन त्रिकेण ब्रह्मोपास्ते । अथ यैः परिपूर्णोऽभिभूतोऽयं रथितश्च तैर्वैव मुक्तस्त्वा-त्मन्येव सायुज्यमुपैति ॥ ४ ॥ ते होचुर्भगवन्नभिवाद्यसीत्यभिवाद्यसीति । निहितमस्माभिरेतद्यथावदुक्तं मनसीत्यथोत्तरं प्रश्नमनुब्रूहीति । अग्निर्वायुरा-दित्यः कालो यः प्राणोऽन्नं ब्रह्मा रुद्रो विष्णुरित्येकेऽन्यमभिध्यायन्त्येकेऽन्यं श्रेयः कतमो यः सोऽस्माकं ब्रूहीति तान्होवाचेति ॥ ५ ॥ ब्रह्मणो वावैता अग्र्यास्तनवः परस्यामृतस्याशरीरस्य तस्यैव लोके प्रतिमोदतीह यो यस्यानुषक्त इत्येवं ह्याह । ब्रह्म खल्विदं वाव सर्वम् । या वास्या अग्र्यास्तनवस्ता अभि-ध्यायेदर्चयेन्निह्नुयाच्चातस्ताभिः सहैवोपर्युपरि लोकेषु चरत्यथ कृत्स्नक्षय एकत्वमेति पुरुषस्य पुरुषस्य ॥ ६ ॥

इति मैत्रायण्युपनिषत्सु चतुर्थः प्रपाठकः ॥ ४ ॥

अथ यथेयं कौत्सायनी स्तुतिः—त्वं ब्रह्मा त्वं च वै विष्णुस्त्वं रुद्रस्त्वं प्रजापतिः । त्वमग्निर्वरुणो वायुस्त्वमिन्द्रस्त्वं निशाकरः ॥ त्वमन्नस्त्वं यमस्त्वं पृथिवी त्वं विश्वं त्वमथाच्युतः । स्वार्थे स्वाभाविकेऽर्थे च बहुधा संस्थिति-स्त्वयि ॥ विश्वेश्वर नमस्तुभ्यं विश्वात्मा विश्वकर्मकृत् । विश्वभुग्विश्वमायुस्त्वं विश्वक्रीडारतिप्रभुः ॥ नमः शान्तात्मने तुभ्यं नमो गुह्यतमाय च । अचि-

न्त्यायाप्रमेयाय अनादिनिधनाय चेति ॥ १ ॥ तमो वा इदमग्र आसीदेकं तत्परे स्यात्तत्परेणेरितं विषमत्वं प्रयात्येतद्रूपं वै रजस्तद्रजः खल्वीरितं विषमत्वं प्रयात्येतद्वै सत्त्वस्य रूपं तत्सत्त्वमेवेरितं रसः संप्रास्त्रवत्, सोंऽशोऽयं यश्चेतामात्रः प्रतिपुरुषः क्षेत्रज्ञः संकल्पाध्यवसायाभिमानलिङ्गः प्रजापतिर्विश्वेत्यस्य प्रागुक्ता एतास्तनवः । अथ यो ह खलु वावास्य तामसोंऽशोऽसौ स ब्रह्मचारिणो योऽयं रुद्रोऽथ यो ह खलु वावास्य राजसोंऽशोऽसौ स ब्रह्मचारिणो योऽयं ब्रह्माऽथ यो ह खलु वावास्य सात्त्विकोंऽशोऽसौ स ब्रह्मचारिणो योऽयं विष्णुः स वा एष एकस्त्रिधा भूतोऽष्टधैकादशधा द्वादशधाऽपरिमितधा वोद्भूत उद्भूतत्वाद्भूतं भूतेषु चरति प्रविष्टः स भूतानामधिपतिर्बभूवेत्यसावात्माऽन्तर्बहिश्चान्तर्बहिश्च ॥ २ ॥

इति मैत्रायण्युपनिषत्सु पञ्चमः प्रपाठकः ॥ ५ ॥

द्विधा वा एष आत्मानं बिभर्त्ययं यः प्राणो यश्चासावादित्यः । अथ द्वौ वा एता अस्य पन्थाना अन्तर्बहिश्चाहोरात्रेणैतौ व्यावर्तेते । असौ वा आदित्यो बहिरात्माऽन्तरात्मा प्राणोऽतो बहिरात्मक्या गत्याऽन्तरात्मनोऽनुमीयते गतिरित्येवं ह्याह । अथ यः कश्चिद्विद्वानपहतपाप्माऽक्षाध्यक्षोऽवदातमनास्तन्निष्ठ आवृत्तचक्षुः सो अन्तरात्मक्या गत्या बहिरात्मनोऽनुमीयते गतिरित्येवं ह्याह । अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो यः पश्यतीमां हिरण्यवस्थात्स एषोऽन्तरे हृत्पुष्कर एवाऽऽश्रितोऽन्नमत्ति ॥ १ ॥ अथ य एषोऽन्तरे हृत्पुष्कर एवाश्रितोऽन्नमत्ति स एषोऽग्निर्दिवि श्रितः सौरः कालाख्योऽदृश्यः सर्वभूतान्यन्नमत्तीति । कः पुष्करः किंमयो वेति । इदं वाव तत्पुष्करं योऽयमाकाशोऽस्येमाश्चतस्रो दिशश्चतस्र उपदिशो दलसंस्था आसम् । अर्वाग्विचरत एतौ प्राणादित्या एता उपासीतोमित्येतदक्षरेण व्याहृतिभिः सावित्र्या चेति ॥ २ ॥ द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं चाथ यन्मूर्तं तदसत्यं यदमूर्तं तत्सत्यं तद्ब्रह्म तज्ज्योतिर्यज्ज्योतिः स आदित्यः स वा एष ओमित्येतदात्माऽभवत्स त्रेधात्मानं व्यकुरुतोमिति तिस्रो मात्रा एताभिः सर्वमिदमोतं प्रोतं चैवास्मीत्येवं ह्याहैतद्वा आदित्य ओमित्येवं ध्यायताऽऽत्मानं युञ्जीतेति ॥ ३ ॥ अथान्यत्राप्युक्तम्—अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इत्यसौ वा आदित्य उद्गीथ एष प्रणवा इत्येवं ह्याहोद्गीथं प्रणवाख्यं प्रणेतारं भारूपं विगतनिद्रं विजरं

त्रिमृत्युं त्रिपदं त्र्यक्षरं पुनः पञ्चधा ज्ञेयं निहितं गुहायामित्येवं ह्याह । ऊर्ध्वमूलं त्रिपाद्ब्रह्म शाखा आकाशवाय्वग्न्युदकभूम्यादय एकोऽश्वत्थनामैतद्ब्रह्मैतस्यैतत्तेजो यदसावादित्यः । ओमित्येतदक्षरस्य चैतत् । तस्मादोमित्यनेनैतदुपासीताजस्रमिति । एकोऽस्य संबोधयतेत्येवं ह्याह । एतदेवाक्षरं पुण्यमेतदेवाक्षरं परम् । एतदेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ ४ ॥ अथान्यत्राप्युक्तं—स्वनवत्येषाऽस्य तनूर्योमिति स्त्रीपुंनपुंसकेति लिङ्गवत्येषाऽथाग्निर्वायुरादित्य इति भास्वत्येषाऽथ ब्रह्मा रुद्रो विष्णुरित्यधिपतिवत्येषाऽथ गार्हपत्यो दक्षिणाग्निराहवनीय इति मुखवत्येषाऽथ ऋग्यजुः सामेति विज्ञानवत्येषा भूर्भुवः स्वरिति लोकवत्येषाऽथ भूतं भव्यं भविष्यदिति कालवत्येषाऽथ प्राणोऽग्निः सूर्य इति प्रतापवत्येषाऽथान्नमापश्चन्द्रमा इत्याप्यायनवत्येषाऽथ बुद्धिर्मनोऽहंकार इति चेतनवत्येषाऽथ प्राणोऽपानो व्यान इति प्राणवत्येषेत्यत ओमित्युक्तेनैताः प्रस्तुता अर्चिता अर्पिता भवन्तीत्येवं ह्याहैतद्वै सत्यकामं परं चापरं च ब्रह्म यदोमित्येतदक्षरमिति ॥ ५ ॥ अथाव्याहृतं वा इदमासीत्स सत्यं प्रजापतिस्तपस्तप्त्वाऽनुव्याहरद्भूर्भुवः स्वरित्येषैवास्य प्रजापतेः स्थविष्ठा तनूर्या लोकवतीति स्वरित्यस्याः शिरो नाभिर्भुवो भूः पादा आदित्यश्चक्षुः । चक्षुरायत्ता हि पुरुषस्य महती मात्रा चक्षुषा ह्ययं मात्राश्चरति सत्यं वै चक्षुरक्षिण्यवस्थितो हि पुरुषः सर्वोऽर्थेषु चरति । एतस्माद्भूर्भुवः स्वरित्युपासीतानेन हि प्रजापतिर्विश्वात्मा विश्वचक्षुरिवोपासितो भवतीत्येवं ह्याह । एषा वै प्रजापतेर्विश्वभृत्तनूरेतस्यामिदं सर्वमन्तर्हितमस्मिंश्च सर्वस्मिन्नेषाऽन्तर्हितेति तस्मादेषोपासीत ॥ ६ ॥ तत्सवितुर्वरेण्यमित्यसौ वा आदित्यः सविता स वा एवं प्रवरणीय आत्मकामेनेत्याहुर्ब्रह्मवादिनोऽथ भर्गो देवस्य धीमहीति सविता वै देवस्ततो योऽस्य भर्गाख्यस्तं चिन्तयामीत्याहुर्ब्रह्मवादिनोऽथ धियो यो नः प्रचोदयादिति बुद्धयो वै धियस्ता योऽस्माकं प्रचोदयादित्याहुर्ब्रह्मवादिनः । अथ भर्ग इति यो ह वा अमुष्मिन्नादित्ये निहितस्तारकोऽक्षिणि वैष भर्गाख्यः । भाभिर्गतिरस्य हीति भर्गः । भर्जयतीति वैष भर्ग इति रुद्रो ब्रह्मवादिनः । अथ भ इति भासयतीमाँल्लोकान्र इति रञ्जयतीमानि भूतानि ग इति गच्छन्त्यस्मिन्नागच्छन्त्यस्मादिमाः प्रजास्तस्माद्भरगत्वाद्भर्गः । शश्वत्सूयमानात्सूर्यः सवनात्सविताऽऽदानादादित्यः पवनात्पावनोऽथाऽऽपोऽ-

ध्यायनादित्येवं ह्याह । खल्वात्मनोऽऽत्मा नेताऽमृताख्यश्चेता मन्ता गन्तोत्स्रष्टाऽऽनन्दयिता कर्ता वक्ता रसयिता घ्राता द्रष्टा श्रोता स्पृशति च विभुर्विग्रहे संनिविष्ट इत्येवं ह्याह । अथ यत्र द्वैतीभूतं विज्ञानं तत्र हि शृणोति पश्यति जिघ्रति रसयति चैव स्पर्शयति सर्वमात्मा जानीतेति यत्राद्वैतीभूतं विज्ञानं कार्यकारणकर्मनिर्मुक्तं निर्वचनमनौपम्यं निरुपाख्यं किं तदवाच्यम् ॥ ७ ॥ एष हि खल्वात्मेशानः शंभुर्भवो रुद्रः प्रजापतिर्विश्वसृग्घिरण्यगर्भः सत्यं प्राणो हंसः शास्ता विष्णुर्नारायणोऽर्कः सविता धाता विधाता सम्राडिन्द्र इन्दुरिति । य एष तपत्यग्निरिवाग्निना पिहितः सहस्राक्षेण हिरण्मयेनाण्डेन । एष वाव जिज्ञासितव्योऽन्वेष्टव्यः सर्वभूतेभ्योऽभयं दत्त्वाऽरण्यं गत्वाऽथ बहिः कृत्वेन्द्रियार्थान्स्वाच्छरीरादुपलभेतैनमिति । विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् । सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ॥ ८ ॥ तस्माद्वा एष उभयात्मैवंविदात्मन्नेवाभिध्यायत्यात्मन्नेव यजतीति ध्यानं प्रयोगस्थं मनो विद्वद्भिः ष्टुतं मनःपूतिमुच्छिष्टोपहतमित्यनेन तत्पावयेत् । मन्त्रं पठति—उच्छिष्टोच्छिष्टोपहतं यच्च पापेन दत्तं मृतसूतकाद्वा वसोः पवित्रमग्निः सवितुश्च रश्मयः पुनन्त्वन्नं मम दुष्कृतं च यदन्यत् । अद्भिः पुरस्तात्परिदधाति । प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा समानाय स्वाहोदानाय स्वाहेति पञ्चभिरभिजुहोति । अथावशिष्टं यतवागश्नात्यतोऽद्भिर्भूय एवोपरिष्टात्परिदधात्याचान्तो भूत्वाऽऽत्मेज्यानः प्राणोऽग्निर्विश्वोऽसीति च द्वाभ्यामात्मानमभिध्यायेत् । प्राणोऽग्निः परमात्मा वै पञ्चवायुः समाश्रितः । स प्रीतः प्रीणातु विश्वं विश्वभुक् । विश्वोऽसि वैश्वानरोऽसि विश्वं त्वया धार्यते जायमानम् । विशन्तु त्वामाहुतयश्च सर्वाः प्रजास्तत्र यत्र विश्वामृतोऽसीति । एवं न विधिना खल्वनेनात्ताऽन्नत्वं पुनरुपैति ॥ ९ ॥ अथापरं वेदितव्यमुत्तरो विकारोऽस्यात्मयज्ञस्य यथाऽन्नमन्नादश्चेत्यस्योपव्याख्यानम् । पुरुषश्चेता प्रधानान्तःस्थः स एव भोक्ता प्राकृतमन्नं भुङ्क्त इति । तस्यायं भूतात्मा ह्यन्नमस्य कर्ता प्रधानः । तस्मात्त्रिगुणं भोज्यं भोक्ता पुरुषोऽन्तःस्थः । अत्र दृष्टं नाम प्रत्ययम् । यस्माद्बीजसंभवा हि पशवस्तस्माद्बीजं भोज्यमनेनैव प्रधानस्य भोज्यत्वं व्याख्यातम् । तस्माद्भोक्ता पुरुषो भोज्या प्रकृतिस्तत्स्थो भुङ्क्त इति । प्राकृतमन्नं त्रिगुणभेदपरिणामत्वान्महदाद्यं

विशेषान्तं लिङ्गम् । अनेनैव चतुर्दशविधस्य मार्गस्य व्याख्या कृता भवति । सुखदुःखमोहसंज्ञं ह्यन्नभूतमिदं जगत् । न हि बीजस्य स्वादुपरिग्रहोऽस्तीति यावन्न प्रसूतिः । तस्याप्येवं तिसृष्ववस्थास्वन्नत्वं भवति कौमारं यौवनं जरा परिणामत्वात्तदन्नत्वम् । एवं प्रधानस्य व्यक्ततां गतस्योपलब्धिर्भवति तत्र बुद्ध्यादीनि स्वादूनि भवन्ति । अध्यवसायसंकल्पाभिमाना इत्यथेन्द्रियार्थान्पञ्च स्वादूनि भवन्ति । एवं सर्वाणीन्द्रियकर्माणि प्राणकर्माण्येवं व्यक्तमन्नमव्यक्तमन्नमस्य निर्गुणो भोक्ता भोक्तृत्वाच्चैतन्यं प्रसिद्धं तस्य । यथाऽग्निर्वै देवानामन्नादः सोमोऽन्नमग्निनैवान्नमित्येवंवित् । सोमसंज्ञोऽयं भूतात्माऽग्निसंज्ञोऽप्यव्यक्तमुखा इति । वचनात्पुरुषो ह्यव्यक्तमुखेन त्रिगुणं भुङ्क्ते इति । यो हैवं वेद संन्यासी योगी चाऽऽत्मयाजी चेति । अथ यद्वन्न कश्चिच्छून्यागारे कामिन्यः प्रविष्टाः स्पृशतीन्द्रियार्थांस्तद्वद्यो न स्पृशति प्रविष्टान्संन्यासी योगी चात्मयाजी चेति ॥ १० ॥ परं वा एतदात्मनो रूपं यदन्नमन्नमयो ह्ययं प्राणः । अथ न यद्यश्नात्यमन्ताऽश्रोताऽस्प्रष्टाऽद्रष्टाऽवक्ताऽघ्राताऽरसयिता भवति प्राणांश्चोत्सृजतीत्येवं ह्याह । अथ यदि खल्वश्नाति प्राणसमृद्धो भूत्वा मन्ता भवति श्रोता भवति स्प्रष्टा भवति वक्ता भवति रसयिता भवति घ्राता भवति द्रष्टा भवतीति । एवं ह्याह—अन्नाद्वै प्रजाः प्रजायन्ते याः काश्चित्पृथिवीश्रिताः । अतोऽन्नेनैव जीवन्त्यथैतदपियन्त्यन्ततः ॥ ११ ॥ अथान्यत्राप्युक्तं—सर्वाणि ह वा इमानि भूतान्यहरहः प्रपतन्त्यन्नमभिजिघृक्षमाणानि सूर्यो रश्मिभिराददात्यन्नं तेनासौ तपत्यन्नेनाभिषिक्ताः पचन्तीमे प्राणा अग्निर्वा अन्नेनाभिज्वलत्यन्नकामेनेदं प्रकल्पितं ब्रह्मणा । अतोऽन्नमात्मेत्युपासीतेत्येवं ह्याह । अन्नाद्भूतानि जायन्ते जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते ॥ १२ ॥ अथान्यत्राप्युक्तं विश्वभृद्वै नामैषा तनूर्भगवतो विष्णोर्यदिदमन्नम् । प्राणो वा अन्नस्य रसो मनः प्राणस्य विज्ञानं मनस आनन्दं विज्ञानस्येत्यन्नवान्प्राणवान्मनस्वान्विज्ञानवानानन्दवांश्च भवति यो हैवं वेद । यावन्तीह वै भूतान्यन्नमदन्ति तावत्स्वन्तःस्थोऽन्नमत्ति यो हैवं वेद । अन्नमेव विजरन्नमन्नं संवननं स्मृतम् । अन्नं पशूनां प्राणोऽन्नं ज्येष्ठमन्नं भिषक्स्मृतम् ॥ १३ ॥ अथान्यत्राप्युक्तमन्नं वा अस्य सर्वस्य योनिः कालश्चान्नस्य सूर्यो योनिः कालस्य । तस्यैतद्रूपं यन्निमेषादिकालात्संभृतं द्वादशात्मकं वत्सरमेतस्याग्नेयमर्धमर्धं

वारुणम् । मघाद्यं श्रविष्ठार्धमाग्नेयं क्रमेणोत्क्रमेण सार्पाद्यं श्रविष्ठार्धान्तं सौम्यम् । तत्रैकैकमात्मनो नवांशकं सचारकविधं सौक्ष्म्यत्वादेतत्प्रमाणमनेनैव प्रमीयते हि कालः । न विना प्रमाणेन प्रमेयस्योपलब्धिः । प्रमेयोऽपि प्रमाणतां पृथक्त्वादुपैत्यात्मसंबोधनार्थमित्येवं ह्याह । यावत्यो वै कालस्य कलास्तावतीषु चरत्यसौ यः कालं ब्रह्मेत्युपासीत कालस्तस्यातिदूरमपसरतीत्येवं ह्याह—कालात्स्रवन्ति भूतानि कालाद्वृद्धिं प्रयान्ति च । काले चास्तं नियच्छन्ति कालो मूर्तिरमूर्तिमान् ॥ १४ ॥ द्वे वाव ब्रह्मणो रूपे कालश्चाकालश्चाथ यः प्रागादित्यात्सोऽकालोऽकलोऽथ य आदित्याद्यः स कालः सकलः सकलस्य वा एतद्रूपं यत्संवत्सरः संवत्सरात्खल्वेमाः प्रजाः प्रजायन्ते संवत्सरेणेह वै जाता विवर्धन्ते संवत्सरे प्रत्यस्तं यन्ति तस्मात्संवत्सरो वै प्रजापतिः कालोऽन्नं ब्रह्मनीडमात्मा चेत्येवं ह्याह । कालः पचति भूतानि सर्वाण्येव महात्मनि । यस्मिंस्तु पच्यते कालो यस्तं वेद स वेदवित् ॥ १५ ॥ विग्रहवानेष कालः सिन्धुराजः प्रजानाम् । एष तत्स्थः सविताख्यो यस्मादेवेमे चन्द्रर्क्षग्रहसंवत्सरादयः सूयन्तेऽथैभ्यः सर्वमिदमत्र वा यत्किंचिच्छुभाशुभं दृश्यतेह लोके तदेतेभ्यस्तस्मादादित्यात्मा ब्रह्माथ कालसंज्ञमादित्यमुपासीतादित्यो ब्रह्मेत्येकेऽथैवं ह्याह । होता भोक्ता हविर्मन्त्रो यज्ञो विष्णुः प्रजापतिः । सर्वः कश्चित्प्रभुः साक्षी योऽमुष्मिन्भाति मण्डले ॥ १६ ॥ ब्रह्म ह वा इदमग्र आसीदेकोऽनन्तः प्रागनन्तो दक्षिणतोऽनन्तः प्रतीच्यनन्त उदीच्यनन्त ऊर्ध्वं चावाङ् च सर्वतोऽनन्तः । न ह्यस्य प्राच्यादिदिशः कल्पन्तेऽथ तिर्यग्वाऽवाङ् वोर्ध्वं वाऽनूह्य एष परमात्माऽपरिमितोऽजः । अतर्क्योऽचिन्त्य एष आकाशात्मा एवैष कृत्स्नक्षय एको जागर्ति । इत्येतस्मादाकाशादेष खल्विदं चेतामात्रं बोधयत्यनेनैव चेदं ध्यायतेऽस्मिंश्च प्रत्यस्तं याति । अस्यैतद्भास्वरं रूपं यदमुष्मिन्नादित्ये तपत्यग्नौ चाधूमके यज्ज्योतिश्चित्रतरमुदरस्थोऽथ वा यः पचत्यन्नमित्येवं ह्याह । यश्चैषोऽग्नौ यश्चायं हृदये यश्चासावादित्ये स एष एक इत्येकस्य हैकत्वमेति य एवं वेद ॥ १७ ॥ तथा तत्प्रयोगकल्पः प्राणायामः प्रत्याहारो ध्यानं धारणा तर्कः समाधिः षडङ्ग इत्युच्यते योगः । अनेन यदा पश्यन्पश्यति रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्म योनिम् । तदा विद्वान्पुण्यपापे विहाय परेऽव्यये सर्वमेकी करोत्येवं ह्याह । यथा पर्वतमादीप्तं नाश्रयन्ति

सुगद्विजाः । तद्वद्ब्रह्मविदो दोषा नाश्रयन्ति कदाचन ॥ १८ ॥ अथान्यत्राप्युक्तं—यदा वै बहिर्विद्वान्मनो नियम्येन्द्रियार्थाश्च प्राणो निवेशयित्वा निःसंकल्पस्ततस्तिष्ठेत् । अप्राणादिह यस्मात्संभूतः प्राणसंज्ञको जीवस्तस्मात्प्राणो वै तुर्याख्ये धारयेत्प्राणमित्येवं ह्याह । अचित्तं चित्तमध्यस्थमचिन्त्यं गुह्यमुत्तमम् । तत्र चित्तं निधायेत तच्च लिङ्गं निराश्रयम् ॥ १९ ॥ अथान्यत्राप्युक्तम्—अतः पराऽस्य धारणा तालुरसनाग्रनिपीडनाद्वाङ्मनःप्राणनिरोधनाद्ब्रह्म तर्केण पश्यति यदात्मनात्मानमणोरणीयांसं द्योतमानं मनःक्षयात्पश्यति तदात्मनात्मानं दृष्ट्वा निरात्मा भवति निरात्मकत्वादसंख्योऽयोनिश्चिन्त्यो मोक्षलक्षणमित्येतत्परं रहस्यमित्येवं ह्याह । चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् । प्रसन्नात्मात्मनि स्थित्वा सुखमव्ययमश्नुता इति ॥ २० ॥ अथान्यत्राप्युक्तम्—ऊर्ध्वगा नाडी सुषुम्नाख्या प्राणसंचारिणी तालवन्तर्विच्छिन्ना तया प्राणोंकारमनोयुक्तयोर्ध्वमुत्क्रमेत् । ताल्वध्यग्रं परिवर्त्य चेन्द्रियाण्यसंयोज्य महिमा महिमानं निरीक्षेत ततो निरात्मकत्वमेति निरात्मकत्वान्न सुखदुःखभाग्भवति केवलत्वं लभता इत्येवं ह्याह । परः पूर्वं प्रतिष्ठाप्य निगृहीतानिलं ततः । तीर्त्वा पारमपारेण पश्चाद्युञ्जीत मूर्धनि ॥ २१ ॥ अथान्यत्राप्युक्तं—द्वे वाव ब्रह्मणी अभिध्येये शब्दश्चाशब्दश्चाथ शब्देनैवाशब्दमाविष्क्रियतेऽथ तत्रोमिति शब्दोऽनेनोर्ध्वमुत्क्रान्तोऽशब्दे निधनमेत्यथा हैषा गतिरेतदमृतमेतत्सायुज्यत्वं निर्वृतत्वं तथा चेति । अथ यथोर्णनाभिस्तन्तुनोर्ध्वमुत्क्रान्तोऽवकाशं लभतीत्येवं वाव खल्वसावभिध्यातोमित्यनेनोर्ध्वमुत्क्रान्तः स्वातन्त्र्यं लभते । अन्यथा परे शब्दवादिनः । श्रवणाङ्गुष्ठयोगेनान्तर्हृदयाकाशशब्दमाकर्णयन्ति सप्तविधेयं तस्योपमा । यथा नद्यः किङ्किणी कांस्यचक्रकभेकनिःकृन्धिका वृष्टिर्निवाते वदतीति तं पृथग्लक्षणमतीत्य परेऽशब्देऽव्यक्ते ब्रह्मण्यस्तं गतास्तत्र तेऽपृथग्धर्मिणोऽपृथग्विवेक्या यथा संपन्ना मधुत्वं नाना रसा इत्येवं ह्याह । द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् । शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ २२ ॥ अथान्यत्राप्युक्तं—यः शब्दस्तदोमित्येतदक्षरं यदस्याग्रं तच्छान्तमशब्दमभयमशोकमानन्दं तृप्तं स्थिरमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वापरत्वाय तदेता उपासीतेत्येवं ह्याह । योऽसौ परापरो देवा ओंकारो नाम नामतः । निःशब्दः शून्यभूतस्तु मूर्ध्नि

स्थाने ततोऽभ्यसेत् ॥ २३ ॥ अथान्यत्राप्युक्तं—धनुः शरीरमोमित्येतच्छरः शिखाऽस्य मनस्तमोलक्षणं भित्त्वा तमोऽतमाविष्टमागच्छत्यथाविष्टं भित्त्वाऽलातचक्रमिव स्फुरन्तमादित्यवर्णमूर्जस्वन्तं ब्रह्म तमसः पर्यमपश्यत् । यदमुष्मिन्नादित्येऽथ सोमेऽग्नौ विद्युति विभात्यथ खल्वेनं दृष्ट्वाऽमृतत्वं गच्छतीत्येवं ह्याह । ध्यानमन्तः परे तत्त्वे लक्ष्येषु च निधीयते । अतोऽविशेषविज्ञानं विशेषमुपगच्छति ॥ मानसे च विलीने तु यत्सुखं चात्मसाक्षिकम् । तद्ब्रह्म चामृतं शुक्रं सा गतिर्लोक एव सः ॥ २४ ॥ अथान्यत्राप्युक्तं—निद्रेवान्तर्हितेन्द्रियः शुद्धितमया धिया स्वप्न इव यः पश्यतीन्द्रियबिलेऽविवशः प्रणवाख्यं प्रणेतारं भारूपं विगतनिद्रं विजरं विमृत्युं विशोकं च सोऽपि प्रणवाख्यः प्रणेता भारूपो विगतनिद्रो विजरो विमृत्युर्विशोको भवतीत्येवं ह्याह । एवं प्राणमथोङ्कारं यस्मात्सर्वमनेकधा । युनक्ति युञ्जते वाऽपि तस्माद्योग इति स्मृतः ॥ एकत्वं प्राणमनसोरिन्द्रियाणां तथैव च । सर्वभावपरित्यागो योग इत्यभिधीयते ॥ २५ ॥ अथान्यत्राप्युक्तं—यथा वाऽप्सुचारिणः शाकुनिकः सूत्रयन्त्रेणोद्धृत्योदरेऽग्नौ जुहोत्येवं वाव खल्विमान्प्राणानोमित्यनेनोद्धृत्यानामयेऽग्नौ जुहोत्यतस्तप्तोर्वीव सः । अथ यथा तप्तोर्विसर्पिस्तृणकाष्ठसंस्पर्शेनोज्वलतीत्येवं वाव खल्वसावप्राणाख्यः प्राणसंस्पर्शेनोज्वलति । अथ यदुज्वलत्येतद्ब्रह्मणो रूपं चैतद्विष्णोः परमं पदं चैतद्रुद्रस्य रुद्रत्वमेतत्तदपरिमितधा चात्मानं विभज्य पूरयतीमाँल्लोकानित्येवं ह्याह । वह्नेश्च यद्वत्खलु विस्फुलिङ्गाः सूर्यान्मयूखाश्च तथैव तस्य । प्राणादयो वै पुनरेव तस्मादभ्युच्चरन्तीह यथाक्रमेण ॥ २६ ॥ अथान्यत्राप्युक्तं—ब्रह्मणो वावैतत्तेजः परस्यामृतस्य । अशरीरस्यौष्ण्यमस्यैतद्घृतम् । अथाऽऽविः सन्नभसि निहितं वैतदेकाग्रेणैवमन्तर्हृदयाकाशं विनुदन्ति यत्तस्य ज्योतिरिव संपद्यतीत्यतस्तद्भावमचिरेणैति भूमावयस्पिण्डं निहितं यथाऽचिरेणैति भूमित्वम् । मृद्वत्संस्थमयस्पिण्डं यथाऽग्न्ययस्कारादयो नाभिभवन्ति । प्रणश्यति चित्तं तथाऽऽश्रयेण सहैवमित्येवं ह्याह । हृद्याकाशमयं कोशमानन्दं परमालयम् । स्वं योगश्च ततोऽस्माकं तेजश्चैवाग्निसूर्ययोः ॥ २७ ॥ अथान्यत्राप्युक्तं भूतेन्द्रियार्थानतिक्रम्य ततः प्रव्रज्याज्यं धृतिदण्डं धनुर्गृहीत्वाऽनभिमानमयेन चैवेषुणा तं ब्रह्मद्वारपारं निहत्याऽऽद्यं संमोहमौली तृष्णेर्ष्याकुण्डली तन्द्रीराघवेन्यभिमानाध्यक्षः क्रोधज्यं

प्रलोभदण्डं धनुर्गृहीत्वेच्छामयेन चैवेषुणेमानि खलु भूतानि हन्ति तं हत्वोङ्कारप्लवेनान्तर्हृदयाकाशस्य पारं तीर्त्वाऽऽविर्भूतेऽन्तराकाशे शनकैरवटैवावटकृद्धातुकामः संविशत्येवं ब्रह्मशालां विशेत्ततश्चतुर्जालं ब्रह्मकोशं प्रणुदेद्गुर्वागमेनेत्यतः शुद्धः पूतः शून्यः शान्तोऽप्राणो निरात्माऽनन्तोऽक्षय्यः स्थिरः शाश्वतोऽजः स्वतन्त्रः स्वे महिम्नि तिष्ठत्यतः स्वे महिम्नि तिष्ठमानं दृष्ट्वाऽऽवृत्तचक्रमिव संसारचक्रमालोकयतीत्येवं ह्याह । षड्भिर्मासैस्तु युक्तस्य नित्यमुक्तस्य देहिनः । अनन्तः परमो गुह्यः सम्यग्योगः प्रवर्तते । रजस्तमोभ्यां विद्धस्य सुसमिद्धस्य देहिनः । पुत्रदारकुटुम्बेषु सक्तस्य न कदाचन ॥ २८ ॥ एवमुक्त्वाऽन्तर्हृदयः शाकायन्यस्तस्मै नमस्कृत्वाऽनया ब्रह्मविद्यया राजन्ब्रह्मणः पन्थानमारूढाः पुत्राः प्रजापतेरिति संतोषं द्वंद्वतितिक्षां शान्तत्वं योगाभ्यासादवाप्नोतीत्येतद्गुह्यतमं नापुत्राय नाशिष्याय नाशान्ताय कीर्तयेदित्यनन्यभक्ताय सर्वगुणसंपन्नाय दद्यात् ॥ २९ ॥ ॐ शुचौ देशे शुचिः सत्त्वस्थः सदधीयानः सद्वादी सद्ध्यायी सद्याजी स्यादित्यतः सद्ब्रह्मणि सत्यभिलाषिणि निर्वृत्तोऽन्यस्तत्फलच्छिन्नपाशो निराशः परेष्वात्मवद्विगतभयो निष्कामोऽक्षय्यमपरिमितं सुखमाक्रम्य तिष्ठति । परमं वै शेवधेरिव परस्योद्धरणं यन्निष्कामत्वम् । स हि सर्वकाममयः पुरुषोऽध्यवसायसंकल्पाभिमानलिङ्गो बद्धोऽतस्तद्विपरीतो मुक्तः । अत्रैक आहुः— गुणः प्रकृतिभेदवशादध्यवसायात्मबन्धमुपागतोऽध्यवसायस्य दोषक्षयाद्विमोक्षः । मनसा ह्येव पश्यति मनसा शृणोति कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव । गुणौघैरुह्यमानः कलुषीकृतश्चास्थिरश्चञ्चलो लुप्यमानः सस्पृहो व्यग्रश्चाभिमानित्वं प्रयात इत्यहं सो ममेदमित्येवं मन्यमानो निबध्नात्यात्मनात्मानं जालेनेव खचरोऽतः पुरुषोऽध्यवसायसंकल्पाभिमानलिङ्गो बद्धोऽतस्तद्विपरीतो मुक्तः । तस्मान्निरध्यवसायो निःसंकल्पो निरभिमानस्तिष्ठेदेतन्मोक्षलक्षणमेषाऽत्र ब्रह्मपदव्येषोऽत्र द्वारविवरोऽनेनास्य तमसः पारं गमिष्यति । अत्र हि सर्वे कामाः समाहिता इत्यत्रोदाहरन्ति । यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम् ॥ एतदुक्त्वाऽन्तर्हृदयः शाकायन्यस्तस्मै नमस्कृत्वा यथावदुपचारी कृतकृत्यो मरुदुत्तरायणं गतो न ह्यत्रोद्वर्त्मना गतिरेषेऽत्र ब्रह्मपथः सौरं द्वारं भित्त्वोर्ध्वेन विनिर्गता इत्यत्रोदाहरन्ति । अनन्ता

रश्मयस्तस्य दीपवद्यः स्थितो हृदि । सितासिताः कद्रुनीलाः कपिला मृदुलोहिताः ॥ ऊर्ध्वमेकः स्थितस्तेषां यो भित्वा सूर्यमण्डलम् । ब्रह्मलोकमतिक्रम्य तेन यान्ति परां गतिम् ॥ यदस्यान्यद्रश्मिशतमूर्ध्वमेव व्यवस्थितम् । तेन देवनिकायानां स्वधामानि प्रपद्यते ॥ ये नैकरूपाश्चाधस्ताद्रश्मयोऽस्य मृदुप्रभाः । इह कर्मोपभोगाय तैः संसरति सोऽवशः ॥ तस्मात्सर्गस्वर्गापवर्गहेतुर्भगवानसावादित्य इति ॥ ३० ॥ किमात्मकानि वा एतानीन्द्रियाणि प्रचरन्त्युद्गन्ता चैतेषामिह को नियन्ता वेत्याह प्रत्याहात्मात्मकानीत्यात्मा ह्येषामुद्गन्ता नियन्ता वाऽप्सरसो भानवीयाश्च मरीचयो नामाथ पञ्चभी रश्मिभिर्विषयानत्ति । कतम आत्मेति । योऽयं शुद्धः पूतः शून्यः शान्तादिलक्षणोक्तः स्वकैर्लिङ्गैरुपगृह्यः । तस्यैतल्लिङ्गमलिङ्गस्याग्नेर्यदौष्ण्यमाविष्टं चापां यः शिवतमो रस इत्येकेऽथ वाक्श्रोत्रं चक्षुर्मनः प्राण इत्येकेऽथ बुद्धिर्धृतिः स्मृतिः प्रज्ञानमित्येके । अथ ते वा एतस्यैवं यथैवेह बीजस्याङ्कुरा वाऽथ धूमार्चिर्विष्फुलिङ्गा इवाग्नेश्चेत्यत्रोदाहरन्ति । वह्नेश्च यद्वत्खलु विष्फुलिङ्गाः सूर्यान्मयूखाश्च तथैव तस्य । प्राणादयो वै पुनरेव तस्मादभ्युच्चरन्तीह यथाक्रमेण ॥ ३१ ॥ तस्माद्वा एतस्मादात्मनि सर्वे प्राणाः सर्वे लोकाः सर्वे वेदाः सर्वे देवाः सर्वाणि च भूतान्युच्चरन्ति तस्योपनिषत्सत्यस्य सत्यमिति । अथ यथाऽऽर्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा निश्चरन्त्येवं वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्योपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निश्वा भूतानि ॥ ३२ ॥ पञ्चेष्टको वा एषोऽग्निः संवत्सरस्तस्येमा इष्टका यो वसन्तो ग्रीष्मो वर्षाः शरद्धेमन्तः स शिरःपक्षसीपृष्ठपुच्छवानेषोऽग्निः पुरुषविदः सेयं प्रजापतेः प्रथमा चितिः । करैर्यजमानमन्तरिक्षमुत्क्षिप्त्वा वायवे प्रायच्छत् । प्राणो वै वायुः प्राणोऽग्निस्तस्येमा इष्टका यः प्राणो व्यानोऽपानः समान उदानः स शिरःपक्षसीपृष्ठपुच्छवानेषोऽग्निः पुरुषविदस्तदिदमन्तरिक्षं प्रजापतेर्द्वितीया चितिः करैर्यजमानं दिवमुत्क्षिप्त्वेन्द्राय प्रायच्छदसौ वा आदित्य इन्द्रः सैषोऽग्निस्तस्येमा इष्टका यदृग्यजुःसामाथर्वाङ्गिरसा इतिहासः पुराणं स शिरःपक्षसीपुच्छपृष्ठवानेषोऽग्निः पुरुषविदः सैषा द्यौः प्रजापतेस्तृतीया चितिः करैर्यजमानस्यात्मविदेऽवदानं करोत्यथात्मविदुत्क्षिप्य ब्रह्मणे प्रायच्छत्तत्राऽऽनन्दी मोदी भवति ॥ ३३ ॥ पृथिवी गार्हपत्योऽन्तरिक्षं दक्षि-

णाग्निर्यौराहवनीयस्तत एव पवमानपावकशुचय आविष्कृतमेतेनास्य यज्ञम्। यतः पवमानपावकशुचिसंघातो हि जाठरस्तस्मादग्निर्यष्टव्यश्चेतव्यः स्तोतव्योऽभिध्यातव्यः। यजमानो हविर्गृहीत्वा देवताभिध्यानमिच्छति। हिरण्यवर्णः शकुनो हृद्यादित्ये प्रतिष्ठितः। मद्गुर्हंसस्तेजोवृषः सोऽस्मिन्नग्नौ यजामहे॥ इति चापि मन्त्रार्थं विचिनोति। तत्सवितुर्वरेण्यं भर्गोऽस्याभिध्येयं यो बुद्ध्यन्तःस्थो ध्यायीह मनःशान्तिपदमनुसरत्यात्मन्येव धत्तेऽत्रेमे श्लोका भवन्ति। यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यते। तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यते॥ स्वयोनावुपशान्तस्य मनसः सत्यकामतः। इन्द्रियार्थविमूढस्यानृताः कर्मवशानुगाः॥ चित्तमेव हि संसारं तत्प्रयत्नेन शोधयेत्। यच्चित्तस्तन्मयो भवति गुह्यमेतत्सनातनम्॥ चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम्। प्रसन्नात्मात्मनि स्थित्वा सुखमव्ययमश्नुते॥ समासक्तं यथा चित्तं जन्तोर्विषयगोचरे। यद्येवं ब्रह्मणि स्यात्तत्को न मुच्येत बन्धनात्॥ मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च। अशुद्धं कामसंपर्काच्छुद्धं कामविवर्जितम्॥ लयविक्षेपरहितं मनः कृत्वा सुनिश्चलम्। यदा यात्यमनीभावं तदा तत्परमं पदम्॥ तावन्मनो निरोद्धव्यं हृदि यावद्गतक्षयम्। एतज्ज्ञानं च मोक्षं च शेषान्ये ग्रन्थविस्तराः॥ समाधिनिर्धौतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत्। न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते॥ अपामापोऽग्निरग्नौ वा व्योम्नि व्योम न लक्षयेत्। एवमन्तर्गतं यस्य मनः स परिमुच्यते॥ मन एव मनुष्याणां कारणं बन्धमोक्षयोः। बन्धाय विषयासङ्गि मोक्षे निर्विषयं स्मृतमिति॥ अतोऽनग्निहोत्र्यनग्निचिदज्ञानभिध्यायिनां ब्रह्मणः पदव्योमानुस्मरणं विरुद्धं तस्मादग्निर्यष्टव्यश्चेतव्यः स्तोतव्योऽभिध्यातव्यः॥ ३४॥ नमोऽग्नये पृथिवीक्षिते लोकस्मृते लोकमस्मै यजमानाय धेहि नमो वायवेऽन्तरिक्षक्षिते लोकस्मृते लोकमस्मै यजमानाय धेहि नम आदित्याय दिविक्षिते लोकस्मृते लोकमस्मै यजमानाय धेहि नमो ब्रह्मणे सर्वक्षिते सर्वस्मृते सर्वमस्मै यजमानाय धेहि। हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्। तत्त्वं पूषन्नपावृणु सत्यधर्माय विष्णवे। योऽसावादित्ये पुरुषः सोऽसावहमिति॥ एष ह वै सत्यधर्मो यदादित्यस्यादित्यत्वं तच्छुक्लं पुरुषमलिङ्गं नभसोऽन्तर्गतस्य तेजसोंऽशमात्रमेतद्यदादित्यस्य मध्य

इवेत्यक्षिण्यग्नौ चैतद्ब्रह्मैतदमृतमेतद्भर्गः । एतत्सत्यधर्मो नभसोऽन्तर्गतस्य तेजसोंऽशमात्रमेतत् । यदादित्यस्य मध्येऽमृतं यस्य हि सोमः प्राणा वाऽप्यग्नयङ्कुरा एतद्ब्रह्मैतदमृतमेतद्भर्गः । एतत्सत्यधर्मो नभसोऽन्तर्गतस्य तेजसोंऽशमात्रमेतद्यदादित्यस्य मध्ये यजुर्दीप्यति । ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् । अष्टपादं शुचिं हंसं त्रिसूत्रमणुमव्ययम् । द्विधर्मोऽन्धं तेजसेन्धं सर्वं पश्यन्पश्यति ॥ नभसोऽन्तर्गतस्य तेजसोंऽशमात्रमेतद्यदादित्यस्य मध्ये उदित्वा मयूखे भवत एतत्सवित्सत्यधर्म एतद्यजुरेतत्तप एतदग्निरेतद्वायुरेतत्प्राण एतदाप एतच्चन्द्रमा एतच्छुक्रमेतदमृतम् । एतद्ब्रह्मविषयमेतद्भानुरर्णवस्तस्मिन्नेव यजमानाः सैन्धव इव व्लीयन्त एषा वै ब्रह्मैकताऽत्र हि सर्वे कामाः समाहिता इत्यत्रोदाहरन्ति । अंशुधारय इवाणुवातेरितः संस्फुरत्यसावन्तर्गः सुराणाम् । यो हैवंवित्स सवित्स द्वैतवित्सैकधामेतः स्यात्तदात्मकश्च । ये बिन्दव इवाभ्युच्चरन्त्यजस्रं विद्युदिवाभ्रार्चिषः परमे व्योमन् । तेऽर्चिषो वै यशस आश्रयवशाज्जटाभिरूपा इव कृष्णवर्त्मनः ॥ ३५ ॥ द्वे वाव खल्वेते ब्रह्मज्योतिषो रूपके शान्तमेकं समृद्धं चैकमथ यच्छान्तं तस्याऽऽधारं खमथ यत्समृद्धमिदं तस्यान्नं तस्मान्मन्त्रौषधाज्यामिषपुरोडाशस्थालीपाकादिभिर्यष्टव्यमन्तर्वेद्याम् । आस्न्यवशिष्टैरन्नपानैश्चाऽऽस्यमाहवनीयमिति मत्वा तेजसः समृद्ध्यै पुण्यलोकविजित्यर्थायामृतत्वाय च । अत्रोदाहरन्ति—अग्निहोत्रं जुहुयात्स्वर्गकामो यमराज्यमग्निष्टोमेनाभियजति सोमराज्यमुक्थेन सूर्यराज्यं षोडशिना स्वाराज्यमतिरात्रेण प्रजापत्यमासहस्रसंवत्सरान्तक्रतुनेति । वर्त्याधारस्नेहयोगाद्यथा दीपस्य संस्थितिः । अन्तर्याण्डोपयोगादिमौ स्थितावात्मशुची तथा ॥ ३६ ॥ तस्मादोमित्यनेनैतदुपासीतापरिमितं तेजस्तत्त्रेधाऽभिहितमग्नावादित्ये प्राणे । अथैषा नाड्यन्नबहुमित्येषाऽग्नौ हुतमादित्यं गमयत्यतो यो रसोऽस्रवत्स उद्गीथं वर्षति तेनेमे प्राणाः प्राणेभ्यः प्रजा इत्यत्रोदाहरन्ति यद्धविरग्नौ हूयते तदादित्यं गमयति तत्सूर्यो रश्मिभिर्वर्षति तेनान्नं भवत्यन्नाद्भूतानामुत्पत्तिरित्येवं ह्याह । अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ ३७ ॥ अग्निहोत्रं जुह्वानो लोभजालं भिनत्त्यतः संमोहं छित्त्वा न क्रोधान्स्तुन्वानः काममभिध्यायमानस्ततश्चतुर्जालं ब्रह्मकोशं भिन्ददतः परमाकाशमत्र हि

सौरसौम्याग्नेयसात्त्विकानि मण्डलानि भित्त्वा ततः शुद्धः सत्त्वान्तरस्थमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वापरं धाम सत्यकामसर्वज्ञत्वसंयुक्तं स्वतन्त्रं चैतन्यं स्वे महिम्नि तिष्ठमानं पश्यत्यत्रोदाहरन्ति । रविमध्ये स्थितः सोमः सोममध्ये हुताशनः । तेजोमध्ये स्थितं सत्त्वं सत्त्वमध्ये स्थितोऽच्युतः ॥ शरीरप्रादेशाङ्गुष्ठमात्रमणोरप्यणुं ध्यात्वाऽतः परमतां गच्छत्यत्र हि सर्वे कामाः समाहिता इत्यत्रोदाहरन्ति । अङ्गुष्ठप्रादेशशरीरमात्रं प्रदीपप्रतापवद्द्विस्त्रिधा हि । तद्ब्रह्माभिष्टूयमानं महो देवो भुवनान्याविवेश । ॐ नमो ब्रह्मणे नमः ॥ ३८ ॥

इति मैत्रायण्युपनिषत्सु षष्ठः प्रपाठकः ॥ ६ ॥

अग्निर्गायत्रं त्रिवृद्रथंतरं वसन्तः प्राणो नक्षत्राणि वसवः पुरस्तादुद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति । अचिन्त्योऽमूर्तो गभीरो गुप्तोऽनवद्यो घनो गहनो निर्गुणः शुद्धो भास्वरो गुणभुग्भयोऽनिर्वृत्तिर्योगीश्वरः सर्वज्ञो मेघोऽप्रमेयोऽनाद्यन्तः श्रीमानजो धीमाननिर्देश्यः सर्वसृक्सर्वस्याऽऽत्मा सर्वभुक्सर्वस्येशानः सर्वस्यान्तरान्तरः ॥ १ ॥ इन्द्रस्त्रिष्टुप्पञ्चदशो बृहद्ग्रीष्मो व्यानः सोमो रुद्रा दक्षिणत उद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्त्यनाद्यन्तोऽपरिमितोऽपरिच्छिन्नोऽपरप्रयोज्यः स्वतन्त्रोऽलिङ्गोऽमूर्तोऽनन्तशक्तिर्धाता भास्करः ॥ २ ॥ मरुतो जगती सप्तदशो वैरूपं वर्षा अपानः शुक्र आदित्याः पश्चादुद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति तच्छान्तमशब्दमभयमशोकमानन्दं तृप्तं स्थिरमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वापरं धाम ॥ ३ ॥ विश्वे देवा अनुष्टुबेकविंशो वैराजः शरत्समानो वरुणः साध्या उत्तरत उद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्त्यन्तःशुद्धः पूतः शून्यः शान्तोऽप्राणो निरात्माऽनन्तः ॥ ४ ॥ मित्रावरुणौ पङ्क्तिस्त्रिणवत्रयस्त्रिंशौ शाक्वररैवते हेमन्तशिशिरा उदानोऽङ्गिरसश्चन्द्रमा ऊर्ध्वा उद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति प्रणवाख्यं प्रणेतारं भारूपं विगतनिद्रं विजरं विमृत्युं विशोकम् ॥ ५ ॥ शनिराहुकेतूरगरक्षोयक्षनरविहगशरभेभादयोऽधस्तादुद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति यः प्राज्ञो विधरणः सर्वान्तरोऽक्षरः शुद्धः पूतो भान्तः क्षान्तः शान्तः ॥ ६ ॥ एष हि खल्वात्माऽन्तर्हृदयेऽणीयानिद्धोऽग्नि-

रिव विश्वरूपोऽस्यैवान्नमिदं सर्वमस्मिन्नोता इमाः प्रजाः । एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविचिकित्सोऽविपाशः सत्यसंकल्पः सत्यकाम एष परमेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एष हि खल्वात्मेशानः शंभुर्भवो रुद्रः प्रजापतिर्विश्वसृग्घिरण्यगर्भः सत्यं प्राणो हंसः शास्ताऽच्युतो विष्णुर्नारायणः । यश्चैषोऽग्नौ यश्चायं हृदये यश्चासावादित्ये स एष एकः । तस्मै ते विश्वरूपाय सत्ये नभसि हिताय नमः ॥ ७ ॥ अथेदानीं ज्ञानोपसर्गा राजन्मोहजालस्यैष वै योनिर्यदस्वर्ग्यैः सह स्वर्ग्यस्यैष वाव्ये पुरस्तादुक्तेऽप्यधःस्तम्बेनाश्लिष्यन्त्यथ ये चान्ये ह नित्यप्रमुदिता नित्यप्रवसिता नित्ययाचका नित्यं शिल्पोपजीविनोऽथ ये चान्ये ह पुरयाचका अयाज्ययाजकाः शूद्रशिष्याः शूद्राश्च शास्त्रविद्वांसोऽथ ये चान्ये ह चाटजटनटभटप्रव्रजितरङ्गावतारिणो राजकर्मणि पतितादयः । अथ ये चान्ये ह यक्षराक्षसभूतगणपिशाचोरगग्रहादीनामर्थं पुरस्कृत्य शमयाम इत्येवं ब्रुवाणा अथ ये चान्ये ह वृथा कषायकुण्डलिनः कापालिनोऽथ ये चान्ये ह वृथातर्कदृष्टान्तकुहकेन्द्रजालैर्वैदिकेषु परिस्थातुमिच्छन्ति तैः सह न संवसेत्प्रकाशभूता वै ते तस्करा अस्वर्ग्या इत्येवं ह्याह । नैरात्म्यवादकुहकैर्मिथ्यादृष्टान्तहेतुभिः । भ्राम्यल्लोको न जानाति वेदविद्यान्तरं तु यत् ॥ ८ ॥ बृहस्पतिर्वै शुक्रो भूत्वेन्द्रस्याभयायासुरेभ्यः क्षयायेमामविद्यामसृजत्तया शिवमशिवमित्युद्दिशन्त्यशिवं शिवमिति । वेदादिशास्त्रहिंसकधर्माभिध्यानमस्त्विति वदन्त्यतो नैनामभिधीयेतान्यथैषा वन्ध्येवैषा रतिमात्रं फलमस्या वृत्तच्युतस्येव नारंभणीयेत्येवं ह्याह । दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता । विद्याभीप्सितं नचिकेतसं मन्ये न त्वा कामा बहवो लोलुपन्ते ॥ विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ अविद्यायामन्तरे वेष्ट्यमानाः स्वयं धीराः पण्डितंमन्यमानाः । दन्द्रम्यमाणा परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥ ९ ॥ देवासुरा ह वै य आत्मकामा ब्रह्मणोऽन्तिकं प्रयातास्तस्मै नमस्कृत्वोचुर्भगवन्वयमात्मकामाः स त्वं नो ब्रूहीत्यतश्चिरं ध्यात्वाऽमन्यतान्यतात्मानो वै तेऽसुरा अतोऽन्यतममेतेषामुक्तं तदिमे मूढा उपजीवन्त्यभिष्वङ्गिणस्तर्याभिघातिनोऽनृताभिशंसिनः सत्यमिवानृतं पश्यन्ति । इन्द्रजालवदित्यतो यद्वेदेष्वभिहितं तत्सत्यं यद्वेदेषूक्तं तद्वि-

द्रांस उपजीवन्ति । तस्माद्ब्राह्मणो नावैदिकमधीयीतायमर्थः स्यादिति ॥ १० ॥
एतद्वाव तत्स्वरूपं नभसः खेऽन्तर्भूतस्य यत्परं तेजस्तत्रेधाऽभिहितमग्ना आदित्ये प्राण एतद्वाव तत्स्वरूपं नभसः खेऽन्तर्भूतस्य यदोमित्येतदक्षरम् । अनेनैव तदुद्बुध्यत्युदयत्युच्छ्वसित्यजस्रं ब्रह्मधीयालम्बं वात्रैव । एतत्समीरणे प्रकाशप्रक्षेपकौष्ण्यस्थानीयमेतद्धूमस्येव समीरणे नभसि प्रशाखयैवोत्क्रम्य स्कन्धात्स्कन्धमनुसरति । अप्सु प्रक्षेपको लवणस्येव घृतस्य चौष्ण्यमिव । अभिध्यातुर्विस्तृतिरिवैतदित्यत्रोदाहरन्ति । अथ कस्मादुच्यते वैद्युतः । यस्मादुच्चारितमात्र एव सर्वं शरीरं विद्योतयति तस्मादोमित्यनेनैतदुपासीतापरिमितं तेजः । पुरुषश्चाक्षुषो योऽयं दक्षिणेऽक्षिण्यवस्थितः । इन्द्रोऽयमस्य जायेयं सव्ये चाक्षिण्यवस्थिता । समागमस्तयोरेव हृदयान्तर्गते सुषौ । तेजस्तल्लोहितस्यात्र पिण्ड एवोभयोस्तयोः ॥ हृदयादायता तावच्चक्षुष्यस्मिन्प्रतिष्ठिता । सारणी सा तयोर्नाडी द्वयोरेका द्विधा सती ॥ मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् । मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ॥ खजाग्नियोगाद्धृदि संप्रयुक्तमणोर्ह्यणुर्द्विरणुः कण्ठदेशे । जिह्वाग्रदेशे त्र्यणुकं च विद्धि विनिर्गतं मातृकमेवमाहुः ॥ न पश्यन्मृत्युं पश्यति न रोगं नोत दुःखताम् । सर्वं हि पश्यन्पश्यति सर्वमाप्नोति सर्वशः । चाक्षुषः स्वप्नचारी च सुप्तः सुप्तात्परश्च यः । भेदाश्चैतेऽस्य चत्वारस्तेभ्यस्तुर्यं महत्तरम् ॥ त्रिष्वेकपाच्चरेद्ब्रह्म त्रिपाच्चरति चोत्तरे । सत्यानृतोपभोगार्थो द्वैतीभावो महात्मन इति द्वैतीभावो महात्मन इति ॥ ११ ॥

इति मैत्रायण्युपनिषत्सु सप्तमः प्रपाठकः ॥ ७ ॥

इति मैत्रायण्युपनिषत्समाप्ता ॥ २५ ॥

---

# कौषीतकिब्राह्मणोपनिषत् ॥ २६ ॥

श्रीमत्कौषीतकीविद्यावेद्यप्रज्ञापराक्षरम् ।
प्रतियोगिविनिर्मुक्तब्रह्ममात्रं विचिन्तये ॥

ॐ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितम् । आविराविर्म एधि वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीः ॥

योऽभूर्वेदसामत्साणीऋतं मा मा हिंसीरनेनाधीतेनाहोरात्रात्संवसाम्यग्न इळा नम इळा नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो नमो वोऽस्तु देवेभ्यः शिवा नः शंतमा भव सुमृळीका सरस्वती मा ते व्योम संदृशि । अदब्धं मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हिंसीः ॥ १ ॥

चित्रो ह वै गार्ग्यायणिर्यक्ष्यमाण आरुणिं वव्रे स ह पुत्रं श्वेतकेतुं प्रजिघाय याजयेति तं हासीनं पप्रच्छ गौतमस्य पुत्रास्ति संवृतं लोके यस्मिन्मा धास्यस्यन्यमुताहो वाध्वा तस्य मा लोके धास्यसीति । स होवाच नाहमेतद्वेद हन्ताचार्यं पृच्छानीति । स ह पितरमासाद्य पप्रच्छेतीति माऽप्राक्षीत्कथं प्रतिब्रवाणीति । स होवाचाहमप्येतन्न वेद सदस्येव वयं स्वाध्यायमधीत्य हरामहे यन्नः परे ददत्येह्युभौ गमिष्याव इति । स ह समित्पाणिश्चित्रं गार्ग्यायणिं प्रतिचक्रम उपायानीति । तं होवाच ब्रह्मार्घोऽसि गौतम यो न मानमुपागा एहि व्येव त्वा ज्ञपयिष्यामीति ॥ १ ॥ स होवाच ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति । तेषां प्राणैः पूर्वपक्ष आप्यायते तानपरपक्षे न प्रजनयति । एतद्वै स्वर्गस्य लोकस्य द्वारं यश्चन्द्रमास्तं यः प्रत्याह तमतिसृजतेऽथ य एनं न प्रत्याह तमिह वृष्टिर्भूत्वा वर्षति स इह कीटो वा पतङ्गो वा शकुनिर्वा शार्दूलो वा सिंहो वा मत्स्यो वा परश्वा वा पुरुषो वाऽन्यो वैतेषु स्थानेषु प्रत्याजायते यथाकर्म यथाविद्यम् । तमागतं पृच्छति कोऽसीति तं प्रतिब्रूयाद्विचक्षणा- दृतवो रेत आभृतं पञ्चदशात्प्रसूतात्पित्र्यवतस्तन्मा पुंसि कर्तर्येरयध्वम् । पुंसा कर्त्रा मातरिमा निषिक्त स जाय उपजायमानो द्वादशत्रयोदश उपमासो द्वादशत्रयोदशेन पित्रासं तद्विदे प्रतितद्विदेऽहं तन्म ऋतवो अमर्त्यव आभरध्वम् । तेन सत्येन तेन तपसा ऋतुरस्म्यार्तवोऽस्मि कोऽस्मि त्वम- स्मीति तमतिसृजते ॥ २ ॥ स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स आदित्यलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकं तस्य ह वा एतस्य ब्रह्मलोकस्य आरो ह्रदो मुहूर्ता येष्टिहा विजरा नदील्यो वृक्षः सालज्यं संस्थानमपराजितमायतनमिन्द्रप्रजापती द्वार- गोपौ । विभुप्रमितं विचक्षणाऽऽसन्द्यमितौजाः पर्यङ्कः प्रिया च मानसी प्रति- रूपा च चाक्षुषी पुष्पाण्यावयतौ वै च जगान्यम्बाश्चाम्बावयवीश्चाप्सरसः । अम्बया नद्यस्तमित्थंविदागच्छति तं ब्रह्माहाभिधावत मम यशसा विजरां वा अयं नदीं प्रापन्न वा अयं जरयिष्यतीति ॥ ३ ॥ तं पञ्च शतान्यप्सरसां प्रतियन्ति शतं चूर्णहस्ताः शतं वासोहस्ताः शतं फलहस्ताः शतमाञ्जनहस्ताः शतं माल्यहस्तास्तं ब्रह्मालंकारेणालंकुर्वन्ति स ब्रह्मालंकारेणालंकृतो ब्रह्म विद्वान्ब्रह्माभिप्रैति स आगच्छत्यारं ह्रदं तं मनसाऽत्येति । तमित्वा

संप्रतिविदो मज्जन्ति स आगच्छति मुहूर्तान्येष्टिहांस्तेऽस्मादपद्रवन्ति स आगच्छति विजरां नदीं तां मनसैवात्येति । तत्सुकृतदुष्कृते धुनुते । तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतं तद्यथा रथेन धावयन्रथचक्रे पर्यवेक्षत, एवमहोरात्रे पर्यवेक्षत एवं सुकृतदुष्कृते सर्वाणि च द्वंद्वानि स एष विसुकृतो विदुष्कृतो ब्रह्म विद्वान्ब्रह्मैवाभिप्रैति ॥ ४ ॥ स आगच्छतील्यं वृक्षं तं ब्रह्मगन्धः प्रविशति, स आगच्छति सालज्यं संस्थानं तं ब्रह्मरसः प्रविशति, स आगच्छत्यपराजितमायतनं तं ब्रह्मतेजः प्रविशति स आगच्छति । इन्द्रप्रजापती द्वारगोपौ तावस्मादपद्रवतः स आगच्छति विभुप्रमितं तं ब्रह्मतेजः प्रविशति स आगच्छति विचक्षणामासन्दीं बृहद्रथंतरे सामनी पूर्वौ पादौ श्यैतनौधसे चापरौ वैरूपवैराजे अनूच्यते शाक्वररैवते तिरश्ची सा प्रज्ञा प्रज्ञया हि विपश्यति स आगच्छत्यमितौजसं पर्यङ्कं स प्राणस्तस्य भूतं च भविष्यच्च पूर्वौ पादौ श्रीश्चेरा चापरौ बृहद्रथंतरे अनूच्ये भद्रयज्ञायज्ञीये शीर्षण्ये ऋचश्च सामानि च प्राचीनातानानि यजूंषि तिरश्चीनानि सोमांशव उपस्तरणमुद्गीथ उपश्रीः श्रीरुपबर्हणं तस्मिन्ब्रह्मास्ते तमित्थंवित्पादेनैवाग्र आरोहति । तं ब्रह्मा पृच्छति कोऽसीति तं प्रतिब्रूयात् ॥ ५ ॥ ऋतुरस्म्यार्तवोऽस्म्याकाशाद्योनेः संभूतो भार्या एतत्संवत्सरस्य तेजो भूतस्य भूतस्य भूतस्य भूतस्यात्मा त्वमात्मासि यस्त्वमसि सोऽहमस्मीति तमाह कोऽहमस्मीति सत्यमिति ब्रूयात्किं तद्यत्सत्यमिति यदन्यद्देवेभ्यश्च प्राणेभ्यश्च तत्सदथ यद्देवाश्च प्राणाश्च तत्त्यं तदेतया वाचाऽभिव्याह्रियते सत्यमित्येतावदिदं सर्वमिदं सर्वमसि । इत्येवैनं तदाह । तदेतदृक्श्लोकेनाभ्युक्तम्—यजूदरः सामशिरा असावृङ्मूर्तिरव्ययः । स ब्रह्मेति स विज्ञेय ऋषिर्ब्रह्ममयो महानिति । तमाह केन मे पौंस्यानि नामान्याप्नोषीति प्राणेनेति ब्रूयात् । केन स्त्रीनामानीति वाचेति केन नपुंसकानीति मनसेति केन गन्धानिति प्राणेनेत्येव ब्रूयात् । केन रूपाणीति चक्षुषेति केन शब्दानिति श्रोत्रेणेति केनान्नरसानिति जिह्वयेति केन कर्माणीति हस्ताभ्यामिति केन सुखदुःखे इति शरीरेणेति केनानन्दं रतिं प्रजातिमित्युपस्थेनेति । केनेत्या इति पादाभ्यामिति केन धियो विज्ञातव्यं कामानिति प्रज्ञयेति ब्रूयात्तमाह । आपो वै खलु मे ह्यसावयं ते लोक इति सा या ब्रह्मणो जितिर्या व्यष्टिस्तां जितिं जयति तां व्यष्टिं व्यश्नुते य एवं वेद य एवं वेद ॥ ६ ॥

इति ऋग्वेदान्तर्गतकौषीतकिब्राह्मणारण्यकोपनिषत्सु प्रथमोऽध्यायः ॥ १ ॥

# द्वितीयोऽध्यायः ॥ २ ॥

प्राणो ब्रह्मेति ह स्माह कौषीतकिस्तस्य ह वा एतस्य प्राणस्य ब्रह्मणो मनो दूतं वाक्परिवेष्ट्री चक्षुर्गोप्तृ श्रोत्रं संश्रावयितृ तस्मै वा एतस्मै प्राणाय ब्रह्मणे एताः सर्वा देवता अयाचमानाय बलिं हरन्ति तथो एवास्मै सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति य एवं वेद तस्योपनिषन्न याचेदिति। तद्यथा ग्रामं भिक्षित्वाऽलब्ध्वोपविशेन्नाहमतो दत्तमश्नीयामिति। य एवैनं पुरस्तात्प्रत्याचक्षीरंस्त एवैनमुपमन्त्रयन्ते ददाम त इति। एष धर्मो याचितो भवति। अन्यतस्त्वेवैनमुपमन्त्रयन्ते ददाम त इति। प्राणो ब्रह्मेति ह स्माह पैङ्ग्यस्तस्य ह वा एतस्य प्राणस्य ब्रह्मणो वाक्परस्ताच्चक्षुरारुन्धे चक्षुः परस्ताच्छ्रोत्रमारुन्धे श्रोत्रं परस्तान्मन आरुन्धे मनः परस्तात्प्राण आरुन्धे तस्मै वा एतस्मै प्राणाय ब्रह्मण एताः सर्वा देवता अयाचमानाय बलिं हरन्ति तथो एवास्मै सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति य एवं वेद तस्योपनिषन्न याचेदिति तद्यथा ग्रामं भिक्षित्वाऽलब्ध्वोपविशेन्नाहमतो दत्तमश्नीयामिति य एवैनं पुरस्तात्प्रत्याचक्षीरंस्त एवैनमुपमन्त्रयन्ते ददाम त इत्येष धर्मो याचितो भवत्यन्यतस्त्वेवैनमुपमन्त्रयन्ते ददाम त इति ॥१॥ अथात एकधनावरोधनं यदेकधनमभिध्यायात्पौर्णमास्यां वाऽमावास्यायां वा शुद्धपक्षे वा पुण्ये नक्षत्रेऽग्निमुपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्यो-त्पूय दक्षिणं जान्वाच्य स्रुवेण वा चमसेन वा कंसेन वैता आज्याहुतीर्जुहोति वाङ्नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा। प्राणो नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा। चक्षुर्नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा। श्रोत्रं नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा। मनो नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा। प्रज्ञा नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहेत्यथ धूमगन्धं प्रजिघ्रायाज्यलेपेनाङ्गान्यनु विमृज्य वाचंयमोऽभिप्रव्रज्यार्थं ब्रुवीत दूतं वा प्रहिणुयाल्लभते हैव ॥ २ ॥ अथातो दैवः स्मरो यस्य प्रियो बुभूषेद्यस्यै वा एषां वै तेषामेवैकस्मिन्पर्वण्यग्निमुपसमाधायैतयैवावृतैता आज्याहु-तीर्जुहोति वाचं ते मयि जुहोम्यसौ स्वाहा। प्राणं ते मयि जुहोम्यसौ स्वाहा। चक्षुस्ते मयि जुहोम्यसौ स्वाहा। श्रोत्रं ते मयि जुहोम्यसौ स्वाहा।

मनस्ते मयि जुहोम्यसौ स्वाहा । प्रज्ञां ते मयि जुहोम्यसौ स्वाहेत्यथ धूमगन्धं प्रजिघ्रायाज्यलेपेनाङ्गान्यनु विमृज्य वाचंयमोऽभिप्रव्रज्य संस्पर्शं जिगमिषेदपि वाताद्वा संभाषमाणस्तिष्ठेत्प्रियो हैव भवति स्मरन्ति हैवास्मात् ॥ ३ ॥ अथातः सांयमनं प्रातर्दनमान्तरमग्निहोत्रमिति चाचक्षते यावद्वै पुरुषो भाषते न तावत्प्राणितुं शक्नोति प्राणं तदा वाचि जुहोति यावद्वै पुरुषः प्राणिति न तावद्भाषितुं शक्नोति वाचं तदा प्राणे जुहोति । एते अनन्ते अमृताहुती जाग्रच्च स्वपंश्च संततमव्यवच्छिन्नं जुहोत्यथ या अन्या आहुतयोऽन्तवत्यस्ताः कर्ममय्यो हि भवन्त्येतद्ध वै पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रुः । उक्थं ब्रह्मेति ह स्माह शुष्कभृङ्गारस्तदृगित्युपासीत सर्वाणि हास्मै भूतानि श्रैष्ठ्यायाभ्यर्चन्ते तद्यजुरित्युपासीत सर्वाणि हास्मै भूतानि श्रैष्ठ्याय युज्यन्ते तत्सामेत्युपासीत सर्वाणि हास्मै भूतानि श्रैष्ठ्याय संनमन्ते तच्छ्रीरित्युपासीत तद्यश इत्युपासीत तत्तेज इत्युपासीत तद्यथैतच्छस्त्राणां श्रीमत्तमं यशस्वितमं तेजस्वितमं भवति तथो एवैवं विद्वान्सर्वेषां भूतानां श्रीमत्तमो यशस्वितमस्तेजस्वितमो भवति । तमेतमैष्टकं कर्ममयमात्मानमध्वर्युः संस्करोति तस्मिन्यजुर्मयं प्रवयति यजुर्मय ऋङ्मयं होता ऋङ्मये साममयमुद्गाता स एष सर्वस्यै त्रयीविद्याया आत्मैष उ एवास्यात्मा एतदात्मा भवति य एवं वेद ॥ ४ ॥ अथातः सर्वजितः कौषीतकेस्त्रीण्युपासनानि भवन्ति यज्ञोपवीतं कृत्वाऽप आचम्य त्रिरुदपात्रं प्रसिच्योद्यन्तमादित्यमुपतिष्ठेत वर्गोऽसि पाप्मानं मे वृङ्ग्धीत्येतयैवावृता मध्ये सन्तमुद्वर्गोऽसि पाप्मानं म उद्वृङ्ग्धीत्येतयैवावृताऽस्तं यन्तं संवर्गोऽसि पाप्मानं मे संवृङ्ग्धीति । यदहोरात्राभ्यां पापं करोति सं तद्वृङ्क्ते । अथ मासि मास्यमावास्यायां पश्चाच्चन्द्रमसं दृश्यमानमुपतिष्ठेतैतयैवावृता हरिततृणाभ्यां वाक्प्रत्यस्यति यत्ते सुसीमं हृदयमधि चन्द्रमसि श्रितं तेनामृतत्वस्येशाने माऽहं पौत्रमघं रुदमिति न हास्मात्पूर्वाः प्रजाः प्रैतीति नु जातपुत्रस्याथाजातपुत्रस्याप्यायस्व समेतु ते सं ते पयांसि समु यन्तु वाजा यमादित्या अंशुमाप्याययन्तीत्येतास्तिस्र ऋचो जपित्वा माऽस्माकं प्राणेन प्रजया पशुभिराप्याययिष्ठा योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तस्य प्राणेन प्रजया पशुभिराप्याययस्वेति दैवीमावृतमावर्त आदित्यस्यावृतमन्वावर्त इति दक्षिणं बाहुमन्वावर्तते ॥ ५ ॥ अथ पौर्णमास्यां पुरस्ताच्चन्द्रमसं दृश्यमानमुपतिष्ठेतैतयैवावृता सोमो राजाऽसि विचक्षणः

पञ्चमुखोऽसि प्रजापतिर्ब्राह्मणस्त एकं मुखं तेन मुखेन राज्ञोऽत्सि तेन मुखेन मामन्नादं कुरु राजा त एकं मुखं तेन मुखेन विशोऽत्सि तेन मुखेन मामन्नादं कुरु श्येनस्त एकं मुखं तेन मुखेन पक्षिणोऽत्सि तेन मुखेन मामन्नादं कुर्वग्निष्ट एकं मुखं तेन मुखेनेमं लोकमत्सि तेन मुखेन मामन्नादं कुरु त्वयि पञ्चमं मुखं तेन मुखेन सर्वाणि भूतान्यत्सि तेन मुखेन मामन्नादं कुरु माऽस्माकं प्राणेन प्रजया पशुभिरवक्षेष्ठा योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तस्य प्राणेन प्रजया पशुभिरवक्षीयस्वेति दैवीमावृतमावर्त आदित्यस्यावृतमन्वावर्त इति दक्षिणं बाहुमन्वावर्तते । अथ संवेशयञ्जायायै हृदयमभिमृशेद्यत्ते सुसीमे हृदये हितमन्तः प्रजापतौ मन्येऽहं मां तद्विद्वांसं तेन माऽहं पौत्रमघं रुदमिति न हास्मात्पूर्वाः प्रजाः प्रैतीति ॥ ६ ॥ अथ प्रोष्यायन्पुत्रस्य मूर्धानमभिमृशेत् । अङ्गादङ्गात्संभवसि हृदयादधिजायसे । आत्मा त्वं पुत्र माविथ स जीव शरदः शतमसाविति नामास्य गृह्णाति । अश्मा भव परशुर्भव हिरण्यमस्तृतं भव तेजो वै पुत्रनामासि स जीव शरदः शतमसाविति नामास्य गृह्णाति येन प्रजापतिः प्रजाः पर्यगृह्णादरिष्ट्यै तेन त्वा परिगृह्णाम्यसाविति नामास्य गृह्णात्यथास्य दक्षिणे कर्णे जपत्यस्मै प्रयन्धि मघवन्नृजीषिन्नितीन्द्र श्रेष्ठानि द्रविणानि धेहीति सव्ये मा च्छित्था मा व्यथिष्ठाः शतं शरद आयुषो जीव पुत्र ते नाम्ना मूर्धानमवजिघ्राम्यसाविति त्रिर्मूर्धानमवजिघ्रेद्गवां त्वा हिंकारेणाभि हिं करोमीति त्रिर्मूर्धानमभि हिं कुर्यात् ॥ ७ ॥ अथातो दैवः परिमर एतद्वै ब्रह्म दीप्यते यदग्निर्ज्वलत्यथैतन्म्रियते यन्न ज्वलति तस्यादित्यमेव तेजो गच्छति वायुं प्राण एतद्वै ब्रह्म दीप्यते यदादित्यो दृश्यतेऽथैतन्म्रियते यन्न दृश्यते तस्य चन्द्रमसमेव तेजो गच्छति वायुं प्राण एतद्वै ब्रह्म दीप्यते यच्चन्द्रमा दृश्यते । अथैतन्म्रियते यन्न दृश्यते तस्य विद्युतमेव तेजो गच्छति वायुं प्राण एतद्वै ब्रह्म दीप्यते यद्विद्युद्विद्योततेऽथैतन्म्रियते यन्न विद्योतते तस्य वायुमेव तेजो गच्छति वायुं प्राणः । ता वा एताः सर्वा देवता वायुमेव प्रविश्य वायौ मृता न मृच्छन्ते तस्मादेव उ पुनरुदीरत इत्यधिदैव-तमथाध्यात्ममेतद्वै ब्रह्म दीप्यते यद्वाचा वदत्यथैतन्म्रियते यन्न वदति तस्य चक्षुरेव तेजो गच्छति प्राणं प्राण एतद्वै ब्रह्म दीप्यते यच्चक्षुषा पश्यत्यथै-तन्म्रियते यन्न पश्यति तस्य श्रोत्रमेव तेजो गच्छति प्राणं प्राण एतद्वै ब्रह्म

दीप्यते यच्छ्रोत्रेण शृणोत्यथैतन्म्रियते यन्न शृणोति तस्य मन एव तेजो गच्छति प्राणं प्राण एतद्वै ब्रह्म दीप्यते यन्मनसा ध्यायत्यथैतन्म्रियते यन्न ध्यायति तस्य प्राणमेव तेजो गच्छति प्राणं प्राणस्ता वा एताः सर्वा देवताः प्राणमेव प्रविश्य प्राणे मृता न मृच्छन्ते तस्मादेव उ पुनरुदीरते तद्यदि ह वा एवं विद्वांस उभौ पर्वतावभिप्रवर्तेयातां तुस्तूर्षमाणौ दक्षिणश्चोत्तरश्च न हैवैनं स्तृण्वीयाताम् । अथ य एनं द्विषन्ति यांश्च स्वयं द्वेष्टि त एनं सर्वे परिम्रियन्ते ॥८॥ अथातो निःश्रेयसादानं सर्वा ह वै देवता अहंश्रेयसे विवदमानाः । अस्माच्छरीरादुच्चक्रमुस्तद्दारुभूतं शिश्येऽथैनद्वाक्प्रविवेश तद्वाचा वदच्छिश्य एव । अथैनच्चक्षुः प्रविवेश तद्वाचा वदच्चक्षुषा पश्यच्छिश्य एवाथैनच्छ्रोत्रं प्रविवेश तद्वाचा वदच्चक्षुषा पश्यच्छ्रोत्रेण शृण्वच्छिश्य एवाथैनन्मनः प्रविवेश तद्वाचावदच्चक्षुषा पश्यच्छ्रोत्रेण शृण्वन्मनसा ध्यायच्छिश्य एवाथैनत्प्राणः प्रविवेश तत्तत एव समुत्तस्थौ ते देवाः प्राणे निःश्रेयसं विदित्वा प्राणमेव प्रज्ञात्मानमभिसंभूय सहैतैः सर्वैरस्माल्लोकादुच्चक्रमुः । ते वायुप्रतिष्ठा आकाशात्मानः स्वरीयुस्तथो एवैवं विद्वान्सर्वेषां भूतानां प्राणमेव प्रज्ञात्मानमभिसंभूय सहैतैः सर्वैरस्माच्छरीरादुत्क्रामति स वायुप्रतिष्ठ आकाशात्मा स्वरेति स तद्भवति यत्रैते देवास्तत्प्राप्य तदमृतो भवति यदमृता देवाः ॥ ९ ॥ अथातः पितापुत्रीयं संप्रदानमिति चाचक्षते । पिता पुत्रं प्रेष्यन्नाह्वयति नवैस्तृणैरगारं संस्तीर्याग्निमुपसमाधायोदकुम्भं सपात्रमुपनिधायाहतेन वाससा संप्रच्छन्नः स्वयं श्येत एत्य पुत्र उपरिष्टादभिनिपद्यते, इन्द्रियैरस्येन्द्रियाणि संस्पृश्यापि वाऽस्याभिमुखत एवासीताथास्मै संप्रयच्छति वाचं मे त्वयि दधानीति पिता वाचं ते मयि दध इति पुत्रः प्राणं मे त्वयि दधानीति पिता प्राणं ते मयि दध इति पुत्रः । चक्षुर्मे त्वयि दधानीति पिता चक्षुस्ते मयि दध इति पुत्रः । श्रोत्रं मे त्वयि दधानीति पिता श्रोत्रं ते मयि दध इति पुत्रः । अन्नरसान्मे त्वयि दधानीति पिता अन्नरसांस्ते मयि दध इति पुत्रः । कर्माणि मे त्वयि दधानीति पिता कर्माणि ते मयि दध इति पुत्रः । सुखदुःखे मे त्वयि दधानीति पिता सुखदुःखे ते मयि दध इति पुत्रः । आनन्दं रतिं प्रजातिं मे त्वयि दधानीति पिता, आनन्दं रतिं प्रजातिं ते मयि दध इति पुत्रः । इत्या मे त्वयि दधानीति पिता, इत्यास्ते मयि दध इति पुत्रः । धियो विज्ञातव्यं कामान्मे त्वयि दधानीति पिता

श्रियो विज्ञातव्यं कामांस्ते मयि दध इति पुत्रः । अथ दक्षिणावुत्प्राङु- पनिष्क्रामति तं पिताऽनुसन्त्रयते यशो ब्रह्मवर्चसमन्नाद्यं कीर्तिस्त्वा जुषता- मित्यथेतरः सव्यमंसमन्ववेक्षते पाणिनाऽन्तर्धाय वसनान्तेन वा प्रच्छाद्य स्वर्गाँल्लोकान्कामानाप्नुहीति स यद्यगदः स्यात्पुत्रस्यैश्वर्ये पिता वसेत्परि वा व्रजेद्यद्यु वै प्रेयाद्यदेवैनं समापयति तथा समापयितव्यो भवति तथा समापयितव्यो भवति ॥ १० ॥

इति ऋग्वेदान्तर्गतकौषीतकिब्राह्मणारण्यकोपनिषत्सु द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

ॐ प्रतर्दनो ह दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम। युद्धेन च पौरुषेण च तं हेन्द्र उवाच । प्रतर्दन वरं ते ददानीति स होवाच प्रतर्दनः। त्वमेव मे वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इति तं हेन्द्र उवाच । न वै वरोऽवरस्मै वृणीते त्वमेव वृणीष्वेत्येवमवरो वै किल म इति होवाच प्रतर्दनोऽथो खल्विन्द्रः सत्यादेव नेयाय । सत्यं हीन्द्रः स होवाच । मामेव विजानीह्येत- देवाहं मनुष्याय हिततमं मन्ये । यन्मां विजानीयात् । त्रिशीर्षाणं त्वाष्ट्र- महनमरुन्मुखान्यतीन्सालावृकेभ्यः प्रायच्छं बह्वीः संधा अतिक्रम्य दिवि प्रह्लादीयानतृणमहमन्तरिक्षे पौलोमान्पृथिव्यां कालखाञ्जान् । तस्य मे तत्र नलोम च मा मीयते । स यो मां विजानीयान्नास्य केन च कर्मणा लोको मीयते । न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया नास्य पापं च न चकृषो मुखान्नीलं वेतीति ॥ १ ॥ स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व । आयुः प्राणः प्राणो वा आयुः प्राण एवामृतम् । यावद्ध्यस्मिञ्शरीरे प्राणो वसति तावदायुः । प्राणेन ह्येवा- मुष्मिँल्लोकेऽमृतत्वमाप्नोति । प्रज्ञया सत्यं संकल्पम् । स यो मामायुर- मृतमित्युपास्ते सर्वमायुरस्मिँल्लोक एति । आप्नोत्यमृतत्वमक्षितिं स्वर्गे लोके। तद्धैक आहुरेकभूयं वै प्राणा गच्छन्तीति । न हि कश्चन शक्नुयात्सकृद्वाचा नाम प्रज्ञापयितुं चक्षुषा रूपं श्रोत्रेण शब्दं मनसा ध्यातुमित्येकभूयं वै प्राणाः । एकैकमेतानि सर्वाण्येव प्रज्ञापयन्ति । वाचं वदन्तीं सर्वे प्राणा अनुवदन्ति । चक्षुः पश्यत्सर्वे प्राणा अनु पश्यन्ति श्रोत्रं शृण्वत्सर्वे प्राणा अनुश्रृण्वन्ति मनो ध्यायत्सर्वे प्राणा अनुध्यायन्ति प्राणं प्राणन्तं सर्वे प्राणा अनुप्राणन्तीति । एवमु हैतदिति हेन्द्र उवाच । अस्ति त्वेव प्राणानां निःश्रेयसमिति ॥ २ ॥ जीवति वागपेतो मूकान्हि पश्यामो जीवति चक्षु-

रपेतोऽन्धान्हि पश्यामो जीवति श्रोत्रापेतो बधिरान्हि पश्यामो जीवति मनोपेतो बालान्हि पश्यामो जीवति बाहुच्छिन्नो जीवत्यूरुच्छिन्न इति। एवं हि पश्याम इति। अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति। तस्मादेतदेवोऽथमुपासीत। यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः। सह ह्येतावस्मिञ्शरीरे वसतः सहोत्क्रामतस्तस्यैषैव दृष्टिः। एतद्विज्ञानम्। यत्रैतत्पुरुषः सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति। तदैनं वाक्सर्वैर्नामभिः सहाप्येति चक्षुः सर्वैः रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति। स यदा प्रतिबुध्यते। यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः। तस्यैषैव सिद्धिः। एतद्विज्ञानम्। यत्रैतत्पुरुष आर्तो मरिष्यन्नाबल्यं न्येत्य संमोहं न्येति तदाहुः। उदक्रमीच्चित्तम्। न शृणोति न पश्यति न वाचा वदति न ध्यायत्यथास्मिन्प्राण एवैकधा भवति तदैनं वाक्सर्वैर्नामभिः सहाप्येति चक्षुः सर्वैः रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति यदा प्रतिबुध्यते यथाग्नेर्ज्वलतो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः ॥ ३ ॥ स यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति वागस्मात्सर्वाणि नामान्यभिविसृजते। वाचा सर्वाणि नामान्याप्नोति प्राणोऽस्मात्सर्वान्गन्धानभिविसृजते प्राणेन सर्वान्गन्धानाप्नोति चक्षुरस्मात्सर्वाणि रूपाण्यभिविसृजते चक्षुषा सर्वाणि रूपाण्याप्नोति श्रोत्रमस्मात्सर्वाञ्शब्दानभिविसृजते श्रोत्रेण सर्वाञ्शब्दानाप्नोति मनोऽस्मात्सर्वाणि ध्यानान्यभिविसृजते मनसा सर्वाणि ध्यानान्याप्नोति सैषा प्राणे सर्वाप्तिः। यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः सह ह्येतावस्मिञ्शरीरे वसतः सहोत्क्रामतः। अथ खलु यथाऽस्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्ति तद्व्याख्यास्यामः ॥ ॥ ४ ॥ वागेवास्या एकमङ्गमदूहळं तस्यै नाम परस्तात्प्रतिविहिता भूतमात्रा। प्राण एवास्या एकमङ्गमदूहळं तस्य गन्धः परस्तात्प्रतिविहिता भूतमात्रा चक्षुरेवास्या एकमङ्गमदूहळं तस्य रूपं परस्तात्प्रतिविहिता भूतमात्रा श्रोत्रमेवास्या एकमङ्गमदूहळं तस्य शब्दः परस्तात्प्रतिविहिता भूतमात्रा जिह्वैवास्या एकमङ्गमदूहळं तस्या अन्नरसः परस्तात्प्रतिविहिता भूतमात्रा हस्तावेवास्या एकमङ्गम-

दूहूळं तयोः कर्म परस्तात्प्रतिविहिता भूतमात्रा शरीरमेवास्या एकमङ्गमदूहूळं तस्य सुखदुःखे परस्तात्प्रतिविहिता भूतमात्रोपस्थ एवास्या एकमङ्गमदूहूळं तस्यानन्दो रतिः प्रजातिः परस्तात्प्रतिविहिता भूतमात्रा पादावेवास्या एकमङ्गमदूहूळं तयोरित्याः परस्तात्प्रतिविहिता भूतमात्रा प्रज्ञैवास्या एकमङ्गमदूहूळं तस्यै धियो विज्ञातव्यं कामाः परस्तात्प्रतिविहिता भूतमात्रा ॥ ५ ॥ प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति । प्रज्ञया प्राणं समारुह्य प्राणेन सर्वान्गन्धानाप्नोति प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति प्रज्ञया श्रोत्रं समारुह्य श्रोत्रेण सर्वाञ्शब्दानाप्नोति प्रज्ञया जिह्वां समारुह्य जिह्वया सर्वानन्नरसानाप्नोति प्रज्ञया हस्तौ समारुह्य हस्ताभ्यां सर्वाणि कर्माण्याप्नोति प्रज्ञया शरीरं समारुह्य शरीरेण सुखदुःखे आप्नोति प्रज्ञयोपस्थं समारुह्योपस्थेनानन्दं रतिं प्रजातिमाप्नोति प्रज्ञया पादौ समारुह्य पादाभ्यां सर्वा इत्या आप्नोति प्रज्ञयैव धियं समारुह्य प्रज्ञयैव धियो विज्ञातव्यं कामानाप्नोति ॥ ६ ॥ न हि प्रज्ञापेता वाङ्नाम किंचन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूदित्याह । नाहमेतन्नाम प्राज्ञासिषमिति । न हि प्रज्ञापेतः प्राणो गन्धं कंचन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतं गन्धं प्राज्ञासिषमिति । न हि प्रज्ञापेतं चक्षू रूपं किंचन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह । नाहमेतद्रूपं प्राज्ञासिषमिति न प्रज्ञापेतं श्रोतं शब्दं कंचन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह । नाहमेतं शब्दं प्राज्ञासिषमिति न हि प्रज्ञापेता जिह्वाऽन्नरसं कंचन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह । नाहमेतमन्नरसं प्राज्ञासिषमिति न प्रज्ञापेतौ हस्तौ कर्म किंचन प्रज्ञापयेतामन्यत्र मे मनोऽभूदित्याह नाहमेतत्कर्म प्राज्ञासिषमिति न हि प्रज्ञापेतं शरीरं सुखं दुःखं किंचन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतत्सुखं दुःखं प्राज्ञासिषमिति न हि प्रज्ञापेत उपस्थ आनन्दं रतिं प्रजातिं कांचन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह । नाहमेतमानन्दं न रतिं न प्रजातिं प्राज्ञासिषमिति न हि प्रज्ञापेतौ पादावित्यां कांचन प्रज्ञापयेतामन्यत्र मे मनोऽभूदित्याह । नाहमेतामित्यां प्राज्ञासिषमितिं । न हि प्रज्ञापेता धीः काचन सिध्येन्न प्रज्ञातव्यं प्रज्ञायेत ॥ ७ ॥ न वाचं विजिज्ञासीत वक्तारं विद्यान्न गन्धं विजिज्ञासीत घ्रातारं विद्यान्न रूपं विजिज्ञासीत रूपविदं विद्यान्न शब्दं विजिज्ञासीत श्रोतारं विद्यान्नान्नरसं विजिज्ञासीतान्नरसस्य विज्ञातारं विद्यान्न कर्म विजिज्ञासीत कर्तारं विद्यान्न सुखदुःखे विजिज्ञासीत

सुखदुःखयोर्विज्ञातारं विद्यान्नानन्दं न रतिं न प्रजातिं विजिज्ञासीतानन्दस्य रतेः प्रजातेर्विज्ञातारं विद्यान्नेत्यां विजिज्ञासीतैतारं विद्यात् । न मनो विजिज्ञासीत मन्तारं विद्यात् । ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतं यद्धि भूतमात्रा न स्युर्न प्रज्ञामात्राः स्युर्यद्वा प्रज्ञामात्रा न स्युर्न भूतमात्राः स्युः । न ह्यन्यतरतो रूपं किंचन सिध्येत् । नो एतन्नाना, तद्यथा रथस्यारेषु नेमिरर्पितो नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः । न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान् । एष ह्येवैनं साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवैनमसाधु कर्म कारयति तं यमधो निनीषते । एष लोकपाल एष लोकाधिपतिरेष सर्वेशः स म आत्मेति विद्यात्स म आत्मेति विद्यात् ॥ ८ ॥

इति ऋग्वेदान्तर्गतकौषीतकिब्राह्मणारण्यकोपनिषत्सु
तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

अथ गार्ग्यो ह वै बालाकिरनूचानः संस्पृष्ट आस सोऽवददुशीनरेषु स वसन्मत्स्येषु कुरुपञ्चालेषु काशिविदेहेष्विति स हाजातशत्रुं काश्यमेत्योवाच । ब्रह्म ते ब्रवाणीति तं होवाचाजातशत्रुः । सहस्रं दद्मस्त इत्येतस्यां वाचि जनको जनक इति वा उ जना धावन्तीति ॥ १ ॥ आदित्ये बृहच्चन्द्रमस्यन्नं विद्युति सत्यं स्तनयित्नौ शब्दो वायाविन्द्रो वैकुण्ठ आकाशे पूर्णमग्नौ विषासहिरित्यप्सु तेज इत्यधिदैवतमथाध्यात्ममादर्शे प्रतिरूपश्छायायां द्वितीयः प्रतिश्रुत्कायामसुरिति शब्दे मृत्युः स्वप्ने यमः शरीरे प्रजापतिर्दक्षिणेऽक्षिणि वाचः सव्येऽक्षिणि सत्यस्य ॥ २ ॥ स होवाच बालाकिर्य एवैष आदित्ये पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः । बृहन्पाण्डरवासा अतिष्ठाः सर्वेषां भूतानां मूर्धेति वा अहमेतमुपास इति स यो हैतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा भवति ॥ ३ ॥ स होवाच बालाकिर्य एवैष चन्द्रमसि पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः सोमो राजाऽन्नस्यात्मेति वा अहमेतमुपास इति स यो मेवमुपासतेऽन्नस्यात्मा भवति ॥ ४ ॥ स होवाच बालाकिर्य एवैष विद्युति पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठास्तेजस आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते तेजस आत्मा भवति ॥ ५ ॥ स होवाच

बालाकिर्य एवैष स्तनयित्नौ पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः शब्दस्यात्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते शब्दस्यात्मा भवति ॥ ६ ॥ स होवाच बालाकिर्य एवैष आकाशे पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः पूर्णमप्रवर्ति ब्रह्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते पूर्यते प्रजया पशुभिः । नो एव स्वयं नास्य प्रजा पुरा कालात्प्रवर्तते ॥ ७ ॥ स होवाच बालाकिर्य एवैष वायौ पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते । जिष्णुर्ह वापराजयिष्णुरन्यतस्त्यजायी भवति ॥ ८ ॥ स होवाच बालाकिर्य एवैषोऽग्नौ पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा विषासहिरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते विषासहिर्हैवान्येषु भवति ॥ ९ ॥ स होवाच बालाकिर्य एवैषोऽप्सु पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा नाम्न आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते नाम्न आत्मा भवतीत्यधिदैवतमथाध्यात्मम् ॥ १० ॥ स होवाच बालाकिर्य एवैष आदर्शे पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते प्रतिरूपो हैवास्य प्रजायामाजायते नाप्रतिरूपः ॥ ११ ॥ स होवाच बालाकिर्य एवैष प्रतिश्रुत्कायां पुरुषस्तमेवाहमुपास इति, तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते विन्दते द्वितीयाद्द्वितीयवान्भवति ॥ १२ ॥ स होवाच बालाकिर्य एवैष शब्दः पुरुषमन्वेति तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा असुरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते नो एव स्वयं नास्य प्रजा पुरा कालात्संमोहमेति ॥ १३ ॥ स होवाच बालाकिर्य एवैष छायापुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा मृत्युरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते नो एव स्वयं नास्य प्रजा पुरा कालात्प्रमीयते ॥ १४ ॥ स होवाच बालाकिर्य एवैष शारीरः पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः प्रजापतिरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते प्रजायते प्रजया

पशुभिः ॥ १५ ॥ स होवाच बालाकिर्य एवैष प्राज्ञ आत्मा येनैतत्पुरुषः सुप्तः स्वप्न्यया चरति तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा यमो राजेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते सर्वं हास्मा इदं श्रैष्ठ्याय यम्यते ॥ १६ ॥ स होवाच बालाकिर्य एवैष दक्षिणेऽक्षन्पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठा नाम्न आत्माऽग्नेरात्मा ज्योतिष आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्त एतेषां सर्वेषामात्मा भवति ॥ १७ ॥ स होवाच बालाकिर्य एवैष सव्येऽक्षन्पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्संवादयिष्ठाः सत्यस्यात्मा विद्युत आत्मा तेजस आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्त एतेषां सर्वेषामात्मा भवतीति ॥ १८ ॥ तत उ ह बालाकिस्तूष्णीमास तं होवाचाजातशत्रुः । एतावन्नु बालाका३ इ इत्येतावद्धीति होवाच बालाकिस्तं होवाचाजातशत्रुर्मृषा वै किल मा समवादयिष्ठा ब्रह्म ते ब्रवाणीति । स होवाच । यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्य इति तत उ ह बालाकिः समित्पाणिः प्रतिचक्रम उपायानीति तं होवाचाजातशत्रुः प्रतिलोमरूपमेव तत्स्याद्यत्क्षत्रियो ब्राह्मणमुपनयेत् । एहि व्येव त्वा ज्ञपयिष्यामीति तं ह पाणावभिपद्य प्रवव्राज तौ ह सुप्तं पुरुषमाजग्मतुस्तं हाजातशत्रुरामन्त्रयांचक्रे । बृहन्पाण्डरवासः सोम राजन्निति । स उ ह तूष्णीमेव शिश्ये । तत उ हैनं यष्ट्याविचिक्षेप स तत एव समुत्तस्थौ तं होवाचाजातशत्रुः । क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्वैतदभूत्कुत एतदागा३दिति । तत उ ह बालाकिर्न विजज्ञे तं होवाचाजातशत्रुर्यत्रैष एतद्बालाके पुरुषोऽशयिष्ट यत्रैतदभूद्यत एतदागादिति । हिता नाम हृदयस्य नाड्यो हृदयात्पुरीततमभिप्रतन्वन्ति तद्यथा सहस्रधा केशो विपाटितस्तावदण्व्यः पिङ्गलस्याणिम्ना तिष्ठन्ति । शुक्लस्य कृष्णस्य पीतस्य लोहितस्येति तासु तदा भवति । यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति तदैनं वाक्सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रतिबुध्यते यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः ॥ १९ ॥ तद्यथा क्षुरः क्षुरधानेऽवहितः स्यात् । विश्वंभरो वा विश्वंभरकुलाय एवमेवैष

प्रज्ञ आत्मेदंशरीरमात्मानमनुप्रविष्ट आलोमभ्य आनखेभ्यः । तमेतमात्मामेनत आत्मानोऽन्ववस्यन्ति यथा श्रेष्ठिनं स्वाः । तद्यथा श्रेष्ठी स्वर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते । एवं वै तमात्मानमेत आत्मानो भुञ्जन्ति । स यावद्ध वा इन्द्र एतमात्मानं न विजज्ञे तावदेनमसुरा अभिबभूवुः । स यदा विजज्ञेऽथ हत्वाऽसुरान्विजित्य सर्वेषां देवानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं परीयाय तथो एवैवं विद्वान्सर्वान्पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्यैति य एवं वेद य एवं वेद ॥ २० ॥

ऋतं वदिष्यामि । सत्यं वदिष्यामि० । वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविराविर्मयोऽभूर्वेदसा मत्साणीर्ऋतं मा मा हिंसीरनेनाधीतेनाहोरात्रात्संवसाम्यग्न इळा नम इळा नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो नमोऽस्तु देवेभ्यः शिवा नः शंतमा भव सुमृळीका सरस्वति मा ते व्योम संदृशि । अदब्धं मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हिंसीः ॥ १ ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

इति ऋग्वेदान्तर्गतकौषीतकिब्राह्मणारण्यकोपनिषत्सु
चतुर्थोऽध्यायः ॥ ४ ॥
इति कौषीतकिब्राह्मणोपनिषत्समाप्ता ॥ २६ ॥

---

## बृहज्जाबालोपनिषत् ॥ २७ ॥

यज्ज्ञानाग्निः स्वातिरिक्तभ्रमं भस्म करोति तत् ।
बृहज्जाबालनिगमशिरोवेद्यमहं महः ॥
भद्रं कर्णेभिरिति शान्तिः ॥

ॐ अपो वा इदमासीत्सलिलमेव ॥ स प्रजापतिरेकः पुष्करपर्णे समभवत् ॥ तस्यान्तर्मनसि कामः समवर्तत इदं सृजेयमिति । तस्माद्यत्पुरुषो मनसाभिगच्छति तद्वाचा वदति । तत्कर्मणा करोति । तदेषाभ्यनूक्ता । कामस्तदग्रे समवर्तताधि । मनसा रेतः प्रथमं यदासीत् । सतो बन्धुमसति निरविन्दन् । हृदि प्रतीष्या कवयो मनीषेति । उपैनं तदुपनमति । यत्कामो भवति । य एवं वेद । स तपोऽतप्यत । स तपस्तप्त्वा स एतं भुसुण्डः कालाग्निरुद्रमगमदागत्य भो विभूतेर्माहात्म्यं ब्रूहीति तथेति प्रत्यवोचत् भुसुण्डं

चक्ष्यमाणं किमिति विभूतिरुद्राक्षयोर्माहात्म्यं बभाणेति आदावेव पैप्पलादेन सहोक्तमिति तत्फलश्रुतिरिति तस्योर्ध्वं किं वदामेति । बृहज्जाबालाभिधां मुक्तिश्रुतिं ममोपदेशं कुरुष्वेति । ॐ तथेति सद्योजातात्पृथिवी । तस्याः स्यान्निवृत्तिः । तस्याः कपिलवर्णानन्दा । तद्गोमयेन विभूतिर्जाता । वामदेवादुदकम् । तस्मात्प्रतिष्ठा । तस्याः कृष्णवर्णा भद्रा । तद्गोमयेन भसितं जातम् । आघोराद्वह्निः । तस्माद्विद्या । तस्या रक्तवर्णा सुरभिः । तद्गोमयेन भस्म जातम् । तत्पुरुषाद्वायुः । तस्माच्छान्तिः । तस्याः श्वेतवर्णा सुशीला । तस्या गोमयेन क्षारं जातम् । ईशानादाकाशम् । तस्माच्छान्त्यतीता । तस्याश्चित्रवर्णा सुमनाः । तद्गोमयेन रक्षा जाता । विभूतिर्भसितं भस्म क्षारं रक्षेति भस्मनो भवन्ति पञ्च नामानि । पञ्चभिर्नामभिर्भृशमैश्वर्यकारणाद्भूतिः । भस्म सर्वाघभक्षणात् । भासनाद्भसितम् । क्षारणादापदां क्षारम् । भूतप्रेतपिशाचब्रह्मराक्षसापस्मारभवभीतिभ्योऽभिरक्षणाद्रक्षेति ॥

इति श्रीबृहज्जाबालोपनिषत्सु प्रथमं ब्राह्मणम् ॥ १ ॥

अथ भुसुण्डः कालाग्निरुद्रमग्नीषोमात्मकं भस्मस्नानविधिं पप्रच्छ । अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एवं भस्म सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ अग्नीषोमात्मकं विश्वमित्यग्निराचक्षते । रौद्री घोरा या तैजसी तनूः । सोमः शक्त्यमृतमयः शक्तिकरी तनूः । अमृतं यत्प्रतिष्ठा सा तेजोविद्या कला स्वयम् । स्थूलसूक्ष्मेषु भूतेषु स एव रसतेजसी ॥ १ ॥ द्विविधा तेजसो वृत्तिः सूर्यात्मा चानलात्मिका । तथैव रसशक्तिश्च सोमात्मा चानलात्मिका ॥ २ ॥ वैद्युदादिमयं तेजो मधुरादिमयो रसः । तेजोरसविभेदैस्तु वृत्तमेतच्चराचरम् ॥ ३ ॥ अग्नेरमृतनिष्पत्तिरमृतेनाग्निरेधते । अत एव हविः संतमग्नीषोमात्मकं जगत् ॥ ४ ॥ ऊर्ध्वशक्तिमयः सोम अधोशक्तिमयोऽनलः । ताभ्यां संपुटितस्तस्माच्छश्वद्विश्वमिदं जगत् ॥ ५ ॥ अग्नेरूर्ध्वं भवत्येषा यावत्सौम्यं परामृतम् । यावदग्न्यात्मके सौम्यममृतं विसृजत्यधः ॥ ६ ॥ अत एव हि कामाग्निरधस्ताच्छक्तिरूर्ध्वगा । यावदादहनश्चोर्ध्वमधस्तात्पावनं भवेत् ॥ ७ ॥ आधारशक्त्यावधृतः कालाग्निरयमूर्ध्वगः । तथैव निम्नगः सोमः शिवशक्तिपदास्पदः ॥ ८ ॥ शिवश्चोर्ध्वमयः शक्तिरूर्ध्वशक्तिमयः शिवः । तदित्थं शिवशक्तिभ्यां नाव्याप्तमिह किंचन ॥ ९ ॥ असकृच्चाग्निना दग्धं जगत्तद्भस्मसात्कृतम् । अग्नेर्वीर्यमिदं प्राहुस्तद्वीर्यं भस्म

यत्ततः ॥ १० ॥ यश्चेत्थं भस्मसद्भावं ज्ञात्वाभिस्नाति भस्मना । अग्निरित्यादिभिर्मन्त्रैर्दग्धपापः स मुच्यते ॥ ११ ॥ अग्नेर्वीर्यं च तद्भस्म सोमेनाप्लावितं पुनः । अयोगयुक्त्या प्रकृतेरधिकाराय कल्पते ॥ १२ ॥ योगयुक्त्या तु तद्भस्म प्लाव्यमानं समंततः । शाक्तेनामृतवर्षेण ह्यधिकारान्निवर्तते ॥ १३ ॥ अतो मृत्युंजयायेत्थममृतप्लावनं सताम् । शिवशक्त्यमृतस्पर्शे लब्ध एव कुतो मृतिः ॥ १४ ॥ यो वेद गहनं गुह्यं पावनं च तथोदितम् । अग्नीषोमपुटं कृत्वा न स भूयोऽभिजायते ॥ १५ ॥ शिवाग्निना तनुं दग्ध्वा शक्तिसोमामृतेन यः । प्लावयेद्योगमार्गेण सोऽमृतत्वाय कल्पते सोऽमृतत्वाय कल्पत इति ॥ १६ ॥

इति श्रीबृहज्जाबालोपनिषत्सु द्वितीयं ब्राह्मणम् ॥ २ ॥

अथ भुसुण्डः कालाग्निरुद्रं विभूतियोगमनुब्रूहीति स होवाच । विकटाङ्गामुन्मत्तां महाखला मलिनामशिवादिचिह्नान्वितां पुनर्धेनुं कृशाङ्गां वत्सहीनामशान्तामदुग्धदोहिनीं निरिन्द्रियां जग्धतृणां केशचेलास्थिभक्षिणीं संधिनीं नवप्रसूतां रोगार्तां गां विहाय प्रशस्तगोमयमाहरेद्गोमयं स्वस्थं ग्राह्यं शुभे स्थाने वा पतितमपरित्यज्यात ऊर्ध्वं मर्दयेद्द्रव्येन गोमयग्रहणे कपिला वा धवला वा अलाभे तदन्या गौः स्याद्दोषवर्जिता कपिलागोर्भस्मोक्तं लब्धं गोभस्म नो चेदन्यगोक्षारं यत्र क्वापि स्थितं च यत्तन्न हि धार्यं संस्कारसहितं धार्यम् । तत्रैते श्लोका भवन्ति—विद्या शक्तिः समस्तानां शक्तिरित्यभिधीयते । गुणत्रयाश्रया विद्या सा विद्या च तदाश्रया ॥ १ ॥ गुणत्रयमिदं धेनुर्विद्याभूद्गोमयं शुभम् । मूत्रं चोपनिषत्प्रोक्तं कुर्याद्भस्म ततः परम् ॥ २ ॥ वत्सस्तु स्मृतयश्चास्य तत्संभूतं तु गोमयम् । आगाव इति मन्त्रेण धेनुं तत्राभिमन्त्रयेत् ॥ ३ ॥ गावो भगो गाव इति प्राशयेत्तर्पणं जलम् । उपोष्य च चतुर्दश्यां शुक्ले कृष्णेऽथवा व्रती ॥ ४ ॥ परेद्युः प्रातरुत्थाय शुचिर्भूत्वा समाहितः । कृतस्नानो धौतवस्त्रः पयोर्धं च सृजेच्च गाम् ॥ ५ ॥ उत्थाप्य गां प्रयत्नेन गायत्र्या मूत्रमाहरेत् । सौवर्णे राजते ताम्रे धारयेन्मृन्मये घटे ॥ ६ ॥ पौष्करेऽथ पलाशे वा पात्रे गोशृङ्ग एव वा । आदधीत हि गोमूत्रं गन्धद्वारेति गोमयम् ॥ ७ ॥ अभूमिपातं गृह्णीयात्पात्रे पूर्वोदिते गृही । गोमयं शोधयेद्विद्वाञ्छ्रीर्मे भजतु मन्त्रतः ॥ ८ ॥ अलक्ष्मीर्म इति मन्त्रेण गोमयं धान्यवर्जितम् । सं त्वा सिञ्चामि मन्त्रेण गोमूत्रं गोमये क्षिपेत् ॥ ९ ॥ पञ्चानां त्विति मन्त्रेण

पिण्डानां च चतुर्दश । कुर्यात्संशोध्य किरणैः सौरकैराहरेत्ततः ॥ १० ॥ निदध्यादथ पूर्वोक्तपात्रे गोमयपिण्डकान् । स्वगृह्योक्तविधानेन प्रतिष्ठाप्याग्निमीजयेत् ॥ ११ ॥ पिण्डांश्च निक्षिपेत्तत्र आद्यन्तं प्रणवेन तु । षडक्षरस्य सूक्तस्य व्याकृतस्य तथाक्षरैः ॥ १२ ॥ स्वाहान्ते जुहुयात्तत्र वर्णदेवाश्च पिण्डकान् । आघारावाज्यभागौ च प्रक्षिपेद्व्याहृतीः सुधीः ॥ १३ ॥ ततो निधनपतये त्रयोविंशज्जुहोति च । होतव्याः पञ्च ब्रह्माणि नमो हिरण्यबाहवे ॥ १४ ॥ इति सर्वाहुतीर्हुत्वा चतुर्थ्यन्तैश्च मन्त्रकैः ॥ ऋतं सत्यं कद्रुद्राय यस्य वैकंकतीति च ॥ १५ ॥ एतैश्च जुहुयाद्विद्वाननना ज्ञातत्रयं तथा । व्याहृतीरथ हुत्वा च ततः स्विष्टकृतं हुनेत् ॥ १६ ॥ इध्मशेषं तु निर्वर्त्य पूर्णपात्रोदकं तथा । पूर्णमसीति यजुषा जलेनान्येन बृंहयेत् ॥ १७ ॥ ब्राह्मणेष्वमृतमिति तज्जलं शिरसि क्षिपेत् । प्राच्यामिति दिशं लिङ्गैर्दिक्षु तोयं विनिक्षिपेत् ॥ १८ ॥ ब्राह्मणे दक्षिणां दत्त्वा शान्त्यै पुलकमाहरेत् । आहरिष्यामि देवानां सर्वेषां कर्मगुप्तये ॥ १९ ॥ जातवेदसमेनं त्वां पुलकैश्छादयाम्यहम् । मन्त्रेणानेन तं वह्निं पुलकैश्छादयेत्ततः ॥ २० ॥ त्रिदिनं ज्वलनस्थित्यै छादनं पुलकैः स्मृतम् । ब्राह्मणान्भोजयेद्भक्त्या स्वयं भुञ्जीत वाग्यतः ॥ २१ ॥ भस्माधिक्यमभीप्सुस्तु अधिकं गोमयं हरेत् । दिनत्रयेण यदि वा एकस्मिन्दिवसेऽथवा ॥ २२ ॥ तृतीये वा चतुर्थे वा प्रातः स्नात्वा सिताम्बरः । शुक्लयज्ञोपवीती च शुक्लमाल्यानुलेपनः ॥ २३ ॥ शुक्लदन्तो भस्मदिग्धो मन्त्रेणानेन मन्त्रवित् । ॐ तद्ब्रह्मेति चोच्चार्य पौलकं भस्मसंत्यजेत् ॥ २४ ॥ तत्र चावाहनमुखानुपचारांस्तु षोडश । कुर्याद्व्याहृतिभिस्त्वेवं ततोऽग्निमुपसंहरेत् ॥ २५ ॥ अग्निर्भस्मेति मन्त्रेण गृह्णीयाद्भस्म चोत्तरम् । अग्निरित्यादिमन्त्रेण प्रमृज्य च ततः परम् ॥ २६ ॥ संयोज्य गन्धसलिलैः कपिलामूत्रकेण वा । चन्द्रकुङ्कुमकाश्मीरमुशीरं चन्दनं तथा ॥ २७ ॥ अगरुत्रितयं चैव चूर्णयित्वा तु सूक्ष्मतः । क्षिपेद्भस्मनि तच्चूर्णमोमिति ब्रह्ममन्त्रतः ॥ २८ ॥ प्रणवेनाहरेद्विद्वान्बृहतो वटकानथ । अणोरणीयानिति हि मन्त्रेण च विचक्षणः ॥ २९ ॥ इत्थं भस्म सुसंपाद्य शुष्कमादाय मन्त्रवित् । प्रणवेन विमृज्याथ सप्तप्रणवमन्त्रितम् ॥ ३० ॥ ईशानेति शिरोदेशं मुखं तत्पुरुषेण तु । ऊरुदेशमघोरेण गुह्यं वामेन मन्त्रयेत् ॥ ३१ ॥ सद्योजातेन वै पादान्सर्वाङ्गं प्रणवेन तु । तत उद्धृत्य सर्वाङ्गमापादतलमस्तकम्

॥ ३२ ॥ आचम्य वसनं धौतं ततश्चैतत्प्रधारयेत् । पुनराचम्य कर्म स्वं कर्तुमर्हसि सत्तम ॥ ३३ ॥ अथ चतुर्विधं भस्मकल्पम् । प्रथममनुकल्पम् । द्वितीयमुपकल्पम् । उपोपकल्पं तृतीयम् । अकल्पं चतुर्थम् । अग्निहोत्रसमुद्भूतं विरजानलजमनुकल्पम् । वने शुष्कं शकृत्संगृह्य कल्पोक्तविधिना कल्पितमुपकल्पं स्यात् । अरण्ये शुष्कगोमयं चूर्णीकृत्यानुसंगृह्य गोमूत्रैः पिण्डीकृत्य यथाकल्पं संस्कृतमुपोपकल्पम् । शिवालयस्थमकल्पं शतकल्पं च । इत्थं चतुर्विधं भस्म पापं निकृन्तयेन्मोक्षं ददातीति भगवान्कालाग्निरुद्रः ॥ ३४ ॥

इति श्रीबृहज्जाबालोपनिषत्सु तृतीयं ब्राह्मणम् ॥ ३ ॥

अथ भुसुण्डः कालाग्निरुद्रं भस्मस्नानविधिं ब्रूहीति । स होवाचाथ प्रणवेन विसृज्याथ सप्तप्रणवेनाभिमन्त्रितमागमेन तु तेनैव दिग्बन्धनं कारयेत्पुनरपि तेनास्त्रमन्त्रेणाङ्गानि मूर्धादीन्युद्धूलयेन्मलस्नानमिदमीशानाद्यैः पञ्चभिर्मन्त्रैस्तनुं क्रमादुद्धूलयेत् । ईशानेति शिरोदेशं मुखं तत्पुरुषेण तु । ऊरुदेशमघोरेण गुह्यकं वामदेवतः । सद्योजातेन वै पादौ सर्वाङ्गं प्रणवेन तु । आपादतलमस्तकं सर्वाङ्गं तत उद्धूल्याचम्य वसनं धौतं श्वेतं प्रधारयेद्विधिस्नानमिदम् । तत्र श्लोका भवन्ति—भस्ममुष्टिं समादाय संहितामन्त्रमन्त्रिताम् । मस्तकात्पादपर्यन्तं मलस्नानं पुरोदितम् ॥ १ ॥ तन्मन्त्रेणैव कर्तव्यं विधिस्नानं समाचरेत् । ईशाने पञ्चधा भस्म विकिरेन्मूर्ध्नि यत्नतः ॥ २ ॥ मुखे चतुर्थवक्त्रेण अघोरेणाष्टधा हृदि । वामेन गुह्यदेशे तु त्रिदशस्थानभेदतः ॥ ३ ॥ अष्टावन्तेन साध्येन पदावुद्धूल्य यत्नतः । सर्वाङ्गोद्धूलनं कार्यं राजन्यस्य यथाविधि ॥ ४ ॥ मुखं विना च तत्सर्वमुद्धूल्य क्रमयोगतः । संध्याद्वये निशीथे च तथा पूर्वावसानयोः ॥ ५ ॥ सुप्त्वा भुक्त्वा पयः पीत्वा कृत्वा चावश्यकादिकम् । स्त्रियं नपुंसकं गृध्रं बिडालं बकमूषिकम् ॥ ६ ॥ स्पृष्ट्वा तथाविधान्यान्भस्मस्नानं समाचरेत् । देवाग्निगुरुवृद्धानां समीपेऽन्त्यजदर्शने ॥ ७ ॥ अशुद्धभूतले मार्गे कुर्यात्रोद्धूलनं व्रती । शङ्खतोयेन मूलेन भस्मना मिश्रणं भवेत् ॥ ८ ॥ योजितं चन्दनेनैव वारिणा भस्मसंयुतम् । चन्दनेन समालिम्पेज्ज्ञानदं चूर्णमेव तत् ॥ ९ ॥ मध्याह्नात्प्राग्जलैर्युक्तं तोयं तदनु वर्जयेत् ॥ अथ भुसुण्डो भगवन्तं कालाग्निरुद्रं त्रिपुण्ड्रविधिं पप्रच्छ । तत्रैते श्लोका भवन्ति—त्रिपुण्ड्रं कारयेत्पश्चाद्ब्रह्मविष्णुशिवात्मकम् । मध्याङ्गुलिभिरादाय तिसृभिर्मूलमन्त्रतः ॥ १० ॥

अनामामध्यमाङ्गुष्ठैरथवा स्यात्त्रिपुण्ड्रकम् । उद्धूलयेन्मुखं विप्रः क्षत्रियस्तच्छिरोदितम् ॥ ११ ॥ द्वात्रिंशत्स्थानके चार्धं षोडशस्थानकेऽथ वा । अष्टस्थाने तथा चैव पञ्चस्थानेऽपि योजयेत् ॥ १२ ॥ उत्तमाङ्गे ललाटे च कर्णयोर्नेत्रयोस्तथा । नासावक्त्रे गले चैवमंसद्वयमतः परम् ॥ १३ ॥ कूर्परे मणिबन्धे च हृदये पार्श्वयोर्द्वयोः । नाभौ गुह्यद्वये चैवमूर्वोः स्फिग्बिम्बजानुनि ॥ १४ ॥ जङ्घाद्वये च पादौ च द्वात्रिंशत्स्थानमुत्तमम् । अष्टमूर्त्यष्टविद्येशान्दिक्पालान्वसुभिः सह ॥१५॥ धरो ध्रुवश्च सोमश्च कृपश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टावितीरिताः ॥ १६ ॥ एतेषां नाममन्त्रेण त्रिपुण्ड्रान्धारयेद्बुधः । विदध्यात्षोडशस्थाने त्रिपुण्ड्रं तु समाहितः ॥ १७ ॥ शीर्षके च ललाटे च कर्णे कण्ठेंऽसकद्वये । कूर्परे मणिबन्धे च हृदये नाभिपार्श्वयोः ॥ १८ ॥ पृष्ठे चैकं प्रतिस्थानं जपेत्तत्राधिदेवताः । शिवं शक्तिं च सादाख्यामीशं विद्याख्यमेव च ॥ १९ ॥ वामादिनवशक्तीश्च एते षोडशदेवताः । नासत्यो दस्रकश्चैक अश्विनौ द्वौ समीरितौ ॥ २० ॥ अथवा मूर्ध्न्यलोके च कर्णयोः श्वसने तथा । बाहुद्वये च हृदये नाभ्यामूर्वोर्युगे तथा ॥ २१ ॥ जानुद्वये च पदयोः पृष्ठभागे च षोडश । शिवश्चेन्द्रश्च रुद्रार्कौ विघ्नेशो विष्णुरेव च ॥ २२ ॥ श्रीश्चैव हृदयेशश्च तथा नाभौ प्रजापतिः । नागश्च नागकन्याश्च उभे च ऋषिकन्यके ॥२३॥ पादयोश्च समुद्राश्च तीर्थाः पृष्ठेऽपि च स्थिताः । एवं वा षोडशस्थानमष्टस्थानमथोच्यते ॥ २४ ॥ गुरुस्थानं ललाटं च कर्णद्वयमवान्तरम् । अंसयुग्मं च हृदयं नाभिरित्यष्टमं भवेत् ॥ २५ ॥ ब्रह्मा च ऋषयः सप्त देवताश्च प्रकीर्तिताः । अथवा मस्तकं बाहू हृदयं नाभिरेव च ॥ २६ ॥ पञ्च स्थानान्यमून्याहुर्भस्मतत्त्वविदो जनाः । यथासंभवतः कुर्याद्देशकालाद्यपेक्षया ॥ २७ ॥ उद्धूलनेऽप्यशक्तश्चेत्त्रिपुण्ड्रादीनि कारयेत् । ललाटे हृदये नाभौ गले च मणिबन्धयोः ॥ २८ ॥ बाहुमध्ये बाहुमूले पृष्ठे चैव च शीर्षके ॥ ललाटे ब्रह्मणे नमः । हृदये हव्यवाहनाय नमः । नाभौ स्कन्दाय नमः । गले विष्णवे नमः । मध्ये प्रभञ्जनाय नमः । मणिबन्धे वसुभ्यो नमः । पृष्ठे हरये नमः । ककुदि शंभवे नमः । शिरसि परमात्मने नमः । इत्यादिस्थानेषु त्रिपुण्ड्रं धारयेत् । त्रिनेत्रं त्रिगुणाधारं त्रयाणां जनकं प्रभुम् । स्मरन्नमः शिवायेति ललाटे तत्त्रिपुण्ड्रकम् ॥ २९ ॥ कूर्पराधः पितृभ्यां तु ईशानाभ्यां तथोपरि । ईशाभ्यां नम इत्युक्त्वा पार्श्वयोश्च त्रिपुण्ड्रकम् ॥ ३० ॥ स्वच्छाभ्यां नम इत्युक्त्वा धारये-

स्तत्प्रकोष्ठयोः । भीमायेति तथा पृष्ठे शिवायेति च पार्श्वयोः ॥ ३१ ॥ नीलकण्ठाय शिरसि क्षिपेत्सर्वात्मने नमः । पापं नाशयते कृत्स्नमपि जन्मान्तरार्जितम् ॥ ३२ ॥ कण्ठोपरि कृतं पापं नष्टं स्यात्तत्र धारणात् । कर्णे तु धारणात्कर्णरोगादिकृतपातकम् ॥ ३३ ॥ बाह्वोर्बाहुकृतं पापं वक्षःसु मनसा कृतम् । नाभ्यां शिश्नकृतं पापं पृष्ठे गुदकृतं तथा ॥ ३४ ॥ पार्श्वयोर्धारणात्पापं परस्त्र्यालिङ्गनादिकम् । तद्भस्मधारणं कुर्यात्सर्वत्रैव त्रिपुण्ड्रकम् ॥ ३५ ॥ ब्रह्मविष्णुमहेशानां त्र्यग्नीनां च धारणम् । गुणलोकत्रयाणां च धारणं तेन वै श्रुतम् ॥ ३६ ॥

इति श्रीबृहज्जाबालोपनिषत्सु चतुर्थं ब्राह्मणम् ॥ ४ ॥

मानस्तोकेन मन्त्रेण मन्त्रितं भस्म धारयेत् । ऊर्ध्वपुण्ड्रं भवेत्सामं मध्यपुण्ड्रं त्रियायुषम् ॥ १ ॥ त्रियायुषाणि कुरुते ललाटे च भुजद्वये । नाभौ शिरसि हृत्पार्श्वे ब्राह्मणाः क्षत्रियास्तथा ॥ २ ॥ त्रैवर्णिकानां सर्वेषामग्निहोत्रसमुद्भवम् । इदं मुख्यं गृहस्थानां विरजानलजं भवेत् ॥ ३ ॥ विरजानलजं चैव धार्यं प्रोक्तं महर्षिभिः । औपासनसमुत्पन्नं गृहस्थानां विशेषतः ॥ ४ ॥ समिदग्निसमुत्पन्नं धार्यं वै ब्रह्मचारिणा । शूद्राणां श्रोत्रियागारपचनाग्निसमुद्भवम् ॥ ५ ॥ अन्येषामपि सर्वेषां धार्यं चैवानलोद्भवम् । यतीनां ज्ञानदं प्रोक्तं वनस्थानां विरक्तिदम् ॥ ६ ॥ अतिवर्णाश्रमाणां तु श्मशानाग्निसमुद्भवम् । सर्वेषां देवालयस्थं भस्म शिवाग्निजं शिवयोगिनाम् । शिवालयस्थं तल्लिङ्गलिप्तं वा मन्त्रसंस्कारदग्धं वा । तत्रैते श्लोका भवन्ति । तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् । येन विप्रेण शिरसि त्रिपुण्ड्रं भस्मना धृतम् ॥ ७ ॥ त्यक्तवर्णाश्रमाचारो लुप्तसर्वक्रियोऽपि यः । सकृत्तिर्यक्त्रिपुण्ड्राङ्कधारणात्सोऽपि पूज्यते ॥ ८ ॥ ये भस्मधारणं त्यक्त्वा कर्म कुर्वन्ति मानवाः । तेषां नास्ति विनिर्मोक्षः संसाराज्जन्मकोटिभिः ॥ ९ ॥ महापातकयुक्तानां पूर्वजन्मार्जितागसाम् । त्रिपुण्ड्रोद्धूलनद्वेषो जायते सुदृढं बुधाः ॥ १० ॥ येषां कोपो भवेद्ब्रह्मँल्ललाटे भस्मदर्शनात् । तेषामुत्पत्तिसांकर्यमनुमेयं विपश्चिता ॥ ११ ॥ येषां नास्ति मुने श्रद्धा श्रौते भस्मनि सर्वदा । गर्भाधानादिसंस्कारस्तेषां नास्तीति निश्चयः ॥ १२ ॥ ये भस्मधारिणं दृष्ट्वा नराः कुर्वन्ति ताडनम् । तेषां चाण्डालतो जन्म ब्रह्मन्नूह्यं विपश्चिता ॥ १३ ॥ येषां क्रोधो भवेद्भस्मधारणे तत्प्रमाणके । ते महापातकैर्युक्ता इति शास्त्रस्य

निश्चयः ॥ १४ ॥ त्रिपुण्ड्रं ये विनिन्दन्ति निन्दन्ति शिवमेव ते । धारयन्ति च ये भक्त्या धारयन्ति शिवं च ते ॥ १५ ॥ धिग्भस्मरहितं भालं धिग्ग्राममशिवालयम् । धिगनीशार्चनं जन्म धिग्विद्यामशिवाश्रयाम् ॥ १६ ॥ रुद्राग्नेर्यत्परं वीर्यं तद्भस्म परिकीर्तितम् । तस्मात्सर्वेषु कालेषु वीर्यवान्भस्मसंयुतः ॥ १७ ॥ भस्मनिष्ठस्य दह्यन्ते दोषा भस्माग्निसंगमात् । भस्मस्नानविशुद्धात्मा भस्मनिष्ठ इति स्मृतः ॥ १८ ॥ भस्मसंदिग्धसर्वाङ्गो भस्मदीप्तत्रिपुण्ड्रकः । भस्मशायी च पुरुषो भस्मनिष्ठ इति स्मृतः ॥ १९ ॥

इति श्रीबृहज्जाबालोपनिषत्सु पञ्चमं ब्राह्मणम् ॥ ५ ॥

अथ भुसुण्डः कालाग्निरुद्रं नामपञ्चकस्य माहात्म्यं ब्रूहीति होवाच । अथ वसिष्ठवंशजस्य शतभार्यासमेतस्य धनंजयस्य ब्राह्मणस्य ज्येष्ठभार्यापुत्रः करुण इति नाम तस्य शुचिस्मिता भार्या । असौ करुणो भ्रातृवैरमसहमानो भवानीतटस्थं नृसिंहमगमत् । तत्र देवसमीपेऽन्येनोपायनार्थं समर्पितं जम्बीरफलं गृहीत्वाजिघ्रत्तदा तत्रस्था अशपन्पाप मक्षिको भव वर्षाणां शतमिति । सोऽपि शापमादाय मक्षिका सन्स्वचेष्टितं तस्यै निवेद्य मां रक्षेति स्वभार्यामवदत्तदा मक्षिकोऽभवत्तमेवं ज्ञात्वा ज्ञातयस्तैलमध्ये ह्यधारयन्सा मृतं पतिमादायारुन्धतीमगमद्भो शुचिस्मितेऽमुं जीवयेति सोवाच शोकेनालमरुन्धत्यहममुं जीवयाम्यद्य विभूतिमादायेति । एषाग्निहोत्रजं भस्म-मृत्युंजयेन मन्त्रेण मृतजन्तौ तदाक्षिपत् । मन्दवायुस्तदा जज्ञे व्यजनेन शुचिस्मितः ॥ १ ॥ उदतिष्ठत्तदा जन्तुर्भस्मनोऽस्य प्रभावतः । ततो वर्षशते पूर्णे ज्ञातिरेको ह्यमारयत् ॥ २ ॥ भस्मैव जीवयामास काश्यां पञ्च तदाभवन् । देवानपि तथाभूतान्मामप्येतादृशं पुरा ॥ ३ ॥ तस्मात्तु भस्मना जन्तुं जीवयामि तदानघे । इत्येवमुक्त्वा भगवान्दधीचिः समजायत ॥ ४ ॥ स्वरूपं च ततो गत्वा स्वमाश्रमपदं ययाविति ॥ इदानीमस्य भस्मनः सर्वाघभक्षणसामर्थ्यं विधत्त इत्याह । श्रीगौतमविवाहकाले तामहल्यां दृष्ट्वा सर्वे देवा कामातुरा अभवन् । तदा नष्टज्ञाना दूर्वाससं गत्वा पप्रच्छुः । स तद्दोषं शमयिष्यामीत्युवाच । ततः शतरुद्रेण मन्त्रेण मन्त्रितं भस्म वै पुरा । मयापि दत्तं ब्रह्महत्यादि शान्तम् । इत्येवमुक्त्वा दूर्वासा दत्तवान्भस्म चोत्तमम् । जाता मद्वचनात्सर्वे यूयं तेऽधिकतेजसः ॥ ५ ॥ शतरुद्रेण मन्त्रेण भस्मोद्धूलितविग्रहाः । निर्धूतरजसः सर्वे तत्क्षणाच्च वयं मुने ॥ ६ ॥ आश्चर्यमेतज्जानीमो भस्मसामर्थ्यमीदृशम् । अस्य भस्मनः शक्तिमन्यां

शृणु । एतदेव हरिशंकरयोर्ज्ञानप्रदम् । ब्रह्महत्यादिपापनाशकम् । महाविभूतिदमिति शिववक्षसि स्थितं नखेनादाय प्रणवेनाभिमन्त्र्य गायत्र्या पञ्चाक्षरेणाभिमन्त्र्य हरिर्मस्तकगात्रेषु समर्पयेत् । तथा हृदि ध्यायस्वेति हरिमुक्त्वा हरः स्वहृदि ध्यात्वा दृष्टो दृष्ट इति शिवमाह । ततो भस्म भक्षयेति हरिमाह हरस्ततः । भक्षयिष्ये शिवं भस्म स्नात्वाहं भस्मना पुरा ॥ ७ ॥ पृष्ट्वेश्वरं भक्तिगम्यं भस्माभक्षयदच्युतः । तत्राश्चर्यमतीवासीत्प्रतिबिम्बसमद्युतिः ॥ ८ ॥ वासुदेवः शुद्धमुक्ताफलवर्णोऽभवत्क्षणात् । तदाप्रभृति शुक्लाभो वासुदेवः प्रसन्नवान् ॥ ९ ॥ न शक्यं भस्मनो ज्ञानं प्रभावं ते कुतो विभो । नमस्तेऽस्तु नमस्तेऽस्तु त्वामहं शरणं गतः ॥ १० ॥ त्वत्पादयुगले शंभो भक्तिरस्तु सदा मम । भस्मधारणसंपन्नो मम भक्तो भविष्यति ॥ ११ ॥ अत एवैषा भूतिर्भूतिकरीत्युक्ता । अस्य पुरस्ताद्वसव आसन्रुद्रा दक्षिणत आदित्याः पश्चाद्विश्वेदेवा उत्तरतो ब्रह्मविष्णुमहेश्वरा नाभ्यां सूर्याचन्द्रमसौ पार्श्वयोः । तदेतदृचाभ्युक्तम्—ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधिविश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते । य एतद्बृहज्जाबालं सार्वकामिकं मोक्षद्वारमृङ्मयं यजुर्मयं साममयं ब्रह्ममयममृतमयं भवति । य एतद्बृहज्जाबालं बालो वा युवा वा वेद स महान्भवति । स गुरुः सर्वेषां मन्त्राणामुपदेष्टा भवति । मृत्युतारकं गुरुणा लब्धं कण्ठे बाहौ शिखायां बध्नीत । सप्तद्वीपवती भूमिर्दक्षिणार्थं नावकल्पते तस्माच्छ्रद्धया यां कांचिद्गां दद्यात्सा दक्षिणा भवति ॥ १२ ॥

इति श्रीबृहज्जाबालोपनिषत्सु षष्ठं ब्राह्मणम् ॥ ६ ॥

अथ जनको वैदेहो याज्ञवल्क्यमुपसमेत्योवाच भगवन् त्रिपुण्ड्रविधिं नो ब्रूहीति । स होवाच सद्योजातादिपञ्चब्रह्ममन्त्रैः परिगृह्याग्निरिति भस्मेत्यभिमन्त्र्य मानस्तोक इति समुद्धृत्य त्रियायुषमिति जलेन संमृज्य त्र्यम्बकमिति शिरोललाटवक्षःस्कन्धेषु धृत्वा पूतो भवति मोक्षी भवति शतरुद्रेण यत्फलमवाप्नोति तत्फलमश्नुते स एष भस्मज्योतिरिति वै याज्ञवल्क्यः ॥ १ ॥ जनको ह वैदेहः स होवाच याज्ञवल्क्यं भस्मधारणात्किं फलमश्नुत इति । स होवाच तद्भस्मधारणादेव मुक्तिर्भवति तद्भस्मधारणादेव शिवसायुज्यमवाप्नोति न स पुनरावर्तते न स पुनरावर्तते स एष भस्मज्योरिति वै याज्ञवल्क्यः ॥ २ ॥ जनको ह वैदेहः स होवाच याज्ञवल्क्यं भस्मधारणात्किं फलमश्नुते न वेति । तत्र परमहंसा नाम संवर्तकारुणिश्वेतकेतुदूर्वासऋभुनिदाघजडभरतदत्तात्रेय-

रैवतकभुसुण्डप्रभृतयो विभूतिधारणादेव मुक्ताः स्युः स एष भस्मज्योतिरिति वै याज्ञवल्क्यः ॥ ३ ॥ जनको ह वैदेहः स होवाच याज्ञवल्क्यं भस्मस्नानेन किं जायत इति । यस्य कस्यचिच्छरीरं यावन्तो रोमकूपास्तावन्ति लिङ्गानि भूत्वा तिष्ठन्ति ब्राह्मणो वां क्षत्रियो वा वैश्यो वा शूद्रो वा तद्भस्मधारणादेतच्छब्दस्य रूपं यस्यां तस्यां ह्येवावतिष्ठते ॥ ४ ॥ जनको ह वैदेहः पैप्पलादेन सह प्रजापतिलोकं जगाम तं गत्वोवाच भो प्रजापते त्रिपुण्ड्रस्य माहात्म्यं ब्रूहीति । तं प्रजापतिरब्रवीद्यथैवेश्वरस्य माहात्म्यं तथैव त्रिपुण्ड्रस्येति ॥ ५ ॥ अथ पैप्पलादो वैकुण्ठं जगाम तं गत्वोवाच भो विष्णो त्रिपुण्ड्रस्य माहात्म्यं ब्रूहीति । यथैवेश्वरस्य माहात्म्यं तथैव त्रिपुण्ड्रस्येति विष्णुराह ॥ ६ ॥ अथ पैप्पलादः कालाग्निरुद्रं परिसमेत्योवाचाधीहि भगवन् त्रिपुण्ड्रस्य विधिमिति । त्रिपुण्ड्रस्य विधिर्मया वक्तुं न शक्य इति सत्यमिति होवाचाथ भस्मच्छन्नः संसारान्मुच्यते भस्मशय्याशयानस्तच्छब्दगोचरः शिवसायुज्यमवाप्नोति न स पुनरावर्तते न स पुनरावर्तते रुद्राध्यायी सन्नमृतत्वं च गच्छति । स एष भस्मज्योतिर्विभूतिधारणाद्ब्रह्मैकत्वं च गच्छति विभूतिधारणादेव सर्वेषु तीर्थेषु स्नातो भवति विभूतिधारणाद्वाराणस्यां स्नानेन यत्फलमवाप्नोति तत्फलमश्नुते । स एष भस्मज्योतिर्यस्य कस्यचिच्छरीरे त्रिपुण्ड्रस्य लक्ष्म वर्तते प्रथमा प्रजापतिर्द्वितीया विष्णुस्तृतीया सदाशिव इति स एष भस्मज्योतिरिति स एष भस्मज्योतिरिति ॥ ७ ॥ अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छाधीहि भगवन्रुद्राक्षधारणविधिं । स होवाच रुद्रस्य नयनादुत्पन्ना रुद्राक्षा इति लोके ख्यायन्ते सदाशिवः संहारकाले संहारं कृत्वा संहाराक्षं मुकुलीकरोति तन्नयनाज्जाता रुद्राक्षा इति होवाच तस्माद्रुद्राक्षाणां रुद्राक्षत्वमिति । तद्रुद्राक्षे वाग्विषये कृते दशगोप्रदानेन यत्फलमवाप्नोति तत्फलमश्नुते स एष भस्मज्योती रुद्राक्ष इति तद्रुद्राक्षं करेण स्पृष्ट्वा धारणमात्रेण द्विसहस्रगोप्रदानफलं भवति । तद्रुद्राक्षे कर्णयोर्धार्यमाणे एकादशसहस्रगोप्रदानफलं भवति एकादशरुद्रत्वं च गच्छति । तद्रुद्राक्षे शिरसि धार्यमाणे कोटिगोप्रदानफलं भवति । एतेषां स्थानानां कर्णयोः फलं वक्तुं न शक्यमिति होवाच । मूर्ध्नि चत्वारिंशच्छिखायामेकं त्रयं वा श्रोत्रयोर्द्वादश कर्णे द्वात्रिंशद्बाह्वोः षोडश षोडश द्वादश द्वादश मणिबन्धयोः षट् षडङ्गुष्ठयोस्ततः संध्यां सकुशोऽहरहरुपासीताग्निर्ज्योतिरित्यादिभिरग्नौ जुहुयात् ॥ ८ ॥

इति श्रीबृहज्जाबालोपनिषत्सु सप्तमं ब्राह्मणम् ॥ ७ ॥

अथ बृहज्जाबालस्य फलं नो ब्रूहि भगवन्निति स होवाच य एतद्बृहज्जाबालं नित्यमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आदित्यपूतो भवति स सोमपूतो भवति स ब्रह्मपूतो भवति स विष्णुपूतो भवति स रुद्रपूतो भवति स सर्वपूतो भवति स सर्वपूतो भवति ॥ १ ॥ य एतद्बृहज्जाबालं नित्यमधीते सोऽग्निं स्तम्भयति स आदित्यं स्तम्भयति स सोमं स्तम्भयति स उदकं स्तम्भयति स सर्वान्देवान्स्तम्भयति स सर्वान्ग्रहान्स्तम्भयति स विषं स्तम्भयति स विषं स्तम्भयति ॥ २ ॥ य एतद्बृहज्जाबालं नित्यमधीते स मृत्युं तरति स पाप्मानं तरति स ब्रह्महत्यां तरति स भ्रूणहत्यां तरति स वीरहत्यां तरति स सर्वहत्यां तरति स संसारं तरति स सर्वं तरति स सर्वं तरति ॥ ३ ॥ य एतद्बृहज्जाबालं नित्यमधीते स भूर्लोकं जयति स भुवर्लोकं जयति स सुवर्लोकं जयति स महर्लोकं जयति स जनोलोकं जयति स तपोलोकं जयति स सत्यलोकं जयति स सर्वांल्लोकाञ्जयति स सर्वांल्लोकाञ्जयति ॥ ४ ॥ य एतद्बृहज्जाबालं नित्यमधीते स ऋचोऽधीते स यजूंष्यधीते स सामान्यधीते सोऽथर्वणमधीते सोऽङ्गिरसमधीते स शाखा अधीते स कल्पानधीते स नाराशंसीरधीते स पुराणान्यधीते स ब्रह्मप्रणवमधीते स ब्रह्मप्रणवमधीते ॥ ५ ॥ अनुपनीतशतमेकमेकेनोपनीतेन तत्सममुपनीतशतमेकमेकेन गृहस्थेन तत्समं गृहस्थशतमेकमेकेन वानप्रस्थेन तत्समं वानप्रस्थशतमेकमेकेन यतिना तत्समं यतीनां तु शतं पूर्णमेकमेकेन रुद्रजापकेन तत्समं रुद्रजापकशतमेकमेकेन अथर्वशिरःशिखाध्यापकेन तत्सममथर्वशिरःशिखाध्यापकशतमेकमेकेन बृहज्जाबालोपनिषदध्यापकेन तत्समं तद्वा एतत्परं धाम बृहज्जाबालोपनिषज्जपशीलस्य यत्र न सूर्यस्तपति यत्र न वायुर्वाति यत्र न चन्द्रमा भाति यत्र न नक्षत्राणि भान्ति यत्र नाग्निर्दहति यत्र न मृत्युः प्रविशति यत्र न दुःखानि प्रविशन्ति सदानन्दं परमानन्दं शान्तं शाश्वतं सदाशिवं ब्रह्मादिवन्दितं योगिध्येयं परं पदं यत्र गत्वा न निवर्तन्ते योगिनः। तदेतदृचाभ्युक्तम्—तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते। विष्णोर्यत्परमं पदम् ॥ ॐ सत्यमित्युपनिषत् ॥ ६ ॥

इति श्रीबृहज्जाबालोपनिषत्स्वष्टमं ब्राह्मणम् ॥ ८ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

॥ इत्यथर्ववेदीयबृहज्जाबालोपनिषत्समाप्ता ॥ २७ ॥

# नृसिंहपूर्वतापनीयोपनिषत् ॥ २८ ॥

यत्तुर्योङ्कारराग्रपराभूमिस्थिरवरासनम् ।
प्रतियोगिविनिर्मुक्ततुर्यतुर्यमहं महः ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥ १ ॥

आपो वा इदमासन्सलिलमेव स प्रजापतिरेकः पुष्करपर्णे समभवत्तस्यान्तर्मनसि कामः समवर्ततेदं सृजेयमिति तस्माद्यत्पुरुषो मनसाऽभिगच्छति तद्वाचा वदति तत्कर्मणा करोति तदेषाभ्युक्ता—कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत् । सतो बन्धुमसति निरविन्दन्हृदि प्रतीष्य कवयो मनीषेत्युपैनं तदुपनमति यत्कामो भवति स तपोऽतप्यत स तपस्तप्त्वा स एतं मन्त्रराजं नारसिंहमानुष्टुभमपश्यत्तेन वै सर्वमिदमसृजत यदिदं किंच तस्मात्सर्वमिदमानुष्टुभमित्याचक्षते यदिदं किंचानुष्टुभो वा इमानि भूतानि जायन्तेऽनुष्टुभा जातानि जीवन्त्यनुष्टुभं प्रयन्त्यभिसंविशन्ति तस्यैषा भवत्यनुष्टुप्प्रथमा भवत्यनुष्टुबुत्तमा भवति वाग्वा अनुष्टुब्वाचैव प्रयन्ति वाचैवोद्यन्ति परमा वा एषा छन्दसां यदनुष्टुबिति ॥ १ ॥ ससागरां सपर्वतां सप्तद्वीपां वसुंधरां तत्साम्नः प्रथमं पादं जानीयाद्यक्षगन्धर्वाप्सरोगणसेवितमन्तरिक्षं तत्साम्नो द्वितीयं पादं जानीयाद्वसुरुद्रादित्यैः सर्वैर्देवैः सेवितं दिवं तत्साम्नस्तृतीयं पादं जानीयाद्ब्रह्मस्वरूपं निरञ्जनं परमव्योम्निकं तत्साम्नश्चतुर्थं पादं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । ऋग्यजुःसामाथर्वाणश्चत्वारो वेदाः साङ्गाः सशाखाश्चत्वारः पादा भवन्ति । किं ध्यानं किं दैवतं कान्यङ्गानि कानि दैवतानि किं छन्दः क ऋषिरिति ॥ २ ॥ स होवाच प्रजापतिः स यो ह वै तत्सावित्रस्याष्टाक्षरं पदं श्रियाऽभिषिक्तं तत्साम्नोऽङ्गं वेद, श्रिया हैवाभिषिच्यते सर्वे वेदाः प्रणवादिकास्तं प्रणवं तत्साम्नोऽङ्गं वेद, स त्रींल्लोकाञ्जयति चतुर्विंशत्यक्षरा महालक्ष्मीर्यजुस्तत्साम्नोऽङ्गं वेद, स आयुर्यशःकीर्तिज्ञानैश्वर्यवान्भवति, तस्मादिदं साङ्गं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति, सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्राय नेच्छन्ति, द्वात्रिंशदक्षरं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति, सावित्रीं लक्ष्मीं यजुः प्रणवं यदि जानीयात्स्त्रीशूद्रः स मृतोऽधो गच्छति तस्मात्सर्वदा नाचष्टे यद्याचष्टे स आचार्यस्तेनैव मृतोऽधो गच्छति ॥ ३ ॥ स होवाच प्रजापतिरग्निर्वै वेदा इदं सर्वं विश्वानि भूतानि प्राणा वा इन्द्रियाणि पशवोऽन्नममृतं सम्राट्स्वराड्विराट्तत्साम्नः प्रथमं पादं जानीयादृग्यजुःसामाथर्वरूपः सूर्योऽन्तरादित्ये हिरण्मयः पुरुषस्तत्साम्नो द्वितीयं

पादं जानीयाद्य ओषधीनां प्रभवति तारापतिः सोमस्तत्साम्नस्तृतीयं पादं जानीयात्स ब्रह्मा स शिवः स हरिः स इन्द्रः सोऽग्निः सोऽक्षरः परमः स्वराट् तत्साम्नश्चतुर्थं पादं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । ॐ उग्रं प्रथमस्याद्यं ज्वलं द्वितीयस्याद्यं नृसिं तृतीयस्याद्यं मृत्युं चतुर्थस्याद्यं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति, तस्मादिदं साम यत्र कुत्रचिन्नाचष्टे यदि दातुमपेक्षते पुत्राय शुश्रूषवे दास्यत्यन्यस्मै शिष्याय चेति ॥ ४ ॥ क्षीरोदार्णवशायिनं नृकेसरिं योगिध्येयं परमं पदं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति, वीरं प्रथमस्यार्धान्त्यं तंसं द्वितीयस्यार्धान्त्यं हंभी तृतीयस्यार्धान्त्यं मृत्युं चतुर्थस्यार्धान्त्यं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति, तस्मादिदं साम येन केनचिदाचार्यमुखेन यो जानीते स तेनैव शरीरेण संसारान्मुच्यते मोचयति मुमुक्षुर्भवति जपात्तेनैव शरीरेण देवतादर्शनं करोति, तस्मादिदमेव मुख्यं द्वारं कलौ नान्येषां भवति, तस्मादिदं साङ्गं साम जानीयाद्यो जानीते स मुमुक्षुर्भवति ॥ ५ ॥ ॐ ऋतं सत्यं परं ब्रह्म पुरुषं नृकेसरिविग्रहम् । कृष्णपिङ्गलमूर्ध्वरेतं विरूपाक्षं शंकरं नीललोहितमुमापतिं पशुपतिं पिनाकिनं ह्यमितद्युतिमीशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्यो यजुर्वेदवाच्यस्तं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । महा प्रथमान्तार्धस्याद्यम् । वितो द्वितीयान्तार्धस्याद्यं, षणं तृतीयान्तार्धस्याद्यं, नमा चतुर्थान्तार्धस्याद्यं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । तस्मादिदं सच्चिदानन्दमयं परं ब्रह्म तमेवं विद्वानमृत इह भवति । तस्मादिदं साङ्गं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति ॥ ६ ॥ विश्वसृज एतेन वै विश्वमिदमसृजन्त यद्विश्वमसृजन्त तस्माद्विश्वसृजो विश्वमेनानानु प्रजायते ब्रह्मणः सायुज्यं सलोकतां यन्ति तस्मादिदं साङ्गं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । विष्णुं प्रथमस्यान्त्यं मुखं द्वितीयस्यान्त्यं भद्रं तृतीयस्यान्त्यं म्यहं चतुर्थस्यान्त्यं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । योऽसौ सोऽवेदयदिदं किं चात्मनि ब्रह्मण्यानुष्टुभं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । स्त्रीपुंसोर्वा य इहैव स्थातुमपेक्षते स सर्वैश्वर्यं ददाति यत्र कुत्रापि म्रियते देहान्ते देवः परं ब्रह्म तारकं व्याचष्टे, येनासावमृती भूत्वा सोऽमृतत्वं च गच्छति । तस्मादिदं साममध्यगं जपति तस्मादिदं सामाङ्गं प्रजापतिस्तस्मादिदं सामाङ्गं प्रजापतिर्य एवं वेदेति

महोपनिषत् । य एतां महोपनिषदं वेद स कृतपुरश्चरणोऽपि महाविष्णुर्भवति महाविष्णुर्भवतीति ॥ ७ ॥

इत्याथर्वणीयनृसिंहपूर्वतापनीयोपनिषत्सु प्रथमोपनिषत्समाप्ता ॥ १ ॥

देवा ह वै मृत्योः पाप्मभ्यः संसाराच्चाबिभयुस्ते प्रजापतिमुपाधावंस्तेभ्य एतं मन्त्रराजं नारसिंहमानुष्टुभं प्रायच्छत्तेन वै सर्वे मृत्युमजयन्सर्वे पाप्मानमतरन्संसाराच्चातरंस्तस्माद्यो मृत्योः पाप्मभ्यः संसाराच्च विभीयात्स एवं मन्त्रराजं नारसिंहमानुष्टुभं प्रतिगृह्णीयात्स मृत्युं जयति स पाप्मानं तरति स संसारं तरति तस्य ह वै प्रणवस्य या पूर्वा मात्रा पृथिव्यकारः स ऋग्भिर्ऋग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यः स साम्नः प्रथमः पादो भवति, द्वितीयाऽन्तरिक्षं स उकारः स यजुर्भिर्यजुर्वेदो विष्णू रुद्रास्त्रिष्टुब्दक्षिणाग्निः स साम्नो द्वितीयः पादो भवति, तृतीया द्यौः स मकारः स सामभिः सामवेदो रुद्रा आदित्या जगत्याहवनीयः स साम्नस्तृतीयः पादो भवति, याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा सोमलोक ओंकारः सोऽथर्वणैर्मन्त्रैरथर्ववेदः संवर्तकोऽग्निर्मरुतो विराडेक ऋषिर्भास्वती सा साम्नश्चतुर्थः पादो भवति ॥ १ ॥ अष्टाक्षरः प्रथमः पादो भवत्यष्टाक्षरास्त्रयः पादा भवन्ति, एवं द्वात्रिंशदक्षराणि संपद्यन्ते द्वात्रिंशदक्षरा वा अनुष्टुब्भवति, अनुष्टुभा सर्वमिदं सृष्टमनुष्टुभा सर्वमुपसंहृतं तस्य हि पञ्चाङ्गानि भवन्ति, चत्वारः पादाश्चत्वार्यङ्गानि भवन्ति, सप्रणवं सर्वं पञ्चमं भवति । ॐ हृदयाय नमः । ॐ शिरसे स्वाहा । ॐ शिखायै वषट् । ॐ कवचाय हुम् । ॐ अस्त्राय फडिति प्रथमं प्रथमेन युज्यते द्वितीयं द्वितीयेन तृतीयं तृतीयेन चतुर्थं चतुर्थेन पञ्चमं पञ्चमेन व्यतिषक्ता वा इमे लोकास्तस्माद्व्यतिषक्तान्यङ्गानि भवन्त्योमित्येतदक्षरमिदं सर्वं तस्मात्प्रत्यक्षरमुभयत ओंकारो भवतीत्यक्षराणां न्यासमुपदिशन्ति ब्रह्मवादिनः ॥ २ ॥ तस्य ह वा उग्रं प्रथमं स्थानं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति, वीरं द्वितीयं स्थानं महाविष्णुं तृतीयं ज्वलन्तं चतुर्थं सर्वतोमुखं पञ्चमं नृसिंहं षष्ठं भीषणं सप्तमं भद्रमष्टमं मृत्युमृत्युं नवमं नमामि दशममहमित्येकादशं स्थानं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । एकादशपदा वा अनुष्टुब्भवत्यनुष्टुभा सर्वमिदं सृष्टमनुष्टुभा सर्वमुपसंहृतं तस्मात्सर्वमिदमानुष्टुभं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति ॥ ३ ॥ देवा ह वै प्रजापतिमब्रुवन्नथ कस्मादुच्यत

उग्रमिति, स होवाच प्रजापतिर्यस्मात्स्वमहिम्ना सर्वाँल्लोकान्सर्वान्देवान्सर्वानात्मनः सर्वाणि भूतान्युद्गृह्णात्यजस्रं सृजति विसृजति विवासयत्युद्ग्राह्यत उद्गृह्यते । स्तुहि श्रुतं गर्तसदं युवानं मृगं नभीमसुपहन्तुमुग्रम् । मृडा जरित्रे सिंह स्तवानो अन्यं ते अस्मन्निवपन्तु सेनाः । तस्मादुच्यत उग्रमिति । अथ कस्मादुच्यते वीरमिति यस्मात्स्वमहिम्ना सर्वाँल्लोकान्सर्वान्देवान्सर्वानात्मनः सर्वाणि भूतानि विरमति विरामयत्यजस्रं सृजति विसृजति वासयति । यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः । तस्मादुच्यते वीरमिति । अथ कस्मादुच्यते महाविष्णुमिति । यः सर्वाँल्लोकान्व्याप्नोति व्यापयति स्नेहो यथा पललपिण्डमोतप्रोतमनुप्राप्तं व्यतिषक्तो व्याप्यते व्यापयते । यस्मान्न जातः परोऽन्योऽस्ति य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया संविदानस्त्रीणि ज्योतींषि सचते स षोडशीति । तस्मादुच्यते महाविष्णुमिति । अथ कस्मादुच्यते ज्वलन्तमिति यस्मात्स्वमहिम्ना सर्वाँल्लोकान्सर्वान्देवान्सर्वानात्मनः सर्वाणि भूतानि स्वतेजसा ज्वलति ज्वालयति ज्वाल्यते ज्वालयते । सविता प्रसविता दीप्तो दीपयन्दीप्यमानः । ज्वलञ्ज्वलिता तपन्वितपन्संतपन्रोचनो रोचमानः शोभनः शोभमानः कल्याणः । तस्मादुच्यते ज्वलन्तमिति । अथ कस्मादुच्यते सर्वतोमुखमिति । यस्मादनिन्द्रियोऽपि सर्वतः पश्यति सर्वतः शृणोति सर्वतो गच्छति सर्वत आदत्ते स सर्वगः सर्वतस्तिष्ठति । एकः पुरस्ताद्य इदं बभूव यतो बभूव भुवनस्य गोपाः । यमप्येति भुवनं सांपराये नमामि तमहं सर्वतोमुखम् । तस्मादुच्यते सर्वतोमुखमिति । अथ कस्मादुच्यते नृसिंहमिति । यस्मात्सर्वेषां भूतानां ना वीर्यतमः श्रेष्ठतमश्च सिंहो वीर्यतमः श्रेष्ठतमश्च तस्मान्नृसिंह आसीत्परमेश्वरो जगद्धितं वा एतद्रूपमक्षरं भवति । प्र तद्विष्णुः स्तवते वीर्याय मृगो नभीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधि क्षियन्ति भुवनानि विश्वा । तस्मादुच्यते नृसिंहमिति । अथ कस्मादुच्यते भीषणमिति । यस्माद्यस्य रूपं दृष्ट्वा सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि भीत्या पलायन्ते स्वयं यतः कुतश्चिन्न बिभेति । भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः । तस्मादुच्यते भीषणमिति । अथ कस्मादुच्यते भद्रमिति । यस्मात्स्वयं भद्रो भूत्वा सर्वदा भद्रं ददाति रोचनो रोचमानः शोभनः शोभमानः कल्याणः । भद्रं कर्णेभिः

शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः। तस्मादुच्यते भद्रमिति। अथ कस्मादुच्यते मृत्युमृत्युमिति। यस्मात्स्वमहिम्ना स्वभक्तानां स्मृत एव मृत्युमपमृत्युं च मारयति। य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः। यस्य च्छायामृतं यो मृत्युमृत्युः कस्मै देवाय हविषा विधेम। तस्मादुच्यते मृत्युमृत्युमिति। अथ कस्मादुच्यते नमामीति। यस्माद्यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च। प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थम्। यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे। तस्मादुच्यते नमामीति। अथ कस्मादुच्यतेऽहमिति। अहमस्मि प्रथमजा ऋता३स्य। पूर्वं देवेभ्यो अमृतस्य ना३भायि। यो मा ददाति स इदेव मा३वाः। अहमन्नमन्नमदन्तमा३द्मि। अहं विश्वं भुवनमभ्यभवा३म्। सुवर्न ज्योतीः। य एवं वेदेत्युपनिषत् ॥ ४ ॥

इत्याथर्वणीयनृसिंहपूर्वतापनीयोपनिषत्सु द्वितीयोपनिषत्समाप्ता ॥ २ ॥

देवा ह वै प्रजापतिमब्रुवन्नानुष्टुभस्य मन्त्रराजस्य नारसिंहस्य शक्तिं बीजं च नो ब्रूहि भगव इति। स होवाच प्रजापतिर्माया वा एषा नारसिंही सर्वमिदं सृजति सर्वमिदं रक्षति सर्वमिदं संहरति। तस्मान्मायामेतां शक्तिं विद्याद्य एतां मायां शक्तिं वेद स पाप्मानं तरति सोऽमृतत्वं च गच्छति महतीं श्रियमश्नुते मीमांसन्ते ब्रह्मवादिनो ह्रस्वा वा दीर्घा वा प्लुता वेति। यदि ह्रस्वा भवति सर्वं पाप्मानं दहत्यमृतत्वं च गच्छति, यदि दीर्घा भवति महतीं श्रियमाप्नुयादमृतत्वं च गच्छति, यदि प्लुता भवति ज्ञानवान्भवत्यमृतत्वं च गच्छति। तदेतदृषिणोक्तं निदर्शनम्—सईं पाहि य ऋजीषी तरुत्रः श्रियं लक्ष्मीमौपलामम्बिकां गां षष्ठीं च यामिन्द्रसेनेत्युत आहुस्तां विद्यां ब्रह्मयोनिं सरूपां तामिहायुषे शरणं प्रपद्ये। सर्वेषां वा एतद्भूतानामाकाशः परायणं सर्वाणि ह वा इमानि भूतान्याकाशादेव जायन्ते। आकाशादेव जातानि जीवन्त्याकाशं प्रयन्त्यभिसंविशन्ति। तस्मादाकाशं बीजं विद्यात्तदेतदृषिणोक्तं निदर्शनम्—हँसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्। य एवं वेदेति महोपनिषत् ॥ १ ॥

इत्याथर्वणीयनृसिंहपूर्वतापनीयोपनिषत्सु तृतीयोपनिषत्समाप्ता ॥ ३ ॥

देवा ह वै प्रजापतिमब्रुवन्नानुष्टुभस्य मन्त्रराजस्य नारसिंहस्याङ्गमन्त्रान्नो ब्रूहि भगव इति । स होवाच प्रजापतिः प्रणवं सावित्रीं यजुर्लक्ष्मीं नृसिंहगायत्रीमित्यङ्गानि जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोंकार एव यच्चान्यत्त्रिकालातीतं तदप्योंकार एव सर्वं ह्येतद्ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पाज्जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः स्वप्नस्थानेऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक्तैजसो द्वितीयः पादो यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति तत्सुषुप्तं सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक्चेतोमुखः प्राज्ञस्तृतीयः पाद एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानां न बहिःप्रज्ञं नान्तःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनमदृष्टमव्यवहार्यमग्राह्यमलक्षणमलिङ्गमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥ १ ॥ अथ सावित्री गायत्री या यजुषा प्रोक्ता तया सर्वमिदं व्याप्तं घृणिरिति द्वे अक्षरे सूर्य इति त्रीण्यादित्य इति त्रीण्येतद्वै सावित्रस्याष्टाक्षरं पदं श्रियाभिषिक्त य एवं वेद श्रिया हैवाभिषिच्यते । तदेतदृचाऽभ्युक्तम्—ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासत इति । न ह वा एतस्यर्चा न यजुषा न साम्नाऽर्थोऽस्ति यः सावित्रीं वेदेति । ॐ भूर्लक्ष्मीर्भुवर्लक्ष्मीः सुवःकालकर्णी । तन्नो महालक्ष्मीः प्रचोदयादित्येषा वै महालक्ष्मीर्यजुर्गायत्री चतुर्विंशत्यक्षरा भवति गायत्री वा इदं सर्वं यदिदं किंच तस्माद्य एतां महालक्ष्मीं याजुषीं वेद महतीं श्रियमश्नुते । ॐ नृसिंहाय विद्महे वज्रनखाय धीमहि । तन्नः सिंहः प्रचोदयादित्येषा वै नृसिंहगायत्री वेदानां देवानां निदानं भवति य एवं वेद स निदानवान्भवति ॥ २ ॥ देवा ह वै प्रजापतिमब्रुवन्नथ कैर्मन्त्रैर्देवः स्तुतः प्रीतो भवति स्वात्मानं दर्शयति तन्नो ब्रूहि भगव इति । स होवाच प्रजापतिः । ॐ उ ओं यो वै नृसिंहो देवो भगवान्यश्च ब्रह्मा तस्मै वै नमो नमः १ । ॐ ग्रं ॐ यो वै नृसिंहो देवो भगवान्यश्च विष्णुस्तस्मै वै नमो नमः २ । ॐ वीं ॐ यो वै नृसिंहो देवो भगवान्यश्च महेश्वरस्तस्मै वै नमो नमः ३ । ॐ रं ॐ यो वै नृसिंहो देवो भगवान्यश्च पुरुषस्तस्मै वै नमो नमः ४ । ॐ मं

ॐ यो वै नृसिंहो देवो भगवान्यश्चेश्वरस्तस्मै वै नमो नमः ५। ॐ हां ॐ यो वै नृसिंहो देवो भगवान्या सरस्वती तस्मै वै नमो नमः ६। ॐ विं ॐ यो वै नृसिंहो देवो भगवान्या श्रीस्तस्मै वै नमो नमः ७। ॐ ष्णुं ॐ यो वै नृसिंहो देवो भगवान्या गौरी तस्मै वै नमो नमः ८। ॐ ज्वं ॐ यो वै नृसिंहो देवो भगवान्या प्रकृतिस्तस्मै वै नमो नमः ९। ॐ लं ॐ यो वै नृसिंहो देवो भगवान्या विद्या तस्मै वै नमो नमः १०। ॐ तं ॐ यो वै नृसिंहो देवो भगवान्यश्चोंकारस्तस्मै वै नमो नमः ११। ॐ सं ॐ यो वै नृसिंहो देवो भगवान्याश्चतस्रोऽर्धमात्रास्तस्मै वै नमो नमः १२। ॐ वं ॐ यो वै नृसिंहो देवो भगवान्ये च वेदाः साङ्गाः सशाखास्तस्मै वै नमो नमः १३। ॐ तों ॐ यो वै नृसिंहो देवो भगवान्ये पञ्चाग्नयस्तस्मै वै नमो नमः १४। ॐ मुं ॐ यो वै नृसिंहो देवो भगवान्याः सप्त व्याहृतयस्तस्मै वै नमो नमः १५। ॐ खं ॐ यो वै नृसिंहो देवो भगवान्ये चाष्टौ लोकपालास्तस्मै वै नमो नमः १६। ॐ नृं ॐ यो वै नृसिंहो देवो भगवान्ये चाष्टौ वसवस्तस्मै वै नमो नमः १७। ॐ सिं ॐ यो वै नृसिंहो देवो भगवान्ये च रुद्रास्तस्मै वै नमो नमः १८। ॐ हं ॐ यो वै नृसिंहो देवो भगवान्ये चादित्यास्तस्मै वै नमो नमः १९। ह्रीं भिं ॐ यो वै नृसिंहो देवो भगवान्ये चाष्टौ ग्रहास्तस्मै वै नमो नमः २०। ॐ षं ॐ यो वै नृसिंहो देवो भगवान्यानि पञ्च महाभूतानि तस्मै वै नमो नमः २१। ॐ णं ॐ यो वै नृसिंहो देवो भगवान्यश्च कालस्तस्मै वै नमो नमः २२। ॐ भं ॐ यो वै नृसिंहो देवो भगवान्यश्च मनुस्तस्मै वै नमो नमः २३। ॐ द्रं ॐ यो वै नृसिंहो देवो भगवान्यश्च मृत्युस्तस्मै वै नमो नमः २४। ॐ मृं ॐ यो वै नृसिंहो देवो भगवान्यश्च यमस्तस्मै वै नमो नमः २५। ॐ त्युं ॐ यो वै नृसिंहो देवो भगवान्यश्चान्तकस्तस्मै वै नमो नमः २६। ॐ मृं ॐ यो वै नृसिंहो देवो भगवान्यश्च प्राणस्तस्मै वै नमो नमः २७। ॐ त्युं ॐ यो वै नृसिंहो देवो भगवान्यश्च सूर्यस्तस्मै वै नमो नमः २८। ॐ नं ॐ यो वै नृसिंहो देवो भगवान्यश्च सोमस्तस्मै वै नमो नमः २९। ॐ मां ॐ यो वै नृसिंहो देवो भगवान्यश्च विराट्पुरुषस्तस्मै वै नमो नमः ३०। ॐ म्यं ॐ यो वै नृसिंहो देवो भगवान्यश्च जीवस्तस्मै वै नमो नमः ३१। ॐ हं ॐ यो वै नृसिंहो दैवो भगवान्यश्च सर्वं तस्मै वै नमो नमः ॥ ३२ ॥ इति तान्प्रजा-

पतिरब्रवीदेतैर्द्वात्रिंशन्मन्त्रैर्नित्यं देवं स्तुवते ततो देवः प्रीतो भवति स्वात्मानं दर्शयति । तस्माद्य एतैर्मन्त्रैर्नित्यं देवं स्तौति स देवं पश्यति स सर्वं पश्यति सोऽमृतत्वं च गच्छति य एवं वेदेति महोपनिषत् ॥ ३ ॥

इत्याथर्वणीयनृसिंहपूर्वतापनीयोपनिषत्सु चतुर्थोपनिषत्समाप्ता ॥ ४ ॥

देवा ह वै प्रजापतिमब्रुवन्महाचक्रं नाम चक्रं नो ब्रूहि भगव इति सार्वकामिकं मोक्षद्वारं यद्योगिन उपदिशन्ति स होवाच प्रजापतिः षडरं वा एतत्सुदर्शनं महाचक्रं तस्मात्षडरं भवति षट्पत्रं चक्रं भवति षड् वा ऋतव ऋतुभिः संमितं भवति मध्ये नाभिर्भवति नाभ्यां वा एतेऽराः प्रतिष्ठिताः । मायया वा एतत्सर्वं वेष्टितं भवति नात्मानं माया स्पृशति तस्मान्मायया बहिर्वेष्टितं भवति । अथाष्टारमष्टपत्रं चक्रं भवत्यष्टाक्षरा वै गायत्री गायत्र्या संमितं भवति बहिर्मायया वेष्टितं भवति क्षेत्रं क्षेत्रं वा मायैषा संपद्यते । अथ द्वादशारं द्वादशपत्रं चक्रं भवति द्वादशाक्षरा वै जगती जगत्या संमितं भवति बहिर्मायया वेष्टितं भवति । अथ षोडशारं षोडशपत्रं चक्रं भवति षोडशकलो वै पुरुषः पुरुष एवेदं सर्वं पुरुषेण संमितं भवति मायया बहिर्वेष्टितं भवति । अथ द्वात्रिंशदरं द्वात्रिंशत्पत्रं चक्रं भवति द्वात्रिंशदक्षरा वा अनुष्टुबनुष्टुभा संमितं भवति बहिर्मायया वेष्टितं भवत्यरैर्वा एतत्सुबद्धं भवति वेदा वा एतेऽराः पत्रैर्वा एतत्सर्वतः परिक्रामति छन्दांसि वै पत्राणि ॥ १ ॥ तदेवं चक्रं सुदर्शनं महाचक्रं तस्य मध्ये नाभ्यां तारकं भवति यदक्षरं नारसिंहमेकाक्षरं तद्भवति षट्सु पत्रेषु षडक्षरं सुदर्शनं भवत्यष्टसु पत्रेष्वष्टाक्षरं नारायणं भवति द्वादशसु पत्रेषु द्वादशाक्षरं वासुदेवं भवति । षोडशसु पत्रेषु मातृकाद्याः सबिन्दुकाः षोडश कला भवन्ति । द्वात्रिंशत्सु पत्रेषु द्वात्रिंशदक्षरं मन्त्रराजं नारसिंहमानुष्टुभं भवति । तद्वा एतत्सुदर्शनं महाचक्रं सार्वकामिकं मोक्षद्वारमृङ्मयं यजुर्मयं साममयं ब्रह्ममयममृतमयं भवति । तस्य पुरस्ताद्वसव आसते रुद्रा दक्षिणत आदित्याः पश्चाद्विश्वे देवा उत्तरतो ब्रह्मविष्णुमहेश्वरा नाभ्यां सूर्याचन्द्रमसौ पार्श्वयोः । तदेतदृचाऽभ्युक्तम्—ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः । यस्तं न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासत इति । तदेतन्महाचक्रं बालो वा युवा वा वेद स महान्भवति स गुरुर्भवति स सर्वेषां मन्त्राणामुपदेष्टा भवत्यनुष्टुभा होमं कुर्यादनुष्टुभार्चनं

तदेतद्रक्षोघ्नं मृत्युतारकं गुरुतो लब्धं कण्ठे बाहौ शिखायां वा बध्नीत सप्तद्वीपवती भूमिर्दक्षिणार्थं नावकल्पते तस्माच्छ्रद्धया यां कांचिद्दद्यात्सा दक्षिणा भवति ॥ २ ॥ देवा ह वै प्रजापतिमब्रुवन्नानुष्टुभस्य मन्त्रराजस्य फलं नो ब्रूहि भगव इति स होवाच प्रजापतिर्य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आदित्यपूतो भवति स सोमपूतो भवति स सत्यपूतो भवति स ब्रह्मपूतो भवति स विष्णुपूतो भवति स रुद्रपूतो भवति स वेदपूतो भवति स सर्वपूतो भवति स सर्वपूतो भवति ॥

इत्याथर्वणीयनृसिंहपूर्वतापनीयोपनिषत्सु प्रथमोऽध्यायः ॥ १ ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स मृत्युं तरति स पाप्मानं तरति स ब्रह्महत्यां तरति स भ्रूणहत्यां तरति स वीरहत्यां तरति स सर्वं तरति स सर्वं तरति ॥

इत्याथर्वणीयनृसिंहपूर्वतापनीयोपनिषत्सु द्वितीयोऽध्यायः ॥ २ ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं सोऽग्निं स्तम्भयति स वायुं स्तम्भयति स आदित्यं स्तम्भयति स सोमं स्तम्भयति स उदकं स्तम्भयति स सर्वान्देवान्स्तम्भयति स सर्वान्ग्रहान्स्तम्भयति स विषं स्तम्भयति स विषं स्तम्भयति ॥

इत्याथर्वणीयनृसिंहपूर्वतापनीयोपनिषत्सु तृतीयोऽध्यायः ॥ ३ ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स भूर्लोकं जयति स भुवर्लोकं जयति स स्वर्लोकं जयति म महर्लोकं जयति स जनोलोकं जयति स तपोलोकं जयति स सत्यलोकं जयति स सर्वलोकं जयति स सर्वलोकं जयति ॥

इत्याथर्वणीयनृसिंहपूर्वतापनीयोपनिषत्सु चतुर्थोऽध्यायः ॥ ४ ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स मनुष्यानाकर्षयति स देवानाकर्षयति स नागानाकर्षयति स यक्षानाकर्षयति स ग्रहानाकर्षयति स सर्वानाकर्षयति स सर्वानाकर्षयति ॥

इत्याथर्वणीयनृसिंहपूर्वतापनीयोपनिषत्सु पञ्चमोऽध्यायः ॥ ५ ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निष्टोमेन यजते स उक्थ्येन यजते स षोडशिना यजते स वाजपेयेन यजते सोऽतिरात्रेण यजते सोऽप्तोर्यामेण यजते सोऽश्वमेधेन यजते स सर्वैः क्रतुभिर्यजते स सर्वैः क्रतुभिर्यजते ॥

इत्याथर्वणीयनृसिंहपूर्वतापनीयोपनिषत्सु षष्ठोऽध्यायः ॥ ६ ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स ऋचोऽधीते स यजूꣳष्यधीते स सामान्यधीते सोऽथर्वाणमधीते सोऽङ्गिरसमधीते स शाखा अधीते स पुराणान्यधीते स कल्पानधीते स गाथा अधीते स नाराशंसीरधीते स प्रणवमधीते यः प्रणवमधीते स सर्वमधीते स सर्वमधीते ॥

इत्याथर्वणीयनृसिंहपूर्वतापनीयोपनिषत्सु सप्तमोऽध्यायः ॥ ७ ॥

अनुपनीतशतमेकमेकेनोपनीतेन तत्समम्रुपनीतशतमेकमेकेन गृहस्थेन तत्समं गृहस्थशतमेकमेकेन वानप्रस्थेन तत्समं वानप्रस्थशतमेकमेकेन यतिना तत्समं यतीनां च शतं पूर्णं रुद्रजापकेन तत्समं रुद्रजापिशतमेकमेकेनाथर्वशिरःशिखाध्यायकेन तत्सममथर्वशिरःशिखाध्यायकशतमेकमेकेन मन्त्रराजजापकेन तत्समं तद्वा एतत्परमं धाम मन्त्रराजाध्यायकस्य यत्र सूर्यो न तपति यत्र न वायुर्वाति यत्र न चन्द्रमास्तपति यत्र न नक्षत्राणि भान्ति यत्र नाग्निर्दहति यत्र न मृत्युः प्रविशति यत्र न दुःखं सदानन्दं परमानन्दं शाश्वतं शान्तं सदाशिवं ब्रह्मादिवन्दितं योगिध्येयं यत्र गत्वा न निवर्तन्ते योगिनः । तदेतदृचाभ्युक्तम्—तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदमिति तदेतन्निष्कामस्य भवति तदेतन्निष्कामस्य भवति ॥ ३ ॥

इत्याथर्वणीयनृसिंहपूर्वतापनीयोपनिषत्स्वष्टमोऽध्यायः ॥ ८ ॥

इत्याथर्वणीयनृसिंहपूर्वतापनीयोपनिषत्समाप्ता ॥ ५ ॥

---

# नृसिंहोत्तरतापनीयोपनिषत् ॥ २९ ॥

ॐ भद्रं कर्णेभिः शृणुयाम० ॥ १ ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः० ॥ २ ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

देवा ह वै प्रजापतिमब्रुवन्नणोरणीयांसमिममात्मानमोंकारं नो व्याचक्ष्वेति तथेत्योमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोंकार एव यच्चान्यत्त्रिकालातीतं तदप्योंकार एव । सर्वं ह्येतद्ब्रह्मायमात्मा ब्रह्म तमेतमात्मानमोमिति ब्रह्मणैकीकृत्य ब्रह्म चात्मनोमित्येकीकृत्य तदेकमजरममरममृतमभयमोमित्यनुभूय तस्मिन्निदं सर्वं त्रिशरीरमारोप्य तन्मयं हि तदेवेति संहरेदोमिति तं वा एतं त्रिशरीरमात्मानं त्रिशरीरं परं ब्रह्मानुसंदध्यात्स्थूलत्वात्स्थूलभुक्त्वाच्च सूक्ष्मत्वात्सूक्ष्मभुक्त्वाच्चैक्यादानन्द-

भोगाच्च सोऽयमात्मा चतुष्पाज्जागरितस्थानः स्थूलप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुक्चतुरात्मा विश्वो वैश्वानरः प्रथमः पादः स्वप्नस्थानः सूक्ष्मप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः सूक्ष्मभुक्चतुरात्मा तैजसो हिरण्यगर्भो द्वितीयः पादो यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति तत्सुषुप्तम् । सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक्चेतोमुखश्चतुरात्मा प्राज्ञ ईश्वरस्तृतीयः पाद एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानां त्रयमप्येतत्सुषुप्तं स्वप्नं मायामात्रं चिदेकरसो ह्ययमात्माऽथ चतुर्थश्चतुरात्मा तुरीयावसितत्वादेकैकस्योतानुज्ञात्रनुज्ञाविकल्पैस्त्रयमत्रापि सुषुप्तं स्वप्नं मायामात्रं चिदेकरसो ह्यथायमादेशो न स्थूलप्रज्ञं न सूक्ष्मप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनमदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवं शान्तमद्वैतं चतुर्थं मन्यन्ते स एवात्मा स विज्ञेय ईश्वरग्रासस्तुरीयतुरीयः ॥ १ ॥

इत्याथर्वणीयनृसिंहोत्तरतापनीयोपनिषत्सु प्रथमः खण्डः ॥ १ ॥

तं वा एतमात्मानं जाग्रत्यस्वप्नमसुषुप्तं स्वप्नेऽजाग्रतमसुषुप्तं सुषुप्तेऽजाग्रतमस्वप्नं तुरीयेऽजाग्रतमस्वप्नमसुषुप्तमव्यभिचारिणं नित्यानन्तसदेकरसं ह्येवं चक्षुषो द्रष्टा श्रोत्रस्य द्रष्टा वाचो द्रष्टा मनसो द्रष्टा बुद्धेर्द्रष्टा प्राणस्य द्रष्टा तमसो द्रष्टा सर्वस्य द्रष्टा ततः सर्वस्मादन्यो विलक्षणश्चक्षुषः साक्षी श्रोत्रस्य साक्षी वाचः साक्षी मनसः साक्षी बुद्धेः साक्षी प्राणस्य साक्षी तमसः साक्षी सर्वस्य साक्षी ततोऽविक्रियो महाचैतन्योऽस्मात्सर्वस्मात्प्रियतम आनन्दघनं ह्येवमस्मात्सर्वस्मात्पुरतः सुविभातमेकरसमेवाजरममरममृतमभयं ब्रह्मैवाप्यजयैनं चतुष्पादं मात्राभिरोंकारेण चैकीकुर्याज्जागरितस्थानश्चतुरात्मा विश्वो वैश्वानरश्चतूरूपोऽकार एव चतूरूपो ह्ययमकारः स्थूलसूक्ष्मबीजसाक्षिभिरकाररूपैराप्तेरादिमत्त्वाद्वा स्थूलत्वात्सूक्ष्मत्वाद्बीजत्वात्साक्षित्वाच्चाप्नोति ह वा इदं सर्वमादिश्च भवति य एवं वेद स्वप्नस्थानश्चतुरात्मा तैजसो हिरण्यगर्भश्चतूरूप उकार एव चतूरूपो ह्ययमुकारः स्थूलसूक्ष्मबीजसाक्षिभिरुकाररूपैरुत्कर्षादुभयत्वाद्वा स्थूलत्वात्सूक्ष्मत्वाद्बीजत्वात्साक्षित्वाच्चोत्कर्षति ह वै ज्ञानसंततिं समानश्च भवति य एवं वेद । सुषुप्तस्थानश्चतुरात्मा प्राज्ञ ईश्वरश्चतूरूपो मकार एव चतूरूपो ह्ययं मकारः स्थूलसूक्ष्मबीजसाक्षिभिर्मकाररूपैर्मितेरपीतेर्वा स्थूलत्वात्सूक्ष्म-

त्वाद्वीजत्वात्साक्षित्वाच्च मिनोति ह वा इदं सर्वमपीतिश्च भवति य एवं वेद । मात्रा मात्राः प्रतिमात्राः कुर्यादथ तुरीय ईश्वरग्रासः स्वराट् स्वयमीश्वरः स्वप्रकाशश्चतुरात्मोतानुज्ञात्रनुज्ञाविकल्पैरोतो ह्ययमात्मा यथेदं सर्वमन्तकाले कालाग्निसूर्य उस्रैरनुज्ञाता ह्ययमात्माऽस्य सर्वस्य स्वात्मानं ददातीदं सर्वं स्वात्मानमेव करोति यथा तमः सविताऽनुज्ञैकरसो ह्ययमात्मा चिद्रूप एव यथा दाह्यं दग्ध्वाऽग्निरविकल्पो ह्ययमात्माऽवाङ्मनोगोचरत्वाच्चिद्रूपश्चतूरूप ओंकार एव चतूरूपो ह्ययमोंकार ओतानुज्ञात्रनुज्ञाविकल्पैरोंकाररूपैरात्मैव नामरूपात्मकं हीदं सर्वं तुरीयत्वाच्चिद्रूपत्वाद्वोतत्वादनुज्ञातृत्वादनुज्ञात्वादविकल्परूपत्वाच्चाविकल्परूपं हीदं सर्वं नैव तत्र काचन भिदाऽस्त्यथ तस्यायमादेशोऽमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत ओंकार आत्मैव संविशत्यात्मनात्मानं य एवं वेदैष वीरो नारसिंहेन वानुष्टुभा मन्त्रराजेन तुरीयं विद्यादेष ह्यात्मानं प्रकाशयति सर्वसंहारसमर्थः परिभवासहः प्रभुर्व्याप्तः सदोज्ज्वलोऽविद्याकार्यहीनः स्वात्मबन्धहरः सर्वदा द्वैतरहित आनन्दरूपः सर्वाधिष्ठानसन्मात्रो निरस्ताविद्यातमोमोहोऽहमेवेति तस्मादेवमेवेममात्मानं परं ब्रह्मानुसंदध्यादेष वीरो नृसिंह एव ॥ २ ॥

इत्याथर्वणीयनृसिंहोत्तरतापनीयोपनिषत्सु द्वितीयः खण्डः ॥ २ ॥

तस्य ह वै प्रणवस्य या पूर्वा मात्रा सा प्रथमपादोभयतो भवति । द्वितीया द्वितीयस्य तृतीया तृतीयस्य चतुर्थ्योतानुज्ञात्रनुज्ञाविकल्परूपा तया तुरीयं चतुरात्मानसन्विष्य चतुर्थपादेन च तया तुरीयेणानुचिन्तयन्ग्रसेत्तस्य ह वा एतस्य प्रणवस्य या पूर्वा मात्रा सा पृथिव्यकारः स ऋग्भिर्ऋग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यः सा प्रथमः पादो भवति । भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिर्द्वितीयाऽन्तरिक्षं स उकारः स यजुर्भिर्यजुर्वेदो विष्णुरुद्रास्त्रिष्टुब्दक्षिणाग्निः सा द्वितीयः पादो भवति। भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिस्तृतीया द्यौः स मकारः स सामभिः सामवेदो रुद्रादित्या जगत्या जगत्याहवनीयः सा तृतीयः पादो भवति । भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिर्याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा सोमलोक ओंकारः सोऽथर्वणैर्मन्त्रैरथर्ववेदः संवर्तकोऽग्निर्मरुतो विराडेकऋषिर्भास्वती स्मृता सा चतुर्थः पादो भवति । भवति

च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिर्मात्रा मात्राः प्रतिमात्राः कृत्वोतानुज्ञात्रनुज्ञाविकल्परूपं चिन्तयन्ग्रसेत ज्ञोऽमृतो हुतसंवित्कः शुद्धः संविष्टो निर्विघ्न इममसुनियमेऽनुभूयेहेदं सर्वं दृष्ट्वाऽसुप्रपञ्चहीनोऽथ सकलः साधारोऽमृतमयश्चतुरात्मा सर्वमयश्चतुरात्माऽथ महापीठे सपरिवारं तमेतं चतुःसप्तात्मानं चतुरात्मानं मूलाग्नावग्निरूपं प्रणवं संदध्यात्सप्तात्मानं चतुरात्मानमकारं ब्रह्माणं नाभौ सप्तात्मानं चतुरात्मानमुकारं विष्णुं हृदये सप्तात्मानं चतुरात्मानं मकारं रुद्रं भ्रूमध्ये सप्तात्मानं चतुरात्मानं चतुःसप्तात्मानं चतुरात्मानमोंकारं सर्वेश्वरं द्वादशान्ते । सप्तात्मानं चतुरात्मानं चतुःसप्तात्मानं चतुरात्मानमानन्दामृतरूपमोंकारं षोडशान्ते । अथानन्दामृतेनैतांश्चतुर्धा संपूज्य तथा ब्रह्माणमेव विष्णुमेव रुद्रमेव विभक्तांस्त्रीनेवाविभक्तांस्त्रीनेव लिङ्गरूपानेव च संपूज्योपहारैश्चतुर्धाऽथ लिङ्गान्संहृत्य तेजसा शरीरत्रयं संव्याप्य तदधिष्टानमात्मानं संज्वाल्य तत्तेज आत्मचैतन्यरूपं बलमवष्टभ्य तस्य गुणैरैक्यं संपाद्य महास्थूलं महासूक्ष्मे महासूक्ष्मं महाकारणे च संहृत्य मात्राभिरोतानुज्ञात्रनुज्ञाविकल्परूपं चिन्तयन्ग्रसेत् ॥

इत्याथर्वणीयनृसिंहोत्तरतापनीयोपनिषत्सु तृतीयः खण्डः ॥ ३ ॥

तं वा एतमात्मानं परमं ब्रह्मोंकारं तुरीयोंकाराग्रविद्योतमनुष्टुभा नत्वा प्रसाद्योमिति संहृत्याहमित्यनुसंदध्यादथैतमेवात्मान परमं ब्रह्मोंकारं तुरीयोंकाराग्रविद्योतमेकादशात्मानमात्मानं नारसिंहं नत्वोमिति संहरन्ननुसंदध्यात् । अथैतमेवात्मानं परमं ब्रह्मोंकारं तुरीयोंकाराग्रविद्योतं प्रणवेन संचिन्त्यानुष्टुभा सच्चिदानन्दपूर्णात्मसु नवात्मकं सच्चिदानन्दपूर्णात्मानं परमात्मानं परं ब्रह्म संभाव्याहमित्यात्मानमादाय नमसा ब्रह्मणैकीकुर्यादनुष्टुभैव वैष उ एव ह्येष हि सर्वत्र सर्वदा सर्वात्मा सिंहोऽसौ परमेश्वरोऽसौ हि सर्वत्र सर्वदा सर्वात्मा सन्सर्वमत्ति नृसिंह एवैकल एष तुरीय एष एवोग्र एष एव वीर एष एव महानेष एव विष्णुरेष एव ज्वलन्नेष एव सर्वतोमुख एष एव नृसिंह एष एव भीषण एष एव भद्र एष एव मृत्युमृत्युरेष एव नमाम्येष एवाहमेवं योगारूढो ब्रह्मण्येवानुष्टुभं संदध्यादोंकार इति । तदेतौ श्लोकौ भवतः—संस्तभ्य सिंहं स्वसुतान्गुणर्धान्संयोज्य श्रृङ्गैर्ऋषभस्य हत्वा । वश्यां स्फुरन्तीमसतीं निपीड्य संभक्ष्य सिंहेन स एष वीरः । शृङ्गप्रोतान्पदा स्पृष्ट्वा हत्वा तामग्रसत्स्वयम् । नत्वा च बहुधा दृष्ट्वा नृसिंहः स्वयमुद्बभाविति ॥

इत्याथर्वणीयनृसिंहोत्तरतापनीयोपनिषत्सु चतुर्थः खण्डः ॥ ४ ॥

अथैषो एवाकार आप्ततमार्थ आत्मन्येव नृसिंहे ब्रह्मणि वर्तत एष ह्येवाप्ततम एष हि साक्ष्येष ईश्वरोऽतः सर्वगतो न हीदं सर्वमेष हि व्याप्ततम इदं सर्वं यदयमात्मा मायामात्रमेष एवोग्र एष हि व्याप्ततम एष एव वीर एष हि व्याप्ततम एष एव महानेष हि व्याप्ततम एष एव विष्णुरेष हि व्याप्ततम एष एव ज्वलन्नेष हि व्याप्ततम एष एव सर्वतोमुख एष हि व्याप्ततम एष एव नृसिंह एव हि व्याप्ततम एष एव भीषण एष हि व्याप्ततम एष एव भद्र एष हि व्याप्ततम एष एव मृत्युमृत्युरेष हि व्याप्ततम एष एव नमाम्येष हि व्याप्ततम एव एवाहमेष हि व्याप्ततम आत्मैव नृसिंहो ब्रह्म भवति य एवं वेद । सोऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन्ब्रह्माप्येत्यथैषो एवोकार उत्कृष्टतमार्थ आत्मन्येव नृसिंहे देवे ब्रह्मणि वर्तते । तस्मादेष सत्यस्वरूपो न ह्यन्यदस्त्यमेयमनात्मप्रकाशमेष हि स्वप्रकाशोऽसङ्गोऽन्यन्न वीक्षत आत्माऽतो नान्यप्रथाप्राप्तिरात्ममात्रं ह्येतदुत्कृष्टमेष एवोग्र एष ह्येवोत्कृष्ट एष एव वीर एष ह्येवोत्कृष्ट एष एव महानेष ह्येवोत्कृष्ट एष एव विष्णुरेष ह्येवोत्कृष्ट एष एव ज्वलन्नेष ह्येवोत्कृष्ट एष एव सर्वतोमुख एष ह्येवोत्कृष्ट एष एव नृसिंह एष ह्येवोत्कृष्ट एष एव भीषण एष ह्येवोत्कृष्ट एष एव भद्र एष ह्येवोत्कृष्ट एष एव मृत्युमृत्युरेष ह्येवोत्कृष्ट एष एव नमाम्येष ह्येवोत्कृष्ट एष एवाहमेष ह्येवोत्कृष्टस्तस्मादात्मानमेवैवं जानीयादात्मैव नृसिंहो देवो ब्रह्म भवति य एवं वेद । सोऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते । ब्रह्मैव सन्ब्रह्माप्येत्यथैषो एव मकारो महाविभूत्यर्थ आत्मन्येव नृसिंहे देवे परे ब्रह्मणि वर्तते तस्मादयमनल्पोऽभिन्नरूपः स्वप्रकाशो ब्रह्मैव व्याप्ततम उत्कृष्टतम एतदेव ब्रह्मापि सर्वज्ञं महामायं महाविभूत्येतदेवोग्रमेतद्धि महाविभूत्येतदेव वीरमेतद्धि महाविभूत्येतदेव महदेतद्धि महाविभूत्येतदेव विष्ण्वेतद्धि महाविभूत्येतदेव ज्वलदेतद्धि महाविभूत्येतदेव सर्वतोमुखमेतद्धि महाविभूत्येतदेव नृसिंहमेतद्धि महाविभूत्येतदेव भीषणमेतद्धि महाविभूत्येतदेव भद्रमेतद्धि महाविभूत्येतदेव मृत्युमृत्य्वेतद्धि महाविभूत्येतदेव नमाम्येतद्धि महाविभूत्येतदेवाहमेतद्धि महाविभूति तस्मादकारोकाराभ्यामिममात्मानमाप्ततममुत्कृष्टतमं चिन्मात्रं सर्वद्रष्टारं सर्वसाक्षिणं सर्वग्रासं सर्वप्रेमास्पदं सच्चिदानन्दमात्रमेकरसं पुरतोऽस्मात्सर्वस्मात्सुविभातमन्विष्या-

क्षतममुत्कृष्टतमं चिन्मात्रं महाविभूति सच्चिदानन्दमात्रमेकरसं परमेव ब्रह्म मकारेण जानीयादात्मैव नृसिंहो देवः परमेव ब्रह्म भवति य एवं वेद । सोऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन्ब्रह्माप्येतीति ह प्रजापतिरुवाच ॥

इत्याथर्वणीयनृसिंहोत्तरतापनीयोपनिषत्सु पञ्चमः खण्डः ॥ ५ ॥

ते देवा इममात्मानं ज्ञातुमैच्छंस्तान्हासुरः पाप्मा परिजग्रास । त ऐक्षन्त हन्तैनमासुरं पाप्मानं ग्रसाम इति । त एतमेवोंकाराग्रविद्योतं तुरीयतुरीयमात्मानमुग्रमनुग्रं वीरमवीरं महान्तममहान्तं विष्णुमविष्णुं ज्वलन्तमज्वलन्तं सर्वतोमुखमसर्वतोमुखं नृसिंहमनृसिंहं भीषणमभीषणं भद्रमभद्रं मृत्युमृत्युममृत्युमृत्युं नमाम्यनमाम्यहमनहं नृसिंहानुष्टुभैव बुबुधिरे तेभ्यो हासावासुरः पाप्मा सच्चिदानन्दघनं ज्योतिरभवत्तस्मादपक्वकषाय इममेवोंकाराग्रविद्योतं तुरीयतुरीयमात्मानं नृसिंहानुष्टुभैव जानीयात्तस्यासुरः पाप्मा सच्चिदानन्दघनं ज्योतिर्भवति । ते देवा ज्योतिष उत्तितीर्षवो द्वितीयाद्भयमेव पश्यन्तं इममेवोंकाराग्रविद्योतं तुरीयतुरीयमात्मानं नृसिंहानुष्टुभान्विष्य प्रणवेनैव तस्मिन्नवस्थितास्तेभ्यस्तज्ज्योतिरस्य सर्वस्य पुरतः सुविभातमविभातमद्वैतमचिन्त्यमलिङ्गं स्वप्रकाशमानन्दघनं शून्यमभवत् । एवंवित्स्वप्रकाशं परमेव ब्रह्म भवति ते देवाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च ससाधनेभ्यो व्युत्थाय निरागारा निष्परिग्रहा अशिखा अयज्ञोपवीता अन्धा बधिरा मुग्धाः क्लीबा मूका उन्मत्ता इव परिवर्तमानाः शान्ता दान्ता उपरतास्तितिक्षवः समाहिता आत्मरतय आत्मक्रीडा आत्ममिथुना आत्मानन्दाः प्रणवमेव परमं ब्रह्मात्मप्रकाशं शून्यं जानन्तस्तत्रैव परिसमाप्तास्तस्माद्देवानां व्रतमाचरन्नोंकारे परे ब्रह्मणि पर्यवसितो भवेत्स आत्मनैवात्मानं परमं ब्रह्म पश्यति । तदेष श्लोकः—शृङ्गेष्वशृङ्गं संयोज्य सिंहं शृङ्गेषु योजयेत् । शृङ्गाभ्यां शृङ्गमाबध्य त्रयो देवा उदासत इति ॥

इत्याथर्वणीयनृसिंहोत्तरतापनीयोपनिषत्सु षष्ठः खण्डः ॥ ६ ॥

देवा ह वै प्रजापतिमब्रुवन्भूय एव नो भगवान्विज्ञापयत्विति तथेत्यजत्वादमरत्वादजरत्वादमृतत्वादभयत्वादशोकत्वादमोहत्वादनशनायत्वादपिपासत्वादद्वैतत्वाच्चाकारेणेममात्मानमन्विष्योदुत्कृष्टत्वादुदुत्पादकत्वादुदुत्प्रवेष्टृत्वादुदुत्थापयितृत्वादुदुद्द्रष्टृत्वादुदुत्कर्तृत्वादुदुत्पथवारकत्वादुदुद्ग्रासकत्वा-

दुदुक्रान्तत्वादुदुत्तीर्णविकृतित्वाच्चोकारेण परमं सिंहमन्विष्याकारमिममात्मानमुकारपूर्वार्धमाकृष्य सिंहीकृत्योत्तरार्धेन तं सिंहमाकृष्य महत्त्वान्महस्त्वान्मानत्वान्मुक्तत्वान्महादेवत्वान्महेश्वरत्वान्महासत्त्वान्महाचित्त्वान्महानन्दत्वान्महाप्रभुत्वाच्च मकारार्थेनानेनात्मनैकीकुर्यादशरीरो निरिन्द्रियोऽप्राणोऽतमाः सच्चिदानन्दमात्रः स स्वराड् भवति य एवं वेद । कस्त्वमित्यहमिति होवाचैवमेवेदं सर्वं तस्मादहमिति सर्वाभिधानं तस्यादिरयमकारः स एव भवति । सर्वं ह्ययमात्मायं हि सर्वान्तरो न हीदं सर्वं निरात्मकमात्मैवेदं सर्वं तस्मात्सर्वात्मकेनाकारेण सर्वात्मकमात्मानमन्विच्छेद्ब्रह्मैवेदं सर्वं सच्चिदानन्दरूपं सच्चिदानन्दरूपमिदं सर्वं सद्धीदं सर्वं तत्सदिति चिद्धीदं सर्वं काशते काशते चेति किं सदितीदमिदं नेत्यनुभूतिरिति कैषेतीयमियं नेत्यवचनेनैवानुभवन्नुवाचैवमेव चिदानन्दावप्यवचनेनैवानुभवन्नुवाच सर्वमन्यदपि स परम आनन्दस्तस्य ब्रह्मणो नाम ब्रह्मेति तस्यान्त्योऽयं मकारः स एव भवति तस्मान्मकारेण परमं ब्रह्मान्विच्छेत्किमिदमेवमित्यु ह्युत्येवाहाविचिकित्संस्तस्मादकारेणेममात्मानमन्विष्य मकारेण ब्रह्मणा संदध्यादुकारेणाविचिकित्सन्नशरीरो निरिन्द्रियोऽप्राणोऽतमाः सच्चिदानन्दमात्रः स स्वराड् भवति य एवं वेद । ब्रह्म वा इदं सर्वमत्तृत्वादुग्रत्वाद्वीरत्वान्महत्त्वाद्विष्णुत्वाज्ज्वलत्त्वात्सर्वतोमुखत्वान्नृसिंहत्वाद्भीषणत्वाद्भद्रत्वान्मृत्युमृत्युत्वान्नमामित्वादहन्त्वादिति सततं ह्येतद्ब्रह्मोग्रत्वाद्वीरत्वान्महत्त्वाद्विष्णुत्वाज्ज्वलत्त्वात्सर्वतोमुखत्वान्नृसिंहत्वाद्भीषणत्वाद्भद्रत्वान्मृत्युमृत्युत्वान्नमामित्वादहंत्वादिति तस्मादकारेण परमं ब्रह्मान्विष्य मकारेण मनआद्यवितारं मनआदिसाक्षिणमन्विच्छेत्स यदैतत्सर्वमुपेक्षते तदैतत्सर्वमस्मिन्प्रविशति स यदा प्रबुध्यते तदैतत्सर्वमस्मादेवोत्तिष्ठति स एतत्सर्वं निरूह्य प्रत्यूह्य संपीड्य संज्वाल्य संभक्ष्य स्वात्मानमेषां ददात्यत्युग्रोऽतिवीरोऽतिमहानतिविष्णुरतिज्वलन्नतिसर्वतोमुखोऽतिनृसिंहोऽतिभीषणोऽतिभद्रोऽतिमृत्युमृत्युरतिनमाम्यत्यहं भूत्वा स्वे महिम्नि सदा समासते तस्मादेनमकारार्थेन परेण ब्रह्मणैकीकुर्यादुकारेणाविचिकित्सन्नशरीरो निरिन्द्रियोऽप्राणोऽतमाः सच्चिदानन्दमात्रः स स्वराड् भवति य एवं वेद । तदेष श्लोकः—शृङ्गं शृङ्गार्धमाकृष्य शृङ्गेणानेन योजयेत् । शृङ्गमेनं परे शृङ्गे तमतेनापि योजयेत् ॥

इत्याथर्वणीयनृसिंहोत्तरतापनीयोपनिषत्सु सप्तमः खण्डः ॥ ७ ॥

अथ तुरीयेणोतश्च प्रोतश्च ह्ययमात्मा सिंहोऽस्मिन्हि सर्वमयं हि सर्वात्माऽयं हि सर्वं नैवोतोऽद्वयो ह्ययमात्मैकल एवाविकल्पो न हि वस्तु सदयं ह्योत इव सद्घनोऽयं चिद्घन आनन्दघन एकरसोऽव्यवहार्यः केनचनाद्वितीय ओतश्च प्रोतश्चैष ओंकार एवं नैवमिति पृष्ट ओमित्येवाह वाग्वा ओंकारो वागेवेदं सर्वं न ह्यशब्दमिवेहास्ति चिन्मयो ह्ययमोंकारश्चिन्मयमिदं सर्वं तस्मात्परमेश्वर एवैकमेव तद्भवत्येतदमृतमभयमेतद्ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेदेति रहस्यमनुज्ञाता ह्ययमात्मैष ह्यस्य सर्वस्य स्वात्मानमनुजानाति न ह्येदं सर्वं स्वत आत्मवन्न ह्ययमोतो नानुज्ञाताऽसङ्गत्वादविकारित्वादसत्त्वादन्यस्यानुज्ञाता ह्ययमोंकार ओमिति ह्यनुजानाति वाग्वा ओंकारो वागेवेदं सर्वमनुजानाति चिन्मयो ह्ययमोंकारश्चिद्धीदं सर्वं निरात्मकमात्मसात्करोति तस्मात्परमेश्वर एवैकमेव तद्भवत्येतदमृतमभयमेतद्ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेदेति रहस्यमनुज्ञैकरसो ह्ययमात्मा प्रज्ञानघन एवायं ह्यस्मात्सर्वस्मात्पुरतः सुविभातोऽतश्चिद्घन एव न ह्ययमोतो नानुज्ञाताऽऽस्यं ह्येदं सर्वमसदेवानुज्ञैरसौ ह्ययमोंकार ओमिति ह्येवानुजानाति वाग्वा ओंकारो वागेव ह्यनुजानाति चिन्मयो ह्ययमोंकारश्चिदेव ह्यनुज्ञा तस्मात्परमेश्वर एवैकमेव तद्भवत्येतदमृतमभयमेतद्ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेदेति रहस्यमविकल्पो ह्ययमात्माऽद्वितीयत्वादविकल्पो ह्ययमोंकारोऽद्वितीयत्वादेव चिन्मयो ह्ययमोंकारस्तस्मात्परमेश्वर एवैकमेव तद्भवत्यविकल्पो नाविकल्पोऽपि नात्र काचन भिदाऽस्ति नैवात्र काचन भिदाऽस्त्यत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो मृत्योर्मृत्युमाप्नोति तदेतदद्वयं स्वप्रकाशं महानन्दमात्मैवैतदमृतमभयमेतद्ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेदेति रहस्यम् ॥

इत्याथर्वणीयनृसिंहोत्तरतापनीयोपनिषत्स्वष्टमः खण्डः ॥ ८ ॥

देवा ह वै प्रजापतिमब्रुवन्निममेव नो भगवन्नोंकारमात्मानमुपदिशेति तथेत्युपद्रष्टाऽनुमन्तैष आत्मा सिंहश्चिद्रूप एवाविकारो ह्युपलब्धा सर्वत्र न ह्यस्ति द्वैतसिद्धिरात्मैव सिद्धोऽद्वितीयो मायया ह्यन्यदिव स वा एष आत्मा पर एवैषैव सर्वं तथा हि प्राज्ञे सैषाऽविद्या जगत्सर्वमात्मा परमात्मैव स्वप्रकाशोऽप्यविषयज्ञानत्वाज्जानन्नेव ह्यत्र न विजानात्यनुभूतेर्माया च

तन्मोरूपाऽनुभूतेस्तदेतज्जडं मोहात्मकमनन्तं तुच्छमिदं रूपमस्यास्य व्यञ्जिका नित्यनिवृत्ताऽपि मूढैरात्मेव दृष्टाऽस्य सत्त्वमसत्त्वं च दर्शयति सिद्धत्वासिद्धत्वाभ्यां स्वतन्त्रास्वतन्त्रत्वेन सैषा वटबीजसामान्यवदनेकवटशक्तिरेकैव। तद्यथा वटबीजसामान्यमेकमनेकान्स्वाव्यतिरिक्तान्वटान्सबीजानुत्पाद्य तत्र तत्र पूर्णं सत्तिष्ठत्येवमेवैषा माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति सैषा विचित्रा सुदृढा बह्वङ्कुरा स्वयं गुणभिन्नाऽङ्कुरेष्वपि गुणभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिणी चैतन्यदीप्ता तस्मादात्मन एव त्रैविध्यं सर्वत्र योनित्वमप्यभिमन्ता जीवो नियन्तेश्वरः सर्वाहंमानी हिरण्यगर्भस्त्रिरूप ईश्वरवद्व्यक्तचैतन्यः सर्वगो ह्येष हैश्वरः क्रियाज्ञानात्मा सर्वं सर्वमयं सर्वे जीवाः सर्वमयाः सर्वावस्थासु तथाप्यल्पाः स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव तस्माद्द्वय एवायमात्मा सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वय आनन्दः परः प्रत्यगेकरसः प्रमाणैरेतैरवगतः सत्तामात्रं हीदं सर्वं सदेव पुरस्तात्सिद्धं हि ब्रह्म न ह्यत्र किंचनानुभूयते नाविद्याऽनुभवात्मनि स्वप्रकाशे सर्वसाक्षिण्यविक्रियेऽद्वये पश्यतेहापि सन्मात्रमसदन्यत्सत्यं हीत्थं पुरस्तादयोनिः स्वात्मस्थमानन्दचिद्घनं सिद्धं ह्यसिद्धं तद्विष्णुरीशानो ब्रह्माऽन्यदपि सर्वं सर्वगं सर्वमत एव शुद्धोऽबाध्यस्वरूपो बुद्धः सुखरूप आत्मा न ह्येतन्निरात्मकमपि नात्मा पुरतो हि सिद्धो न हीदं सर्वं कदाचिदात्मा हि स्वमहिमस्थो निरपेक्ष एक एव साक्षी स्वप्रकाशः किं तन्नित्यमात्माऽत्र ह्येव न विचिकित्स्यमेतद्धीदं सर्वं साधयति द्रष्टा द्रष्टुः साक्ष्यविक्रियः सिद्धो निरविद्यो बाह्यान्तरवीक्षणात्सुविस्पष्टस्तमसः परस्ताद्भूतैष दृष्टोऽदृष्टो वेति दृष्टोऽव्यवहार्योऽप्यल्पो नाल्पः साक्ष्यविशेषोऽन्योऽसुखदुःखोऽद्वयः परमात्मा सर्वज्ञोऽनन्तोऽभिन्नोऽद्वयः सर्वदाऽसंवित्तिर्मायया नासंवित्तिः स्वप्रकाशो यूयमेव दृष्टः किमद्वयेन द्वितीयमेव न यूयमेव ब्रूह्येव भगवन्निति देवा ऊचुर्यूयमेव दृश्यते चेन्नात्मज्ञा असङ्गो ह्ययमात्माऽतो यूयमेव स्वप्रकाशा इदं हि सत्संविन्मयत्वाद्यूयमेव नेति होचुर्हन्तासङ्गा वयमिति होचुः कथं पश्यन्तीति होवाच न वयं विद्म इति होचुस्ततो यूयमेव स्वप्रकाशा इति होवाच न च सत्संविन्माया एतौ हि पुरस्तात्सुविभातमव्यवहार्यमेवाद्वयं ज्ञातो ह्येवैष विज्ञातो विदिताविदितात्पर इति होचुः स होवाच तद्वा

एतद्ब्रह्माद्वयं बृहत्त्वान्नित्यं शुद्धं बुद्धं मुक्तं सत्यं सूक्ष्मं परिपूर्णमद्वयं सदानन्दं चिन्मात्रमात्मैवाव्यवहार्यं केनचन तदेतदात्मानमोमित्यपश्यन्तः पश्यत तदेतत्सत्यमात्मा ब्रह्मैव ब्रह्मात्मैवात्र ह्येव न विचिकित्स्यमित्योंं सत्यं तदेतत्पण्डिता एव पश्यन्त्येतद्धयशब्दमस्पर्शमरूपमरसमगन्धमव्यक्तमनादातव्यमगन्तव्यमविसर्जयितव्यमनानन्दयितव्यममन्तव्यमबोद्धव्यमनहंकर्तव्यमचेतयितव्यमप्राणयितव्यमनपानयितव्यमव्यानयितव्यमनुदानयितव्यमसमानयितव्यमनिन्द्रियमविषयमकरणमलक्षणमसङ्गमगुणमविक्रियमव्यपदेश्यमसत्त्वमरजस्कमतमस्कममायमप्यौपनिषदमेव सुविभातं सकृद्विभातं पुरतोऽस्मात्सर्वस्मात्सुविभातमद्वयं पश्यताहं स सोऽहमिति स होवाच किमेष दृष्टोऽदृष्टो वेति दृष्टो विदिताविदितात्पर इति होचुः क्वैषा कथमिति होचुः किं तेन न किंचनेति होचुर्यूयमाश्चर्यरूपा इति न चेत्याहोमित्यनुजानीध्वं ब्रूतैनमिति ज्ञातोऽज्ञातश्चेति होचुर्न चैवमिति होचुरिति ब्रूतैवैनमात्मसिद्धमिति होवाच पश्याम एव भगवन्न च वयं पश्यामो नैव वयं वक्तुं शक्नुमो नमस्तेऽस्तु भगवन्प्रसीदेति होचुर्न भेतव्यं पृच्छतेति होवाच क्वैषाऽनुज्ञेत्येष एवात्मेति होवाच ते होचुर्नमस्तुभ्यं वयं त इतीति ह प्रजापतिर्देवाननुशशासानुशशासेति । तदेष श्लोकः—ओतमोतेन जानीयादनुज्ञातारमान्तरम् । अनुज्ञामद्वयं लब्ध्वा उपद्रष्टारमाव्रजेदित्युपद्रष्टारमाव्रजेदिति ॥ ९ ॥

ॐ भद्रं कर्णेभिः० १ । ॐ स्वस्ति न इन्द्रो० २ । ॐ शान्तिः ३ ॥

इत्याथर्वणीयनृसिंहोत्तरतापनीयोपनिषत्सु नवमः खण्डः ॥ ९ ॥

इत्याथर्वणीयनृसिंहोत्तरतापनीयोनिषत्समाप्ता ॥

---

## कालाग्निरुद्रोपनिषत् ॥ ३० ॥

ब्रह्मज्ञानोपायतया यद्विभूतिः प्रकीर्तिता ।
कालाग्निरुद्रं तमहं भजतां स्वात्मदं भजे ॥

ॐ सह नाववत्विति शान्तिः ॥

ॐ अथ कालाग्निरुद्रोपनिषदः संवर्तकोऽग्निर्ऋषिरनुष्टुप्छन्दः श्रीकालाग्निरुद्रो देवता श्रीकालाग्निरुद्रप्रीत्यर्थे भस्मत्रिपुण्ड्रधारणे विनियोगः ॥ अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छ—अधीहि भगवंस्त्रिपुण्ड्रविधिं सतत्त्वं किं द्रव्यं कियत्स्थानं कतिप्रमाणं का रेखा के मन्त्राः का शक्तिः किं दैवतं

कः कर्ता किं फलमिति च। तं होवाच भगवान्कालाग्निरुद्रः—यद्द्रव्यं तदाग्नेयं भस्म सद्योजातादिपञ्चब्रह्ममन्त्रैः परिगृह्याग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्मेत्यनेनाभिमन्त्र्य मानस्तोक इति समुद्धृत्य मा नो महान्तमिति जलेन संसृज्य त्रियायुषमिति शिरोललाटवक्षःस्कन्धेषु त्रियायुषैस्त्र्यम्बकैस्त्रिशक्तिभिस्तिर्यक्तिस्रो रेखाः प्रकुर्वीत व्रतमेतच्छाम्भवं सर्वेषु देवेषु वेदवादिभिरुक्तं भवति तस्मात्तत्समाचरेन्मुमुक्षुर्न पुनर्भवाय ॥ अथ सनत्कुमारः पप्रच्छ प्रमाणमस्य त्रिपुण्ड्रधारणस्य त्रिधा रेखा भवत्याललाटादाचक्षुषोरामूर्ध्नोराभ्रुवोर्मध्यतश्च यास्य प्रथमा रेखा सा गार्हपत्यश्चाकारो रजोभूर्लोकः स्वात्मा क्रियाशक्तिर्ऋग्वेदः प्रातःसवनं महेश्वरो देवतेति यास्य द्वितीया रेखा सा दक्षिणाग्निरुकारः सत्त्वमन्तरिक्षमन्तरात्मा चेच्छाशक्तिर्यजुर्वेदो माध्यंदिनं सवनं सदाशिवो देवतेति यास्य तृतीया रेखा साहवनीयो मकारस्तमो द्यौर्लोकः परमात्मा ज्ञानशक्तिः सामवेदस्तृतीयसवनं महादेवो देवतेति एवं त्रिपुण्ड्रविधिं भस्मना करोति यो विद्वान्ब्रह्मचारी गृही वानप्रस्थो यतिर्वा स महापातकोपपातकेभ्यः पूतो भवति स सर्वेषु तीर्थेषु स्नातो भवति स सर्वान्वेदानधीतो भवति स सर्वान्देवाञ्ज्ञातो भवति स सततं सकलरुद्रमन्त्रजापी भवति स सकलभोगान्भुङ्क्ते देहं त्यक्त्वा शिवसायुज्यमेति न स पुनरावर्तते न स पुनरावर्तत इत्याह भगवान्कालाग्निरुद्रः ॥ यस्त्वेतद्वाधीते सोऽप्येवमेव भवतीत्यों सत्यमित्युपनिषत् ॥ ३० ॥

ॐसह नाववत्विति शान्तिः ॥

इति कालाग्निरुद्रोपनिषत्समाप्ता ॥

---

## मैत्रेय्युपनिषत् ॥ ३१ ॥

श्रुत्याचार्योपदेशेन मुनयो यत्पदं ययुः ।
तत्स्वानुभूतिसंसिद्धं स्वमात्रं ब्रह्म भावये ॥

ॐ आप्यायन्त्विति शान्तिः ॥

ॐबृहद्रथो वै नाम राजा राज्ये ज्येष्ठं पुत्रं निधापयित्वेदमशाश्वतं मन्यमानः शरीरं वैराग्यमुपेतोऽरण्यं निर्जगाम। स तत्र परमं तप आस्थायादित्यमीक्षमाण ऊर्ध्वबाहुस्तिष्ठत्यन्ते सहस्रस्य मुनिरन्तिकमाजगामाग्निरिवाधूमकस्तेजसा निर्दहन्निवात्मविद्भगवाञ्छाकायन्य उत्तिष्ठोत्तिष्ठ वरं वृणीष्वेति

राजानमब्रवीत्स तस्मै नमस्कृत्योवाच भगवन्नाहमात्मवित्त्वं तत्त्वविच्छृणुमो वयं स त्वं नो ब्रूहीत्येतद्वृत्तं पुरस्तादशक्यं मा पृच्छ प्रश्नमैक्ष्वाकान्यान्कामान्वृणीष्वेति शाकायन्यस्य चरणावभिमृश्यमानो राजेमां गाथां जगाद ॥ १ ॥ अथ किमेतैर्वान्यानां शोषणं महार्णवानां शिखरिणां प्रपतनं ध्रुवस्य प्रचलनं स्थानं वा तरूणां निमज्जनं पृथिव्याः स्थानादपसरणं सुराणां सोऽहमित्येतद्विधेऽस्मिन्संसारे किं कामोपभोगैर्यैरेवाश्रितस्यासकृदुपावर्तनं दृश्यत इत्युद्धर्तुमर्हसीत्यन्धोदपानस्थो भेक इवाहमस्मिन्संसारे भगवंस्त्वं नो गतिरिति ॥२॥ भगवन्शरीरमिदं मैथुनादेवोद्भूतं संविदपेतं निरय एव मूत्रद्वारेण निष्क्रान्तमस्थिभिश्चितं मांसेनानुलिप्तं चर्मणावबद्धं विण्मूत्रवातपित्तकफमज्जामेदोवसाभिरन्यैश्च मलैर्बहुभिः परिपूर्णमेतादृशे शरीरे वर्तमानस्य भगवंस्त्वं नो गतिरिति ॥ ३ ॥

अथ भगवाञ्छाकायन्यः सुप्रीतोऽब्रवीद्राजानं महाराज बृहद्रथेक्ष्वाकुवंशध्वजशीर्षात्मज्ञः कृतकृत्यस्त्वं मरुन्नाम्नो विश्रुतोऽसीत्ययं खल्वात्मा ते कतमो भगवान्वर्ण्य इति तं होवाच ॥ शब्दस्पर्शमया येऽर्था अनर्था इव ते स्थिताः । येषां सक्तस्तु भूतात्मा न स्मरेच्च परं पदम् ॥ १ ॥ तपसा प्राप्यते सत्त्वं सत्त्वात्संप्राप्यते मनः । मनसा प्राप्यते ह्यात्मा ह्यात्मापत्त्या निवर्तते ॥ २ ॥ यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति । तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति ॥ ३ ॥ स्वयोनावुपशान्तस्य मनसः सत्यगामिनः । इन्द्रियार्थविमूढस्यानृताः कर्मवशानुगाः ॥ ४ ॥ चित्तमेव हि संसारस्तत्प्रयत्नेन शोधयेत् । यच्चित्तस्तन्मयो भवति गुह्यमेतत्सनातनम् ॥ ५ ॥ चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् । प्रसन्नात्मात्मनि स्थित्वा सुखमक्षयमश्नुते ॥ ६ ॥ समासक्तं यदा चित्तं जन्तोर्विषयगोचरम् ॥ यद्येवं ब्रह्मणि स्यात्तत्को न मुच्येत बन्धनात् ॥ ७ ॥ हृत्पुण्डरीकमध्ये तु भावयेत्परमेश्वरम् । साक्षिणं बुद्धिवृत्तस्य परमप्रेमगोचरम् ॥ ८ ॥ अगोचरं मनोवाचामवधूतादिसंप्लवम् । सत्तामात्रप्रकाशैकप्रकाशं भावनातिगम् ॥ ९ ॥ अहेयमनुपादेयमसामान्यविशेषणम् । ध्रुवं स्तिमितगम्भीरं न तेजो न तमस्ततम् । निर्विकल्पं निराभासं निर्वाणमयसंविदम् ॥ १० ॥ नित्यः शुद्धो बुद्धमुक्तस्वभावः सत्यः सूक्ष्मः संविभुश्चाद्वितीयः । आनन्दाब्धिर्यः परः सोऽहमस्मि प्रत्यग्धातुर्नात्र संशीतिरस्ति ॥ ११ ॥ आनन्दमन्तर्निजमाश्रयं तमाशापिशाचीमवमानयन्तम् । आलोकयन्तं जगदिन्द्रजालमापत्कथं मां प्रविशेदसङ्गम् ॥ १२ ॥

वर्णाश्रमाचारयुता विमूढाः कर्मानुसारेण फलं लभन्ते । वर्णादिधर्मं हि परित्यजन्तः स्वानन्दतृप्ताः पुरुषा भवन्ति ॥ १३ ॥ वर्णाश्रमं सावयवं स्वरूपमाद्यन्तयुक्तं ह्यतिकृच्छ्रमात्रम् । पुत्रादिदेहेष्वभिमानशून्यं भूत्वा वसेत्सौख्यतमे ह्यनन्त इति ॥ १४ ॥

इति मैत्रेय्युपनिषत्सु प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ॥ २ ॥

अथ भगवान्मैत्रेयः कैलासं जगाम तं गत्वोवाच भो भगवन्परमतत्त्वरहस्यमनुब्रूहीति ॥ स होवाच महादेवः । देहो देवालयः प्रोक्तः स जीवः केवलः शिवः । त्यजेदज्ञाननिर्माल्यं सोऽहंभावेन पूजयेत् ॥ १ ॥ अभेददर्शनं ज्ञानं ध्यानं निर्विषयं मनः । स्नानं मनोमलत्यागः शौचमिन्द्रियनिग्रहः ॥२॥ ब्रह्मामृतं पिबेद्भैक्षमाचरेद्देहरक्षणे । वसेदेकान्तिको भूत्वा चैकान्ते द्वैतवर्जिते । इत्येवमाचरेद्धीमान्स एवं मुक्तिमाप्नुयात् ॥ ३ ॥ जातं मृतमिदं देहं मातापितृमलात्मकम् । सुखदुःखालयामेध्यं स्पृष्ट्वा स्नानं विधीयते ॥ ४ ॥ धातुबद्धं महारोगं पापमन्दिरमध्रुवम् । विकाराकारविस्तीर्णं स्पृष्ट्वा स्नानं विधीयते ॥ ५ ॥ नवद्वारमलस्रावं सदा काले स्वभावजम् । दुर्गन्धं दुर्मलोपेतं स्पृष्ट्वा स्नानं विधीयते ॥ ६ ॥ मातृसूतकसंबन्धं सूतके सह जायते । मृतसूतकजं देहं स्पृष्ट्वा स्नानं विधीयते ॥ ७ ॥ अहंममेति विण्मूत्रलेपगन्धादिमोचनम् । शुद्धशौचमिति प्रोक्तं मृज्जलाभ्यां तु लौकिकम् ॥ ८ ॥ चित्तशुद्धिकरं शौचं वासनात्रयनाशनम् । ज्ञानवैराग्यमृत्तोयैः क्षालनाच्छौचमुच्यते ॥ ९ ॥ अद्वैतभावनाभैक्षमभक्ष्यं द्वैतभावनम् । गुरुशास्त्रोक्तभावेन भिक्षोर्भैक्षं विधीयते ॥ १० ॥ विद्वान्स्वदेशमुत्सृज्य संन्यासानन्तरं स्वतः । कारागारविनिर्मुक्तचोरवद्दूरतो वसेत् ॥ ११ ॥ अहंकारसुतं वित्तभ्रातरं मोहमन्दिरम् । आशापत्नीं त्यजेद्यावत्तावन्मुक्तो न संशयः ॥ १२ ॥ मृता मोहमयी माता जातो बोधमयः सुतः । सूतकद्वयसंप्राप्तौ कथं संध्यामुपास्महे ॥ १३ ॥ हृदाकाशे चिदादित्यः सदा भासति भासति । नास्तमेति न चोदेति कथं संध्यामुपास्महे ॥ १४ ॥ एकमेवाद्वितीयं यद्गुरोर्वाक्येन निश्चितम् । एतदेकान्तमित्युक्तं न मठो न वनान्तरम् ॥ १५ ॥ असंशयवतां मुक्तिः संशयाविष्टचेतसाम् । न मुक्तिर्जन्मजन्मान्ते तस्माद्विश्वासमाप्नुयात् ॥ १६ ॥ कर्मत्यागान्न संन्यासो न

प्रेषोच्चारणेन तु । संधौ जीवात्मनोरैक्यं संन्यासः परिकीर्तितः ॥ १७ ॥ वमनाहारवद्यस्य भाति सर्वैषणादिषु । तस्याधिकारः संन्यासे त्यक्तदेहाभिमानिनः ॥ १८ ॥ यदा मनसि वैराग्यं जातं सर्वेषु वस्तुषु । तदैव संन्यसेद्विद्वानन्यथा पतितो भवेत् ॥ १९ ॥ द्रव्यार्थमन्नवस्त्रार्थं यः प्रतिष्ठार्थमेव वा । संन्यसेदुभयभ्रष्टः स मुक्तिं नाप्तुमर्हति ॥ २० ॥ उत्तमा तत्त्वचिन्तैव मध्यमं शास्त्रचिन्तनम् । अधमा मन्त्रचिन्ता च तीर्थभ्रान्त्यधमाधमा ॥२१॥ अनुभूतिं विना मूढो वृथा ब्रह्मणि मोदते । प्रतिबिम्बितशाखाग्रफलास्वादनमोदवत् ॥ २२ ॥ न त्यजेच्चेद्यतिर्मुक्तो यो माधुकरमातरम् । वैराग्यजनकं श्रद्धाकलत्रं ज्ञाननन्दनम् ॥ २३ ॥ धनवृद्धा वयोवृद्धा विद्यावृद्धास्तथैव च । ते सर्वे ज्ञानवृद्धस्य किंकराः शिष्यकिंकराः ॥ २४ ॥ यन्मायया मोहितचेतसो मामात्मानमापूर्णमलब्धवन्तः । परं विदग्धोदरपूरणाय भ्रमन्ति काका इव सूरयोऽपि ॥ २५ ॥ पाषाणलोहमणिमृण्मयविग्रहेषु पूजा पुनर्जननभोगकरी मुमुक्षोः । तस्माद्यतिः स्वहृदयार्चनमेव कुर्याद्बाह्यार्चनं परिहरेदपुनर्भवाय ॥ २६ ॥ अन्तःपूर्णो बहिःपूर्णः पूर्णकुम्भ इवार्णवे । अन्तःशून्यो बहिःशून्यः शून्यकुम्भ इवाम्बरे ॥ २७ ॥ मा भव ग्राह्यभावात्मा ग्राहकात्मा च मा भव । भावनामखिलां त्यक्त्वा यच्छिष्टं तन्मयो भव ॥ २८ ॥ द्रष्टृदर्शनदृश्यानि त्यक्त्वा वासनया सह । दर्शनप्रथमाभासमात्मानं केवलं भज ॥ २९ ॥ संशान्तसर्वसंकल्पा या शिलावदवस्थितिः । जाग्रन्निद्राविनिर्मुक्ता सा स्वरूपस्थितिः परा ॥ ३० ॥

इति मैत्रेय्युपनिषत्सु द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ॥ ३ ॥

अहमस्मि परश्चास्मि ब्रह्मास्मि प्रभवोऽस्म्यहम् । सर्वलोकगुरुश्चास्मि सर्वलोकेऽस्मि सोऽस्म्यहम् ॥ १ ॥ अहमेवास्मि सिद्धोऽस्मि शुद्धोऽस्मि परमोऽस्म्यहम् । अहमस्मि सदा सोऽस्मि नित्योऽस्मि विमलोऽस्म्यहम् ॥ २ ॥ विज्ञानोऽस्मि विशेषोऽस्मि सोमोऽस्मि सकलोऽस्म्यहम् । शुभोऽस्मि शोकहीनोऽस्मि चैतन्योऽस्मि समोऽस्म्यहम् ॥ ३ ॥ मानावमानहीनोऽस्मि निर्गुणोऽस्मि शिवोऽस्म्यहम् । द्वैताद्वैतविहीनोऽस्मि द्वन्द्वहीनोऽस्मि सोऽस्म्यहम् ॥ ४ ॥ भावाभावविहीनोऽस्मि भासाहीनोऽस्मि भास्म्यहम् । शून्याशून्यप्रभावोऽस्मि शोभनाशोभनोऽस्म्यहम् ॥ ५ ॥ तुल्यातुल्यविहीनोऽस्मि नित्यः

शुद्धः सदाशिवः । सर्वासर्वविहीनोऽस्मि सात्त्विकोऽस्मि सदास्म्यहम् ॥ ६ ॥ एकसंख्याविहीनोऽस्मि द्विसंख्यावानहं न च । सदसद्भेदहीनोऽस्मि संकल्परहितोऽस्म्यहम् ॥ ७ ॥ नानात्मभेदहीनोऽस्मि ह्यखण्डानन्दविग्रहः । नाहमस्मि न चान्योऽस्मि देहादिरहितोऽस्म्यहम् ॥ ८ ॥ आश्रयाश्रयहीनोऽस्मि आधाररहितोऽस्म्यहम् । बन्धमोक्षादिहीनोऽस्मि शुद्धब्रह्मास्मि सोऽस्म्यहम् ॥ ९ ॥ चित्तादिसर्वहीनोऽस्मि परमोऽस्मि परात्परः । सदा विचाररूपोऽस्मि निर्विचारोऽस्मि सोऽस्म्यहम् ॥ १० ॥ अकारोकाररूपोऽस्मि मकारोऽस्मि सनातनः । ध्यातृध्यानविहीनोऽस्मि ध्येयहीनोऽस्मि सोऽस्म्यहम् ॥ ११ ॥ सर्वपूर्णस्वरूपोऽस्मि सच्चिदानन्दलक्षणः । सर्वतीर्थस्वरूपोऽस्मि परमात्मास्म्यहं शिवः ॥ १२ ॥ लक्ष्यालक्ष्यविहीनोऽस्मि लयहीनरसोऽस्म्यहम् । मातृमानविहीनोऽस्मि मेयहीनः शिवोऽस्म्यहम् ॥ १३ ॥ न जगत्सर्वद्रष्टास्मि नेत्रादिरहितोऽस्म्यहम् । प्रवृद्धोऽस्मि प्रबुद्धोऽस्मि प्रसन्नोऽस्मि परोऽस्म्यहम् ॥ १४ ॥ सर्वेन्द्रियविहीनोऽस्मि सर्वकर्मकृदप्यहम् । सर्ववेदान्ततृप्तोऽस्मि सर्वदा सुलभोऽस्म्यहम् ॥ १५ ॥ मुदितामुदिताख्योऽस्मि सर्वमौनफलोऽस्म्यहम् । नित्यचिन्मात्ररूपोऽस्मि सदा सच्चिन्मयोऽस्म्यहम् ॥ १६ ॥ यत्किंचिदपि हीनोऽस्मि स्वल्पमप्यति नास्म्यहम् । हृदयग्रन्थिहीनोऽस्मि हृदयाम्भोजमध्यगः ॥ १७ ॥ षड्विकारविहीनोऽस्मि षट्कोशरहितोऽस्म्यहम् । अरिषड्वर्गमुक्तोऽस्मि अन्तरादन्तरोऽस्म्यहम् ॥ १८ ॥ देशकालविमुक्तोऽस्मि दिगम्बरसुखोऽस्म्यहम् । नास्ति नास्ति विमुक्तोऽस्मि नकाररहितोऽस्म्यहम् ॥१९॥ अखण्डाकाशरूपोऽस्मि ह्यखण्डाकारमस्म्यहम् । प्रपञ्चमुक्तचित्तोऽस्मि प्रपञ्चरहितोऽस्म्यहम् ॥ २० ॥ सर्वप्रकाशरूपोऽस्मि चिन्मात्रज्योतिरस्म्यहम् । कालत्रयविमुक्तोऽस्मि कामादिरहितोऽस्म्यहम् ॥ २१ ॥ कायिकादिविमुक्तोऽस्मि निर्गुणः केवलोऽस्म्यहम् । मुक्तिहीनोऽस्मि मुक्तोऽस्मि मोक्षहीनोऽस्म्यहं सदा ॥ २२ ॥ सत्यासत्यादिहीनोऽस्मि सन्मात्रान्नास्म्यहं सदा । गन्तव्यदेशहीनोऽस्मि गमनादिविवर्जितः ॥ २३ ॥ सर्वदा समरूपोऽस्मि शान्तोऽस्मि पुरुषोत्तमः । एवं स्वानुभवो यस्य सोऽहमस्मि न संशयः ॥ २४ ॥ यः शृणोति सकृद्वापि ब्रह्मैव भवति स्वयमित्युपनिषत् ॥

इति मैत्रेय्युपनिषत्सु तृतीयोऽध्यायः ॥ ३ ॥

ॐ आप्यायन्त्विति शान्तिः ॥

इति मैत्रेय्युपनिषत्समाप्ता ॥ ३१ ॥

---

# सुबालोपनिषत् ॥ ३२ ॥

बीजाज्ञानमहामोहापह्नवाद्यद्विशिष्यते ।
निर्बीजं त्रैपदं तत्त्वं तदस्मीति विचिन्तये ॥
ॐ पूर्णमद इति शान्तिः ॥

ॐ तदाहुः किं तदासीत्तस्मै स होवाच न सन्नासन्न सदसदिति तस्मात्तमः संजायते तमसो भूतादिर्भूतादेराकाशमाकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी तदण्डं समभवत्तत्संवत्सरमात्रमुषित्वा द्विधाऽकरोदधस्ताद्भूमिमुपरिष्टादाकाशं मध्ये पुरुषो दिव्यः सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । सहस्रबाहुरिति सोऽग्रे भूतानां मृत्युमसृजत्त्र्यक्षरं त्रिशिरस्कं त्रिपादं खण्डपरशुं तस्य ब्रह्माभिधेति स ब्रह्माणमेव विवेश स मानसान्सप्त पुत्रानसृजत्ते ह विराजः सत्यमानसानसृजन्ते ह प्रजापतयः ॥ ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत । श्रोत्राद्वायुश्च प्राणश्च हृदयात्सर्वमिदं जायते ॥

इति सुबालोपनिषत्सु प्रथमः खण्डः ॥ १ ॥

अपानान्निषादा यक्षराक्षसगन्धर्वाश्चास्थिभ्यः पर्वता लोमभ्य ओषधिवनस्पतयो ललाटात्क्रोधजो रुद्रो जायते तस्यैतस्य महतो भूतस्य निःश्वसितमेवैतदृग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषामयनं न्यायो मीमांसा धर्मशास्त्राणि व्याख्यानान्युपव्याख्यानानि च सर्वाणि च भूतानि हिरण्यज्योतिर्यस्मिन्नयमात्माधिक्षियन्ति भुवनानि विश्वा ॥ आत्मानं द्विधाऽकरोदर्धेन स्त्री अर्धेन पुरुषो देवो भूत्वा देवानसृजदृषिर्भूत्वा ऋषीन्यक्षराक्षसगन्धर्वान्ग्राम्यानारण्यांश्च पशूनसृजदितरा गौरितरोऽनड्वानितरो वडवेतरोऽश्व इतरा गर्दभीतरो गर्दभ इतरा विश्वंभरीतरो विश्वंभरः सोऽन्ते वैश्वानरो भूत्वा संदग्ध्वा सर्वाणि भूतानि पृथिव्यप्सु प्रलीयत आपस्तेजसि प्रलीयन्ते तेजो वायौ विलीयते वायुराकाशे विलीयत आकाशमिन्द्रियेष्विन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ विलीयन्ते भूतादिर्महति विलीयते महानव्यक्ते विलीयतेऽव्यक्तमक्षरे विलीयते अक्षरं तमसि विलीयते तमः परे देव एकीभवति परस्तान्न सन्नासन्नासदसदित्येतन्निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम् ॥

इति सुबालोपनिषत्सु द्वितीयः खण्डः ॥ २ ॥

असद्वा इदमग्र आसीदजातमभूतमप्रतिष्ठितमशब्दमस्पर्शमरूपमरसमगन्धमव्ययममहान्तमबृहन्तमजमात्मानं मत्वा धीरो न शोचति ॥ अप्राणममुखमश्रोत्रमवागमनोऽतेजस्कमचक्षुष्कमनामगोत्रमशिरस्कमपाणिपादमस्निग्धमलोहितमप्रमेयमह्रस्वमदीर्घमस्थूलमनण्वनल्पमपारमनिर्देश्यमनपावृतमप्रतर्क्यमप्रकाश्यमसंवृतमनन्तरमबाह्यं न तदश्नाति किंचन न तदश्नाति कश्चनैतद्वै सत्येन दानेन तपसाऽनाशकेन ब्रह्मचर्येण निर्वेदनेनानाशकेन षडङ्गेनैव साधयेदेतत्त्रयं वीक्षेत दमं दानं दयामिति न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन्ब्रह्माप्येति य एवं वेद ॥

इति सुबालोपनिषत्सु तृतीयः खण्डः ॥ ३ ॥

हृदयस्य मध्ये लोहितं मांसपिण्डं यस्मिंस्तद्दहरं पुण्डरीकं कुमुदमिवानेकधा विकसितं हृदयस्य दश छिद्राणि भवन्ति येषु प्राणाः प्रतिष्ठिताः स यदा प्राणेन सह संयुज्यते तदा पश्यति नद्यो नगराणि बहूनि विविधानि च यदा व्यानेन सह संयुज्यते तदा पश्यति देवांश्च ऋषींश्च यदाऽपानेन सह संयुज्यते तदा पश्यति यक्षराक्षसगन्धर्वान्यदा दानेन सह संयुज्यते तदा पश्यति देवलोकान्देवान्स्कन्दं जयन्तं चेति यदा समानेन सह संयुज्यते तदा पश्यति देवलोकान्धनानि च यदा वैरम्भेण सह संयुज्यते तदा पश्यति दृष्टं च श्रुतं च भुक्तं चाभुक्तं च सच्चासच्च सर्वं पश्यति अथेमा दश दश नाड्यो भवन्ति । तासामेकैकस्य द्वासप्ततिर्द्वासप्ततिः शाखा नाडीसहस्राणि भवन्ति यस्मिन्नयमात्मा स्वपिति शब्दानां च करोत्यथ यद्द्वितीये स कोशे स्वपिति तदेमं च लोकं परं च लोकं पश्यति सर्वाञ्छब्दान्विजानाति स संप्रसाद इत्याचक्षते प्राणः शरीरं परिरक्षति हरितस्य नीलस्य पीतस्य लोहितस्य श्वेतस्य नाड्यो रुधिरस्य पूर्णा अथात्रैतद्दहरं पुण्डरीकं कुमुदमिवानेकधा विकसितं यथा केशः सहस्रधा भिन्नस्तथा हिता नाम नाड्यो भवन्ति हृद्याकाशे परे कोशे दिव्योऽयमात्मा स्वपिति यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति न तत्र देवा न देवलोका यज्ञा न यज्ञा वा न माता न पिता न बन्धुर्न बान्धवो न स्तेनो न ब्रह्महा तेजस्कायममृतं सलिल एवेदं सलिलं वनं भूयस्तेनैव मार्गेण जाग्राय धावति सम्राडिति होवाच ॥

इति सुबालोपनिषत्सु चतुर्थः खण्डः ॥ ४ ॥

स्थानानि स्थानिभ्यो यच्छति नाडी तेषां निबन्धनं चक्षुरध्यात्मं द्रष्टव्यमधिभूतमादित्यस्तत्राधिदैवतं नाडी तेषां निबन्धनं यश्चक्षुषि यो द्रष्टव्ये य

आदित्ये यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन्सर्वस्मिन्नन्तरे संचरति सोऽयमात्मा तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम् । श्रोत्रमध्यात्मं श्रोतव्यमधिभूतं दिशस्तत्राधिदैवतं नाडी तेषां निबन्धनं यः श्रोत्रे यः श्रोतव्ये यो दिक्षु यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन्सर्वस्मिन्नन्तरे संचरति सोऽयमात्मा तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम् ॥ नासाध्यात्मं घ्रातव्यमधिभूतं पृथिवी तत्राधिदैवतं नाडी तेषां निबन्धनं यो नासायां यो घ्रातव्ये यः पृथिव्यां यो नाड्यां० नन्तम् ॥ जिह्वाध्यात्मं यो रसयितव्यमधिभूतं वरुणस्तत्राधिदैवतं नाडी तेषां निबन्धनं यो जिह्वायां यो रसयितव्ये यो वरुणे यो नाड्यां० नन्तम् ॥ त्वगध्यात्मं स्पर्शयितव्यमधिभूतं वायुस्तत्राधिदैवतं नाडी तेषां निबन्धनं यस्त्वचि यः स्पर्शयितव्ये यो वायौ यो नाड्यां० नन्तम् ॥ मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रस्तत्राधिदैवतं नाडी तेषां निबन्धनं यो मनसि यो मन्तव्ये यश्चन्द्रे यो नाड्यां० नन्तम् ॥ बुद्धिरध्यात्मं बोद्धव्यमधिभूतं ब्रह्मा तत्राधिदैवतं नाडी तेषां निबन्धनं यो बुद्धौ यो बोद्धव्ये यो ब्रह्मणि यो नाड्यां० नन्तम् ॥ अहंकारोऽध्यात्ममहंकर्तव्यमधिभूतं रुद्रस्तत्राधिदैवतं नाडी तेषां निबन्धनं योऽहंकारे योऽहंकर्तव्ये यो रुद्रे यो नाड्यां० नन्तम् ॥ चित्तमध्यात्मं चेतयितव्यमधिभूतं क्षेत्रज्ञस्तत्राधिदैवतं नाडी तेषां निबन्धनं यश्चित्ते यश्चेतयितव्ये यः क्षेत्रज्ञे यो नाड्यां० नन्तम् ॥ वागध्यात्मं वक्तव्यमधिभूतमग्निस्तत्राधिदैवतं नाडी तेषां निबन्धनं यो वाचि यो वक्तव्ये योऽग्नौ यो नाड्यां० नन्तम् ॥ हस्तावध्यात्ममादातव्यमधिभूतमिन्द्रस्तत्राधिदैवतं नाडी तेषां निबन्धनं यो हस्ते य आदातव्ये य इन्द्रे यो नाड्यां० नन्तम् ॥ पादावध्यात्मं गन्तव्यमधिभूतं विष्णुस्तत्राधिदैवतं नाडी तेषां निबन्धनं यः पादे यो गन्तव्ये यो विष्णौ यो नाड्यां० नन्तम् ॥ पायुरध्यात्मं विसर्जयितव्यमधिभूतं मृत्युस्तत्राधिदैवतं नाडी तेषां निबन्धनं यः पायौ यो विसर्जयितव्ये यो मृत्यौ यो नाड्यां० नन्तम् ॥ उपस्थोऽध्यात्ममानन्दयितव्यमधिभूतं प्रजापतिस्तत्राधिदैवतं नाडी तेषां निबन्धनं य उपस्थे य आनन्दयितव्ये यः प्रजापतौ यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन्सर्वस्मिन्नन्तरे संचरति सोऽयमात्मा तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम् ॥ एष सर्वज्ञ

एष सर्वेश्वर एष सर्वाधिपतिरेषोऽन्तर्याम्येष योनिः सर्वस्य सर्वसौख्यैरुपास्यमानो न च सर्वसौख्यान्युपास्यति वेदशास्त्रैरुपास्यमानो न च वेदशास्त्राण्युपास्यति यस्यान्नमिदं सर्वं न च योऽन्नं भवत्यतः परं सर्वनयनः प्रशास्तान्नमयो भूतात्मा प्राणमय इन्द्रियात्मा मनोमयः संकल्पात्मा विज्ञानमयः कालात्मानन्दमयो लयात्मैकत्वं नास्ति द्वैतं कुतो मर्त्यं नास्त्यमृतं कुतो नान्तःप्रज्ञो न बहिःप्रज्ञो नोभयतःप्रज्ञो न प्रज्ञानघनो न प्रज्ञो नाप्रज्ञोऽपि नो विदितं वेद्यं नास्तीत्येतन्निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम् ॥

इति सुबालोपनिषत्सु पञ्चमः खण्डः ॥ ५ ॥

नैवेह किंचनाग्र आसीदमूलमनाधारमिमाः प्रजाः प्रजायन्ते । दिव्यो देव एको नारायणश्चक्षुश्च द्रष्टव्यं च नारायणः श्रोत्रं च श्रोतव्यं च नारायणो घ्राणं च घ्रातव्यं च नारायणो जिह्वा च रसयितव्यं च नारायणस्त्वक् च स्पर्शयितव्यं च नारायणो मनश्च मन्तव्यं च नारायणो बुद्धिश्च बोद्धव्यं च नारायणोऽहंकारश्चाहंकर्तव्यं च नारायणश्चित्तं च चेतयितव्यं च नारायणो वाक् च वक्तव्यं च नारायणो हस्तौ चादातव्यं च नारायणः पादौ च गन्तव्यं च नारायणः पायुश्च विसर्जयितव्यं च नारायण उपस्थश्चानन्दयितव्यं च नारायणो धाता विधाता कर्ता विकर्ता दिव्यो देव एको नारायण आदित्या रुद्रा मरुतो वसवोऽश्विनावृचो यजूंषि सामानि मन्त्रोऽग्निराज्याहुतिर्नारायण उद्भवः संभवो दिव्यो देव एको नारायणो माता पिता भ्राता निवासः शरणं सुहृद्गतिर्नारायणो विराजा सुदर्शनाजितासोम्यामोघाकुमारामृतासत्यामध्यमानासीराशिशुरासूरासूर्याभास्वराविज्ञेयानि नाडीनामानि दिव्यानि गर्जति गायति वाति वर्षति वरुणोऽर्यमा चन्द्रमाः कला कलिर्धाता ब्रह्मा प्रजापतिर्मघवा दिवसाश्चार्धदिवसाश्च कलाः कल्पाश्चोर्ध्वं च दिशश्च सर्वं नारायणः ॥ पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ तदेतन्निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम् ॥

इति सुबालोपनिषत्सु षष्ठः खण्डः ॥ ६ ॥

अन्तःशरीरे निहितो गुहायामज एको नित्यो यस्य पृथिवी शरीरं यः पृथिवीमन्तरे संचरन् यं पृथिवी न वेद ॥ यस्यापः शरीरं योऽपोन्तरे संच-

न्न्यसापो न विदुः ॥ यस्य तेजः शरीरं यस्तेजोन्तरे संचरन् यं तेजो न वेद । यस्य वायुः शरीरं यो वायुमन्तरे संचरन् यं वायुर्न वेद ॥ यस्याकाशः शरीरं य आकाशमन्तरे संचरन् यमाकाशो न वेद ॥ यस्य मनः शरीरं यो मनोन्तरे संचरन् यं मनो न वेद ॥ यस्य बुद्धिः शरीरं यो बुद्धिमन्तरे संचरन् यं बुद्धिर्न वेद ॥ यस्याहंकारः शरीरं योऽहंकारमन्तरे संचरन् यमहंकारो न वेद ॥ यस्य चित्तं शरीरं यश्चित्तमन्तरे संचरन् यं चित्तं न वेद ॥ यस्याव्यक्तं शरीरं योऽव्यक्तमन्तरे संचरन् यमव्यक्तं न वेद ॥ यस्याक्षरं शरीरं योऽक्षरमन्तरे संचरन् यमक्षरं न वेद ॥ यस्य मृत्युः शरीरं यो मृत्युमन्तरे संचरन् यं मृत्युर्न वेद ॥ स एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः ॥ एतां विद्यामपान्तरतमाय ददावपान्तरतमो ब्रह्मणे ददौ ब्रह्मा घोराङ्गिरसे ददौ घोराङ्गिरा रैक्वाय ददौ रैक्वो रामाय ददौ रामः सर्वेभ्यो भूतेभ्यो ददावित्येवं निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम् ॥

इति सुबालोपनिषत्सु सप्तमः खण्डः ॥ ७ ॥

अन्तःशरीरे निहितो गुहायां शुद्धः सोऽयमात्मा सर्वस्य मेदोमांसक्लेदावकीर्णे शरीरमध्येऽत्यन्तोपहते चित्रभित्तिप्रतीकाशे गान्धर्वनगरोपमे कदलीगर्भवन्निःसारे जलबुद्बुदवच्चञ्चले निःसृतमात्मानमचिन्त्यरूपं दिव्यं देवमसङ्गं शुद्धं तेजस्कायमरूपं सर्वेश्वरमचिन्त्यमशरीरं निहितं गुहायाममृतं बिभ्राजमानमानन्दं तं पश्यन्ति विद्वांसस्तेन लये न पश्यन्ति ॥

इति सुबालोपनिषत्स्वष्टमः खण्डः ॥ ८ ॥

अथ हैनं रैक्वः पप्रच्छ भगवन्कस्मिन्सर्वेऽस्तं गच्छन्तीति ॥ तस्मै स होवाच चक्षुरेवाप्येति यश्चक्षुरेवास्तमेति द्रष्टव्यमेवाप्येति यो द्रष्टव्यमेवास्तमेत्यादित्यमेवाप्येति य आदित्यमेवास्तमेति विराजमेवाप्येति यो विराजमेवास्तमेति प्राणमेवाप्येति यः प्राणमेवास्तमेति विज्ञानमेवाप्येति यो विज्ञानमेवास्तमेत्यानन्दमेवाप्येति य आनन्दमेवास्तमेति तुरीयमेवाप्येति यस्तुरीयमेवास्तमेति तदमृतमभयमशोकमनन्तनिर्बीजमेवाप्येतीति होवाच ॥ श्रोत्रमेवाप्येति यः श्रोत्रमेवास्तमेति श्रोतव्यमेवाप्येति यः श्रोतव्यमेवास्तमेति दिशमेवाप्येति यो दिशमेवास्तमेति सुदर्शनामेवाप्येति यः सुदर्शनामेवास्तमेत्यपानमेवाप्येति योऽपानमेवास्तमेति विज्ञानमेवाप्येति यो विज्ञानमेवास्तमेति तदमृतमभयमशोकमनन्तनिर्बीजमेवाप्येतीति होवाच ॥ नासामेवाप्येति यो

नासामेवाप्येति घ्रातव्यमेवाप्येति यो घ्रातव्यमेवास्तमेति पृथिवीमेवाप्येति यः पृथिवीमेवास्तमेति जितामेवाप्येति यो जितामेवास्तमेति व्यानमेवाप्येति यो व्यानमेवास्तमेति विज्ञानमेवाप्येति तदमृत० होवाच ॥ जिह्वामेवाप्येति यो जिह्वामेवास्तमेति रसयितव्यमेवाप्येति यो रसयितव्यमेवास्तमेति वरुणमेवाप्येति यो वरुणमेवास्तमेति सौम्यामेवाप्येति यः सौम्यामेवास्तमेत्युदानमेवाप्येति य उदानमेवास्तमेति विज्ञानमेवाप्येति तदमृत० होवाच ॥ त्वचमेवाप्येति यस्त्वचमेवास्तमेति स्पर्शयितव्यमेवाप्येति यः स्पर्शयितव्यमेवास्तमेति वायुमेवाप्येति यो वायुमेवास्तमेति मेधामेवाप्येति यो मेधामेवास्तमेति समानमेवाप्येति यः समानमेवास्तमेति विज्ञानमेवाप्येति तदमृत० होवाच ॥ वाचमेवाप्येति यो वाचमेवास्तमेति वक्तव्यमेवाप्येति यो वक्तव्यमेवास्तमेत्यग्निमेवाप्येति योऽग्निमेवास्तमेति कुमारामेवाप्येति यः कुमारामेवास्तमेति वैरम्भमेवाप्येति यो वैरम्भमेवास्तमेति विज्ञानमेवाप्येति तदमृत० होवाच ॥ हस्तमेवाप्येति यो हस्तमेवास्तमेत्यादातव्यमेवाप्येति य आदातव्यमेवास्तमेतीन्द्रमेवाप्येति य इन्द्रमेवास्तमेत्यमृतामेवाप्येति योऽमृतामेवास्तमेति मुख्यमेवाप्येति यो मुख्यमेवास्तमेति विज्ञानमेवाप्येति तदमृत० होवाच ॥ पादमेवाप्येति यः पादमेवास्तमेति गन्तव्यमेवाप्येति यो गन्तव्यमेवास्तमेति विष्णुमेवाप्येति यो विष्णुमेवास्तमेति सत्यामेवाप्येति यः सत्यामेवास्तमेत्यन्तर्याममेवाप्येति योऽन्तर्याममेवास्तमेति विज्ञानमेवाप्येति तद० होवाच ॥ पायुमेवाप्येति यः पायुमेवास्तमेति विसर्जयितव्यमेवाप्येति यो विसर्जयितव्यमेवास्तमेति मृत्युमेवाप्येति यो मृत्युमेवास्तमेति मध्यमामेवाप्येति यो मध्यमामेवास्तमेति प्रभञ्जनमेवाप्येति यः प्रभञ्जनमेवास्तमेति विज्ञानमेवाप्येति तद० होवाच ॥ उपस्थमेवाप्येति य उपस्थमेवास्तमेत्यानन्दयितव्यमेवाप्येति य आनन्दयितव्यमेवास्तमेति प्रजापतिमेवाप्येति यः प्रजापतिमेवास्तमेति नासीरामेवाप्येति यो नासीरामेवास्तमेति कुमारमेवाप्येति यः कुमारमेवास्तमेति विज्ञानमेवाप्येति तदमृत० होवाच ॥ मन एवाप्येति यो मन एवास्तमेति मन्तव्यमेवाप्येति यो मन्तव्यमेवास्तमेति चन्द्रमेवाप्येति यश्चन्द्रमेवास्तमेति शिशुमेवाप्येति यः शिशुमेवास्तमेति श्येनमेवाप्येति यः श्येनमेवास्तमेति विज्ञानमेवाप्येति तदमृत० होवाच ॥ बुद्धिमेवाप्येति यो बुद्धिमेवास्तमेति बोद्धव्यमेवाप्येति यो बोद्धव्यमेवास्तमेति ब्रह्माणमेवा-

प्येति यो ब्रह्माणमेवास्तमेति सूर्यमेवाप्येति यः सूर्यमेवास्तमेति कृष्णमेवाप्येति यः कृष्णमेवास्तमेति विज्ञानमेवाप्येति तदमृत० होवाच ॥ अहंकारमेवाप्येति योऽहंकारमेवास्तमेत्यहंकर्तव्यमेवाप्येति योऽहंकर्तव्यमेवास्तमेति रुद्रमेवाप्येति यो रुद्रमेवास्तमेत्यसुरामेवाप्येति योऽसुरामेवास्तमेति श्वेतमेवाप्येति यः श्वेतमेवास्तमेति विज्ञानमेवाप्येति तदमृत० होवाच चित्तमेवाप्येति यश्चित्तमेवास्तमेति चेतयितव्यमेवाप्येति यश्चेतयितव्यमेवास्तमेति क्षेत्रज्ञमेवाप्येति यः क्षेत्रज्ञमेवास्तमेति भास्वतीमेवाप्येति यो भास्वतीमेवास्तमेति नागमेवाप्येति यो नागमेवास्तमेति विज्ञानमेवाप्येति यो विज्ञानमेवास्तमेत्यानन्दमेवाप्येति य आनन्दमेवास्तमेति तुरीयमेवाप्येति यस्तुरीयमेवास्तमेति तदमृतमभयमशोकमनन्तं निर्बीजमेवाप्येति तदमृत० होवाच ॥ य एवं निर्बीजं वेद निर्बीज एव स भवति न जायते न म्रियते न मुह्यते न भिद्यते न दह्यते न छिद्यते न कम्पते न कुप्यते सर्वदहनोऽयमात्मेत्याचक्षते नैवमात्मा प्रवचनशतेनापि लभ्यते न बहुश्रुतेन बुद्धिज्ञानाश्रितेन न मेधया न वेदैर्न यज्ञैर्न तपोभिरुग्रैर्न सांख्यैर्न योगैर्नाश्रमैर्नान्यैरात्मानमुपलभन्ते प्रवचनेन प्रशंसया व्युत्थानेन तमेतं ब्राह्मणा शुश्रुवांसोऽनूचाना उपलभन्ते शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति सर्वस्यात्मा भवति य एवं वेद ॥

इति सुबालोपनिषत्सु नवमः खण्डः ॥ ९ ॥

अथ हैनं रैक्वः पप्रच्छ भगवन्कस्मिन्सर्वे संप्रतिष्ठिता भवन्तीति रसातललोकेष्विति होवाच कस्मिन्रसातललोका ओताश्च प्रोताश्चेति भूर्लोकेष्विति होवाच । कस्मिन्भूर्लोका ओताश्च प्रोताश्चेति भुवर्लोकेष्विति होवाच । कस्मिन्भुवर्लोका ओताश्च प्रोताश्चेति सुवर्लोकेष्विति होवाच । कस्मिन्सुवर्लोका ओताश्च प्रोताश्चेति महर्लोकेष्विति होवाच । कस्मिन्महर्लोका ओताश्च प्रोताश्चेति जनोलोकेष्विति होवाच । कस्मिन् जनोलोका ओताश्च प्रोताश्चेति तपोलोकेष्विति होवाच । कस्मिँस्तपोलोका ओताश्च प्रोताश्चेति सत्यलोकेष्विति होवाच कस्मिन्सत्यलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेष्विति होवाच । कस्मिन्प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेष्विति होवाच । कस्मिन्ब्रह्मलोका ओताश्च प्रोताश्चेति सर्वलोका आत्मनि ब्रह्मणि मणय इवौताश्च प्रोताश्चेति स होवाच । एवमेतान् लोकानात्मनि प्रतिष्ठितान्वेदात्मैव स भवतीत्येतन्निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम् ॥

इति सुबालोपनिषत्सु दशमः खण्डः ॥ १० ॥

अथ हैनं रैक्कः पप्रच्छ भगवन्योऽयं विज्ञानघन उत्क्रामन्स केन कतरद्वाव स्थानमुत्सृज्यापाक्रामतीति तस्मै स होवाच। हृदयस्य मध्ये लोहितं मांसपिण्डं यस्मिंस्तद्दहरं पुण्डरीकं कुमुदमिवानेकधा विकसितं तस्य मध्ये समुद्रः समुद्रस्य मध्ये कोशस्तस्मिन्नाड्यश्चतस्रो भवन्ति रमारमेच्छाऽपुनर्भवेति तत्र रमा पुण्येन पुण्यं लोकं नयत्यरमा पापेन पापमिच्छया यत्स्मरति तदभिसंपद्यते अपुनर्भवया कोशं भिनत्ति कोशं भित्त्वा शीर्षकपालं भिनत्ति शीर्षकपालं भित्त्वा पृथिवीं भिनत्ति पृथिवीं भित्त्वाऽपो भिनत्त्यापो भित्त्वा तेजो भिनत्ति तेजो भित्त्वा वायुं भिनत्ति वायुं भित्त्वाकाशं भिनत्त्याकाशं भित्त्वा मनो भिनत्ति मनो भित्त्वा भूतादिं भिनत्ति भूतादिं भित्त्वा महान्तं भिनत्ति महान्तं भित्त्वाव्यक्तं भिनत्त्यव्यक्तं भित्त्वाक्षरं भिनत्त्यक्षरं भित्त्वा मृत्युं भिनत्ति मृत्युर्वै परे देव एकीभवतीति परस्तान्न सन्नासन्न सदसदित्येतन्निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम् ॥

इति सुबालोपनिषत्स्वेकादशः खण्डः ॥ ११ ॥

ॐ नारायणाद्वा अन्नमागतं पक्वं ब्रह्मलोके महासंवर्तके पुनः पक्वमादित्ये पुनः पक्वं क्रव्यादि पुनः पक्वं जालकिलक्लिन्नं पर्युषितं पूतमन्नमयाचितमसंक्लृप्तमश्नीयान्न कंचन याचेत ॥

इति सुबालोपनिषत्सु द्वादशः खण्डः ॥ १२ ॥

बाल्येन तिष्ठासेद्बालस्वभावोऽसङ्गो निरवद्यो मौनेन पाण्डित्येन निरवधिकारतयोपलभ्येत कैवल्यमुक्तं निगमनं प्रजापतिरुवाच महत्पदं ज्ञात्वा वृक्षमूले वसेत कुचेलोऽसहाय एकाकी समाधिस्थ आत्मकाम आप्तकामो निष्कामो जीर्णकामो हस्तिनि सिंहे दंशे मशके नकुले सर्पराक्षसगन्धर्वे मृत्यो रूपाणि विदित्वा न बिभेति कुतश्चनेति वृक्षमिव तिष्ठासेच्छिद्यमानोऽपि न कुप्येत न कम्पेतोत्पलमिव तिष्ठासेच्छिद्यमानोऽपि न कुप्येत न कम्पेताकाशमिव तिष्ठासेच्छिद्यमानोऽपि न कुप्येत न कम्पेत सत्येन तिष्ठासेत्सत्योऽयमात्मा सर्वेषामेव गन्धानां पृथिवी हृदयं सर्वेषामेव रसानामापो हृदयं सर्वेषामेव रूपाणां तेजो हृदयं सर्वेषामेव स्पर्शानां वायुर्हृदयं सर्वेषामेव शब्दानामाकाशं हृदयं सर्वेषामेव गतीनामव्यक्तं हृदयं सर्वेषामेव सत्त्वानां मृत्युर्हृदयं मृत्युर्वै परे देव एकीभवतीति परस्तान्न सन्नासन्न सदसदित्येतन्निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम् ॥

इति सुबालोपनिषत्सु त्रयोदशः खण्डः ॥ १३ ॥

ॐ पृथिवी वान्नमापोऽन्नाद। आपो वान्नं ज्योतिरन्नादं ज्योतिर्वान्नं वायुरन्नादो वायुर्वान्नमाकाशोऽन्नाद आकाशो वान्नमिन्द्रियाण्यन्नादानीन्द्रियाणि वान्नं मनोऽन्नादं मनो वान्नं बुद्धिरन्नादा बुद्धिर्वान्नमव्यक्तमन्नादमव्यक्तं वान्नमक्षरमन्नादमक्षरं वान्नं मृत्युरन्नादो मृत्युर्वै परे देव एकीभवतीति परस्तान्न सन्नासन्न सदसदित्येतन्निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम्॥

इति सुबालोपनिषत्सु चतुर्दशः खण्डः ॥ १४ ॥

अथ हैनं रैक्कः पप्रच्छ भगवन्योऽयं विज्ञानघन उत्क्रामन्स केन कतरद्वाव स्थानं दहतीति तस्मै स होवाच योऽयं विज्ञानघन उत्क्रामन्प्राणं दहत्यपानं व्यानमुदानं समानं वैरम्भं मुख्यमन्तर्यामं प्रभञ्जनं कुमारं श्येनं श्वेतं कृष्णं नागं दहति पृथिव्यापस्तेजोवाय्वाकाशं दहति जागरितं स्वप्नं सुषुप्तं तुरीयं च महतां च लोकं परं च लोकं दहति लोकालोकं दहति धर्माधर्मं दहत्यभास्करममर्यादं निरालोकमतः परं दहति महान्तं दहत्यव्यक्तं दहत्यक्षरं दहति मृत्युं दहति मृत्युर्वै परे देव एकीभवतीति परस्तान्न सन्नासन्न सदसदित्येतन्निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम् ॥

इति सुबालोपनिषत्सु पञ्चदशः खण्डः ॥ १५ ॥

सौबालबीजब्रह्मोपनिषन्नाप्रशान्ताय दातव्या नापुत्राय नाशिष्याय नासंवत्सररात्रोषिताय नापरिज्ञातकुलशीलाय दातव्या नैव च प्रवक्तव्या। यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन इत्येतन्निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम् ॥

इति सुबालोपनिषत्सु षोडशः खण्डः ॥ १६ ॥

ॐ पूर्णमद इति शान्तिः ॥

इति सुबालोपनिषत्समाप्ता ॥ ३२ ॥

---

# क्षुरिकोपनिषत् ॥ ३३ ॥

कैवल्यनाडीकान्तस्थपराभूमिनिवासिनम् ।
क्षुरिकोपनिषद्योगभासुरं राममाश्रये ॥

ॐ पूर्णमद इति शान्तिः ॥

ॐ क्षुरिकां संप्रवक्ष्यामि धारणां योगसिद्धये। यां प्राप्य न पुनर्जन्म योगयुक्तः स जायते ॥ वेदतत्त्वार्थविहितं यथोक्तं हि स्वयंभुवा ॥ १ ॥ निःशब्दं देशमास्थाय तत्रासनमवस्थितः । कूर्मोऽङ्गानीव संहृत्य मनो हृदि निरुध्य च ॥ २ ॥ मात्राद्वादशयोगेन प्रणवेन शनैः शनैः ।

पूरयेत्सर्वमात्मानं सर्वद्वारान्निरुध्य च ॥ ३ ॥ उरोमुखकटिग्रीवं किंचिद्धृदयमुन्नतम् । प्राणान्संचारयेत्तस्मिन्नासाभ्यन्तरचारिणः ॥ ४ ॥ भूत्वा तत्र गतः प्राणः शनैरथ समुत्सृजेत् ॥ ५ ॥ स्थिरमात्रादृढं कृत्वा अङ्गुष्ठेन समाहितः । द्वे तु गुल्फे प्रकुर्वीत जङ्घे चैव त्रयस्त्रयः ॥ द्वे जानुनी तथोरुभ्यां गुदे शिश्ने त्रयस्त्रयः ॥ ६ ॥ वायोरायतनं चात्र नाभिदेशे समाश्रयेत् । तत्र नाडी सुषुम्ना तु नाडीभिर्बहुभिर्वृता ॥ अणुरक्ताश्च पीताश्च कृष्णास्ताम्रविलोहिताः ॥ ७ ॥ अतिसूक्ष्मां च तन्वीं च शुक्लां नाडीं समाश्रयेत् । ततः संचारयेत्प्राणानूर्णनाभीव तन्तुना ॥ ८ ॥ ततो रक्तोत्पलाभासं पुरुषायतनं महत् । दहरं पुण्डरीकेति वेदान्तेषु निगद्यते ॥ तद्भित्त्वा कण्ठमायाति तां नाडीं पूरयन्यतः ॥ ९ ॥ मनसस्तु क्षुरं गृह्य सुतीक्ष्णं बुद्धिनिर्मलम् ॥ पादस्योपरि मर्मृज्य तद्रूपं नाम कृन्तयेत् ॥ १० ॥ मनोद्वारेण तीक्ष्णेन योगमाश्रित्य नित्यशः । इन्द्रवज्र इति प्रोक्तं मर्मजङ्घानुकीर्तनम् ॥ तद्ध्यानबलयोगेन धारणाभिर्निकृन्तयेत् ॥ ११ ॥ ऊरोर्मध्ये तु संस्थाप्य मर्मप्राणविमोचनम् ॥ चतुरभ्यासयोगेन छिन्देदनभिशङ्कितः ॥ १२ ॥ ततः कण्ठान्तरे योगी समूहं नाडिसंचयम् । एकोत्तरं नाडिशतं तासां मध्ये वराः स्मृताः ॥ १३ ॥ इडा रक्षतु वामेन पिङ्गला दक्षिणेन तु । तयोर्मध्ये वरं स्थानं यस्तं वेद स वेदवित् ॥ १४ ॥ सुषुम्ना तु परे लीना विरजा ब्रह्मरूपिणी । द्वासप्ततिसहस्राणि प्रति नाडीषु तैतिलम् ॥ छिद्यन्ते ध्यानयोगेन सुषुम्नैका न छिद्यते ॥ १५ ॥ योगनिर्मलधारेण क्षुरेणामलवर्चसा । छिन्देन्नाडीशतं धीरः प्रभावादिह जन्मनि ॥ १६ ॥ जातीपुष्पसमायोगैर्यथा वास्यन्ति तैतिलम् । एवं शुभाशुभैर्भावैः सा नाडी तां विभावयेत् ॥ १७ ॥ तद्भाविताः प्रपद्यन्ते पुनर्जन्मविवर्जिताः ॥ १८ ॥ ततो विदितचित्तस्तु निःशब्दं देशमास्थितः । निःसङ्गस्तत्त्वयोगज्ञो निरपेक्षः शनैः शनैः ॥ १९ ॥ पाशं छित्त्वा यथा हंसो निर्विशङ्कः खमुत्क्रमेत् । छिन्नपाशस्तथा जीवः संसारं तरते तदा ॥ २० ॥ यथा निर्वाणकाले तु दीपो दग्ध्वा लयं व्रजेत् । तथा सर्वाणि कर्माणि योगी दग्ध्वा लयं व्रजेत् ॥ २१ ॥ प्राणायामसुतीक्ष्णेन मात्राधारेण योगवित् । वैराग्योपलघृष्टेन छित्त्वा तन्तुं न बध्यते ॥ २२ ॥ अमृतत्वं समाप्नोति यदा कामात्प्रमुच्यते । सर्वैषणाविनिर्मुक्तश्छित्त्वा तन्तुं न बध्यते छित्त्वा तन्तुं न बध्यत इति ॥ २३ ॥

इत्याथर्वणीयक्षुरिकोपनिषत्समाप्ता ॥ ३३ ॥

---

# मन्त्रिकोपनिषत् ॥ ३४ ॥

स्वाविद्याद्वयतत्कार्यापह्नवज्ञानभासुरम् ।
मन्त्रिकोपनिषद्वेद्यं रामचन्द्रमहं भजे ॥
ॐ पूर्णमद इति शान्तिः ॥

ॐ अष्टपादं शुचिं हंसं त्रिसूत्रमणुमव्ययम् । त्रिवर्त्मानं तेजसोऽहं सर्वतः-पश्यन्न पश्यति ॥ १ ॥ भूतसंमोहने काले भिन्ने तमसि वैखरे । अन्तः पश्यन्ति सत्त्वस्था निर्गुणं गुणगह्वरे ॥२॥ अशक्यः सोऽन्यथा द्रष्टुं ध्यायमानः कुमारकैः । विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् ॥ ३ ॥ ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः । सूयते पुरुषार्थं च तेनैवाधिष्ठितं जगत् ॥ ४ ॥ गौरनाद्यन्तवती सा जनित्री भूतभाविनी । सितासिता च रक्ता च सर्वकाम-दुघा विभोः ॥ ५ ॥ पिबन्त्येनामविषयामविज्ञातां कुमारकाः । एकस्तु पिबते देवः स्वच्छन्दोऽत्र वशानुगः ॥ ६ ॥ ध्यानक्रियाभ्यां भगवान्भुङ्क्तेऽसौ प्रसह-द्विभुः । सर्वसाधारणीं दोग्ध्रीं पीयमानां तु यज्वभिः ॥ ७ ॥ पश्यन्त्यस्यां महात्मानः सुवर्णं पिप्पलाशनम् । उदासीनं ध्रुवं हंसं स्नातकाध्वर्यवो जगुः ॥ ८ ॥ शंसन्तमनुशंसन्ति बह्वृचाः शास्त्रकोविदाः । रथन्तरं बृहत्साम सप्त-वैधैस्तु गीयते ॥ ९ ॥ मन्त्रोपनिषदं ब्रह्म पदक्रमसमन्वितम् । पठन्ति भार्गवा ह्येते ह्यथर्वाणो भृगूत्तमाः ॥ १० ॥ सब्रह्मचारिवृत्तिश्च स्तम्भोऽथ फलि-तस्तथा । अनड्वान्रोहितोच्छिष्टः पश्यन्ते बहुविस्तरम् ॥ ११ ॥ कालः प्राणश्च भगवान्मृत्युः शर्वो महेश्वरः । उग्रो भवश्च रुद्रश्च ससुरः सासुरस्तथा ॥१२॥ प्रजापतिर्विराट् चैव पुरुषः सलिलमेव च । स्तूयते मन्त्रसंस्तुत्यैरथर्वविदितै-र्विभुः ॥ १३ ॥ तं षड्विंशक इत्येते सप्तविंशं तथापरे । पुरुषं निर्गुणं सांख्य-मथर्वशिरसो विदुः ॥ १४ ॥ चतुर्विंशतिसंख्यातं व्यक्तमव्यक्तमेव च । अद्वैतं द्वैतमित्याहुस्त्रिधा तं पञ्चधा तथा ॥ १५ ॥ ब्रह्माद्यं स्थावरान्तं च पश्यन्ति ज्ञानचक्षुषः । तमेकमेव पश्यन्ति परिशुभ्रं विभुं द्विजाः ॥ १६ ॥ यस्मि-न्सर्वमिदं प्रोतं ब्रह्म स्थावरजंगमम् । तस्मिन्नेव लयं यान्ति स्रवन्त्यः सागरे यथा ॥ १७ ॥ यस्मिन्भावाः प्रलीयन्ते लीनाश्चाव्यक्ततां ययुः । पश्यन्ति व्यक्ततां भूयो जायन्ते बुद्बुदा इव ॥ १८ ॥ क्षेत्रज्ञाधिष्ठितं चैव कारणैर्विद्यते पुनः । एवं स भगवान्देवं पश्यन्त्यन्ये पुनःपुनः ॥ १९ ॥ ब्रह्म ब्रह्मेत्यथा-यान्ति ये विदुर्ब्राह्मणास्तथा । अत्रैव ते लयं यान्ति लीनाश्चाव्यक्तशालिनः लीनाश्चाव्यक्तशालिन इत्युपनिषत् ॥

ॐ पूर्णमद इति शान्तिः ॥

इति यजुर्वेदीयमन्त्रिकोपनिषत्समाप्ता ॥ ३४ ॥

# सर्वसारोपनिषत् ॥ ३५ ॥

समस्तवेदान्तसारसिद्धान्तार्थकलेवरम् ।
विकलेवरकैवल्यं रामचन्द्रपदं भजे ॥
सर्वसारं निरालम्बं रहस्यं वज्रसूचिकम् ।
तेजोनादध्यानविद्यायोगतत्त्वात्मबोधकम् ॥
ॐ सह नाववत्विति शान्तिः ॥

ॐ कथं बन्धः कथं मोक्षः काऽविद्या का विद्येति जाग्रत्स्वप्नं सुषुप्तं तुरीयं च कथम्, अन्नमयः प्राणमयो मनोमयो विज्ञानमय आनन्दमयः कथं, कर्ता जीवः क्षेत्रज्ञः साक्षी कूटस्थोऽन्तर्यामी कथं प्रत्यगात्मा परमात्मात्मा माया चेति कथम् । आत्मेश्वरोऽनात्मनो देहादीनात्मत्वेनाभिमन्यते सोऽभिमान आत्मनो बन्धस्तन्निवृत्तिर्मोक्षस्तदभिमानं कारयति या साऽविद्या, सोऽभिमानो ययाऽभिनिवर्तते सा विद्या । मनआदिचतुर्दशकरणैः पुष्कलैरादित्याद्यनुगृहीतैः शब्दादीन्विषयान्स्थूलान्यदोपलभते तदात्मनो जागरणं, तद्वासनारहितश्चतुर्भिः करणैः शब्दाद्यभावेऽपि वासनामयाञ्शब्दादीन्यदोपलभते तदात्मनः स्वप्नम् । चतुर्दशकरणोपरमाद्विशेषविज्ञानाभावाद्यदा तदात्मनः सुषुप्तम् ॥ १ ॥ अवस्थात्रयभावाभावसाक्षि स्वयं भावाभावरहितं नैरन्तर्यं चैक्यं यदा तदा तत्तुरीयं चैतन्यमित्युच्यतेऽन्नकार्याणां षण्णां कोशानां समूहोऽन्नमयः कोश इत्युच्यते । प्राणादिचतुर्दशवायुभेदा अन्नमये कोशे यदा वर्तन्ते तदा प्राणमयः कोश इत्युच्यत एतत्कोशद्वयसंयुक्तो मनआदिचतुर्भिः करणैरात्मा शब्दादिविषयान्संकल्पादिधर्मान्यदा करोति तदा मनोमयः कोश इत्युच्यते । एतत्कोशत्रयसंयुक्तस्तद्गतविशेषाविशेषज्ञो यदाऽवभासते तदा विज्ञानमयः कोश इत्युच्यते । एतत्कोशचतुष्टयं स्वकारणाज्ञाने वटकणिकायामिव गुप्तवटवृक्षो यदा वर्तते तदानन्दमयकोश इत्युच्यते । सुखदुःखबुद्ध्याश्रयो देहान्तः कर्ता यदा तदेष्टविषये बुद्धिः सुखबुद्धिरनिष्टविषये बुद्धिर्दुःखबुद्धिः शब्दस्पर्शरूपरसगन्धाः सुखदुःखहेतवः । पुण्यपापकर्मानुसारी भूत्वा प्राप्तशरीरसंधिर्योगमप्राप्तशरीरसंयोगमिव कुर्वाणो यदा दृश्यते तदोपहितत्वाज्जीव इत्युच्यते । मनआदिश्च प्राणादिश्च सत्त्वादिश्चेच्छादिश्च पुण्यादिश्चैते पञ्चवर्गा इत्येतेषां पञ्चवर्गाणां धर्मी भूतात्मज्ञानादृते न विनश्यति । आत्मसंनिधौ नित्यत्वेन प्रतीयमान आत्मोपाधिर्यस्तल्लिङ्गं शरीरं हृद्ग्रन्थिरित्युच्यते तत्र यत्प्रकाशते चैतन्यं स क्षेत्रज्ञ इत्युच्यते ॥ २ ॥

ज्ञातृज्ञानज्ञेयानामाविर्भावतिरोभावज्ञाता स्वयमेवमाविर्भावतिरोभावहीनः स्वयंज्योतिः स साक्षीत्युच्यते ब्रह्मादिपिपीलिकापर्यन्तं सर्वप्राणिबुद्धिष्वविशिष्टतयोपलभ्यमानः सर्वप्राणिबुद्धिस्थो यदा तदा कूटस्थ इत्युच्यते । कूटस्थाद्युपहितभेदानां स्वरूपलाभहेतुर्भूत्वा मणिगणसूत्रमिव सर्वक्षेत्रेष्वनुस्यूतत्वेन यदा प्रकाशत आत्मा तदान्तर्यामीत्युच्यते सर्वोपाधिविनिर्मुक्तः सुवर्णवद्विज्ञानघनश्चिन्मात्रस्वरूप आत्मा स्वतन्त्रो यदाऽवभासते तदा त्वंपदार्थः प्रत्यगात्मेत्युच्यते । सत्यं ज्ञानमनन्तमानन्दं ब्रह्म सत्यमविनाशि नामदेशकालवस्तुनिमित्तेषु विनश्यत्सु यन्न विनश्यत्यविनाशि तत्सत्यमित्युच्यते । ज्ञानमित्युत्पत्तिविनाशरहितं चैतन्यं ज्ञानमित्यभिधीयते ॥ ३ ॥ अनन्तं नाम मृद्विकारेषु मृदिव सुवर्णविकारेषु सुवर्णमिव तन्तुकार्येषु तन्तुरिवाव्यक्तादिसृष्टिप्रपञ्चेषु पूर्वं व्यापकं चैतन्यमनन्तमित्युच्यत आनन्दो नाम सुखचैतन्यस्वरूपोऽपरिमितानन्दसमुद्रोऽविशिष्टसुखरूपश्चानन्द इत्युच्यते । एतद्वस्तुचतुष्टयं यस्य लक्षणं देशकालवस्तुनिमित्तेष्वव्यभिचारि स तत्पदार्थः परमात्मा परं ब्रह्मेत्युच्यते । त्वंपदार्थादौपाधिकात्तत्पदार्थादौपाधिकाद्विलक्षण आकाशवत्सर्वगतः सूक्ष्मः केवलः सत्तामात्रोऽसिपदार्थः स्वयंज्योतिरात्मेत्युच्यतेऽतत्पदार्थश्चात्मेत्युच्यते । अनादिरन्तर्वती प्रमाणाप्रमाणसाधारणा न सती नासती न सदसती स्वयमविकाराद्विकारहेतौ निरूप्यमाणेऽसती । अनिरूप्यमाणे सती लक्षणशून्या सा मायेत्युच्यते ॥ ४ ॥

इत्याथर्वणीयसर्वसारोपनिषत्समाप्ता ॥ ३५ ॥

---

# निरालम्बोपनिषत् ॥ ३६ ॥

यत्रालम्बालम्बिभावो विद्यते न कदाचन ।
ज्ञविज्ञसम्यग्ज्ञालम्बं निरालम्बं हरिं भजे ॥

ॐ पूर्णमद इति शान्तिः ॥

ॐ नमः शिवाय गुरवे सच्चिदानन्दमूर्तये । निष्प्रपञ्चाय शान्ताय निरालम्बाय तेजसे ॥ निरालम्बं समाश्रित्य सालम्बं विजहाति यः । स संन्यासी च योगी च कैवल्यं पदमश्नुते । एषामज्ञानजन्तूनां समस्तारिष्टशान्तये । यद्यद्बोद्धव्यमखिलं तदाशङ्क्य ब्रवीम्यहम् ॥ किं ब्रह्म । क ईश्वरः । को जीवः । का प्रकृतिः । कः परमात्मा । को ब्रह्मा । को विष्णुः । को रुद्रः । क इन्द्रः ।

कः शमनः । कः सूर्यः । कश्चन्द्रः । के सुराः । के असुराः । के पिशाचाः । के मनुष्याः । काः स्त्रियः । के पश्वादयः । किं स्थावरम् । के ब्राह्मणादयः । का जातिः । किं कर्म । किमकर्म । किं ज्ञानम् । किमज्ञानम् । किं सुखम् । किं दुःखम् । कः स्वर्गः । को नरकः । को बन्धः । को मोक्षः । क उपास्यः । कः शिष्यः । को विद्वान् । को मूढः । किमासुरम् । किं तपः । किं परमं पदम् । किं ग्राह्यम् । किमग्राह्यम् । कः संन्यासीत्याशङ्क्याह ब्रह्मेति । स होवाच महदहंकारपृथिव्यप्तेजोवाय्वाकाशत्वेन बृहद्रूपेणाण्डकोशेन कर्मज्ञानार्थरूपतया भासमानमद्वितीयमखिलोपाधिविनिर्मुक्तं तत्सकलशक्त्युपबृंहितमनाद्यनन्तं शुद्धं शिवं शान्तं निर्गुणमित्यादिवाच्यमनिर्वाच्यं चैतन्यं ब्रह्म ॥ ईश्वर इति च ॥ ब्रह्मैव स्वशक्तिं प्रकृत्यभिधेयामाश्रित्य लोकान्सृष्ट्वा प्रविश्यान्तर्यामित्वेन ब्रह्मादीनां बुद्धीन्द्रियनियन्तृत्वादीश्वरः जीव इति च ब्रह्मविष्णवीशानेन्द्रादीनां नामरूपद्वारा स्थूलोऽहमिति मिथ्याध्यासवशाज्जीवः । सोऽहमेकोऽपि देहारम्भकभेदवशाद्बहुजीवः । प्रकृतिरिति च ब्रह्मणः सकाशान्नानाविचित्रजगन्निर्माणसामर्थ्यबुद्धिरूपा ब्रह्मशक्तिरेव प्रकृतिः । परमात्मेति च देहादेः परतरत्वाद्ब्रह्मैव परमात्मा स ब्रह्मा स विष्णुः स इन्द्रः स शमनः स सूर्यः स चन्द्रस्ते सुरास्ते असुरास्ते पिशाचास्ते मनुष्यास्ताः स्त्रियस्ते पश्वादयस्तत्स्थावरं ते ब्राह्मणादयः । सर्वं खल्विदं ब्रह्म नेह नानास्ति किंचन । जातिरिति च । न चर्मणो न रक्तस्य न मांसस्य न चास्थिनः । न जातिरात्मनो जातिर्व्यवहारप्रकल्पिता । कर्मेति च क्रियमाणेन्द्रियैः कर्माण्यहं करोमीत्यध्यात्मनिष्ठतया कृतं कर्मैव कर्म । अकर्मेति च कर्तृत्वभोक्तृत्वाद्यहंकारतया बन्धरूपं जन्मादिकारणं नित्यनैमित्तिकयागव्रततपोदानादिषु फलाभिसंधानं यत्तदकर्म । ज्ञानमिति च देहेन्द्रियनिग्रहसद्गुरूपासनश्रवणमनननिदिध्यासनैर्यद्यद्दृग्दृश्यस्वरूपं सर्वान्तरस्थं सर्वसमं घटपटादिपदार्थमिवाविकारं विकारेषु चैतन्यं विना किंचिन्नास्तीति साक्षात्कारानुभवो ज्ञानम् । अज्ञानमिति च रज्जौ सर्पभ्रान्तिरिवाद्वितीये सर्वानुस्यूते सर्वमये ब्रह्मणि देवतिर्यङ्नरस्थावरस्त्रीपुरुषवर्णाश्रमबन्धमोक्षोपाधिनानात्मभेदकल्पितं ज्ञानमज्ञानम् । सुखमिति च सच्चिदानन्दस्वरूपं ज्ञात्वानन्दरूपा या स्थितिः सैव सुखम् । दुःखमिति अनात्मरूपो विषयसंकल्प एव दुःखम् । स्वर्ग इति च सत्संसर्गः स्वर्गः । नरक इति च असत्संसारविषयजनसंसर्ग एव नरकः । बन्ध इति च अनाद्यविद्यावासनया

जातोऽहमित्यादिसंकल्पो बन्धः। पितृमातृसहोदरदारापत्यगृहारामक्षेत्रममता-संसारावरणसंकल्पो बन्धः। कर्तृत्वाद्यहंकारसंकल्पो बन्धः। अणिमाद्यष्टैश्वर्याशासिद्धसंकल्पो बन्धः। देवमनुष्याद्युपासनाकामसंकल्पो बन्धः। यमाद्यष्टाङ्गयोगसंकल्पो बन्धः। वर्णाश्रमधर्मकर्मसंकल्पो बन्धः। आज्ञाभयसंशयात्मगुणसंकल्पो बन्धः। यागव्रततपोदानविधिविधानज्ञानसंभवो बन्धः। केवलमोक्षापेक्षासंकल्पो बन्धः। संकल्पमात्रसंभवो बन्धः। मोक्ष इति च नित्यानित्यवस्तुविचारादनित्यसंसारसुखदुःखविषयसमस्तक्षेत्रममताबन्धक्षयो मोक्षः। उपास्य इति च सर्वशरीरस्थचैतन्यब्रह्मप्रापको गुरुरुपास्यः। शिष्य इति च विद्याध्वस्तप्रपञ्चावगाहितज्ञानावशिष्टं ब्रह्मैव शिष्यः। विद्वानिति च सर्वान्तरस्थस्वसंविद्रूपविद्विद्वान्। मूढ इति च कर्तृत्वाद्यहंकारभावारूढो मूढः। आसुरमिति च ब्रह्मविष्णवीशानेन्द्रादीनामैश्वर्यकामनया निरशनजपाग्निहोत्रादिष्वन्तरात्मानं संतापयति चात्युग्ररागद्वेषविहिंसादम्भाद्यपेक्षितं तप आसुरम्। तप इति च ब्रह्म सत्यं जगन्मिथ्येत्यपरोक्षज्ञानाग्निना ब्रह्माद्यैश्वर्याशासिद्धसंकल्पबीजसंतापं तपः। परमं पदमिति च प्राणेन्द्रियाद्यन्तःकरणगुणादेः परतरं सच्चिदानन्दमयं नित्यमुक्तब्रह्मस्थानं परमं पदम्। ग्राह्यमिति च देशकालवस्तुपरिच्छेदराहित्यचिन्मात्रस्वरूपं ग्राह्यम्। अग्राह्यमिति च स्वस्वरूपव्यतिरिक्तमायामयबुद्धीन्द्रियगोचरजगत्सत्यत्वचिन्तनमग्राह्यम्। संन्यासीति च सर्वधर्मान्परित्यज्य निर्ममो निरहंकारो भूत्वा ब्रह्मेष्टं शरणमुपगम्य तत्त्वमसि अहं ब्रह्मास्मि सर्वं खल्विदं ब्रह्म नेह नानास्ति किंचनेत्यादिमहावाक्यार्थानुभवज्ञानाद्ब्रह्मैवाहमस्मीति निश्चित्य निर्विकल्पसमाधिना स्वतन्त्रो यतिश्चरति स संन्यासी स मुक्तः स पूज्यः स योगी स परमहंसः सोऽवधूतः स ब्राह्मण इति। इदं निरालम्बोपनिषदं योऽधीते गुर्वनुग्रहतः सोऽग्निपूतो भवति स वायुपूतो भवति न स पुनरावर्तते न स पुनरावर्तते पुनर्नाभिजायते पुनर्नाभिजायत इत्युपनिषत्॥

ॐ पूर्णमद इति शान्तिः॥

इति निरालम्बोपनिषत्समाप्ता॥ ३६॥

---

# शुकरहस्योपनिषत् ॥ ३७ ॥

प्रज्ञानादिमहावाक्यरहस्यादिकलेवरम् ।
विकलेवरकैवल्यं त्रिपाद्राममहं भजे ॥

ॐ सह नाववत्विति शान्तिः ॥

अथातो रहस्योपनिषदं व्याख्यास्यामो देवर्षयो ब्रह्माणं संपूज्य प्रणिपत्य पप्रच्छुर्भगवन्नस्माकं रहस्योपनिषदं ब्रूहीति । सोऽब्रवीत् । पुरा व्यासो महातेजाः सर्ववेदतपोनिधिः । प्रणिपत्य शिवं साम्बं कृताञ्जलिरुवाच ह ॥ १ ॥ श्रीवेदव्यास उवाच । देवदेव महाप्राज्ञ पाशच्छेददृढव्रत । शुकस्य मम पुत्रस्य वेदसंस्कारकर्मणि ॥ २ ॥ ब्रह्मोपदेशकालोऽयमिदानीं समुपस्थितः । ब्रह्मोपदेशः कर्तव्यो भवताद्य जगद्गुरो ॥ ३ ॥ ईश्वर उवाच । मयोपदिष्टे कैवल्ये साक्षाद्ब्रह्मणि शाश्वते । विहाय पुत्रो निर्वेदात्प्रकाशं यास्यति स्वयम् ॥ ४ ॥ श्रीवेदव्यास उवाच । यथा तथा वा भवतु ह्युपनायनकर्मणि । उपदिष्टे मम सुते ब्रह्मणि त्वत्प्रसादतः ॥ ५ ॥ सर्वज्ञो भवतु क्षिप्रं मम पुत्रो महेश्वर । तव प्रसादसंपन्नो लभेन्मुक्तिं चतुर्विधाम् ॥ ६ ॥ तच्छ्रुत्वा व्यासवचनं सर्वदेवर्षिसंसदि । उपदेष्टुं स्थितः शम्भुः साम्बो दिव्यासने मुदा ॥ ७ ॥ कृतकृत्यः शुकस्तत्र समागत्य सुभक्तिमान् । तस्मात्स प्रणवं लब्ध्वा पुनरित्यब्रवीच्छिवम् ॥ ८ ॥ श्रीशुक उवाच ॥ देवादिदेव सर्वज्ञ सच्चिदानन्दलक्षण । उमारमण भूतेश प्रसीद करुणानिधे ॥ ९ ॥ उपदिष्टं परंब्रह्म प्रणवान्तर्गतं परम् । तत्त्वमस्यादिवाक्यानां प्रज्ञादीनां विशेषतः ॥ १० ॥ श्रोतुमिच्छामि तत्त्वेन षडङ्गानि यथाक्रमम् । वक्तव्यानि रहस्यानि कृपयाद्य सदाशिव ॥ ११ ॥ श्रीसदाशिव उवाच । साधु साधु महाप्राज्ञ शुक ज्ञाननिधे मुने । प्रष्टव्यं तु त्वया पृष्टं रहस्यं वेदगर्भितम् ॥ १२ ॥ रहस्योपनिषन्नाम्ना सषडङ्गमिहोच्यते । यस्य विज्ञानमात्रेण मोक्षः साक्षान्न संशयः ॥ १३ ॥ अङ्गहीनानि वाक्यानि गुरुर्नोपदिशेत्पुनः । सषडङ्गान्युपदिशेन्महावाक्यानि कृत्स्नशः ॥१४॥ चतुर्णामपि वेदानां यथोपनिषदः शिरः । इयं रहस्योपनिषत्तथोपनिषदां शिरः ॥ २५ ॥ रहस्योपनिषद्ब्रह्म ध्यातं येन विपश्चिता । तीर्थैर्मन्त्रैः श्रुतैर्जप्यैस्तस्य किं पुण्यहेतुभिः ॥ १६ ॥ वाक्यार्थस्य विचारेण यदाप्नोति शरच्छतम् । एकवारजपेनैव ऋष्यादिध्यानतश्च यत् ॥ १७ ॥ ॐ अस्य श्रीमहावाक्यमहा-

मन्त्रस्य हंसऋषिः । अव्यक्तगायत्री छन्दः । परमहंसो देवता । हं बीजम् । सः शक्तिः । सोऽहं कीलकम् । मम परमहंसप्रीत्यर्थे महावाक्यजपे विनियोगः । सत्यं ज्ञानमनन्तं ब्रह्म अङ्गुष्ठाभ्यां नमः । नित्यानन्दो ब्रह्म तर्जनीभ्यां स्वाहा । नित्यानन्दमयं ब्रह्म मध्यमाभ्यां वषट् । यो वै भूमा अनामिकाभ्यां हुम् । यो वै भूमाधिपतिः कनिष्ठिकाभ्यां वौषट् । एकमेवाद्वितीयं ब्रह्म करतलकरपृष्ठाभ्यां फट् ॥ सत्यं ज्ञानमनन्तं ब्रह्म हृदयाय नमः । नित्यानन्दो ब्रह्म शिरसे स्वाहा । नित्यानन्दमयं ब्रह्म शिखायै वषट् । यो वै भूमा कवचाय हुम् । यो वै भूमाधिपतिः नेत्रत्रयाय वौषट् । एकमेवाद्वितीयं ब्रह्म अस्त्राय फट् । भूर्भुवःसुवरोमिति दिग्बन्धः । ध्यानम् । नित्यानन्दं परमसुखदं केवलं ज्ञानमूर्तिं द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् । एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ॥ १ ॥

अथ महावाक्यानि चत्वारि । यथा ॐप्रज्ञानं ब्रह्म ॥ १ ॥ ॐअहं ब्रह्मास्मि ॥ २ ॥ ॐतत्त्वमसि ॥ ३ ॥ ॐअयमात्मा ब्रह्म ॥ ४ ॥ तत्त्वमसीत्यभेदवाचकमिदं ये जपन्ति ते शिवसायुज्यमुक्तिभाजो भवन्ति ॥ तत्पदमहामन्त्रस्य । परमहंस ऋषिः । अव्यक्तगायत्री छन्दः । परमहंसो देवता । हं बीजम् । सः शक्तिः । सोऽहं कीलकम् । मम सायुज्यमुक्त्यर्थे जपे विनियोगः । तत्पुरुषाय अङ्गुष्ठाभ्यां नमः । ईशानाय तर्जनीभ्यां स्वाहा । अघोराय मध्यमाभ्यां वषट् । सद्योजाताय अनामिकाभ्यां हुम् । वामदेवाय कनिष्ठिकाभ्यां वौषट् । तत्पुरुषेशानाघोरसद्योजातवामदेवेभ्यो नमः करतलकरपृष्ठाभ्यां फट् । एवं हृदयादिन्यासः । भूर्भुवःसुवरोमिति दिग्बन्धः ॥ ध्यानम् । ज्ञानं ज्ञेयं ज्ञानगम्यादतीतं शुद्धं बुद्धं मुक्तमप्यव्ययं च । सत्यं ज्ञानं सच्चिदानन्दरूपं ध्यायेदेवं तन्महो भ्राजमानम् ॥ त्वंपदमहामन्त्रस्य विष्णुर्ऋषिः । गायत्रीछन्दः । परमात्मा देवता । ऐं बीजम् । क्लीं शक्तिः । सौः कीलकम् । मम मुक्त्यर्थे जपे विनियोगः । वासुदेवाय अङ्गुष्ठाभ्यां नमः । संकर्षणाय तर्जनीभ्यां स्वाहा । प्रद्युम्नाय मध्यमाभ्यां वषट् । अनिरुद्धाय अनामिकाभ्यां हुम् । वासुदेवाय कनिष्ठिकाभ्यां वौषट् । वासुदेवसंकर्षणप्रद्युम्नानिरुद्धेभ्यः करतलकरपृष्ठाभ्यां फट् । एवं हृदयादिन्यासः । भूर्भुवःसुवरोमिति दिग्बन्धः ॥ ध्यानम् ॥ जीवत्वं सर्वभूतानां सर्वत्राखण्डविग्रहम् । चित्ताहंकारयन्तारं जीवाख्यं त्वंपदं

भजे । असिपदमहामन्त्रस्य मन ऋषिः । गायत्री छन्दः । अर्धनारीश्वरो देवता । अव्यक्तादिर्बीजम् । नृसिंहः शक्तिः । परमात्मा कीलकम् । जीवब्रह्मै-क्यार्थे जपे विनियोगः । पृथ्वीद्व्यणुकाय अङ्गुष्ठाभ्यां नमः । अब्द्व्यणुकाय तर्जनीभ्यां स्वाहा । तेजोद्व्यणुकाय मध्यमाभ्यां वषट् । वायुद्व्यणुकाय अना-मिकाभ्यां हुम् । आकाशद्व्यणुकाय कनिष्ठिकाभ्यां वौषट् । पृथिव्यप्तेजोवाय्वा-काशद्व्यणुकेभ्यः करतलकरपृष्ठाभ्यां फट् । भूर्भुवःसुवरोमिति दिग्बन्धः ॥ ध्यानम् ॥ जीवो ब्रह्मेति वाक्यार्थं यावदस्ति मनःस्थितिः । ऐक्यं तत्त्वं लये कुर्वन्ध्यायेदसिपदं सदा ॥ एवं महावाक्यषडङ्गान्युक्तानि ॥

अथ रहस्योपनिषद्विभागशो वाक्यार्थश्लोकाः प्रोच्यन्ते ॥ येनेक्षते शृणो-तीदं जिघ्रति व्याकरोति च । स्वाद्वस्वादु विजानाति तत्प्रज्ञानमुदीरितम् ॥१॥ चतुर्मुखेन्द्रदेवेषु मनुष्याश्वगवादिषु । चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्य-पि ॥ २ ॥ परिपूर्णः परात्मास्मिन्देहे विद्याधिकारिणि । बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते ॥ ३ ॥ स्वतः पूर्णः परात्मात्र ब्रह्मशब्देन वर्णितः । अस्मीत्यैक्यपरामर्शस्तेन ब्रह्म भवाम्यहम् ॥ ४ ॥ एकमेवाद्वितीयं सन्नामरूप-विवर्जितम् । सृष्टेः पुराधुनाप्यस्य तादृक्त्वं तदितीर्यते ॥ ५ ॥ श्रोतुर्देहे-न्द्रियातीतं वस्त्वत्र त्वंपदेरितम् । एकता ग्राह्यतेऽसीति तदैक्यमनुभूय-ताम् ॥ ६ ॥ स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम् । अहंकारादिदेहान्तं प्रत्यगात्मेति गीयते ॥ ७ ॥ दृश्यमानस्य सर्वस्य जगतस्तत्त्वमीर्यते । ब्रह्मश-ब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम् ॥ ८ ॥ अनात्मदृष्टेरविवेकनिद्रामहं मम स्वप्नगतिं गतोऽहम् । स्वरूपसूर्येऽभ्युदिते स्फुटोक्तेर्गुरोर्महावाक्यपदैः प्रबुद्धः ॥ ९ ॥ वाच्यं लक्ष्यमिति द्विधार्थसरणीर्वाच्यस्य हि त्वंपदे वाच्यं भौतिकमि-न्द्रियादिरपि यल्लक्ष्यं त्वमर्थश्च सः । वाच्यं तत्पदमीशताकृतमतिर्लक्ष्यं तु सच्चित्सुखानन्दब्रह्म तदर्थ एष च तयोरैक्यं त्वसीदं पदम् ॥ १० ॥ त्वमिति तदिति कार्ये कारणे सत्युपाधौ द्वितयमितरथैकं सच्चिदानन्दरूपम् । उभय-वचनहेतू देशकालौ च हित्वा जगति भवति सोऽयं देवदत्तो यथैकः ॥ ११ ॥ कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः । कार्यकारणतां हित्वा पूर्णबोधोऽव-शिष्यते ॥ १२ ॥ श्रवणं तु गुरोः पूर्वं मननं तदनन्तरम् । निदिध्यासन-मित्येतत्पूर्णबोधस्य कारणम् ॥ १३ ॥ अन्यविद्यापरिज्ञानमवश्यं नश्वरं भवेत् । ब्रह्मविद्यापरिज्ञानं ब्रह्मप्राप्तिकरं स्थितम् ॥ १४ ॥ महावाक्या-

न्युपदिशेत्सषडङ्गानि देशिकः । केवलं नहि वाक्यानि ब्रह्मणो वचनं यथा ॥ १५ ॥ ईश्वर उवाच । एवमुक्त्वा मुनिश्रेष्ठ रहस्योपनिषच्छुक । मया पित्रानुनीतेन व्यासेन ब्रह्मवादिना ॥ १६ ॥ ततो ब्रह्मोपदिष्टं वै सच्चिदानन्दलक्षणम् । जीवन्मुक्तः सदा ध्यायन्नित्यस्त्वं विहरिष्यसि ॥ १७ ॥ यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥ १८ ॥ उपदिष्टः शिवेनेति जगत्तन्मयतां गतः । उत्थाय प्रणिपत्येशं त्यक्ताशेषपरिग्रहः ॥ १९ ॥ परब्रह्मपयोराशौ प्लवन्निव ययौ तदा । प्रव्रजन्तं तमालोक्य कृष्णद्वैपायनो मुनिः ॥ २० ॥ अनुव्रजन्नाजुहाव पुत्रविश्लेषकातरः । प्रतिनेदुस्तदा सर्वे जगत्स्थावरजङ्गमाः ॥ २१ ॥ तच्छ्रुत्वा सकलाकारं व्यासः सत्यवतीसुतः । पुत्रेण सहितः प्रीत्या परानन्दमुपेयिवान् ॥ २२॥ यो रहस्योपनिषदमधीते गुर्वनुग्रहात् । सर्वपापविनिर्मुक्तः साक्षात्कैवल्यमश्नुते साक्षात्कैवल्यमश्नुत इत्युपनिषत् ॥

ॐ सह नाववत्विति शान्तिः ॥

इति यजुर्वेदीयशुकरहस्योपनिषत्समाप्ता ॥

---

## वज्रसूचिकोपनिषत् ॥ ३८ ॥

यज्ज्ञानाद्यान्ति मुनयो ब्राह्मण्यं परमाद्भुतम् ।
तत्रैपदब्रह्मतत्त्वमहमस्मीति चिन्तये ॥

ॐ आप्यायन्त्विति शान्तिः ॥

चित्सदानन्दरूपाय सर्वधीवृत्तिसाक्षिणे ।
नमो वेदान्तवेद्याय ब्रह्मणेऽनन्तरूपिणे ॥

ॐ वज्रसूचीं प्रवक्ष्यामि शास्त्रमज्ञानभेदनम् । दूषणं ज्ञानहीनानां भूषणं ज्ञानचक्षुषाम् ॥ १ ॥ ब्रह्मक्षत्रियवैश्यशूद्रा इति चत्वारो वर्णास्तेषां वर्णानां ब्राह्मण एव प्रधान इति वेदवचनानुरूपं स्मृतिभिरप्युक्तम् । तत्र चोद्यमस्ति को वा ब्राह्मणो नाम किं जीवः किं देहः किं जातिः किं ज्ञानं किं कर्म किं धार्मिक इति । तत्र प्रथमो जीवो ब्राह्मण इति चेत्तन्न । अतीतानागतानेकदेहानां

जीवस्यैकरूपत्वात् एकस्यापि कर्मवशादनेकदेहसंभवात् सर्वशरीराणां जीवस्यैकरूपत्वाच्च । तस्मान्न जीवो ब्राह्मण इति । तर्हि देहो ब्राह्मण इति चेत्तन्न । आचाण्डालादिपर्यन्तानां मनुष्याणां पाञ्चभौतिकत्वेन देहस्यैकरूपत्वाज्जरामरणधर्माधर्मादिसाम्यदर्शनाद्ब्राह्मणः श्वेतवर्णः क्षत्रियो रक्तवर्णो वैश्यः पीतवर्णः शूद्रः कृष्णवर्ण इति नियमाभावात् । पित्रादिशरीरदहने पुत्रादीनां ब्रह्महत्यादिदोषसंभवाच्च । तस्मान्न देहो ब्राह्मण इति ॥ तर्हि जातिर्ब्राह्मण इति चेत्तन्न । तत्र जात्यन्तरजन्तुष्वनेकजातिसंभवा महर्षयो बहवः सन्ति । ऋष्यशृङ्गो मृग्याः, कौशिकः कुशात्, जाम्बूको जम्बूकात्, वाल्मीको वल्मीकात्, व्यासः कैवर्तकन्यकायाम्, शशपृष्ठात् गौतमः, वसिष्ठ उर्वश्याम्, अगस्त्यः कलशे जात इति श्रुतत्वात् । एतेषां जात्या विनाप्यग्रे ज्ञानप्रतिपादिता ऋषयो बहवः सन्ति । तस्मान्न जातिर्ब्राह्मण इति ॥ तर्हि ज्ञानं ब्राह्मण इति चेत्तन्न । क्षत्रियादयोऽपि परमार्थदर्शिनोऽभिज्ञा बहवः सन्ति । तस्मान्न ज्ञानं ब्राह्मण इति ॥ तर्हि कर्म ब्राह्मण इति चेत्तन्न । सर्वेषां प्राणिनां प्रारब्धसंचितागामिकर्मसाधर्म्यदर्शनात्कर्माभिप्रेरिताः सन्तो जनाः क्रियाः कुर्वन्तीति । तस्मान्न कर्म ब्राह्मण इति ॥ तर्हि धार्मिको ब्राह्मण इति चेत्तन्न । क्षत्रियादयो हिरण्यदातारो बहवः सन्ति । तस्मान्न धार्मिको ब्राह्मण इति ॥ तर्हि को वा ब्राह्मणो नाम । यः कश्चिदात्मानमद्वितीयं जातिगुणक्रियाहीनं षडूर्मिषड्भावेत्यादिसर्वदोषरहितं सत्यज्ञानानन्दानन्तस्वरूपं स्वयं निर्विकल्पमशेषकल्पाधारमशेषभूतान्तर्यामित्वेन वर्तमानमन्तर्बहिश्चाकाशवदनुस्यूतमखण्डानन्दस्वभावमप्रमेयमनुभवैकवेद्यमपरोक्षतया भासमानं करतलामलकवत्साक्षादपरोक्षीकृत्य कृतार्थतया कामरागादिदोषरहितः शमदमादिसंपन्नो भावमात्सर्यतृष्णाशामोहादिरहितो दम्भाहंकारादिभिरसंस्पृष्टचेता वर्तत एवमुक्तलक्षणो यः स एव ब्राह्मण इति श्रुतिस्मृतिपुराणेतिहासानामभिप्रायः । अन्यथा हि ब्राह्मणत्वसिद्धिर्नास्त्येव । सच्चिदानन्दमात्मानमद्वितीयं ब्रह्म भावयेदात्मानं सच्चिदानन्दं ब्रह्म भावयेदित्युपनिषत् ॥

ॐ आप्यायन्त्विति शान्तिः ॥

इति वज्रसूच्युपनिषत्समाप्ता ॥ ३८ ॥

---

# तेजोबिन्दूपनिषत् ॥ ३९ ॥

यत्र चिन्मात्रकलना यात्यपह्नवमञ्जसा ।
तच्चिन्मात्रमखण्डैकरसं ब्रह्म भवाम्यहम् ॥

ॐ सह नाववत्विति शान्तिः ॥

ॐ तेजोबिन्दुः परं ध्यानं विश्वात्महृदि संस्थितम् । आणवं शांभवं शान्तं स्थूलं सूक्ष्मं परं च यत् ॥ १ ॥ दुःखाढ्यं च दुराराध्यं दुष्प्रेक्ष्यं मुक्तमव्ययम् । दुर्लभं तत्स्वयं ध्यानं मुनीनां च मनीषिणाम् ॥ २ ॥ यताहारो जितक्रोधो जितसङ्गो जितेन्द्रियः । निर्द्वन्द्वो निरहंकारो निराशीरपरिग्रहः ॥ ३ ॥ अगम्यागमकर्ता यो गम्याऽगमनमानसः । मुखे त्रीणि च विन्दन्ति त्रिधामा हंस उच्यते ॥ ४ ॥ परं गुह्यतमं विद्धि ह्यस्ततन्द्रो निराश्रयः । सोमरूपकला सूक्ष्मा विष्णोस्तत्परमं पदम् ॥ ५ ॥ त्रिवक्त्रं त्रिगुणं स्थानं त्रिधातुं रूपवर्जितम् । निश्चलं निर्विकल्पं च निराकारं निराश्रयम् ॥ ६ ॥ उपाधिरहितं स्थानं वाङ्मनोऽतीतगोचरम् । स्वभावं भावसंग्राह्यमसंघातं पदाच्युतम् ॥ ७ ॥ अनानानन्दनातीतं दुष्प्रेक्ष्यं मुक्तमव्ययम् । चिन्त्यमेवं विनिर्मुक्तं शाश्वतं ध्रुवमच्युतम् ॥ ८ ॥ तद्ब्रह्मणस्तदध्यात्मं तद्विष्णोस्तत्परायणम् । अचिन्त्यं चिन्मयात्मानं यद्व्योम परमं स्थितम् ॥ ९ ॥ अशून्यं शून्यभावं तु शून्यातीतं हृदि स्थितम् । न ध्यानं च न च ध्याता न ध्येयो ध्येय एव च ॥ १० ॥ सर्वं च न परं शून्यं न परं नापरात्परम् । अचिन्त्यमप्रबुद्धं च न सत्यं न परं विदुः ॥ ११ ॥ मुनीनां संप्रयुक्तं च न देवा न परं विदुः । लोभं मोहं भयं दर्पं कामं क्रोधं च किल्बिषम् ॥ १२ ॥ शीतोष्णे क्षुत्पिपासे च संकल्पकविकल्पकम् । न ब्रह्मकुलदर्पं च न मुक्तिग्रन्थिसंचयम् ॥ १३ ॥ न भयं न सुखं दुःखं तथा मानावमानयोः । एतद्भावविनिर्मुक्तं तद्ग्राह्यं ब्रह्म तत्परम् ॥ १४ ॥ यमो हि नियमस्त्यागो मौनं देशश्च कालतः । आसनं मूलबन्धश्च देहसाम्यं च दृक्स्थितिः ॥ १५ ॥ प्राणसंयमनं चैव प्रत्याहारश्च धारणा । आत्मध्यानं समाधिश्च प्रोक्तान्यङ्गानि वै क्रमात् ॥ १६ ॥ सर्वं ब्रह्मेति वै ज्ञानादिन्द्रियग्रामसंयमः । यमोऽयमिति संप्रोक्तोऽभ्यसनीयो मुहुर्मुहुः ॥ १७ ॥ सजातीयप्रवाहश्च विजातीयतिरस्कृतिः । नियमो हि परानन्दो नियमात्क्रियते बुधैः ॥ १८ ॥ त्यागो हि महता पूज्यः सद्यो मोक्षप्रदायकः ॥ १९ ॥ यस्मा-

द्वाचो निवर्तन्ते अप्राप्य मनसा सह । यन्मौनं योगिभिर्गम्यं तद्भजेत्सर्वदा बुधः ॥ २० ॥ वाचो यस्मान्निवर्तन्ते तद्वक्तुं केन शक्यते । प्रपञ्चो यदि वक्तव्यः सोऽपि शब्दविवर्जितः ॥ २१ ॥ इति वा तद्भवेन्मौनं सर्वं सहजसंज्ञितम् । गिरां मौनं तु बालानामयुक्तं ब्रह्मवादिनाम् ॥ २२ ॥ आदावन्ते च मध्ये च जनो यस्मिन्न विद्यते । येनेदं सततं व्याप्तं स देशो विजनः स्मृतः ॥ २३ ॥ कल्पना सर्वभूतानां ब्रह्मादीनां निमेषतः । कालशब्देन निर्दिष्टं ह्यखण्डानन्दमद्वयम् ॥ २४ ॥ सुखेनैव भवेद्यस्मिन्नजस्रं ब्रह्मचिन्तनम् । आसनं तद्विजानीयादन्यत्सुखविनाशनम् ॥ २५ ॥ सिद्धये सर्वभूतादि विश्वाधिष्ठानमद्वयम् । यस्मिन्सिद्धिं गताः सिद्धास्तत्सिद्धासनमुच्यते ॥ २६ ॥ यन्मूलं सर्वलोकानां यन्मूलं चित्तबन्धनम् । मूलबन्धः सदा सेव्यो योग्योऽसौ ब्रह्मवादिनाम् ॥ २७ ॥ अङ्गानां समतां विद्यात्समे ब्रह्मणि लीयते । नो चेन्नैव समानत्वमृजुत्वं शुष्कवृक्षवत् ॥ २८ ॥ दृष्टिं ज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं जगत् । सा दृष्टिः परमोदारा न नासाग्रावलोकिनी ॥ २९ ॥ द्रष्टृदर्शनदृश्यानां विरामो यत्र वा भवेत् । दृष्टिस्तत्रैव कर्तव्या न नासाग्रावलोकिनी ॥ ३० ॥ चित्तादिसर्वभावेषु ब्रह्मत्वेनैव भावनात् । निरोधः सर्ववृत्तीनां प्राणायामः स उच्यते ॥ ३१ ॥ निषेधनं प्रपञ्चस्य रेचकाख्यः समीरितः । ब्रह्मैवास्मीति या वृत्तिः पूरको वायुरुच्यते ॥ ३२ ॥ ततस्तद्वृत्तिनैश्चल्यं कुम्भकः प्राणसंयमः । अयं चापि प्रबुद्धानामज्ञानां घ्राणपीडनम् ॥ ३३ ॥ विषयेष्वात्मतां दृष्ट्वा मनसश्चित्तरञ्जकम् । प्रत्याहारः स विज्ञेयोऽभ्यसनीयो मुहुर्मुहुः ॥ ३४ ॥ यत्र यत्र मनो याति ब्रह्मणस्तत्र दर्शनात् । मनसा धारणं चैव धारणा सा परा मता ॥ ३५ ॥ ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः । ध्यानशब्देन विख्यातः परमानन्ददायकः ॥ ३६ ॥ निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः । वृत्तिविस्मरणं सम्यक्समाधिरभिधीयते ॥ ३७ ॥ इमं चाकृत्रिमानन्दं तावत्साधु समभ्यसेत् । लक्ष्यो यावत्क्षणात्पुंसः प्रत्यक्त्वं संभवेत्स्वयम् ॥ ३८ ॥ ततः साधननिर्मुक्तः सिद्धो भवति योगिराट् । तत्स्वं रूपं भवेत्तस्य विषयो मनसो गिराम् ॥ ३९ ॥ समाधौ क्रियमाणे तु विघ्नान्यायान्ति वै बलात् । अनुसंधानराहित्यमालस्यं भोगलालसम् ॥ ४० ॥ लयस्तमश्च विक्षेपस्तेजः स्वेदश्च शून्यता । एवं हि विघ्नबाहुल्यं त्याज्यं ब्रह्मविशारदैः ॥ ४१ ॥ भाववृत्त्या हि भावत्वं शून्यवृत्त्या हि शून्यता । ब्रह्मवृत्त्या हि पूर्णत्वं तया पूर्णत्वमभ्यसेत् ॥ ४२ ॥ ये हि वृत्तिं विहायैनां ब्रह्मा-

त्त्यां पावनीं पराम् । वृथैव ते तु जीवन्ति पशुभिश्च समा नराः ॥ ४३ ॥ ये तु वृत्तिं विजानन्ति ज्ञात्वा वै वर्धयन्ति ये । ते वै सत्पुरुषा धन्या वन्द्यास्ते भुवनत्रये ॥ ४४ ॥ येषां वृत्तिः समा वृद्धा परिपक्वा च सा पुनः । ते वै सद्ब्रह्मतां प्राप्ता नेतरे शब्दवादिनः ॥ ४५ ॥ कुशला ब्रह्मवार्तायां वृत्तिहीनाः सुरागिणः । तेऽप्यज्ञानतया नूनं पुनरायान्ति यान्ति च ॥ ४६ ॥ निमिषार्धं न तिष्ठन्ति वृत्तिं ब्रह्ममयीं विना । यथा तिष्ठन्ति ब्रह्माद्याः सनकाद्याः शुकादयः ॥ ४७ ॥ कारणं यस्य वै कार्यं कारणं तस्य जायते । कारणं तत्त्वतो नश्येत्कार्याभावे विचारतः ॥ ४८ ॥ अथ शुद्धं भवेद्वस्तु यद्वै वाचामगोचरम् । उदेति शुद्धचित्तानां वृत्तिज्ञानं ततः परम् ॥ ४९ ॥ भावितं तीव्रवेगेन यद्वस्तु निश्चयात्मकम् । दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण चिन्तयेत् ॥५०॥ विद्वान्नित्यं सुखे तिष्ठेद्धिया चिद्रसपूर्णया ॥

इति तेजोबिन्दूपनिषत्सु प्रथमोऽध्यायः ॥ १ ॥

अथ ह कुमारः शिवं पप्रच्छाऽखण्डैकरसचिन्मात्रस्वरूपमनुब्रूहीति । स होवाच परमः शिवः । अखण्डैकरसं दृश्यमखण्डैकरसं जगत् । अखण्डैकरसं भावमखण्डैकरसं स्वयम् ॥ १ ॥ अखण्डैकरसो मन्त्र अखण्डैकरसा क्रिया । अखण्डैकरसं ज्ञानमखण्डैकरसं जलम् ॥ २ ॥ अखण्डैकरसा भूमिरखण्डैकरसं वियत् । अखण्डैकरसं शास्त्रमखण्डैकरसा त्रयी ॥ ३ ॥ अखण्डैकरसं ब्रह्म चाखण्डैकरसं व्रतम् । अखण्डैकरसो जीव अखण्डैकरसो ह्यजः ॥ ४ ॥ अखण्डैकरसो ब्रह्मा अखण्डैकरसो हरिः । अखण्डैकरसो रुद्र अखण्डैकरसोऽस्म्यहम् ॥ ५ ॥ अखण्डैकरसो ह्यात्मा ह्यखण्डैकरसो गुरुः । अखण्डैकरसं लक्ष्यमखण्डैकरसं महः ॥ ६ ॥ अखण्डैकरसो देह अखण्डैकरसं मनः । अखण्डैकरसं चित्तमखण्डैकरसं सुखम् ॥ ७ ॥ अखण्डैकरसा विद्या अखण्डैकरसोऽव्ययः । अखण्डैकरसं नित्यमखण्डैकरसं परम् ॥ ८ ॥ अखण्डैकरसं किंचिदखण्डैकरसं परम् । अखण्डैकरसादन्यन्नास्ति नास्ति षडानन ॥ ९ ॥ अखण्डैकरसान्नास्ति अखण्डैकरसान्न हि । अखण्डैकरसात्किंचिदखण्डैकरसादहम् ॥ १० ॥ अखण्डैकरसं स्थूलं सूक्ष्मं चाखण्डरूपकम् । अखण्डैकरसं वेद्यमखण्डैकरसो भवान् ॥ ११ ॥ अखण्डैकरसं गुह्यमखण्डैकरसादिकम् । अखण्डैकरसो ज्ञाता ह्यखण्डैकरसा स्थितिः ॥ १२ ॥ अखण्डैकरसा माता अखण्डैकरसः पिता । अखण्डैकरसो भ्राता अखण्डैकरसः पतिः ॥ १३ ॥ अखण्डै-

करसं सूत्रमखण्डैकरसो विराट् । अखण्डैकरसं गात्रमखण्डैकरसं शिरः ॥१४॥ अखण्डैकरसं चान्तरखण्डैकरसं बहिः । अखण्डैकरसं पूर्णमखण्डैकरसामृतम् ॥ १५ अखण्डैकरसं गोत्रमखण्डैकरसं गृहम् । अखण्डैकरसं गोप्यमखण्डैकरसश्शशी ॥ १६ ॥ अखण्डैकरसास्तारा अखण्डैकरसो रविः । अखण्डैकरसं क्षेत्रमखण्डैकरसा क्षमा ॥ १७ ॥ अखण्डैकरसः शान्त अखण्डैकरसोऽगुणः । अखण्डैकरसः साक्षी अखण्डैकरसः सुहृत् ॥ १८ ॥ अखण्डैकरसो बन्धुरखण्डैकरसः सखा । अखण्डैकरसो राजा ह्यखण्डैकरसं पुरम् ॥ १९ ॥ अखण्डैकरसं राज्यमखण्डैकरसाः प्रजाः । अखण्डैकरसं तारमखण्डैकरसो जपः ॥ २० ॥ अखण्डैकरसं ध्यानमखण्डैकरसं पदम् । अखण्डैकरसं ग्राह्यमखण्डैकरसं महत् ॥ २१ ॥ अखण्डैकरसं ज्योतिरखण्डैकरसं धनम् । अखण्डैकरसं भोज्यमखण्डैकरसं हविः ॥ २२ ॥ अखण्डैकरसो होम अखण्डैकरसो जपः । अखण्डैकरसं स्वर्गमखण्डैकरसः स्वयम् ॥ २३ ॥ अखण्डैकरसं सर्वं चिन्मात्रमिति भावयेत् । चिन्मात्रमेव चिन्मात्रमखण्डैकरसं परम् ॥ २४ ॥ भववर्जितचिन्मात्रं सर्वं चिन्मात्रमेव हि । इदं च सर्वं चिन्मात्रमयं चिन्मयमेव हि ॥२५॥ आत्मभावं च चिन्मात्रमखण्डैकरसं विदुः । सर्वलोकं च चिन्मात्रं त्वत्ता मत्ता च चिन्मयम् ॥ २६ ॥ आकाशो भूर्जलं वायुरग्निर्ब्रह्मा हरिः शिवः । यत्किंचिद्यन्न किंचिच्च सर्वं चिन्मात्रमेव हि ॥ २७ ॥ अखण्डैकरसं सर्वं यद्यच्चिन्मात्रमेव हि । भूतं भव्यं भविष्यच्च सर्वं चिन्मात्रमेव हि ॥२८॥ द्रव्यं कालं च चिन्मात्रं ज्ञानं ज्ञेयं चिदेव हि । ज्ञाता चिन्मात्ररूपश्च सर्वं चिन्मयमेव हि ॥ २९ ॥ संभाषणं च चिन्मात्रं यद्यच्चिन्मात्रमेव हि । असच्च सच्च चिन्मात्रमाद्यन्तं चिन्मयं सदा ॥ ३० ॥ आदिरन्तश्च चिन्मात्रं गुरुशिष्यादि चिन्मयम् । दृग्दृश्यं यदि चिन्मात्रमस्ति चेच्चिन्मयं सदा ॥ ३१ ॥ सर्वाश्चर्यं हि चिन्मात्रं देहं चिन्मात्रमेव हि । लिङ्गं च कारणं चैव चिन्मात्रान्न हि विद्यते ॥ ३२ ॥ अहं त्वं चैव चिन्मात्रं मूर्तामूर्तादि चिन्मयम् । पुण्यं पापं च चिन्मात्रं जीवश्चिन्मात्रविग्रहः ॥ ३३ ॥ चिन्मात्रान्नास्ति संकल्पश्चिन्मात्रान्नास्ति वेदनम् । चिन्मात्रान्नास्ति मन्त्रादि चिन्मात्रान्नास्ति देवता ॥ ३४ ॥ चिन्मात्रान्नास्ति दिक्पालाश्चिन्मात्राद्व्यावहारिकम् । चिन्मात्रात्परमं ब्रह्म चिन्मात्रान्नास्ति कोऽपि हि ॥ ३५ ॥ चिन्मात्रान्नास्ति माया च चिन्मात्रान्नास्ति पूजनम् । चिन्मात्रान्नास्ति मन्तव्यं चिन्मात्रान्नास्ति सत्यकम् ॥३६॥

चिन्मात्रान्नास्ति कोशादि चिमात्रान्नास्ति वै वसु । चिन्मात्रान्नास्ति मौनं च चिन्मात्रान्नास्त्यमौनकम् ॥ ३७ ॥ चिन्मात्रान्नास्ति वैराग्यं सर्वं चिन्मात्रमेव हि । यच्च यावच्च चिन्मात्रं यच्च यावच्च दृश्यते ॥ ३८ ॥ यच्च यावच्च दूरस्थं सर्वं चिन्मात्रमेव हि । यच्च यावच्च भूतादि यच्च यावच्च लक्ष्यते ॥ ३९ ॥ यच्च यावच्च वेदान्ताः सर्वं चिन्मात्रमेव हि । चिन्मात्रान्नास्ति गमनं चिन्मात्रान्नास्ति मोक्षकम् ॥ ४० ॥ चिन्मात्रान्नास्ति लक्ष्यं च सर्वं चिन्मात्रमेव हि । अखण्डैकरसं ब्रह्म चिन्मात्रान्न हि विद्यते ॥ ४१ ॥ शास्त्रे मयि त्वयीशे च ह्यखण्डैकरसो भवान् । इत्येकरूपकतया यो वा जानात्यहं त्विति ॥ ४२ ॥ सकृज्ज्ञानेन मुक्तिः स्यात्सम्यग्ज्ञाने स्वयं गुरुः ॥ ४३ ॥

इति तेजोबिन्दूपनिषत्सु द्वितीयोऽध्यायः ॥ २ ॥

कुमारः पितरमात्मानुभवमनुब्रूहीति पप्रच्छ । स होवाच परः शिवः । परब्रह्मस्वरूपोऽहं परमानन्दमस्म्यहम् । केवलं ज्ञानरूपोऽहं केवलं परमोऽस्म्यहम् ॥ १ ॥ केवलं शान्तरूपोऽहं केवलं चिन्मयोऽस्म्यहम् । केवलं नित्यरूपोऽहं केवलं शाश्वतोऽस्म्यहम् ॥ २ ॥ केवलं सत्त्वरूपोऽहमहं त्यक्त्वाहमस्म्यहम् । सर्वहीनस्वरूपोऽहं चिदाकाशमयोऽस्म्यहम् ॥ ३ ॥ केवलं तुर्यरूपोऽस्मि तुर्यातीतोऽस्मि केवलः । सदा चैतन्यरूपोऽस्मि चिदानन्दमयोऽस्म्यहम् ॥ ४ ॥ केवलाकाररूपोऽस्मि शुद्धरूपोऽस्म्यहं सदा । केवलं ज्ञानरूपोऽस्मि केवलं प्रियमस्म्यहम् ॥ ५ ॥ निर्विकल्पस्वरूपोऽस्मि निरीहोऽस्मि निरामयः । सदाऽसङ्गस्वरूपोऽस्मि निर्विकारोऽहमव्ययः ॥ ६ ॥ सदैकरसरूपोऽस्मि सदा चिन्मात्रविग्रहः । अपरिच्छिन्नरूपोऽस्मि ह्यखण्डानन्दरूपवान् ॥ ७ ॥ सत्परान्दरूपोऽस्मि चित्परानन्दमस्म्यहम् । अन्तरान्तररूपोऽहमवाङ्मनसगोचरः ॥ ८ ॥ आत्मानन्दस्वरूपोऽहं सत्यानन्दोऽस्म्यहं सदा । आत्मारामस्वरूपोऽस्मि ह्यहमात्मा सदाशिवः ॥ ९ ॥ आत्मप्रकाशरूपोऽस्मि ह्यात्मज्योती रसोऽस्म्यहम् । आदिमध्यान्तहीनोऽस्मि ह्याकाशसदृशोऽस्म्यहम् ॥ १० ॥ नित्यशुद्धचिदानन्दसत्तामात्रोऽहमव्ययः । नित्यबुद्धविशुद्धैकसच्चिदानन्दमस्म्यहम् ॥ ११ ॥ नित्यशेषस्वरूपोऽस्मि सर्वातीतोऽस्म्यहं सदा । रूपातीतस्वरूपोऽस्मि परमाकाशविग्रहः ॥ १२ ॥ भूमानन्दस्वरूपोऽस्मि भाषाहीनोऽस्म्यहं सदा । सर्वाधिष्ठानरूपोऽस्मि सर्वदा चिद्घनोऽस्म्यहम् ॥ १३ ॥ देहभावविहीनोऽस्मि चिन्ताहीनोऽस्मि सर्वदा ।

वापयेत्पूर्वं केशश्मश्रुनखानि च' इति सप्तकेशान्संरक्ष्य कक्षोपस्थवर्जं क्षौरपूर्वकं स्नात्वा सायंसंध्यावन्दनं निर्वर्त्य सहस्रगायत्रीं जप्त्वा ब्रह्मयज्ञं निर्वर्त्य स्वाधीनाग्निमुपस्थाप्य स्वशाखोपसंहरणं कृत्वा तदुक्तप्रकारेणाज्याहुतिमाज्यभागान्तं हुत्वाहुतिविधिं समाप्यात्मादिभिस्त्रिवारं सक्तुप्राशनं कृत्वाचमनपूर्वकमग्निं संरक्ष्य स्वयमग्नेरुत्तरतः कृष्णाजिनोपरि स्थित्वा पुराणश्रवणपूर्वकं जागरणं कृत्वा चतुर्थयामान्ते स्नात्वा तदग्नौ चरुं श्रपयित्वा पुरुषसूक्तेनान्नस्य षोडशाहुतीर्हुत्वा विरजाहोमं कृत्वा अथाचम्य सदक्षिणं वस्त्रं सुवर्णपात्रं धेनुं दत्त्वा समाप्य ब्रह्मोद्वासनं कृत्वा । सं मा सिञ्चन्तु मरुतः समिन्द्रः सं बृहस्पतिः । सं मायमग्निः सिञ्चत्वायुषा च धनेन च बलेन चायुष्मन्तः करोतु मे इति । या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मनात्मानम् । अच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि । यज्ञो भूत्वा यज्ञमासीद स्वां योनिं जातवेदो भुव आजायमानः स क्षय एधीत्यनेनाग्निमात्मन्यारोप्य ध्यात्वाग्निं प्रदक्षिणनमस्कारपूर्वकमुद्वास्य प्रातःसंध्यामुपास्य सहस्रगायत्रीपूर्वकं सूर्योपस्थानं कृत्वा नाभिदघ्नोदकमुपविश्याष्टदिक्पालकार्घ्यपूर्वकं गायत्र्युद्वासनं कृत्वा सावित्रीं व्याहृतिषु प्रवेशयित्वा । अहं वृक्षस्य रेरिव । कीर्तिः पृष्ठं गिरेरिव । ऊर्ध्वपवित्रो वाजिनीवस्वमृतमस्मि । द्रविणं मे सवर्चसं सुमेधा अमृतोक्षितः । इति त्रिशङ्कोर्वेदानुवचनम् । यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात्संबभूव । स मे इन्द्रो मेधया स्पृणोतु । अमृतस्य देवधारणो भूयासं । शरीरं मे विचर्षणं । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रवं । ब्रह्मणः कोशोऽसि मेधयापिहितः । श्रुतं मे गोपाय । दारेषणायाश्च वित्तेषणायाश्च लोकेषणायाश्च व्युत्थितोऽहं ॐ भूः संन्यस्तं मया ॐ भुवः संन्यस्तं मया ॐ सुवः संन्यस्तं मया ॐ भूर्भुवःसुवः संन्यस्तं मयेति मन्द्रमध्यमतालजध्वनिभिर्मनसा वाचोच्चार्याभयं सर्वभूतेभ्यो मत्तः सर्वं प्रवर्तते स्वाहेत्यनेन जलं प्राश्य प्राच्यां दिशि पूर्णाञ्जलिं प्रक्षिप्योंस्वाहेति शिखामुत्पाट्य । यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः । यज्ञोपवीत बहिर्न निवसेस्त्वमन्तः प्रविश्य मध्ये ह्यजस्रं परमं पवित्रं यशो बलं ज्ञानवैराग्यं मेधां प्रयच्छेति यज्ञोपवीतं छित्त्वा उदकाञ्जलिना सह । ॐ भूः समुद्रं गच्छ स्वाहेत्यप्सु जुहुयात् । ॐ भूः संन्यस्तं मया । ॐभुवः संन्यस्तं मया । ॐसुवः

संन्यस्तं मयेति त्रिरुक्त्वा त्रिवारमभिमन्त्र्य तज्जलं प्राश्याचम्य ॐ भूः स्वाहेत्यप्सु वस्त्रं कटिसूत्रमपि विसृज्य सर्वकर्मनिर्वर्तकोऽहमिति स्मृत्वा जातरूपधरो भूत्वा स्वरूपानुसंधानपूर्वकमूर्ध्वबाहुरुदीचीं गच्छेत्पूर्ववद्विद्वत्संन्यासी चेद्गुरोः सकाशात्प्रणवमहावाक्योपदेशं प्राप्य यथासुखं विहरन्मत्तः कश्चिन्नान्यो व्यतिरिक्त इति फलपत्रोदकाहारः पर्वतवनदेवतालयेषु संचरेत्संन्यस्याथ दिगम्बरः सकलसंचारकः सर्वदानन्दस्वानुभवैकपूर्णहृदयः कर्मातिदूरलाभः प्राणायामपरायणः फलरसत्वक्पत्रमूलोदकैर्मोक्षार्थी गिरिकन्दरेषु विसृजेद्देहं स्मरंस्तारकम्। विविदिषासंन्यासी चेच्छतपथं गत्वाचार्यादिभिर्विप्रैस्तिष्ठ तिष्ठ महाभाग दण्डं वस्त्रं कमण्डलुं गृहाण प्रणवमहावाक्यग्रहणार्थं गुरुनिकटमागच्छेत्याचार्यैर्दण्डकटिसूत्रकौपीनं शाटीमेकां कमण्डलुं पादादिमस्तकप्रमाणमव्रणं समं सौम्यमकाकपृष्ठं सलक्षणं वैणवं दण्डमेकमाचमनपूर्वकं सखा मा गोपायौजः सखायोऽसीन्द्रस्य वज्रोऽसि वार्त्रघ्नः शर्म मे भव यत्पापं तन्निवारयेति दण्डं परिग्रहेज्जगज्जीवनं जीवनाधारभूतं मा ते मा मन्त्रयस्व सर्वदा सर्वसौम्येति प्रणवपूर्वकं कमण्डलुं परिगृह्य कौपीनाधारं कटिसूत्रमोमिति गुह्याच्छादकं कौपीनमोमिति शीतवातोष्णत्राणकरं देहैकरक्षणमोमिति कटिसूत्रकौपीनवस्त्रमाचमनपूर्वकं योगपट्टाभिषिक्तो भूत्वा कृतार्थोऽहमिति मत्वा स्वाश्रमाचारपरो भवेदित्युपनिषत् ॥ ३८ ॥

इति नारदपरिव्राजकोपनिषत्सु चतुर्थोपदेशः ॥ ४ ॥

अथ हैनं पितामहं नारदः पप्रच्छ भगवन्सर्वकर्मनिवर्तकः संन्यास इति त्वयैवोक्तः पुनः स्वाश्रमाचारपरो भवेदित्युच्यते। ततः पितामह उवाच। शरीरस्य देहिनो जाग्रत्स्वप्नसुषुप्तितुरीयावस्थाः सन्ति तदधीनाः कर्मज्ञानवैराग्यप्रवर्तकाः पुरुषा जन्तवस्तदनुकूलाचाराः सन्ति तथैव चेद्भगवन्संन्यासाः कतिभेदास्तदनुष्ठानभेदाः कीदृशास्तत्त्वतोऽस्माकं वक्तुमर्हसीति। तथेत्यङ्गीकृत्य तु पितामहेन संन्यासभेदैराचारभेदः कथमिति चेत्तत्त्वतस्त्वेक एव संन्यासः अज्ञानेनाशक्तिवशात्कर्मलोपश्च त्रैविध्यमेत्य वैराग्यसंन्यासो ज्ञानसंन्यासो ज्ञानवैराग्यसंन्यासः कर्मसंन्यासश्चेति चातुर्विध्यमुपागतस्तद्यथेति दुष्टमदनाभावाच्चेति विषयवैतृष्ण्यमेत्य प्राक्पुण्यकर्मवशात्संन्यस्तः स वैराग्यसंन्यासी शास्त्रज्ञानात्पापपुण्यलोकानुभवश्रवणात्प्रपञ्चोपरतः क्रोधेर्ष्यासूयाहंकाराभिमानात्मकसर्वसंसारं निर्वृत्य दारेषणाधनेषणालोकेषणात्मकदेहवासनां

शास्त्रवासनां लोकवासनां त्यक्त्वा वमनान्नमिव प्रकृतीयं सर्वमिदं हेयं मत्वा साधनचतुष्टयसंपन्नो यः संन्यस्यति स एव ज्ञानसंन्यासी । क्रमेण सर्वमभ्यस्य सर्वमनुभूय ज्ञानवैराग्याभ्यां स्वरूपानुसंधानेन देहमात्रावशिष्टः संन्यस्य जातरूपधरो भवति स ज्ञानवैराग्यसंन्यासी । ब्रह्मचर्यं समाप्य गृही भूत्वा वानप्रस्थाश्रममेत्य वैराग्यभावेऽप्याश्रमक्रमानुसारेण यः संन्यस्यति स कर्मसंन्यासी । ब्रह्मचर्येण संन्यस्य संन्यासाज्जातरूपधरो वैराग्यसंन्यासी । विद्वत्संन्यासी ज्ञानसंन्यासी विविदिषासंन्यासी कर्मसंन्यासी । कर्मसंन्यासोऽपि द्विविधः निमित्तसंन्यासोऽनिमित्तसंन्यासश्चेति । निमित्तस्त्वातुरः । अनिमित्तः क्रमसंन्यासः । आतुरः सर्वकर्मलोपः प्राणस्योत्क्रमणकालसंन्यासः सनिमित्तसंन्यासः । दृढाङ्गो भूत्वा सर्वं कृतकं नश्वरमिति देहादिकं सर्वं हेयं प्राप्य । हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् । ब्रह्मव्यतिरिक्तं सर्वं नश्वरमिति निश्चित्याथो क्रमेण यः संन्यस्यति स संन्यासोऽनिमित्तसंन्यासः । संन्यासः षड्विधो भवति । कुटीचको बहूदको हंसः परमहंसः तुरीयातीतोऽवधूतश्चेति । कुटीचकः शिखायज्ञोपवीती दण्डकमण्डलुधरः कौपीनकन्थाधरः पितृमातृगुर्वाराधनपरः पिठरखनित्रशिक्यादिमन्त्रसाधनपर एकत्रान्नादनपरः श्वेतोर्ध्वपुण्ड्रधारी त्रिदण्डः । बहूदकः शिखादिकन्थाधरस्त्रिपुण्ड्रधारी कुटीचकवत्सर्वसमो मधुकरवृत्त्याष्टकवलाशी हंसो जटाधारी त्रिपुण्ड्रोर्ध्वपुण्ड्रधारी असंक्लृप्तमाधुकरान्नाशी कौपीनखण्डतुण्डधारी । परमहंसः शिखायज्ञोपवीतरहितः पञ्चगृहेष्वेकरात्रान्नादनपरः करपात्री एककौपीनधारी शाटीमेकामेकं वैणवं दण्डमेकशाटीधरो वा भस्मोद्धूलनपरः सर्वत्यागी । तुरीयातीतो गोमुखः फलाहारी । अन्नाहारी चेद्गृहत्रये देहमात्रावशिष्टो दिगम्बरः कुणपवच्छरीरवृत्तिकः । अवधूतस्त्वनियमोऽभिशस्तपतितवर्जनपूर्वकं सर्ववर्णेष्वजगरवृत्त्याहारपरः स्वरूपानुसंधानपरः । आतुरो जीवति चेत्क्रमसंन्यासः कर्तव्यः कुटीचकबहूदकहंसानां ब्रह्मचर्याश्रमादितुरीयाश्रमवत् कुटीचकादीनां संन्यासविधिः । परमहंसादित्रयाणां न कटिसूत्रं न कौपीनं न वस्त्रं न कमण्डलुर्न दण्डः । सार्ववर्णैकभैक्षाटनपरत्वं जातरूपधरत्वं विधिः । संन्यासकालेऽप्यलंबुद्धिपर्यन्तमधीत्य तदनन्तरं कटिसूत्रं कौपीनं दण्डं वस्त्रं कमण्डलुं सर्वमप्सु विसृज्याथ जातरूपधरश्चरेन्न कन्थावेशो नाध्येतव्यो

न श्रोतव्यमन्यात्किंचित्प्रणवादन्यं न तर्कं पठेन्न शब्दमपि बृहच्छब्दा-न्नाध्यापयेन्न महद्वाचोविग्लापनं गिरा पाण्यादिना संभाषणं नान्यस्माद्वा विशेषेण न शूद्रस्त्रीपतितोदक्या संभाषणं न यतेर्देवपूजा नोत्सवदर्शनं तीर्थयात्रावृत्तिः । पुनर्यतिविशेषः । कुटीचकस्यैकत्र भिक्षा बहूदकस्यासंकॢप्तं माधुकरं हंसस्याष्टगृहेष्वष्टकवलं परमहंसस्य पञ्चगृहेषु करपात्रं फलाहारो गोमुखं तुरीयातीतस्यावधूतस्याजगरवृत्तिः सार्ववर्णिकेषु यतिर्नैकरात्रं वसेन्न कस्यापि नमेत्तुरीयातीतावधूतयोर्न ज्येष्ठो यो न स्वरूपज्ञः । स ज्येष्ठोऽपि कनिष्ठो हस्ताभ्यां नद्युत्तरणं न कुर्यान्न वृक्षमारोहेन्न यानादिरूढो न क्रयवि-क्रयपरो न किंचिद्विनिमयपरो न दाम्भिको नानृतवादी न यतेः किंचित्कर्त-व्यमस्त्यस्ति चेत्सांकर्यम् । तस्मान्मननादौ संन्यासिनामधिकारः । आतुर-कुटीचकयोर्भूर्लोको बहूदकस्य स्वर्गलोको हंसस्य तपोलोकः परमहंसस्य सत्यलोकस्तुरीयातीतावधूतयोः स्वात्मन्येव कैवल्यं स्वरूपानुसन्धानेन भ्रमरकीटन्यायवत् । यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् । तं तमेव समाप्नोति नान्यथा श्रुतिशासनम् । तदेवं ज्ञात्वा स्वरूपानुसंधानं विनान्य-थाचारपरो न भवेत्तदाचारवशात्तत्तल्लोकप्राप्तिर्ज्ञानवैराग्यसंपन्नस्य स्वस्मिन्नेव मुक्तिरिति न सर्वत्राचारप्रसक्तिस्तदाचारः । जाग्रत्स्वप्नसुषुप्तिष्वेकशरीरस्य जाग्रत्काले विश्वः स्वप्नकाले तैजसः सुषुप्तिकाले प्राज्ञः अवस्थाभेदादवस्थे-श्वरभेदः कार्यभेदात्कारणभेदस्तासु चतुर्दशकारणानां बाह्यवृत्तयोऽन्तर्वृत्त-यस्तेषामुपादानकारणम् । वृत्तयश्चत्वारः मनोबुद्धिरहंकारश्चित्तं चेति । तत्तद्वृत्तिव्यापारभेदेन पृथगाचारभेदः । नेत्रस्थं जागरितं विद्यात्कण्ठे स्वप्नं समाविशत् । सुषुप्तं हृदयस्थं तु तुरीयं मूर्ध्नि संस्थितम् । तुरीयमक्षरमिति ज्ञात्वा जागरिते सुषुप्त्यवस्थापन्न इव यद्यच्छ्रुतं यद्यद्दृष्टं तत्तत्सर्वमविज्ञातमिव यो वसेत्तस्य स्वप्नावस्थायामपि तादृगवस्था भवति । स जीवन्मुक्त इति वदन्ति । सर्वश्रुत्यर्थप्रतिपादनमपि तस्यैव मुक्तिरिति । भिक्षुर्नैहिकामुष्मिका-पेक्षः । यद्यपेक्षास्ति तदनुरूपो भवति । स्वरूपानुसन्धानव्यतिरिक्तान्य-शास्त्राभ्यासैरुष्ट्रकुङ्कुमभारवद्व्यर्थो न योगशास्त्रप्रवृत्तिर्न सांख्यशास्त्राभ्यासो न मन्त्रतन्त्रव्यापारः । इतरशास्त्रप्रवृत्तिर्यतेरस्ति चेच्छवालंकारवच्चर्मकारवदति-विदूरकर्माचारविद्यादूरो न प्रणवकीर्तनपरो यद्यत्कर्म करोति तत्तत्फलमनु-भवति एरण्डतैलफेनवदतः सर्वं परित्यज्य तत्प्रसक्तं मनोदण्डं करपात्रं

दिगम्बरं दृष्ट्वा परिव्रजेद्भिक्षुः । बालोन्मत्तपिशाचवन्मरणं जीवितं वा न काङ्क्षेत कालमेव प्रतीक्षेत निर्देशभृतकन्यायेन परिव्राडिति । तितिक्षाज्ञान-वैराग्यशमादिगुणवर्जितः । भिक्षामात्रेण जीवी स्यात्स यतिर्यतिवृत्तिहा ॥१॥ न दण्डधारणेन न मुण्डनेन न वेषेण न दम्भाचारेण मुक्तिः । ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते । काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः । स याति नरकान्घोरान्महारौरवसंज्ञितान् ॥ २ ॥ प्रतिष्ठा सूकरीविष्ठासमा गीता महर्षिभिः । तस्मादेनां परित्यज्य कीटवत्पर्यटेद्यतिः ॥ ३ ॥ अयाचितं यथालाभं भोजनाच्छादनं भवेत् । परेच्छया च दिग्वासाः स्नानं कुर्यात्परे-च्छया ॥ ४ ॥ स्वप्नेऽपि यो हि युक्तः स्याज्जाग्रतीव विशेषतः । ईदृक्चेष्टः स्मृतः श्रेष्ठो वरिष्ठो ब्रह्मवादिनाम् ॥ ५ ॥ अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत् । प्राणयात्रिकमात्रः स्यान्मात्रासङ्गाद्विनिर्गतः ॥ ६ ॥ अभिपूजि-तलाभांश्च जुगुप्सेतैव सर्वशः । अभिपूजितलाभैस्तु यतिर्मुक्तोऽपि बध्यते ॥ ७ ॥ प्राणयात्रानिमित्तं च व्यङ्गारे भुक्तवज्जने । काले प्रशस्ते वर्णानां भिक्षार्थं पर्यटेद्गृहान् ॥ ८ ॥ पाणिपात्रश्चरन्योगी नासकृद्भैक्षमाचरेत् । तिष्ठन्भुञ्ज्याच्चरन्भुञ्ज्यान्मध्येनाचमनं तथा ॥ ९ ॥ अब्धिवद्धृतमर्यादा भवन्ति विशदाशयाः । नियतिं न विमुञ्चन्ति महान्तो भास्करा इव ॥ १० ॥ आस्येन तु यदाहारं गोवन्मृगयते मुनिः । तदा समः स्यात्सर्वेषु सोऽमृत-त्वाय कल्पते ॥ ११ ॥ अनिन्द्यं वै व्रजेद्गेहं निन्द्यं गेहं तु वर्जयेत् । अनावृते विशेद्द्वारि गेहे नैवावृते व्रजेत् ॥ १२ ॥ पांसुना च प्रतिच्छन्नशून्यागार-प्रतिश्रयः । वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ॥ १३ ॥ यत्रास्तमितशायी स्यान्निरग्निरनिकेतनः । यथालब्धोपजीवी स्यान्मुनिर्दान्तो जितेन्द्रियः ॥ १४ ॥ निष्क्रम्य वनमास्थाय ज्ञानयज्ञो जितेन्द्रियः । कालकाङ्क्षी चरन्नेव ब्रह्मभूयाय कल्पते ॥ १५ ॥ अभयं सर्वभूतेभ्यो दत्त्वा चरति यो मुनिः । न तस्य सर्वभूतेभ्यो भयमुत्पद्यते क्वचित् ॥ १६ ॥ निर्मानश्चानहंकारो निर्द्वन्द्वश्छिन्नसंशयः । नैव क्रुध्यति न द्वेष्टि नानृतं भाषते गिरा ॥ १७ ॥ पुण्यायतनचारी च भूतानामविहिंसकः । काले प्राप्ते भवेद्भैक्षं कल्प्यते ब्रह्मभूयसे ॥ १८ ॥ वानप्रस्थगृहस्थाभ्यां न संसृज्येत कर्हिचित् । अज्ञात-चर्यां लिप्सेत न चैनं हर्ष आविशेत् ॥ १९ ॥ अध्वा सूर्येण निर्दिष्टः कीटवद्विचरेन्महीम् । आशीर्युक्तानि कर्माणि हिंसायुक्तानि यानि च ॥ २० ॥

लोकसंग्रहयुक्तानि नैव कुर्यान्न कारयेत् । नासच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम् । अतिवादांस्त्यजेत्तर्कान्पक्षं कंचन नाश्रयेत् ॥ २१ ॥ न शिष्याननुबध्नीत ग्रन्थान्नैवाभ्यसेद्बहून् । न व्याख्यामुपयुञ्जीत नारम्भानारभेत्क्वचित् ॥ २२ ॥ अव्यक्तलिङ्गोऽव्यक्तार्थो मुनिरुन्मत्तबालवत् । कविर्मूकवदात्मानं तद्दृष्ट्या दर्शयेन्नृणाम् ॥ २३ ॥ न कुर्यान्न वदेत्किंचिन्न ध्यायेत्साध्वसाधु वा । आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः ॥ २४ ॥ एकश्चरेन्महीमेतां निःसङ्गः संयतेन्द्रियः । आत्मक्रीड आत्मरतिरात्मवान्समदर्शनः ॥ २५ ॥ बुधो बालकवत्क्रीडेत्कुशलो जडवच्चरेत् । वदेदुन्मत्तवद्विद्वान् गोचर्यां नैगमश्चरेत् ॥ २६ ॥ क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धोऽसूयितोऽपि वा । ताडितः संनिरुद्धो वा वृत्त्या वा परिहापितः ॥ २७ ॥ विष्ठितो मूत्रितो वाज्ञैर्बहुधैवं प्रकम्पितः । श्रेयस्कामः कृच्छ्रगत आत्मनात्मानमुद्धरेत् ॥ २८ ॥ संमाननं परां हानिं योगर्द्धेः कुरुते यतः । जनेनावमतो योगी योगसिद्धिं च विन्दति ॥ २९ ॥ तथा चरेत वै योगी सतां धर्ममदूषयन् । जना यथावमन्येरन्गच्छेयुर्नैव सङ्गतिम् ॥ ३० ॥ जरायुजाण्डजादीनां वाङ्मनःकायकर्मभिः । युक्तः कुर्वीत न द्रोहं सर्वसङ्गांश्च वर्जयेत् ॥ ३१ ॥ कामक्रोधौ तथा दर्पलोभमोहादयश्च ये । तांस्तु दोषान्परित्यज्य परिव्राड् भयवर्जितः ॥ ३२ ॥ भैक्षाशनं च मौनित्वं तपो ध्यानं विशेषतः । सम्यग्ज्ञानं च वैराग्यं धर्मोऽयं भिक्षुके मतः ॥ ३३ ॥ काषायवासाः सततं ध्यानयोगपरायणः । ग्रामान्ते वृक्षमूले वा वसेद्देवालयेऽपि वा ॥ ३४ ॥ भैक्षेण वर्तयेन्नित्यं नैकान्नाशी भवेत्क्वचित् । चित्तशुद्धिर्भवेद्यावत्तावन्नित्यं चरेत्सुधीः ॥ ३५ ॥ ततः प्रव्रज्य शुद्धात्मा संचरेद्यत्र कुत्रचित् । बहिरन्तश्च सर्वत्र संपश्यन्हि जनार्दनम् ॥ ३६ ॥ सर्वत्र विचरेन्मौनी वायुवद्वीतकल्मषः । समदुःखसुखः क्षान्तो हस्तप्राप्तं च भक्षयेत् ॥ ३७ ॥ निर्वैरेण समं पश्यन्द्विजगोऽश्वमृगादिषु । भावयन्मनसा विष्णुं परमात्मानमीश्वरम् ॥ ३८ ॥ चिन्मयं परमानन्दं ब्रह्मैवाहमिति स्मरन् । ज्ञात्वैवं मनोदण्डं धृत्वा आशानिवृत्तो भूत्वा आशाम्बरधरो भूत्वा सर्वदा मनोवाक्कायकर्मभिः सर्वसंसारमुत्सृज्य प्रपञ्चावाङ्मुखः स्वरूपानुसन्धानेन भ्रमरकीटन्यायेन मुक्तो भवतीत्युपनिषत् ॥ ३९ ॥

इति नारदपरिव्राजकोपनिषत्सु पञ्चमोपदेशः ॥ ५ ॥

अथ नारदः पितामहमुवाच ॥ भगवन् तदभ्यासवशात् भ्रमरकीटन्यायवत्तदभ्यासः कथमिति । तमाह पितामहः । सत्यवाग्ज्ञानवैराग्याभ्यां विशिष्टदेहावशिष्टो वसेत् । ज्ञानं शरीरं वैराग्यं जीवनं विद्धि शान्तिदान्ती नेत्रे मनो मुखं बुद्धिः कला पञ्चविंशतितत्त्वान्यवयवा अवस्था पञ्चमहाभूतानि कर्म भक्तिज्ञानवैराग्यं शाखा जाग्रत्स्वप्नसुषुप्तितुरीयाश्चतुर्दशकरणानि पङ्कस्तम्भाकाराणीति । एवमपि नावमतिपङ्कं कर्णधार इव यन्तेव गजं स्वबुद्ध्या वशीकृत्य स्वव्यतिरिक्तं सर्वं कृतकं नश्वरमिति मत्वा विरक्तः पुरुषः सर्वदा ब्रह्माहमिति व्यवहरेन्नान्यत्किंचिद्वेदितव्यं स्वव्यतिरेकेण । जीवन्मुक्तो वसेत्कृतकृत्यो भवति । न नाहं ब्रह्मेति व्यवहरेत्किंतु ब्रह्माहमस्मीत्यजस्रं जाग्रत्स्वप्नसुषुप्तिषु । तुरीयावस्थां प्राप्य तुरीयातीतत्वं व्रजेद्दिवा जाग्रन्नक्तं स्वप्नं सुषुप्तमर्धरात्रं गतमित्येकावस्थायां चतस्रोऽवस्थास्त्वेकैककरणाधीनानां चतुर्दशकरणानां व्यापारश्चक्षुरादीनाम् । चक्षुषो रूपग्रहणं श्रोत्रयोः शब्दग्रहणं जिह्वाया रसास्वादनं घ्राणस्य गन्धग्रहणं वचसो वाग्व्यापारः पाणेरादानं पादयोः संचारः पायोरुत्सर्ग उपस्थस्यानन्दग्रहणं त्वचः स्पर्शग्रहणम् । तदधीना च विषयग्रहणबुद्धिः बुद्ध्या बुध्यति चित्तेन चेतयत्यहंकारेणाहंकरोति । विसृज्य जीव एतान्देहाभिमानेन जीवो भवति । गृहाभिमानेन गृहस्थ इव शरीरे जीवः संचरति । प्राग्दले पुण्यावृत्तिराग्नेय्यां निद्रालस्यौ दक्षिणायां क्रौर्यबुद्धिर्नैरृत्यां पापबुद्धिः पश्चिमे क्रीडारतिर्वायव्यां गमने बुद्धिरुत्तरे शान्तिरीशान्ये ज्ञानं कर्णिकायां वैराग्यं केसरेष्वात्मचिन्ता इत्येवं वक्त्रं ज्ञात्वा जीवदवस्थां प्रथमं जाग्रद्द्वितीयं स्वप्नं तृतीयं सुषुप्तं चतुर्थं तुरीयं चतुर्भिर्विरहितं तुरीयातीतम् । विश्वतैजसप्राज्ञतटस्थभेदैरेक एव एको देवः साक्षी निर्गुणश्च तद्ब्रह्माहमिति व्याहरेत् । नो चेज्जाग्रदवस्थायां जाग्रदादिचतस्रोऽवस्थाः स्वप्ने स्वप्नादिचतस्रोऽवस्थाः सुषुप्ते सुषुप्त्यादिचतस्रोऽवस्थाः तुरीये तुरीयादिचतस्रोऽवस्थाः न त्वेवं तुरीयातीतस्य निर्गुणस्य । स्थूलसूक्ष्मकारणरूपैर्विश्वतैजसप्राज्ञेश्वरैः सर्वावस्थासु साक्षी त्वेक एवावतिष्ठते । उत तटस्थो द्रष्टा तटस्थो न द्रष्टा द्रष्टृत्वान्न द्रष्टैव कर्तृत्वभोक्तृत्वाहंकारादिभिः स्पृष्टो जीवः जीवेतरो न स्पृष्टः । जीवोऽपि न स्पृष्ट इति चेन्न । जीवाभिमानेन क्षेत्राभिमानः । शरीराभिमानेन जीवत्वम् । जीवत्वं घटाकाशमहाकाशवद्व्यवधानेऽस्ति । व्यवधानवशादेव हंसः सोऽहमिति मन्त्रेणोच्छ्वास-

निःश्वासव्यपदेशेनानुसन्धानं करोति । एवं विज्ञाय शरीराभिमानं त्यजेन्न शरीराभिमानी भवति । स एव ब्रह्मेत्युच्यते । त्यक्तसङ्गो जितक्रोधो लघ्वाहारो जितेन्द्रियः । पिधाय बुद्ध्या द्वाराणि मनो ध्याने निवेशयेत् ॥ १ ॥ शून्येष्वेवावकाशेषु गुहासु च वनेषु । नित्ययुक्तः सदा योगी ध्यानं सम्यगुपक्रमेत् ॥ २ ॥ आतिथ्यश्राद्धयज्ञेषु देवयात्रोत्सवेषु च । महाजनेषु सिद्ध्यर्थी न गच्छेद्योगवित्क्वचित् ॥ ३ ॥ यथैनमवमन्यन्ते जनाः परिभवन्ति च । तथा युक्तश्चरेद्योगी सतां वर्त्म न दूषयेत् ॥ ४ ॥ वाग्दण्डः कर्मदण्डश्च मनोदण्डश्च ते त्रयः । यस्यैते नियता दण्डाः स त्रिदण्डी महायतिः ॥ ५ ॥ विधूमे च प्रशान्ताग्नौ यस्तु माधुकरीं चरेत् । गृहे च विप्रमुख्यानां यतिः सर्वोत्तमः स्मृतः ॥ ६ ॥ दण्डभिक्षां च यः कुर्यात्स्वधर्मे व्यसनं विना । यस्तिष्ठति न वैराग्यं याति नीचयतिर्हि सः ॥ ७ ॥ यस्मिन् गृहे विशेषेण लभेद्भिक्षां च वासनात् । तत्र नो याति यो भूयः स यतिर्नेतरः स्मृतः ॥ ८ ॥ यः शरीरेन्द्रियादिभ्यो विहीनं सर्वसाक्षिणम् । पारमार्थिकविज्ञानं सुखात्मानं स्वयंप्रभम् ॥ ९ ॥ परतत्त्वं विजानाति सोऽतिवर्णाश्रमी भवेत् । वर्णाश्रमादयो देहे मायया परिकल्पिताः ॥ १० ॥ नात्मनो बोधरूपस्य मम ते सन्ति सर्वदा । इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ॥ ११ ॥ यस्य वर्णाश्रमाचारो गलितः स्वात्मदर्शनात् । स वर्णानाश्रमान्सर्वानतीत्य स्वात्मनि स्थितः ॥ १२ ॥ योऽतीत्य स्वाश्रमान्वर्णानात्मन्येव स्थितः पुमान् । सोऽतिवर्णाश्रमी प्रोक्तः सर्ववेदार्थवेदिभिः ॥ १३ ॥ तस्मादन्यगता वर्णा आश्रमा अपि नारद । आत्मन्यारोपिताः सर्वे भ्रान्त्या तेनात्मवेदिना ॥ १४ ॥ न विधिर्न निषेधश्च न वर्ज्यावर्ज्यकल्पना । ब्रह्मविज्ञानिनामस्ति तथा नान्यच्च नारद ॥ १५ ॥ विरज्य सर्वभूतेभ्य आ विरिञ्चिपदादपि । घृणां विपाट्य सर्वस्मिन्पुत्रमित्रादिकेष्वपि ॥ १६ ॥ श्रद्धालुर्मुक्तिमार्गेषु वेदान्तज्ञानलिप्सया । उपायनकरो भूत्वा गुरुं ब्रह्मविदं व्रजेत् ॥ १७ ॥ सेवाभिः परितोष्यैनं चिरकालं समाहितः । सदा वेदान्तवाक्यार्थं शृणुयात्सुसमाहितः ॥ १८ ॥ निर्ममो निरहंकारः सर्वसङ्गविवर्जितः । सदा शान्त्यादियुक्तः सन्नात्मन्यात्मानमीक्षते ॥ १९ ॥ संसारदोषदृष्ट्यैव विरक्तिर्जायते सदा । विरक्तस्य तु संसारात्संन्यासः स्यान्न संशयः ॥ २० ॥ मुमुक्षुः परहंसाख्यः साक्षान्मोक्षैकसाधनम् । अभ्यसेद्ब्रह्मविज्ञानं

वेदान्तश्रवणादिना ॥ २१ ॥ ब्रह्मविज्ञानलाभाय परहंससमाह्वयः । शान्तिदान्त्यादिभिः सर्वैः साधनैः सहितो भवेत् ॥ २२ ॥ वेदान्ताभ्यासनिरतः शान्तो दन्तो जितेन्द्रियः । निर्भयो निर्ममो नित्यो निर्द्वन्द्वो निष्परिग्रहः ॥ २३ ॥ जीर्णकौपीनवासाः स्यान्मुण्डी नग्नोऽथ वा भवेत् । प्राज्ञो वेदान्तविद्योगी निर्ममो निरहंकृतिः ॥ २४ ॥ मित्रादिषु समो मैत्रः समस्तेष्वेव जन्तुषु । एको ज्ञानी प्रशान्तात्मा स संतरति नेतरः ॥ २५ ॥ गुरूणां च हिते युक्तस्तत्र संवत्सरं वसेत् । नियमेष्वप्रमत्तस्तु यमेषु च सदा भवेत् ॥२६॥ प्राप्य चान्ते ततश्चैव ज्ञानयोगमनुत्तमम् । अविरोधेन धर्मस्य संचरेत्पृथिवीमिमाम् ॥ २७ ॥ ततः संवत्सरस्यान्ते ज्ञानयोगमनुत्तमम् । आश्रमत्रयमुत्सृज्य प्राप्तश्च परमाश्रमम् ॥ २८ ॥ अनुज्ञाप्य गुरूंश्चैव चरेद्धि पृथिवीमिमाम् । त्यक्तसङ्गो जितक्रोधो लघ्वाहारो जितेन्द्रियः ॥ २९ ॥ द्वाविमौ न विरज्येते विपरीतेन कर्मणा । निरारम्भो गृहस्थश्च कार्यवांश्चैव भिक्षुकः ॥ ३० ॥ माद्यति प्रमदां दृष्ट्वा सुरां पीत्वा च माद्यति । तस्माद्दृष्टिविषां नारीं दूरतः परिवर्जयेत् ॥ ३१ ॥ संभाषणं सह स्त्रीभिरालापः प्रेक्षणं तथा । नृत्तं गानं सहासं च परिवादांश्च वर्जयेत् ॥ ३२ ॥ न स्नानं न जपः पूजा न होमो नैव साधनम् । नाग्निकार्यादिकार्यं च नैतस्यास्तीह नारद ॥ ३३ ॥ नार्चनं पितृकार्यं च तीर्थयात्रा व्रतानि च । धर्माधर्मादिकं नास्ति न विधिलौकिकी क्रिया ॥ ३४ ॥ संत्यजेत्सर्वकर्माणि लोकाचारं च सर्वशः । कृमिकीटपतङ्गांश्च तथा योगी वनस्पतीन् ॥ ३५ ॥ न नाशयेद्बुधो जीवन्परमार्थमतिर्यतिः । नित्यमन्तर्मुखः स्वच्छः प्रशान्तात्मा स्वपूर्णधीः ॥ ३६ ॥ अन्तःसङ्गपरित्यागी लोके विहर नारद । नाराजके जनपदे चरत्येकचरो मुनिः ॥ ३७ ॥ निःस्तुतिर्निर्नमस्कारो निःस्वधाकार एव च । चलाचलनिकेतश्च यतिर्यादृच्छिको भवेदित्युपनिषत् ॥ ३८ ॥

इति नारदपरिव्राजकोपनिषत्सु षष्ठोपदेशः ॥ ६ ॥

अथ यतेर्नियमः कथमिति पृष्टं नारदं पितामहः पुरस्कृत्य विरक्तः सन्यो वर्षासु ध्रुवशीलोऽष्टौ मास्येकाकी चरन्नैकत्र निवसेद्भिक्षुर्भयात्सारङ्गवदेकत्र न तिष्ठेत्स्वगमननिरोधग्रहणं न कुर्याद्धस्ताभ्यां नद्युत्तरणं न कुर्यान्न वृक्षारोहणमपि न देवोत्सवदर्शनं कुर्यान्नैकत्राशी न बाह्यदेवार्चनं कुर्यात्स्वव्यतिरिक्तं सर्वं त्यक्त्वा मधुकरवृत्त्याहारमाहरन्कृशो भूत्वा मेदोवृद्धिमकुर्वन्नाज्यं रुधिर-

मिव त्यजेदेकत्रान्नं पललमिव गन्धलेपनमशुद्धिलेपनमिव क्षारमन्त्यजमिव वस्त्रमुच्छिष्टपात्रमिवाभ्यङ्गं स्त्रीसङ्गमिव मित्राह्लादकं मूत्रमिव स्पृहां गोमांसमिव ज्ञातचरदेशं चण्डालवाटिकामिव स्त्रियमहिमिव सुवर्णं कालकूटमिव सभास्थलं श्मशानस्थलमिव राजधानीं कुम्भीपाकमिव शवपिण्डवदेकत्रान्नं न देहान्तरदर्शनं प्रपञ्चवृत्तिं परित्यज्य स्वदेशमुत्सृज्य ज्ञातचरदेशं विहाय विस्मृतपदार्थं पुनः प्राप्तहर्ष इव स्वमानन्दमनुस्मरन्स्वशरीराभिमानदेशविस्मरणं मत्वा स्वशरीरं शवमिव हेयमुपगम्य कारागृहविनिर्मुक्तचोरवत्पुत्राप्तबन्धुभवस्थलं विहाय दूरतो वसेत् ॥ १॥ अयत्नेन प्राप्तमाहरन्ब्रह्मप्रणवध्यानानुसन्धानपरो भूत्वा सर्वकर्मनिर्मुक्तः कामक्रोधलोभमोहमदमात्सर्यादिकं दग्ध्वा त्रिगुणातीतः षडूर्मिरहितः षड्भावविकारशून्यः सत्यवाक्शुचिरद्रोही ग्राम एकरात्रं पत्तने पञ्चरात्रं क्षेत्रे पञ्चरात्रं तीर्थे पञ्चरात्रमनिकेतः स्थिरमतिर्नानृतवादी गिरिकन्दरेषु वसेदेक एव द्वौ वा चरेत् ग्रामं त्रिभिर्नगरं चतुर्भिर्ग्राममित्येकश्चरेत्। भिक्षुश्चतुर्दशकरणानां न तत्रावकाशं दद्यादविच्छिन्नज्ञानाद्वैराग्यसंपत्तिमनुभूय मत्तो न कश्चिन्नान्यो व्यतिरिक्त इत्यात्मन्यालोच्य सर्वतः स्वरूपमेव पश्यञ्जीवन्मुक्तिमवाप्य प्रारब्धप्रतिभासनाशपर्यन्तं चतुर्विधं स्वरूपं ज्ञात्वा देहपतनपर्यन्तं स्वरूपानुसंधानेन वसेत् ॥ २ ॥ त्रिषवणस्नानं कुटीचकस्य बहूदकस्य द्विवारं हंसस्यैकवारं परमहंसस्य मानसस्नानं तुरीयातीतस्य भस्मस्नानमवधूतस्य वायव्यस्नानम् । ऊर्ध्वपुण्ड्रं कुटीचकस्य त्रिपुण्ड्रं बहूदकस्य ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं हंसस्य भस्मोद्धूलनं परमहंसस्य तुरीयातीतस्य तिलकपुण्ड्रमवधूतस्य न किंचित्। तुरीयातीतावधूतयोः ऋतुक्षौरं कुटीचकस्य ऋतुद्वयक्षौरं बहूदकस्य न क्षौरं हंसस्य परमहंसस्य च न क्षौरम्। अस्ति चेदयनक्षौरम् । तुरीयातीतावधूतयोः न क्षौरम् । कुटीचकस्यैकान्नं माधुकरं बहूदकस्य हंसपरमहंसयोः करपात्रं तुरीयातीतस्य गोमुखं अवधूतस्याजगरवृत्तिः। शाटीद्वयं कुटीचकस्य बहूदकस्यैकशाटी हंसस्य खण्डं दिगम्बरं परमहंसस्य एककौपीनं वा तुरीयातीतावधूतयोर्जातरूपधरत्वं हंसपरमहंसयोरजिनं न त्वन्येषाम्॥३॥ कुटीचकबहूदकयोर्देवार्चनं हंसपरमहंसयोर्मानसार्चनं तुरीयातीतावधूतयोः सोहंभावना। कुटीचकबहूदकयोर्मन्त्रजपाधिकारो हंसपरमहंसयोर्ध्यानाधिकारस्तुरीयातीतावधूतयोर्न त्वन्याधिकारस्तुरीयातीतावधूतयोर्महावाक्योपदेशाधिकारः परमहंसस्यापि। कुटीचकबहूदकहंसानां

नान्यस्योपदेशाधिकारः । कुटीचकबहूदकयोर्मानुषप्रणवः हंसपरमहंसयोरान्तरप्रणवः तुरीयातीतावधूतयोर्ब्रह्मप्रणवः । कुटीचकबहूदकयोः श्रवणं हंसपरमहंसयोर्मननं तुरीयातीतावधूतयोर्निदिध्यासः । सर्वेषामात्मानुसन्धानं विधिरित्येव मुमुक्षुः सर्वदा संसारतारकं तारकमनुस्मरञ्जीवन्मुक्तो वसेदधिकारविशेषेण कैवल्यप्राप्त्युपायमन्विष्येद्यतिरित्युपनिषत् ॥ ४ ॥

इति नारदपरिव्राजकोपनिषत्सु सप्तमोपदेशः ॥ ७ ॥

अथ हैनं भगवन्तं परमेष्ठिनं नारदः पप्रच्छ संसारतारकं प्रसन्नो ब्रूहीति । तथेति परमेष्ठी वक्तुमुपचक्रमे ओमिति ब्रह्मेति व्यष्टिसमष्टिप्रकारेण । का व्यष्टिः का समष्टिः संहारप्रणवः सृष्टिप्रणवश्चान्तर्बहिश्चोभयात्मकत्वात्त्रिविधो ब्रह्मप्रणवः । अन्तःप्रणवो व्यावहारिकप्रणवः । बाह्यप्रणव आर्षप्रणवः । उभयात्मको विराट्प्रणवः । संहारप्रणवो ब्रह्मप्रणव अर्धमात्राप्रणवः । ओमिति ब्रह्म । ओमित्येकाक्षरमन्तःप्रणवं विद्धि । स चाष्टधा भिद्यते । अकारोकारमकारार्धमात्रानादबिन्दुकलाशक्तिश्चेति । तत्र चत्वार अकारश्चायुतावयवान्वित उकारः सहस्रावयवान्वितो मकारः शतावयवोपेतोऽर्धमात्राप्रणवोऽनन्तावयवाकारः । सगुणो विराट्प्रणवः संहारो निर्गुणप्रणव उभयात्मकोत्पत्तिप्रणवो यथाप्लुतो विराट्प्लुतः प्लुतसंहारो विराट्प्रणवः षोडशमात्रात्मकः षट्त्रिंशत्तत्त्वातीतः । षोडशमात्रात्मकत्वं कथमित्युच्यते । अकारः प्रथमोकारो द्वितीया मकारस्तृतीयार्धमात्रा चतुर्थी नादः पञ्चमी बिन्दुः षष्ठी कला सप्तमी कलातीताष्टमी शान्तिर्नवमी शान्त्यतीता दशमी उन्मन्येकादशी मनोन्मनी द्वादशी पुरी त्रयोदशी मध्यमा चतुर्दशी पश्यन्ती पञ्चदशी परा । षोडशी पुनश्चतुःषष्टिमात्रा प्रकृतिपुरुषद्वैविध्यमासाद्याष्टाविंशत्युत्तरभेदमात्रास्वरूपमासाद्य सगुणनिर्गुणत्वमुपेत्यैकोऽपि ब्रह्मप्रणवः सर्वाधारः परंज्योतिरेष सर्वेश्वरो विभुः सर्वदेवमयः सर्वप्रपञ्चाधारगर्भितः ॥ १ ॥ सर्वाक्षरमयः कालः सर्वागममयः शिवः । सर्वश्रुत्युत्तमो मृग्यः सकलोपनिषन्मयः ॥ २ ॥ भूतं भव्यं भविष्यद्यत्त्रिकालोदितमव्ययम् । तदप्योंकारमेवायं विद्धि मोक्षप्रदायकम् ॥ ३ ॥ तमेवात्मानमित्येतद्ब्रह्मशब्देन वर्णितम् । तदेकममृतमजरमनुभूय तथोमिति ॥ ४ ॥ सशरीरं समारोप्य तन्मयत्वं तथोमिति । त्रिशरीरं तमात्मानं परं ब्रह्म विनिश्चिनु ॥५॥ परं ब्रह्मानुसंदध्याद्विश्वादीनां क्रमः क्रमात् । स्थूलत्वात्स्थूलभुक्त्वाच्च सूक्ष्मत्वात्सूक्ष्मभुक् परम् ॥ ६ ॥ ऐक्यत्वानन्दभोगाच्च

सोऽयमात्मा चतुर्विधः । चतुष्पाज्जागरितः स्थूलः स्थूलप्रज्ञो हि विश्वभुक् ॥ ७ ॥ एकोनविंशतिमुखः साष्टाङ्गः सर्वगः प्रभुः । स्थूलभुक् चतुरात्माथ विश्वो वैश्वानरः पुमान् ॥ ८ ॥ विश्वजित्प्रथमः पादः स्वप्नस्थानगतः प्रभुः । सूक्ष्मप्रज्ञः स्वतोऽष्टाङ्ग एको नान्यः परंतप ॥ ९ ॥ सूक्ष्मभुक् चतुरात्माथ तैजसो भूतराडयम् । हिरण्यगर्भः स्थूलोऽन्तर्द्वितीयः पाद उच्यते ॥ १० ॥ कामं कामयते यावद्यत्र सुप्तो न कंचन । स्वप्नं पश्यति नैवात्र तत्सुषुप्तमपि स्फुटम् ॥ ११ एकीभूतः सुषुप्तस्थः प्रज्ञानघनवान्सुखी । नित्यानन्दमयोऽप्यात्मा सर्वजीवान्तरस्थितः ॥ १२ ॥ तथाप्यानन्दभुक् चेतोमुखः सर्वगतोऽव्ययः । चतुरात्मेश्वरः प्राज्ञस्तृतीयः पादसंज्ञितः ॥ १३ ॥ एष सर्वेश्वरश्चैष सर्वज्ञः सूक्ष्मभावनः । एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ ॥ १४ ॥ भूतानां त्रयमप्येतत्सर्वोपरमबाधकम् । तत्सुषुप्तं हि यत्स्वप्नं मायामात्रं प्रकीर्तितम् ॥ १५ ॥ चतुर्थश्चतुरात्मापि सच्चिदेकरसो ह्ययम् । तुरीयावसितत्वाच्च एकैकत्वानुसारतः ॥ १६ ॥ ज्ञातानुज्ञात्रननुज्ञातृविकल्पज्ञानसाधनम् । विकल्पत्रयमत्रापि सुषुप्तं स्वप्नमान्तरम् ॥ १७ ॥ मायामात्रं विदित्वैवं सच्चिदेकरसो ह्ययम् । विभक्तो ह्ययमादेशो न स्थूलप्रज्ञमन्वहम् ॥ १८ ॥ नं सूक्ष्मप्रज्ञमत्यन्तं न प्रज्ञं न क्वचिन्मुने । नैवाप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञमान्तरम् ॥ १९ ॥ नाप्रज्ञमपि न प्रज्ञाघनं चादृष्टमेव च । तदलक्षणमग्राह्यं यद्व्यवहार्यमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवं शान्तमद्वैतं चतुर्थं मन्यन्ते स ब्रह्मप्रणवः स विज्ञेयो नापरस्तुरीयः सर्वत्र भानुवन्मुमुक्षूणामाधारः स्वयंज्योतिर्ब्रह्माकाशः सर्वदा विराजते परंब्रह्मत्वादित्युपनिषत्॥२०॥

इति नारदपरिव्राजकोपनिषत्स्वष्टमोपदेशः ॥ ८ ॥

अथ ब्रह्मस्वरूपं कथमिति नारदः पप्रच्छ । तं होवाच पितामहः किं ब्रह्मस्वरूपमिति । अन्योऽसावन्योऽहमस्मीति ये विदुस्ते पशवो न स्वभावपशवस्तमेवं ज्ञात्वा विद्वान्मृत्युमुखात्प्रमुच्यते नान्यः पन्था विद्यतेऽयनाय । कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् । संयोग एषां नत्वात्मभावादात्मा ह्यनीशः सुखदुःखहेतोः ॥ १ ॥ ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम् । यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः ॥ २ ॥ तमेकस्मिंस्त्रिवृतं षोडशान्तं शतार्धारं विंशतिप्रत्यराभिः । अष्टकैः षड्भिर्विश्वरूपैकपाशं त्रिमार्गभेदं द्विनिमित्तैक-

सोहम् ॥ ३ ॥ पञ्चस्रोतोम्बुं पञ्चयोन्युग्रवक्रां पञ्चप्राणोर्मिं पञ्चबुद्ध्यादिमूलाम् । पञ्चावर्तां पञ्चदुःखौघवेगां पञ्चाशद्भेदां पञ्चपर्वामधीमः ॥ ४ ॥ सर्वाजीवे सर्वसंस्थे बृहन्ते तस्मिन्हंसो भ्राम्यते ब्रह्मचक्रे । पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ॥ ५ ॥ उद्गीथमेतत्परमं तु ब्रह्म तस्मिंस्त्रयं स्वप्रतिष्ठाक्षरं च । अत्रान्तरं वेदविदो विदित्वा लीनाः परे ब्रह्मणि तत्परायणाः ॥ ६ ॥ संयुक्तमेतत्क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः । अनीशश्चात्मा बध्यते भोक्तृभावाज्ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ ७ ॥ ज्ञाज्ञौ द्वावजावीशानीशावजा ह्येका भोक्तृभोगार्थयुक्ता । अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्म ह्येतत् ॥ ८ ॥ क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः । तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः ॥ ९ ॥ ज्ञात्वा देवं मुच्यते सर्वपाशैः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः । तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आत्मकामः ॥ १० ॥ एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किंचित् । भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म ह्येतत् ॥ ११ ॥ आत्मविद्यातपोमूलं तद्ब्रह्मोपनिषत्परम् । य एवं विदित्वा स्वरूपमेवानुचिन्तयंस्तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ १२ ॥ तस्माद्विराड्भूतं भव्यं भविष्यद्भवत्यनश्वरस्वरूपम् । अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम् । तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥ १३ ॥ अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥ १४ ॥ अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ १५ ॥ सर्वस्य धातारमचिन्त्यशक्तिं सर्वागमान्तार्थविशेषवेद्यम् । परात्परं परमं वेदितव्यं सर्वावसाने सकृद्वेदितव्यम् ॥ १६ ॥ कविं पुराणं पुरुषोत्तमोत्तमं सर्वेश्वरं सर्वदेवैरुपास्यम् । अनादिमध्यान्तमनन्तमव्ययं शिवाच्युताम्भोरुहगर्भभूधरम् ॥ १७ ॥ स्वेनावृतं सर्वमिदं प्रपञ्चं पञ्चात्मकं पञ्चसु वर्तमानम् । पञ्चीकृतानन्तभवप्रपञ्चं पञ्चीकृतस्वावयवैरसंवृतम् । परात्परं यन्महतो महान्तं स्वरूपतेजोमयशाश्वतं शिवम् ॥ १८ ॥ नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमनसो वापि प्रज्ञानेनैनमाप्नुयात् ॥ १९ ॥ नान्तःप्रज्ञं न बहिःप्रज्ञं न स्थूलं नास्थूलं न ज्ञानं नाज्ञानं नोभयतः-

प्रज्ञमग्राह्यमव्यवहार्यं स्वान्तःस्थितः स्वयमेवेति य एवं वेद स मुक्तो भवति स मुक्तो भवतीत्याह भगवान्पितामहः। स्वस्वरूपज्ञः परिव्राट् परिव्राडेकाकी चरति भयत्रस्तसारङ्गवत्तिष्ठति। गमनविरोधं न करोति। स्वशरीरव्यतिरिक्तं सर्वं त्यक्त्वा षट्पदवृत्त्या स्थित्वा स्वरूपानुसन्धानं कुर्वन्सर्वमनन्यबुद्ध्या स्वस्मिन्नेव मुक्तो भवति। स परिव्राट् सर्वक्रियाकारकनिवर्तको गुरुशिष्यशास्त्रादिविनिर्मुक्तः सर्वसंसारं विसृज्य चामोहितः परिव्राट् कथं निर्धनिकः सुखी धनवाञ्ज्ञानाज्ञानोभयातीतः सुखदुःखातीतः स्वयंज्योतिःप्रकाशः सर्ववेद्यः सर्वज्ञः सर्वसिद्धिदः सर्वेश्वरः सोऽहमिति। तद्विष्णोः परमं पदं यत्र गत्वा न निवर्तन्ते योगिनः। सूर्यो न तत्र भाति न शशाङ्कोऽपि न स पुनरावर्तते न स पुनरावर्तते तत्कैवल्यमित्युपनिषत् ॥ २० ॥

इति नारदव्राजकोपनिषत्सु नवमोपदेशः ॥ ९ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

इति नारदपरिव्राजकोपनिषत्समाप्ता ॥ ४५ ॥

---

# त्रिशिखिब्राह्मणोपनिषत् ॥ ४६ ॥

## ( शुक्लयजुर्वेदीया )

योगज्ञानैकसंसिद्धशिवतत्त्वतयोज्ज्वलम् ।
प्रतियोगिविनिर्मुक्तं परंब्रह्म भवाम्यहम् ॥

ॐ पूर्णमद इति शान्तिः ॥

ॐ त्रिशिखी ब्राह्मण आदित्यलोकं जगाम तं गत्वोवाच। भगवन् किं देहः किं प्राणः किं कारणं किमात्मेति। स होवाच सर्वमिदं शिव एव विजानीहि। किंतु नित्यः शुद्धो निरञ्जनो विभुरद्वयः शिव एकः स्वेन भासेदं सर्वं दृष्ट्वा तप्तायःपिण्डवदेकं भिन्नवदवभासते। तद्भासकं किमिति चेदुच्यते। सच्छब्दवाच्यमविद्याशबलं ब्रह्म। ब्रह्मणोऽव्यक्तम्। अव्यक्तान्महत्। महतोऽहंकारः। अहंकारात्पञ्च तन्मात्राणि। पञ्चतन्मात्रेभ्यः पञ्चमहाभूतानि। पञ्चमहाभूतेभ्योऽखिलं जगत् ॥ तदखिलं किमिति। भूतविकारविभागादिरिति। एकस्मिन्पिण्डे कथं भूतविकारविभाग इति। तत्तत्कार्यकारणभेदरूपेणांशतत्त्ववाचकवाच्यस्थानभेदविषयदेवताकोशभेदविभागा भवन्ति। अथाकाशो-

ऽन्तःकरणमनोबुद्धिचित्ताहंकाराः । वायुः समानोदानव्यानापानप्राणाः । वह्निः श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि । आपः शब्दस्पर्शरूपरसगन्धाः । पृथिवी वाक्पाणिपादपायूपस्थाः । ज्ञानसंकल्पनिश्चयानुसंधानाभिमाना आकाशकार्यान्तःकरणविषयाः । समीकरणोन्नयनग्रहणश्रवणोच्छ्वासा वायुकार्यप्राणादिविषयाः । शब्दस्पर्शरूपरसगन्धा अग्निकार्यज्ञानेन्द्रियविषया अबाश्रिताः । वचनादानगमनविसर्गानन्दाः पृथिवीकार्यकर्मेन्द्रियविषयाः । कर्मज्ञानेन्द्रियविषयेषु प्राणतन्मात्रविशया अन्तर्भूताः । मनोबुद्ध्योश्चित्ताहंकारौ चान्तर्भूतौ । अवकाशविधूतदर्शनपिण्डीकरणधारणाः सूक्ष्मतमा जैवतन्मात्रविषयाः । एवं द्वादशाङ्गानि आध्यात्मिकान्याधिभौतिकान्याधिदैविकानि अत्र निशाकरचतुर्मुखदिग्वातार्कवरुणाश्व्यग्नीन्द्रोपेन्द्रप्रजापतियमा इत्यक्षाधिदेवतारूपैर्द्वादशनाड्यन्तःप्रवृत्ताः प्राणा एवाङ्गानि अङ्गज्ञानं तदेव ज्ञातेति । अथ व्योमानिलानलजलान्नानां पञ्चीकरणमिति । ज्ञातृत्वं समानयोगेन श्रोत्रद्वारा शब्दगुणो वागधिष्ठित आकाशे तिष्ठति आकाशस्तिष्ठति । मनोव्यानयोगेन त्वग्द्वारा स्पर्शगुणः पाण्यधिष्ठितो वायौ तिष्ठति वायुस्तिष्ठति । बुद्धिरुदानयोगेन चक्षुर्द्वारा रूपगुणः पादाधिष्ठितोऽग्नौ तिष्ठत्यग्निस्तिष्ठति । चित्तमपानयोगेन जिह्वाद्वारा रसगुण उपस्थाधिष्ठितोऽप्सु तिष्ठत्यापस्तिष्ठन्ति । अहंकारः प्राणयोगेन घ्राणद्वारा गन्धगुणो गुदाधिष्ठितः पृथिव्यां तिष्ठति पृथिवी तिष्ठति य एवं वेद । अत्रैते श्लोका भवन्ति—पृथग्भूते षोडश कलाः स्वार्थभागान्परान्क्रमात् । अन्तःकरणव्यानाक्षिरसपायुनभः क्रमात् ॥ १ ॥ मुख्यात्पूर्वोत्तरैर्भागैर्भूते भूते चतुश्चतुः । पूर्वमाकाशमाश्रित्य पृथिव्यादिषु संस्थिताः ॥ २ ॥ मुख्यादूर्ध्वे परा ज्ञेया न परानुत्तरान्विदुः । एवमंशो ह्यभूत्तस्मात्तेभ्यश्चांशो ह्यभूत्तथा ॥ ३ ॥ तस्मादन्योन्यमाश्रित्य ह्योतं प्रोतमनुक्रमात् । पञ्चभूतमयी भूमिः सा चेतनसमन्विता ॥ ४ ॥ तत ओषधयोऽन्नं च ततः पिण्डाश्चतुर्विधाः रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ॥ ५ ॥ केचित्तद्योगतः पिण्डा भूतेभ्यः संभवाः क्वचित् । तस्मिन्नन्नमयः पिण्डो नाभिमण्डलसंस्थितः ॥ ६ ॥ अस्य मध्येऽस्ति हृदयं सनालं पद्मकोशवत् । सत्त्वान्तर्वर्तिनो देवाः कर्त्रहंकारचेतनाः ॥ ७ ॥ अस्य बीजं तमःपिण्डं मोहरूपं जडं घनम् । वर्तते कण्ठमाश्रित्य मिश्रीभूतमिदं जगत् ॥ ८ ॥ प्रत्यगानन्दरूपात्मा मूर्ध्नि स्थाने परे पदे । अनन्तशक्ति-

संयुक्तो जगद्रूपेण भासते ॥ ९ ॥ सर्वत्र वर्तते जाग्रत्स्वप्नं जाग्रति वर्तते । सुषुप्तं च तुरीयं च नान्यावस्थासु कुत्रचित् ॥ १० ॥ सर्वदेशेष्वनुस्यूतश्चतूरूपः शिवात्मकः । यथा महाफले सर्वे रसाः सर्वप्रवर्तकाः ॥ ११ ॥ तथैवान्नमये कोशे कोशास्तिष्ठन्ति चान्तरे । यथा कोशस्तथा जीवो यथा जीवस्तथा शिवः ॥ १२ ॥ सविकारस्तथा जीवो निर्विकारस्तथा शिवः । कोशास्तस्य विकारास्ते ह्यवस्थासु प्रवर्तकाः ॥ १३ ॥ यथा रसाशये फेनं मथनादेव जायते । मनोनिर्मथनादेव विकल्पा बहवस्तथा ॥ १४ ॥ कर्मणा वर्तते कर्मी तत्त्यागाच्छान्तिमाप्नुयात् । अयने दक्षिणे प्राप्ते प्रपञ्चाभिमुखं गतः ॥ १५ ॥ अहंकाराभिमानेन जीवः स्याद्धि सदाशिवः । स चाविवेकप्रकृतिसङ्गत्या तत्र मुह्यते ॥ १६ ॥ नानायोनिशतं गत्वा शेतेऽसौ वासनावशात् । विमोक्षात्संचरत्येव मत्स्यः कूलद्वयं यथा ॥ १७ ॥ ततः कालवशादेव ह्यात्मज्ञानविवेकतः । उत्तराभिमुखो भूत्वा स्थानात्स्थानान्तरं क्रमात् ॥ १८ ॥ मूर्ध्न्याधायात्मनः प्राणान्योगाभ्यासं स्थितश्चरन् । योगात्संजायते ज्ञानं ज्ञानाद्योगः प्रवर्तते ॥ १९ ॥ योगज्ञानपरो नित्यं स योगी न प्रणश्यति । विकारस्थं शिवं पश्येद्विकारश्च शिवे न तु ॥ २० ॥ योगप्रकाशकं योगैर्ध्यायेच्चानन्यभावनः । योगज्ञाने न विद्येते तस्य भावो न सिध्यति ॥ २१ ॥ तस्मादभ्यासयोगेन मनःप्राणान्निरोधयेत् । योगी निशितधारेण क्षुरेणैव निकृन्तयेत् ॥ २२ ॥ शिखा ज्ञानमयी वृत्तिर्यमाद्यष्टाङ्गसाधनैः । ज्ञानयोगः कर्मयोग इति योगो द्विधा मतः ॥ २३ ॥ क्रियायोगमथेदानीं शृणु ब्राह्मणसत्तम । अव्याकुलस्य चित्तस्य बन्धनं विषये क्वचित् ॥२४ ॥ यत्संयोगो द्विजश्रेष्ठ स च द्वैविध्यमश्नुते । कर्म कर्तव्यमित्येव विहितेष्वेव कर्मसु ॥ २५ ॥ बन्धनं मनसो नित्यं कर्मयोगः स उच्यते । यत्तु चित्तस्य सततमर्थे श्रेयसि बन्धनम् ॥ २६ ॥ ज्ञानयोगः स विज्ञेयः सर्वसिद्धिकरः शिवः । यस्योक्तलक्षणे योगे द्विविधेऽप्यव्ययं मनः ॥ २७ ॥ स याति परमं श्रेयो मोक्षलक्षणमञ्जसा । देहेन्द्रियेषु वैराग्यं यम इत्युच्यते बुधैः ॥ २८ ॥ अनुरक्तिः परे तत्त्वे सततं नियमः स्मृतः । सर्ववस्तुन्युदासीनभावमासनमुत्तमम् ॥ २९ ॥ जगत्सर्वमिदं मिथ्याप्रतीतिः प्राणसंयमः । चित्तस्यान्तर्मुखीभावः प्रत्याहारस्तु सत्तम ॥ ३० ॥ चित्तस्य निश्चलीभावो धारणा धारणं विदुः । सोऽहं चिन्मात्रमेवेति चिन्तनं ध्यानमुच्यते ॥ ३१ ॥ ध्यानस्य

विस्मृतिः सम्यक्समाधिरभिधीयते । अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ॥ ३२ ॥ क्षमा धृतिर्मिताहारः शौचं चेति यमा दश । तपःसन्तुष्टिरास्तिक्यं दानमाराधनं हरेः ॥ ३३ ॥ वेदान्तश्रवणं चैव ह्रीर्मतिश्च जपो व्रतम् ॥ इति । आसनानि तदङ्गानि स्वस्तिकादीनि वै द्विज ॥ ३४ ॥ वर्ण्यन्ते स्वस्तिकं पादतलयोरुभयोरपि । पूर्वोत्तरे जानुनी द्वे कृत्वासनमुदीरितम् ॥३५॥ सव्ये दक्षिणगुल्फं तु पृष्ठपार्श्वे नियोजयेत् । दक्षिणेऽपि तथा सव्यं गोमुखं गोमुखं यथा ॥ ३६ ॥ एकं चरणमन्यस्मिन्नूरावारोप्य निश्चलः । आस्ते यदिदमेनोघ्नं वीरासनमुदीरितम् ॥ ३७ ॥ गुदं नियम्य गुल्फाभ्यां व्युत्क्रमेण समाहितः । योगासनं भवेदेतदिति योगविदो विदुः ॥ ३८ ॥ ऊर्वोरुपरि वै धत्ते यदा पादतले उभे । पद्मासनं भवेदेतत्सर्वव्याधिविषापहम् ॥ ३९ ॥ पद्मासनं सुसंस्थाप्य तदङ्गुष्ठद्वयं पुनः । व्युत्क्रमेणैव हस्ताभ्यां बद्धपद्मासनं भवेत् ॥ ४० ॥ पद्मासनं सुसंस्थाप्य जानूर्वोरन्तरे करौ । निवेश्य भूमावातिष्ठेद्व्योमस्थः कुक्कुटासनः ॥ ४१ ॥ कुक्कुटासनबन्धस्थो दोर्भ्यां संबध्य कन्धरम् । शेते कूर्मवदुत्तान एतदुत्तानकूर्मकम् ॥ ४२ ॥ पादाङ्गुष्ठौ तु पाणिभ्यां गृहीत्वा श्रवणावधि । धनुराकर्षकाकृष्टं धनुरासनमीरितम् ॥ ४३ ॥ सीवनीं गुल्फदेशाभ्यां निपीड्य व्युत्क्रमेण तु । प्रसार्य जानुनोर्हस्तावासनं सिंहरूपकम् ॥ ४४ ॥ गुल्फौ च वृषणस्याधः सीवन्युभयपार्श्वयोः । निवेश्य पादौ हस्ताभ्यां बद्ध्वा भद्रासनं भवेत् ॥ ४५ ॥ सीवनीपार्श्वमुभयं गुल्फाभ्यां व्युत्क्रमेण तु । निपीड्यासनमेतच्च मुक्तासनमुदीरितम् ॥ ४६ ॥ अवष्टभ्य धरां सम्यक्तलाभ्यां हस्तयोर्द्वयोः । कूर्परौ नाभिपार्श्वे तु स्थापयित्वा मयूरवत् ॥ ४७ ॥ समुन्नतशिरःपादं मयूरासनमिष्यते । वामोरुमूले दक्षाङ्घ्रिं जान्वोर्वेष्टितपाणिना ॥ ४८ ॥ वामेन वामाङ्गुष्ठं तु गृहीतं मत्स्यपीठकम् । योनिं वामेन संपीड्य मेढ्रादुपरि दक्षिणम् ॥ ४९ ॥ ऋजुकायः समासीनः सिद्धासनमुदीरितम् । प्रसार्य भुवि पादौ तु दोर्भ्यामङ्गुष्ठमादरात् ॥ ५० ॥ जानूपरि ललाटं तु पश्चिमं तानमुच्यते । येन केन प्रकारेण सुखं धार्यं च जायते ॥ ५१ ॥ तत्सुखासनमित्युक्तमशक्तस्तत्समाचरेत् । आसनं विजितं येन जितं तेन जगत्त्रयम् ॥ ५२ ॥ यमैश्च नियमैश्चैव आसनैश्च सुसंयतः । नाडीशुद्धिं च कृत्वादौ प्राणायामं समाचरेत् ॥ ५३ ॥ देहमानं स्वाङ्गुलिभिः षण्ण-

चत्यङ्गुलायतम् । प्राणः शरीरादधिको द्वादशाङ्गुलमानतः ॥ ५४ ॥ देहस्थम- लिलं देहसमुद्भूतेन वह्निना । न्यूनं समं वा योगेन कुर्वन्ब्रह्मविदिष्यते ॥ ५५॥ देहमध्ये शिखिस्थानं तप्तजाम्बूनदप्रभम् । त्रिकोणं द्विपदामन्यच्चतुरस्रं चतु- ष्पदम् ॥ ५६ ॥ वृत्तं विहङ्गमानां तु षडस्रं सर्पजन्मनाम् । अष्टास्रं स्वेदजानां तु तस्मिन्दीपवदुज्ज्वलम् । कन्दस्थानं मनुष्याणां देहमध्यं नवाङ्गुलम् । चतुरङ्गुलमुत्सेधं चतुरङ्गुलमायतम् ॥ ५७ ॥ अण्डाकृति तिरश्चां च द्विजानां च चतुष्पदाम् । तुन्दमध्यं तदिष्टं वै तन्मध्यं नाभिरिष्यते ॥ ५८ ॥ तत्र चक्रं द्वादशारं तेषु विष्ण्वादिमूर्तयः । अहं अत्र स्थितश्चक्रं भ्रामयामि स्वमायया ॥ ५९ ॥ अरेषु भ्रमते जीवः क्रमेण द्विजसत्तम । तन्तुपञ्जरमध्य- स्था यथा भ्रमति लूतिका ॥ ६० ॥ प्राणाधिरूढश्चरति जीवस्तेन विना नहि । तस्योर्ध्वे कुण्डलीस्थानं नाभेस्तिर्यगथोर्ध्वतः ॥६१॥ अष्टप्रकृतिरूपा सा चाष्टधा कुण्डलीकृता । यथावद्वायुसारं च ज्वलनादि च नित्यशः ॥६२॥ परितः कन्द- पार्श्वे तु निरुध्यैव सदा स्थिता । मुखेनैव समावेष्ट्य ब्रह्मरन्ध्रमुखं तथा ॥६३॥ योगकालेन मरुता साग्निना बोधिता सती । स्फुरिता हृदयाकाशे नागरूपा महोज्ज्वला ॥ ६४ ॥ अपानाद्‍द्व्यङ्गुलादूर्ध्वमधो मेढ्रस्य तावता । देहमध्यं मनुष्याणां हृन्मध्यं तु चतुष्पदाम् ॥ ६५ ॥ इतरेषां तुन्दमध्ये प्राणापानस- मायुताः । चतुष्प्रकारद्व्ययुते देहमध्ये सुषुम्नया ॥ ६६ ॥ कन्दमध्ये स्थिता नाडी सुषुम्ना सुप्रतिष्ठिता । पद्मसूत्रप्रतीकाशा ऋजुरूर्ध्वप्रवर्तिनी ॥ ६७ ॥ ब्रह्मणो विवरं यावद्विद्युदाभासनालकम् । वैष्णवी ब्रह्मनाडी च निर्वाणप्राप्ति- पद्धतिः ॥६८॥ इडा च पिङ्गला चैव तस्याः सव्येतरे स्थिते । इडा समुत्थिता कन्दाद्वामनासापुटावधि ॥ ६९ ॥ पिङ्गला चोत्थिता तस्माद्दक्षनासापुटावधि । गान्धारी हस्तिजिह्वा च द्वे चान्ये नाडिके स्थिते ॥ ७० ॥ पुरतः पृष्ठतस्तस्य वामेतरदृशौ प्रति । पूषायशस्विनीनाड्यौ तस्मादेव समुत्थिते ॥ ७१ ॥ सव्येतरश्रुत्यवधि पायुमूलादलम्बुसा । अधोगता शुभा नाडी मेढ्रान्तावधि- रायता ॥ ७२ ॥ पादाङ्गुष्ठावधिः कन्दादधोयाता च कौशिकी । दशप्रकार- भूतास्ताः कथिताः कन्दसंभवाः ॥ ७३ ॥ तन्मूला बहवो नाड्यः स्थूल- सूक्ष्माश्च नाडिकाः । द्वासप्ततिसहस्राणि स्थूलाः सूक्ष्माश्च नाडयः ॥ ७४ ॥ संख्यातुं नैव शक्यन्ते स्थूलमूलाः पृथग्विधाः । यथाश्वत्थदले सूक्ष्माः

स्थूलाश्च विततास्तथा ॥ ७५ ॥ प्राणापानौ समानश्च उदानो व्यान एव च । नागः कूर्मश्च कृकरो देवदत्तो धनंजयः ॥ ७६ ॥ चरन्ति दशनाडीषु दश प्राणादिवायवः । प्राणादिपञ्चकं तेषु प्रधानं तत्र च द्वयम् ॥ ७७ ॥ प्राण एवाथवा ज्येष्ठो जीवात्मानं बिभर्ति यः । आस्यनासिकयोर्मध्यं हृदयं नाभिमण्डलम् ॥ ७८ ॥ पादाङ्गुष्ठमिति प्राणस्थानानि द्विजसत्तम । अपानश्चरति ब्रह्मन्गुदमेढ्रोरुजानुषु ॥ ७९ ॥ समानः सर्वगात्रेषु सर्वव्यापी व्यवस्थितः । उदानः सर्वसन्धिस्थः पादयोर्हस्तयोरपि ॥ ८० ॥ व्यानः श्रोत्रोरुकट्यां च गुल्फस्कन्धगलेषु च । नागादिवायवः पञ्च त्वगस्थ्यादिषु संस्थिताः ॥ ८१ ॥ तुन्दस्थजलमन्नं च रसादीनि समीकृतम् । तुन्दमध्यगतः प्राणस्तानि कुर्यात्पृथक्पृथक् ॥ ८२ ॥ इत्यादिचेष्टनं प्राणः करोति च पृथक्स्थितम् । अपानवायुर्मूत्रादेः करोति च विसर्जनम् ॥ ८३ ॥ प्राणापानादिचेष्टादि क्रियते व्यानवायुना । उज्जीर्यते शरीरस्थमुदानेन नभस्वता ॥ ८४ ॥ पोषणादिशरीरस्य समानः कुरुते सदा । उद्गारादिक्रियो नागः कूर्मोऽक्षादिनिमीलनः ॥ ८५ ॥ कृकरः क्षुतयोः कर्ता दत्तो निद्रादिकर्मकृत् । मृतगात्रस्य शोभादेर्धनंजय उदाहृतः ॥ ८६ ॥ नाडिभेदं मरुद्भेदं मरुतां स्थानमेव च । चेष्टाश्च विविधास्तेषां ज्ञात्वैव द्विजसत्तम ॥ ८७ ॥ शुद्धौ यतेत नाडीनां पूर्वोक्तज्ञानसंयुतः । विविक्तदेशमासाद्य सर्वसंबन्धवर्जितः ॥ ८८ ॥ योगाङ्गद्रव्यसंपूर्णं तत्र दारुमये शुभे । आसने कल्पिते दर्भकुशकृष्णाजिनादिभिः ॥ ८९ ॥ तावदासनमुत्सेधे तावद्द्वयसमायते । उपविश्यासनं सम्यक्स्वस्तिकादि यथारुचि ॥ ९० ॥ बद्ध्वा प्रागासनं विप्रो ऋजुकायः समाहितः । नासाग्रन्यस्तनयनो दन्तैर्दन्तानसंस्पृशन् ॥ ९१ ॥ रसनां तालुनि न्यस्य स्वस्थचित्तो निरामयः । आकुञ्चितशिरः किंचिन्निबध्नन्योगमुद्रया ॥ ९२ ॥ हस्तौ यथोक्तविधिना प्राणायामं समाचरेत् । रेचनं पूरणं वायोः शोधनं रेचनं तथा ॥ ९३ ॥ चतुर्भिः क्लेशनं वायोः प्राणायाम उदीर्यते । हस्तेन दक्षिणेनैव पीडयेन्नासिकापुटम् ॥ ९४ ॥ शनैः शनैरथ बहिः प्रक्षिपेत्पिङ्गलानिलम् । इडया वायुमापूर्य ब्रह्मन्षोडशमात्रया ॥ ९५ ॥ पूरितं कुम्भयेत्पश्चाच्चतुःषष्ट्या तु मात्रया । द्वात्रिंशन्मात्रया सम्यग्रेचयेत्पिङ्गलानिलम् ॥ ९६ ॥ एवं पुनः पुनः कार्यं व्युत्क्रमानुक्रमेण तु । संपूर्णकुम्भवद्देहं कुम्भ-

येन्मातरिश्वना ॥ ९७ ॥ पूरणान्नाडयः सर्वाः पूर्यन्ते मातरिश्वना । एवं कृते सति ब्रह्मंश्चरन्ति दश वायवः ॥ ९८ ॥ हृदयाम्भोरुहं चापि व्याकोचं भवति स्फुटम् । तत्र पश्येत्परात्मानं वासुदेवमकल्मषम् ॥ ९९ ॥ प्रातर्मध्यन्दिने सायमर्धरात्रे च कुम्भकान् । शनैरशीतिपर्यन्तं चतुर्वारं समभ्यसेत् ॥ १०० ॥ एकाहमात्रं कुर्वाणः सर्वपापैः प्रमुच्यते । संवत्सरत्रयादूर्ध्वं प्राणायामपरो नरः ॥ १०१ ॥ योगसिद्धो भवेद्योगी वायुजिद्विजितेन्द्रियः । अल्पाशी स्वल्पनिद्रश्च तेजस्वी बलवान्भवेत् ॥ १०२ ॥ अपमृत्युमतिक्रम्य दीर्घमायुरवाप्नुयात् । प्रस्वेदजननं यस्य प्राणायामस्तु सोऽधमः ॥ १०३ ॥ कम्पनं वपुषो यस्य प्राणायामेषु मध्यमः । उत्थानं वपुषो यस्य स उत्तम उदाहृतः ॥ १०४ ॥ अधमे व्याधिपापानां नाशः स्यान्मध्यमे पुनः । पापरोगमहाव्याधिनाशः स्यादुत्तमे पुनः ॥१०५॥ अल्पमूत्रोऽल्पविष्ठश्च लघुदेहो मिताशनः । पट्विन्द्रियः पटुमतिः कालत्रयविदात्मवान् ॥ १०६ ॥ रेचकं पूरकं मुक्त्वा कुम्भीकरणमेव यः । करोति त्रिषु कालेषु नैव तस्यास्ति दुर्लभम् ॥ १०७ ॥ नाभिकन्दे च नासाग्रे पादाङ्गुष्ठे च यत्नवान् । धारयेन्मनसा प्राणान्सन्ध्याकालेषु वा सदा ॥ १०८ ॥ सर्वरोगैर्विनिर्मुक्तो जीवेद्योगी गतक्लमः । कुक्षिरोगविनाशः स्यान्नाभिकन्देषु धारणात् ॥ १०९ ॥ नासाग्रे धारणाद्दीर्घमायुः स्याद्देहलाघवम् । ब्राह्मे मुहूर्ते संप्राप्ते वायुमाकृष्य जिह्वया ॥ ११० ॥ पिबतस्त्रिषु मासेषु वाक्सिद्धिर्महती भवेत् । अभ्यासतश्च षण्मासान्महारोगविनाशनम् ॥१११॥ यत्र यत्र धृतो वायुरङ्गे रोगादिदूषिते । धारणादेव मरुतस्तत्तदारोग्यमश्नुते ॥ ११२ ॥ मनसो धारणादेव पवनो धारितो भवेत् । मनसः स्थापने हेतुरुच्यते द्विजपुङ्गव ॥११३॥ करणानि समाहृत्य विषयेभ्यः समाहितः । अपानमूर्ध्वमाकृष्येदुदरोपरि धारयेत् ॥ ११४ ॥ बध्नन्कराभ्यां श्रोत्रादिकरणानि यथातथम् । युञ्जानस्य यथोक्तेन वर्त्मना स्ववशं मनः ॥ ११५ ॥ मनोवशात्प्राणवायुः स्ववशे स्थाप्यते सदा । नासिकापुटयोः प्राणः पर्यायेण प्रवर्तते ॥ ११६ ॥ तिस्रश्च नाडिकास्तासु स यावन्तं चरत्ययम् । शङ्खिनीविवरे याम्ये प्राणः प्राणभृतां सताम् ॥ ११७ ॥ तावन्त च पुनः कालं सौम्ये चरति संततम् । इत्थं क्रमेण चरता वायुना वायुजिन्नरः ॥ ११८ ॥ अहश्च रात्रिं पक्षं च मासमृत्वयनादिकम् । अन्तर्मुखो विजानीयात्कालभेदं समाहितः ॥११९॥

अङ्गुष्ठादिस्वावयवस्फुरणादर्शनेरपि । अरिष्टैर्जीवितस्यापि जानीयात्क्षयमात्मनः ॥ १२० ॥ ज्ञात्वा यतेत कैवल्यप्राप्तये योगवित्तमः । पादाङ्गुष्ठे कराङ्गुष्ठे स्फुरणं यस्य न श्रुतिः ॥ १२१ ॥ तस्य संवत्सरादूर्ध्वं जीवितस्य क्षयो भवेत् । मणिबन्धे तथा गुल्फे स्फुरणं यस्य नश्यति ॥ १२२ ॥ षण्मासावधिरेतस्य जीवितस्य स्थितिर्भवेत् । कूर्परे स्फुरणं यस्य तस्य त्रैमासिकी स्थितिः ॥१२३॥ कुक्षिमेहनपार्श्वे च स्फुरणानुपलम्भने । मासावधिर्जीवितस्य तु दर्शने तदर्धस्य ॥१२४॥ आश्रिते जठरद्वारे दिनानि दश जीवितम् । ज्योतिः खद्योतवद्यस्य तदर्धं तस्य जीवितम् ॥१२५॥ जिह्वाग्रादर्शने त्रीणि दिनानि स्थितिरात्मनः । ज्वालाया दर्शने मृत्युर्द्विदिने भवति ध्रुवम् ॥ १२६ ॥ एवमादीन्यरिष्टानि दृष्ट्वायुःक्षयकारणम् । निःश्रेयसाय युञ्जीत जपध्यानपरायणः ॥ १२७ ॥ मनसा परमात्मानं ध्यात्वा तद्रूपतामियात् । यद्यष्टादशभेदेषु मर्मस्थानेषु धारणम् ॥ १२८ ॥ स्थानात्स्थानं समाकृष्य प्रत्याहारा स उच्यते । पादाङ्गुष्ठं तथा गुल्फं जङ्घामध्यं तथैव च ॥ १२९ ॥ मध्यमूर्वोश्च मूलं च पायुर्हृदयमेव च । मेहनं देहमध्यं च नाभिं च गलकूर्परम् ॥१३०॥ तालुमूलं च मूलं च घ्राणस्याक्ष्णोश्च मण्डलम् । भ्रुवोर्मध्यं ललाटं च मूलमूर्ध्वं च जानुनी ॥१३१॥ मूलं च करयोर्मूलं महान्त्येतानि वै द्विज । पञ्चभूतमये देहे भूतेष्वेतेषु पञ्चसु ॥ १३२ ॥ मनसो धारणं यत्तद्युक्तस्य च यमादिभिः । धारणा सा च संसारसागरोत्तारकारणम् ॥ १३३ ॥ आजानुपादपर्यन्तं पृथिवीस्थानमिष्यते । पित्तला चतुरस्रा च वसुधा वज्रलाञ्छिता ॥ १३४ ॥ स्मर्तव्या पञ्च घटिकास्तत्रारोप्य प्रभञ्जनम् । आ जानुकटिपर्यन्तमपां स्थानं प्रकीर्तितम् ॥ १३५ ॥ अर्धचन्द्रसमाकारं श्वेतमर्जुनलाञ्छितम् । स्मर्तव्यमम्भः श्वसनमारोप्य दश नाडिकाः ॥ १३६ ॥ आ देहमध्यकट्यन्तमग्निस्थानमुदाहृतम् । तत्र सिन्दूरवर्णोऽग्निर्ज्वलनं दश पञ्च च ॥ १३७ ॥ स्मर्तव्यो नाडिकाः प्राणं कृत्वा कुम्भे तथेरितम् । नाभेरुपरि नासान्तं वायुस्थानं तु तत्र वै ॥ १३८ ॥ वेदिकाकारवद्धूम्रो बलवान्भूतमारुतः । स्मर्तव्यः कुम्भकेनैव प्राणमारोप्य मारुतम् ॥ १३९ ॥ घटिका विंशतिस्तस्माद्घ्राणाद्ब्रह्मबिलावधि । व्योमस्थानं नभस्तत्र भिन्नाञ्जनसमप्रभम् ॥ १४० ॥ व्योम्नि मारुतमारोप्य कुम्भकेनैव यत्नवान् । पृथिव्यंशे तु देहस्य चतुर्बाहुं किरीटिनम् ॥ १४१ ॥ अनिरुद्धं हरिं योगी यतेत भवमुक्तये । अबंशे पूरयेद्योगी नारायणमुदग्रधीः ॥ १४२ ॥ प्रद्युम्नमग्नौ वाय्वंशे संकर्षण-

मतः परम् । व्योमांशे परमात्मानं वासुदेवं सदा स्मरेत् ॥ १४३ ॥ अचिरा-
देव तत्प्राप्तिर्युक्तानस्य न संशयः । बद्ध्वा योगासनं पूर्वं हृद्देशे हृदयाञ्जलिः
॥ १४४ ॥ नासाग्रन्यस्तनयनो जिह्वां कृत्वा च तालुनि । दन्तैर्दन्तानसंस्पृश्य
ऊर्ध्वकायः समाहितः ॥ १४५ ॥ संयमेच्चेन्द्रियग्राममात्मबुद्ध्या विशुद्धया ।
चिन्तनं वासुदेवस्य परस्य परमात्मनः ॥ १४६ ॥ स्वरूपव्याप्तरूपस्य ध्यानं
कैवल्यसिद्धिदम् । यममात्रं वासुदेवं चिन्तयेत्कुम्भकेन यः ॥ १४७ ॥ सप्त-
जन्मार्जितं पापं तस्य नश्यति योगिनः । नाभिकन्दात्समारभ्य यावद्धृदय-
गोचरम् ॥ १४८ ॥ जाग्रद्वृत्तिं विजानीयात्कण्ठस्थं स्वप्नवर्तनम् । सुषुप्तं तालु-
मध्यस्थं तुर्यं भ्रूमध्यसंस्थितम् ॥ १४९ ॥ तुर्यातीतं परं ब्रह्म ब्रह्मरन्ध्रे तु
लक्षयेत् । जाग्रद्वृत्तिं समारभ्य यावद्ब्रह्मबिलान्तरम् ॥ १५० ॥ तत्रात्मायं
तुरीयस्य तुर्यान्ते विष्णुरुच्यते । ध्यानेनैव समायुक्तो व्योम्नि चात्यन्तनिर्मले
॥ १५१ ॥ सूर्यकोटिद्युतिरथं नित्योदितमधोक्षजम् । हृदयाम्बुरुहासीनं
ध्यायेद्वा विश्वरूपिणम् ॥१५२॥ अनेकाकारखचितमनेकवदनान्वितम् । अनेक-
भुजसंयुक्तमनेकायुधमण्डितम् ॥ १५३ ॥ नानावर्णधरं देवं शान्तमुग्रमुदायु-
धम् । अनेकनयनाकीर्णं सूर्यकोटिसमप्रभम् ॥ १५४ ॥ ध्यायतो योगिनः
सर्वमनोवृत्तिर्विनश्यति । हृत्पुण्डरीकमध्यस्थं चैतन्यज्योतिरव्ययम् ॥ १५५ ॥
कदम्बगोलकाकारं तुर्यातीतं परात्परम् । अनन्तमानन्दमयं चिन्मयं भास्करं
विभुम् ॥ १५६ ॥ निवातदीपसदृशमकृत्रिममणिप्रभम् । ध्यायतो योगिनस्तस्य
मुक्तिः करतले स्थिता ॥ १५७ ॥ विश्वरूपस्य देवस्य रूपं यत्किंचिदेव हि ।
स्थवीयः सूक्ष्ममन्यद्वा पश्यन्हृदयपङ्कजे ॥ १५८ ॥ ध्यायतो योगिनो यस्तु
साक्षादेव प्रकाशते । अणिमादिफलं चैव सुखेनैवोपजायते ॥ १५९ ॥ जीवा-
त्मनः परस्यापि यद्येवमुभयोरपि । अहमेव परं ब्रह्म ब्रह्माहमिति संस्थितिः
॥ १६० ॥ समाधिः स तु विज्ञेयः सर्ववृत्तिविवर्जितः । ब्रह्म संपद्यते योगी न
भूयः संसृतिं व्रजेत् ॥ १६१ ॥ एवं विशोध्य तत्त्वानि योगी निःस्पृहचेतसा ।
यथा निरिन्धनो वह्निः स्वयमेव प्रशाम्यति ॥ १६२ ॥ ग्राह्याभावे मनः
प्राणो निश्चयज्ञानसंयुतः । शुद्धसत्त्वे परे लीनो जीवः सैन्धवपिण्डवत्
॥ १६३ ॥ मोहजालकसंघातो विश्वं पश्यति स्वप्नवत् । सुषुप्तिवद्यश्चरति
स्वभावपरिनिश्चलः ॥ १६४ ॥ निर्वाणपदमाश्रित्य योगी कैवल्यमश्नुत इत्यु-
पनिषत् ॥ ॐ पूर्णमद इति शान्तिः ॥

इति शुक्लयजुर्वेदीयत्रिशिखिब्राह्मणोपनिषत्समाप्ता ॥ ४६ ॥

---

# सीतोपनिषत् ॥ ४७ ॥

## ( आथर्वणीया )

इच्छाज्ञानक्रियाशक्तित्रयं यद्भावसाधनम् ।
तद्ब्रह्मसत्तासामान्यं सीतातत्त्वमुपास्महे ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

देवा ह वै प्रजापतिमब्रुवन्का सीता किं रूपमिति । स होवाच प्रजापतिः सा सीतेति । मूलप्रकृतिरूपत्वात्सा सीता प्रकृतिः स्मृता । प्रणवप्रकृतिरूपत्वात्सा सीता प्रकृतिरुच्यते । सीता इति त्रिवर्णात्मा साक्षान्मायामयी भवेत् । विष्णुः प्रपञ्चबीजं च माया ईकार उच्यते । सकारः सत्यममृतं प्राप्तिः सोमश्च कीर्त्यते । तकारस्तारलक्ष्म्या च वैराजः प्रस्तरः स्मृतः ॥ १ ॥ ईकाररूपिणी सोमामृतावयवदिव्यालंकारस्रङ्मौक्तिकाद्याभरणालंकृता महामायाऽव्यक्तरूपिणी व्यक्ता भवति । प्रथमा शब्दब्रह्ममयी स्वाध्यायकाले प्रसन्ना उद्भावनकरी सात्मिका, द्वितीया भूतले हलाग्रे समुत्पन्ना, तृतीया ईकाररूपिणी अव्यक्तस्वरूपा भवतीति सीतेत्युदाहरन्ति । शौनकीये—श्रीरामसान्निध्यवशाज्जगदानन्दकारिणी । उत्पत्तिस्थितिसंहारकारिणी सर्वदेहिनाम् । सीता भगवती ज्ञेया मूलप्रकृतिसंज्ञिता । प्रणवत्वात्प्रकृतिरिति वदन्ति ब्रह्मवादिन इति । अथातो ब्रह्मजिज्ञासेति च । सा सर्ववेदमयी सर्वदेवमयी सर्वलोकमयी सर्वकीर्तिमयी सर्वधर्ममयी सर्वाधारकार्यकारणमयी महालक्ष्मीर्देवेशस्य भिन्नाभिन्नरूपा चेतनाचेतनात्मिका ब्रह्मस्थावरात्मिका तद्गुणकर्मविभागभेदाच्छरीररूपा देवर्षिमनुष्यगन्धर्वरूपा असुरराक्षसभूतप्रेतपिशाचभूतादिभूतशरीररूपा भूतेन्द्रियमनःप्राणरूपेति च विज्ञायते ॥२॥ सा देवी त्रिविधा भवति—शक्त्यासनेच्छाशक्तिः क्रियाशक्तिः साक्षाच्छक्तिरिति । इच्छाशक्तिस्त्रिविधा भवति—श्रीभूमिनीलात्मिका भद्ररूपिणी प्रभावरूपिणी सोमसूर्याग्निरूपा भवति । सोमात्मिका ओषधीनां प्रभवति कल्पवृक्षपुष्पफललतागुल्मात्मिका औषधभेषजात्मिका अमृतरूपा देवानां महत्स्तोमफलप्रदा अमृतेन तृप्तिं जनयन्ती देवानामन्नेन पशूनां तृणेन तत्तज्जीवानां सूर्यादिसकलभुवनप्रकाशिनी दिवा च रात्रिः कालकलानिमेषमारभ्य घटिकाष्टयामदिवस( वार )रात्रिभेदेन पक्षमासर्त्वयनसंवत्सरभेदेन मनुष्याणां शतायुः-

कल्पनया प्रकाशमाना चिरक्षिप्रव्यपदेशेन निमेषमारभ्य परार्धपर्यन्तं कालचक्रं जगच्चक्रमित्यादिप्रकारेण चक्रवत्परिवर्तमानाः सर्वस्यैतस्यैव कालस्य विभागविशेषाः प्रकाशरूपाः कालरूपा भवन्ति । अग्निरूपा अन्नपानादिप्राणिनां क्षुत्तृष्णात्मिका देवानां मुखरूपा वनौषधीनां शीतोष्णरूपा काष्ठेष्वन्तर्बहिश्च नित्यानित्यरूपा भवति ॥ ३ ॥ श्रीदेवी त्रिविधं रूपं कृत्वा भगवत्संकल्पानुगुण्येन लोकरक्षणार्थं रूपं धारयति । श्रीरिति लक्ष्मीरिति लक्ष्यमाणा भवतीति विज्ञायते । भूदेवी ससागराम्भःसप्तद्वीपा वसुन्धरा भूरादिचतुर्दशभुवनानामाधाराधेया प्रणवात्मिका भवति । नीला च मुखविद्युन्मालिनी सर्वौषधीनां सर्वप्राणिनां पोषणार्थं सर्वरूपा भवति । समस्तभुवनस्याधोभागे जलाकारात्मिका मण्डूकमयेति भुवनाधारेति विज्ञायते ॥ क्रियाशक्तिस्वरूपं हरेर्मुखान्नादः । तन्नादाद्बिन्दुः । बिन्दोरोंकारः । ओंकारात्परतो रामवैखानसपर्वतः । तत्पर्वते कर्मज्ञानमयीभिर्बहुशाखा भवन्ति ॥ ४ ॥ तत्र त्रयीमयं शास्त्रमाद्यं सर्वार्थदर्शनम् । ऋग्यजुःसामरूपत्वात्त्रयीति परिकीर्तिता ।··· कार्यसिद्धेन चतुर्धा परिकीर्तिता । ऋचो यजूंषि सामानि अथर्वाङ्गिरसस्तथा । चातुर्होत्रप्रधानत्वाल्लिङ्गादित्रितयं त्रयी । अथर्वाङ्गिरसं रूपं सामऋग्यजुरात्मकम् । तथा दिशन्त्याभिचारसामान्येन पृथक्पृथक् । एकविंशतिशाखायामृग्वेदः परिकीर्तितः । शतं च नवशाखासु यजुषामेव जन्मनाम् । साम्नः सहस्रशाखाः स्युः पञ्चशाखा अथर्वणः । वैखानसमतस्तस्मिन्नादौ प्रत्यक्षदर्शनम् । स्मर्यते मुनिभिर्नित्यं वैखानसमतः परम् । कल्पो व्याकरणं शिक्षा निरुक्तं ज्योतिषं छन्द एतानि षडङ्गानि ॥५॥ उपाङ्गमयनं चैव मीमांसान्यायविस्तरः । धर्मज्ञसेवितार्थं च वेदवेदोऽधिकं तथा । निबन्धाः सर्वशाखा च समयाचारसङ्गतिः । धर्मशास्त्रं महर्षीणामन्तःकरणसंभृतम् । इतिहासपुराणाख्यमुपाङ्गं च प्रकीर्तितम् । वास्तुवेदो धनुर्वेदो गान्धर्वश्च तथा मुने । आयुर्वेदश्च पञ्चैते उपवेदाः प्रकीर्तिताः । दण्डो नीतिश्च वार्ता च विद्या वायुजयः परः । एकविंशतिभेदोऽयं स्वप्रकाशः प्रकीर्तितः । वैखानसऋषेः पूर्वं विष्णोर्वाणी समुद्भवेत् । त्रयीरूपेण संकल्प्य इत्थं देही विजृम्भते । संख्यारूपेण संकल्प्य वैखानसऋषेः पुरा । उदितो यादृशः पूर्वं तादृशं शृणु मेऽखिलम् । शश्वद्ब्रह्ममयं रूपं क्रियाशक्तिरुदाहृता । साक्षाच्छक्तिर्भगवतः स्मरणमात्ररूपाविर्भावप्रादुर्भावात्मिका निग्रहानुग्रहरूपा शान्तितेजोरूपा व्यक्ताव्यक्तकारणचरणसमग्रावयवमुखवर्णभेदाभेदरूपा भगवत्सहचारिण्यनपायिन्य-

देवता राम एव च। तारं श्रीबीजयुग्मं च बीजशक्त्यादयो मताः ॥ २८ ॥ षडङ्गं च ततः कुर्यान्मन्त्रार्णैरेव बुद्धिमान् । तारं श्रीबीजयुग्मं च रामाय नम उच्चरेत् ॥ २९ ॥ ग्लौमों बीजं वदेन्मायां हृद्रामाय पुनश्च ताम् । शिवोमारामसन्त्रोऽयं वस्वर्णस्तु वसुप्रदः ॥ ३० ॥ ऋषिः सदाशिवः प्रोक्तो गायत्रं छन्द उच्यते । शिवोमारामचन्द्रोऽत्र देवता परिकीर्तिता ॥ ३१ ॥ दीर्घया मायथाङ्गानि तारपञ्चार्णयुक्तया । रामं त्रिनेत्रं सोमार्धधारिणं शूलिनं परम् । भस्मोद्धूलितसर्वाङ्गं कपर्दिनमुपास्महे ॥ ३२ ॥ रामाभिरामां सौन्दर्यसीमां सोमावतंसिकाम् । पाशाङ्कुशधनुर्बाणधरां ध्यायेत्त्रिलोचनाम् ॥ ३३ ॥ ध्यायन्नेवं वर्णलक्षं जपतर्पणतत्परः । बिल्वपत्रैः फलैः पुष्पैस्तिलाज्यैः पङ्कजैर्हुनेत् ॥ ३४ ॥ स्वयमायान्ति निधयः सिद्धयश्च सुरेप्सिताः । पुनरष्टाक्षरस्याथ ब्रह्मगायत्रराघवाः ॥ ३५ ॥ ऋष्यादयस्तु विज्ञेयाः श्रीबीजं मम शक्तिकम् । तत्प्रीत्यै विनियोगश्च मन्त्रार्णैरङ्गकल्पना ॥ ३६ ॥ केयूराङ्गदकङ्कणैर्मणिगतैर्विद्योतमानं सदा रामं पार्वणचन्द्रकोटिसदृशच्छत्रेण वै राजितम् । हेमस्तम्भसहस्रषोडशयुते मध्ये महामण्डपे देवेशं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ ३७ ॥ किं मन्त्रैर्बहुभिर्विनश्वरफलैरायाससाध्यैर्वृथा किंचिल्लोभवितानमात्रविफलैः संसारदुःखावहैः । एकः सन्नपि सर्वमन्त्रफलदो लोभादिदोषोज्झितः श्रीरामः शरणं ममेति सततं मन्त्रोऽयमष्टाक्षरः ॥ ३८ ॥ एवमष्टाक्षरः सम्यक् सप्तधा परिकीर्तितः । रामसप्ताक्षरो मन्त्र आद्यन्ते तारसंयुतः ॥ ३९ ॥ नवार्णो मन्त्रराजः स्याच्छेषं षड्वर्णवन्न्यसेत् । जानकीवल्लभं ङेन्तं वह्नेर्जायाहुमादिकम् ॥ ४० ॥ दशाक्षरोऽयं मन्त्रः स्यात्सर्वाभीष्टफलप्रदः । दशाक्षरस्य मन्त्रस्य वसिष्ठोऽस्य ऋषिर्विराट् ॥ ४१ ॥ छन्दोऽस्य देवता रामः सीतापाणिपरिग्रहः । आद्यो बीजं द्विठः शक्तिः कामेनाङ्गक्रिया मता ॥ ४२ ॥ शिरोललाटभ्रूमध्ये तालुकर्णेषु हृद्यपि । नाभ्यूरुजानुपादेषु दशार्णान्विन्यसेन्मनोः ॥ ४३ ॥ अयोध्यानगरे रत्नचित्रे सौवर्णमण्डपे । मन्दारपुष्पैराबद्धविताने तोरणाञ्चिते ॥ ४४ ॥ सिंहासने समासीनं पुष्पकोपरि राघवम् । रक्षोभिर्हरिभिर्देवैर्दिव्ययानगतैः शुभैः ॥ ४५ ॥ संस्तूयमानं मुनिभिः प्रह्वैश्च परिसेवितम् । सीतालंकृतवामाङ्गं लक्ष्मणेनोपसेवितम् ॥ ४६ ॥ श्यामं प्रसन्नवदनं सर्वाभरणभूषितम् । ध्यायन्नेवं जपेन्मन्त्रं वर्णलक्षमन-

न्यधीः ॥ ४७ ॥ रामं ङेन्तं धनुष्पाणयेऽन्तः स्याद्वह्निसुन्दरी । दशाक्षरोऽयं मन्त्रः स्यान्मुनिर्ब्रह्मा विराट् स्मृतः ॥ ४८ ॥ छन्दस्तु देवता प्रोक्तो रामो राक्षसमर्दनः । शेषं तु पूर्ववत्कुर्याच्चापबाणधरं स्मरेत् ॥ ४९ ॥ तारमायार-मानङ्गवाक्स्वबीजैश्च षड्विधः । दशार्णो मन्त्रराजः स्याद्रुद्रवर्णात्मको मनुः ॥ ५० ॥ शेषं षडर्णवज्ज्ञेयं न्यासध्यानादिकं बुधैः । द्वादशाक्षरमन्त्रस्य श्रीराम ऋषिरुच्यते ॥ ५१ ॥ जगती छन्द इत्युक्तं श्रीरामो देवता मतः । प्रणवो बीजमित्युक्तः क्लीं शक्तिर्ह्रीं च कीलकम् ॥ ५२ ॥ मन्त्रेणाङ्गानि विन्यस्य शिष्टं पूर्ववदाचरेत् । तारं मायां समुच्चार्य भरताग्रज इत्यपि ॥ ५३ ॥ रामं क्लीं वह्निजायान्तं मन्त्रोऽयं द्वादशाक्षरः । ॐ हृद्भगवते रामचन्द्रभद्रौ च ङेयुतौ ॥ ५४ ॥ अर्कार्णो द्विविधोऽप्यस्य ऋषिध्यानादिपूर्ववत् । छन्दस्तु जगती चैव मन्त्रार्णैरङ्गकल्पना ॥ ५५ ॥ श्रीरामेति पदं चोक्त्वा जयराम ततः परम् । जयद्वयं वदेत्प्राज्ञो रामेति मनुराजकः ॥ ५६ ॥ त्रयोदशार्ण ऋष्यादि पूर्ववत्सर्वकामदः । पदद्वयद्विरावृत्तेरङ्गं ध्यानं दशार्णवत् ॥ ५७ ॥ तारादिसहितः सोऽपि स चतुर्दशवर्णकः । त्रयोदशार्णमुच्चार्य पश्चाद्रामेति योजयेत् ॥ ५८ ॥ स वै पञ्चदशार्णस्तु जपतां कल्पभूरुहः । नमश्च सीताप-तये रामायेति हनद्वयम् ॥ ५९ ॥ ततस्तु कवचास्त्रान्तः षोडशाक्षर ईरितः । तस्यागस्त्यऋषिश्छन्दो बृहती देवता च सः ॥ ६० ॥ रां बीजं शक्तिरस्त्रं च कीलकं हुमितीरितम् । द्विपञ्चत्रिचतुर्वर्णैः सर्वैरङ्गं न्यसेत्क्रमात् ॥ ६१ ॥ तारादिसहितः सोऽपि मन्त्रः सप्तदशाक्षरः । तारं नमो भगवते रामं ङेन्तं महा ततः ॥ ६२ ॥ पुरुषाय पदं पश्चाद्धृदन्तोऽष्टादशाक्षरः । विश्वामित्रो मुनि-श्छन्दो गायत्रं देवता च सः ॥ ६३ ॥ कामादिसहितः सोऽपि मन्त्र एकोन-विंशकः । तारं नमो भगवते रामायेति पदं वदेत् ॥ ६४ ॥ सर्वशब्दं समुच्चार्य सौभाग्यं देहि मे वदेत् । वह्निजायां तथोच्चार्य मन्त्रो विंशार्णको मतः ॥ ६५ ॥ तारं नमो भगवते रामाय सकलं वदेत् । आपन्निवारणायेति वह्निजायां ततो वदेत् ॥ ६६ ॥ एकविंशार्णको मन्त्रः सर्वाभीष्टफलप्रदः । तारं रमा स्वबीजं च ततो दाशरथाय च ॥ ६७ ॥ ततः सीतावल्लभाय सर्वाभीष्टपदं वदेत् । ततो दाय हृदन्तोऽयं मन्त्रो द्वाविंशदक्षरः ॥ ६८ ॥ तारं नमो भगवते वीर-रामाय संवदेत् । कल शत्रून् हन द्वन्द्वं वह्निजायां ततो वदेत् ॥ ६९ ॥

त्रयोविंशाक्षरो मन्त्रः सर्वशत्रुनिबर्हणः । विश्वामित्रो मुनिः प्रोक्तो गायत्री छन्द उच्यते ॥ ७० ॥ देवता वीररामोऽसौ बीजाद्याः पूर्ववन्मताः । मूलमन्त्रविभागेन न्यासान्कृत्वा विचक्षणः ॥ ७१ ॥ शरं धनुषि संधाय तिष्ठन्तं रावणोन्मुखम् । वज्रपाणिं रथारूढं रामं ध्यात्वा जपेन्मनुम् ॥ ७२ ॥ तारं नमो भगवते श्रीरामाय पदं वदेत् । तारकब्रह्मणे चोक्त्वा मां तारय पदं वदेत् ॥ ७३ ॥ नमस्तारात्मको मन्त्रश्चतुर्विंशतिवर्णकः । बीजादिकं यथापूर्वं सर्वं कुर्यात्षडर्णवत् ॥ ७४ ॥ कामस्तारो नतिश्चैव ततो भगवतेपदम् । रामचन्द्राय चोच्चार्य सकलेति पदं वदेत् ॥ ७५ ॥ जनवश्यकरायेति स्वाहा कामात्मको मनुः । सर्ववश्यकरो मन्त्रः पञ्चविंशतिवर्णकः ॥ ७६ ॥ आदौ तारेण संयुक्तो मन्त्रः षड्विंशदक्षरः । अन्तेऽपि तारसंयुक्तः सप्तविंशतिवर्णकः ॥ ७७ ॥ तारं नमो भगवते रक्षोघ्नविशदाय च । सर्वविघ्नान्त्समुच्चार्य निवारय पदद्वयम् ॥ ७८ ॥ स्वाहान्तो मन्त्रराजोऽयमष्टाविंशतिवर्णकः । अन्ते तारेण संयुक्त एकोनत्रिंशदक्षरः ॥ ७९ ॥ आदौ स्वबीजसंयुक्तस्त्रिंशद्वर्णात्मको मनुः । अन्तेऽपि तेन संयुक्त एकत्रिंशात्मकः स्मृतः ॥ ८० ॥ रामभद्र महेष्वास रघुवीर नृपोत्तम । भो दशास्यान्तकास्माकं श्रियं दापय देहि मे ॥८१॥ आनुष्टुभ ऋषी रामश्छन्दोऽनुष्टुप्स देवता । रां बीजमस्य यं शक्तिरिष्टार्थे विनियोजयेत् ॥ ८२ ॥ पादं हृदि च विन्यस्य पादं शिरसि विन्यसेत् । शिखायां पञ्चभिर्न्यस्य त्रिवर्णैः कवचं न्यसेत् ॥ ८३ ॥ नेत्रयोः पञ्चवर्णैश्च दापयेत्यस्त्रमुच्यते । चापबाणधरं श्यामं ससुग्रीवविभीषणम् ॥ ८४ ॥ हत्वा रावणमायान्तं कृतत्रैलोक्यरक्षणम् । रामभद्रं हृदि ध्यात्वा दशलक्षं जपेन्मनुम् ॥ ८५ ॥ वदेद्दाशरथायेति विद्महेति पदं ततः । सीतापदं समुद्धृत्य वल्लभाय ततो वदेत् ॥ ८६ ॥ धीमहीति वदेत्तन्नो रामश्चापि प्रचोदयात् । तारादिरेषा गायत्री मुक्तिमेव प्रयच्छति ॥ ८७ ॥ मायादिरपि वैदुष्यं रामादिश्च श्रियः पदम् । मदनेनापि संयुक्तः स मोहयति मेदिनीम् ॥ ८८ ॥ पञ्च त्रीणि षडर्णैश्च त्रीणि चत्वारि वर्णकैः । चत्वारि च चतुर्वर्णैरङ्गन्यासं प्रकल्पयेत् ॥ ८९ ॥ बीजध्यानादिकं सर्वं कुर्यात्षड्वर्णवत्क्रमात् । तारं नमो भगवते चतुर्थ्या रघुनन्दनम् ॥ ९० ॥ रक्षोघ्नविशदं तद्वन्मधुरेति वदेत्ततः । प्रसन्नवदनं ङेन्तं वदेदमिततेजसे ॥ ९१ ॥ बलरामौ चतुर्थ्यन्तौ विष्णुं ङेन्तं नतिस्ततः । प्रोक्तो मालामनुः सप्तचत्वारिंशद्भिरक्षरैः ॥ ९२ ॥

ऋषिश्छन्दो देवतादि ब्रह्मानुष्टुभराघवाः । सप्तर्तुसप्तदशषड्रुद्रसंख्यैः षडङ्गकम् ॥९३ ॥ ध्यानं दशाक्षरं प्रोक्तं लक्ष्मेकं जपेन्मनुम् । श्रियं सीतां चतुर्थ्यन्तां स्वाहान्तोऽयं षडक्षरः ॥९४॥ जनकोऽस्य ऋषिश्छन्दो गायत्री देवता मनोः । सीता भगवती प्रोक्ता श्रीं बीजं नतिशक्तिकम् ॥ ९५ ॥ कीलं सीता चतुर्थ्यन्तमिष्टार्थे विनियोजयेत् । दीर्घस्वरयुताद्येन षडङ्गानि प्रकल्पयेत् ॥९६॥ स्वर्णाभामम्बुजकरां रामालोकनतत्पराम् । ध्यायेत्षट्कोणमध्यस्थरामाङ्कोपरिशोभिताम् ॥ ९७ ॥ लकारं तु समुद्धृत्य लक्ष्मणाय नमोन्तकः । अगस्त्यऋषिरस्याथ गायत्रं छन्द उच्यते ॥ ९८ ॥ लक्ष्मणो देवता प्रोक्तो लं बीजं शक्तिरस्य हि । नमस्तु विनियोगो हि पुरुषार्थचतुष्टये ॥ ९९ ॥ दीर्घभाजा स्वबीजेन षडङ्गानि प्रकल्पयेत् । द्विभुजं स्वर्णरुचिरतनुं पद्मनिभेक्षणम् ॥१००॥ धनुर्बाणधरं देवं रामाराधनतत्परम् । भकारं तु समुद्धृत्य भरताय नमोन्तकः ॥ १०१ ॥ अगस्त्यऋषिरस्याथ शेषं पूर्ववदाचरेत् । भरतं श्यामलं शान्तं रामसेवापरायणम् ॥ १०२ ॥ धनुर्बाणधरं वीरं कैकेयीतनयं भजे । शं बीजं तु समुद्धृत्य शत्रुघ्नाय नमोन्तकः । ऋष्यादयो यथापूर्वं विनियोगोऽरिनिग्रहे ॥ १०३ ॥ द्विभुजं स्वर्णवर्णाभं रामसेवापरायणम् । लवणासुरहन्तारं सुमित्रातनयं भजे ॥ १०४ ॥ हं हनूमांश्चतुर्थ्यन्तं हृदन्तो मन्त्रराजकः । रामचन्द्र ऋषिः प्रोक्तो योजयेत्पूर्ववत्क्रमात् ॥ १०५ ॥ द्विभुजं स्वर्णवर्णाभं रामसेवापरायणम् । मौञ्जीकौपीनसहितं मां ध्यायेद्रामसेवकम् ॥ इति ॥ १०६ ॥

इति रामरहस्योपनिषत्सु द्वितीयोऽध्यायः ॥ २ ॥

सनकाद्या मुनयो हनूमन्तं पप्रच्छुः । आञ्जनेय महाबल पूर्वोक्तमन्त्राणां पूजापीठमनुब्रूहीति । हनूमान् होवाच । आदौ षट्कोणम् । तन्मध्ये रामबीजं सश्रीकम् । तदधोभागे द्वितीयान्तं साध्यम् । बीजोर्ध्वभागे षष्ठ्यन्तं साधकम् । पार्श्वे दृष्टिबीजे तत्परितो जीवप्राणशक्तिवश्यबीजानि । तत्सर्वं सन्मुखोन्मुखाभ्यां प्रणवाभ्यां वेष्टनम् । अग्नीशासुरवायव्यपुरःपृष्ठेषु षट्कोणेषु दीर्घभाञ्जि । हृदयादिमन्त्राः क्रमेण । रां रीं रूं रैं रौं रः इति दीर्घभाञ्जि तद्युक्तहृदयाद्यस्त्रान्तम् । षट्कोणपार्श्वे रमामायाबीजे । कोणाग्रे वाराहं हुमिति । तद्बीजान्तराले कामबीजम् । परितो वाग्भवम् । ततो वृत्तत्रयं साष्टपत्रम् । तेषु दलेषु स्वरानष्टवर्गान्प्रतिदलं मालामनुवर्णषट्कम् । अन्ते पञ्चाक्षरम् । तद्दलकपोलेष्वष्टवर्णान् । पुनरष्टदलपद्मम् । तेषु दलेषु नारायणाष्टाक्षरो

मन्त्रः। तद्दलकपोलेषु श्रीबीजम्। ततो वृत्तम्। ततो द्वादशदलम्। तेषु दलेषु वासुदेवद्वादशाक्षरो मन्त्रः। तद्दलकपोलेष्वादिक्षान्तान् (आदित्यान्)। ततो वृत्तम्। ततः षोडशदलम्। तेषु दलेषु हुं फट् नतिसहितरामद्वादशाक्षरम्। तद्दलकपोलेषु मायाबीजम्। सर्वत्र प्रतिकपोलं द्विरावृत्त्या हं स्रं भ्रं ब्रं भ्रमं श्रुं ज्रम्। ततो वृत्तम्। ततो द्वात्रिंशद्दलपद्मम्। तेषु दलेषु नृसिंहमन्त्रराजानुष्टुभमन्त्रः। तद्दलकपोलेष्वष्टवस्वेकादशरुद्रद्वादशादित्यमन्त्राः प्रणवादिनमोन्ताश्चतुर्थ्यन्ताः क्रमेण। तद्बहिर्वषट्कारं परितः। ततो रेखात्रययुक्तं भूपुरम्। द्वादशदिक्षु राश्यादिभूषितम्। अष्टनागैरधिष्ठितम्। चतुर्दिक्षु नारसिंहबीजम्। विदिक्षु वाराहबीजम्। एतत्सर्वात्मकं यन्त्रं सर्वकामप्रदं मोक्षप्रदं च। एकाक्षरादिनवाक्षरान्तानामेतद्यन्त्रं भवति। तद्दशावरणात्मकं भवति। षट्कोणमध्ये साङ्गं राघवं यजेत्। षट्कोणेष्वङ्गैः प्रथमा वृत्तिः। अष्टदलमूले आत्माद्यावरणम्। तदग्रे वासुदेवाद्यावरणम्। द्वितीयाष्टदलमूले घृष्ट्याद्यावरणम्। तदग्रे हनूमदाद्यावरणम्। द्वादशदलेषु वसिष्ठाद्यावरणम्। षोडशदलेषु नीलाद्यावरणम्। द्वात्रिंशद्दलेषु ध्रुवाद्यावरणम्। भूपुरान्तरिन्द्राद्यावरणम्। तद्बहिर्वज्राद्यावरणम्। एवमभ्यर्च्य मनुं जपेत् ॥ अथ दशाक्षरादिद्वात्रिंशदक्षरान्तानां मन्त्राणां पूजापीठमुच्यते। आदौ षट्कोणम्। तन्मध्ये स्वबीजम्। तन्मध्ये साध्यनामानि। एवं कामबीजवेष्टनम्। ततः शिष्टेन नवार्णेन वेष्टनम्। षट्कोणेषु षडङ्गान्यग्नीशासुरवायव्यपूर्वपृष्ठेषु। तत्कपोलेषु श्रीमाये। कोणाग्रे क्रोधम्। ततो वृत्तम्। ततोऽष्टदलम्। तेषु दलेषु षट्संख्यया मालामनुवर्णान्। तद्दलकपोलेषु षोडश स्वराः। ततो वृत्तम्। तत्परित आदिक्षान्तम्। तद्बहिर्भूपुरं साष्टशूलाग्रम्। दिक्षु विदिक्षु नारसिंहवाराहे। एतन्महायन्त्रम्। आधारशक्त्यादिवैष्णवपीठम्। अङ्गैः प्रथमा वृत्तिः। मध्ये रामम्। वामभागे सीताम्। तत्पुरतः शार्ङ्गं शरं च। अष्टदलमूले हनुमदादिद्वितीयावरणम्। घृष्ट्यादितृतीयावरणम्। इन्द्रादिभिश्चतुर्थी। वज्रादिभिः पञ्चमी। एतद्यन्त्राराधनपूर्वकं दशाक्षरादिमन्त्रं जपेत् ॥ १ ॥

इति रामरहस्योपनिषत्सु तृतीयोऽध्यायः ॥ ३ ॥

सनकाद्या मुनयो हनूमन्तं पप्रच्छुः । श्रीराममन्त्राणां पुरश्चरणविधिमनु-ब्रूहीति । हनूमान्होवाच । नित्यं त्रिषवणस्नायी पयोमूलफलादिभुक् । अथवा पायसाहारो हविष्यान्नाद एव वा ॥ १ ॥ षड्रसैश्च परित्यक्तः स्वाश्रमोक्त-विधिं चरन् । वनितादिषु वाक्कर्ममनोभिर्निःस्पृहः शुचिः ॥ २ ॥ भूमिशायी ब्रह्मचारी निष्कामो गुरुभक्तिमान् । स्नानपूजाजपध्यानहोमतर्पणतत्परः ॥ ३ ॥ गुरूपदिष्टमार्गेण ध्यायन्राममनन्यधीः । सूर्येन्दुगुरुदीपादिगोब्राह्मणसमीपतः ॥ ४ ॥ श्रीरामसन्निधौ मौनी मन्त्रार्थमनुचिन्तयन् । व्याघ्रचर्मासने स्थित्वा स्वस्तिकाद्यासनक्रमात् ॥ ५ ॥ तुलसीपारिजातश्रीवृक्षमूलादिकस्थले । पद्मा-क्षतुलसीकाष्ठरुद्राक्षकृतमालया ॥ ६ ॥ मातृकामालया मन्त्री मनसैव मनुं जपेत् । अभ्यर्च्य वैष्णवे पीठे जपेदक्षरलक्षकम् ॥ ७ ॥ तर्पयेत्तद्दशांशेन पायसात्तद्दशांशतः । जुहुयाद्गोघृतेनैव भोजयेत्तद्दशांशतः ॥ ८ ॥ ततः पुष्पाञ्जलिं मूलमन्त्रेण विधिवच्चरेत् । ततः सिद्धमनुर्भूत्वा जीवन्मुक्तो भवे-न्मुनिः ॥ ९ ॥ अणिमादिर्भजत्येनं यूनं वरवधूरिव । ऐहिकेषु च कार्येषु महापत्सु च सर्वदा ॥ १० ॥ नैव योज्यो राममन्त्रः केवलं मोक्षसाधकः । ऐहिके समनुप्राप्ते मां स्मरेद्रामसेवकम् ॥ ११ ॥ यो रामं संस्मरेन्नित्यं भक्त्या मनुपरायणः । तस्याहमिष्टसंसिद्ध्यै दीक्षितोऽस्मि मुनीश्वराः ॥ १२ ॥ वाञ्छितार्थं प्रदास्यामि भक्तानां राघवस्य तु । सर्वथा जागरूकोऽस्मि राम-कार्यधुरंधरः ॥ १३ ॥

इति रामरहस्योपनिषत्सु चतुर्थोऽध्यायः ॥ ४ ॥

सनकाद्या मुनयो हनूमन्तं पप्रच्छुः । श्रीराममन्त्रार्थमनुब्रूहीति । हनूमा-न्होवाच । सर्वेषु राममन्त्रेषु मन्त्रराजः षडक्षरः । एकधाथ द्विधा त्रेधा चतुर्धा पञ्चधा तथा ॥ १ ॥ षट्सप्तधाऽष्टधा चैव बहुधायं व्यवस्थितः । षडक्षरस्य माहात्म्यं शिवो जानाति तत्त्वतः ॥ २ ॥ श्रीराममन्त्रराजस्य सम्यगर्थोऽयमुच्यते । नारायणाष्टाक्षरे च शिवपञ्चाक्षरे तथा । सार्थकार्णद्वयं रामो रमन्ते यत्र योगिनः । रकारो वह्निवचनः प्रकाशः पर्यवस्यति ॥ ३ ॥ सच्चिदानन्दरूपोऽस्य परमात्मार्थ उच्यते । व्यञ्जनं निष्कलं ब्रह्म प्राणो मायेति च स्वरः ॥ ४ ॥ व्यञ्जनैः स्वरसंयोगं विद्धि तत्प्राणयोजनम् । रेफो ज्योतिर्मये तस्मात्कृतमाकारयोजनम् ॥ ५ ॥ मकारोऽभ्युदयार्थत्वात्स मायेति च कीर्त्यते । सोऽयं बीजं स्वकं यस्मात्समायं ब्रह्म चोच्यते ॥ ६ ॥ सबिन्दुः

सोऽपि पुरुषः शिवसूर्येन्दुरूपवान् । ज्योतिस्तस्य शिखा रूपं नादः सप्रकृतिर्मतः ॥ ७ ॥ प्रकृतिः पुरुषश्चोभौ समायाद्ब्रह्मणः स्मृतौ । बिन्दुनादात्मकं बीजं वह्निसोमकलात्मकम् ॥ ८ ॥ अग्नीषोमात्मकं रूपं रामबीजे प्रतिष्ठितम् । यथैव वटबीजस्थः प्राकृतश्च महाद्रुमः ॥ ९ ॥ तथैव रामबीजस्थं जगदेतच्चराचरम् । बीजोक्तमुभयार्थत्वं रामनामनि दृश्यते ॥ १० ॥ बीजं मायाविनिर्मुक्तं परंब्रह्मेति कीर्त्यते । मुक्तिदं साधकानां च मकारो मुक्तिदो मतः ॥ ११ ॥ मारूपत्वादतो रामो भुक्तिमुक्तिफलप्रदः । आद्यो रा तत्पदार्थः स्यान्मकारस्त्वंपदार्थवान् ॥ १२ ॥ तयोः संयोजनमसी-त्यर्थे तत्त्वविदो विदुः । नमस्त्वमर्थो विज्ञेयो रामस्तत्पदमुच्यते ॥ १३ ॥ असीत्यर्थे चतुर्थी स्यादेवं मन्त्रेषु योजयेत् । तत्त्वमस्यादिवाक्यं तु केवलं मुक्तिदं यतः ॥ १४ ॥ भुक्तिमुक्तिप्रदं चैतत्तस्मादप्यतिरिच्यते । मनुष्वेतेषु सर्वेषामधिकारोऽस्ति देहिनाम् ॥ १५ ॥ मुमुक्षूणां विरक्तानां तथा चाश्रमवा-सिनाम् । प्रणवत्वात्सदा ध्येयो यतीनां च विशेषतः । राममन्त्रार्थविज्ञानी जीवन्मुक्तो न संशयः ॥ १६ ॥ य इमामुपनिषदमधीते सोऽग्निपूतो भवति । स वायुपूतो भवति । सुरापानात्पूतो भवति । स्वर्णस्तेयात्पूतो भवति । ब्रह्म-हत्यायाः पूतो भवति । स राममन्त्राणां कृतपुरश्चरणो रामचन्द्रो भवति । तदेतदृचाभ्युक्तम्—सदा रामोऽहमस्मीति तत्त्वतः प्रवदन्ति ये । न ते संसारिणो नूनं राम एव न संशयः ॥ ॐ सत्यमित्युपनिषत् ॥ १७ ॥

(सर्वसारादिरामरहस्यान्तग्रन्थः २००० । ईशावास्यादिरामरहस्यान्त-ग्रन्थः ८३४८)

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

इति श्रीरामरहस्योपनिषत्समाप्ता ॥ ५६ ॥

---

## श्रीरामपूर्वतापिन्युपनिषत् ॥ ५७ ॥

श्रीरामतापिनीयार्थं भक्तोध्येयकलेवरम् ।
विकलेवरकैवल्यं श्रीरामब्रह्म मे गतिः ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

ॐ चिन्मयेऽस्मिन्महाविष्णौ जाते दशरथे हरौ । रघोः कुलेऽखिलं राति राजते यो महीस्थितः ॥ १ ॥ स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः । राक्षसा येन मरणं यान्ति स्वोद्रेकतोऽथवा ॥ २ ॥ रामनाम भुवि ख्यातम-

भिरामेण वा पुनः । राक्षसान्मर्त्यरूपेण राहुर्मनसिजं यथा ॥ ३ ॥ प्रभाहीनां-स्तथा कृत्वा राज्यार्हाणां महीभृताम् । धर्ममार्गं चरित्रेण ज्ञानमार्गं च नामतः ॥ ४ ॥ तथा ध्यानेन वैराग्यमैश्वर्यं स्वस्य पूजनात् । तथा रात्यस्य रामाख्या भुवि स्यादथ तत्त्वतः ॥ ५ ॥ रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि । इति रामपदेनासौ परं ब्रह्माभिधीयते ॥ ६ ॥ चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ॥ ७ ॥ रूपस्थानां देवतानां पुंस्त्यङ्गास्त्रादिकल्पना । द्वि चत्वारि षडष्टाऽऽसां दश द्वादश षोडश ॥ ८ ॥ अष्टादशामी कथिता हस्ताः शङ्खादिभिर्युताः । सहस्रान्तास्तथा तासां वर्णवाहनकल्पना ॥ ९ ॥ शक्तिसेनाकल्पना च ब्रह्मण्येवं हि पञ्चधा । कल्पितस्य शरीरस्य तस्य सेनादिकल्पना ॥ १० ॥ ब्रह्मादीनां वाचकोऽयं मन्त्रोऽन्वर्थादिसंज्ञकः । जप्तव्यो मन्त्रिणा नैवं विना देवः प्रसीदति ॥ ११ ॥ क्रिया कर्मेति कर्तॄणामर्थं मन्त्रो वदत्यथ । मननात्त्राणनान्मन्त्रः सर्ववाच्यस्य वाचकः ॥ १२ ॥ सोभयस्यास्य देवस्य विग्रहो यन्त्रकल्पना । विना यन्त्रेण चेत्पूजा देवता न प्रसीदति ॥ १३ ॥

इति श्रीरामपूर्वतापिन्युपनिषत्सु प्रथमोपनिषत् ॥ १ ॥

स्वभूर्ज्योतिर्मयोऽनन्तरूपी स्वेनैव भासते । जीवत्वेनेदमों यस्य सृष्टिस्थितिलयस्य च ॥ १ ॥ कारणत्वेन चिच्छक्त्या रजःसत्त्वतमोगुणैः । यथैव वटबीजस्थः प्राकृतश्च महाद्रुमः ॥ २ ॥ तथैव रामबीजस्थं जगदेतच्चराचरम् । रेफारूढा मूर्तयः स्युः शक्तयस्तिस्र एव चेति ॥ ३ ॥ सीतारामौ तन्मयावत्र पूज्यौ जातान्याभ्यां भुवनानि द्विसप्त । स्थितानि च प्रहतान्येव तेषु ततो रामो मानवो माययाध्यात् ॥ ४ ॥ जगत्प्राणायात्मनेऽस्मै नमः स्यान्नमस्त्वैक्यं प्रवदेत्प्राग्गुणेनेति ॥ ५ ॥

इति श्रीरामतापिन्युपनिषत्सु द्वितीयोपनिषत् ॥ २ ॥

जीववाचि नमो नाम चात्मा रामेति गीयते । तदात्मिका या चतुर्थी तथा चाऽऽयेति गीयते ॥ १ ॥ मन्त्रोऽयं वाचको रामो वाच्यः स्याद्योग एतयोः । फलदश्चैव सर्वेषां साधकानां न संशयः ॥ २ ॥ यथा नामी वाचकेन नाम्ना योऽभिमुखो भवेत् । तथा बीजात्मको मन्त्रो मन्त्रिणोऽभिमुखो भवेत् ॥ ३ ॥ बीजशक्तिं न्यसेद्दक्षवामयोः स्तनयोरपि । कीलो मध्येऽविनाभाव्यः स्ववाञ्छाविनियोगवान् ॥ ४ ॥ सर्वेषामेव मन्त्राणामेष साधारणः क्रमः । अत्र

रामोऽनन्तरूपस्तेजसा वह्निना समः ॥ ५ ॥ स त्वनुष्णगुविश्वश्चेदग्नीषोमात्मकं जगत् । उत्पन्नः [1]शीतया भाति चन्द्रश्चन्द्रिकया यथा ॥ ६ ॥ प्रकृत्या सहितः श्यामः पीतवासा जटाधरः । द्विभुजः कुण्डली रत्नमाली धीरो धनुर्धरः ॥ ७ ॥ प्रसन्नवदनो जेता धृष्ट्यष्टकविभूषितः । प्रकृत्या परमेश्वर्या जगद्योन्याऽङ्किताङ्कभृत् ॥ ८ ॥ हेमाभया द्विभुजया सर्वालंकृतया चिता । श्लिष्टः कमलधारिण्या पुष्टः कोसलजात्मजः ॥ ९ ॥

इति श्रीरामपूर्वतापिन्युपनिषत्सु तृतीयोपनिषत् ॥ ३ ॥

दक्षिणे लक्ष्मणेनाथ सधनुष्पाणिना पुनः । हेमाभे नानुजेनैव तथा कोणत्रयं भवेत् ॥ १ ॥ तथैव तस्य मन्त्रस्य यस्याणुश्च स्वङेन्तया । एवं त्रिकोणरूपं स्यात्तं देवा ये समाययुः ॥ २ ॥ स्तुतिं चक्रुश्च जगतः पतिं कल्पतरौ स्थितम् । कामरूपाय रामाय नमो मायामयाय च ॥ ३ ॥ नमो वेदादिरूपाय ओङ्काराय नमो नमः । रमाधराय रामाय श्रीरामायात्ममूर्तये ॥ ४ ॥ जानकीदेहभूषाय रक्षोघ्नाय शुभाङ्गिने । भद्राय रघुवीराय दशास्यान्तकरूपिणे ॥ ५ ॥ रामभद्र महेष्वास रघुवीर नृपोत्तम ॥ ६ ॥

इति श्रीरामपूर्वतापिन्युपनिषत्सु चतुर्थोपनिषत् ॥ ४ ॥

भो दशास्यान्तकास्माकं रक्षां देहि श्रियं च ते ॥ १ ॥ त्वमैश्वर्यं दापयाथ संप्रत्या खरमारणम् । कुर्वन्ति स्तुत्य देवाद्यास्तेन सार्धं सुखं स्थिताः ॥ २ ॥ स्तुवन्त्येवं हि ऋषयस्तदा रावण आसुरः । रामपत्नीं वनस्थां यः स्वनिवृत्त्यर्थमाददे ॥ ३ ॥ स रावण इति ख्यातो यद्वा रावाच्च रावणः । तद्व्याजेनेक्षितुं सीतां रामो लक्ष्मण एव च ॥ ४ ॥ विचेरतुस्तदा भूमौ देवीं संदृश्य चासुरम् । हत्वा कबन्धं शबरीं गत्वा तस्याज्ञया तया ॥ ५ ॥ पूजितो वीरपुत्रेण भक्तेन च कपीश्वरम् । आहूय शंसतां सर्वमाद्यन्तं रामलक्ष्मणौ ॥ ६ ॥ स तु रामे शङ्कितः सन्प्रत्ययार्थं च दुन्दुभेः । विग्रहं दर्शयामास यो रामस्तमचिक्षिपत् ॥ ७ ॥ सप्त सालानविभिद्याशु मोदते राघवस्तदा । तेन हृष्टः कपीन्द्रोऽसौ सरामस्तस्य पत्तनम् ॥ ८ ॥ जगामागर्जदनुजो वालिनो वेगतो गृहात् । वाली तदा निर्जगाम तं वालिनमथाहवे ॥ ९ ॥ निहत्य राघवो राज्ये सुग्रीवं स्थापयेत्ततः ॥ १० ॥

इति श्रीरामपूर्वतापिन्युपनिषत्सु पञ्चमोपनिषत् ॥ ५ ॥

हरीनाहूय सुग्रीवस्त्वाह चाशाविदोऽधुना ॥ १ ॥ आदाय मैथिलीमद्य ददत श्वाशु गच्छत । ततस्ततार हनुमानब्धिं लङ्कां समाययौ ॥ २ ॥ सीतां दृष्ट्वाऽसुरान्हत्वा पुरं दग्ध्वा तथा स्वयम् । आगत्य रामेण सह न्यवेदयत तत्त्वतः ॥ ३ ॥ तदा रामः क्रोधरूपी तानाहूयाथ वानरान् । तैः सार्धमादायास्त्रांश्च पुरीं लङ्कां समाययौ ॥ ४ ॥ तां दृष्ट्वा तदधीशेन सार्धं युद्धमकारयत् । घटश्रोत्रसहस्राक्षजिह्वां युक्तं तमाहवे ॥ ५ ॥ हत्वा विभीषणं तत्र स्थाप्याथ जनकात्मजाम् । आदायाङ्कस्थितां कृत्वा स्वपुरं तैर्जगाम सः ॥ ६ ॥ धृतः सिंहासनस्थः सन् द्विभुजो रघुनन्दनः । धनुर्धरः प्रसन्नात्मा सर्वाभरणभूषितः ॥ ७ ॥ मुद्रां ज्ञानमयीं याम्ये वामे तेजःप्रकाशिनीम् । धृत्वा व्याख्याननिरतश्चिन्मयः परमेश्वरः ॥ ८ ॥ उदग्दक्षिणयोः स्वस्य शत्रुघ्नभरतौ धृतः । हनूमन्तं च श्रोतारमग्रतः स्यात्त्रिकोणगम् ॥ ९ ॥ भरताधस्तु सुग्रीवं शत्रुघ्नाधो विभीषणम् । पश्चिमे लक्ष्मणं तस्य धृतच्छत्रं सचामरम् ॥ १० ॥ तदधस्तौ तालवृन्तकरौ त्र्यस्त्रं पुनर्भवेत् । एवं षट्कोणमादौ स्वदीर्घाङ्गैरेष संयुतः ॥ ११ ॥ द्वितीयं वासुदेवाद्यैराग्नेय्यादिषु संयुतः । तृतीयं वायुसूनुं च सुग्रीवं भरतं तथा ॥ १२ ॥ विभीषणं लक्ष्मणं चाङ्गदं चारिविमर्दनम् । जाम्बवन्तं च तैर्युक्तस्ततो धृष्टिर्जयन्तकः ॥ १३ ॥ विजयश्च सुराष्ट्रश्च राष्ट्रवर्धन एव च । अशोको धर्मपालश्च सुमन्त्रैरेभिरावृतः ॥ १४ ॥ सहस्रदृग्वह्निर्धर्मरक्षो वरुणोऽनिलः । इन्द्वीशधात्रनन्ताश्च दशभिस्त्वेभिरावृतः ॥ १५ ॥ बहिस्तदायुधैः पूज्यो नीलादिभिरलंकृतः । वसिष्ठवामदेवादिमुनिभिः समुपासितः ॥ १६ ॥

इति श्रीरामपूर्वतापिन्युपनिषत्सु षष्ठोपनिषत् ॥ ६ ॥

एवमुद्देशतः प्रोक्तं निर्देशस्तस्य चाधुना । त्रिरेखापुटमालिख्य मध्ये तारद्वयं लिखेत् ॥ १ ॥ तन्मध्ये बीजमालिख्य तदधः साध्यमालिखेत् । द्वितीयान्तं च तस्योर्ध्वं षष्ठ्यन्तं साधकं तथा ॥ २ ॥ कुरुद्वयं च तत्पार्श्वे लिखेद्बीजान्तरे रमाम् । तत्सर्वं प्रणवाभ्यां च वेष्टितं बुद्धिबुद्धिमान् ॥ ३ ॥ दीर्घभाजि षडस्रे तु लिखेद्बीजं हृदादिभिः । कोणपार्श्वे रमामाये तदग्रेऽनङ्गमालिखेत् ॥ ४ ॥ क्रोधं कोणाग्रान्तरेषु लिख्य मन्त्र्यभितो गिरम् । वृत्तत्रयं साष्टपत्रं सरोजे विलिखेत्स्वरान् ॥ ५ ॥ केसरेष्वष्टपत्रे च वर्गाष्टकमथालिखेत् । तेषु मालामनोर्वर्णान्विलिखेदूर्मिसंख्यया ॥ ६ ॥ अन्ते पञ्चाक्षरा-

नेवं पुनरष्टदलं लिखेत् । तेषु नारायणाष्टार्णं लिखत्तत्केसरे रमाम् ॥ ७ ॥ तद्बहिर्द्वादशदलं विलिखेद्द्वादशाक्षरम् । तथों नमो भगवते वासुदेवाय इत्ययम् ॥ ८ ॥

इति श्रीरामपूर्वतापिन्युपनिषत्सु सप्तमोपनिषत् ॥ ७ ॥

आदिक्षान्तान्केसरेषु वृत्ताकारेण संलिखेत् । तद्बहिः षोडशदलं लिख्य तत्केसरे ह्रियम् ॥ १ ॥ वर्मास्त्रनतिसंयुक्तं दलेषु द्वादशाक्षरम् । तत्सन्धिष्वीरजादीनां मन्त्रान्मन्त्री समालिखेत् ॥ २ ॥ [1]हँ सँ भ्रँ ब्रँ लँ शँ जँ च लिखेत्तस्यक्ततो बहिः । द्वात्रिंशारं महापद्मं नादबिन्दुसमायुतम् ॥ ३ ॥ विलिखेन्मन्त्रराजार्णांस्तेषु पत्रेषु यत्नतः । ध्यायेदष्टवसूनेकादश रुद्रांश्च तत्र वै ॥ ४ ॥ द्वादशेनांश्च धातारं वषट्कारं ततो बहिः ॥ ५ ॥ भूगृहं वज्रशूलाढ्यं रेखात्रयसमन्वितम् । द्वारोपेतं च राश्यादिभूषितं फणिसंयुतम् । अनन्तो वासुकिश्चैव तक्षः कर्कोटपद्मकः ॥६॥ महापद्मश्च शङ्खश्च गुलिकोऽष्टौ प्रकीर्तिताः ॥ ७ ॥

इति श्रीरामपूर्वतापिन्युपनिषत्स्वष्टमोपनिषत् ॥ ८ ॥

एवं मण्डलमालिख्य तस्य दिक्षु विदिक्षु च ॥ १ ॥ नारसिंहं च वाराहं लिखेन्मन्त्रद्वयं तथा । कूटो रेफानुग्रहेन्दुनादशक्त्यादिभिर्युतः ॥ २ ॥ यो नृसिंहः समाख्यातो ग्रहमारणकर्मणि । अन्त्योऽर्घीशवियद्बिन्दुनादबीजं च सौकरम् ॥ ३ ॥ हुंकारं चात्र रामस्य मालामन्त्रोऽधुनेरितः । तारो नतिश्च निद्रायाः स्मृतिर्मेदश्च कामिका ॥ ४ ॥ रुद्रेण संयुता वह्निर्मेधाऽमरविभूषिता । दीर्घाऽक्रूरयुता ह्लादिन्यथो दीर्घसमानदा ॥ ५ ॥ क्षुधा क्रोधिन्यमोघा च विश्वमप्यथ मेधया । युक्ता दीर्घा ज्वालिनी च सुसूक्ष्मा मृत्युरूपिणी ॥ ६ ॥ सप्रतिष्ठा ह्लादिनी त्वक्क्ष्वेलः प्रीतिश्च सामरा । ज्योतिस्तीक्ष्णाग्निसंयुक्ता श्वेतानुस्वारसंयुता ॥ ७ ॥ कामिकापञ्चं मोलान्तस्तान्तान्तो धान्त इत्यथ । स सानन्तो दीर्घयुतो वायुः सूक्ष्मयुतो विषः ॥ ८ ॥ कामिका कामिका रुद्रयुक्ताथोऽथ स्थिरा स ए । तापिनी दीर्घयुक्ता भूरनलोऽनन्तगोऽनिलः ॥ ९ ॥ नारायणात्मकः कालः प्राणां भो विद्यया युतम् । पीता रतिस्तथा लान्तो योन्या युक्तोऽन्ततो नतिः ॥ १० ॥ सप्तचत्वारिंशद्वर्णगुणान्तः सगुणः स्वयम् । राज्याभिषिक्तस्य तस्य रामस्योक्तक्रमाल्लिखेत् ॥ ११ ॥ इदं सर्वात्मकं यन्त्रं प्रागुक्तमृषिसेवितम् । सेवकानां मोक्षकरमायुरारोग्यवर्धनम् ॥ १२ ॥ अपुत्रिणां

पुत्रदं च बहुना किमनेन वै। प्राप्नुवन्ति क्षणात्सम्यगत्र धर्मादिकानपि ॥ १३ ॥ इदं रहस्यं परमसीश्वरेणापि दुर्गमम् । इदं यन्त्रं समाख्यातं न देयं प्राकृते जने इति ॥ १४ ॥

इति श्रीरामपूर्वतापिन्युपनिषत्सु नवमोपनिषत् ॥ ९ ॥

ॐ भूतादिकं शोधयेद्द्वारपूजां कृत्वा पद्माद्यासनस्थः प्रसन्नः । अर्चाविधावस्य पीठाधरोर्ध्वं पार्श्वार्चनं मध्यपद्मार्चनं च ॥ १ ॥ कृत्वा मृदुश्लक्ष्णसुतूलिकायां रत्नासने देशिकमर्चयित्वा । शक्तिं चाधाराख्यकां कूर्मनागौ पृथिव्यब्जे स्वासनाधः प्रकल्प्य ॥ २ ॥ विघ्नं दुर्गां क्षेत्रपालं च वाणीं बीजादिकांश्चाग्निदेशादिकांश्च । पीठस्याङ्घ्रिष्वेव धर्मादिकांश्च नञ्पूर्वांस्तांस्तस्य दिक्ष्वर्चयेच्च ॥ ३ ॥ मध्ये क्रमादर्कविध्वग्नितेजांस्युपर्युपर्यादिमैरर्चितानि । रजः सत्त्वं तम एतानि वृत्तत्रयं बीजाढ्यं क्रमाद्भावयेच्च ॥ ४ ॥ आशाव्याशास्वप्यथात्मानमन्तरात्मानं वा परमात्मानमन्तः । ज्ञानात्मानं चार्चयेत्तस्य दिक्षु मायाविद्ये ये कलापारतत्त्वे ॥ ५ ॥ संपूजयेद्विमलाद्याश्च शक्तीरभ्यर्चयेद्देवमावाहयेच्च । अङ्गव्यूहानि जलाद्यैश्च पूज्य धृष्ट्यादिकैर्लोकपालैस्तदस्त्रैः ॥ ६ ॥ वसिष्ठाद्यैर्मुनिभिर्नीलमुख्यैराराधयेद्राघवं चन्दनाद्यैः । मुख्योपहारैर्विविधैश्च पूज्यैस्तस्मै जपादींश्च सम्यक्समर्प्य ॥ ७ ॥ एवंभूतं जगदाधारभूतं रामं वन्दे सच्चिदानन्दरूपम् । गदारिशङ्खाब्जधरं भवारिं स यो ध्यायेन्मोक्षमाप्नोति सर्वः ॥ ८ ॥ विश्वव्यापी राघवोऽथो तदानीमन्तर्दधे शङ्खचक्रे गदाब्जे । धृत्वा रमासहितः सानुजश्च सपत्तनः सानुगः सर्वलोकी ॥ ९ ॥ तद्भक्ता ये लब्धकामाश्च भुक्त्वा तथा पदं परमं यान्ति ते च । इमा ऋचः सर्वकामार्थदाश्च ये ते पठन्त्यमला यान्ति मोक्षं येते पठन्त्यमला यान्ति मोक्षमिति ॥ १० ॥

चिन्मयेऽस्मिंस्त्रयोदश । स्वभूर्ज्योतिस्तिस्रः । सीतारामावेका । जीववाची बट्षष्टिः । भूतादिकमेतादश । पञ्चखण्डेषु त्रिनवतिः ।

इति श्रीरामपूर्वतापिन्युपनिषत्सु दशमोपनिषत् ॥ १० ॥

इति श्रीरामपूर्वतापिन्युपनिषत्समाप्ता ॥ ५७ ॥

---

# श्रीरामोत्तरतापिन्युपनिषत् ॥ ५८ ॥

ॐ बृहस्पतिरुवाच याज्ञवल्क्यम् । यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । तस्माद्यत्र क्वचन गच्छेत्तदेव मन्येतेतीदं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवति । तस्मादविमुक्तमेव निषेवेत । अविमुक्तं न विमुञ्चेत् । एवमेवैतद्याज्ञवल्क्यः ॥ १ ॥ अथ हैनं भरद्वाजः पप्रच्छ याज्ञवल्क्यं किं तारकं किं तरतीति । स होवाच याज्ञवल्क्यस्तारकं दीर्घानलं बिन्दुपूर्वकं दीर्घानलं पुनर्मायां नमश्चन्द्राय नमो भद्राय नम इत्योंतद्ब्रह्मात्मिकाः सच्चिदानन्दाख्या इत्युपासितव्याः । अकारः प्रथमाक्षरो भवति । उकारो द्वितीयाक्षरो भवति । मकारस्तृतीयाक्षरो भवति । अर्धमात्रश्चतुर्थाक्षरो भवति । बिन्दुः पञ्चमाक्षरो भवति । नादः षष्ठाक्षरो भवति । तारकत्वात्तारको भवति । तदेव तारकं ब्रह्म त्वं विद्धि । तदेवोपास्यमिति ज्ञेयम् । गर्भजन्मजरामरणसंसारमहद्भयात्संतारयतीति । तस्मादुच्यते तारकमिति ॥ य एतत्तारकं ब्रह्म ब्राह्मणो नित्यमधीते । स सर्वं पाप्मानं तरति । स मृत्युं तरति । स ब्रह्महत्यां तरति स भ्रूणहत्यां तरति । स वीरहत्यां तरति । स सर्वहत्यां तरति । स संसारं तरति सर्वं तरति । सोऽविमुक्तमाश्रितो भवति । स महान्भवति । सोऽमृतत्वं च गच्छतीति ॥ २ ॥ अथैते श्लोका भवन्ति—अकाराक्षरसंभूतः सौमित्रिर्विश्वभावनः । उकाराक्षरसंभूतः शत्रुघ्नस्तैजसात्मकः ॥ १ ॥ प्राज्ञात्मकस्तु भरतो मकाराक्षरसंभवः । अर्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः ॥ २ ॥ श्रीरामसांनिध्यवशाज्जगदानन्ददायिनी । उत्पत्तिस्थितिसंहारकारिणी सर्वदेहिनाम् ॥ ३ ॥ सा सीता भवति ज्ञेया मूलप्रकृतिसंज्ञिता । प्रणवत्वात्प्रकृतिरिति वदन्ति ब्रह्मवादिनः ॥ ४ ॥ इति ॥ ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोंकार एव । यच्चान्यत्त्रिकालातीतं तदप्योंकार एव । सर्वं ह्येतद्ब्रह्म । अयमात्मा ब्रह्म सोऽयमात्मा चतुष्पाज्जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः ॥ स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः ॥ यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति तत्सुषुप्तम् । सुषुप्-

स्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञ-स्तृतीयः पादः ॥ एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् । नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनमदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेका-त्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते । स आत्मा स विज्ञेयः सदोज्वलोऽविद्यातत्कार्यहीनः स्वात्मबन्धहरः सर्वदा द्वैतरहित आनन्दरूपः सर्वाधिष्ठानः सन्मात्रो निरस्ताविद्यातमोमोहोऽहमेवेति संभाव्या-हमित्यों तत्सद्यत्परंब्रह्म रामचन्द्रश्चिदात्मकः । सोऽहमों तद्रामभद्रपरंज्योतीः सोऽहमोमित्यात्मानमादाय मनसा ब्रह्मणैकी कुर्यात् ॥ सदा रामोऽहमस्मीति तत्त्वतः प्रवदन्ति ये । न ते संसारिणो नूनं राम एव न संशयः ॥ इत्युपनि-षद्य एवं वेद स मुक्तो भवतीति याज्ञवल्क्यः ॥ अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यं य एषोऽनन्तोऽव्यक्तपरिपूर्णानन्दैकचिदात्मा तं कथमहं विजा-नीयामिति । स होवाच याज्ञवल्क्यः । सोऽविमुक्त उपास्यो य एषोऽन-न्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति । सोऽविमुक्तः कस्मिन्प्रतिष्ठित इति । वरणायां नाश्यां च मध्ये प्रतिष्ठित इति ॥ का वै वरणा का च नाशीति । जन्मान्तरकृतान्सर्वान्दोषान्वारयतीति तेन वरणा भवतीति । सर्वानिन्द्रियकृतान्पापान्नाशयतीति तेन नाशी भवतीति । कतमच्चास्य स्थानं भवतीति । भ्रुवोर्घ्राणस्य च यः सन्धिः स एष द्यौर्लोकस्य परस्य च सन्धिर्भवतीति । एतद्वै सन्धिं सन्ध्यां ब्रह्मविद उपासत इति ॥ सोऽविमुक्त उपास्य इति । सोऽविमुक्तं ज्ञानमाचष्टे यो वैतदेवं वेद स एषोऽक्षरोऽनन्तोऽव्यक्तः परिपूर्णानन्दैकचिदात्मा योऽयमविमुक्ते प्रतिष्ठित इति । अथ तं प्रत्युवाच । 'श्रीरामस्य मनुं काश्यां जजाप वृषभध्वजः । मन्वन्तर-सहस्रैस्तु जपहोमार्चनादिभिः ॥ १ ॥, ततः प्रसन्नो भगवाञ्छ्रीरामः प्राह शंकरम् । वृणीष्व यदभीष्टं तद्दास्यामि परमेश्वर ॥ २ ॥ इति ॥ अथ सच्चि-दानन्दात्मा श्रीराममीश्वरः पप्रच्छ । मणिकर्ण्यां मत्क्षेत्रे गङ्गायां वा तटे पुनः । म्रियेत देही तज्जन्तोर्मुक्तिर्नाऽतो वरान्तरम् ॥ ३ ॥ इति ॥ अथ स होवाच श्रीरामः ॥ क्षेत्रेऽत्र तव देवेश यत्रकुत्रापि वा मृताः । कृमिकीटा-दयोऽप्याशु मुक्ताः सन्तु न चान्यथा ॥ ४ ॥ अविमुक्ते तव क्षेत्रे सर्वेषां मुक्तिसिद्धये । अहं संनिहितस्तत्र पाषाणप्रतिमादिषु ॥ ५ ॥ क्षेत्रेऽस्मिन्यो-

ऽर्चयेद्भक्त्या मन्त्रेणानेन मां शिव । ब्रह्महत्यादिपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६ ॥ त्वत्तो वा ब्रह्मणो वापि ये लभन्ते षडक्षरम् । जीवन्तो मन्त्रसिद्धाः स्युर्मुक्ता मां प्राप्नुवन्ति ते ॥ ७ ॥ मुमूर्षोर्दक्षिणे कर्णे यस्यकस्यापि वा स्वयम् । उपदेक्ष्यसि मन्मन्त्रं स मुक्तो भविता शिवेति ॥ ८ ॥ श्रीरामचन्द्रेणोक्तं योऽविमुक्तं पश्यति स जन्मान्तरितान्दोषान्वारयतीति स जन्मान्तरितान्पापान्नाशयतीति । अथ हैनं भारद्वाजो याज्ञवल्क्यमुवाचाथ कैर्मन्त्रैः स्तुतः श्रीरामः प्रीतो भवति । स्वात्मानं दर्शयति तान्नो ब्रूहि भगवन्निति । स होवाच याज्ञवल्क्यः श्रीरामचन्द्रेणैवं शिक्षितो ब्रह्मा पुनरेतया गाथया नमस्करोति ॥ विश्वाधारं महाविष्णुं नारायणमनामयम् । परिपूर्णानन्दविज्ञं परंब्रह्मस्वरूपिणम् ॥ मनसा संस्मरन्ब्रह्म तुष्टाव परमेश्वरम् । ॐ यो ह वै श्रीरामचन्द्रः स भगवानद्वैतपरमानन्दात्मा यत्परं ब्रह्म भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १ ॥ ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्चाखण्डैकरसात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः २ ॐ यो वै श्रीरामचन्द्रः स भगवान्यच्च ब्रह्मानन्दामृतं भूर्भुवः स्वस्तस्मै वै नमो नमः ३ ॐ यो वै श्रीरामचन्द्रः स भगवान्यस्तारकं भूर्भुवः स्वस्तस्मै वै नमो नमः ४ ॐ यो वै श्रीरामचन्द्रः स भगवान्यो ब्रह्मा विष्णुरीश्वरो यः सर्वदेवात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः ५ ॐ यो वै श्रीरामचन्द्रः स भगवान्ये सर्वे वेदाः साङ्गाः सशाखाः सपुराणा भूर्भुवः स्वस्तस्मै वै नमो नमः ६ ॐ यो वै श्रीरामचन्द्रः स भगवान्यो जीवात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः ७ ॐ यो वै श्रीरामचन्द्रः स भगवान्यः सर्वभूतान्तरात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः ८ ॐ यो वै श्रीरामचन्द्रः स भगवान्ये देवासुरमनुष्यादिभावा भूर्भुवः स्वस्तस्मै वै नमो नमः ९ ॐ यो वै श्रीरामचन्द्रः स भगवान्ये मत्स्यकूर्माद्यवतारा भूर्भुवः स्वस्तस्मै वै नमो नमः १० ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्च प्राणो भूर्भुवः स्वस्तस्मै वै नमो नमः ११ ॐ यो वै श्रीरामचन्द्रः स भगवान्योऽन्तःकरणचतुष्टयात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः १२ ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्च यमो भूर्भुवः स्वस्तस्मै वै नमो नमः १३ ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्चान्तको भूर्भुवः स्वस्तस्मै वै नमो नमः १४ ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्च मृत्युर्भूर्भुवः स्वस्तस्मै वै नमो नमः १५ ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्चामृतं भूर्भुवः स्वस्तस्मै वै नमो नमः १६ ॐ यो वै श्रीरामचन्द्रः स भगवान्यानि पञ्च महाभूतानि

भूर्भुवः स्वस्तस्मै वै नमो नमः १७ ॐ यो वै श्रीरामचन्द्रः स भगवान्यः स्थावरजङ्गमात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः १८ ॐ यो वै श्रीरामचन्द्रः स भगवान्ये पञ्चाग्नयो भूर्भुवः स्वस्तस्मै वै नमो नमः १९ ॐ यो वै श्रीरामचन्द्रः स भगवान्याः सप्त महाव्याहृतयो भूर्भुवः स्वस्तस्मै वै नमो नमः २० ॐ यो वै श्रीरामचन्द्रः स भगवान्या विद्या भूर्भुवः स्वस्तस्मै वै नमो नमः २१ ॐ यो वै श्रीरामचन्द्रः स भगवान्या सरस्वती भूर्भुवः स्वस्तस्मै वै नमो नमः २२ ॐ यो वै श्रीरामचन्द्रः स भगवान्या लक्ष्मीर्भूर्भुवः स्वस्तस्मै वै नमो नमः २३ ॐ यो वै श्रीरामचन्द्रः स भगवान्या गौरी भूर्भुवः स्वस्तस्मै वै नमो नमः २४ ॐ यो वै श्रीरामचन्द्रः स भगवान्या जानकी भूर्भुवः स्वस्तस्मै वै नमो नमः २५ ॐ यो वै श्रीरामचन्द्रः स भगवान्यच्च त्रैलोक्यं भूर्भुवः स्वस्तस्मै वै नमो नमः २६ ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्च सूर्यो भूर्भुवः स्वस्तस्मै वै नमो नमः २७ ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्च सोमो भूर्भुवः स्वस्तस्मै वै नमो नमः २८ ॐ यो वै श्रीरामचन्द्रः स भगवान्यानि नक्षत्राणि भूर्भुवः स्वस्तस्मै वै नमो नमः २९ ॐ यो वै श्रीरामचन्द्रः स भगवान्ये च नव ग्रहा भूर्भुवः स्वस्तस्मै वै नमो नमः ३० ॐ यो वै श्रीरामचन्द्रः स भगवान्ये चाष्टौ लोकपाला भूर्भुवः स्वस्तस्मै वै नमो नमः ३१ ॐ यो वै श्रीरामचन्द्रः स भगवान्ये चाष्टौ वसवो भूर्भुवः स्वस्तस्मै वै नमो नमः ३२ ॐ यो वै श्रीरामचन्द्रः स भगवान्ये चैकादश रुद्रा भूर्भुवः स्वस्तस्मै वै नमो नमः ३३ ॐ यो वै श्रीरामचन्द्रः स भगवान्ये च द्वादशादित्या भूर्भुवः स्वस्तस्मै वै नमो नमः ३४ ॐ यो वै श्रीरामचन्द्रः स भगवान्यच्च भूतं भवद्भविष्यद्भूर्भुवः स्वस्तस्मै वै नमो नमः ३५ ॐ यो वै श्रीरामचन्द्रः स भगवान्ब्रह्माण्डस्यान्तर्बहिर्व्याप्नोति यो विराड्भूर्भुवः स्वस्तस्मै वै नमो नमः ३६ ॐ यो वै श्रीरामचन्द्रः स भगवान्यो हिरण्यगर्भो भूर्भुवः स्वस्तस्मै वै नमो नमः ३७ ॐ यो वै श्रीरामचन्द्रः स भगवान्या प्रकृतिर्भूर्भुवः स्वस्तस्मै वै नमो नमः ३८ ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्चोंकारो भूर्भुवः स्वस्तस्मै वै नमो नमः ३९ ॐ यो वै श्रीरामचन्द्रः स भगवान्याश्चतस्रोऽर्धमात्रा भूर्भुवः स्वस्तस्मै वै नमो नमः ४० ॐ यो वै श्रीरामचन्द्रः स भगवान्यः परमपुरुषो भूर्भुवः स्वस्तस्मै वै नमो नमः ४१ ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्च महेश्वरो भूर्भुवः

स्वस्तस्मै वै नमो नमः ४२ ॐ यो वै श्रीरामचन्द्रः स भगवान्यश्च महादेवो भूर्भुवः स्वस्तस्मै वै नमो नमः ४३ ॐ यो वै श्रीरामचन्द्रः स भगवान्य ॐ नमो भगवते वासुदेवाय यो महाविष्णुर्भूर्भुवः स्वस्तस्मै वै नमो नमः ४४ ॐ यो वै श्रीरामचन्द्रः स भगवान्यः परमात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः ४५ ॐ यो वै श्रीरामचन्द्रः स भगवान्यो विज्ञानात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः ४६ ॐ यो वै श्रीरामचन्द्रः स भगवान्यः सच्चिदानन्दैकरसात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः ४७ इत्येतान्ब्रह्मवित्सप्तचत्वारिंशन्मन्त्रैर्नित्यं देवं स्तुवंस्ततो देवः प्रीतो भवति । तस्माद्य एतैर्मन्त्रैर्नित्यं देवं स्तौति स देवं पश्यति सोऽमृतत्वं च गच्छति सोऽमृतत्वं च गच्छतीति ॥ ५ ॥

ॐ वाङ्मे मनसीति शान्तिः ॥

इत्याथर्वणीया श्रीरामोत्तरतापिनीयोपनिषत्समाप्ता ॥ ५८ ॥

---

# वासुदेवोपनिषत् ॥ ५९ ॥

यत्सर्वहृदयागारं यत्र सर्वं प्रतिष्ठितम् ।
वस्तुतो यन्निराधारं वासुदेवपदं भजे ॥

ॐ आप्यायन्त्विति शान्तिः ॥

ॐ नमस्कृत्य भगवान्नारदः सर्वेश्वरं वासुदेवं पप्रच्छ अधीहि भगवन्नूर्ध्वपुण्ड्रविधिं द्रव्यमन्त्रस्थानादिसहितं मे ब्रूहीति । तं होवाच भगवान्वासुदेवो वैकुण्ठस्थानादुत्पन्नं मम प्रीतिकरं मद्भक्तैर्ब्रह्मादिभिर्धारितं विष्णुचन्दनं ममाङ्गे प्रतिदिनमालिप्तं गोपीभिः प्रक्षालनाद्गोपीचन्दनमाख्यातं मदङ्गलेपनं पुण्यं चक्रतीर्थान्तःस्थितं चक्रसमायुक्तं पीतवर्णं मुक्तिसाधनं भवति । अथ गोपीचन्दनं नमस्कृत्वोद्धृत्य । गोपीचन्दन पापघ्न विष्णुदेहसमुद्भव । चक्राङ्कित नमस्तुभ्यं धारणान्मुक्तिदो भव । इमं मे गङ्गे इति जलमादाय विष्णोर्नुकमिति मर्दयेत् । अतो देवा अवन्तु न इत्येतन्मन्त्रैर्विष्णुगायत्र्या केशवादिनामभिर्वा धारयेत् । ब्रह्मचारी वानप्रस्थो वा ललाटहृदयकण्ठबाहुमूलेषु वैष्णवगायत्र्या कृष्णादिनामभिर्वा धारयेत् । इति त्रिवारमभिमन्त्र्य शङ्खचक्रगदापाणे द्वारकानिलयाच्युत । गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागतम् । इति ध्यात्वा गृहस्थो ललाटादिद्वादशस्थलेष्वनामिकाङ्गुल्या वैष्णवगायत्र्या

केशवादिनामभिर्वा धारयेत् । ब्रह्मचारी गृहस्थो वा ललाटहृदयकण्ठबाहुमूलेषु वैष्णवगायत्र्या कृष्णादिनामभिर्वा धारयेत् । यतिस्तर्जन्या शिरोललाटहृदयेषु प्रणवेनैव धारयेत् । ब्रह्मादयस्त्रयो मूर्तयस्तिस्रो व्याहृतयस्त्रीणि छन्दांसि त्रयोऽग्नय इति ज्योतिष्मन्तस्त्रयः कालास्तिस्रोऽवस्थास्त्रय आत्मानः पुण्ड्रास्त्रय ऊर्ध्वा अकार उकारो मकार एते प्रणवमयोर्ध्वपुण्ड्रास्तदात्मा सदेतदोमिति । तानेकधा समभवत् । ऊर्ध्वमुन्नमयत इत्योंकाराधिकारी । तस्मादूर्ध्वपुण्ड्रं धारयेत् । परमहंसो ललाटे प्रणवेनैकमूर्ध्वपुण्ड्रं वा धारयेत् । तत्त्वप्रदीपप्रकाशं स्वात्मानं पश्यन्योगी मत्सायुज्यमवाप्नोति । अथवा न्यस्तहृदयपुण्ड्रमध्ये वा । हृदयकमलमध्ये वा तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता । नीलतोयदमध्यस्थाद्विद्युल्लेखेव भास्वरा । नीवारशूकवत्तन्वी विद्युल्लेखेव भास्वरा । तस्याः शिखाया मध्ये परमात्मा व्यवस्थित इति । अतः पुण्ड्रस्थं हृदयपुण्डरीकेषु तमभ्यसेत् । क्रमादेवं स्वात्मानं भावयेन्मां परं हरिम् । एकाग्रमनसा यो मां ध्यायते हरिमव्ययम् । हृत्पङ्कजे च स्वात्मानं स मुक्तो नात्र संशयः । मद्रूपमद्वयं ब्रह्म आदिमध्यान्तवर्जितम् । स्वप्रभं सच्चिदानन्दं भक्त्या जानाति चाव्ययम् । एको विष्णुरनेकेषु जङ्गमस्थावरेषु च । अनुस्यूतो वसत्यात्मा भूतेष्वहमवस्थितः । तैलं तिलेषु काष्ठेषु वह्निः क्षीरे घृतं यथा । गन्धः पुष्पेषु भूतेषु तथात्माऽवस्थितो ह्यहम् । ब्रह्मरन्ध्रे भ्रुवोर्मध्ये हृदये चिद्रविं हरिम् । गोपीचन्दनमालिप्य तत्र ध्यात्वाप्नुयात्परम् । ऊर्ध्वदण्डोर्ध्वरेताश्च ऊर्ध्वपुण्ड्रोर्ध्वयोगवान् । ऊर्ध्वं पदमवाप्नोति यतिरूर्ध्वचतुष्कवान् । इत्येतन्निश्चितं ज्ञानं मद्भक्त्या सिध्यति स्वयम् । नित्यमेकाग्रभक्तिः स्याद्गोपीचन्दनधारणात् । ब्राह्मणानां तु सर्वेषां वैदिकानामनुत्तमम् । गोपीचन्दनवारिभ्यामूर्ध्वपुण्ड्रं विधीयते । यो गोपीचन्दनाभावे तुलसीमूलमृत्तिकाम् । मुमुक्षुर्धारयेन्नित्यमपरोक्षात्मसिद्धये । अतिरात्राग्निहोत्रभस्मनाग्नेर्भसितमिदं विष्णुस्त्रीणि पदेति मन्त्रैर्वैष्णवगायत्र्या प्रणवेनोद्धूलनं कुर्यात् । एवं विधिना गोपीचन्दनं च धारयेत् । यस्त्वधीते वा स सर्वपातकेभ्यः पूतो भवति । पापबुद्धिस्तस्य न जायते स सर्वेषु तीर्थेषु स्नातो भवति । स सर्वैर्यज्ञैर्याजितो भवति । स सर्वैर्देवैः पूज्यो भवति । श्रीमन्नारायणे मय्यचञ्चला भक्तिश्च भवति । स सम्यग् ज्ञानं च लब्ध्वा विष्णुसायुज्यमवाप्नोति । न च पुनरा-

वर्तते न च पुनरावर्तते इत्याह भगवान्वासुदेवः । यस्त्वेतद्वाऽधीते सोऽप्येवमेव भवतीत्यों सत्यमित्युपनिषत् ॥ १ ॥

ॐ आप्यायन्त्विति शान्तिः ॥

इति वासुदेवोपनिषत्समाप्ता ॥ ५९ ॥

---

# मुद्गलोपनिषत् ॥ ६० ॥

श्रीमत्पुरुषसूक्तार्थं पूर्णानन्दकलेवरम् ।
पुरुषोत्तमविख्यातं पूर्णं ब्रह्म भवाम्यहम् ॥

ॐ वाङ्मे मनसीति शान्तिः ॥

ॐ पुरुषसूक्तार्थनिर्णयं व्याख्यास्यामः ॥ पुरुषसंहितायां पुरुषसूक्तार्थः संग्रहेण प्रोच्यते । सहस्रशीर्षेत्यत्र सशब्दोऽनन्तवाचकः । अनन्तयोजनं प्राह दशाङ्गुलवचस्तथा ॥ १ ॥ तस्य प्रथमया विष्णोर्देशतो व्याप्तिरीरिता । द्वितीयया चास्य विष्णोः कालतो व्याप्तिरुच्यते ॥ २ ॥ विष्णोर्मोक्षप्रदत्वं च कथितं तु तृतीयया । एतावानिति मन्त्रेण वैभवं कथितं हरेः ॥ ३ ॥ एतेनैव च मन्त्रेण चतुर्व्यूहो विभाषितः । त्रिपादित्यनया प्रोक्तमनिरुद्धस्य वैभवम् ॥ ४ ॥ तस्माद्विराडित्यनया पादनारायणाद्धरेः । प्रकृतेः पुरुषस्यापि समुत्पत्तिः प्रदर्शिता ॥ ५ ॥ यत्पुरुषेणेत्यनया सृष्टियज्ञः समीरितः । सप्तास्यासन्परिधयः समिधश्च समीरिताः ॥ ६ ॥ तं यज्ञमिति मन्त्रेण सृष्टियज्ञः समीरितः । अनेनैव च मन्त्रेण मोक्षश्च समुदीरितः ॥ ७ ॥ तस्मादिति च मन्त्रेण जगत्सृष्टिः समीरिता । वेदाहमिति मन्त्राभ्यां वैभवं कथितं हरेः ॥ ८ ॥ यज्ञेनेत्युपसंहारः सृष्टेर्मोक्षस्य चेरितः । य एवमेतज्जानाति स हि मुक्तो भवेदिति ॥ ९ ॥ १ ॥

अथ तथा मुद्गलोपनिषदि पुरुषसूक्तस्य वैभवं विस्तरेण प्रतिपादितम् । वासुदेव इन्द्राय भगवज्ज्ञानमुपदिश्य पुनरपि सूक्ष्मश्रवणाय प्रणतायेन्द्राय परमरहस्यभूतं पुरुषसूक्ताभ्यां खण्डद्वयाभ्यामुपादिशत् । द्वौ खण्डावुच्येते । योऽयमुक्तः स पुरुषो नामरूपज्ञानागोचरं संसारिणामतिदुर्ज्ञेयं विषयं विहाय क्लेशादिभिः संक्लिष्टदेवादिजिहीर्षया सहस्रकलावयवकल्याणं दृष्टमात्रेण मोक्षदं वेषमादद । तेन वेषेण भूम्यादिलोकं व्याप्यानन्तयोजनमत्यतिष्ठत् । पुरुषो नारायणो भूतं भव्यं भविष्यच्चासीत् । स एष सर्वेषां मोक्षदश्चासीत् । स च

सर्वस्मान्महिम्नो ज्यायान् । तस्मान्न कोऽपि ज्यायान् । महापुरुष आत्मानं चतुर्धा कृत्वा त्रिपादेन परमे व्योम्नि चासीत् । इतरेण चतुर्थेनानिरुद्धनारायणेन विश्वान्यासन् । स च पादनारायणो जगत्स्रष्टुं प्रकृतिमजनयत् । स समृद्धकायः सन्सृष्टिकर्म न जज्ञिवान् । सोऽनिरुद्धनारायणस्तस्मै सृष्टिमुपादिशत् । ब्रह्मंस्तवेन्द्रियाणि याजकानि ध्यात्वा कोशभूतं दृढं ग्रन्थिकलेवरं हविर्ध्यात्वा मां हविर्भुजं ध्यात्वा वसन्तकालमाज्यं ध्यात्वा ग्रीष्मसिध्मं ध्यात्वा शरदृतुं रसं ध्यात्वैवमग्नौ हुत्वाङ्गस्पर्शात्कलेवरो वज्रं हीष्यते । ततः स्वकार्यान्सर्वप्राणिजीवान्सृष्ट्वा पश्चाद्याः प्रादुर्भविष्यन्ति । ततः स्थावरजङ्गमात्मकं जगद्भविष्यति । एतेन जीवात्मनोर्योगेन मोक्षप्रकारश्च कथित इत्यनुसंधेयम् । य इमं सृष्टियज्ञं जानाति मोक्षप्रकारं च सर्वमायुरेति ॥ २ ॥ एको देवो बहुधा निविष्ट अजायमानो बहुधा विजायते । तमेतमग्निरित्यध्वर्यव उपासते । यजुरित्येष हीदं सर्वं युनक्ति । सामेति छन्दोगाः । एतस्मिन्हीदं सर्वं प्रतिष्ठितम् । विषमिति सर्पाः । सर्प इति सर्पविदः । ऊर्गिति देवाः । रयिरिति मनुष्याः । मायेत्यसुराः । स्वधेति पितरः । देवजन इति देवजनविदः । रूपमिति गन्धर्वाः । गन्धर्व इत्यप्सरसः । तं यथा यथोपासते तथैव भवति । तस्माद्ब्राह्मणः पुरुषरूपं परंब्रह्मैवाहमिति भावयेत् । तद्रूपो भवति । य एवं वेद ॥ ३ ॥ तद्ब्रह्म तापत्रयातीतं षट्कोशविनिर्मुक्तं षडूर्मिवर्जितं पञ्चकोशातीतं षड्भावविकारशून्यमेवमादिसर्वविलक्षणं भवति । तापत्रयं त्वाध्यात्मिकाधिभौतिकाधिदैविकं कर्तृकर्मकार्यज्ञातृज्ञानज्ञेयभोक्तृभोगभोग्यमिति त्रिविधम् । त्वङ्मांसशोणितास्थिस्नायुमज्जाः षट्कोशाः । कामक्रोधलोभमोहमदमात्सर्यमित्यरिषड्वर्गः । अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया इति पञ्च कोशाः । प्रियात्मजननवर्धनपरिणामक्षयनाशाः षड्भावाः । अशनायापिपासाशोकमोहजरामरणानीति षडूर्मयः । कुलगोत्रजातिवर्णाश्रमरूपाणि षड् भ्रमाः । एतद्योगेन परमपुरुषो जीवो भवति नान्यः । य एतदुपनिषदं नित्यमधीते सोऽग्निपूतो भवति । स वायुपूतो भवति । स आदित्यपूतो भवति । अरोगी भवति । श्रीमांश्च भवति । पुत्रपौत्रादिभिः समृद्धो भवति । विद्वांश्च भवति । महापातकात्पूतो भवति । सुरापानात्पूतो भवति । अगम्यागमनात्पूतो भवति । मातृगमनात्पूतो भवति । दुहितृस्नुषाभिगमनात्पूतो भवति । स्वर्णस्तेयात्पूतो भवति । वेदिजन्महानात्पूतो भवति । गुरोरशुश्रूषणात्पूतो भवति । अयाज्ययाजनात्पूतो भवति । अभक्ष्यभक्षणात्पूतो भवति । उग्रप्रतिग्रहा-

त्पूतो भवति । परदारगमनात्पूतो भवति । कामक्रोधलोभमोहेर्ष्यादिभिरबाधितो भवति । सर्वेभ्यः पापेभ्यो मुक्तो भवति । इह जन्मनि पुरुषो भवति । तस्मादेतत्पुरुषसूक्तार्थमतिरहस्यं राजगुह्यं देवगुह्यं गुह्यादपि गुह्यतरं नादीक्षितायोपदिशेत् । नानूचानाय नायज्ञशीलाय नावैष्णवाय नायोगिने न बहुभाषिणे नाप्रियवादिने नासंवत्सरवेदिने नातुष्टाय नानधीतवेदायोपदिशेत् । गुरुरप्येवंविच्छुचौ देशे पुण्यनक्षत्रे प्राणानायम्य पुरुषं ध्यायन्नुपसन्नाय शिष्याय दक्षिणकर्णे पुरुषसूक्तार्थमुपदिशेद्विद्वान् । न बहुशो वदेत् । यातयामो भवति । असकृत्कर्णमुपदिशेत् । एतत्कुर्वाणोऽध्येताऽध्यापकश्च इह जन्मनि पुरुषो भवतीत्युपनिषत् ॥ १ ॥

ॐ वाङ्मे मनसीति शान्तिः ॥

इति मुद्गलोपनिषत्समाप्ता ॥ ६० ॥

---

# शाण्डिल्योपनिषत् ॥ ६१ ॥

शाण्डिल्योपनिषत्प्रोक्तयमाद्यष्टाङ्गयोगिनः ।
यद्बोधाद्यान्ति कैवल्यं स रामो मे परा गतिः ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

शाण्डिल्यो ह वा अथर्वाणं पप्रच्छ—आत्मलाभोपायभूतमष्टाङ्गयोगमनुब्रूहीति । स होवाचाथर्वा यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टाङ्गानि । तत्र दश यमाः । तथा नियमाः । आसनान्यष्टौ । त्रयः प्राणायामाः । पञ्च प्रत्याहाराः । तथा धारणा । द्विप्रकारं ध्यानम् । समाधिस्त्वेकरूपः । तत्राहिंसासत्यास्तेयब्रह्मचर्यदयाजपक्षमाधृतिमिताहारशौचानि चेति यमा दश । तत्र हिंसा नाम मनोवाक्कायकर्मभिः सर्वभूतेषु सर्वदा क्लेशजननम् । सत्यं नाम मनोवाक्कायकर्मभिर्भूतहितयथार्थाभिभाषणम् । अस्तेयं नाम मनोवाक्कायकर्मभिः परद्रव्येषु निःस्पृहता । ब्रह्मचर्यं नाम सर्वावस्थासु मनोवाक्कायकर्मभिः सर्वत्र मैथुनत्यागः । दया नाम सर्वभूतेषु सर्वत्रानुग्रहः । आर्जवं नाम मनोवाक्कायकर्मणां विहिताविहितेषु जनेषु प्रवृत्तौ निवृत्तौ वा एकरूपत्वम् । क्षमा नाम प्रियाप्रियेषु सर्वेषु ताडनपूजनेषु सहनम् । धृति-

नामार्थहानौ स्वेष्टबन्धुवियोगे तत्प्राप्तौ सर्वत्र चेतःस्थापनम् । मिताहारो नाम चतुर्थांशावशेषकसुस्निग्धमधुराहारः । शौचं नाम द्विविधं–बाह्यमान्तरं चेति । तत्र मृज्जलाभ्यां बाह्यम् । मनःशुद्धिरान्तरम् । तदध्यात्मविद्यया लभ्यम् ॥ १ ॥ तपःसन्तोषास्तिक्यदानेश्वरपूजनसिद्धान्तश्रवणह्रीमतिजपो-व्रतानि दश नियमाः । तत्र तपो नाम विध्युक्तकृच्छ्रचान्द्रायणादिभिः शरीर-शोषणम् । संतोषो नाम यदृच्छालाभसंतुष्टिः । आस्तिक्यं नाम वेदोक्त-धर्माधर्मेषु विश्वासः । दानं नाम न्यायार्जितस्य धनधान्यादेः श्रद्धयार्थिभ्यः प्रदानम् । ईश्वरपूजनं नाम प्रसन्नस्वभावेन यथाशक्ति विष्णुरुद्रादिपूजनम् । सिद्धान्तश्रवणं नाम वेदान्तार्थविचारः । ह्रीर्नाम वेदलौकिकमार्गकुत्सित-कर्मणि लज्जा । मतिर्नाम वेदविहितकर्ममार्गेषु श्रद्धा । जपो नाम विधि-वद्गुरूपदिष्टवेदाविरुद्धमन्त्राभ्यासः । तद्द्विविधं–वाचिकं मानसं चेति । मानसं तु मनसा ध्यानयुक्तम् । वाचिकं द्विविधमुच्चैरुपांशुभेदेन । उच्चैरुच्चारणं यथोक्तफलम् । उपांशु सहस्रगुणम् । मानसं कोटिगुणम् । व्रतं नाम वेदो-क्तविधिनिषेधानुष्ठाननैयत्यम् ॥ २ ॥ स्वस्तिकगोमुखपद्मवीरसिंहभद्रमुक्तम-यूराख्यान्यासनान्यष्टौ । स्वस्तिकं नाम–जानूर्वोरन्तरे सम्यक्कृत्वा पादतले उभे । ऋजुकायः समासीनः स्वस्तिकं तत्प्रचक्षते ॥ ३ ॥ सव्ये दक्षिणगुल्फं तु पृष्ठपार्श्वे नियोजयेत् । दक्षिणेऽपि तथा सव्यं गोमुखं गोमुखं यथा ॥ ४ ॥ अङ्गुष्ठेन निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण च । ऊर्वोरुपरि शाण्डिल्य कृत्वा पादतले उभे । पद्मासनं भवेदेतत्सर्वेषामपि पूजितम् ॥ ५ ॥ एकं पादम-थैकस्मिन्विन्यस्योरुणि संस्थितः । इतरस्मिंस्तथा चोरुं वीरासनमुदीरितम् ॥ ६ ॥ दक्षिणं सव्यगुल्फेन दक्षिणेन तथेतरम् । हस्तौ च जान्वोः संस्थाप्य स्वाङ्गुलीश्च प्रसार्य च ॥ ७ ॥ व्यक्तवक्त्रो निरीक्षेत नासाग्रं सुसमाहितः । सिंहासनं भवेदेतत्पूजितं योगिभिः सदा ॥ ८ ॥ योनिं वामेन संपीड्य मेढ्रादुपरि दक्षिणम् । भ्रूमध्ये च मनोलक्ष्यं सिद्धासनमिदं भवेत् ॥ ९ ॥ गुल्फौ तु वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् । पादपार्श्वे तु पाणिभ्यां दृढं बद्ध्वा सुनिश्चलम् । भद्रासनं भवेदेतत्सर्वव्याधिविषापहम् ॥ १० ॥ संपीड्य सीविनीं सूक्ष्मां गुल्फेनैव तु सव्यतः । सव्यं दक्षिणगुल्फेन मुक्ता-सनमुदीरितम् ॥ ११ ॥ अवष्टभ्य धरां सम्यक्तलाभ्यां तु करद्वयोः । हस्तयोः कूर्परौ चापि स्थापयेन्नाभिपार्श्वयोः ॥ १२ ॥ समुन्नतशिरःपादो दण्डव-

व्योम्नि संस्थितः । मयूरासनमेतत्तु सर्वपापप्रणाशनम् ॥ १३ ॥ शरीरान्तर्गताः सर्वे रोगा विनश्यन्ति । विषाणि जीर्यन्ते । येन केनासनेन सुखधारणं भवत्यशक्तस्तत्समाचरेत् । येनासनं विजितं जगत्त्रयं तेन विजितं भवति । यमनियमाभ्यां संयुक्तः पुरुषः प्राणायामं चरेत् । तेन नाड्यः शुद्धा भवन्ति ॥ १४ ॥ अथ हैनमथर्वाणं शाण्डिल्यः पप्रच्छ केनोपायेन नाड्यः शुद्धाः स्युः । नाड्यः कतिसंख्याकाः । तासामुत्पत्तिः कीदृशी । तासु कति वायवस्तिष्ठन्ति । तेषां कानि स्थानानि । तत्कर्माणि कानि । देहे यानि यानि विज्ञातव्यानि तत्सर्वं मे ब्रूहीति । स होवाचाथर्वा । अथेदं शरीरं षण्णवत्यङ्गुलात्मकं भवति । शरीरात्प्राणो द्वादशाङ्गुलाधिको भवति । शरीरस्थं प्राणमग्निना सह योगाभ्यासेन समं न्यूनं वा यः करोति स योगिपुङ्गवो भवति । देहमध्ये शिखिस्थानं त्रिकोणं तप्तजाम्बूनदप्रभं मनुष्याणाम् । चतुष्पदां चतुरस्रम् । विहङ्गानां वृत्ताकारम् । तन्मध्ये शुभा तन्वी पावकी शिखा तिष्ठति । गुदाद्व्यङ्गुलादूर्ध्वं मेढ्राद्व्यङ्गुलादधो देहमध्यं मनुष्याणां भवति । चतुष्पदां हृन्मध्यम् । विहगानां तुन्दमध्यम् । देहमध्यं नवाङ्गुलं चतुरङ्गुलमुत्सेधायतमण्डाकृति । तन्मध्ये नाभिः । तत्र द्वादशारयुतं चक्रम् । तच्चक्रमध्ये पुण्यपापप्रचोदितो जीवो भ्रमति । तन्तुपञ्जरमध्यस्थलूतिका यथा भ्रमति तथा चासौ तत्र प्राणश्चरति । देहेऽस्मिञ्जीवः प्राणारूढो भवेत् । नाभेस्तिर्यगध ऊर्ध्वं कुण्डलिनीस्थानम् । अष्टप्रकृतिरूपाऽष्टधा कुण्डलीकृता कुण्डलिनी शक्तिर्भवति । यथावद्वायुसंचारं जलान्नादीनि परितः स्कन्धः पार्श्वेषु निरुध्यैनं मुखेनैव समावेष्ट्य ब्रह्मरन्ध्रं योगकाले चापानेनाग्निना च स्फुरति । हृदयाकाशे महोज्वला ज्ञानरूपा भवति । मध्यस्थकुण्डलिनीमाश्रित्य मुख्या नाड्यश्चतुर्दश भवन्ति । इडा पिङ्गला सुषुम्ना सरस्वती वारुणी पूषा हस्तिजिह्वा यशस्विनी विश्वोदरी कुहूः शङ्खिनी पयस्विनी अलम्बुसा गान्धारीति नाड्यश्चतुर्दश भवन्ति । तत्र सुषुम्ना विश्वधारिणी मोक्षमार्गेति चाचक्षते । गुदस्य पृष्ठभागे वीणादण्डाश्रिता मूर्धपर्यन्तं ब्रह्मरन्ध्रे विज्ञेया व्यक्ता सूक्ष्मा वैष्णवी भवति । सुषुम्नायाः सव्यभागे इडा तिष्ठति । दक्षिणभागे पिङ्गला । इडायां चन्द्रश्चरति । पिङ्गलायां रविः । तमोरूपश्चन्द्रः । रजोरूपो रविः । विषभागो रविः । अमृतभागश्चन्द्रमाः । तावेव

सर्वकालं धत्तः । सुषुम्ना कालभोक्त्री भवति । सुषुम्ना पृष्ठपार्श्वयोः सरस्वतीकुहू भवतः । यशस्विनीकुहूमध्ये वारुणी प्रतिष्ठिता भवति । पूषासरस्वतीमध्ये पयस्विनी भवति । गान्धारीसरस्वतीमध्ये यशस्विनी भवति । कन्दमध्येऽलम्बुसा भवति । सुषुम्नापूर्वभागे मेढ्रान्तं कुहूर्भवति । कुण्डलिन्या अधश्चोर्ध्वं वारुणी सर्वगामिनी भवति । यशस्विनी सौम्या च पादाङ्गुष्ठान्तमिष्यते । पिङ्गला चोर्ध्वगा याम्यनासान्तं भवति । पिङ्गलायाः पृष्ठतो याम्यनेत्रान्तं पूषा भवति । याम्यकर्णान्तं यशस्विनी भवति । जिह्वाया ऊर्ध्वान्तं सरस्वती भवति । आसव्यकर्णान्तमूर्ध्वगा शङ्खिनी भवति । इडापृष्ठभागात्सव्यनेत्रान्तगा गान्धारी भवति । पायुमूलादधोर्ध्वगाऽलम्बुसा भवति । एतासु चतुर्दशसु नाडीष्वन्या नाड्यः संभवन्ति । तास्वन्यास्तास्वन्या भवन्तीति विज्ञेयाः ॥ यथाऽश्वत्थादिपत्रं शिराभिर्व्याप्तमेवं शरीरं नाडीभिर्व्याप्तम् । प्राणापानसमानोदानव्याना नागकूर्मकृकरदेवदत्तधनञ्जया एते दश वायवः सर्वासु नाडीषु चरन्ति । आस्यनासिकाकण्ठनाभिपादाङ्गुष्ठद्वयकुण्डल्यधश्चोर्ध्वभागेषु प्राणः संचरति । श्रोत्राक्षिकटिगुल्फघ्राणगलस्फिग्देशेषु व्यानः संचरति । गुदमेढ्रोरुजानूदरवृषणकटिजङ्घानाभिगुदाग्न्यगारेष्वपानः संचरति । सर्वसंधिस्थ उदानः । पादहस्तयोरपि सर्वगात्रेषु सर्वव्यापी समानः । भुक्तान्नरसादिकं गात्रेऽग्निना सह व्यापयन्द्विसप्ततिसहस्रेषु नाडीमार्गेषु चरन्समानवायुरग्निना सह साङ्गोपाङ्गकलेवरं व्याप्नोति । नागादिवायवः पञ्चत्वगस्थ्यादिसंभवाः । तुन्दस्थं जलमन्नं च रसादिषु समीरितं तुन्दमध्यगतः प्राणस्तानि पृथक्कुर्यात् । अग्नेरुपरि जलं स्थाप्य जलोपर्यन्नादीनि संस्थाप्य स्वयमपानं संप्राप्य तेनैव सह मारुतः प्रयाति देहमध्यगतं ज्वलनम् । वायुना पालितो वह्निरपानेन शनैर्देहमध्ये ज्वलति । ज्वलनो ज्वालाभिः प्राणेन कोष्ठमध्यगतं जलमत्युष्णमकरोत् । जलोपरि समर्पितव्यञ्जनसंयुक्तमन्नं वह्निसंयुक्तवारिणा पक्वमकरोत् । तेन स्वेदमूत्रजलरक्तवीर्यरूपरसपुरीषादिकं प्राणः पृथक्कुर्यात् । समानवायुना सह सर्वासु नाडीषु रसं व्यापयञ्श्वासरूपेण देहे वायुश्चरति । नवभिर्व्योमरन्ध्रैः शरीरस्य वायवः कुर्वन्ति विण्मूत्रादिविसर्जनम् । निश्वासोच्छ्वासकासश्च प्राणकर्मोच्यते । विण्मूत्रादिविसर्जनमपानवायुकर्म । हानोपादानचेष्टादि व्यानकर्म । देहस्योन्नयनादिकमुदानकर्म । शरीरपोषणादिकं समानकर्म । उद्गारादि नागकर्म । निमीलनादि कूर्मकर्म । क्षुत्करणं कृकरकर्म । तन्द्रा देवदत्तकर्म ।

श्लेष्मादि धनञ्जयकर्म । एवं नाडीस्थानं वायुस्थानं तत्कर्म च सम्यग्ज्ञात्वा नाडीसंशोधनं कुर्यात् ॥१५॥ यमनियमयुतः पुरुषः सर्वसङ्गविवर्जितः कृतविद्यः सत्यधर्मरतो जितक्रोधो गुरुशुश्रूषानिरतः पितृमातृविधेयः स्वाश्रमोक्तसदाचारविद्वच्छिक्षितः फलमूलोदकान्वितं तपोवनं प्राप्य रम्यदेशे ब्रह्मघोषसमन्विते स्वधर्मनिरतब्रह्मवित्समावृते फलमूलपुष्पवारिभिः सुसंपूर्णे देवायतने नदीतीरे ग्रामे नगरे वापि सुशोभनमठं नात्युच्चनीचायतमल्पद्वारं गोमयादिलिप्तं सर्वरक्षासमन्वितं कृत्वा तत्र वेदान्तश्रवणं कुर्वन्योगं समारभेत् । आदौ विनायकं संपूज्य स्वेष्टदेवतां नत्वा पूर्वोक्तासने स्थित्वा प्राङ्मुख उदङ्मुखो वापि मृद्वासनेषु जितासनगतो विद्वान्समग्रीवशिरोनासाग्रदृग्भ्रूमध्ये शशभृद्बिम्बं पश्यन्नेत्राभ्याममृतं पिबेत् । द्वादशमात्रया इडया वायुमापूर्योदरे स्थितं ज्वालावलीयुतं रेफबिन्दुयुक्तमग्निमण्डलयुतं ध्यायेद्रेचयेत्पिङ्गलया । पुनः पिङ्गलयाऽऽपूर्य कुम्भित्वा रेचयेदिडया । त्रिचतुस्त्रिचतुःसप्तत्रिचतुर्मासपर्यन्तं त्रिसंधिषु तदन्तरालेषु च षट्कृत्व आचरेन्नाडीशुद्धिर्भवति । ततः शरीरे लघुदीप्तिवह्निवृद्धिनादाभिव्यक्तिर्भवति ॥ १६ ॥ प्राणापानसमायोगः प्राणायामो भवति । रेचकपूरककुम्भकभेदेन स त्रिविधः । ते वर्णात्मकाः । तस्मात्प्रणव एव प्राणायामः पद्माद्यासनस्थः पुमान्नासाग्रे शशभृद्बिम्बज्योत्स्नाजालवितानिताकारमूर्ती रक्ताङ्गी हंसवाहिनी दण्डहस्ता बाला गायत्री भवति । उकारमूर्तिः श्वेताङ्गी तार्क्ष्यवाहिनी युवती चक्रहस्ता सावित्री भवति । मकारमूर्तिः कृष्णाङ्गी वृषभवाहिनी वृद्धा त्रिशूलधारिणी सरस्वती भवति । अकारादित्रयाणां सर्वकारणमेकाक्षरं परं ज्योतिः प्रणवं भवतीति ध्यायेत् । इडया बाह्याद्वायुमापूर्य षोडशमात्राभिरकारं चिन्तयन्पूरितं वायुं चतुःषष्टिमात्राभिः कुम्भयित्वोकारं ध्यायन्पूरितं पिङ्गलया द्वात्रिंशन्मात्रया मकारमूर्तिध्यानेनैवं क्रमेण पुनः पुनः कुर्यात् ॥ १७ ॥ अथासनदृढो योगी वशी मितहिताशनः सुषुम्नानाडीस्थमलशोषार्थं योगी बद्धपद्मासनो वायुं चन्द्रेणापूर्य यथाशक्ति कुम्भयित्वा सूर्येण रेचयित्वा पुनः सूर्येणापूर्य कुम्भयित्वा चन्द्रेण विरेच्य यया त्यजेत्तया संपूर्य धारयेत् । तदेते श्लोका भवन्ति—प्राणं प्रागिडया पिबेन्नियमितं भूयोऽन्यया रेचयेत्पीत्वा पिङ्गलया समीरणमथो बद्धा त्यजेद्वामया । सूर्याचन्द्रमसोरनेन विधिनाऽभ्यासं सदा तन्वतां शुद्धा नाडिगणा भवन्ति यमिनां मासत्रयादूर्ध्वतः ॥ १८ ॥ प्रातर्मध्यन्दिने

इदंभावस्तदन्यके । यस्य नो भवतः क्वापि स जीवन्मुक्त इष्यते ॥ ४५ ॥ न प्रत्यग्ब्रह्मणोर्भेदं कदापि ब्रह्मसर्गयोः । प्रज्ञया यो विजानाति स जीवन्मुक्त इष्यते ॥ ४६ ॥ साधुभिः पूज्यमानेऽस्मिन्पीड्यमानेऽपि दुर्जनैः । समभावो भवेद्यस्य स जीवन्मुक्त इष्यते ॥ ४७ ॥ विज्ञातब्रह्मतत्त्वस्य यथापूर्वं न संसृतिः । अस्ति चेन्न स विज्ञातब्रह्मभावो बहिर्मुखः ॥ ४८ ॥ सुखाद्यनुभवो यावत्तावत्प्रारब्धमिष्यते । फलोदयः क्रियापूर्वो निष्क्रियो नहि कुत्रचित् ॥ ४९ ॥ अहंब्रह्मेतिविज्ञानात् कल्पकोटिशतार्जितम् ॥ संचितं विलयं याति प्रबोधात्स्वप्नकर्मवत् ॥ ५० ॥ स्वमसङ्गमुदासीनं परिज्ञाय नभो यथा । न श्लिष्यते यतिः किंचित्कदाचिद्भाविकर्मभिः ॥ ५१ ॥ न नभो घटयोगेन सुरागन्धेन लिप्यते । तथाऽऽत्मोपाधियोगेन तद्धर्मौ नैव लिप्यते ॥ ५२ ॥ ज्ञानोदयात्पुराऽऽरब्धं कर्म ज्ञानान्न नश्यति । अदत्त्वा स्वफलं लक्ष्यमुद्दिश्योत्सृष्टबाणवत् ॥ ५३ ॥ व्याघ्रबुद्ध्या विनिर्मुक्तो बाणः पश्चात्तु गोमतौ । न तिष्ठति भिनत्त्येव लक्ष्यं वेगेन निर्भरम् ॥ ५४ ॥ अजरोऽस्म्यमरोऽस्मीति य आत्मानं प्रपद्यते । तदात्मना तिष्ठतोऽस्य कुतः प्रारब्धकल्पना ॥ ५५ ॥ प्रारब्धं सिद्ध्यति तदा यदा देहात्मना स्थितिः । देहात्मभावो नैवेष्टः प्रारब्धं त्यज्यतामतः ॥ ५६ ॥ प्रारब्धकल्पनाप्यस्य देहस्य भ्रान्तिरेव हि ॥ ५७ ॥ अध्यस्तस्य कुतस्तत्त्वमसत्यस्य कुतो जनिः । अजातस्य कुतो नाशः प्रारब्धमसतः कुतः ॥ ५८ ॥ ज्ञानेनाज्ञानकार्यस्य समूलस्य लयो यदि । तिष्ठत्ययं कथं देह इति शङ्कावतो जडान् । समाधातुं बाह्यदृष्ट्या प्रारब्धं वदति श्रुतिः ॥ ५९ ॥ न तु देहादिसत्यत्वबोधनाय विपश्चिताम् । परिपूर्णमनाद्यन्तमप्रमेयमविक्रियम् ॥ ६० ॥ सद्घनं चिद्घनं नित्यमानन्दघनमव्ययम् । प्रत्यगेकरसं पूर्णमनन्तं सर्वतोमुखम् ॥ ६१ ॥ अहेयमनुपादेयमनाधेयमनाश्रयम् । निर्गुणं निष्क्रियं सूक्ष्मं निर्विकल्पं निरञ्जनम् ॥ ६२ ॥ अनिरूप्यस्वरूपं यन्मनोवाचामगोचरम् । सत्समृद्धं स्वतःसिद्धं शुद्धं बुद्धमनीदृशम् । एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥ ६३ ॥ स्वानुभूत्या स्वयं ज्ञात्वा स्वमात्मानमखण्डितम् । ससिद्धः ससुखं तिष्ठ निर्विकल्पात्मनात्मनि ॥ ६४ ॥ क्व गतं केन वा नीतं कुत्र लीनमिदं जगत् । अधुनैव मया दृष्टं नास्ति किं महदद्भुतम् ॥ ६५ ॥ किं हेयं किमुपा-

देयं किमन्यत्किं विलक्षणम् । अखण्डानन्दपीयूषपूर्णब्रह्ममहार्णवे ॥ ६६ ॥ न किंचिदत्र पश्यामि न शृणोमि न वेद्म्यहम् । स्वात्मनैव सदानन्दरूपेणास्मि स्वलक्षणः ॥ ६७ ॥ असङ्गोऽहमनङ्गोऽहमलिङ्गोऽहमहं हरिः । प्रशान्तोऽहमनन्तोऽहं परिपूर्णश्चिरन्तनः ॥ ६८ ॥ अकर्ताऽहमभोक्ताऽहमविकारोऽहमव्ययः । शुद्धो बोधस्वरूपोऽहं केवलोऽहं सदाशिवः ॥ ६९ ॥ एतां विद्यामपान्तरतमाय ददौ । अपान्तरतमो ब्रह्मणे ददौ । ब्रह्मा घोराङ्गिरसे ददौ । घोराङ्गिरा रैक्काय ददौ । रैक्को रामाय ददौ । रामः सर्वेभ्यो भूतेभ्यो ददावित्येतन्निर्वाणानुशासनं वेदानुशासनं वेदानुशासनमित्युपनिषत् ॥ हरिः ॐ तत्सत् ॥ ७० ॥

ॐ पूर्णमद इति शान्तिः ॥

इत्यध्यात्मोपनिषत्समाप्ता ॥ ७६ ॥

---

# कुण्डिकोपनिषत् ॥ ७७ ॥

कुण्डिकोपनिषत्ख्यातपरिव्राजकसंततिः ।
यत्र विश्रान्तिमगमत्तद्रामपदमाश्रये ॥ १ ॥

ॐ आप्यायन्त्विति शान्तिः ॥

हरिः ॐ ॥ ब्रह्मचर्याश्रमे क्षीणे गुरुशुश्रूषणे रतः । वेदानधीत्यानुज्ञात उच्यते गुरुणाश्रमी ॥ १ ॥ दारमाहृत्य सदृशमग्निमाधाय शक्तितः । ब्राह्मीमिष्टिं यजेत्तासामहोरात्रेण निर्वपेत् ॥ २ ॥ संविभज्य सुतानर्थे ग्राम्यकामान्विसृज्य च । संचरन्वनमार्गेण शुचौ देशे परिभ्रमन् ॥ ३ ॥ वायुभक्षोऽम्बुभक्षो वा विहितैः कन्दमूलकैः । स्वशरीरे समाप्याथ पृथिव्यां नाश्रु पातयेत् ॥ ४ ॥ सह तेनैव पुरुषः कथं संन्यस्त उच्यते । सनामधेयो यस्मिंस्तु कथं संन्यस्त उच्यते ॥ ५ ॥ तस्मात्फलविशुद्धाङ्गी संन्यासं संहितात्मनाम् । अग्निवर्णं विनिष्क्रम्य वानप्रस्थं प्रपद्यते ॥ ६ ॥ लोकवद्भार्ययाऽऽसक्तो वनं गच्छति संयतः । संत्यक्त्वा संसृतिसुखमनुतिष्ठति किं मुधा ॥ ७ ॥ किंवा दुःखमनुस्मृत्य भोगांस्त्यजति चोच्छ्रितान् । गर्भवासभयाद्भीतः शीतोष्णाभ्यां तथैव च ॥ ८ ॥ गुह्यं प्रवेष्टुमिच्छामि परं पदमनामयमिति । संन्यस्याग्निमपुनरावर्तनं यन्मृत्युर्जाय (?) मावहमिति ! अथाध्यात्ममन्त्राञ्जपेत् । दीक्षामुपेयात्काषाय-

बासाः । कक्षोपस्थलोमानि वर्जयेत् । ऊर्ध्वबाहुर्विमुक्तमार्गो भवति । अनिकेतश्चरेद्भिक्षाशी । निदिध्यासनं दध्यात् । पवित्रं धारयेज्जन्तुसंरक्षणार्थम् । तदपि श्लोका भवन्ति । कुण्डिकां चमसं शिक्यं त्रिविष्टपमुपानहौ । शीतोपघातिनीं कन्थां कौपीनाच्छादनं तथा ॥ ९ ॥ पवित्रं स्नानशाटीं च उत्तरासङ्गमेव च । अतोऽतिरिक्तं यत्किंचित्सर्वं तद्वर्जयेद्यतिः ॥ १० ॥ नदीपुलिनशायी स्याद्देवागारेषु बाह्यतः । नात्यर्थं सुखदुःखाभ्यां शरीरमुपतापयेत् ॥ ११ ॥ स्नानं पानं तथा शौचमद्भिः पूताभिराचरेत् । स्तूयमानो न तुष्येत निन्दितो न शपेत्परान् ॥ १२ ॥ भिक्षादिवैदलं पात्रं स्नानद्रव्यमवारितम् । एवंवृत्तिमुपासीनो यतेन्द्रियो जपेत्सदा ॥ १३ ॥ विश्वाय मनुसंयोगं मनसा भावयेत्सुधीः । आकाशाद्वायुर्वायोर्ज्योतिर्ज्योतिष आपोऽद्भ्यः पृथिवी । एषां भूतानां ब्रह्म प्रपद्ये । अजरममरमक्षरमव्ययं प्रपद्ये । मय्यखण्डसुखाम्भोधौ बहुधा विश्ववीचयः । उत्पद्यन्ते विलीयन्ते मायामारुतविभ्रमात् ॥ १४ ॥ न मे देहेन संबन्धो मेघेनेव विहायसः । अतः कुतो मे तद्धर्मा जाग्रत्स्वप्नसुषुप्तिषु ॥ १५ ॥ आकाशवत्कल्पविदूरगोऽहमादित्यवद्भास्यविलक्षणोऽहम् । अहार्यवन्नित्यविनिश्चलोऽहमम्भोधिवत्पारविवर्जितोऽहम् ॥ १६ ॥ नारायणोऽहं नरकान्तकोऽहं पुरान्तकोऽहं पुरुषोऽहमीशः । अखण्डबोधोऽहमशेषसाक्षी निरीश्वरोऽहं निरहं च निर्ममः ॥ १७ ॥ तदभ्यासेन प्राणापानौ संयम्य तत्र श्लोका भवन्ति ॥ वृषणापानयोर्मध्ये पाणी आस्थाय संश्रयेत् । संदश्य शनकैर्जिह्वां यवमात्रे विनिर्गताम् ॥ १८ ॥ माषमात्रां तथा दृष्टिं श्रोत्रे स्थाप्य तथा भुवि । श्रवणे नासिके गन्धा यतः स्वं न च संश्रयेत् ॥ १९ ॥ अथ शैवपदं यत्र तद्ब्रह्म ब्रह्म तत्परम् । तदभ्यासेन लभ्येत पूर्वजन्मार्जितात्मनाम् ॥ २० ॥ संभूतैर्वायुसंश्रावैर्हृदयं तप उच्यते । ऊर्ध्वं प्रपद्यते देहाद्भित्त्वा मूर्धानमव्ययम् ॥ २१ ॥ स्वदेहस्य तु मूर्धानं ये प्राप्य परमां गतिम् । भूयस्ते न निवर्तन्ते परावरविदो जनाः ॥ २२ ॥ न साक्षिणं साक्ष्यधर्माः संस्पृशन्ति विलक्षणम् । अविकारमुदासीनं गृहधर्माः प्रदीपवत् ॥२३॥ जले वापि स्थले वापि लुठत्वेष जडात्मकः । नाहं विलिप्ये तद्धर्मैर्घटधर्मैर्नभो यथा ॥ २४ ॥ निष्क्रियोऽस्म्यविकारोऽस्मि निष्कलोऽस्मि निराकृतिः । निर्विकल्पो-

ऽस्मि नित्योऽस्मि निरालम्बोऽस्मि निर्द्वयः ॥ २५ ॥ सर्वात्मकोऽहं सर्वोऽहं सर्वातीतोऽहमद्वयः । केवलाखण्डबोधोऽहं स्वानन्दोऽहं निरन्तरः ॥ २६ ॥ स्वमेव सर्वतः पश्यन्मन्यमानः स्वमद्वयम् । स्वानन्दमनुभुञ्जानो निर्विकल्पो भवास्म्यहम् ॥ २७ ॥ गच्छंस्तिष्ठन्नुपविशञ्छयानो वाऽन्यथापि वा । यथेच्छया वसेद्विद्वानात्मारामः सदा मुनिः ॥ २८ ॥ इत्युपनिषत् ॥ हरिः ॐ तत्सत् ॥

ॐ आप्यायन्त्विति शान्तिः ॥

इति कुण्डिकोपनिषत्समाप्ता ॥ ७७ ॥

---

# सावित्र्युपनिषत् ॥ ७८ ॥

सावित्र्युपनिषद्वेद्यचित्सावित्रपदोज्ज्वलम् ।
प्रतियोगिविनिर्मुक्तं रामचन्द्रपदं भजे ॥ १ ॥

सावित्र्यात्मा पाशुपत परंब्रह्मावधूतकम् ।
त्रिपुरातपनं देवी त्रिपुरा कठभावना ॥ २ ॥

ॐ आप्यायन्त्विति शान्तिः ॥

हरिः ॐ ॥ कः सविता का सावित्री अग्निरेव सविता पृथिवी सावित्री स यत्राग्निस्तत्पृथिवी यत्र वै पृथिवी तत्राग्निस्ते द्वे योनी तदेकं मिथुनम् ॥ १ ॥ कः सविता का सावित्री वरुण एव सविताऽऽपः सावित्री स यत्र वरुणस्तदापो यत्र वा आपस्तद्वरुणस्ते द्वे योनी तदेकं मिथुनम् ॥ २ ॥ कः सविता का सावित्री वायुरेव सविताकाशः सावित्री स यत्र वायुस्तदाकाशो यत्र वा आकाशस्तद्वायुस्ते द्वे योनी तदेकं मिथुनम् ॥ ३ ॥ कः सविता का सावित्री यज्ञ एव सविता छन्दांसि सावित्री स यत्र यज्ञस्तत्र छन्दांसि यत्र वा छन्दांसि स यज्ञस्ते द्वे योनी तदेकं मिथुनम् ॥ ४ ॥ कः सविता का सावित्री स्तनयित्नुरेव सविता विद्युत्सावित्री स यत्र स्तनयित्नुस्तद्विद्युत् यत्र वा विद्युत्तत्र स्तनयित्नुस्ते द्वे योनी तदेकं मिथुनम् ॥ ५ ॥ कः सविता का सावित्री आदित्य एव सविता द्यौः सावित्री स यत्रादित्यस्तद्द्यौर्यत्र वा द्यौस्तदादित्यस्ते द्वे योनी तदेकं मिथुनम् ॥ ६ ॥ कः सविता का सावित्री चन्द्र एव सविता नक्षत्राणि सावित्री स यत्र चन्द्रस्तन्नक्षत्राणि यत्र वा नक्षत्राणि स चन्द्रमास्ते द्वे योनी तदेकं मिथुनम् ॥ ७ ॥ कः सविता का सावित्री मन एव सविता

वाक् सावित्री स यत्र मनस्तद्वाक् यत्र वा वाक् तन्मनस्ते द्वे योनी तदेकं मिथुनम् ॥ ८ ॥ कः सविता का सावित्री पुरुष एव सविता स्त्री सावित्री स यत्र पुरुषस्तत्स्त्री यत्र वा स्त्री स पुरुषस्ते द्वे योनी तदेकं मिथुनम् ॥ ९ ॥ तस्या एव प्रथमः पादो भूस्तत्सवितुर्वरेण्यमित्यग्निर्वै वरेण्यमापो वरेण्यं चन्द्रमा वरेण्यम् । तस्या एव द्वितीयः पादो भर्गमयोऽपो भुवो भर्गो देवस्य धीमहीत्यग्निर्वै भर्ग आदित्यो वै भर्गश्चन्द्रमा वै भर्गः । तस्या एष तृतीयः पादः स्वर्धियो यो नः प्रचोदयादिति । स्त्री चैव पुरुषश्च प्रजनयतो यो वा एतां सावित्रीमेवं वेद स पुनर्मृत्युं जयति बलातिबलयोर्विराट् पुरुष ऋषिः । गायत्री छन्दः । गायत्री देवता । अकारोकारमकारा बीजाद्याः । क्षुधादिनिरसने विनियोगः । क्लीमित्यादिषडङ्गन्यासः । ध्यानम् । अमृतकरतलार्द्रौ सर्वसंजीवनाढ्यावघहरणसुदक्षौ वेदसारे मयूखे । प्रणवमयविकारौ भास्कराकारदेहौ सततमनुभवेऽहं तौ बलातिबलान्तौ ॥ ॐ ह्रीं बले महादेवि ह्रीं महाबले क्लीं चतुर्विधपुरुषार्थसिद्धिप्रदे तत्सवितुर्वरदात्मिके ह्रीं वरेण्यं भर्गो देवस्य वरदात्मिके अतिबले सर्वदयामूर्ते बले सर्वक्षुद्भ्रमोपनाशिनि धीमहि धियो यो नो जाते प्रचुर्यः यो प्रचोदयादात्मिके प्रणवशिरस्कात्मिके हुं फट् स्वाहा । एवं विद्वान् कृतकृत्यो भवति सावित्र्या एव सलोकतां जयतीत्युपनिषत् ॥१॥ हरिः ॐ तत्सत् ॥

ॐ आप्यायन्त्विति शान्तिः ॥

इति सावित्र्युपनिषत्समाप्ता ॥ ७८ ॥

---

## आत्मोपनिषत् ॥ ७९ ॥

यत्र नात्मप्रपञ्चोऽयमपह्नवपदं गतः ।
प्रतियोगिविनिर्मुक्तः परमात्माऽवशिष्यते ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

हरिः ॐ ॥ अथाङ्गिरास्त्रिविधः पुरुषस्तद्यथा–बाह्यात्माऽन्तरात्मा परमात्मा चेति । त्वक्चर्ममांसरोमाङ्गुष्ठाङ्गुल्यः पृष्ठवंशनखगुल्फोदरनाभिमेढ्रकट्यूरुकपोलश्रोत्र भ्रूललाटबाहुपार्श्वशिरोधमनिकाऽक्षीणि भवन्ति जायते म्रियत इत्येष

बाह्यात्मा । अथान्तरात्मा नाम पृथिव्यापस्तेजोवायुराकाशेच्छाद्वेषसुख-दुःखकाममोहविकल्पनादिभिः स्मृतिलिङ्ग उदात्तानुदात्तह्रस्व[1]दीर्घप्लुतस्खलितगर्जितस्फुटितमुदितनृत्तगीतवादित्रप्रलयविजृम्भितादिभिः श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः पुराणन्यायमीमांसाधर्मशास्त्राणीति श्रवणघ्राणाकर्षणकर्मविशेषणं करोत्येषोऽन्तरात्मा नाम । अथ परमात्मा नाम यथाक्षर उपासनीयः । स च प्राणायामप्रत्याहारधारणाध्यानसमाधियोगानुमानाध्यात्मचिन्तकं वटकणिका वा श्यामाकतण्डुलो वा वालाग्रशतसहस्रविकल्पनाभिः स लभ्यते [2]नोपलभ्यते न जायते न म्रियते न शुष्यति न क्लिद्यते न दह्यति न कम्पते न भिद्यते न च्छिद्यते निर्गुणः साक्षीभूतः । शुद्धो निरवयवात्मा केवलः सूक्ष्मो निष्कलो निरञ्जनो निर्विकारः शब्दस्पर्शरूपरसगन्धवर्जितो निर्विकल्पो निराकाङ्क्षः सर्वव्यापी सोऽचिन्त्यो निर्वर्ण्यश्च पुनात्यशुद्धान्यपूतानि । निष्क्रियस्तस्य संसारो नास्ति । आत्मसंज्ञः शिवः शुद्ध एक एवाद्वयः सदा । ब्रह्मरूपतया ब्रह्म केवलं प्रतिभासते ॥ १ ॥ जगद्रूपतयाप्येतद्ब्रह्मैव प्रतिभासते । विद्याऽविद्यादिभेदेन भावाऽभावादिभेदतः ॥ २ ॥ गुरुशिष्यादिभेदेन ब्रह्मैव प्रतिभासते । ब्रह्मैव केवलं शुद्धं विद्यते तत्त्वदर्शने ॥ ३ ॥ न च विद्या न चाविद्या न जगच्च न चापरम् । सत्यत्वेन जगद्भानं संसारस्य प्रवर्तकम् ॥ ४ ॥ असत्यत्वेन भानं तु संसारस्य निवर्तकम् । घटोऽयमिति विज्ञातुं नियमः को न्वपेक्षते ॥ ५ ॥ विना प्रमाणसुष्ठुत्वं यस्मिन्सति पदार्थधीः । अयमात्मा नित्यसिद्धः प्रमाणे सति भासते ॥ ६ ॥ न देशं नापि कालं वा न शुद्धिं वाप्यपेक्षते । देवदत्तोऽहमित्येतद्विज्ञानं निरपेक्षकम् ॥ ७ ॥ तद्वद्ब्रह्मविदोऽप्यस्य ब्रह्माहमिति वेदनम् । भानुनेव जगत्सर्वं भास्यते यस्य तेजसा ॥ ८ ॥ अनात्मकमसत्तुच्छं किं नु तस्यावभासकम् । वेदशास्त्रपुराणानि भूतानि सकलान्यपि ॥ ९ ॥ येनार्थवन्ति तं किं नु विज्ञातारं प्रकाशयेत् । क्षुधां देहव्यथां त्यक्त्वा बालः क्रीडति वस्तुनि ॥ १० ॥ तथैव विद्वान्रमते निर्ममो निरहं सुखी । कामान्निष्कामरूपी संचरत्येकचरो मुनिः ॥ ११ ॥ स्वात्मनैव सदा तुष्टः स्वयं सर्वात्मना स्थितः । निर्धनोऽपि सदा तुष्टोऽप्यसहायो महाबलः ॥ १२ ॥ नित्यतृप्तोऽप्यभुञ्जानोऽप्यसमः समदर्शनः । कुर्वन्नपि न कुर्वाणश्चाभोक्ता फल-

भोग्यपि ॥ १३ ॥ शरीर्यप्यशरीर्येष परिच्छिन्नोऽपि सर्वगः । अशरीरं सदा सन्तमिदं ब्रह्मविदं क्वचित् ॥ १४ ॥ प्रियाप्रिये न स्पृशतस्तथैव च शुभाशुभे । तमसा ग्रस्तवद्भानादग्रस्तोऽपि रविर्जनैः ॥ १५ ॥ ग्रस्त इत्युच्यते भ्रान्त्या ह्यज्ञात्वा वस्तुलक्षणम् । तद्वद्देहादिबन्धेभ्यो विमुक्तं ब्रह्मवित्तमम् ॥ १६ ॥ पश्यन्ति देहिवन्मूढाः शरीराभासदर्शनात् । अहिनिर्ल्वयनीवायं मुक्तदेहस्तु तिष्ठति ॥ १७ ॥ इतस्ततश्चाल्यमानो यत्किंचित्प्राणवायुना । स्रोतसा नीयते दारु यथा निम्नोन्नतस्थलम् ॥ १८ ॥ दैवेन नीयते देहो तथा कालोपभुक्तिषु । लक्ष्यालक्ष्यगतिं त्यक्त्वा यस्तिष्ठेत्केवलात्मना ॥ १९ ॥ शिव एव स्वयं साक्षादयं ब्रह्मविदुत्तमः । जीवन्नेव सदा मुक्तः कृतार्थो ब्रह्मवित्तमः ॥ २० ॥ उपाधिनाशाद्ब्रह्मैव सद्ब्रह्माप्येति निर्द्वयम् । शैलूषो वेषसद्भावाभावयोश्च यथा पुमान् ॥ २१ ॥ तथैव ब्रह्मविच्छ्रेष्ठः सदा ब्रह्मैव नापरः । घटे नष्टे यथा व्योम व्योमैव भवति स्वयम् ॥ २२ ॥ तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित्स्वयम् । क्षीरं क्षीरे यथा क्षिप्तं तैलं तैले जलं जले ॥ २३ ॥ संयुक्तमेकतां याति तथाऽऽत्मन्यात्मविन्मुनिः । एवं विदेहकैवल्यं सन्मात्रत्वमखण्डितम् ॥ २४ ॥ ब्रह्मभावं प्रपद्यैष यतिर्नावर्तते पुनः । सदात्मकत्वविज्ञानदग्धाविद्यादिवर्ष्मणः ॥ २५ ॥ अमुष्य ब्रह्मभूतत्वाद्ब्रह्मणः कुत उद्भवः । मायाक्लृप्तौ बन्धमोक्षौ न स्तः स्वात्मनि वस्तुतः ॥ २६ ॥ यथा रज्जौ निष्क्रियायां सर्पाभासविनिर्गमौ । अवृतेः सदसत्त्वाभ्यां वक्तव्ये बन्धमोक्षणे ॥ २७ ॥ नावृतिर्ब्रह्मणः काचिदन्याभावादनावृतम् । अस्तीति प्रत्ययो यश्च यश्च नास्तीति वस्तुनि ॥ २८ ॥ बुद्धेरेव गुणावेतौ न तु नित्यस्य वस्तुनः । अतस्तौ मायया क्लृप्तौ बन्धमोक्षौ न चात्मनि ॥ २९ ॥ निष्कले निष्क्रिये शान्ते निरवद्ये निरञ्जने । अद्वितीये परे तत्त्वे व्योमवत्कल्पना कुतः ॥ ३० ॥ न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ३१ ॥ इत्युपनिषत् ॥ हरिः ॐ तत्सत् ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

इत्यात्मोपनिषत्समाप्ता ॥ ७९ ॥

---

# पाशुपतब्रह्मोपनिषत् ॥ ८० ॥

पाशुपतब्रह्मविद्यासंवेद्यं परमाक्षरम् ।
परमानन्दसंपूर्णं रामचन्द्रपदं भजे ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

हरिः ॐ ॥ अथ ह वै स्वयंभूर्ब्रह्मा प्रजाः सृजानीति कामकामो जायते कामेश्वरो वैश्रवणः । वैश्रवणो ब्रह्मपुत्रो वालखिल्यः स्वयंभुवं परिपृच्छति जगतां का विद्या का देवता जाग्रत्तुरीययोरस्य को देवो यानि तस्य वशानि कालाः कियत्प्रमाणाः कस्याज्ञया रविचन्द्रग्रहादयो भासन्ते कस्य महिमा गगनस्वरूप एतदहं श्रोतुमिच्छामि नान्यो जानाति त्वं ब्रूहि ब्रह्मन् । स्वयंभूरुवाच–कृत्स्नजगतां मातृका विद्या द्वित्रिवर्णसहिता द्विवर्णमाता त्रिवर्णसहिता । चतुर्मात्रात्मकोङ्कारो मम प्राणात्मिका देवता । अहमेव जगत्त्रयस्यैकः पतिः । मम वशानि सर्वाणि युगान्यपि । अहोरात्रादयो मत्संवर्धिताः कालाः । मम रूपा रवेस्तेजश्चन्द्रनक्षत्रग्रहतेजांसि च । गगनो मम त्रिशक्तिमायास्वरूपो नान्यो मदस्ति । तमोमायात्मको रुद्रः सात्त्विकमायात्मको विष्णू राजसमायात्मको ब्रह्मा । इन्द्रादयस्तामसराजसात्मिका न सात्त्विकः कोऽपि । अघोरः सर्वसाधारणस्वरूपः । समस्तयागानां रुद्रः पशुपतिः कर्ता । रुद्रो यागदेवो विष्णुरध्वर्युर्होतेन्द्रो देवता यज्ञभुग् मानसं ब्रह्म माहेश्वरं ब्रह्म मानसं हंसः सोऽहं हंस इति । तन्मययज्ञो नादानुसंधानम् । तन्मयविकारो जीवः । परमात्मस्वरूपो हंसः । अन्तर्बहिश्चरति हंसः । अन्तर्गतोऽनवकाशान्तर्गतसुपर्णस्वरूपो हंसः । षण्णवतितत्त्वतन्तुवद्व्यक्तं चित्सूत्रत्रयचिन्मयलक्षणं नवतत्त्वत्रिरावृतं ब्रह्मविष्णुमहेश्वरात्मकमग्नित्रयकलोपेतं चिद्ग्रन्थिबन्धनम् । अद्वैतग्रन्थिः यज्ञसाधारणाङ्गं बहिरन्तर्ज्वलनं यज्ञाङ्गलक्षणब्रह्मस्वरूपो हंसः । उपवीतलक्षणसूत्रब्रह्मगा यज्ञाः । ब्रह्माङ्गलक्षणयुक्तो यज्ञसूत्रम् । तद्ब्रह्मसूत्रम् । यज्ञसूत्रसंबन्धी ब्रह्मयज्ञः । तत्स्वरूपोऽङ्गानि मात्राणि । मनो यज्ञस्य हंसो यज्ञसूत्रम् । प्रणवं ब्रह्मसूत्रं ब्रह्मयज्ञमयम् । प्रणवान्तर्वर्ती हंसो ब्रह्मसूत्रम् । तदेव ब्रह्मयज्ञमयं मोक्षक्रमम् । ब्रह्मसंध्याक्रिया मनोयागः । संध्याक्रिया मनोयागस्य लक्षणम् । यज्ञसूत्रप्रणवब्रह्मयज्ञ-

क्रियायुक्तो ब्राह्मणः । ब्रह्मचर्येण चरन्ति देवाः । हंससूत्रचर्या यज्ञाः । हंसप्रणवयोरभेदः । हंसस्य प्रार्थनास्त्रिकालाः । त्रिकालास्त्रिवर्णाः । त्रेताग्न्यनुसंधानो यागः । त्रेताग्न्यात्माकृतिवर्णोङ्कारहंसानुसंधानोऽन्तर्यागः । चित्स्वरूपवत्तन्मयं तुरीयस्वरूपम् । अन्तरादित्ये ज्योतिःस्वरूपो हंसः । यज्ञाङ्गं ब्रह्मसंपत्तिः । ब्रह्मप्रवृत्तौ तत्प्रणवहंससूत्रेणैव ध्यानमाचरन्ति । प्रोवाच पुनः स्वयंभुवं प्रतिजानीते ब्रह्मपुत्रो ऋषिर्वालखिल्यः । हंससूत्राणि कतिसंख्यानि कियद्वा प्रमाणम् । हृद्यादित्यमरीचीनां पदं षण्णवतिः । चित्सूत्रघ्राणयोः स्वर्निर्गता प्रणवधारा षडङ्गुलदशाशीतिः । वामबाहुर्दक्षिणकट्योरन्तश्चरति हंसः परमात्मा ब्रह्मगुह्यप्रकारो नान्यत्र विदितः । जानन्ति तेऽमृतफलकाः । सर्वकालं [1]हंसं प्रकाशकम् । प्रणवहंसान्[2]तर्ध्यानप्रकृतिं विना न मुक्तिः । नवसूत्रान्परिचर्चितान् । तेऽपि यद्ब्रह्म चरन्ति । अन्तरादित्येन ज्ञातं मनुष्याणाम् । जगदादित्यो रोचत इति ज्ञात्वा ते मर्त्या विबुधास्तपनप्रार्थनायुक्ता आचरन्ति । वाजपेयः पशुहर्ता अध्वर्युरिन्द्रो देवता अहिंसा धर्मयागः परमहंसोऽध्वर्युः परमात्मा देवता पशुपतिर्ब्रह्मोपनिषदो ब्रह्म । स्वाध्याययुक्ता ब्राह्मणाश्चरन्ति । अश्वमेधो महायज्ञकथा । तद्राज्ञा ब्रह्मचर्यमाचरन्ति । सर्वेषां पूर्वोक्तब्रह्मयज्ञक्रमं मुक्तिक्रममिति । ब्रह्मपुत्रः प्रोवाच । उदितो हंस ऋषिः । स्वयंभूस्तिरोदधे । रुद्रो ब्रह्मोपनिषदो हंसज्योतिः पशुपतिः प्रणवस्तारकः स एवं वेद । हंसात्ममालिकावर्णब्रह्मकालप्रचोदिता । परमात्मा पुमानिति ब्रह्मसंपत्तिकारिणी ॥ १ ॥ अध्यात्मब्रह्मकल्पस्याकृतिः कीदृशी कथा । ब्रह्मज्ञानप्रभासन्ध्याकालो गच्छति धीमताम् । हंसाख्यो देवमात्माख्यमात्मतत्त्वप्रजः कथम् ॥ २ ॥ अन्तःप्रणवनादाख्यो हंसः प्रत्ययबोधकः । अन्तर्गतप्रमागूढं ज्ञाननालं विराजितम् ॥ ३ ॥ शिवशक्त्यात्मकं रूपं चिन्मयानन्दवेदितम् । नादबिन्दुकला त्रीणि नेत्रं विश्वविचेष्टितम् ॥ ४ ॥ त्रि[3]यङ्गानि शिखा त्रीणि द्वित्राणां सांख्यमाकृतिः । अन्तर्गूढप्रमा हंसः प्रमाणान्निर्गतं बहिः ॥ ५ ॥ ब्रह्मसूत्रपदं ज्ञेयं ब्राह्मं विध्युक्तलक्षणम् । हंसार्कप्रणवध्यानमित्युक्तो ज्ञानसागरे ॥ ६ ॥ एतद्विज्ञानमात्रेण ज्ञानसागरपारगः । स्वतः शिवः पशुपतिः साक्षी सर्वस्य सर्वदा ॥ ७ ॥ सर्वेषां तु मनस्तेन प्रेरितं नियमेन तु ।

विषये गच्छति प्राणश्चेष्टते वाग्वदत्यपि ॥ ८ ॥ चक्षुः पश्यति रूपाणि श्रोत्रं सर्वं शृणोत्यपि । अन्यानि खानि सर्वाणि तेनैव प्रेरितानि तु ॥ ९ ॥ स्वं स्वं विषयमुद्दिश्य प्रवर्तन्ते निरन्तरम् । प्रवर्तकत्वं चाप्यस्य मायया न स्वभावतः ॥ १० ॥ श्रोत्रमात्मनि चाध्यस्तं स्वयं पशुपतिः पुमान् । अनुप्रविश्य श्रोत्रस्य ददाति श्रोत्रतां शिवः ॥ ११ ॥ मनः स्वात्मनि चाध्यस्तं प्रविश्य परमेश्वरः । मनस्त्वं तस्य सत्त्वस्थो ददाति नियमेन तु ॥ १२ ॥ स एव विदितादन्यस्तथैवाविदितादपि । अन्येषामिन्द्रियाणां तु कल्पितानामपीश्वरः ॥१३॥ तत्तद्रूपमनु प्राप्य ददाति नियमेन तु । ततश्चक्षुश्च वाक्चैव मनश्चान्यानि खानि च ॥ १४ ॥ न गच्छन्ति स्वयंज्योतिःस्वभावे परमात्मनि । अकर्तृविषयप्रत्यक्प्रकाशं स्वात्मनैव तु ॥ १५ ॥ विना तर्कप्रमाणाभ्यां ब्रह्म यो वेद वेद सः । प्रत्यगात्मा परंज्योतिर्माया सा तु महत्तमः ॥ १६ ॥ तथा सति कथं मायासंभवः प्रत्यगात्मनि । तस्मात्तर्कप्रमाणाभ्यां स्वानुभूत्या च चिद्घने ॥ १७ ॥ स्वप्रकाशैकसंसिद्धे नास्ति माया परात्मनि । व्यवहारिकदृष्ट्येयं विद्याऽविद्या न चान्यथा ॥१८॥ तत्त्वदृष्ट्या तु नास्त्येव तत्त्वमेवास्ति केवलम् । व्यावहारिकदृष्टिस्तु प्रकाशाव्यभिचारतः ॥ १९ ॥ प्रकाश एव सततं तस्मादद्वैत एव हि । अद्वैतमिति चोक्तिश्च प्रकाशाव्यभिचारतः ॥ २० ॥ प्रकाश एव सततं तस्मान्मौनं हि युज्यते । अयमर्थो महान्यस्य स्वयमेव प्रकाशितः ॥ २१ ॥ न स जीवो न च ब्रह्म न चान्यदपि किंचन । न तस्य वर्णा विद्यन्ते नाश्रमाश्च तथैव च ॥ २२ ॥ न तस्य धर्मोऽधर्मश्च न निषेधो विधिर्न च । यदा ब्रह्मात्मकं सर्वं विभाति तत एव तु ॥ २३ ॥ तदा दुःखादिभेदोऽयमाभासोऽपि न भासते । जगज्जीवादिरूपेण पश्यन्नपि परात्मवित् ॥ २४ ॥ न तत्पश्यति चिद्रूपं ब्रह्मवस्त्वेव पश्यति । धर्मधार्मित्ववार्ता च भेदे सति हि भिद्यते ॥ २५ ॥ भेदाभेदस्तथा भेदाभेदः साक्षात्परात्मनः । नास्ति स्वात्मातिरेकेण स्वयमेवास्ति सर्वदा ॥ २६ ॥ ब्रह्मैव विद्यते साक्षाद्वस्तुतोऽवस्तुतोऽपि च । तथैव ब्रह्मविज्ज्ञानी किं गृह्णाति जहाति किम् ॥२७॥ अधिष्ठानमनौपम्यमवाङ्मनसगोचरम् । यत्तदद्रेश्यमग्राह्यमगोत्रं रूपवर्जितम् ॥२८॥ अचक्षुःश्रोत्रमत्यर्थं तदपाणिपदं तथा । नित्यं विभुं सर्वगतं सुसूक्ष्मं च तदव्ययम् ॥ २९ ॥ ब्रह्मैवेदममृतं तत्पुरस्ताद्ब्रह्मानन्दं परमं चैव पश्चात् । ब्रह्म-

नन्दं परमं दक्षिणे च ब्रह्मानन्दं परमं चोत्तरे च ॥ ३० ॥ स्वात्मन्येव स्वयं सर्वं सदा पश्यति निर्भयः । तदा मुक्तो न मुक्तश्च बद्धस्यैव विमुक्तता ॥३१॥ एवंरूपा परा विद्या सत्येन तपसापि च । ब्रह्मचर्यादिभिर्धर्मैर्लभ्या वेदान्तवर्त्मना ॥ ३२ ॥ स्वशरीरे स्वयंज्योतिःस्वरूपं पारमार्थिकम् । क्षीणदोषाः प्रपश्यन्ति नेतरे माययावृताः ॥ ३३ ॥ एवं स्वरूपविज्ञानं यस्य कस्यास्ति योगिनः । कुत्रचिद्गमनं नास्ति तस्य संपूर्णरूपिणः ॥ ३४ ॥ आकाशमेकं संपूर्णं कुत्रचिन्न हि गच्छति । तद्वद्ब्रह्मात्मविच्छ्रेष्ठः कुत्रचिन्नैव गच्छति ॥३५॥ अभक्ष्यस्य निवृत्त्या तु विशुद्धं हृदयं भवेत् । आहारशुद्धौ चित्तस्य विशुद्धिर्भवति स्वतः ॥ ३६ ॥ चित्तशुद्धौ क्रमाज्ज्ञानं त्रुट्यन्ति ग्रन्थयः स्फुटम् । अभक्ष्यं ब्रह्मविज्ञानविहीनस्यैव देहिनः ॥ ३७ ॥ न सम्यग्ज्ञानिनस्तद्वत्स्वरूपं सकलं खलु । अहमन्नं सदान्नाद इति हि ब्रह्मवेदनम् ॥ ३८ ॥ ब्रह्मविद्ग्रसति ज्ञानात्सर्वं ब्रह्मात्मनैव तु । ब्रह्मक्षत्रादिकं सर्वं यस्य स्यादोदनं सदा ॥ ३९ ॥ यस्योपसेचनं मृत्युस्तं ज्ञानी तादृशः खलु । ब्रह्मस्वरूपविज्ञानाज्जगद्भोज्यं भवेत्खलु ॥ ४० ॥ जगदात्मतया भाति यदा भोज्यं भवेत्तदा । ब्रह्मस्वात्मतया नित्यं भक्षितं सकलं तदा ॥ ४१ ॥ यदाभासेन रूपेण जगद्भोज्यं भवेत तत् । मानतः स्वात्मना भातं भक्षितं भवति ध्रुवम् ॥ ४२ ॥ स्वस्वरूपं स्वयं भुङ्क्ते नास्ति भोज्यं पृथक् स्वतः । अस्ति चेदस्तितारूपं ब्रह्मैवास्तित्वलक्षणम् ॥ ४३ ॥ अस्तितालक्षणा सत्तासत्ता ब्रह्म न चापरा । नास्ति सत्तातिरेकेण नास्ति माया च वस्तुतः ॥ ४४ ॥ योगिनामात्मनिष्ठानां माया स्वात्मनि कल्पिता । साक्षिरूपतया भाति ब्रह्मज्ञानेन बाधिता ॥ ४५ ॥ ब्रह्मविज्ञानसंपन्नः प्रतीतमखिलं जगत् । पश्यन्नपि सदा नैव पश्यति स्वात्मनः पृथक् ॥ ४६ ॥ इत्युपनिषत् ॥ हरिः ॐ तत्सत् ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

इति पाशुपतब्रह्मोपनिषत्समाप्ता ॥ ८० ॥

# परब्रह्मोपनिषत् ॥ ८१ ॥

परब्रह्मोपनिषदि वेद्याखण्डसुखाकृति ।
परिव्राजकहृद्गेयं परितत्त्वैपदं भजे ॥ १ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

हरिः ॐ ॥ अथ हैनं महाशालः शौनकोऽङ्गिरसं भगवन्तं पिप्पलादं विधिवदुपसन्नः पप्रच्छ दिव्ये ब्रह्मपुरे के संप्रतिष्ठिता भवन्ति । कथं सृज्यन्ते । नित्यात्मन एष महिमा । विभज्य एष महिमा विभुः । क एषः । तस्मै स होवाच । एतत्सत्यं यत्प्रब्रवीमि ब्रह्मविद्यां वरिष्ठां देवेभ्यः प्राणेभ्यः । परब्रह्मपुरे विरजं निष्कलं शुभमक्षरं विरजं विभाति । स नियच्छति मधुकरः श्वेव विकर्मकः । अकर्मा स्वामीव स्थितः । कर्मतरः कर्षकवत्फलमनुभवति । कर्ममर्मज्ञाता कर्म करोति । कर्ममर्म ज्ञात्वा कर्म कुर्यात् । को जालं विक्षिपेदेको नैनमपकर्षत्यपकर्षति । प्राणदेवताश्चत्वारः । ताः सर्वा नाड्यः सुषुप्तश्येनाकाशवत् । यथा श्येनः खमाश्रित्य याति स्वमालयं कुलायम् । एवं सुषुप्तं ब्रूत । अयं च परश्च स सर्वत्र हिरण्मये परे कोशे । अमृता ह्येषा नाडी त्रयं संचरति । तस्य त्रिपादं ब्रह्म । एषात्रेष्य ततोऽनुतिष्ठति । अन्यत्र ब्रूत । अयं च परं च सर्वत्र हिरण्मये परे कोशे । यथैष देवदत्तो यष्ट्या च ताड्यमानो नैवैति । एवमिष्टापूर्तकर्मा शुभाशुभैर्न लिप्यते । यथा कुमारको निष्काम आनन्दमभियाति । तथैष देवः स्वप्न आनन्दमभियाति । वेद एव परं ज्योतिः । ज्योतिषा मा ज्योतिरानन्दयत्येवमेव । तत्परं यच्चित्तं परमात्मानमानन्दयति । शुभ्रवर्णमाजायतेश्वरात् । भूयस्तेनैव मार्गेण स्वप्नस्थानं नियच्छति । जलूकाभाववद्यथाकाममाजायतेश्वरात् । तावतात्मानमानन्दयति । परसंधि यदपरसन्धीति । तत्परं नापरं त्यजति । तदैव कपालाष्टकं संधाय य एष स्तन इवावलम्बते सेन्द्रयोनिः स वेदयोनिरिति । अत्र जाग्रति शुभाशुभातिरिक्तः शुभाशुभैरपि कर्मभिर्न लिप्यते । य एष देवोऽन्यदेवास्य संप्रसादोऽन्तर्याम्यसङ्गश्चिद्रूपः पुरुषः । प्रणवहंसः परं ब्रह्म । न प्राणहंसः । प्रणवो जीवः । आद्या देवता निवेदयति । य एवं वेद तत्कथं निवेदयते ।

जीवस्य ब्रह्मत्वमापादयति । सत्त्वमथास्य पुरुषस्यान्तःशिखोपवीतत्वं ब्राह्मणस्य । मुमुक्षोरन्तःशिखोपवीतधारणम् । बहिर्लक्ष्यमाणशिखायज्ञोपवीतधारणं कर्मिणो गृहस्थस्य । अन्तरुपवीतलक्षणं तु बहिस्तन्तुवदव्यक्तमन्तस्तत्त्वमेलनम् । न सन्नासन्न सदसद्भिन्नाभिन्नं न चोभयम् । न सभागं न निर्भागं न चाप्यभयरूपकम् ॥ ब्रह्मात्मैकत्वविज्ञानं हेयं मिथ्यात्वकारणादिति । पञ्चपाद्ब्रह्मणो न किंचन । चतुष्पादन्तर्वर्तिनोऽन्तर्जीवब्रह्मणश्चत्वारि स्थानानि । नाभिहृदयकण्ठमूर्धसु जाग्रत्स्वप्नसुषुप्तितुरीयावस्थाः । आहवनीयगार्हपत्यदक्षिणसभ्याग्निषु । जागरिते ब्रह्मा स्वप्ने विष्णुः सुषुप्तौ रुद्रस्तुरीयमक्षरं चिन्मयम् । तस्माच्चतुरवस्था । चतुरङ्गुलवेष्टनमिव षण्णवतितत्त्वानि तन्तुवद्विभज्य तदाहितं त्रिगुणीकृत्य द्वात्रिंशत्तत्त्वनिष्कर्षमापाद्य ज्ञानपूतं त्रिगुणस्वरूपं त्रिमूर्तित्वं पृथग्विज्ञाय नवब्रह्माख्यनवगुणोपेतं ज्ञात्वा नवमानमितस्त्रिगुणीकृत्य सूर्येन्द्वग्निकलास्वरूपत्वेनैकीकृत्याद्यन्तरेकत्वमपि मध्ये त्रिरावृत्य ब्रह्मविष्णुमहेश्वरत्वमनुसंधायाद्यन्तमेकीकृत्य चिद्ग्रन्थावद्वैतग्रन्थिं कृत्वा नाभ्यादिब्रह्मबिलप्रमाणं पृथक् पृथक् सप्तविंशतितत्त्वसंबन्धं त्रिगुणोपेतं त्रिमूर्तिलक्षणलक्षितमप्येकत्वमापाद्य वामांसादिदक्षिणकट्यन्तं विभाव्याद्यन्तग्रहसंमेलनमेकं ज्ञात्वा मूलमेकं सत्यं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं । हंसेति वर्णद्वयेनान्तःशिखोपवीतित्वं निश्चित्य ब्राह्मणत्वं ब्रह्मध्यानार्हत्वं यतित्वमलक्षितान्तःशिखोपवीतित्वमेवं बहिर्लक्षितकर्मशिखा ज्ञानोपवीतं गृहस्थस्याभासब्राह्मणत्वस्य केशसमूहशिखाप्रत्यक्षकार्पासतन्तुकृतोपवीतत्वं चतुर्गुणीकृत्य चतुर्विंशतितत्त्वापादनतन्तुकृत्वं नवतत्त्वमेकमेव परंब्रह्म तत्प्रतिसरयोग्यत्वाद्बहुमार्गप्रवृत्तिं कल्पयन्ति । सर्वेषां ब्रह्मादीनां देवर्षीणां मनुष्याणां मूर्तिरेका । ब्रह्मैकमेव । ब्राह्मणत्वमेकमेव । वर्णाश्रमाचारविशेषाः पृथक्पृथक् शिखा वर्णाश्रमिणामेकैकैव । अपवर्गस्य यतेः शिखायज्ञोपवीतमूलं प्रणवमेकमेव वदन्ति । हंसः शिखा । प्रणव उपवीतम् । नादः संधानम् । एष धर्मो नेतरो धर्मः । तत्कथमिति । प्रणवहंसो नादस्त्रिवृत्सूत्रं स्वहृदि चैतन्ये तिष्ठति त्रिविधं ब्रह्म । तद्विद्धि प्रापञ्चिकशिखोपवीतं त्यजेत् । सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद्बुधः । यदक्षरं परंब्रह्म तत्सूत्रमिति धारयेत् ॥ १ ॥ पुनर्जन्मनिवृत्त्यर्थं मोक्षस्याहर्निशं स्मरेत् ।

सूचनात्सूत्रमित्युक्तं सूत्रं नाम परं पदम् ॥ २ ॥ तत्सूत्रं विदितं येन स मुमुक्षुः स भिक्षुकः । स वेदवित्सदाचारः स विप्रः पङ्क्तिपावनः ॥ ३ ॥ येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव । तत्सूत्रं धारयेद्योगी योगविद्ब्राह्मणो यतिः ॥ ४ ॥ बहिःसूत्रं त्यजेद्विप्रो योगविज्ञानतत्परः । ब्रह्मभावमिदं सूत्रं धारयेद्यः स मुक्तिभाक् ॥ ५ ॥ नाशुचित्वं न चोच्छिष्टं तस्य सूत्रस्य धारणात् । सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ॥ ६ ॥ ये तु सूत्रविदो लोके ते च यज्ञोपवीतिनः । ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः । ज्ञानमेव परं तेषां पवित्रं ज्ञानमीरितम् ॥ ७ ॥ अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा । स शिखीत्युच्यते विद्वान्नेतरे केशधारिणः ॥ ८ ॥ कर्मण्यधिकृता ये तु वैदिके लौकिकेऽपि वा । ब्राह्मणाभासमात्रेण जीवन्ते कुक्षिपूरकाः । व्रजन्ते निरयं ते तु पुनर्जन्मनि जन्मनि ॥ ९ ॥ वामांसदक्षकट्यन्तं ब्रह्मसूत्रं तु सव्यतः । अन्तर्बहिरिवात्यर्थं तत्त्वतन्तुसमन्वितम् ॥ १० ॥ नाभ्यादिब्रह्मरन्ध्रान्तप्रमाणं धारयेत्सुधीः । तेभिर्धार्यमिदं सूत्रं क्रियाङ्गं तन्तुनिर्मितम् ॥ ११ ॥ शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् । ब्राह्मण्यं सकलं तस्य नेतरेषां तु किंचन ॥ १२ ॥ इदं यज्ञोपवीतं तु परमं यत्परायणम् । विद्वान्यज्ञोपवीती संधारयेद्यः स मुक्तिभाक् ॥ १३ ॥ बहिरन्तश्चोपवीती विप्रः संन्यस्तुमर्हति । एकयज्ञोपवीती तु नैव संन्यस्तुमर्हति ॥ १४ ॥ तस्मात्सर्वप्रयत्नेन मोक्षापेक्षी भवेद्यतिः । बहिःसूत्रं परित्यज्य स्वान्तःसूत्रं तु धारयेत् ॥१५॥ बहिःप्रपञ्चशिखोपवीतित्वमनादृत्य प्रणवहंसशिखोपवीतित्वमवलम्ब्य मोक्षसाधनं कुर्यादित्याह भगवाञ्छौनक इत्युपनिषत् ॥ १६ ॥ हरिः ॐ तत्सत् ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

इति परब्रह्मोपनिषत्समाप्ता ॥ ८१ ॥

---

# अवधूतोपनिषत् ॥ ८२ ॥

गौणमुख्यावधूतालिहृदयाम्बुजवर्ति यत् ।
तत्रैपदं ब्रह्मतत्त्वं स्वमात्रमवशिष्यते ॥ १ ॥

ॐ स ह नाववत्विति शान्तिः ॥

हरिः ॐ ॥ अथ ह सांकृतिर्भगवन्तमवधूतं दत्तात्रेयं परिसमेत्य पप्रच्छ भगवन्कोऽवधूतस्तस्य का स्थितिः किं लक्ष्म किं संसरणमिति । तं होवाच भगवो

दत्तात्रेयः परमकारुणिकः ॥ अक्षरत्वाद्वरेण्यत्वाद्धूतसंसारबन्धनात् । तत्त्व-मस्यादिलक्ष्यत्वादवधूत इतीर्यते ॥ १ ॥ यो विलङ्घ्याश्रमान्वर्णानात्मन्येव स्थितः सदा । अतिवर्णाश्रमी योगी अवधूतः स कथ्यते ॥ २ ॥ तस्य प्रियं शिरः कृत्वा मोदो दक्षिणपक्षकः । प्रमोद उत्तरः पक्ष आनन्दो गोष्पदा-यते ॥ ३ ॥ गोपालसदृशं शीर्षं नापि मध्ये न चाप्यधः । ब्रह्म पुच्छं प्रतिष्ठेति पुच्छाकारेण कारयेत् ॥ ४ ॥ एवं चतुष्पथं कृत्वा ते यान्ति परमां गतिम् । न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ॥ ५ ॥ स्वैरं स्वैरवि-हरणं तत्संसरणम् । साम्बरा वा दिगम्बरा वा । न तेषां धर्माधर्मौ न मेध्या-मेध्यौ । सदा सांग्रहण्येष्ट्याश्वमेधमन्तर्यागं यजते । स महामखो महा-योगः । कृत्स्नमेतच्चित्रं कर्म । स्वैरं न विगायेत्तन्महाव्रतम् । न स मूढवल्लि-प्यते । यथा रविः सर्वरसान्प्रभुङ्क्ते हुताशनश्चापि हि सर्वभक्षः । तथैव योगी विषयान्भुङ्क्ते न लिप्यते पुण्यपापैश्च शुद्धः ॥ ६ ॥ आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् । तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमा-प्नोति न कामकामी ॥ ७ ॥ न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ८ ॥ ऐहिकामुष्मिकव्रातसिद्ध्यै मुक्तेश्च सिद्धये । बहुकृत्यं पुरा स्यान्मे तत्सर्वमधुना कृतम् ॥ ९ ॥ तदेव कृतकृत्यत्वं प्रतियोगिपुरःसरम् । (अनुसंदधदेवायमेवं तृप्यति नित्यशः) ॥ १० ॥ दुःखिनोऽज्ञाः संसरन्तु कामं पुत्राद्यपेक्षया । परमानन्दपूर्णोऽहं संसरामि किमिच्छया ॥ ११ ॥ अनुतिष्ठन्तु कर्माणि परलोकंयियासवः । सर्व-लोकात्मकः कस्मादनुतिष्ठामि किं कथम् ॥ १२ ॥ व्याचक्षतां ते शास्त्राणि वेदानध्यापयन्तु वा । येऽत्राधिकारिणो मे तु नाधिकारोऽक्रियत्वतः ॥ १३ ॥ निद्राभिक्षे स्नानशौचे नेच्छामि न करोमि च । द्रष्टारश्चेत्कल्पयन्तु किं मे स्यादन्यकल्पनात् ॥ १४ ॥ गुञ्जापुञ्जादि दह्येत नान्यारोपितवह्निना । नान्या-रोपितसंसारधर्मा नैवमहं भजे ॥ १५ ॥ शृण्वन्त्वज्ञाततत्त्वास्ते जानन्क-स्माच्छृणोम्यहम् । मन्यन्तां संशयापन्ना न मन्येऽहमसंशयः ॥ १६ ॥ विप-र्यस्तो निदिध्यासे किं ध्यानमविपर्यये । देहात्मत्वविपर्यासं न कदाचिद्भजा-म्यहम् ॥ १७ ॥ अहं मनुष्य इत्यादिव्यवहारो विनाप्यमुम् । विपर्यासं चिरा-

-भ्यस्तवासनातोऽवकल्पते ॥ १८ ॥ आरब्धकर्मणि क्षीणे व्यवहारो निवर्तते । कर्मक्षये त्वसौ नैव शाम्येद्ध्यानसहस्रतः ॥ १९ ॥ विरलत्वं व्यवहृतेरिष्टं चेद्ध्यानमस्तु ते । बाधिकर्मव्यवहृतिं पश्यन्ध्यायाम्यहं कुतः ॥ २० ॥ विक्षेपो नास्ति यस्मान्मे न समाधिस्ततो मम । विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः । नित्यानुभवरूपस्य को मेऽत्रानुभवः पृथक् ॥ २१ ॥ कृतं कृत्यं प्रापणीयं प्राप्तमित्येव नित्यशः । व्यवहारो लौकिको वा शास्त्रीयो वाऽन्यथापि वा । ममाकर्तुरलेपस्य यथारब्धं प्रवर्तताम् ॥ २२ ॥ अथवा कृतकृत्येऽपि लोकानुग्रहकाम्यया । शास्त्रीयेणैव मार्गेण वर्तेऽहं मम का क्षतिः ॥ २३ ॥ देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः । तारं जपतु वाक्तद्वत्पठत्वाम्नायमस्तकम् ॥ २४ ॥ विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानन्दे विलीयताम् । साक्ष्यहं किंचिदप्यत्र न कुर्वे नापि कारये ॥ २५ ॥ कृतकृत्यतया तृप्तः प्राप्तप्राप्यतया पुनः । तृप्यन्नेवं स्वमनसा मन्यतेऽसौ निरन्तरम् ॥ २६ ॥ धन्योऽहं धन्योऽहं नित्यं स्वात्मानमञ्जसा वेद्मि । धन्योऽहं धन्योऽहं ब्रह्मानन्दो विभाति मे स्पष्टम् ॥ २७ ॥ धन्योऽहं धन्योऽहं दुःखं सांसारिकं न वीक्षेऽद्य । धन्योऽहं धन्योऽहं स्वस्याज्ञानं पलायितं क्वापि ॥ २८ ॥ धन्योऽहं धन्योऽहं कर्तव्यं मे न विद्यते किंचित् । धन्योऽहं धन्योऽहं प्राप्तव्यं सर्वमत्र संपन्नम् ॥ २९ ॥ धन्योऽहं धन्योऽहं तृप्तेर्मे कोपमा भवेल्लोके । धन्योऽहं धन्योऽहं धन्यो धन्यः पुनःपुनर्धन्यः ॥ ३० ॥ अहो पुण्यमहो पुण्यं फलितं फलितं दृढम् । अस्य पुण्यस्य संपत्तेरहो वयमहो वयम् ॥ ३१ ॥ अहो ज्ञानमहो ज्ञानमहो सुखमहो सुखम् । अहो शास्त्रमहो शास्त्रमहो गुरुरहो गुरुः ॥ ३२ ॥ इति य इदमधीते सोऽपि कृतकृत्यो भवति । सुरापानात्पूतो भवति । स्वर्णस्तेयात्पूतो भवति । ब्रह्महत्यात्पूतो भवति । कृत्याकृत्यात्पूतो भवति । एवं विदित्वा स्वेच्छाचारपरो भूयादोंसत्यमित्युपनिषत् ॥ ३३ ॥ हरिः ॐ तत्सत् ॥

ॐ स ह नाववत्विति शान्तिः ॥

इत्यवधूतोपनिषत्समाप्ता ॥ ८२ ॥

---

# त्रिपुरातापिन्युपनिषत् ॥ ८३ ॥

त्रिपुरातापिनीविद्यावेद्यचिच्छक्तिविग्रहम् ।
वस्तुतश्चिन्मात्ररूपं परं तत्त्वं भजाम्यहम् ॥ १ ॥
ॐ भद्रं कर्णेभिरिति शान्तिः ॥

हरिः ॐ ॥ अथैतस्मिन्नन्तरे भगवान्प्राजापत्यं वैष्णवं विलयकारणं रूपमाश्रित्य त्रिपुराभिधा भगवतीत्येवमादिशक्त्या भूर्भुवः स्वस्त्रीणि स्वर्गभूपातालानि त्रिपुराणि हरमायात्मकेन ह्रीङ्कारेण हृल्लेखाख्या भगवती त्रिकूटावसाने निलये विलये धाम्नि महसा घोरेण प्राप्नोति । सैवेयं भगवती त्रिपुरेति व्यापठ्यते । तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् परो रजसे सावदोम् । जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः । त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माम्वृतात् । शताक्षरी परमा विद्या त्रयीमयी साष्टार्णा त्रिपुरा परमेश्वरी । आद्यानि चत्वारि पदानि परब्रह्मविकासीनि । द्वितीयानि शक्त्याख्यानि । तृतीयानि शैवानि । तत्र लोका वेदाः शास्त्राणि पुराणानि धर्माणि वै चिकित्सितानि ज्योतींषि शिवशक्तियोगादित्येवं घटना व्यापठ्यते । अथैतस्य परं गह्वरं व्याख्यास्यामो महामनुसमुद्भवं तदिति । ब्रह्म शाश्वतम् । परो भगवान्निर्लक्षणो निरञ्जनो निरुपाधिराधिरहितो देवः । उन्मीलते पश्यति विकासते चैतन्यभावं कामयत इति । स एको देवः शिवरूपी दृश्यत्वेन विकासते यतिषु यज्ञेषु योगिषु कामयते । कामं जायते । स एष निरञ्जनोऽकामत्वेनोज्जृम्भते । अकचटतपयशान्सृजते । तस्मादीश्वरः कामोऽभिधीयते । तत्परिभाषया कामः ककारं व्याप्नोति । काम एवेदं तत्तदिति ककारो गृह्यते । तस्मात्तत्पदार्थ इति य एवं वेद । सवितुर्वरेण्यमिति षूङ् प्राणिप्रसवे सविता प्राणिनः सूते प्रसूते शक्तिम् । सूते त्रिपुरा शक्तिराद्येयं त्रिपुरा परमेश्वरी महाकुण्डलिनी देवी । जातवेदसमण्डलं योऽधीते सर्वं व्याप्यते । त्रिकोणशक्तिरेकारेण महाभागेन प्रसूते । तस्मादेकार एव गृह्यते । वरेण्यं श्रेष्ठं भजनीयमक्षरं नमस्कार्यम् । तस्माद्वरेण्यमेकाराक्षरं गृह्यत इति य एवं वेद । भर्गो देवस्य धीमहीत्येवं व्याख्यास्यामः । धकारो धारणा । धियैव धार्यते भगवान्परमेश्वरः । भर्गो देवो मध्यवर्ति तुरीयमक्षरं साक्षात्तुरीयं सर्वं सर्वा-

न्तर्भूतम् । तुरीयाक्षरमीकारं पदानां मध्यवर्तीत्येवं व्याख्यातं भर्गोरूपं व्याचक्षते । तस्माद्भर्गो देवस्य धीमहीत्येवमीकाराक्षरं गृह्यते । महीत्यस्य व्याख्यानं महत्त्वं जडत्वं काठिन्यं विद्यते यस्मिन्नक्षतेरेतन्महि लकारः परं धाम । काठिन्याढ्यं ससागरं सपर्वतं ससप्तद्वीपं सकाननमुज्ज्वलद्रूपं मण्डलमेवोक्तं लकारेण । पृथ्वी देवी महीत्यनेन व्याचक्षते । धियो यो नः प्रचोदयात् । परमात्मा सदाशिव आदिभूतः परः । स्थाणुभूतेन लकारेण ज्योतिर्लिङ्गमात्मानं धियो बुद्धयः परे वस्तुनि ध्यानेच्छारहिते निर्विकल्पके प्रचोदयात्प्रेरयेदित्युच्चारणरहितं चेतसैव चिन्तयित्वा भावयेदिति । परो रजसे सावदोमिति तदवसाने परं ज्योतिरमलं हृदि दैवतं चैतन्यं चिल्लिङ्गं हृदयागारवासिनी हृल्लेखेत्यादिना स्पष्टं वाग्भवकूटं पञ्चाक्षरं पञ्चभूतजनकं पञ्चकलामयं व्यापद्यत इति । य एवं वेद । अथ तु परं कामकलासूतं कामकूटमाहुः । तत्सवितुर्वरेण्यमित्यादिद्वात्रिंशदक्षरीं पठित्वा तदिति परमात्मा सदाशिवोऽक्षरं विमलं निरुपाधितादात्म्यप्रतिपादनेन हकाराक्षरं शिवरूपं निरक्षरमक्षरं व्यालिख्यत इति । तत्परागव्यावृत्तिमादाय शक्तिं दर्शयति । तत्सवितुरिति पूर्वेणाध्वना सूर्याधश्चन्द्रिकां व्यालिख्य मूलादिब्रह्मरन्ध्रगं साक्षरमद्वितीयमाचक्षत इत्याह भगवन्तं देवं शिवशक्त्यात्मकमेवोदितम् । शिवोऽयं परमं देवं शक्तिरेषा तु जीवजा । सूर्याचन्द्रमसोर्योगाद्धंसस्तत्पदमुच्यते ॥१॥ तस्मादुज्जृम्भते कामः कामात्कामः परः शिवः । कार्णोऽयं कामदेवोऽयं वरेण्यं भर्ग उच्यते ॥ २ ॥ तत्सवितुर्वरेण्यं भर्गो देवः क्षीरं सेचनीयमक्षरं [2]सेमधुद्ममक्षरं परमात्मजीवात्मनोर्योगात्तदिति स्पष्टमक्षरं तृतीयं ह इति तदेव सदाशिव एव निष्कल्मष आद्यो देवोऽन्त्यमक्षरं व्याक्रियते । परमं पदं धीति धारणं विद्यते जडत्वधारणं महीति लकारः शिवाधस्तात्तु लकारार्थः स्पष्ट[3]मन्त्यमक्षरं परमं चैतन्यं धियो यो नः प्रचोदयात्परो रजसे सावदोमित्येवं कूटं कामकलालयं षडध्वपरिवर्तको वैष्णवं परमं धामेति भगवांश्चैतस्माच्च एवं वेद । अथैतस्मादपरं तृतीयं शक्तिकूटं प्रतिपद्यते । द्वात्रिंशदक्षर्या गायत्र्या तत्सवितुर्वरेण्यं तस्मादात्मन आकाश आकाशाद्वायुः स्फुरति तदधीनं वरेण्यं समुदीयमानं सवितुर्वा योगयो जीवात्मपरमात्मसमुद्भवस्तं प्रकाशशक्तिरूपं जीवाक्षरं स्पष्टमापद्यते । भर्गो देवस्य धीत्यनेनाधाररूप-

क्षिवास्माक्षरं गण्यते । महीत्यादिनाशेषं काम्यं रमणीयं दृश्यं शक्तिकूटं स्पष्टीकृतमिति । एवं पञ्चदशाक्षरं त्रैपुरं योऽधीते स सर्वान्कामानवाप्नोति । स सर्वान्भोगानवाप्नोति । स सर्वांल्लोकाञ्जयति । स सर्वा वाचो विजृम्भयति । स रुद्रत्वं प्राप्नोति । स वैष्णवं धाम भित्त्वा परं ब्रह्म प्राप्नोति । य एवं वेद । इत्याद्यां विद्यामभिधायैतस्याः शक्तिकूटं शक्तिशिवाद्यं लोपामुद्रेयम् । द्वितीये धामनि पूर्वेणैव मनुना बिन्दुहीना शक्तिभूतहृल्लेखा क्रोधमुनिनाऽधिष्ठिता । तृतीये धामनि पूर्वस्या एव विद्याया यद्वाग्भवकूटं तेनैव मानवीं चान्द्रीं कौबेरीं विद्यामाचक्षते । मदनाधः शिवं वाग्भवम् । तदूर्ध्वं कामकलामयम् । शक्त्यूर्ध्वं शक्तिमिति मानवी विद्या । चतुर्थे धामनि शिवशक्त्याख्यं वाग्भवम् । तदेवाधः शिवशक्त्याख्यमन्यत्तृतीयं चेयं चान्द्री विद्या । पञ्चमे धामनि ध्येयेयं चान्द्री कामाधः शिवाद्यकामा । सैव कौबेरी षष्ठे धामनि व्याचक्षत इति । य एवं वेद । हित्वेकारं तुरीयस्वरं सर्वादौ सूर्याचन्द्रमस्केन कामेश्वर्यैवागस्त्यसंज्ञा । सप्तमे धामनि तृतीयमेतस्या एव पूर्वोक्तायाः कामाद्यं द्विधाधः कं मदनकलाद्यं शक्तिबीजं वाग्भवाद्यं तयोरर्धावशिरस्कं कृत्वा नन्दिविद्येयम् । अष्टमे धामनि वाग्भवमागस्त्यं वागर्थकलामयं कामकलाभिधं सकलमायाशक्तिः प्रभाकरी विद्येयम् । नवमे धामनि पुनरागस्त्यं वाग्भवं शक्तिमन्मथशिवशक्तिमन्मथोर्वीमायाकामकलालयं चन्द्रसूर्यानङ्गधूर्जटिमहिमालयं तृतीयं षण्मुखीयं विद्या । दशमे धामनि विद्याप्रकाशितया भूय एवागस्त्यविद्यां पठित्वा भूय एवेमामन्त्यमायां परमशिवविद्येयमेकादशे धामनि भूय एवागस्त्यं पठित्वा एतस्या एव वाग्भवं यद्धनजं कामकलालयं च तत्सहजं कृत्वा लोपामुद्रायाः शक्तिकूटराजं पठित्वा वैष्णवी विद्या द्वादशे धामनि व्याचक्षत इति ॥ ३ ॥ य एवं वेद । तान्होवाच भगवान्सर्वे यूयं श्रुत्वा पूर्वां कामाख्यां तुरीयरूपां तुरीयातीतां सर्वोत्कटां सर्वमन्त्रासनगतां पीठोपपीठदेवतापरिवृतां सकलकलाव्यापिनीं देवतां सामोदां सपरागां सहृदयां सामृतां सकलां सेन्द्रियां सदोदितां परां विद्यां स्पष्टीकृत्वा हृदये निधाय विज्ञायानिलयं गमयित्वा त्रिकूटां त्रिपुरां परमां मायां श्रेष्ठां परां वैष्णवीं संनिधाय हृदयकमलकर्णिकायां परां भगवतीं लक्ष्मीं मायां सदोदितां महावश्यकरीं मदनोन्मादनकारिणीं धनुर्बाणधारिणीं वाग्विजृम्भिणीं चन्द्र-

मण्डलमध्यवर्तिनीं चन्द्रकलां सप्तदशीं महानित्योपस्थितां पाशाङ्कुशमनोज्ञ-पाणिपल्लवां समुद्यदर्कनिभां त्रिनेत्रां विचिन्त्य देवीं महालक्ष्मीं सर्वलक्ष्मीमयीं सर्वलक्षणसंपन्नां हृदये चैतन्यरूपिणीं निरञ्जनां त्रिकूटाख्यां स्मितमुखीं सुन्दरीं महामायां सर्वसुभगां महाकुण्डलिनीं त्रिपीठमध्यवर्तिनीमकथादि-श्रीपीठे परां भैरवीं चित्कलां महात्रिपुरां देवीं ध्यायेन्महाध्यानयोगेनेयमेवं वेदेति महोपनिषत् ॥ ४ ॥

इति त्रिपुरातापिन्युपनित्सु प्रथमोपनिषत् ॥ १ ॥

अथातो जातवेदसे सुनवाम सोममित्यादि पठित्वा त्रैपुरी व्यक्तिर्लक्ष्यते । जातवेदस इत्येकर्चसूक्तस्याद्यमध्यमावसानेषु तत्र स्थानेषु विलीनं बीजसागर-रूपं व्याचक्ष्वेत्यृषय ऊचुः । तान्होवाच भगवाञ्जातवेदसे सुनवाम सोमं तदन्त्यमवार्णीं विलोमेन पठित्वा प्रथमस्याद्यं तदेवं दीर्घं द्वितीयस्याद्यं सुन-वाम सोममित्यनेन कौलं वामं श्रेष्ठं सोमं महासौभाग्यमाचक्षते । स सर्व-संपत्तिभूतं प्रथमं निवृत्तिकारणं द्वितीयं स्थितिकारणं तृतीयं सर्गकारणमित्य-नेन करशुद्धिं कृत्वा त्रिपुराविद्यां स्पष्टीकृत्वा जातवेदसे सुनवाम सोममि-त्यादि पठित्वा महाविद्येश्वरीविद्यामाचक्षते त्रिपुरेश्वरीं जातवेदस इति । जाते आद्याक्षरे मातृकायाः शिरसि बैन्दवममृतरूपिणीं कुण्डलिनीं त्रिकोणरूपिणीं चेति वाक्यार्थः । एवं प्रथमस्याद्यं वाग्भवम् । द्वितीयं कामकलालयम् । जात इत्यनेन परमात्मनो जृम्भणम् । जात इत्यादिना परमात्मा शिव उच्यते । जातमात्रेण कामी कामयते काममित्यादिना पूर्णं व्याचक्षते । तदेव सुनवाम गोत्रारूढं मध्यवर्तिनाऽमृतमध्येनार्णेन मन्त्राणांन्स्पष्टीकृत्वा । गोत्रेति नामगोत्रायामित्यादिना स्पष्टं रामकलालयं शेषं वाममित्यादिना । पूर्वेणा-ध्वना विद्येयं सर्वरक्षाकरी व्याचक्षते । एवमेतेन विद्यां त्रिपुरेशीं स्पष्टीकृत्वा जातवेदस इत्यादिना जातो देव एक ईश्वरः परमो ज्योतिर्मन्त्रतो वेति तुरीयं वरं दत्वा बिन्दुपूर्णज्योतिःस्थानं कृत्वा प्रथमस्याद्यं द्वितीयं च तृतीयं च सर्वरक्षाकरीसंबन्धं कृत्वा विद्यामात्मासनरूपिणीं स्पष्टीकृत्वा जातवेदसे सुनवाम सोममित्यादि पठित्वा रक्षाकरीं विद्यां स्मृत्वाद्यन्तयोर्धाम्नोः शक्ति-शिवरूपिणीं विनियोज्य स इति शक्त्यात्मकं वर्णं सोममिति शैवात्मकं धाम जानीयात् । यो जानीते स सुभगो भवति ॥ १ ॥ एवमेतां चक्रासनगतां त्रिपुरवासिनीं विद्यां स्पष्टीकृत्वा जातवेदसे सुनवाम सोममिति पठित्वा

त्रिपुरेश्वरीविद्यां सदोदितां शिवशक्त्यात्मिकामावेदितां जातवेदाः शिव इति सेति शक्त्यात्माक्षरमिति शिवादिशक्त्यन्तरालभूतां त्रिकूटादिचारिणीं सूर्याचन्द्रमस्कां मन्त्रासनगतां त्रिपुरां महालक्ष्मीं सदोदितां स्पष्टीकृत्वा जातवेदसे सुनवाम सोममित्यादि पठित्वा पूर्वां सदात्मासनरूपां विद्यां स्मृत्वा वेद इत्यादिना विश्वाहसंततोदयबैन्दवमुपरि विन्यस्य सिद्धासनस्थां त्रिपुरां मालिनीं विद्यां स्पष्टीकृत्वा जातवेदसे सुनवाम सोममित्यादि पठित्वा त्रिपुरां सुन्दरीं श्रित्वा कले अक्षरे विचिन्त्य मूर्तिभूतां मूर्तिरूपिणीं सर्वविद्येश्वरीं त्रिपुरां विद्यां स्पष्टीकृत्वा जातवेदसे इत्यादि पठित्वा त्रिपुरां लक्ष्मीं श्रित्वाऽग्निं निदहाति सैवेयमङ्ग्यानने ज्वलतीति विचिन्त्य त्रिज्योतिषमीश्वरीं त्रिपुरामम्बां विद्यां स्पष्टीकुर्यात् । एवमेतेन स नः पर्षदति दुर्गाणि विश्वेत्यादिपरप्रकाशिनी प्रत्यग्भूता कार्या । विद्येयमाह्वानकर्मणि सर्वतो धीरेति व्याचक्षते । एवमेतद्विद्याष्टकं महामायादेव्यङ्गभूतं व्याचक्षते । देवा ह वै भगवन्तमब्रुवन्महाचक्रनायकं नो ब्रूहीति सार्वकामिकं सर्वाराध्यं सर्वरूपं विश्वतोमुखं मोक्षद्वारं यद्योगिन उपविश्य परं ब्रह्म भित्त्वा निर्वाणमुपविशन्ति ॥ २ ॥ तान्होवाच भगवाञ्श्रीचक्रं व्याख्यास्याम इति । त्रिकोणं त्र्यस्रं कृत्वा तदन्तर्मध्यवृत्तमानयष्टिरेखामाकृष्य विशालं नीत्वाग्रतो योनिं कृत्वा पूर्वयोन्यग्ररूपिणीं मानयष्टिं कृत्वा तां सर्वोर्ध्वां नीत्वा योनिं कृत्वाद्यं त्रिकोणं चक्रं भवति । द्वितीयमन्तरालं भवति । तृतीयमष्टयोन्यङ्कितं भवति । अथाष्टारचक्राद्यन्तविदिक्कोणाग्रतो रेखां नीत्वा साध्याद्याकर्षणबद्धरेखां नीत्वेत्येवमथोर्ध्वसंपुटयोन्यङ्कितं कृत्वा कक्षाभ्य ऊर्ध्वगरेखाचतुष्टयं कृत्वा यथाक्रमेण मानयष्टिद्वयेन दशयोन्यङ्कितं चक्रं भवति । अनेनैव प्रकारेण पुनर्दशारचक्रं भवति । मध्यत्रिकोणाग्रचतुष्टयाद्रेखाचराग्रकोणेषु संयोज्य तद्दशारांशतोनीतां मानयष्टिरेखां योजयित्वा चतुर्दशारं चक्रं भवति । ततोऽष्टपत्रसंवृतं चक्रं भवति । षोडशपत्रसंवृतं चक्रं चतुर्द्वारं भवति । ततः पार्थिवं चक्रं चतुर्द्वारं भवति । एवं सृष्टियोगेन चक्रं व्याख्यातम् । नवात्मकं चक्रं प्रातिलोम्येन वा वच्मि । प्रथमं चक्रं त्रैलोक्यमोहनं भवति । साणिमाद्यष्टकं भवति । समात्रष्टकं भवति । ससर्वसंक्षोभिण्यादिदशकं भवति । सप्रकटं भवति । त्रिपुरयाधिष्ठितं भवति ससर्वसंक्षोभिणीमुद्रया जुष्टं भवति । द्वितीयं सर्वाशा-

परिपूरकं चक्रं भवति सकामाद्याकर्षिणीषोडशकं भवति । सगुप्तं भवति । त्रिपुरेश्वर्याधिष्ठितं भवति । सर्वविद्राविणीमुद्रया जुष्टं भवति । तृतीयं सर्वसंक्षोभणं चक्रं भवति । सानङ्गकुसुमाद्यष्टकं भवति । सगुप्ततरं भवति । त्रिपुरसुन्दर्याऽधिष्ठितं भवति । सर्वाकर्षिणीमुद्रया जुष्टं भवति । तुरीयं सर्वसौभाग्यदायकं चक्रं भवति । ससर्वसंक्षोभिण्यादिद्विसप्तकं भवति । ससंप्रदायं भवति । त्रिपुरवासिन्याधिष्ठितं भवति । ससर्ववशंकरिणीमुद्रया जुष्टं भवति । तुरीयान्तं सर्वार्थसाधकं चक्रं भवति । ससर्वसिद्धिप्रदादिदशकं भवति । सकुलकौलं भवति । त्रिपुरामहालक्ष्म्याऽधिष्ठितं भवति । महोन्मादिनीमुद्रया जुष्टं भवति । षष्ठं सर्वरक्षाकरं चक्रं भवति । ससर्वज्ञत्वादिदशकं भवति । सनिगर्भं भवति । त्रिपुरमालिन्याऽधिष्ठितं भवति । महाङ्कुशमुद्रया जुष्टं भवति । सप्तमं सर्वरोगहरं चक्रं भवति । सर्ववशिन्याद्याष्टकं भवति । सरहस्यं भवति । त्रिपुरसिद्धयाऽधिष्ठितं भवति । सखेचरीमुद्रया जुष्टं भवति । अष्टमं सर्वसिद्धिप्रदं चक्रं भवति । सायुधचतुष्टयं भवति । सपरापररहस्यं भवति । त्रिपुराम्बयाऽधिष्ठितं भवति । बीजमुद्रयाऽधिष्ठितं भवति । नवमं चक्रनायकं सर्वानन्दमयं चक्रं भवति । सकामेश्वर्यादित्रिकं भवति । सातिरहस्यं भवति । महात्रिपुरसुन्दर्याऽधिष्ठितं भवति । योनिमुद्रया जुष्टं भवति । संक्रामन्ति वै सर्वाणि छदांसि चकाराणि । तदेव चक्रं श्रीचक्रम् । तस्य नाभ्यामग्निमण्डले सूर्याचन्द्रमसौ । तत्रोंकारपीठं पूजयित्वा तत्राक्षरं बिन्दुरूपं तदन्तर्गतव्योमरूपिणीं विद्यां परमां स्मृत्वा महात्रिपुरसुन्दरीमावाह्य । क्षीरेण स्नापिते देवि चन्दनेन विलेपिते । बिल्वपत्रार्चिते देवि दुर्गेऽहं शरणं गतः । इत्येकयर्चा प्रार्थ्य मायालक्ष्मीतन्त्रेण पूजयेदिति भगवानब्रवीत् । एतैर्मन्त्रैर्भगवतीं यजेत् । ततो देवी प्रीता भवति । स्वात्मानं दर्शयति । तस्माद्य एतैर्मन्त्रैर्यजति स ब्रह्म पश्यति । स सर्वं पश्यति । सोऽमृतत्वं च गच्छति । य एवं वेदेति महोपनिषत् ॥ ३ ॥

इति त्रिपुरातापिन्युपनिषत्सु द्वितीयोपनिषत् ॥ २ ॥

देवा ह वै मुद्राः सृजेमेति भगवन्तमब्रुवन् । तान्होवाच भगवानवनिकृतजानुमण्डलं विस्तीर्य पद्मासनं कृत्वा मुद्राः सृजतेति । स सर्वानाकर्षयति यो योनिमुद्रामधीते स सर्वं वेत्ति स सर्वफलमश्नुते स सर्वान्भञ्जयति स विद्वेषिणं स्तम्भयति । मध्यमे अनामिकोपरि विन्यस्य कनिष्ठिका-

ङ्गुष्ठतोऽधीते मुक्तयोस्तर्जन्योर्दण्डवदधस्तादेवंविधा प्रथमा संपद्यते । सैव मिलितमध्यमा द्वितीया । तृतीयाङ्कुशाकृतिरिति । प्रातिलोम्येन पाणी सङ्कर्षयित्वाङ्गुष्ठौ साग्रिमौ समाधाय तुरीया । परस्परं कनीयसेदं मध्यमाबद्धे अनामिके दण्डिन्यौ तर्जन्यावालिङ्ग्यावष्टभ्य मध्यमानखमिलिताङ्गुष्ठौ पञ्चमी । सैवाग्रेऽङ्कुशाकृतिः षष्ठी । दक्षिणशये वामबाहुं कृत्वाऽन्योन्यानामिके कनीयसीमध्यगते मध्यमे तर्जन्याक्रान्ते सरलास्वङ्गुष्ठौ खेचरी सप्तमी । सर्वोर्ध्वे सर्वसंहृति स्वमध्यमानामिकान्तरे कनीयसि पार्श्वयोस्तर्जन्यावङ्कुशाढ्ये युक्ता साङ्गुष्ठयोगतोऽन्योन्यं सममञ्जलिं कृत्वाऽष्टमी । परस्परमध्यमापृष्ठवर्तिन्यावनामिके तर्जन्याक्रान्ते समे मध्यमे आदायाङ्गुष्ठौ मध्यवर्तिनौ नवमी प्रतिपद्यत इति । सैवेयं कनीयसे समे अन्तरितेऽङ्गुष्ठौ समावन्तरितौ कृत्वा त्रिखण्डापद्यत इति । पञ्च बाणाः पञ्चाद्या मुद्राः स्पष्टाः । क्रोमङ्कुशा । हसखूफ्रें खेचरी । हस्रौं बीजाष्टमी वाग्भवाद्या नवमी दशमी च संपद्यत इति । य एवं वेद । अथातः कामकलाभूतं चक्रं व्याख्यास्यामो ह्रीं क्लीमैं ब्लूँ स्त्रौमेते पञ्च कामाः सर्वचक्रं व्यावर्तन्ते । मध्यमं कामं सर्वावसाने संपुटीकृत्य ब्लूंकारेण संपुटं व्याप्तं कृत्वा द्विरेन्दवेन मध्यवर्तिना साध्यं बद्ध्वा भूर्जपत्रे यजति । तच्चक्रं यो वेत्ति स सर्वं वेत्ति । स सकलाँल्लोकानाकर्षयति । सर्वं स्तम्भयति । नीलीयुक्तं चक्रं शत्रून्मारयति । गतिं स्तम्भयति । लाक्षायुक्तं कृत्वा सकललोकं वशीकरोति । नवलक्षजपं कृत्वा रुद्रत्वं प्राप्नोति । मातृकया वेष्टितं कृत्वा विजयी भवति । भगाङ्ककुण्डं कृत्वाग्निमाधाय पुरुषो हविषा हुत्वा योषितो वशीकरोति । वर्तुले हुत्वा श्रियमतुलां प्राप्नोति । चतुरस्रे हुत्वा वृष्टिर्भवति । त्रिकोणे हुत्वा शत्रून्मारयति । गतिं स्तम्भयति । पुष्पाणि हुत्वा विजयी भवति । महारसैर्हुत्वा परमानन्दनिर्भरो भवति । गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् । इत्येवमाद्यमक्षरं तदन्त्यबिन्दुपूर्णमित्यनेनाङ्गं स्पृशति । गं गणेशाय नम इति गणेशं नमस्कुर्वीत । ॐ नमो भगवते भस्माङ्गरागायोग्रतेजसे हन हन दह दह पच पच मथ मथ विध्वंसय विध्वंसय हलभञ्जन शूलमूले व्यञ्जनसिद्धिं कुरु कुरु समुद्रं पूर्वप्रतिष्ठितं शोषय शोषय स्तम्भय स्तम्भय परमन्त्रपरयन्त्रपरतन्त्रपरदूतपरकटकपरच्छेदनकर विदारय विदारय छिन्धि छिन्धि

ह्रीं फट् स्वाहा । अनेन क्षेत्राध्यक्षं पूजयेदिति । कुलकुमारि विद्महे मन्त्रकोटिषु धीमहि । तन्नः कौलिः प्रचोदयात् । इति । कुमार्यर्चनं कृत्वा यो वै साधकोऽभिलिखति सोऽमृतत्वं गच्छति । स यश आप्नोति । स परमायुष्यमथवा परं ब्रह्म भित्त्वा तिष्ठति । य एवं वेदेति महोपनिषत् ॥

इति त्रिपुरातापिन्युपनिषत्सु तृतीयोपनिषत् ॥ ३ ॥

देवा ह वै भगवन्तमब्रुवन्देव गायत्रं हृदयं नो व्याख्यातं त्रैपुरं सर्वोत्तमम् । जातवेदससूक्तेनाख्यातं नस्त्रैपुराष्टकम् । यदिष्ट्वा मुच्यते योगी जन्मसंसारबन्धनात् । अथ मृत्युंजयं नो ब्रूहीत्येवं ब्रुवतां सर्वेषां देवानां श्रुत्वेदं वाक्यमथातस्त्र्यम्बकेनानुष्टुभेन मृत्युंजयं दर्शयति । कस्मात्त्र्यम्बकमिति । त्रयाणां पुराणामम्बकं स्वामिनं तस्मादुच्यते त्र्यम्बकमिति । अथ कस्मादुच्यते यजामह इति । यजामहे सेवामहे वस्तु महेत्यक्षरद्वयेन कूटत्वेनाक्षरैकेण मृत्युंजयमित्युच्यते तस्मादुच्यते यजामह इति । अथ कस्मादुच्यते सुगन्धिमिति । सर्वतो यश आप्नोति । तस्मादुच्यते सुगन्धिमिति । अथ कस्मादुच्यते पुष्टिवर्धनमिति । यत्सर्वांल्लोकान्सृजति यत्सर्वांल्लोकांस्तारयति यत्सर्वांल्लोकान्व्याप्नोति तस्मादुच्यते पुष्टिवर्धनमिति । अथ कस्मादुच्यते उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयेति । संलग्नत्वादुर्वारुकमिव मृत्योः संसारबन्धनात्संलग्नत्वाद्बद्धत्वान्मोक्षीभवति मुक्तो भवति । अथ कस्मादुच्यते माऽमृतादिति अमृतत्वं प्राप्नोत्यक्षरं प्राप्नोति स्वयं रुद्रो भवति । देवा ह वै भगवन्तमूचुः सर्वं नो व्याख्यातम् । अथ कैर्मन्त्रैः स्तुता भगवती स्वात्मानं दर्शयति तान्सर्वाञ्छैवान्वैष्णवान्सौरान्गाणेशान्नो ब्रूहीति । स होवाच भगवांस्त्र्यम्बकेनानुष्टुभेन मृत्युंजयमुपासयेत् । पूर्वेणाध्वना व्याप्तमेकाक्षरमिति स्मृतम् । ॐ नमः शिवायेति याजुषमन्त्रोपासको रुद्रत्वं प्राप्नोति । कल्याणं प्राप्नोति । य एवं वेद । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । विष्णोः सर्वतोमुखस्य स्नेहो यथा पललपिण्डमोतप्रोतमनुव्याप्तं व्यतिरिक्तं व्याप्नुत इति व्याप्नुवतो विष्णोस्तत्परमं पदं परं व्योमेति परमं पदं पश्यन्ति वीक्षन्ते । सूरयो ब्रह्मादयो देवास इति सदा हृदय आदधते । तस्माद्विष्णोः स्वरूपं वसति तिष्ठति भूतेष्विति वासुदेव इति । ॐ नम इति त्रीण्यक्षराणि । भगवत इति चत्वारि । वासुदेवायेति पञ्चाक्षराणि । एतद्वै

वासुदेवस्य द्वादशार्णमभ्येति । सोपप्लवं तरति । स सर्वमायुरेति । विन्दते प्राजापत्यं रायस्पोषं गौपत्यं च तमश्नुते प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्वरूपमकार उकारो मकार इति । तानेकधा संभवति तदोमिति । हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् । हंस इत्येतन्मनोरक्षरद्वितीयेन प्रभापुञ्जेन सौरेण घृतमब्जा गोजा ऋतजा अद्रिजा ऋतं सत्या-प्रभा-पुञ्जि-न्युषा-संध्या-प्रज्ञाभिः शक्तिभिः पूर्वं सौरमधीयानः सर्वं फलमश्नुते । स व्योम्नि परमे धामनि सौरे निवसते । गणानां त्वेति त्रैष्टुभेन पूर्वेणाध्वना मनुनैकार्णेन गणाधिपमभ्यर्च्य गणेशत्वं प्राप्नोति । अथ गायत्री सावित्री सरस्वत्यजपा मातृका प्रोक्ता तया सर्वमिदं व्याप्तम् । ऐं वागीश्वरि विद्महे क्लीं कामेश्वरि धीमहि । सौस्तन्नः शक्तिः प्रचोदयादिति । गायत्री प्रातः सावित्री मध्यन्दिने सरस्वती सायमिति निरन्तरमजपा । हंस इत्येव मातृका । पञ्चाशद्वर्णविग्रहेणाकारादिक्षकारान्तेन व्याप्तानि भुवनानि शास्त्राणि छन्दांसीत्येवं भगवती सर्वं व्याप्नोतीत्येव तस्यै वै नमो नम इति । तान्भगवानब्रवीदेतैर्मन्त्रैर्नित्यं देवीं यः स्तौति स सर्वं पश्यति । सोऽमृतत्वं च गच्छति । य एवं वेदेत्युपनिषत् ॥

इति त्रिपुरातापिन्युपनिषत्सु चतुर्थोपनिषत् ॥ ४ ॥

देवा ह वै भगवन्तमब्रुवन्स्वामिन्नः कथितं स्फुटं क्रियाकाण्डं सविषयं त्रैपुरमिति । अथ परमनिर्विशेषं कथयस्वेति । तान् होवाच भगवांस्तुरीयया माययाऽन्त्यया निर्दिष्टं परमं ब्रह्मेति । परमपुरुषं चिद्रूपं परमात्मेति । श्रोता मन्ता द्रष्टाऽऽदेष्टा स्प्रष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां पुरुषाणामन्तःपुरुषः स आत्मा स विज्ञेय इति । न तत्र लोका अलोका न तत्र देवा अदेवाः पशवोऽपशवस्तापसो न तापसः पौल्कसो न पौल्कसो विप्रा न विप्राः । स इत्येकमेव परं ब्रह्म विभ्राजते निर्वाणम् । न तत्र देवा ऋषयः पितर ईशते प्रतिबुद्धः सर्वविद्येति । तत्रैते श्लोका भवन्ति—अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा । यतो निर्विषयो नाम मनसो मुक्तिरिष्यते ॥ १ ॥ मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च । अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम् ॥ २ ॥ मन एव मनुष्याणां कारणं बन्धमोक्षयोः । बन्धनं विषयासक्तं मुक्त्यै निर्विषयं मनः ॥ ३ ॥ निरस्तविषयासङ्गं संनिरुध्य मनो हृदि । यदा यात्यमनीभावस्तदा तत्परमं पदम् ॥ ४ ॥ तावदेव निरोद्धव्यं यावद्धृ-

दिगतं क्षयम् । एतज्ज्ञानं च ध्यानं च शेषोऽन्यो ग्रन्थविस्तरः ॥ ५ ॥ नैव चिन्त्यं न चाचिन्त्यं नाचिन्त्यं चिन्त्यमेव च । पक्षपातविनिर्मुक्तं ब्रह्म संपद्यते ध्रुवम् ॥ ६ ॥ स्वरेण संलयेद्योगी स्वरं संभावयेत्परम् । अस्वरेण तु भावेन न भावो भाव इष्यते ॥ ७ ॥ तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् । तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते क्रमात् ॥ ८ ॥ निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् । अप्रमेयमनाद्यन्तं यज्ज्ञात्वा मुच्यते बुधः ॥ ९ ॥ न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ १० ॥ एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु । स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते ॥ ११ ॥ एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ १२ ॥ घटसंवृतमाकाशं नीयमाने घटे यथा । घटो नीयेत नाकाशं तथा जीवो नभोपमः ॥ १३ ॥ घटवद्विविधाकारं भिद्यमानं पुनः पुनः । तद्भेदे च न जानाति स जानाति च नित्यशः ॥ १४ ॥ शब्दमायावृतो यावत्तावत्तिष्ठति पुष्कले । भिन्ने तमसि चैकत्वमेक एवानुपश्यति ॥ १५ ॥ शब्दार्णमपरं ब्रह्म तस्मिन्क्षीणे यदक्षरम् । तद्विद्वानक्षरं ध्यायेद्यदीच्छेच्छान्तिमात्मनः ॥ १६ ॥ द्वे ब्रह्मणी हि मन्तव्ये शब्दब्रह्म परं च यत् । शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ १७ ॥ ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः । पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः ॥ १८ ॥ गवामनेकवर्णानां क्षीरस्याप्येकवर्णता । क्षीरवत्पश्यति ज्ञानी लिङ्गिनस्तु गवां यथा ॥ १९ ॥ ज्ञाननेत्रं समाधाय स महत्परमं पदम् । निष्कलं निश्चलं शान्तं ब्रह्माहमिति संस्मरेत् ॥ २० ॥ इत्येकं परब्रह्मरूपं सर्वभूताधिवासं तुरीयं जानीते सोऽक्षरे परमे व्योमन्यधिवसति । य एतां विद्यां तुरीयां ब्रह्मयोनिस्वरूपां तामिहायुषे शरणमहं प्रपद्ये । आकाशाद्यनुक्रमेण सर्वेषां वा एतद्भूतानामाकाशः परायणम् । सर्वाणि ह वा इमानि भूतान्याकाशादेव जायन्ते । आकाश एव लीयन्ते । तस्मादेव जातानि जीवन्ति । तस्मादाकाशजं बीजं विन्द्यात् । तदेकाकाशपीठं स्पार्शनं पीठं तेजःपीठममृतपीठं रत्नपीठं जानीयात् । यो जानीते सोऽमृतत्वं च गच्छति । तस्मादेतां तुरीयां श्रीकामराजीयामेकादशधा भिन्नामेकाक्षरं ब्रह्मेति यो जानीते स तुरीयं पदं प्राप्नोति । य एवं वेदेति महोपनिषत् ॥ हरिः ॐ तत्सत् ॥

इति त्रिपुरातापिन्युपनिषत्सु पञ्चमोपनिषत् ॥ ५ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

इति श्रीत्रिपुरातापिन्युपनिषत्समाप्ता ॥ ८३ ॥

---

# रुद्राक्षजाबालोपनिषत् ॥ ९१ ॥

रुद्राक्षोपनिषद्वेद्यं महारुद्रतयोज्ज्वलम् ।
प्रतियोगिविनिर्मुक्तं शिवमात्रपदं भजे ॥ १ ॥

ॐ आप्यायन्त्विति शान्तिः ॥

हरिः ॐ ॥ अथ हैनं कालाग्निरुद्रं भुसुण्डः पप्रच्छ कथं रुद्राक्षोत्पत्तिः । तद्धारणात्किं फलमिति । तं होवाच भगवान्कालाग्निरुद्रः । त्रिपुरवधार्थमहं निमीलिताक्षोऽभवम् । तेभ्यो जलबिन्दवो भूमौ पतितास्ते रुद्राक्षा जाताः । सर्वानुग्रहार्थाय तेषां नामोच्चारमात्रेण दशगोप्रदानफलं दर्शनस्पर्शनाभ्यां द्विगुणं फलमत ऊर्ध्वं वक्तुं न शक्नोमि । तत्रैते श्लोका भवन्ति । कस्मिंस्थितं तु किं नाम कथं वा धार्यते नरैः । कतिभेदमुखान्यत्र कैर्मन्त्रैर्धार्यते कथम् ॥ १ ॥ दिव्यवर्षसहस्राणि चक्षुरुन्मीलितं मया । भूमावक्षिपुटाभ्यां तु पतिता जलबिन्दवः ॥ २ ॥ तत्राश्रुबिन्दवो जाता महारुद्राक्षवृक्षकाः । स्थावरत्वमनुप्राप्य भक्तानुग्रहकारणात् ॥ ३ ॥ भक्तानां धारणात्पापं दिवारात्रिकृतं हरेत् । लक्षं तु दर्शनात्पुण्यं कोटिस्तद्धारणाद्भवेत् ॥ ४ ॥ तस्य कोटिशतं पुण्यं लभते धारणान्नरः । लक्षकोटिसहस्राणि लक्षकोटिशतानि च ॥ ५ ॥ तज्जपाल्लभते पुण्यं नरो रुद्राक्षधारणात् । धात्रीफलप्रमाणं यच्छ्रेष्ठमेतदुदाहृतम् ॥ ६ ॥ बदरीफलमात्रं तु मध्यमं प्रोच्यते बुधैः । अधमं चणमात्रं स्यात्प्रक्रियैषा मयोच्यते ॥ ७ ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चेति शिवाज्ञया । वृथा जाताः पृथिव्यां तु तज्जातीयाः शुभाक्षकाः ॥ ८ ॥ श्वेतास्तु ब्राह्मणा ज्ञेयाः क्षत्रिया रक्तवर्णकाः । पीतास्तु वैश्या विज्ञेयाः कृष्णाः शूद्रा उदाहृताः ॥ ९ ॥ ब्राह्मणो बिभृयाच्छ्वेतान्रक्तान्राजा तु धारयेत् । पीतान्वैश्यस्तु बिभृयात्कृष्णाञ्छूद्रस्तु धारयेत् ॥ १० ॥ समाः स्निग्धा दृढाः स्थूलाः कण्टकैः संयुताः शुभाः । कृमिदुष्टं भिन्नभिन्नं कण्टकैर्हीनमेव च ॥ ११ ॥ व्रणयुक्तमयुक्तं च षड्रुद्राक्षा विवर्जयेत् । स्वयमेव कृतं द्वारं रुद्राक्षं स्यादिहोत्तमम् ॥ १२ ॥ यत्तु पौरुषयत्नेन कृतं तन्मध्यमं भवेत् । समान्स्निग्धान्दृढान्स्थूलान्क्षौमसूत्रेण धारयेत् ॥ १३ ॥ सर्वगात्रेण सौम्येन सामान्यानि विचक्षणः । निकषे हेमरेखाभा यस्य रेखा प्रदृश्यते ॥ १४ ॥ तदक्षमुत्तमं विद्यात्तद्धार्यं शिवपूजकैः । शिखायामेकरुद्राक्षं त्रिशतं शिरसा वहेत् ॥ १५ ॥

षट्त्रिंशतं गले दध्याद्बाहोः षोडश षोडश । मणिबन्धे द्वादशैव स्कन्धे पञ्चशतं वहेत् ॥ १६ ॥ अष्टोत्तरशतैर्मालामुपवीतं प्रकल्पयेत् । द्विसरं त्रिसरं चापि सराणां पञ्चकं तथा ॥ १७ ॥ सराणां सप्तकं वापि बिभृयात्कण्ठदेशतः । मुकुटे कुण्डले चैव कर्णिकाहारकेऽपि वा ॥ १८ ॥ केयूरकटके सूत्रं कुक्षिबन्धे विशेषतः । सुप्ते पीते सदाकालं रुद्राक्षं धारयेन्नरः ॥ १९ ॥ त्रिशतं त्वधमं पञ्चशतं मध्यमसुच्यते । सहस्रमुत्तमं प्रोक्तमेवं भेदेन धारयेत् ॥ २० ॥ शिरसीशानमंत्रेण कण्ठे तत्पुरुषेण तु । अघोरेण गले धार्यं तेनैव हृदयेऽपि च ॥ २१ ॥ अघोरबीजमन्त्रेण करयोर्धारयेत्सुधीः । पञ्चाशदक्षग्रथितान्व्योमव्याप्यपि चोदरे ॥ २२ ॥ पञ्च ब्रह्मभिरङ्गैश्च त्रिमाला पञ्च सप्त च । ग्रथित्वा मूलमन्त्रेण सर्वाण्यक्षाणि धारयेत् ॥ २३ ॥ अथ हैनं भगवन्तं कालाग्निरुद्रं भुसुण्डः पप्रच्छ रुद्राक्षाणां भेदेन यदक्षं यत्स्वरूपं यत्फलमिति । तत्स्वरूपं मुखयुक्तमरिष्टनिरसनं कामाभीष्टफलं ब्रूहीति होवाच । तत्रैते श्लोका भवन्ति—एकवक्त्रं तु रुद्राक्षं परतत्त्वस्वरूपकम् । तद्धारणात्परे तत्त्वे लीयते विजितेन्द्रियः ॥ १ ॥ द्विवक्त्रं तु मुनिश्रेष्ठ चार्धनारीश्वरात्मकम् । धारणादर्धनारीशः प्रीयते तस्य नित्यशः ॥ २ ॥ त्रिमुखं चैव रुद्राक्षमग्नित्रयस्वरूपकम् । तद्धारणाच्च हुतभुक्तस्य तुष्यति नित्यदा ॥ ३ ॥ चतुर्मुखं तु रुद्राक्षं चतुर्वक्त्रस्वरूपकम् । तद्धारणाच्चतुर्वक्त्रः प्रीयते तस्य नित्यद ॥ ४ ॥ पञ्चवक्त्रं तु रुद्राक्षं पञ्चब्रह्मस्वरूपकम् । पञ्चवक्त्रः स्वयं ब्रह्म पुंहत्यां च व्यपोहति ॥ ५ ॥ षड्वक्त्रमपि रुद्राक्षं कार्तिकेयाधिदैवतम् । तद्धारणान्महाश्रीः स्यान्महदारोग्यमुत्तमम् ॥ ६ ॥ मतिविज्ञानसंपत्तिशुद्धये धारयेत्सुधीः । विनायकाधिदैवं च प्रवदन्ति मनीषिणः ॥ ७ ॥ सप्तवक्त्रं तु रुद्राक्षं सप्तमालाधिदैवतम् । तद्धारणान्महाश्रीः स्यान्महदारोग्यमुत्तमम् ॥ ८ ॥ महती ज्ञानसंपत्तिः शुचिर्धारणतः सदा । अष्टवक्त्रं तु रुद्राक्षमष्टमात्राधिदैवतम् ॥ ९ ॥ वस्वष्टकप्रियं चैव गङ्गाप्रीतिकरं तथा । तद्धारणादिमे प्रीता भवेयुः सत्यवादिनः ॥ १० ॥ नववक्त्रं तु रुद्राक्षं नवशक्त्यधिदैवतम् । तस्य धारणमात्रेण प्रीयन्ते नव शक्तयः ॥ ११ ॥ दशवक्त्रं तु रुद्राक्षं यमदैवत्यमीरितम् । दशाप्रशान्तिजनकं धारणान्नात्र संशयः ॥ १२ ॥ एकादशमुखं त्वक्षं रुद्रैकादशदैवतम् । तदिदं दैवतं प्राहुः सदा सौभाग्यवर्धनम् ॥ १३ ॥

रुद्राक्षं द्वादशमुखं महाविष्णुस्वरूपकम् । द्वादशादित्यरूपं च बिभर्त्येव हि तत्परम् ॥ १४ ॥ त्रयोदशमुखं त्वक्षं कामदं सिद्धिदं शुभम् । तस्य धारणमात्रेण कामदेवः प्रसीदति ॥ १५ ॥ चतुर्दशमुखं चाक्षं रुद्रनेत्रसमुद्भवम् । सर्वव्याधिहरं चैव सर्वदारोग्यमाप्नुयात् ॥ १६ ॥ मद्यं मांसं च लशुनं पलाण्डुं शिग्रुमेव च । श्लेष्मातकं विड्वराहमभक्ष्यं वर्जयेन्नरः ॥ १७ ॥ ग्रहणे विषुवे चैवमयने संक्रमेऽपि च । दर्शेषु पूर्णमासे च पूर्णेषु दिवसेषु च । रुद्राक्षधारणात्सद्यः सर्वपापैः प्रमुच्यते ॥१८॥ रुद्राक्षमूलं तद्ब्रह्मा तन्नालं विष्णुरेव च । तन्मुखं रुद्र इत्याहुस्तद्बिन्दुः सर्वदेवताः ॥१९॥ इति । अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छाधीहि भगवन्रुद्राक्षधारणविधिम् । तस्मिन्समये निदाघजडभरतदत्तात्रेयकात्यायनभरद्वाजकपिलवसिष्ठपिप्पलादादयश्च कालाग्निरुद्रं परिसमेत्योचुः । अथ कालाग्निरुद्रः किमर्थं भवतामागमनमिति होवाच । रुद्राक्षधारणविधिं वै सर्वे श्रोतुमिच्छामह इति । अथ कालाग्निरुद्रः प्रोवाच । रुद्रस्य नयनादुत्पन्ना रुद्राक्षा इति लोके ख्यायन्ते । अथ सदाशिवः संहारकाले संहारं कृत्वा संहाराक्षं मुकुलीकरोति । तन्नयनाज्जाता रुद्राक्षा इति होवाच । तस्माद्रुद्राक्षत्वमिति कालाग्निरुद्रः प्रोवाच । तद्रुद्राक्षे वाग्विषये कृते दशगोप्रदानेन यत्फलमवाप्नोति तत्फलमश्नुते । स एष भस्मज्योती रुद्राक्ष इति । तद्रुद्राक्षं करेण स्पृष्ट्वा धारणमात्रेण द्विसहस्रगोप्रदानफलं भवति । तद्रुद्राक्षे कर्णयोर्धार्यमाणे एकादशसहस्रगोप्रदानफलं भवति । एकादशरुद्रत्वं च गच्छति । तद्रुद्राक्षे शिरसि धार्यमाणे कोटिगोप्रदानफलं भवति । एतेषां स्थानानां कर्णयोः फलं वक्तुं न शक्यमिति होवाच । य इमां रुद्राक्षजाबालोपनिषदं नित्यमधीते बालो वा युवा वा वेद स महान्भवति । स गुरुः सर्वेषां मन्त्राणामुपदेष्टा भवति एतैरेव होमं कुर्यात् । एतैरेवार्चनम् । तथा रक्षोघ्नं मृत्युतारकं गुरुणा लब्धं कण्ठे बाहौ शिखायां वा बध्नीत । सप्तद्वीपवती भूमिर्दक्षिणार्थं नावकल्पते । तस्माच्छ्रद्धया यां कांचिद्गां दद्यात्सा दक्षिणा भवति । य इमामुपनिषदं ब्राह्मणः सायमधीयानो दिवसकृतं पापं नाशयति । मध्याह्नेऽधीयानः षड्जन्मकृतं पापं नाशयति । सायं प्रातः प्रयुञ्जानोऽनेकजन्मकृतं पापं नाशयति । षट्सहस्रलक्षगायत्रीजपफलमवाप्नोति । ब्रह्महत्यासुरापानस्वर्णस्तेयगुरुदारगमनतत्संयोगपातकेभ्यः पूतो भवति । सर्वतीर्थफलमश्नुते । पतितसंभाषणात्पूतो

भवति । पङ्क्तिशतसहस्रपावनो भवति । शिवसायुज्यमवाप्नोति । न च पुन-
रावर्तते न च पुनरावर्तत इत्योंसत्यमित्युपनिषत् ॥ हरिः ॐ तत्सत् ॥

ॐ आप्यायन्त्विति शान्तिः ॥

इति रुद्राक्षजाबालोपनिषत्समाप्ता ॥ ९१ ॥

---

# गणपत्युपनिषत् ॥ ९२ ॥

यं नत्वा मुनयः सर्वे निर्विघ्नं यान्ति तत्पदम् ।
गणेशोपनिषद्वेद्यं तद्ब्रह्मैवास्मि सर्वगम् ॥ १ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

हरिः ॐ ॥ नमस्ते गणपतये । त्वमेव प्रत्यक्षं तत्त्वमसि । त्वमेव केवलं कर्तासि । त्वमेव केवलं धर्तासि । त्वमेव केवलं हर्तासि । त्वमेव सर्वं खल्विदं ब्रह्मासि । त्वं साक्षादात्मासि नित्यं । ऋतं वच्मि । सत्यं वच्मि । अव त्वं माम् । अव वक्तारम् । अव श्रोतारम् । अव दातारम् । अव धातारम् । अवानूचानमव शिष्यम् । अव पश्चात्तात् । अव पुरस्तात् । अव चोत्तरात्तात् । अव दक्षिणात्तात् । अव चोर्ध्वात्तात् । अवाधरात्तात् । सर्वतो मां पाहि पाहि समन्तात् । त्वं वाङ्मयस्त्वं चिन्मयः । त्वमानन्दमयस्त्वं ब्रह्ममयः । त्वं सच्चिदानन्दाद्वितीयोऽसि । त्वं प्रत्यक्षं ब्रह्मासि । त्वं ज्ञानमयो विज्ञानमयोऽसि । सर्वं जगदिदं त्वत्तो जायते । सर्वं जगदिदं त्वत्तस्तिष्ठति । सर्वं जगदिदं त्वयि लयमेष्यति । सर्वं जगदिदं त्वयि प्रत्येति । त्वं भूमिरापोऽनलोऽनिलो नभः । त्वं चत्वारि वाक्पदानि । त्वं गुणत्रयातीतः । त्वं कालत्रयातीतः । त्वं देहत्रयातीतः । त्वं मूलाधारस्थितोऽसि नित्यम् । त्वं शक्तित्रयात्मकः । त्वां योगिनो ध्यायन्ति नित्यम् । त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्म भूर्भुवःसुवरोम् । गणादिं पूर्वमुच्चार्य वर्णादिं तदनन्तरम् । अनुस्वारः परतरः । अर्धेन्दुलसितम् ॥१॥ तारेण रुद्धम् । एत-

त्तव मनुस्वरूपम् । गकारः पूर्वरूपम् । अकारो मध्यमरूपम् । अनुस्वारश्चान्त्यरूपम् । बिन्दुरुत्तररूपम् । नादः संधानम् । संहिता संधिः । सैषा गणेशविद्या । गणक ऋषिः निचृद्गायत्री छन्दः । श्रीमहागणपतिर्देवता । ॐ गम् । ( गणपतये नमः ) । एकदन्ताय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्ती प्रचोदयात् ॥ एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम् । अभयं वरदं हस्तैर्बिभ्राणं मूषकध्वजम् ॥ रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम् । रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम् ॥ भक्तानुकम्पिनं देवं जगत्कारणमच्युतम् । आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् ॥ एवं ध्यायति यो नित्यं स योगी योगिनां वरः । नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्तेऽस्तु लम्बोदरायैकदन्ताय विघ्नविनाशिने शिवसुताय श्रीवरदमूर्तये नमो नमः ॥ एतदथर्वशिरो योऽधीते स ब्रह्मभूयाय कल्पते । स सर्वविघ्नैर्न बाध्यते । स सर्वतः सुखमेधते । स पञ्च महापातकोपपातकात्प्रमुच्यते । सायमधीयानो दिवसकृतं पापं नाशयति । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायंप्रातः प्रयुंजानोऽपापो भवति । धर्मार्थकाममोक्षं च विन्दति । इदमथर्वशीर्षमशिष्याय न देयम् । यो यदि मोहाद्दास्यति स पापीयान्भवति । सहस्रावर्तनाद्यं यं काममधीते तं तमनेन साधयेत् । अनेन गणपतिमभिषिञ्चति स वाग्मी भवति । चतुर्थ्यामनश्नञ्जपति स विद्यावान्भवति । इत्यथर्वणवाक्यम् । ब्रह्माद्याचरणं विद्यात् । न बिभेति कदाचनेति । यो दूर्वाङ्कुरैर्यजति स वैश्रवणोपमो भवति । यो लाजैर्यजति स यशोवान्भवति । स मेधावान्भवति । यो मोदकसहस्रेण यजति स वाञ्छितफलमवाप्नोति । यः साज्यसमिद्भिर्यजति स सर्वं लभते स सर्वं लभते । अष्टौ ब्राह्मणान्सम्यग्ग्राहयित्वा सूर्यवर्चस्वी भवति । सूर्यग्रहे महानद्यां प्रतिमासंनिधौ वा जप्त्वा सिद्धमन्त्रो भवति । महाविघ्नात्प्रमुच्यते । महापापात्प्रमुच्यते । महादोषात्प्रमुच्यते । स सर्वविद्भवति स सर्वविद्भवति । य एवं वेदेत्युपनिषत् ॥ हरिः ॐ तत्सत् ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

इति गणपत्युपनिषत्समाप्ता ॥ ९२ ॥

---

# श्रीजाबालदर्शनोपनिषत् ॥ ९३ ॥

यमाद्यष्टाङ्गयोगेद्धं ब्रह्ममात्रप्रबोधतः ।
योगिनो यत्पदं यान्ति तत्कैवल्यपदं भजे ॥ १ ॥

ॐ आप्यायन्त्विति शान्तिः ॥

हरिः ॐ ॥ दत्तात्रेयो महायोगी भगवान्भूतभावनः । चतुर्भुजो महाविष्णुर्योगसाम्राज्यदीक्षितः ॥ १ ॥ तस्य शिष्यो मुनिकरः सांकृतिर्नाम भक्तिमान् । पप्रच्छ गुरुमेकान्ते प्राञ्जलिर्विनयान्वितः ॥ २ ॥ भगवन्ब्रूहि मे योगं साष्टाङ्गं सप्रपञ्चकम् । येन विज्ञातमात्रेण जीवन्मुक्तो भवाम्यहम् ॥ ३ ॥ सांकृते शृणु वक्ष्यामि योगं साष्टाङ्गदर्शनम् । यमश्च नियमश्चैव तथैवासनमेव च ॥ ४ ॥ प्राणायामस्तथा ब्रह्मन्प्रत्याहारस्ततः परम् । धारणा च तथा ध्यानं समाधिश्चाष्टमं मुने ॥ ५ ॥ अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् । क्षमा धृतिर्मिताहारः शौचं चैव यमा दश ॥ ६ ॥ वेदोक्तेन प्रकारेण विना सत्यं तपोधन । कायेन मनसा वाचा हिंसाऽहिंसा न चान्यथा ॥ ७ ॥ आत्मा सर्वगतोऽच्छेद्यो न ग्राह्य इति मे मतिः । सा चाहिंसा वरा प्रोक्ता मुने वेदान्तवेदिभिः ॥ ८ ॥ चक्षुरादीन्द्रियैर्दृष्टं श्रुतं घ्रातं मुनीश्वर । तस्यैवोक्तिर्भवेत्सत्यं विप्र तन्नान्यथा भवेत् ॥ ९ ॥ सर्वं सत्यं परं ब्रह्म न चान्यदिति या मतिः । तच्च सत्यं वरं प्रोक्तं वेदान्तज्ञानपारगैः ॥ १० ॥ अन्यदीये तृणे रत्ने काञ्चने मौक्तिकेऽपि च । मनसा विनिवृत्तिर्या तदस्तेयं विदुर्बुधाः ॥ ११ ॥ आत्मन्यनात्मभावेन व्यवहारविवर्जितम् । यत्तदस्तेयमित्युक्तमात्मविद्भिर्महामते ॥ १२ ॥ कायेन वाचा मनसा स्त्रीणां परिविवर्जनम् । ऋतौ भार्यां तदा स्वस्य ब्रह्मचर्यं तदुच्यते ॥ १३ ॥ ब्रह्मभावे मनश्चारं ब्रह्मचर्यं परन्तप ॥ १४ ॥ स्वात्मवत्सर्वभूतेषु कायेन मनसा गिरा । अनुज्ञा या दया सैव प्रोक्ता वेदान्तवेदिभिः ॥ १५ ॥ पुत्रे मित्रे कलत्रे च रिपौ स्वात्मनि संततम् । एकरूपं मुने यत्तदार्जवं प्रोच्यते मया ॥ १६ ॥ कायेन मनसा वाचा शत्रुभिः परिपीडिते । बुद्धिक्षोभनिवृत्तिर्या क्षमा सा मुनिपुङ्गव ॥ १७ ॥ वेदादेव विनिर्मोक्षः संसारस्य न चान्यथा । इति विज्ञाननिष्पत्तिर्धृतिः प्रोक्ता हि वैदिकैः । अहमात्मा न चान्योऽस्मीत्येवमप्रच्युता मतिः ॥ १८ ॥ अल्पमृष्टा-

शनाभ्यां च चतुर्थांशावशेषकम् । तस्माद्योगानुगुण्येन भोजनं मितभोजनम् ॥ १९ ॥ स्वदेहमलनिर्मोक्षो मृज्जलाभ्यां महामुने । यत्तच्छौचं भवेद्बाह्यं मानसं मननं विदुः । अहं शुद्ध इति ज्ञानं शौचमाहुर्मनीषिणः ॥ २० ॥ अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः । उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते ॥ २१ ॥ ज्ञानशौचं परित्यज्य बाह्ये यो रमते नरः । स मूढः काञ्चनं त्यक्त्वा लोष्टं गृह्णाति सुव्रत ॥ २२ ॥ ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः । न चास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित् ॥ २३ ॥ लोकत्रयेऽपि कर्तव्यं किंचिन्नास्त्यात्मवेदिनाम् ॥ २४ ॥ तस्मात्सर्वप्रयत्नेन मुनेऽहिंसादिसाधनैः । आत्मानमक्षरं ब्रह्म विद्धि ज्ञानात्तु वेदनात् ॥ २५ ॥

इति जाबालदर्शनोपनिषत्सु प्रथमः खण्डः ॥ १ ॥

तपः संतोषमास्तिक्यं दानमीश्वरपूजनम् । सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो व्रतम् ॥ १ ॥ एते च नियमाः प्रोक्तास्तान्वक्ष्यामि क्रमाच्छृणु ॥ २ ॥ वेदोक्तेन प्रकारेण कृच्छ्रचान्द्रायणादिभिः । शरीरशोषणं यत्तत्तप इत्युच्यते बुधैः ॥ ३ ॥ को वा मोक्षः कथं तेन संसारं प्रतिपन्नवान् । इत्यालोकनमर्थज्ञास्तपः शंसन्ति पण्डिताः ॥ ४ ॥ यदृच्छालाभतो नित्यं प्रीतिर्या जायते नृणाम् । तत्संतोषं विदुः प्राज्ञाः परिज्ञानैकतत्पराः ॥ ५ ॥ ब्रह्मादिलोकपर्यन्ताद्विरक्त्या यल्लभेत्प्रियम् । सर्वत्र विगतस्नेहः संतोषं परमं विदुः । श्रौते स्मार्ते च विश्वासो यत्तदास्तिक्यमुच्यते ॥ ६ ॥ न्यायार्जितधनं श्रान्ते श्रद्धया वैदिके जने । अन्यद्वा यत्प्रदीयन्ते तद्दानं प्रोच्यते मया ॥ ७ ॥ रागाद्यपेतं हृदयं वागदुष्टानृतादिना । हिंसादिरहितं कर्म यत्तदीश्वरपूजनम् ॥ ८ ॥ सत्यं ज्ञानमनन्तं च परानन्दं परं ध्रुवम् । प्रत्यगित्यवगन्तव्यं वेदान्तश्रवणं बुधाः ॥ ९ ॥ वेदलौकिकमार्गेषु कुत्सितं कर्म यद्भवेत् । तस्मिन्भवति या लज्जा ह्रीः सैवेति प्रकीर्तिता । वैदिकेषु च सर्वेषु श्रद्धा या सा मतिर्भवेत् ॥ १० ॥ गुरुणा चोपदिष्टोऽपि तत्र संबन्धवर्जितः । वेदोक्तेनैव मार्गेण मन्त्राभ्यासो जपः स्मृतः ॥ ११ ॥ कल्पसूत्रे तथा वेदे धर्मशास्त्रे पुराणके । इतिहासे च वृत्तिर्या स जपः प्रोच्यते मया ॥ १२ ॥ जपस्तु द्विविधः प्रोक्तो वाचिको मानसस्तथा ॥ १३ ॥ वाचिकोपांशुरुच्चैश्च द्विविधः परिकीर्तितः । मानसो

मननध्यानभेदाद्वै विध्यसाश्रितः ॥ १४ ॥ उच्चैर्जपादुपांशुश्च सहस्रगुणमुच्यते। मानसश्च तथोपांशोः सहस्रगुणमुच्यते ॥ १५ ॥ उच्चैर्जपश्च सर्वेषां यथोक्तफलदो भवेत् । नीचैः श्रोत्रेण चेन्मन्त्रः श्रुतश्चेन्निष्फलं भवेत् ॥ १६ ॥ इति ॥

इति जाबालदर्शनोपनिषत्सु द्वितीयः खण्डः ॥ २ ॥

स्वस्तिकं गोमुखं पद्मं वीरसिंहासने तथा । भद्रं मुक्तासनं चैव मयूरासनमेव च ॥ १ ॥ सुखासनसमाख्यं च नवमं मुनिपुङ्गव । जानूर्वोरन्तरे कृत्वा सम्यक् पादतले उभे ॥ २ ॥ समग्रीवशिरःकायः स्वस्तिकं नित्यमभ्यसेत् । सव्ये दक्षिणगुल्फं तु पृष्ठपार्श्वे नियोजयेत् ॥ ३ ॥ दक्षिणेऽपि तथा सव्यं गोमुखं तत्प्रचक्षते । अङ्गुष्ठावधि गृह्णीयाद्धस्ताभ्यां व्युत्क्रमेण तु ॥ ४ ॥ ऊर्वोरुपरि विप्रेन्द्र कृत्वा पादतलद्वयम् । पद्मासनं भवेत्प्राज्ञ सर्वरोगभयापहम् ॥ ५ ॥ दक्षिणेतरपादं तु दक्षिणोरुणि विन्यसेत् । ऋजुकायः समासीनो वीरासनमुदाहृतम् ॥ ६ ॥ गुल्फौ तु वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् । पार्श्वपादौ च पाणिभ्यां दृढं बद्ध्वा सुनिश्चलम् । भद्रासनं भवेदेतद्विषरोगविनाशनम् ॥ ७ ॥ निपीड्य सीवनीं सूक्ष्मं दक्षिणेतरगुल्फतः । वामं याम्येन गुल्फेन मुक्तासनमिदं भवेत् ॥ ८ ॥ मेढ्रादुपरि निक्षिप्य सव्यं गुल्फं तथोपरि । गुल्फान्तरं च संक्षिप्य मुक्तासनमिदं मुने ॥ ९ ॥ कूर्पराग्रे मुनिश्रेष्ठ निक्षिपेन्नाभिपार्श्वयोः । भूम्यां पाणितलद्वन्द्वं निक्षिप्यैकाग्रमानसः ॥ १० ॥ समुन्नतशिरःपादो दण्डवद्व्योम्नि संस्थितः । मयूरासनमेतत्स्यात्सर्वपापप्रणाशनम् ॥ ११ ॥ येन केन प्रकारेण सुखं धैर्यं च जायते । तत्सुखासनमित्युक्तमशक्तस्तत्समाश्रयेत् ॥ १२ ॥ आसनं विजितं येन जितं तेन जगत्त्रयम् । अनेन विधिना युक्तः प्राणायामं सदा कुरु ॥ १३ ॥ इति ॥

इति जाबालदर्शनोपनिषत्सु तृतीयः खण्डः ॥ ३ ॥

शरीरं तावदेव स्यात्षण्णवत्यङ्गुलात्मकम् । देहमध्ये शिखिस्थानं तप्तजाम्बूनदप्रभम् ॥ १ ॥ त्रिकोणं मनुजानां तु सत्यमुक्तं हि सांकृते । गुदात्तु द्व्यङ्गुलादूर्ध्वं मेढ्रात्तु द्व्यङ्गुलादधः ॥ २ ॥ देहमध्यं मुनिप्रोक्तमनुजानीहि सांकृते । कन्दस्थानं मुनिश्रेष्ठ मूलाधारान्नवाङ्गुलम् ॥ ३ ॥ चतुरङ्गुलमायाममविस्तारं मुनिपुङ्गव । कुक्कुटाण्डसमाकारं भूषितं तु त्वगादिभिः ॥ ४ ॥ तन्मध्ये नाभिरित्युक्तं योगज्ञैर्मुनिपुङ्गव । कन्दमध्यस्थिता नाडी सुषुम्नेति प्रकीर्तिता ॥ ५ ॥ तिष्ठन्ति परितस्तस्या नाड्यो हि मुनिपुङ्गव । द्विसप्ततिस-

ह्स्राणि तासां मुख्याश्चतुर्दश ॥ ६ ॥ सुषुम्ना पिङ्गला तद्वदिडा चैव सरस्वती । पूषा च वरुणा चैव हस्तिजिह्वा यशस्विनी ॥ ७ ॥ अलम्बुसा कुहूश्चैव विश्वोदरी तपस्विनी । शङ्खिनी चैव गान्धारा इति मुख्याश्चतुर्दश ॥८॥ आसां मुख्यतमास्तिस्रस्तिस्ष्वेकोत्तमोत्तमा । ब्रह्मनाडीति सा प्रोक्ता मुने वेदान्तवेदिभिः ॥ ९ ॥ पृष्ठमध्यस्थितेनास्थ्ना वीणादण्डेन सुव्रत । सह मस्तकपर्यन्तं सुषुम्ना सुप्रतिष्ठिता ॥ १० ॥ नाभिकन्दादधः स्थानं कुण्डल्या द्व्यङ्गुलं मुने । अष्टप्रकृतिरूपा सा कुण्डली मुनिसत्तम ॥ ११ ॥ यथावद्वायुचेष्टां च जलान्नादीनि नित्यशः । परितः कन्दपार्श्वेषु निरुध्यैव सदा स्थिता ॥ १२ ॥ स्वमुखेन समावेष्ट्य ब्रह्मरन्ध्रमुखं मुने । सुषुम्नाया इडा सव्ये दक्षिणे पिङ्गला स्थिता ॥ १३ ॥ सरस्वती कुहूश्चैव सुषुम्नापार्श्वयोः स्थिते । गान्धारा हस्तिजिह्वा च इडायाः पृष्ठपार्श्वयोः ॥ १४ ॥ पूषा यशस्विनी चैव पिङ्गला पृष्ठपूर्वयोः । कुहोश्च हस्तिजिह्वाया मध्ये विश्वोदरी स्थिता ॥ १५ ॥ यशस्विन्याः कुहोर्मध्ये वरुणा सुप्रतिष्ठिता । पूषायाश्च सरस्वत्या मध्ये प्रोक्ता यशस्विनी ॥ १६ ॥ गान्धारायाः सरस्वत्या मध्ये प्रोक्ता च शङ्खिनी । अलम्बुसा स्थिता पायुपर्यन्तं कन्दमध्यगा ॥ १७ ॥ पूर्वभागे सुषुम्नाया राकायाः संस्थिता कुहूः । अधश्चोर्ध्वं स्थिता नाडी याम्यनासान्तमिष्यते ॥ १८ ॥ इडा तु सव्यनासान्तं संस्थिता मुनिपुङ्गव । यशस्विनी च वामस्य पादाङ्गुष्ठान्तमिष्यते ॥ १९ ॥ पूषा वामाक्षिपर्यन्ता पिङ्गलायास्तु पृष्ठतः । पयस्विनी च याम्यस्य कर्णान्तं प्रोच्यते बुधैः ॥ २० ॥ सरस्वती तथा चोर्ध्वंगता जिह्वा तथा मुने । हस्तिजिह्वा तथा सव्यपादाङ्गुष्ठान्तमिष्यते ॥ २१ ॥ शङ्खिनी नाम या नाडी सव्यकर्णान्तमिष्यते । गान्धारा सव्यनेत्रान्ता प्रोक्ता वेदान्तवेदिभिः ॥ २२ ॥ विश्वोदराभिधा नाडी कन्दमध्ये व्यवस्थिता । प्राणोऽपानस्तथा व्यानः समानोदान एव च ॥ २३ ॥ नागः कूर्मश्च कृकरो देवदत्तो धनंजयः । एते नाडीषु सर्वासु चरन्ति दश वायवः ॥ २४ ॥ तेषु प्राणादयः पञ्च मुख्याः पञ्चसु सुव्रत । प्राणसंज्ञस्तथापानः पूज्यः प्राणस्तयोर्मुने ॥ २५ ॥ आस्यनासिकयोर्मध्ये नाभिमध्ये तथा हृदि । प्राणसंज्ञोऽनिलो नित्यं वर्तते मुनिसत्तम ॥ २६ ॥ अपानो वर्तते नित्यं गुदमध्योरुजानुषु । उदरे सकले कट्यां नाभौ जङ्घे च सुव्रत ॥ २७ ॥ व्यानः श्रोत्रा-

क्षिमध्ये च ककुद्यां गुल्फयोरपि । प्राणस्थाने गले चैव वर्तते मुनिपुङ्गव ॥ २८ ॥ उदानसंज्ञो विज्ञेयः पादयोर्हस्तयोरपि । समानः सर्वदेहेषु व्याप्य तिष्ठत्यसंशयः ॥ २९ ॥ नागादिवायवः पञ्च त्वगस्थ्यादिषु संस्थिताः । निःश्वासोच्छ्वासकासाश्च प्राणकर्म हि सांकृते ॥ ३० ॥ अपानाख्यस्य वायोस्तु विण्मूत्रादिविसर्जनम् । समानः सर्वसामीप्यं करोति मुनिपुङ्गव ॥ ३१ ॥ उदान ऊर्ध्वगमनं करोत्येव न संशयः । व्यानो विवादकृत्प्रोक्तो मुने वेदान्तवेदिभिः ॥ ३२ ॥ उद्गारादिगुणः प्रोक्तो व्यानाख्यस्य महामुने । धनंजयस्य शोभादि कर्म प्रोक्तं हि सांकृते ॥ ३३ ॥ निमीलनादि कूर्मस्य क्षुधा तु कृकरस्य च । देवदत्तस्य विप्रेन्द्र तन्द्रीकर्म प्रकीर्तितम् ॥ ३४ ॥ सुषुम्नायाः शिवो देव इडाया देवता हरिः । पिङ्गलाया विरञ्चिः स्यात्सरस्वत्या विराण्मुने ॥ ३५ ॥ पूंषाधिदेवता प्रोक्ता वरुणा वायुदेवता । हस्तिजिह्वाभिधायास्तु वरुणो देवता भवेत् ॥ ३६ ॥ यशस्विन्या मुनिश्रेष्ठ भगवान्भास्करस्तथा । अलम्बुसाया अम्ब्वात्मा वरुणः परिकीर्तितः ॥ ३७ ॥ कुहोः क्षुद्देवता प्रोक्ता गान्धारी चन्द्रदेवता । शङ्खिन्याश्चन्द्रमास्तद्वत्पयस्विन्याः प्रजापतिः ॥ ३८ ॥ विश्वोदराभिधायास्तु भगवान्पावकः पतिः । इडायां चन्द्रमा नित्यं चरत्येव महामुने ॥ ३९ ॥ पिङ्गलायां रविस्तद्वन्मुने वेदविदां वर । पिङ्गलायामिडायां तु वायोः संक्रमणं तु यत् ॥ ४० ॥ तदुत्तरायणं प्रोक्तं मुने वेदान्तवेदिभिः । इडायां पिङ्गलायां तु प्राणसंक्रमणं मुने ॥ ४१ ॥ दक्षिणायनमित्युक्तं पिङ्गलायामिति श्रुतिः । इडापिङ्गलयोः संधिं यदा प्राणः समागतः ॥ ४२ ॥ अमावास्या तदा प्रोक्ता देहे देहभृतां वर । मूलाधारं यदा प्राणः प्रविष्टः पण्डितोत्तम ॥ ४३ ॥ तदाद्यं विषुवं प्रोक्तं तापसैस्तापसोत्तम । प्राणसंज्ञो मुनिश्रेष्ठ मूर्धानं प्राविशद्यदा ॥ ४४ ॥ तदन्त्यं विषुवं प्रोक्तं तापसैस्तत्त्वचिन्तकैः । निःश्वासोच्छ्वासनं सर्वं मासानां संक्रमो भवेत् ॥ ४५ ॥ इडायाः कुण्डलीस्थानं यदा प्राणः समागतः । सोमग्रहणमित्युक्तं तदा तत्त्वविदां वर ॥ ४६ ॥ यदा पिङ्गलया प्राणः कुण्डलीस्थानमागतः । तदा तदा भवेत्सूर्यग्रहणं मुनिपुङ्गव ॥ ४७ ॥ श्रीपर्वतं शिरःस्थाने केदारं तु ललाटके । वाराणसी महाप्राज्ञ भ्रुवोर्घ्राणस्य मध्यमे ॥ ४८ ॥ कुरुक्षेत्रं कुचस्थाने प्रयागं हृत्सरोरुहे । चिदम्बरं तु हृन्मध्ये आधारे कमलालयम्

॥ ४९ ॥ आत्मतीर्थं समुत्सृज्य बहिस्तीर्थानि यो व्रजेत् । करस्थं स महारत्नं त्यक्त्वा काचं विमार्गते ॥ ५० ॥ भावतीर्थं परं तीर्थं प्रमाणं सर्वकर्मसु । अन्यथालिङ्ग्यते कान्ता अन्यथालिङ्ग्यते सुता ॥ ५१ ॥ तीर्थानि तोयपूर्णानि देवान्काष्ठादिनिर्मितान् । योगिनो न प्रपूज्यन्ते स्वात्मप्रत्ययकारणात् ॥ ५२ ॥ बहिस्तीर्थात्परं तीर्थमन्तस्तीर्थं महामुने । आत्मतीर्थं महातीर्थमन्यत्तीर्थं निरर्थकम् ॥ ५३ ॥ चित्तमन्तर्गतं दुष्टं तीर्थस्नानैर्न शुध्यति । शतशोऽपि जलैर्धौतं सुराभाण्डमिवाशुचि ॥ ५४ ॥ विषुवायनकालेषु ग्रहणे चान्तरे सदा । वाराणस्यादिके स्थाने स्नात्वा शुद्धो भवेन्नरः ॥ ५५ ॥ ज्ञानयोगपराणां तु पादप्रक्षालितं जलम् । भावशुद्ध्यर्थमज्ञानां तत्तीर्थं मुनिपुङ्गव ॥ ५६ ॥ तीर्थे दाने जपे यज्ञे काष्ठे पाषाणके सदा । शिवं पश्यति मूढात्मा शिवे देहे प्रतिष्ठिते ॥ ५७ ॥ अन्तःस्थं मां परित्यज्य बहिष्ठं यस्तु सेवते । हस्तस्थं पिण्डमुत्सृज्य लिहेत्कूर्परमात्मनः ॥ ५८ ॥ शिवमात्मनि पश्यन्ति प्रतिमासु न योगिनः । अज्ञानां भावनार्थाय प्रतिमाः परिकल्पिताः ॥ ५९ ॥ अपूर्वमपरं ब्रह्म स्वात्मानं सत्यमद्वयम् । प्रज्ञानघनमानन्दं यः पश्यति स पश्यति ॥ ६० ॥ नाडीपुञ्जं सदा सारं नरभावं महामुने । समुत्सृज्यात्मनाऽऽत्मानमहमित्येव धारय ॥ ६१ ॥ अशरीरं शरीरेषु महान्तं विभुमीश्वरम् । आनन्दमक्षरं साक्षान्मत्वा धीरो न शोचति ॥ ६२ ॥ विभेदजनके ज्ञाने नष्टे ज्ञानबलान्मुने । आत्मनो ब्रह्मणो भेदमसन्तं किं[1] करिष्यति ॥ ६३ ॥ इति ॥

इति जाबालदर्शनोपनिषत्सु चतुर्थः खण्डः ॥ ४ ॥

सम्यक्कथय मे ब्रह्मन्नाडीशुद्धिं समासतः । यथा शुद्ध्या सदा ध्यायञ्जीवन्मुक्तो भवाम्यहम् ॥ १ ॥ सांकृते शृणु वक्ष्यामि नाडीशुद्धिं समासतः । विध्युक्तकर्मसंयुक्तः कामसंकल्पवर्जितः ॥ २ ॥ यमाद्यष्टाङ्गसंयुक्तः शान्तः सत्यपरायणः । स्वात्मन्यवस्थितः सम्यग्ज्ञानिभिश्च सुशिक्षितः ॥ ३ ॥ पर्वताग्रे नदीतीरे बिल्वमूले वनेऽथवा । मनोरमे शुचौ देशे मठं कृत्वा समाहितः ॥ ४ ॥ आरभ्य चासनं पश्चात्प्राङ्मुखोदङ्मुखोऽपि वा । समग्रीवशिरःकायः संवृतास्यः सुनिश्चलः ॥ ५ ॥ नासाग्रे शशभृद्बिम्बे बिन्दुमध्ये तुरीयकम् । स्रवन्तममृतं पश्येन्नेत्राभ्यां सुसमाहितः ॥ ६ ॥ इडया प्राणमाकृष्य पूरयित्वोदरे स्थितम् । ततोऽग्निं देहमध्यस्थं ध्यायञ्ज्वालावलीयुतम् ॥ ७ ॥

बिन्दुनादसमायुक्तमग्निबीजं विचिन्तयेत् । पश्चाद्विरेचयेत्सम्यक्प्राणं पिङ्गलया बुधः ॥ ८ ॥ पुनः पिङ्गलयापूर्य वह्निबीजमनुस्मरेत् । पुनर्विरेचयेद्धीमानिडयैव शनैः शनैः ॥ ९ ॥ त्रिचतुर्वासरं वाथ त्रिचतुर्वारमेव च । षट्कृत्वा विचरेन्नित्यं रहस्येवं त्रिसंधिषु ॥ १० ॥ नाडीशुद्धिमवाप्नोति पृथक्चिह्नोपलक्षितः । शरीरलघुता दीप्तिर्वह्नेर्जाठरवर्तिनः ॥ ११ ॥ नादाभिव्यक्तिरित्येतच्चिह्नं तत्सिद्धिसूचकम् । यावदेतानि संपश्येत्तावदेवं समाचरेत् ॥ १२ ॥ अथवैतत्परित्यज्य स्वात्मशुद्धिं समाचरेत् । आत्मा शुद्धः सदा नित्यः सुखरूपः स्वयम्प्रभः ॥ १३ ॥ अज्ञानान्मलिनो भाति ज्ञानाच्छुद्धो भवत्ययम् । अज्ञानमलपङ्कं यः क्षालयेज्ज्ञानतो यतः । स एव सर्वदा शुद्धो नान्यः कर्मरतो हि सः ॥ १४ ॥ इति ॥

इति जाबालदर्शनोपनिषत्सु पञ्चमः खण्डः ॥ ५ ॥

प्राणायामक्रमं वक्ष्ये सांकृते शृणु सादरम् । प्राणायाम इति प्रोक्तो रेचपूरककुम्भकैः ॥ १ ॥ वर्णत्रयात्मकाः प्रोक्ता रेचपूरककुम्भकाः । स एष प्रणवः प्रोक्तः प्राणायामस्तु तन्मयः ॥ २ ॥ इडया वायुमाकृष्य पूरयित्वोदरे स्थितम् । शनैः षोडशभिर्मात्रैरकारं तत्र संस्मरेत् ॥ ३ ॥ पूरितं धारयेत्पश्चाच्चतुःषष्ट्या तु मात्रया । उकारमूर्तिमत्रापि संस्मरन्प्रणवं जपेत् ॥४॥ यावद्वा शक्यते तावद्धारयेज्जपतत्परः । पूरितं रेचयेत्पश्चान्मकारेणानिलं बुधः ॥ ५ ॥ शनैः पिङ्गलया तत्र द्वात्रिंशन्मात्रया पुनः । प्राणायामो भवेदेवं ततश्चैवं समभ्यसेत् ॥ ६ ॥ पुनः पिङ्गलयापूर्य मात्रैः षोडशभिस्तथा । अकारमूर्तिमत्रापि स्मरेदेकाग्रमानसः ॥ ७ ॥ धारयेत्पूरितं विद्वान्प्रणवं संजपन्वशी । उकारमूर्तिं स ध्यायंश्चतुःषष्ट्या तु मात्रया ॥ ८ ॥ मकारं तु स्मरन्पश्चाद्रेचयेदिडयाऽनिलम् । एवमेव पुनः कुर्यादिडयापूर्य बुद्धिमान् ॥ ९ ॥ एवं समभ्यसेन्नित्यं प्राणायामं मुनीश्वर । एवमभ्यासतो नित्यं षण्मासाद्यत्नवान्भवेत् ॥ १० ॥ वत्सराद्ब्रह्मविद्वान्स्यात्तस्मान्नित्यं समभ्यसेत् । योगाभ्यासरतो नित्यं स्वधर्मनिरतश्च यः ॥ ११ ॥ प्राणसंयमनेनैव ज्ञानान्मुक्तो भविष्यति । बाह्यादापूरणं वायोरुदरे पूरको हि सः ॥ १२ ॥ संपूर्णकुम्भवद्वायोर्धारणं कुम्भको भवेत् । बहिर्विरेचनं वायोरुदराद्रेचकः स्मृतः ॥ १३ ॥ प्रस्वेदजनको यस्तु प्राणायामेषु सोऽधमः । कम्पनं मध्यमं विद्यादुत्थानं चोत्तमं विदुः ॥ १४ ॥ पूर्वं पूर्वं प्रकुर्वीत यावदुत्थानसंभवः ।

संभवत्युत्तमे प्राज्ञः प्राणायामे सुखी भवेत् ॥ १५ ॥ प्राणायामेन चित्तं तु शुद्धं भवति सुव्रत । चित्ते शुद्धे शुचिः साक्षात्प्रत्यग्ज्योतिर्व्यवस्थितः ॥ १६ ॥ प्राणश्चित्तेन संयुक्तः परमात्मनि तिष्ठति । प्राणायामपरस्यास्य पुरुषस्य महात्मनः ॥ १७ ॥ देहश्चोत्तिष्ठते तेन किंचिज्ज्ञानाद्विमुक्तता । रेचकं पूरकं मुक्त्वा कुम्भकं नित्यमभ्यसेत् ॥ १८ ॥ सर्वपापविनिर्मुक्तः सम्यग्ज्ञानमवाप्नुयात् । मनोजवत्वमाप्नोति पलितादि च नश्यति ॥ १९ ॥ प्राणायामैकनिष्ठस्य न किंचिदपि दुर्लभम् । तस्मात्सर्वप्रयत्नेन प्राणायामान्समभ्यसेत् ॥ २० ॥ विनियोगान्प्रवक्ष्यामि प्राणायामस्य सुव्रत । संध्ययोर्ब्राह्मकालेऽपि मध्याह्ने वाऽथवा सदा ॥ २१ ॥ बाह्यं प्राणं समाकृष्य पूरयित्वोदरेण च । नासाग्रे नाभिमध्ये च पादाङ्गुष्ठे च धारयेत् ॥ २२ ॥ सर्वरोगविनिर्मुक्तो जीवेद्वर्षशतं नरः । नासाग्रधारणाद्वापि जितो भवति सुव्रत ॥ २३ ॥ सर्वरोगनिवृत्तिः स्यान्नाभिमध्ये तु धारणात् । शरीरलघुता विप्र पादाङ्गुष्ठनिरोधनात् ॥२४॥ जिह्वया वायुमाकृष्य यः पिबेत्सततं नरः । श्रमदाहविनिर्मुक्तो योगी नीरोगतामियात् ॥२५॥ जिह्वया वायुमाकृष्य जिह्वामूले निरोधयेत् । पिबेदमृतमव्यग्रं सकलं सुखमाप्नुयात् ॥ २६ ॥ इडया वायुमाकृष्य भ्रुवोर्मध्ये निरोधयेत् । यः पिबेदमृतं शुद्धं व्याधिभिर्मुच्यते हि सः ॥२७॥ इडया वेदतत्त्वज्ञस्तथा पिङ्गलयैव च । नाभौ निरोधयेत्तेन व्याधिभिर्मुच्यते नरः ॥ २८ ॥ मासमात्रं त्रिसन्ध्यायां जिह्वयारोप्य मारुतम् । अमृतं च पिबेन्नाभौ मन्दं मन्दं निरोधयेत् ॥ २९ ॥ वातजाः पित्तजा दोषा नश्यन्त्येव न संशयः । नासाभ्यां वायुमाकृष्य नेत्रद्वन्द्वे निरोधयेत् ॥ ३० ॥ नेत्ररोगा विनश्यन्ति तथा श्रोत्रनिरोधनात् । तथा वायुं समारोप्य धारयेच्छिरसि स्थितम् ॥ ३१ ॥ शिरोरोगा विनश्यन्ति सत्यमुक्तं हि सांकृते । स्वस्तिकासनमास्थाय समाहितमनास्तथा ॥ ३२ ॥ अपानमूर्ध्वमुत्थाप्य प्रणवेन शनैः शनैः । हस्ताभ्यां धारयेत्सम्यक्कर्णादिकरणानि च ॥ ३३ ॥ अङ्गुष्ठाभ्यां मुने श्रोत्रे तर्जनीभ्यां तु चक्षुषी । नासापुटावधानाभ्यां प्रच्छाद्य करणानि वै ॥ ३४ ॥ आनन्दाविर्भवो यावत्तावन्मूर्धनि धारणात् । प्राणः प्रयात्यनेनैव ब्रह्मरन्ध्रं महामुने ॥ ३५ ॥ ब्रह्मरन्ध्रे गते वायौ नादश्चोत्पद्यतेऽनघ । शङ्खध्वनिनिभश्चादौ मध्ये मेघध्वनिर्यथा ॥ ३६ ॥ शिरोमध्यगते वायौ गिरिप्रस्रवणं यथा । पश्चात्प्रीतो महाप्राज्ञः साक्षादात्मो-

न्मुखो भवेत् ॥ ३७ ॥ पुनस्तज्ज्ञाननिष्पत्तिर्योगात्संसारनिहुतिः । दक्षिणोत्तरगुल्फेन सीवनीं पीडयेत्स्थिरम् ॥ ३८ ॥ सव्येतरेण गुल्फेन पीडयेद्बुद्धिमान्नरः । जान्वोरधःस्थितां सन्धिं स्मृत्वा देवं त्रियम्बकम् ॥ ३९ ॥ विनायकं च संस्मृत्य तथा वागीश्वरीं पुनः । लिङ्गनालात्समाकृष्य वायुमप्यग्रतो मुने ॥ ४० ॥ प्रणवेन नियुक्तेन बिन्दुयुक्तेन बुद्धिमान् । मूलाधारस्य विप्रेन्द्र मध्ये तं तु निरोधयेत् ॥ ४१ ॥ निरुध्य वायुना दीप्तो वह्निरूहति कुण्डलीम् । पुनः सुषुम्नया वायुर्वह्निना सह गच्छति ॥ ४२ ॥ एवमभ्यसतस्तस्य जितो वायुर्भवेद्भृशम् । प्रस्वेदः प्रथमः पश्चात्कम्पनं मुनिपुङ्गव ॥ ४३ ॥ उत्थानं च शरीरस्य चिह्नमेतज्जितेऽनिले । एवमभ्यसतस्तस्य मूलरोगो विनश्यति ॥ ४४ ॥ भगन्दरं च नष्टं स्यात्सर्वरोगाश्च सांकृते । पातकानि विनश्यन्ति क्षुद्राणि च महान्ति च ॥ ४५ ॥ नष्टे पापे विशुद्धं स्याच्चित्तदर्पणमद्भुतम् । पुनर्ब्रह्मादिभोगेभ्यो वैराग्यं जायते हृदि ॥ ४६ ॥ विरक्तस्य तु संसाराज्ज्ञानं कैवल्यसाधनम् । तेन पापापहानिः स्याज्ज्ञात्वा देवं सदाशिवम् ॥ ४७ ॥ ज्ञानामृतरसो येन सकृदास्वादितो भवेत् । स सर्वकार्यमुत्सृज्य तत्रैव परिधावति ॥ ४८ ॥ ज्ञानस्वरूपमेवाहुर्जगदेतद्विलक्षणम् । अर्थस्वरूपमज्ञानात्पश्यन्त्यन्ये कुदृष्टयः ॥ ४९ ॥ आत्मस्वरूपविज्ञानादज्ञानस्य परिक्षयः । क्षीणेऽज्ञाने महाप्राज्ञ रागादीनां परिक्षयः ॥ ५० ॥ रागाद्यसंभवे प्राज्ञ पुण्यपापविमर्दनम् । तयोर्नाशे शरीरेण न पुनः संप्रयुज्यते ॥ ५१ ॥ इति ॥

इति जाबालदर्शनोपनिषत्सु षष्ठः खण्डः ॥ ६ ॥

अथातः संप्रवक्ष्यामि प्रत्याहारं महामुने । इन्द्रियाणां विचरतां विषयेषु स्वभावतः ॥ १ ॥ बलादाहरणं तेषां प्रत्याहारः स उच्यते । यत्पश्यति तु तत्सर्वं ब्रह्म पश्यन्समाहितः ॥ २ ॥ प्रत्याहारो भवेदेष ब्रह्मविद्भिः पुरोदितः । यद्यच्छुद्धमशुद्धं वा करोत्यामरणान्तिकम् ॥ ३ ॥ तत्सर्वं ब्रह्मणे कुर्यात्प्रत्याहारः स उच्यते । अथवा नित्यकर्माणि ब्रह्माराधनबुद्धितः ॥ ४ ॥ काम्यानि च तथा कुर्यात्प्रत्याहारः स उच्यते । अथवा वायुमाकृष्य स्थानात्स्थानं निरोधयेत् ॥ ५ ॥ दन्तमूलात्तथा कण्ठे कण्ठादुरसि मारुतम् । उरोदेशात्समाकृष्य नाभिदेशे निरोधयेत् ॥ ६ ॥ नाभिदेशात्समाकृष्य कुण्डल्यां तु निरोधयेत् । कुण्डलीदेशतो विद्वान्मूलाधारे निरोधयेत् ॥ ७ ॥ अथा-

पानात्कटिद्वन्द्वे तथोरौ च सुमध्यमे । तस्माज्जानुद्वये जङ्घे पादाङ्गुष्ठे निरोधयेत् ॥ ८ ॥ प्रत्याहारोऽयमुक्तस्तु प्रत्याहारस्मरैः पुरा । एवमभ्यासयुक्तस्य पुरुषस्य महात्मनः ॥ ९ ॥ सर्वपापानि नश्यन्ति भवरोगश्च सुव्रत । नासाभ्यां वायुमाकृष्य निश्चलः स्वस्तिकासनः ॥ १० ॥ पूरयेदनिलं विद्वानापादतलमस्तकम् । पश्चात्पादद्वये तद्वन्मूलाधारे तथैव च ॥ ११ ॥ नाभिकन्दे च हृन्मध्ये कण्ठमूले च तालुके । भ्रुवोर्मध्ये ललाटे च तथा मूर्धनि धारयेत् ॥ १२ ॥ देहे स्वात्ममतिं विद्वान्समाकृष्य समाहितः । आत्मनाऽऽत्मनि निर्द्वन्द्वे निर्विकल्पे निरोधयेत् ॥ १३ ॥ प्रत्याहारः समाख्यातः साक्षाद्वेदान्तवेदिभिः । एवमभ्यसतस्तस्य न किंचिदपि दुर्लभम् ॥ १४ ॥ इति ॥

इति जाबालदर्शनोपनिषत्सु सप्तमः खण्डः ॥ ७ ॥

अथातः संप्रवक्ष्यामि धारणाः पञ्च सुव्रत । देहमध्यगते व्योम्नि बाह्याऽऽकाशं तु धारयेत् ॥ १ ॥ प्राणे बाह्यानिलं तद्वज्ज्वलने चाग्निमौदरे । तोयं तोयांशके भूमिं भूमिभागे महामुने ॥ २ ॥ हयवरलकाराख्यं मन्त्रमुच्चारयेत्क्रमात् । धारणैषा परा प्रोक्ता सर्वपापविशोधिनी ॥ ३ ॥ जान्वन्तं पृथिवी ह्यंशो ह्यपां पाय्वन्तमुच्यते । हृदयांशस्तथाग्न्यंशो भ्रूमध्यान्तोऽनिलांशकः ॥ ४ ॥ आकाशांशस्तथा प्राज्ञ मूर्धांशः परिकीर्तितः । ब्रह्माणं पृथिवीभागे विष्णुं तोयांशके तथा ॥ ५ ॥ अग्न्यंशे च महेशानमीश्वरं चानिलांशके । आकाशांशे महाप्राज्ञ धारयेत्तु सदाशिवम् ॥ ६ ॥ अथवा तव वक्ष्यामि धारणां मुनिपुङ्गव । पुरुषे सर्वशास्तारं बोधानन्दमयं शिवम् ॥ ७ ॥ धारयेद्बुद्धिमान्नित्यं सर्वपापविशुद्धये । ब्रह्मादिकार्यरूपाणि स्वे स्वे संहृत्य कारणे ॥ ८ ॥ सर्वकारणमव्यक्तमनिरूप्यमचेतनम् । साक्षादात्मनि संपूर्णे धारयेत्प्रणवेन तु । इन्द्रियाणि समाहृत्य मनसात्मनि योजयेत् ॥ ९ ॥ इति ॥

इति जाबालदर्शनोपनिषत्स्वष्टमः खण्डः ॥ ८ ॥

अथातः संप्रवक्ष्यामि ध्यानं संसारनाशनम् । ऋतं सत्यं परं ब्रह्म सर्वसंसारभेषजम् ॥ १ ॥ ऊर्ध्वरेतं विश्वरूपं विरूपाक्षं महेश्वरम् । सोऽहमित्यादरेणैव ध्यायेद्योगीश्वरेश्वरम् ॥ २ ॥ अथवा सत्यमीशानं ज्ञानमानन्दमद्वयम् । अत्यर्थमचलं नित्यमादिमध्यान्तवर्जितम् ॥ ३ ॥ तथाऽस्थूलमनाकाशमसं-

स्पृश्यमचाक्षुषम् । न रसं न च गन्धाख्यमप्रमेयमनूपमम् ॥ ४ ॥ आत्मानं सच्चिदानन्दमनन्तं ब्रह्म सुव्रत । अहमस्मीत्यभिध्यायेद्ध्येयातीतं विमुक्तये ॥ ५ ॥ एवमभ्यासयुक्तस्य पुरुषस्य महात्मनः । क्रमाद्वेदान्तविज्ञानं विजायेत न संशयः ॥ ६ ॥ इति ॥

इति जाबालदर्शनोपनिषत्सु नवमः खण्डः ॥ ९ ॥

अथातः संप्रवक्ष्यामि समाधिं भवनाशनम् । समाधिः संविदुत्पत्तिः परजीवैकतां प्रति ॥ १ ॥ नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः । एकः संभिद्यते भ्रान्त्या मायया न स्वरूपतः ॥ २ ॥ तस्मादद्वैतमेवास्ति न प्रपञ्चो न संसृतिः । यथाकाशो घटाकाशो मठाकाश इतीरितः ॥ ३ ॥ तथा भ्रान्तैर्द्विधा प्रोक्तो ह्यात्मा जीवेश्वरात्मना । नाहं देहो न च प्राणो नेन्द्रियाणि मनो नहि ॥ ४ ॥ सदा साक्षिस्वरूपत्वाच्छिव एवास्मि केवलः । इति धीर्या मुनिश्रेष्ठ सा समाधिरिहोच्यते ॥ ५ ॥ साहं ब्रह्म न संसारी न मत्तोऽन्यः कदाचन । यथा फेनतरङ्गादि समुद्रादुत्थितं पुनः ॥ ६ ॥ समुद्रे लीयते तद्वज्जगन्मय्यनुलीयते । तस्मान्मनः पृथङ्ग् नास्ति जगन्माया च नास्ति हि ॥७॥ यस्यैवं परमात्माऽयं प्रत्यग्भूतः प्रकाशितः । स तु याति च पुंभावं स्वयं साक्षात्परामृतम् ॥ ८ ॥ यदा मनसि चैतन्यं भाति सर्वत्रगं सदा । योगिनोऽव्यवधानेन तदा संपद्यते स्वयम् ॥ ९ ॥ यदा सर्वाणि भूतानि स्वात्मन्येव हि पश्यति । सर्वभूतेषु चात्मानं ब्रह्म संपद्यते तदा ॥ १० ॥ यदा सर्वाणि भूतानि समाधिस्थो न पश्यति । एकीभूतः परेणाऽसौ तदा भवति केवलः ॥ ११ ॥ यदा पश्यति चात्मानं केवलं परमार्थतः । मायामात्रं जगत्कृत्स्नं तदा भवति निर्वृतिः ॥ १२ ॥ एवमुक्त्वा स भगवान्दत्तात्रेयो महामुनिः । सांकृतिः स्वस्वरूपेण सुखमास्तेऽतिनिर्भयः ॥ १३ ॥ इति ॥

इति जाबालदर्शनोपनिषत्सु दशमः खण्डः ॥ १० ॥

ॐ आप्यायन्त्विति शान्तिः ॥ हरिः ॐ तत्सत् ॥

इति श्रीजाबालदर्शनोपनिषत्समाप्ता ॥ ९३ ॥

---

# तारकोपनिषत् ॥ ९४ ॥

यन्नारायणतारायसत्यज्ञानसुखाकृति ।
त्रिपान्नारायणाकारं तद्ब्रह्मैवास्मि केवलम् ॥ १ ॥

ॐ पूर्णमद इति शान्तिः ॥

हरिः ॐ ॥ बृहस्पतिरुवाच याज्ञवल्क्यं यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनं तस्माद्यत्र क्वचन गच्छेत्तदेव मन्येतेति । इदं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवति । तस्मादविमुक्तमेव निषेवेत । अविमुक्तं न विमुञ्चेत् । एवमेवैष भगवन्निति वै याज्ञवल्क्यः ॥ १ ॥ अथ हैनं भारद्वाजः पप्रच्छ याज्ञवल्क्यं किं तारकम् । किं तारयतीति स होवाच याज्ञवल्क्यः । ॐ नमो नारायणायेति तारकं चिदात्मकमित्युपासितव्यम् । ओमित्येकाक्षरमात्मस्वरूपम् । नम इति द्व्यक्षरं प्रकृतिस्वरूपम् । नारायणायेति पञ्चाक्षरं परंब्रह्मस्वरूपम् इति । य एवं वेद सोऽमृतो भवति । ओमिति ब्रह्म भवति । नकारो विष्णुर्भवति । मकारो रुद्रो भवति । नकार ईश्वरो भवति । रकारोऽण्डं विराड् भवति । यकारः पुरुषो भवति । णकारो भगवान्भवति । यकारः परमात्मा भवति । एतद्वै नारायणस्याष्टाक्षरं वेद परमपुरुषो भवति ॥

तारसारोपनिषत्सु ऋग्वेदः प्रथमः पादः ॥ १ ॥

ॐमित्येतदक्षरं परं ब्रह्म । तदेवोपासितव्यम् । एतदेव सूक्ष्माष्टाक्षरं भवति । तदेतदष्टात्मकोऽष्टधा भवति । अकारः प्रथमाक्षरो भवति । उकारो द्वितीयाक्षरो भवति । मकारस्तृतीयाक्षरो भवति । बिन्दुस्तुरीयाक्षरो भवति । नादः पञ्चमाक्षरो भवति । कला षष्ठाक्षरो भवति । कलातीता सप्तमाक्षरो भवति । तत्परश्चाष्टमाक्षरो भवति । तारकत्वात्तारको भवति । तदेव तारकं ब्रह्म त्वं विद्धि । तदेवोपासितव्यम् ॥ अत्रैते श्लोका भवन्ति—अकाराद्भवब्रह्मा जाम्बवानितिसंज्ञकः । उकाराक्षरसंभूत उपेन्द्रो हरिनायकः ॥ १ ॥ मकाराक्षरसंभूतः शिवस्तु हनुमान्स्मृतः । बिन्दुरीश्वरसंज्ञस्तु शत्रुघ्नश्चक्रराड्

स्वयम् ॥ २ ॥ नादो महाप्रभुर्ज्ञेयो भरतः शत्रुनाशकः । कलायाः पुरुषः साक्षाल्लक्ष्मणो धरणीधरः ॥ ३ ॥ कलातीता पराशक्तिः स्वयं सीतेति संज्ञिता । तत्परः परमात्मा च श्रीरामः पुरुषोत्तमः ॥ ४ ॥ ओमित्येतदक्षरमिदं सर्वम् । तस्योपव्याख्यानं भूतं भव्यं भविष्यद्यच्चान्यत्तत्त्वमन्त्रवर्णदेवताछन्दोऋक्कलाशक्तिसृष्ट्यात्मकमिति । य एवं वेद ॥

तारसारोपनिषत्सु यजुर्वेदो द्वितीयः पादः ॥ २ ॥

अथ हैनं भारद्वाजो याज्ञवल्क्यमुवाचाथ कैर्मन्त्रैः परमात्मा प्रीतो भवति स्वात्मानं दर्शयति तन्नो ब्रूहि भगव इति । स होवाच याज्ञवल्क्यः । ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवानकारवाच्यो जाम्बवान्भूर्भुवः सुवस्तस्मै वै नमो नमः ॥ १ ॥ ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवानुकारवाच्य उपेन्द्रस्वरूपो हरिनायको भूर्भुवः सुवस्तस्मै वै नमो नमः ॥ २ ॥ ॐ यो ह वै परमात्मा नारायणः स भगवान्मकारवाच्यः शिवस्वरूपो हनूमान्भूर्भुवः सुवस्तस्मै वै नमो नमः ॥ ३ ॥ ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवान्बिन्दुस्वरूपः शत्रुघ्नो भूर्भुवः सुवस्तस्मै वै नमो नमः ॥ ४ ॥ ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवान्नादस्वरूपो भरतो भूर्भुवः सुवस्तस्मै वै नमो नमः ॥ ५ ॥ ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवान्कलास्वरूपो लक्ष्मणो भूर्भुवः सुवस्तस्मै वै नमो नमः ॥ ६ ॥ ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवान्कलातीता भगवती सीता चित्स्वरूपा भूर्भुवः सुवस्तस्मै वै नमो नमः ॥ ७ ॥ यथा प्रथममन्त्रोक्तावाद्यन्तौ तथा सर्वमन्त्रेषु द्रष्टव्यम् । उकारवाच्य उपेन्द्रस्वरूपो हरिनायकः २ मकारवाच्यः शिवस्वरूपो हनुमान् ३ बिन्दुस्वरूपः शत्रुघ्नः ४ नादस्वरूपो भरतः ५ कलास्वरूपो लक्ष्मणः ६ कलातीता भगवती सीता चित्स्वरूपा ७ ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवांस्तत्परः परमपुरुषः पुराणपुरुषोत्तमो नित्यशुद्धबुद्धमुक्तसत्यपरमानन्ताद्वयपरिपूर्णः परमात्मा ब्रह्मैवाहं रामोऽस्मि भूर्भुवः सुवस्तस्मै नमो नमः ॥ ८ ॥ एतदष्टविधमन्त्रं योऽधीते सोऽग्निपूतो भवति । स वायुपूतो भवति । स आदित्यपूतो भवति । स स्थाणुपूतो भवति । स सर्वैर्देवैर्ज्ञातो भवति । तेनेतिहासपुराणानां रुद्राणां शतसहस्राणि जप्तानि फलानि भवन्ति । श्रीमन्नारायणाष्टाक्षरानुस्मरणेन गायत्र्याः शत-

सहस्रं जप्तं भवति । प्रणवानामयुतं जप्तं भवति । दशपूर्वान्दशोत्तरान्पुनाति । नारायणपदमवाप्नोति य एवं वेद । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ इत्युपनिषत् ॥ हरिः ॐ तत्सत् ॥

तारसारोपनिषत्सु सामवेदस्तृतीयः पादः ॥ ३ ॥

ॐ पूर्णमद इति शान्तिः ॥

इति तारसारोपनिषत्समाप्ता ॥ ९४ ॥

---

# महावाक्योपनिषत् ॥ ९५ ॥

यन्महावाक्यसिद्धान्तमहाविद्याकलेवरम् ।
विकलेवरकैवल्यं रामचन्द्रपदं भजे ॥ १ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

हरिः ॐ ॥ अथ होवाच भगवान्ब्रह्मापरोक्षानुभवपरोपनिषदं व्याख्यास्यामः । गुह्याद्गुह्यपरमेषा न प्राकृतायोपदेष्टव्या । सात्त्विकायान्तर्मुखाय परिशुश्रूषवे अथ संसृतिबन्धमोक्षयोर्विद्याविद्ये चक्षुषी उपसंहृत्य विज्ञायाविद्यालोकाण्डस्तमोदृक् । तमो हि शारीरप्रपञ्चमाब्रह्मस्थावरान्तमनन्ताखिलाजाण्डभूतम् । निखिलनिगमोदितसकामकर्मव्यवहारो लोकः । नैषोऽन्धकारोऽयमात्मा । विद्या हि काण्डान्तरादित्यो ज्योतिर्मण्डलं ग्राह्यं नापरम् । असावादित्यो ब्रह्मेत्यजपयोपहितं हंसः सोऽहम् । प्राणापानाभ्यां प्रतिलोमानुलोमाभ्यां समुपलभ्यैवं सा चिरं लब्ध्वा त्रिवृदात्मनि ब्रह्मण्यभिध्यायमाने सच्चिदानन्दः परमात्माविर्भवति । सहस्रभानुमच्छुरितापूरितत्वादलिप्या पारावारपूर इव । नैषा समाधिः । नैषा योगसिद्धिः । नैषा मनोलयः । ब्रह्मैक्यं तत् । आदित्यवर्णं तमसस्तु पारे सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन्यदास्ते धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान्प्रदिशश्चतस्रः तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते । यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्ते । यत्र पूर्वे साध्याः सन्ति देवाः । सोऽहमर्कः परं ज्योतिरर्कज्योतिरहं शिवः । आत्मज्योतिरहं शुक्रः सर्वज्योतिरसावदोम् । य एतदथर्वशिरोऽधीते । प्रातरधी-

यानो रात्रिकृतं पापं नाशयति । सायमधीयानो दिवसकृतं पापं नाशयति । तत्सायं प्रातः प्रयुञ्जानः पापोऽपापो भवति । मध्यन्दिनमादित्याभिमुखोऽधीयानः पञ्चमहापातकोपपातकात्प्रमुच्यते । सर्ववेदपारायणपुण्यं लभते । श्रीमहाविष्णुसायुज्यमवाप्नोतीत्युपनिषत् ॥ हरिः ॐ तत्सत् ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ।

इति महावाक्योपनिषत्समाप्ता ॥ ९५ ॥

---

## पञ्चब्रह्मोपनिषत् ॥ ९६ ॥

ब्रह्मादिपञ्चब्रह्माणो यत्र विश्रान्तिमाप्नुयुः ।
तदखण्डसुखाकारं रामचन्द्रपदं भजे ॥ १ ॥

ॐ स ह नाववत्विति शान्तिः ॥

हरिः ॐ ॥ अथ पैप्पलादो भगवान्भो किमादौ किं जातमिति । सद्यो जातमिति । किं भगव इति । अघोर इति । किं भगव इति । वामदेव इति । किं वा पुनरिमे भगव इति । तत्पुरुष इति । किं वा पुनरिमे भगव इति । सर्वेषां दिव्यानां प्रेरयिता ईशान इति । ईशानो भूतभव्यस्य सर्वेषां देवयोगिनाम् । कति वर्णाः । कति भेदाः । कति शक्तयः । यत्सर्वं तद्गुह्यम् । तस्मै नमो महादेवाय महारुद्राय प्रोवाच तस्मै भगवान्महेशः । गोप्याद्गोप्यतरं लोके यद्यस्ति शृणु शाकल । सद्यो जातं मही पूषा रमा ब्रह्मा त्रिवृत्स्वरः ॥ १ ॥ ऋग्वेदो गार्हपत्यं च मन्त्राः सप्त स्वरास्तथा । वर्णं पीतं क्रिया शक्तिः सर्वाभीष्टफलप्रदम् ॥ २ ॥ अघोरं सलिलं चन्द्रं गौरी वेद द्वितीयकम् । नीरदाभं स्वरं सान्द्रं दक्षिणाग्निरुदाहृतम् ॥ ३ ॥ पञ्चाशद्वर्णसंयुक्तं स्थितिरिच्छाक्रियान्वितम् । शक्तिरक्षणसंयुक्तं सर्वाघौघविनाशनम् ॥ ४ ॥ सर्वदुष्टप्रशमनं सर्वैश्वर्यफलप्रदम् । वामदेवं महाबोधदायकं पावकात्मकम् ॥ ५ ॥ विद्यालोकसमायुक्तं भानुकोटिसमप्रभम् । प्रसन्नं सामवेदाख्यं नानाष्टकसमन्वितम् ॥६॥ धीरस्वरमधीनं चाहवनीयमनुत्तमम् । ज्ञानसंहारसंयुक्तं शक्तिद्वयसमन्वितम् ॥ ७ ॥ वर्णं शुक्लं तमोमिश्रं पूर्णबोधकरं स्वयम् । धामत्रयनियन्तारं धामत्रयसमन्वितम् ॥ ८ ॥ सर्वसौभाग्यदं नृणां

सर्वकर्मफलप्रदम् । अष्टाक्षरसमायुक्तमष्टपत्रान्तरस्थितम् ॥ ९ ॥ यत्तत्पु-
रुषं प्रोक्तं वायुमण्डलसंवृतम् । पञ्चाग्निना समायुक्तं मन्त्रशक्तिनियामकम्
॥ १० ॥ पञ्चाशत्स्वरवर्णाख्यमथर्ववेदस्वरूपकम् । कोटिकोटिगणाध्यक्षं
ब्रह्माण्डाखण्डविग्रहम् ॥ ११ ॥ वर्णं रक्तं कामदं च सर्वाधिव्याधिभेष-
जम् । सृष्टिस्थितिलयादीनां कारणं सर्वशक्तिधृक् ॥ १२ ॥ अवस्थात्रि-
तयातीतं तुरीयं ब्रह्मसंज्ञितम् । ब्रह्मविष्ण्वादिभिः सेव्यं सर्वेषां जनकं परम्
॥१३॥ ईशानं परमं विद्यात्प्रेरकं बुद्धिसाक्षिणम् । आकाशात्मकमव्यक्तमोंकार-
स्वरभूषितम् ॥ १४ ॥ सर्वदेवमयं शान्तं शान्त्यतीतं स्वराद्बहिः । अकारादि-
स्वराध्यक्षमाकाशमयविग्रहम् ॥१५॥ पञ्चकृत्यनियन्तारं पञ्चब्रह्मात्मकं बृहत् ।
पञ्चब्रह्मोपसंहारं कृत्वा स्वात्मनि संस्थितः ॥ १६ ॥ स्वमायावैभवान्सर्वान्सं-
हृत्य स्वात्मनि स्थितः । पञ्चब्रह्मात्मकातीतो भासते स्वस्वतेजसा ॥ १७ ॥
आदावन्ते च मध्ये च भासते नान्यहेतुना । मायया मोहिताः शंभोर्महादेवं
जगद्गुरुम् ॥ १८ ॥ न जानन्ति सुराः सर्वे सर्वकारणकारणम् । न संदृशे
तिष्ठति रूपमस्य परात्परं पुरुषं विश्वधाम ॥ १९ ॥ येन प्रकाशते विश्वं
यत्रैव प्रविलीयते । तद्ब्रह्म परमं शान्तं तद्ब्रह्मास्मि परं पदम् ॥ २० ॥ पञ्च-
ब्रह्म परं विद्यात्सद्योजातादिपूर्वकम् । दृश्यते श्रूयते यच्च पञ्चब्रह्मात्मकं स्वयम्
॥ २१ ॥ पञ्चधा वर्तमानं तं ब्रह्मकार्यमिति स्मृतम् । ब्रह्मकार्यमिति ज्ञात्वा
ईशानं प्रतिपद्यते ॥ २२ ॥ पञ्चब्रह्मात्मकं सर्वं स्वात्मनि प्रविलाप्य च ।
सोऽहमस्मीति जानीयाद्विद्वान्ब्रह्माऽमृतो भवेत् ॥ २३ ॥ इत्येतद्ब्रह्म जानी-
याद्यः स मुक्तो न संशयः । पञ्चाक्षरमयं शंभुं परब्रह्मस्वरूपिणम् ॥ २४ ॥
नकारादियकारान्तं ज्ञात्वा पञ्चाक्षरं जपेत् । सर्वं पञ्चात्मकं विद्यात्पञ्चब्र-
ह्मात्मतत्त्वतः ॥ २५ ॥ पञ्चब्रह्मात्मिकीं विद्यां योऽधीते भक्तिभावितः । स
पञ्चात्मकतामेत्य भासते पञ्चधा स्वयम् ॥ २६ ॥ एवमुक्त्वा महादेवो
गालवस्य महात्मनः । कृपां चकार तत्रैव स्वान्तर्धिमगमत्स्वयम् ॥ २७ ॥ यस्य
श्रवणमात्रेणाश्रुतमेव श्रुतं भवेत् । अमतं च मतं ज्ञातमविज्ञातं च शाकल
॥ २८ ॥ एकेनैव तु पिण्डेन मृत्तिकायाश्च गौतम । विज्ञातं मृण्मयं सर्वं
मृदभिन्नं हि कार्यकम् ॥ २९ ॥ एकेन लोहमणिना सर्वं लोहमयं यथा ।
विज्ञातं स्यादथैकेन नखानां कृन्तनेन च ॥ ३० ॥ सर्वं कार्ष्णायसं ज्ञातं तद-

भिन्नं स्वभावतः। कारणाभिन्नरूपेण कार्यकारणमेव हि ॥ ३१ ॥ तद्रूपेण सदा सत्यं भेदेनोक्तिर्मृषा खलु । तच्च कारणमेकं हि न भिन्नं नोभयात्मकम् ॥ ३२ ॥ भेदः सर्वत्र मिथ्यैव धर्मादेरनिरूपणात् । अतश्च कारणं नित्यमेकमेवाद्वयं खलु ॥ ३३ ॥ अत्र कारणमद्वैतं शुद्धचैतन्यमेव हि । अस्मिन्ब्रह्मपुरे वेश्म दहरं यदिदं मुने ॥ ३४ ॥ पुण्डरीकं तु तन्मध्ये आकाशो दहरोऽस्ति तत् । स शिवः सच्चिदानन्दः सोऽन्वेष्टव्यो मुमुक्षुभिः ॥ ३५ ॥ अयं हृदि स्थितः साक्षी सर्वेषामविशेषतः । तेनायं हृदयं प्रोक्तः शिवः संसारमोचकः ॥ ३६ ॥ इत्युपनिषत् ॥ हरिः ॐ तत्सत् ॥

ॐ स ह नाववत्विति शान्तिः ॥

इति पञ्चब्रह्मोपनिषत्समाप्ता ॥ ९६ ॥

---

# प्राणाग्निहोत्रोपनिषत् ॥ ९७ ॥

शरीरयज्ञसंशुद्धचित्तसंजातबोधतः ।
मुनयो यत्पदं यान्ति तद्रामपदमाश्रये ॥ १ ॥

ॐ स ह नाववत्विति शान्तिः ॥

हरिः ॐ ॥ अथातः सर्वोपनिषत्सारं संसारज्ञानातीतमन्नसूत्रं शारीरं यज्ञं व्याख्यास्यामः । अस्मिन्नेव पुरुषशरीरे विनाप्यग्निहोत्रेण विनापि सांख्ययोगेन संसारविमुक्तिर्भवतीति । स्वेन विधिनाऽन्नं भूमौ निक्षिप्य या ओषधीः सोमराज्ञीरिति तिसृभिरन्नपत इति द्वाभ्यामनुमन्त्रयते । या ओषधयः सोमराज्ञीर्बह्वीः शतविचक्षणाः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥ १ ॥ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥ २ ॥ जीवलां नघारिषां माते बध्नाम्योषधिम् । या त आयुरुपहरादप रक्षांसि चातयात् ॥ ३ ॥ अन्नपतेऽन्नस्य नो धेह्यनमीवस्य शुष्मिणः । प्रप्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥४॥ यदन्नमग्नि बहुधा विराद्धम् । रुद्रैः प्रजग्धं यदि वा पिशाचैः । सर्वं तदीशानो अभयं कृणोतु शिवमीशानाय स्वाहा ॥ ५ ॥ अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ।

त्वं यज्ञस्त्वं ब्रह्मा त्वं रुद्रस्त्वं विष्णुस्त्वं वषट्कार आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरों नमः । आपः पुनन्तु पृथिवीं पृथ्वी पूता पुनातु माम् । पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम् । यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम । सर्वं पुनन्तु तं ह्यापोऽसतां च प्रतिग्रहं । अमृतमस्यमृतोपस्तरणमस्यमृतं प्राणे जुहोम्यमा शिष्यान्तोऽसि । प्राणाय स्वाहा । अपानाय स्वाहा । व्यानाय स्वाहा । समानाय स्वाहा । उदानाय स्वाहा इति कनिष्ठिकाङ्गुल्याङ्गुष्ठेन च प्राणे जुहोमि । अनामिकयाऽपाने । मध्यमया व्याने । सर्वाभिरुदाने । प्रदेशिन्या समाने । तूष्णीमेकामेकऋषौ जुहोति । द्वे आहवनीये । एकां दक्षिणाग्नौ । एकां गार्हपत्ये । एकां सर्वप्रायश्चित्तीये ॥ अथापिधानमस्यमृतत्वायोपस्पृश्य पुनरादाय पुनरुपस्पृशेत् । सव्ये प्राणावापो गृहीत्वा हृदयमन्वालभ्य जपेत् । प्राणोऽग्निः परमात्मा पञ्चवायुभिरावृतः । अभयं सर्वभूतेभ्यो न भवेदहं कदाचनेति ॥ १ ॥

इत्याथर्वणीयप्राणाग्निहोत्रोपनिषत्सु प्रथमः खण्डः ॥ १ ॥

विश्वोऽसि वैश्वानरो विश्वरूपं त्वया धार्यते जायमानम् । विश्वं त्वाहुतयः सर्वा यत्र ब्रह्माऽमृतोऽसि । महानवोऽयं पुरुषो योऽङ्गुष्ठाग्रे प्रतिष्ठितः । तमद्भिः प्रतिषिञ्चामि सोऽस्यान्ते अमृतायामृतयोनाविलेष एवात्मा । ध्यायेताग्निहोत्रं जुहोमीति सर्वेषामेव सूनुर्भवति । अथ यज्ञपरिवृत आहुतीर्होमयति । स्वे शरीरे यज्ञं परिवर्तयामीति । चत्वारोऽग्नयस्ते किंनामधेयाः । तत्र सूर्योऽग्निर्नाम सूर्यमण्डलाकृतिः सहस्ररश्मिपरिवृत एकर्षिर्भूत्वा मूर्धनि तिष्ठति यस्मादुक्तः । दर्शनाग्निर्नाम चतुराकृतिराहवनीयो भूत्वा मुखे तिष्ठति । शारीरोऽग्निर्नाम जराप्रणुदा हविरवस्कन्दति । अर्धचन्द्राकृतिर्दक्षिणाग्निर्भूत्वा हृदये तिष्ठति तत्र कोष्ठाग्निर्नामाशितपीतलीढखादितानि सम्यग् व्यष्ट्यां श्रपयित्वा गार्हपत्यो भूत्वा नाभ्यां तिष्ठति । प्रायश्चित्तयस्त्वधस्तात्तिर्यक् तिस्रो हिमांशुप्रभाभिः प्रजननकर्मा ॥

इत्याथर्वणीयप्राणाग्निहोत्रोपनिषत्सु द्वितीयः खण्डः ॥ २ ॥

अस्य शारीरयज्ञस्य यूपरशनाशोभितस्य को यजमानः । का पत्नी । के ऋत्विजः । के सदस्याः । कानि यज्ञपात्राणि । कानि हवींषि । का वेदिः । कोत्तरवेदिः । को द्रोणकलशः । को रथः । कः पशुः । कोऽध्वर्युः । को होता । को ब्राह्मणाच्छंसी । कः प्रतिप्रस्थाता । कः प्रस्तोता । को मैत्रावरुणः । क उद्गाता । का धारापोता । के दर्भाः । कः स्रुवः । काज्यस्थाली । कावाघारौ । कावाज्यभागौ । के प्रयाजाः । के अनुयाजाः । केडा । कः सूक्तवाकः । कः शंयुवाकः । काऽहिंसा । के पत्नीसंयाजाः । को यूपः । का रशना । का इष्टयः । का दक्षिणा । किमवभृथमिति ॥

इत्याथर्वणीयप्राणाग्निहोत्रोपनिषत्सु तृतीयः खण्डः ॥ ३ ॥

अस्य शारीरयज्ञस्य यूपरशनाशोभितस्यात्मा यजमानः । बुद्धिः पत्नी । वेदा महर्त्विजः । अहंकारोऽध्वर्युः । चित्तं होता । प्राणो ब्राह्मणाच्छंसी । अपानः प्रतिप्रस्थाता । व्यानः प्रस्तोता । समानो मैत्रावरुणः । उदान उद्गाता । शरीरं वेदिः । नासिकोत्तरवेदिः । मूर्धा द्रोणकलशः । पादो रथः । दक्षिणहस्तः स्रुवः । सव्यहस्त आज्यस्थाली । श्रोत्रे आघारौ । चक्षुषी आज्यभागौ । ग्रीवा धारापोता । तन्मात्राणि सदस्याः । महाभूतानि प्रयाजाः । भूतान्यनुयाजाः । जिह्वेडा । दन्तोष्ठौ सूक्तवाकः । तालुः शंयुवाकः । स्मृतिर्दया क्षान्तिरहिंसा पत्नीसंयाजाः । ओंकारो यूपः । आशा रशना । मनो रथः । कामः पशुः । केशा दर्भाः । बुद्धीन्द्रियाणि यज्ञपात्राणि । कर्मेन्द्रियाणि हवींषि । अहिंसा इष्टयः । त्यागो दक्षिणा । अवभृथं मरणात् । सर्वा ह्यस्मिन्देवताः शरीरेऽधिसमाहिताः । वाराणस्यां मृतो वापि इदं वा ब्रह्म यः पठेत् । एकेन जन्मना जन्तुर्मोक्षं च प्राप्नुयादिति मोक्षं च प्राप्नुयादित्युपनिषत् ॥ ३ ॥ ॐ सह नाववत्विति शान्तिः ॥ हरिः ॐ तत्सत् ॥

इत्याथर्वणीया प्राणाग्निहोत्रोपनिषत्समाप्ता ॥ ९७ ॥

---

# गोपालपूर्वतापिन्युपनिषत् ॥ ९८ ॥

श्रीमत्पञ्चपदागारं सविशेषतयोज्ज्वलम् ।
प्रतियोगिविनिर्मुक्तं निर्विशेषं हरिं भजे ॥ १ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

गोपालतापनं कृष्णं याज्ञवल्क्यं वराहकम् ।
शाट्यायनी हयग्रीवं दत्तात्रेयं च गारुडम् ॥ २ ॥

ॐ कृषिर्भूवाचकः शब्दो नश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥ १ ॥ ॐ सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे । नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥ १ ॥ ॐ मुनयो ह वै ब्राह्मणमूचुः कः परमो देवः कुतो मृत्युर्बिभेति कस्य विज्ञानेनाखिलं भाति केनेदं विश्वं संसरतीति । तदु होवाच ब्राह्मणः श्रीकृष्णो वै परमं दैवतं गोविन्दान्मृत्युर्बिभेति गोपीजनवल्लभज्ञानेन तज्ज्ञातं भवति स्वाहेदं संसरतीति । तदु होचुः कः कृष्णो गोविन्दश्च कोऽसाविति गोपीजनवल्लभः कः का स्वाहेति तानुवाच ब्राह्मणः पापकर्षणो गोभूमिवेदविदितो वेदिता गोपीजनाविद्याकलाप्रेरकः । तन्माया चेति सकलं परं ब्रह्मैतद्यो ध्यायति रसति भजति सोऽमृतो भवति सोऽमृतो भवतीति ॥ १ ॥ ते होचुः किं तद्रूपं किं रसनं कथं वाऽहो तद्भजनं तत्सर्वं विविदिषतामाख्याहीति । तदु होवाच हैरण्यो गोपवेषमभ्राभं तरुणं कल्पद्रुमाश्रितम् । तदिह श्लोका भवन्ति—सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम् । द्विभुजं ज्ञानमुद्राढ्यं वनमालिनमीश्वरम् ॥ गोपगोपाङ्गनावीतं सुरद्रुमतलाश्रितम् । दिव्यालंकरणोपेतं रत्नपङ्कजमध्यगम् ॥ कालिन्दीजलकल्लोलसङ्गिमारुतसेवितम् । चिन्तयंश्चेतसा कृष्णं मुक्तो भवति संसृतेः ॥ इति । तस्य पुना रसनभजनभूमीन्दुसंपातः कामादि कृष्णायेत्येकं पदं गोविन्दायेति द्वितीयं गोपीजनेति तृतीयं वल्लभायेति तुरीयं स्वाहेति पञ्चममिति पञ्चपदीं प्रजपन् पञ्चाङ्गं द्यावाभूमी सूर्याचन्द्रमसौ साग्नी तद्रूपतया ब्रह्म संपद्यते ब्रह्म संपद्यत इति ॥ २ ॥ तदेष श्लोकः—क्लीमित्येवादावादाय कृष्णाय योगं गोविन्दायेत च । गोपीजनवल्लभाय

वृहद्वनं श्यामं तदप्युत्तरेद्यो गतिस्तस्यास्ति मङ्क्षु नान्या गतिः स्यादिति भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्येनैवामुष्मिन्मनःकल्पनमेतदेव च नैष्कर्म्यं कृष्णं सन्तं विप्रा बहुधा यजन्ति गोविन्दं सन्तं बहुधा रसन्ति गोपीजनवल्लभो भुवनानि दध्रे स्वाहाश्रितो जगदैजयत्सुरेताः, वायुर्यथैको भुवनं प्रतिष्ठो जन्ये जन्ये पञ्चरूपो बभूव। कृष्णस्तथैकोऽपि जगद्धितार्थं शब्देनासौ पञ्चपदो विभातीति ॥ ३ ॥ ते होचुरुपासनमेतस्य परमात्मनो गोविन्दस्याखिलाधारिणो ब्रूहीति। तानुवाच ब्रह्मा यत्तस्य पीठं हैरण्यमष्टपलाशमम्बुजं तदन्तरालिकानलास्त्रयुगं तदन्तराद्यार्णं विलिखीत कृष्णाय। नम इति बीजाढ्यं स ब्राह्मणमाधायानङ्गमनु गायत्रीं यथावद्व्यासज्य भूमण्डलं मूलवेष्टितं कृत्वाऽङ्गवासुदेवादिरुक्मिण्यादिस्वशक्तीन्द्रादिवसुदेवादिपार्थादिनिध्यावीतं यजेत्संध्यासु प्रतिपत्तिभिरुपचारैस्तेनास्याखिलं भवत्यखिलं भवतीति ॥ ४ ॥ तदिह श्लोका भवन्ति—एको वशी सर्वगः कृष्ण ईड्य एकोऽपि सन्बहुधा यो विभाति। तं पीठस्थं येऽनुभजन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्। तं पीठगं येऽनुयजन्ति विप्रास्तेषां सिद्धिः शाश्वती नेतरेषाम् ॥ एतद्विष्णोः परमं पदं ये नित्योद्युक्ताः संयजन्ते न कामात्। तेषामसौ गोपरूपः प्रयत्नात्प्रकाशयेदात्मपदं तदेव ॥ यो ब्रह्माणं विदधाति पूर्वं यो विद्यास्तस्मै गापयति स्म कृष्णः। तं ह देवमात्मवृत्तिप्रकाशं मुमुक्षुर्वै शरणममुं व्रजेत् ॥ ओंकारेणान्तरितं यो जपति गोविन्दस्य पञ्चपदं मनुं तम्। तस्यैवासौ दर्शयेदात्मरूपं तस्मान्मुमुक्षुरभ्यसेन्नित्यशान्त्यै ॥ एतस्मादन्ये पञ्चपदादभूवन्गोविन्दस्य मनवो मानवानाम्। दशार्णाद्यास्तेऽपि संक्रन्दनाद्यैरभ्यस्यन्ते भूतिकामैर्यथावत् ॥ तदेतस्य स्वरूपार्थं वाचा वेदयेति ते पप्रच्छुस्तदु होवाच ब्राह्मणः, अनवरतं मया ध्यातस्ततः परार्धान्ते सोऽबुध्यत गोपवेषो मे पुरस्तादाविर्बभूव ततः प्रणतो मया, अनुकूलेन हृदा मह्यमष्टादशार्णं स्वरूपं सृष्टये दत्त्वाऽन्तर्हितः पुनः सिसृक्षा मे प्रादुरभूत्तेष्वक्षरेषु भविष्यजगद्रूपं प्रकाशयंस्तदाह तदाह ॥ ५ ॥ अनुकूलेन हृदा मह्यमष्टादशार्णं स्वरूपं सृष्टये दत्त्वाऽन्तर्हित इति। आकाशादापो जलात्पृथ्वी ततोऽग्निर्बिन्दोरिन्दुः, तत्संपातमदर्कः। इति क्लींकारादसृजं कृष्णादाकाशं खाद्वायुरित्युत्तरात्सुरभिविद्याः प्रादुरकार्षं तदुत्तरात्तु स्त्रीपुमादि च, इदं सकलमिदं

सकलमिति ॥ ६ ॥ एतस्यैव यजनेन चन्द्रध्वजो गतमोहमात्मानं वेदयित्वोंकारान्तरालिकं मनुमावर्तयन्, सङ्गरहितोऽभ्यापतत् । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तस्मादेतन्नित्यमभ्यसेन्नित्यमभ्यसेदिति ॥ ७ ॥ तदाहुरेके यस्य प्रथमपदाद्भूमिर्द्वितीयपदाज्जलं तृतीयपदात्तेजश्चतुर्थाद्वायुश्चरमाद्व्योमेति वैष्णवं पञ्चव्याहृतिमयं मन्त्रं कृष्णावभासं कैवल्यसृत्यै सततमावर्तयेदिति । तदत्र गाथाः—यस्य पूर्वपदाद्भूमिर्द्वितीयात्सलिलोद्भवः । तृतीयात्तेज उद्भूतं चतुर्थाद्गन्धवाहनः ॥ पञ्चमादम्बरोत्पत्तिस्तमेवैकं समभ्यसेत् । चन्द्रध्वजोऽगमद्विष्णोः परमं पदमव्ययम् ॥ ततो विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् । यत्तत्पदं पञ्चपदं तदेव स वासुदेवो न यतोऽन्यदस्ति ॥ तमेकं गोविन्दं सच्चिदानन्दविग्रहं पञ्चपदं वृन्दावने सुरभूरुहतलासीनं सततं समरुद्गणोऽहं परमया स्तुत्या तोषयामि ॥ ८ ॥

इति गोपालपूर्वतापिन्युपनिषत्सु प्रथमोपनिषत् ॥ १ ॥

ॐ नमो विश्वरूपाय विश्वस्थित्यन्तहेतवे ॥ विश्वेश्वराय विश्वाय गोविन्दाय नमो नमः ॥ १ ॥ नमो विज्ञानरूपाय परमानन्दरूपिणे ॥ कृष्णाय गोपीनाथाय गोविन्दाय नमो नमः ॥ २ ॥ नमः कमलनेत्राय नमः कमलमालिने ॥ नमः कमलनाभाय कमलापतये नमः ॥ ३ ॥ बर्हापीडाभिरामाय रामायाकुण्ठमेधसे ॥ रमामानसहंसाय गोविन्दाय नमो नमः ॥ ४ ॥ कंसवंशविनाशाय केशिचाणूरघातिने ॥ वृषभध्वजवन्द्याय पार्थसारथये नमः ॥ ५ ॥ वेणुवादनशीलाय गोपालायाहिमर्दिने ॥ कालिन्दीकूललोलाय लोलकुण्डलधारिणे ॥ ६ ॥ बल्लवीनयनाम्भोजमालिने नृत्यशालिने ॥ नमः प्रणतपालाय श्रीकृष्णाय नमो नमः ॥ ७ ॥ नमः पापप्रणाशाय गोवर्धनधराय च ॥ पूतनाजीवितान्ताय तृणावर्तासुहारिणे ॥ ८ ॥ निष्कलाय विमोहाय शुद्धायाशुद्धवैरिणे ॥ अद्वितीयाय महते श्रीकृष्णाय नमो नमः ॥ ९ ॥ प्रसीद परमानन्द प्रसीद परमेश्वर ॥ आधिव्याधिभुजंगेन दष्टं मामुद्धर प्रभो ॥ १० ॥ श्रीकृष्ण रुक्मिणीकान्त गोपीजनमनोहर ॥ संसारसागरे मग्नं मामुद्धर जगद्गुरो ॥ ११ ॥ केशव क्लेशहरण नारायण जनार्दन ॥ गोविन्द परमानन्द मां समुद्धर माधव ॥१२॥ अथ हैवं स्तुतिभिराराधयामि ते यूयं तथा पञ्चपदं जपन्तः श्रीकृष्णं ध्यायन्तः संसृतिं तरिष्यथेति स होवाच हैरण्यः । अमुं पञ्चपदं मन्त्रमावर्तयेद्यः स यात्यनायासतः केवलं

तत् । अनेजदेकं मनसो जवीयो नैतद्देवा आप्नुवन्पूर्वमर्षदिति । तस्मात्कृष्ण एव परो देवस्तं ध्यायेत्तं रसेत्तं भजेत्तं भजेदित्यों तत्सदिति ॥ १३ ॥

इति गोपालपूर्वतापिन्युपनिषत्सु द्वितीयोपनिषत् ॥ २ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

इत्याथर्वणीया गोपालपूर्वतापिन्युपनिषत्समाप्ता ॥ ९८ ॥

---

## गोपालोत्तरतापिन्युपनिषत् ॥ ९९ ॥

ॐ सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकर्मणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥ १ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

ॐ एकदा हि व्रजस्त्रियः सकामाः शर्वरीमुषित्वा सर्वेश्वरं गोपालं कृष्णं हि ता ऊचिरे । उवाच ताः कृष्णमनुः कस्मै ब्राह्मणाय भैक्षं दातव्यं भवति दुर्वाससेति । कथं यास्यामोऽतीर्त्वा जलं यमुनायाः, यतः श्रेयो भवति कृष्णेति कृष्णो ब्रह्मचारीत्युक्त्वा मार्गं वो दास्यत्युत्ताना भवति यं मां स्मृत्वा, अगाधा गाधा भवति यं मां स्मृत्वा, अपूतः पूतो भवति यं मां स्मृत्वाऽव्रती व्रती भवति यं मां स्मृत्वा, निष्कामः सकामो भवति यं मां स्मृत्वा, अश्रोत्रियः श्रोत्रियो भवति यं मां स्मृत्वा श्रुत्वा तद्वाचं ह वै स्मृत्वा तद्वाक्येन तीर्त्वा तां सौर्यां हि वै गत्वाश्रमं पुण्यतमं नत्वा मुनिश्रेष्ठतमं हि रौद्रं चेति दत्त्वाऽस्मै ब्राह्मणाय क्षीरमयं घृतमयं मिष्टतमं हि वा इष्टतमः स तुष्टः स्नात्वा भुक्त्वाऽऽशिषं प्रयोज्याज्ञामदात्कथं यास्यामोऽतीर्त्वा सौर्याम्, स होवाच मुनिर्दुर्वासिनं मां स्मृत्वा वो दास्यतीति मार्गम् । तासां मध्ये श्रेष्ठा गान्धर्वी होवाच सहैवैताभिरेवं विचार्य कथं कृष्णो ब्रह्मचारी, कथं दुर्वासिनो मुनिस्तां हि मुख्यां विधाय पूर्वमनु कृत्वा तूष्णीमासुः । शब्दवानाकाशः शब्दाकाशाभ्यां भिन्नस्तस्मिन्नाकाशे तिष्ठत्याकाशस्तं न वेद स ह्यात्माऽहं कथं भोक्ता भवामि ॥ १ ॥ स्पर्शवान्वायुः स्पर्शवायुभ्यां भिन्नस्तस्मिन्वायौ तिष्ठति वायुर्न वेद तं स ह्यात्माऽहं कथं भोक्ता भवामि रूपवदिदं तेजो रूपाग्निभ्यां भिन्नस्तस्मिन्नग्नौ तिष्ठत्यग्निर्न वेद तं हि स ह्यात्माऽहं कथं भोक्ता भवामि ॥ २ ॥ रसवत्य आपो रसाद्भ्यो भिन्नास्तास्वप्सु तिष्ठति । आपो न विदुस्तं हि स ह्यात्माऽहं कथं भोक्ता भवामि ॥ ३ ॥ गन्धवती भूमिर्गन्धभूमिभ्यां भिन्नस्तस्यां भूमौ तिष्ठति भूमिर्न वेद तं हि स

ह्यात्माऽहं कथं भोक्ता भवामि ॥ ४ ॥ इदं हि मनस्तेष्वेवं हि मनुते तानिदं गृह्णाति । यत्र हि सर्वमात्मैवाभूत्तत्र वा कुत्र मनुते क्व वा गच्छतीति स ह्यात्माऽहं कथं भोक्ता भवामि ॥ ५ ॥ अयं हि कृष्णो यो वो हि प्रेष्ठः शरीरद्वयकारणं भवति द्वौ सुपर्णौ भवतो ब्रह्मणोंऽशभूतस्तथेतरो भोक्ता भवति । अन्यो हि साक्षी भवतीति ॥ ६ ॥ वृक्षधर्मे तौ तिष्ठतोऽभोक्तृभोक्तारौ पूर्वो हि भोक्ता भवति । तथेतरोऽभोक्ता कृष्णो भवतीति यत्र विद्याविद्ये न विदामो विद्याविद्याभ्यां भिन्नो विद्यामयो यः स कथं विषयी भवतीति ॥ ७ ॥ यो हि वै कामेन कामान्कामयते स कामी भवति यो हि वै त्वकामेन कामान्न कामयते सोऽकामी भवतीति । जन्मजराभ्यां भिन्नः स्थाणुरयमच्छेद्योऽयम् । योऽसौ सूर्ये तिष्ठति योऽसौ गोषु तिष्ठति योऽसौ गोपान्पालयति योऽसौ गोपेषु तिष्ठति योऽसौ सर्वेषु देवेषु तिष्ठति योऽसौ सर्वैर्वेदैर्गीयते योऽसौ सर्वेषु भूतेष्वाविश्य तिष्ठति भूतानि च विदधाति स वो हि स्वामी भवतीति ॥ ८ ॥ सा होवाच गान्धर्वी कथं वाऽस्मासु जातोऽसौ गोपालः कथं वा ज्ञातोऽसौ त्वया मुने कृष्णः, को वाऽस्य मन्त्रः, किं वाऽस्य स्थानं, कथं वा देवक्यां जातः, को वाऽस्य ज्यायान्रामो भवति, कीदृशी पूजाऽस्य गोपालस्य भवति, साक्षात्प्रकृतिपरयोरयमात्मा गोपालः कथमवतीर्णो भूम्यां हि वै ॥ ९ ॥ स होवाच तां हि वा एको हि वै पूर्वं नारायणो देवो यस्मिँल्लोका ओताश्च प्रोताश्च तस्य हृत्पद्माज्जातोऽब्जयोनिः । स पिता तस्मै ह वरं ददौ । स कामप्रश्नमेव वव्रे । तं हास्मै ददौ स होवाचाब्जयोनिरवताराणां मध्ये श्रेष्ठोऽवतारः को भवति येन लोकास्तुष्टा देवास्तुष्टा भवन्ति यं स्मृत्वा वा मुक्ता अस्मात्संसाराद्भवन्ति कथं वाऽस्यावतारस्य ब्रह्मता भवति ॥ १० ॥ स होवाच तं हि नारायणो देवः सकाम्या मेरोः शृङ्गे यथा सप्त पुर्यो भवन्ति तथा हि निष्काम्याः सकाम्याश्च भूलोकचक्रे सप्त पुर्यो भवन्ति तासां मध्ये साक्षाद्ब्रह्मगोपालपुरी हीति सकाम्या निष्काम्या च देवानां सर्वेषां भूतानां च भवति ॥ ११ ॥ यथा हि वै सरसि पद्मं तिष्ठति तथा भूम्यां हि तिष्ठतीति । चक्रेण रक्षिता हि वै मथुरा तस्माद्गोपालपुरी हि भवतीति । बृहद्बृहद्वनं मधोर्मधुवनं तालस्तालवनं काम्यः कामवनं बहुलो बहुलवनं कुमुदः कुमुदवनं खदिरः खदिरवनं भद्रो भद्रवनं भाण्डीर इति भाण्डीरवनं श्रीवनं लोहवनं वृन्दया वृन्दावनमेतैरावृता पुरी भवति ॥ १२ ॥ तत्र तेष्वेवं

गहनेष्वेव देवा मनुष्या गन्धर्वा नागाः किंनरा गायन्तीति नृत्यन्तीति तत्र द्वादशादित्या एकादश रुद्रा अष्टौ वसवः सप्त मुनयो ब्रह्मा नारदश्च पञ्च विनायका वीरेश्वरो रुद्रेश्वरोऽम्बिकेश्वरो गणेश्वरो नीलकण्ठविश्वेश्वरो गोपालेश्वरो भद्रेश्वर एतदाद्यानि लिङ्गानि चतुर्विंशतिर्भवन्ति । द्वे वने स्तः कृष्णवनं भद्रवनं तयोरन्तर्द्वादश वनानि पुण्यानि पुण्यतमानि तेष्वेव देवास्तिष्ठन्ति सिद्धाः सिद्धिं प्राप्तास्तत्र हि रामस्य रामा मूर्तिः प्रद्युम्नस्य प्रद्युम्नमूर्तिरनिरुद्धस्यानिरुद्धमूर्तिः कृष्णस्य कृष्णमूर्तिर्वनेष्वेव मधुरास्वेव द्वादश मूर्तयो भवन्ति ॥ १३ ॥ एकां हि रुद्रा यजन्ति द्वितीयां हि ब्रह्मा यजति तृतीयां हि ब्रह्मजा यजन्ति चतुर्थीं मरुतो यजन्ति पञ्चमीं विनायका यजन्ति षष्ठीं वसवो यजन्ति सप्तमीमृषयो यजन्त्यष्टमीं गन्धर्वा यजन्ति नवमीमप्सरसो यजन्ति दशमी हि दिवोऽन्तर्धाने तिष्ठत्येकादशयन्तरिक्षपदं गता द्वादशी तु भूम्यां तिष्ठति ता हि ये जयन्ति ते मृत्युं तरन्ति मुक्तिं लभन्ते गर्भजन्मजरामरणतापत्रयात्मकं दुःखं तरन्ति ॥ १४ ॥ प्रथमां मधुरां रम्यां सदा ब्रह्मादिसेविताम् । शङ्खचक्रगदाशार्ङ्गरक्षितां मुशलादिभिः ॥ अत्रासौ संस्थितः कृष्णस्त्रिभिः शक्त्या समाहितः । रामानिरुद्धप्रद्युम्नै रुक्मिण्या सहितो विभुः ॥ चतुःशब्दो भवेदेको ह्योंकारः समुदाहृतः । तस्मादेव परो रजस इति सोऽहमित्यवधार्य गोपालोऽहमिति भावयेत् । स मोक्षमश्नुते स ब्रह्मत्वमधिगच्छति स ब्रह्मविद्भवति गोपाञ्जीवान्वा आत्मत्वेनासृष्टिपर्यन्तमालाति स गोपालो भवति ह्यों तद्यत्तत्सत्परं ब्रह्म कृष्णात्मको नित्यानन्दैकरूपः सोऽहम् । ॐ तद्गोपालदेव एव परं सत्यमबाधितं सोऽहमित्यात्मानमादाय मनसैक्यं कुर्यात्, आत्मनो गोपालोऽहमिति भावयेत्स एवाव्यक्तोऽनन्तो नित्यो गोपालः । मधुरायां स्थितिर्ब्रह्मन्सर्वदा मे भविष्यति । शङ्खचक्रगदापद्मवनमालावृतस्तु वै ॥ चित्स्वरूपं परंज्योतिःस्वरूपं रूपवर्जितम् । सदा मां संस्मरन्ब्रह्मन्मत्पदं याति निश्चितम् ॥ मधुरामण्डले यस्तु जम्बुद्वीपस्थितोऽपि वा । योऽर्चयेत्प्रतिमां प्रीत्या स मे प्रियतरो भुवि ॥ १५ ॥ तस्यामधिष्ठितः कृष्णरूपी पूज्यस्त्वया सदा । चतुर्धा चास्याधिकारिभेदत्वेन यजन्ति माम् ॥ युगानुवर्तिनो लोका यजन्तीह सुमेधसः ॥ गोपालं सानुजं रामं रुक्मिण्या सह तत्परम् ॥ गोपालोऽहमजो नित्यः प्रद्युम्नोऽहं सनातनः । रामोऽहं ह्यनिरुद्धोऽहमात्मानमर्चयेद्बुधः ॥ मयोक्तेन स्वधर्मेण निष्कामेण विभागशः ।

तैरयं पूजनीयो वै भद्रकृष्णो निवासिभिः ॥ तद्धर्मगतिहीना ये तस्यां मयि परायणाः । कलिना ग्रसिता ये वै तेषां तस्यामवस्थितिः ॥ यथा त्वं सह पुत्रैस्तु यथा रुद्रो गणैः सह । यथा श्रियाऽभियुक्तोऽहं तथा भक्तो मम प्रियः ॥ १६ ॥ स होवाचाब्जयोनिश्चतुर्भिर्देवैः कथमेको देवः स्यात् । एकमक्षरं यद्विश्रुतं ह्यनेकाक्षरं कथं भूतं स होवाच । तं हि वै पूर्वं ह्येकमेवाद्वितीयं ब्रह्मासीत्तस्मादव्यक्तं व्यक्तमेवाक्षरं तस्मादक्षरान्महान्महतो वा अहंकारस्तस्मादेवाहंकारात्पञ्च तन्मात्राणि तेभ्यो भूतानि तैरावृतमक्षरं भवति । अक्षरोऽहमोंकारोऽहमजरोऽभयोऽमृतो ब्रह्माभयं हि वै स मुक्तोऽहमस्म्यक्षरोऽहमस्मि । सत्तामात्रं विश्वरूपं प्रकाशं व्यापकं तथा । एकमेवाद्वयं ब्रह्म मायया तु चतुष्टयम् ॥ रोहिणीतनयो रामो अकाराक्षरसंभवः । तैजसात्मकः प्रद्युम्न उकाराक्षरसंभवः ॥ प्राज्ञात्मकोऽनिरुद्धो वै मकाराक्षरसंभवः । अर्धमात्रात्मकः कृष्णो यस्मिन्विश्वं प्रतिष्ठितम् ॥ कृष्णात्मिका जगत्कर्त्री मूलप्रकृतिरुक्मिणी ॥ व्रजस्त्रीजनसंभूतः श्रुतिभ्यो ब्रह्मसंगतः । प्रणवेन प्रकृतित्वं वदन्ति ब्रह्मवादिनः ॥ तस्मादोंकारसंभूतो गोपालो विश्वसंस्थितिः । क्लीमोंकारं च एकत्वं पठ्यते ब्रह्मवादिभिः ॥ मथुरायां विशेषेण मां ध्यायन्मोक्षमश्नुते ॥ अष्टपत्रं विकसितं हृत्पद्मं तत्र संस्थितम् । दिव्यध्वजातपत्रैस्तु चिह्नितं चरणद्वयम् । श्रीवत्सलाञ्छनं हृत्स्थं कौस्तुभं प्रभया युतम् ॥ चतुर्भुजं शङ्खचक्रशार्ङ्गपद्मगदान्वितम् । सुकेयूरान्वितं बाहुं कण्ठं मालासुशोभितम् ॥ द्युमत्किरीटमभयं स्फुरन्मकरकुण्डलम् । हिरण्मयं सौम्यतनुं स्वभक्तायाभयप्रदम् ॥ ध्यायेन्मनसि मां नित्यं वेणुशृङ्गधरं तु वा ॥ मथ्यते तु जगत्सर्वं ब्रह्मज्ञानेन येन वा । तत्सारभूतं यद्यस्यां मथुरा सा निगद्यते । अष्टदिक्पालिभिर्भूमिपद्मं विकसितं जगत् ॥ संसारार्णवसंजातं सेवितं सममानसैः । चन्द्रसूर्याम्बरौचित्या ध्वजो मेरुर्हिरण्मयः ॥ आतपत्रं ब्रह्मलोकं ममोर्ध्वचरणः स्मृतम् । श्रीवत्सं च स्वरूपं च वर्तते लाञ्छनैः सह । श्रीवत्सलाञ्छनं तस्मात्कथ्यते ब्रह्मवादिभिः ॥ येन सूर्याग्निवाक्चन्द्रतेजसा स्वस्वरूपिणा । वर्तते कौस्तुभमणिं तं वदन्तीशमानिनः ॥ सत्त्वं रजस्तम इति अहंकारश्चतुर्विधः । पञ्चभूतात्मकः शङ्खः परो रजसि संस्थितः ॥ चलस्वरूपमत्यन्तं मनश्चक्रं निगद्यते । आद्या माया भवेच्छार्ङ्गं पद्मं विश्वं करे स्थितम् । आद्या विद्या गदा वेद्या सर्वदा मे करे

श्रिता । धर्मार्थकामकेयूरैर्दिव्यैर्नित्यमवारितैः । कण्ठं तु निर्गुणं प्रोक्तं माल्यते माययाऽजया । माला निगद्यते ब्रह्मंस्तव पुत्रैस्तु मानसैः ॥ कूटस्थस्य स्वरूपं च किरीटं प्रवदन्ति माम् । अक्षरोत्तमं प्रस्फुरत्तत्कुण्डलं युगुलं स्मृतम् ॥ ध्यायेन्मम प्रियो नित्यं स मोक्षमधिगच्छति । स मुक्तो भवति तस्मै च आत्मानं ददामीति ॥ एतत्सर्वं भविष्यति मया प्रोक्तं विधे तव । स्वरूपं द्विविधं चैव सगुणं निर्गुणं तथा ॥ १७ ॥ स होवाचाब्जयोनिर्व्यक्तानां मूर्तीनां प्रोक्तानां कथं वाऽवधारणा भवन्ति कथं वा देवा यजन्ति रुद्रा यजन्ति ब्रह्मा यजति विनायका यजन्ति द्वादशादित्या यजन्ति वसवो यजन्त्यप्सरसो यजन्ति गन्धर्वा यजन्ति स्वपदं गताऽन्तर्धाने तिष्ठति कां मनुष्या यजन्ति । स होवाच तं तु ह वै नारायणो देवः । आद्या अव्यक्ता द्वादश मूर्तयः सर्वेषु लोकेषु सर्वेषु देवेषु सर्वेषु मनुष्येषु तिष्ठति रुद्रेषु रौद्री ब्रह्मण्येव ब्राह्मी देवेषु दैवी मानसेषु मानसी विनायके विघ्ननाशिन्यादित्येषु ज्योतिर्गन्धर्वेषु गान्धर्व्यप्सरःस्वेवं गौर्वसुष्वेवं काम्यान्तर्धाने प्रकाशन आविर्भावा तिरोभावा केवला तु स्वपदे तिष्ठति तामसी सात्त्विकी राजसी मानुषी विज्ञानघन आनन्दघनः सच्चिदानन्दैकरसे भक्तियोगे तिष्ठति ॥ १८ ॥ ॐ टां प्राणात्मने टां तत्सद्भूर्भुवः स्वस्तस्मै प्राणात्मने नमो नमः ॥ १ ॥ ॐ टां कृष्णाय गोविन्दाय गोपीजनवल्लभाय टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ २ ॥ ॐ टामपानात्मने टां तत्सद्भूर्भुवः स्वस्तस्मा अपानात्मने नमो नमः ॥ ३ ॥ ॐ टां कृष्णाय प्रद्युम्नायानिरुद्धाय टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ४ ॥ ॐ टां व्यानात्मने टां तत्सद्भूर्भुवः स्वस्तस्मै व्यानात्मने नमो नमः ॥ ५ ॥ ॐ टां कृष्णाय रामाय टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ६ ॥ ॐ टामुदानात्मने टां तत्सद्भूर्भुवः स्वस्तस्मा उदानात्मने नमो नमः ॥ ७ ॥ ॐ टां कृष्णाय देवकीनन्दनाय टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ८ ॥ ॐ टां समानात्मने टां तत्सद्भूर्भुवः स्वस्तस्मै समानात्मने नमो नमः ॥ ९ ॥ ॐ टां गोपालाय निजस्वरूपाय टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १० ॥ ॐ टां योऽसौ प्रेयानात्मा गोपालः टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ११ ॥ ॐ टां योऽसाविन्द्रियात्मा गोपालः टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १२ ॥ ॐ टां योऽसौ भूतात्मा

गोपालः टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १३ ॥ ॐ टां योऽसा-
वुत्तमपुरुषो गोपालः टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १४ ॥
ॐ टां योऽसौ परब्रह्मगोपालः टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः
॥ १५ ॥ ॐ टां योऽसौ सर्वभूतात्मा गोपालः टां तत्सद्भूर्भुवः स्वस्तस्मै वै
नमो नमः ॥ १६ ॥ ॐ टां योऽसौ जाग्रत्स्वप्नसुषुप्तिमतीत्य तुर्यातीतो
गोपालः टां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ १७ ॥ एको देवः
सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः
साक्षी चेता केवलो निर्गुणश्च ॥ रुद्राय नम आदित्याय नमो विनायकाय
नमः सूर्याय नमो विद्यायै नमः । इन्द्राय नमोऽग्नये नमः पित्रे नमो निर्ऋ-
तये नमो वरुणाय नमो मरुते नमः कुबेराय नम ईशानाय नमो ब्रह्मणे
नमः सर्वेभ्यो देवेभ्यो नमः । दत्त्वा स्तुतिं पुण्यतमां ब्रह्मणे स्वस्वरूपिणे ।
कर्तृत्वं सर्वलोकानामन्तर्धाने बभूव सः ॥ ब्रह्मणो ब्रह्मपुत्रेभ्यो नारदात्तु श्रुतं
यथा । तथा प्रोक्तं तु गान्धर्वि गच्छ त्वं स्वालयान्तिकं गच्छ त्वं
स्वालयान्तिकमिति ॥ १९ ॥

ॐ स ह नाववत्विति शान्तिः ॥

इत्याथर्वणीया गोपालोत्तरतापिन्युपनिषत्समाप्ता ॥ ९९ ॥

---

# कृष्णोपनिषत् ॥ १०० ॥

यो रामः कृष्णतामेत्य सार्वात्म्यं प्राप्य लीलया ।
अतोषयद्देवमौनिपटलं तं नतोऽस्म्यहम् ॥ १ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ।

हरिः ॐ ॥ श्रीमहाविष्णुं सच्चिदानन्दलक्षणं रामचन्द्रं दृष्ट्वा सर्वाङ्गसुन्दरं मुनयो वनवासिनो विस्मिता बभूवुः । तं होचुर्नोऽवद्यमवतारान्वै गण्यन्ते आलिङ्गामो भवन्तमिति । भवान्तरे कृष्णावतारे यूयं गोपिका भूत्वा मामालिङ्गथ अन्ये येऽवतारास्ते हि गोपा न स्त्रीश्च नो कुरु । अन्योन्यविग्रहं धार्यं तवाङ्गस्पर्शनादिह । शश्वत्स्पर्शयिताऽस्माकं गृह्णीमोऽवतारान्वयम् ॥१॥ रुद्रादीनां वचः श्रुत्वा प्रोवाच भगवान्स्वयम् । अङ्गसङ्गं करिष्यामि भवद्वाक्यं करोम्यहम् ॥२॥ मोदितास्ते सुराः सर्वे कृतकृत्याधुना वयम् । यो नन्दः परमानन्दो यशोदा

मुक्तिगेहिनी ॥ ३ ॥ माया सा त्रिविधा प्रोक्ता सत्त्वराजसतामसी । प्रोक्ता च सात्त्विकी रुद्रे भक्ते ब्रह्मणि राजसी ॥ ४ ॥ तामसी दैत्यपक्षेषु माया त्रेधा ह्युदाहृता । अजेया वैष्णवी माया जप्येन च सुता पुरा ॥ ५ ॥ देवकी ब्रह्मपुत्रा सा या वेदैरुपगीयते । निगमो वसुदेवो यो वेदार्थः कृष्णरामयोः ॥ ६ ॥ स्तुवते सततं यस्तु सोऽवतीर्णो महीतले । वने वृन्दावने क्रीडन्गोपगोपीसुरैः सह ॥ ७ ॥ गोप्यो गाव ऋचस्तस्य यष्टिका कमलासनः । वंशस्तु भगवान्रुद्रः शृङ्गमिन्द्रः सगोसुरः ॥ ८ ॥ गोकुलं वनवैकुण्ठं तापसास्तत्र ते द्रुमाः । लोभक्रोधादयो दैत्याः कलिकालस्तिरस्कृतः ॥ ९ ॥ गोपरूपो हरिः साक्षान्मायाविग्रहधारणः । दुर्बोधं कुहकं तस्य मायया मोहितं जगत् ॥ १० ॥ दुर्जया सा सुरैः सर्वैर्धृष्टिरूपो भवेद्द्विजः । रुद्रो येन कृतो वंशस्तस्य माया जगत्कथम् ॥ ११ ॥ बलं ज्ञानं सुराणां वै तेषां ज्ञानं हृतं क्षणात् । शेषनागो भवेद्रामः कृष्णो ब्रह्मैव शाश्वतम् ॥ १२ ॥ अष्टावष्टसहस्रे द्वे शताधिक्यः स्त्रियस्तथा । ऋचोपनिषदस्ता वै ब्रह्मरूपा ऋचः स्त्रियः ॥ १३ ॥ द्वेषश्चाणूरमल्लोऽयं मत्सरो मुष्टिको जयः । दर्पः कुवलयापीडो गर्वो रक्षः खगो बकः ॥ १४ ॥ दया सा रोहिणी माता सत्यभामा धरेति वै । अघासुरो महाव्याधिः कलिः कंसः स भूपतिः ॥ १५ ॥ शमो मित्रः सुदामा च सत्याक्रूरोद्धवो दमः । यः शङ्खः स स्वयं विष्णुर्लक्ष्मीरूपो व्यवस्थितः ॥ १६ ॥ दुग्धसिन्धौ समुत्पन्नो मेघघोषस्तु संस्मृतः । दुग्धोदधिः कृतस्तेन भग्नभाण्डो दधिग्रहे ॥ १७ ॥ क्रीडते बालको भूत्वा पूर्ववत्सुमहोदधौ । संहारार्थं च शत्रूणां रक्षणाय च संस्थितः ॥ १८ ॥ कृपार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम् । यत्स्रष्टुमीश्वरेणासीत्तच्चक्रं ब्रह्मरूपधृक् ॥ १९ ॥ जयन्तीसंभवो वायुश्चमरो धर्मसंज्ञितः । यस्यासौ ज्वलनाभासः खड्गरूपो महेश्वरः ॥ २० ॥ कश्यपोलूखलः ख्यातो रज्जुर्माताऽदितिस्तथा । चक्रं शङ्खं च संसिद्धिं बिन्दुं च सर्वमूर्धनि ॥ २१ ॥ यावन्ति देवरूपाणि वदन्ति विबुधा जनाः । नमन्ति देवरूपेभ्य एवमादि न संशयः ॥ २२ ॥ गदा च कालिका साक्षात्सर्वशत्रुनिबर्हिणी । धनुः शार्ङ्गं स्वमाया च शरत्कालः सुभोजनः ॥ २३ ॥ अब्जकाण्डं जगद्बीजं धृतं पाणौ स्वलीलया । गरुडो वटभाण्डीरः सुदामा नारदो मुनिः ॥ २४ ॥ वृन्दा भक्तिः क्रिया बुद्धिः सर्वजन्तुप्रकाशिनी । तस्मान्न भिन्नं नाभिन्नमाभिर्भिन्नो न वै विभुः ॥

भूमावुत्तारितं सर्वं वैकुण्ठं स्वर्गवासिनाम् ॥ २५ ॥ सर्वतीर्थफलं लभते य एवं वेद । देहबन्धाद्विमुच्यते इत्युपनिषत् ॥ हरिः ॐ तत्सत् ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

इति कृष्णोपनिषत्समाप्ता ॥ १०० ॥

---

# याज्ञवल्क्योपनिषत् ॥ १०१ ॥

संन्यासज्ञानसंपन्ना यान्ति यद्वैष्णवं पदम् ।
तद्वै पदं ब्रह्मतत्त्वं रामचन्द्रपदं भजे ॥ १ ॥

ॐ पूर्णमद इति शान्तिः ॥

हरिः ॐ ॥ अथ जनको ह वैदेहो याज्ञवल्क्यमुपसमेत्योवाच भगवन्संन्यासमनुब्रूहीति कथं संन्यासलक्षणम् । स होवाच याज्ञवल्क्यो ब्रह्मचर्यं समाप्य गृही भवेत् । गृहाद्वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा । अथ पुनर्व्रती वाऽव्रती वा स्नातको वाऽस्नातको वा उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत् । तदेके प्राजापत्यामेवेष्टिं कुर्वन्ति । अथवा न कुर्यादाग्नेय्यामेव कुर्यात् । अग्निर्हि प्राणः । प्राणमेवैतया करोति । त्रैधातवीयामेव कुर्यात् । एतयैव त्रयो धातवो यदुत सत्त्वं रजस्तम इति । अयं ते योनिर्ऋत्विजो यतो जातो अरोचथाः । तं जानन्नग्न आरोहाथानो वर्धया रयिमित्यनेन मन्त्रेणाग्निमाजिघ्रेत् । एष वा अग्नेर्योनिर्यः प्राणं गच्छ स्वां योनिं गच्छ स्वाहेत्येवमेवैतदाग्रामादग्निमाहृत्य पूर्ववदग्निमाजिघ्रेत् । यदग्निं न विन्देदप्सु जुहुयादापो वै सर्वा देवताः सर्वाभ्यो देवताभ्यो जुहोमि स्वाहेति साज्यं हविरनामयम् । मोक्षमन्त्रस्त्रय्येवं वेद तद्ब्रह्म तदुपासितव्यम् । शिखां यज्ञोपवीतं छित्त्वा संन्यस्तं मयेति त्रिवारमुच्चरेत् । एवमेवैतद्भगवन्निति वै याज्ञवल्क्यः ॥१॥ अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यं यज्ञोपवीती कथं ब्राह्मण इति । स होवाच याज्ञवल्क्य इदं प्रणवमेवास्य तद्यज्ञोपवीतं य आत्मा । प्राश्याचम्यायं विधिरथ वा परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षमाणो ब्रह्मभूयाय भवति । एष पन्थाः परिव्राजकानां वीराध्वनि वाऽनाशके वापां प्रवेशे वाग्निप्रवेशे वा महाप्रस्थाने वा । एष पन्था ब्रह्मणा हानुवित्तस्तेनेति

स संन्यासी ब्रह्मविदिति । एवमेवैष भगवन्निति वै याज्ञवल्क्य । तत्र परमहंसा नाम संवर्तकारुणिश्वेतकेतुदूर्वासऋभुनिदाघदत्तात्रेयशुकवामदेवहारीतकप्रभृतयोऽव्यक्तलिङ्गाऽव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तः परस्त्रीपुरपराङ्मुखास्त्रिदण्डं कमण्डलुं भुक्तपात्रं जलपवित्रं शिखां यज्ञोपवीतं बहिरन्तश्चेत्येतत्सर्वं भूः स्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेत् । यथा जातरूपधरा निर्द्वन्द्वा निष्परिग्रहास्तत्त्वब्रह्ममार्गे सम्यक्संपन्नाः शुद्धमानसाः प्राणसंधारणार्थं यथोक्तकाले विमुक्तो भैक्षमाचरन्नुदरपात्रेण लाभालाभौ समौ भूत्वा करपात्रेण वा कमण्डलूदकपो भैक्षमाचरन्नुदरमात्रसंग्रहः पात्रान्तरशून्यो जलस्थलकमण्डलुरबाधकरहःस्थलनिकेतनो लाभालाभौ समौ भूत्वा शून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रशालानदीपुलिनगिरिकुहरकोटरकन्दरनिर्झरस्थण्डिलेष्वनिकेतनिवास्यप्रयत्नः शुभाशुभकर्मनिर्मूलनपरः संन्यासेन देहत्यागं करोति स परमहंसो नामेति । आशाम्बरो ननमस्कारो नदारपुत्राभिलाषी लक्ष्यालक्ष्यनिर्वर्तकः परिव्राट् परमेश्वरो भवति । अत्रैते श्लोका भवन्ति--यो भवेत्पूर्वसंन्यासी तुल्यो वै धर्मतो यदि । तस्मै प्रणामः कर्तव्यो नेतराय कदाचन ॥ १ ॥ प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः । संन्यासिनोऽपि दृश्यन्ते देवसंदूषिताशयाः ॥ २ ॥ नामादिभ्यः परे भूम्नि स्वाराज्ये चेत्स्थितोऽद्वये । प्रणमेत्कं तदात्मज्ञो न कार्यं कर्मणा तदा ॥ ३ ॥ ईश्वरो जीवकलया प्रविष्टो भगवानिति । प्रणमेद्दण्डवद्भूमावाश्वचण्डालगोखरम् ॥ ४ ॥ मांसपाञ्चालिकायास्तु यन्त्रलोकेऽङ्गपञ्जरे । स्नाय्वस्थिग्रन्थिशालिन्यः स्त्रियः किमिव शोभनम् ॥५॥ त्वङ्मांसरक्तबाष्पाम्बु पृथक्कृत्वा विलोचने । समालोकय रम्यं चेत्किं मुधा परिमुह्यसि ॥६॥ मेरुशृङ्गतटोल्लासिगङ्गाजलरयोपमा । दृष्टा यस्मिन्मुने मुक्ताहारस्योल्लासशालिता ॥ ७ ॥ श्मशानेषु दिगन्तेषु स एव ललनास्तनः । श्वभिरास्वाद्यते काले लघुपिण्ड इवान्धसः ॥ ८ ॥ केशकज्जलधारिण्यो दुःस्पर्शा लोचनप्रियाः । दुष्कृताग्निशिखा नार्यो दहन्ति तृणवन्नरम् ॥ ९ ॥ ज्वलना अतिदूरेऽपि सरसा अपि नीरसाः । स्त्रियो हि नरकाग्नीनामिन्धनं चारु दारुणम् ॥ १० ॥ कामनाम्ना किरातेन विकीर्णा मुग्धचेतसः । नार्यो नरविहङ्गानामङ्गबन्धनवागुराः ॥ ११ ॥ जन्मपल्वलमत्स्यानां चित्तकर्दमचारिणाम् । पुंसां दुर्वासनारज्जुर्नारीबडिश-

पिण्डिका ॥ १२ ॥ सर्वेषां दोषरत्नानां सुसमुद्गिकयानया । दुःखशृङ्खलया नित्यमलमस्तु मम स्त्रिया ॥ १३ ॥ यस्य स्त्री तस्य भोगेच्छा निःस्त्रीकस्य क्व भोगभूः । स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत् ॥ १४ ॥ अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम् । लब्धो हि गर्भपातेन प्रसवेन च बाधते ॥ १५ ॥ जातस्य ग्रहरोगादि कुमारस्य च धूर्तता । उपनीतेऽप्यविद्यत्वमनुद्वाहश्च पण्डिते ॥ १६ ॥ यूनश्च परदारादि दारिद्र्यं च कुटुम्बिनः । पुत्रदुःखस्य नास्त्यन्तो धनी चेन्म्रियते तदा ॥ १७ ॥ न पाणिपादचपलो न नेत्रचपलो यतिः । न च वाक्चपलश्चैव ब्रह्मभूतो जितेन्द्रियः ॥ १८ ॥ रिपौ बद्धे स्वदेहे च समैकात्म्यं प्रपश्यतः । विवेकिनः कुतः कोपः स्वदेहावयवेष्विव ॥ १९ ॥ अपकारिणि कोपश्चेत्कोपे कोपः कथं न ते । धर्मार्थकाममोक्षाणां प्रसह्य परिपन्थिनि ॥ २० ॥ नमोऽस्तु मम कोपाय स्वाश्रयज्वालिने भृशम् । कोपस्य मम वैराग्यदायिने दोषबोधिने ॥ २१ ॥ यत्र सुप्ता जना नित्यं प्रबुद्धस्तत्र संयमी । प्रबुद्धा यत्र ते विद्वान्सुषुप्तिं याति योगिराट् ॥ २२ ॥ चिदिहास्तीति चिन्मात्रमिदं चिन्मयमेव च । चित्त्वं चिदहमेते च लोकाश्चिदिति भावय ॥ २३ ॥ यतीनां तदुपादेयं पारहंस्यं परं पदम् । नातः परतरं किंचिद्विद्यते मुनिपुङ्गव ॥ २४ ॥ इत्युपनिषत् ॥ हरिः ॐ तत्सत् ॥

ॐ पूर्णमद इति शान्तिः ॥

इति याज्ञवल्क्योपनिषत्समाप्ता ॥ १०१ ॥

---

# वराहोपनिषत् ॥ १०२ ॥

श्रीमद्वराहोपनिषद्वेद्याखण्डसुखाकृति ।
त्रिपान्नारायणाख्यं तद्रामचन्द्रपदं भजे ॥ १ ॥

ॐ स ह नाववत्विति शान्तिः ॥

हरिः ॐ ॥ अथ ऋभुर्वै महामुनिर्देवमानेन द्वादशवत्सरं तपश्चचार । तदवसाने वराहरूपी भगवान्प्रादुरभूत् । स होवाचोत्तिष्ठोत्तिष्ठ वरं वृणीष्वेति । सोदतिष्ठत् । तस्मै नमस्कृत्योवाच भगवन्कामिभिर्यद्यत्कामितं तत्तत्त्वत्सकाशात्स्वप्नेऽपि न याचे । समस्तवेदशास्त्रेतिहासपुराणानि समस्तविद्याजालानि ब्रह्मादयः सुराः सर्वे त्वद्रूपज्ञानान्मुक्तिमाहुः । अतस्त्वद्रूपप्रतिपादिकां ब्रह्मविद्यां ब्रूहीति होवाच । तथेति स होवाच वराहरूपी भगवान् । चतुर्विंशति-

तत्त्वानि केचिदिच्छन्ति वादिनः । केचित्षट्त्रिंशत्तत्त्वानि केचित्षण्णवतीनि च ॥ १ ॥ तेषां क्रमं प्रवक्ष्यामि सावधानमनाः शृणु । ज्ञानेन्द्रियाणि पञ्चैव श्रोत्रत्वग्लोचनादयः ॥ २ ॥ कर्मेन्द्रियाणि पञ्चैव वाक्पाण्यङ्घ्र्यादयः क्रमात् । प्राणादयस्तु पञ्चैव पञ्च शब्दादयस्तथा ॥ ३ ॥ मनोबुद्धिरहंकारश्चित्तं चेति चतुष्टयम् । चतुर्विंशतितत्त्वानि तानि ब्रह्मविदो विदुः ॥ ४ ॥ एतैस्तत्त्वैः समं पञ्चीकृतभूतानि पञ्च च । पृथिव्यापस्तथा तेजो वायुराकाशमेव च ॥ ५ ॥ देहत्रयं स्थूलसूक्ष्मकारणानि विदुर्बुधाः । अवस्थात्रितयं चैव जाग्रत्स्वप्नसुषुप्तयः ॥ ६ ॥ आहत्य तत्त्वजातानां षट्त्रिंशन्मुनयो विदुः । पूर्वोक्तैस्तत्त्वजातैस्तु समं तत्त्वानि योजयेत् ॥ ७ ॥ षड्भावविकृतिश्चास्ति जायते वर्धतेऽपि च । परिणामं क्षयं नाशं षड्भावविकृतिं विदुः ॥ ८ ॥ अशना च पिपासा च शोकमोहौ जरा मृतिः । एते षडूर्मयः प्रोक्ताः षट्कोशानथ वच्मि ते ॥ ९ ॥ त्वक्च रक्तं मांसमेदोमज्जास्थीनि निबोधत । कामक्रोधौ लोभमोहौ मदो मात्सर्यमेव च ॥ १० ॥ एतेऽरिषड्वा विश्वश्च तैजसः प्राज्ञ एव च । जीवत्रयं सत्त्वरजस्तमांसि च गुणत्रयम् ॥ ११ ॥ प्रारब्धागाम्यर्जितानि कर्मत्रयमितीरितम् । वचनादानगमनविसर्गानन्दपञ्चकम् ॥ १२ ॥ संकल्पोऽध्यवसायश्च अभिमानोऽवधारणा । मुदिता करुणा मैत्री उपेक्षा च चतुष्टयम् ॥ १३ ॥ दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमृत्युकाः । तथा चन्द्रश्चतुर्वक्त्रो रुद्रः क्षेत्रज्ञ ईश्वरः ॥ १४ ॥ आहत्य तत्त्वजातानां षण्णवत्यस्तु कीर्तिताः । पूर्वोक्ततत्त्वजातानां वैलक्षण्यमनामयम् ॥ १५ ॥ वराहरूपिणं मां ये भजन्ति मयि भक्तितः । विमुक्ताज्ञानतत्कार्या जीवन्मुक्ता भवन्ति ते ॥ १६ ॥ ये षण्णवतितत्त्वज्ञा यत्र कुत्राश्रमे रताः । जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः ॥ १७ ॥ इति ॥

इति वराहोपनिषत्सु प्रथमोऽध्यायः ॥ १ ॥

ऋभुर्नाम महायोगी क्रोडरूपं रमापतिम् । वरिष्ठां ब्रह्मविद्यां त्वमधीहि भगवन्मम ॥ १ ॥ एवं स पृष्टो भगवान्प्राह भक्तार्तिभञ्जनः । स्ववर्णाश्रमधर्मेण तपसा गुरुतोषणात् ॥ २ ॥ साधनं प्रभवेत्पुंसां वैराग्यादिचतुष्टयम् । नित्यानित्यविवेकश्च इहामुत्र विरागता ॥ ३ ॥ शमादिषट्कसंपत्तिर्मुमुक्षा तां समभ्यसेत् । एवं जितेन्द्रियो भूत्वा सर्वत्र ममतामतिम् ॥ ४ ॥ विहाय साक्षिचैतन्ये मयि कुर्यादहंमतिम् । दुर्लभं प्राप्य मानुष्यं तत्रापि नरविग्रहम्

॥५॥ ब्राह्मण्यं च महाविष्णोर्वेदान्तश्रवणादिना । अतिवर्णाश्रमं रूपं सच्चिदानन्दलक्षणम् ॥६॥ यो न जानाति सोऽविद्वान्कदा मुक्तो भविष्यति । अहमेव सुखं नान्यदन्यच्चेन्नैव तत्सुखम् ॥७॥ अमदर्थं न हि प्रेयो मदर्थं न स्वतःप्रियम् । परप्रेमास्पदतया मा न भूवमहं सदा ॥ ८ ॥ भूयासमिति यो द्रष्टा सोऽहं विष्णुर्मुनीश्वर । न प्रकाशोऽहमित्युक्तिर्यत्प्रकाशैकबन्धना ॥ ९ ॥ स्वप्रकाशं तमात्मानमप्रकाशः कथं स्पृशेत् । स्वयं भातं निराधारं ये जानन्ति सुनिश्चितम् ॥ १० ॥ ते हि विज्ञानसंपन्ना इति मे निश्चिता मतिः । स्वपूर्णात्मातिरेकेण जगज्जीवेश्वरादयः ॥ ११ ॥ न सन्ति नास्ति माया च तेभ्यश्चाहं विलक्षणः । अज्ञानान्धतमोरूपं कर्मधर्मादिलक्षणम् ॥ १२ ॥ स्वयंप्रकाशमात्मानं नैव मां स्प्रष्टुमर्हति । सर्वसाक्षिणमात्मानं वर्णाश्रमविवर्जितम् ॥ १३ ॥ ब्रह्मरूपतया पश्यन्ब्रह्मैव भवति स्वयम् । भासमानमिदं सर्वं मानरूपं परं पदम् ॥ १४ ॥ पश्यन्वेदान्तमानेन सद्य एव विमुच्यते । देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् ॥ १५ ॥ आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते । सत्यज्ञानानन्दपूर्णलक्षणं तमसः परम् ॥ १६ ॥ ब्रह्मानन्दं सदा पश्यन्कथं बध्येत कर्मणा । त्रिधामसाक्षिणं सत्यज्ञानानन्दादिलक्षणम् ॥ १७ ॥ त्वमहंशब्दलक्ष्यार्थमसक्तं सर्वदोषतः । सर्वगं सच्चिदात्मानं ज्ञानचक्षुर्निरीक्षते ॥ १८ ॥ अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत् । प्रज्ञानमेव तद्ब्रह्म सत्यप्रज्ञानलक्षणम् ॥ १९ ॥ एवं ब्रह्मपरिज्ञानादेव मर्त्योऽमृतो भवेत् । तद्ब्रह्मानन्दमद्वन्द्वं निर्गुणं सत्यचिद्घनम् ॥ २० ॥ विदित्वा स्वात्मनो रूपं न बिभेति कुतश्चन । चिन्मात्रं सर्वगं नित्यं संपूर्णं सुखमद्वयम् ॥ २१ ॥ साक्षाद्ब्रह्मैव नान्योऽस्तीत्येवं ब्रह्मविदां स्थितिः । अज्ञस्य दुःखौघमयं ज्ञस्यानन्दमयं जगत् ॥ २२ ॥ अन्धं भुवनमन्धस्य प्रकाशं तु सुचक्षुषाम् । अनन्ते सच्चिदानन्दे मयि वाराहरूपिणि ॥ २३ ॥ स्थितेऽद्वितीयभावः स्यात्को बद्धः कश्च मुच्यते । स्वस्वरूपं तु चिन्मात्रं सर्वदा सर्वदेहिनाम् ॥ २४ ॥ नैव देहादिसंघातो घटवद्दृशिगोचरः । स्वात्मनोऽन्यदिवाभातं चराचरमिदं जगत् ॥ २५ ॥ स्वात्ममात्रतया बुद्ध्वा तदस्मीति विभावय । स्वस्वरूपं स्वयं भुङ्क्ते नास्ति भोज्यं पृथक् स्वतः ॥ २६ ॥ अस्ति चेदस्तितारूपं ब्रह्मैवास्तित्वलक्षणम् । ब्रह्मविज्ञानसंपन्नः प्रतीतमखिलं जगत् ॥ २७ ॥ पश्यन्नपि सदा नैव पश्यति स्वात्मनः पृथक् । मत्स्वरूपपरिज्ञानात्कर्मभिर्न स बध्यते ॥ २८ ॥

यः शरीरेन्द्रियादिभ्यो विहीनं सर्वसाक्षिणम् । परमार्थैकविज्ञानं सुखात्मानं स्वयंप्रभम् ॥ २९ ॥ स्वस्वरूपतया सर्वं वेद स्वानुभवेन यः । स धीरः स तु विज्ञेयः सोऽहंतत्त्वं ऋभो भव ॥ ३० ॥ अतः प्रपञ्चानुभवः सदा न हि स्वरूपबोधानुभवः सदा खलु । इति प्रपश्यन्परिपूर्णवेदनो न बन्धमुक्तो न च बद्ध एव तु ॥ ३१ ॥ स्वस्वरूपानुसंधानान्नृत्यन्तं सर्वसाक्षिणम् । मुहूर्तं चिन्तयेन्मां यः सर्वबन्धैः प्रमुच्यते ॥ ३२ ॥ सर्वभूतान्तरस्थाय नित्यमुक्त-चिदात्मने । प्रत्यक्चैतन्यरूपाय मह्यमेव नमो नमः ॥ ३३ ॥ त्वं वाऽहमस्मि भगवो देव तेऽहं वै त्वमसि । तुभ्यं मह्यमनन्ताय मह्यं तुभ्यं चिदात्मने ॥ ३४ ॥ नमो मह्यं परेशाय नमस्तुभ्यं शिवाय च । किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ॥ ३५ ॥ यन्मया पूरितं विश्वं महाकल्पाम्बुना यथा । अन्तःसङ्गं बहिःसङ्गमात्मसङ्गं च यस्त्यजेत् । सर्वसङ्गनिवृत्तात्मा स मामेति न संशयः ॥ ३६ ॥ अहिरिव जनयोगं सर्वदा वर्जयेद्यः कुणपमिव सुनारीं त्यक्तुकामो विरागी । विषमिव विषयादीन्मन्यमानो दुरन्ताञ्जगति परमहंसो वासुदेवोऽहमेव ॥ ३७ ॥ इदं सत्यमिदं सत्यं सत्यमेतदिहोच्यते । अहं सत्यं परं ब्रह्म मत्तः किंचिन्न विद्यते ॥ ३८ ॥ उप समीपे यो वासो जीवात्मपरमात्मनोः । उपवासः स विज्ञेयो न तु कायस्य शोषणम् ॥ ३९ ॥ कायशोषणमात्रेण का तत्र ह्यविवेकिनाम् । वल्मीकताडनादेव मृतः किं नु महोरगः ॥ ४० ॥ अस्ति ब्रह्मेति चेद्वेद परोक्षज्ञानमेव तत् । अहंब्रह्मेति चेद्वेद साक्षात्कारः स उच्यते ॥ ४१ ॥ यस्मिन्काले स्वमात्मानं योगी जानाति केवलम् । तस्मात्कालात्समारभ्य जीवन्मुक्तो भवेदसौ ॥ ४२ ॥ अहंब्रह्मेति नियतं मोक्षहेतुर्महात्मनाम् । द्वे पदे बन्धमोक्षाय निर्ममेति ममेति च ॥ ४३ ॥ ममेति बध्यते जन्तुर्निर्ममेति विमुच्यते । बाह्यचिन्ता न कर्तव्या तथैवान्तरचिन्तिका । सर्वचिन्तां समुत्सृज्य स्वस्थो भव सदा ऋभो ॥ ४४ ॥ संकल्पमात्रकलनेन जगत्समग्रं संकल्पमात्रकलने हि जगद्विलासः । संकल्प-मात्रमिदमुत्सृज निर्विकल्पमाश्रित्य मामकपदं हृदि भावयस्व ॥ ४५ ॥ मच्चि-न्तनं मत्कथनमन्योन्यं मत्प्रभाषणम् । मदेकपरमो भूत्वा कालं नय महा-मते ॥ ४६ ॥ चिदिहास्तीति चिन्मात्रमिदं चिन्मयमेव च । चित्त्वं चिदहमेते च लोकाश्चिदिति भावय ॥ ४७ ॥ सगं नीरागतां नीत्वा निर्लेपो भव सर्वदा । अज्ञानजन्यकर्त्रादिकारकोत्पन्नकर्मणा ॥ ४८ ॥ श्रुत्युत्पन्नात्मविज्ञान-

प्रदीपो बाध्यते कथम् । अनात्मतां परित्यज्य निर्विकारो जगत्स्थितौ ॥ ४९ ॥ एकनिष्ठतयान्तःस्थसंविन्मात्रपरो भव । घटाकाशमठाकाशौ महाकाशे प्रतिष्ठितौ ॥ ५० ॥ एवं मयि चिदाकाशे जीवेशौ परिकल्पितौ । या च प्रागात्मनो माया तथान्ते च तिरस्कृता ॥५१॥ ब्रह्मवादिभिरुद्गीता सा मायेति विवेकतः । माया-तत्कार्यविलये नेश्वरत्वं न जीवता ॥ ५२ ॥ ततः शुद्धश्चिदेवाहं व्योमवन्निरुपा-धिकः । जीवेश्वरादिरूपेण चेतनाचेतनात्मकम् ॥ ५३ ॥ ईक्षणादिप्रवेशान्ता सृष्टिरीशेन कल्पिता । जाग्रदादिविमोक्षान्तः संसारो जीवकल्पितः ॥ ५४ ॥ त्रिणाचिकादियोगान्ता ईश्वरभ्रान्तिमाश्रिताः । लोकायतादिसांख्यान्ता जीवविश्रान्तिमाश्रिताः ॥ ५५ ॥ तस्मान्मुमुक्षुभिर्नैव मतिर्जीवेशवादयोः । कार्या किंतु ब्रह्मतत्त्वं निश्चलेन विचार्यताम् ॥ ५६ ॥ अद्वितीयब्रह्मतत्त्वं न जानन्ति यथा तथा । भ्रान्ता एवाखिलास्तेषां क्व मुक्तिः क्वेह वा सुखम् ॥ ५७ ॥ उत्तमाधमभावश्चेत्तेषां स्यादस्ति तेन किम् । स्वप्नस्थराज्यभिक्षाभ्यां प्रबुद्धः स्पृशते खलु ॥ ५८ ॥ अज्ञाने बुद्धिविलये निद्रा सा भण्यते बुधैः । विलीनाज्ञानतत्कार्ये मयि निद्रा कथं भवेत् ॥ ५९ ॥ बुद्धेः पूर्णविकासोऽयं जागरः परिकीर्त्यते । विकारादिविहीनत्वाज्जागरो मे न विद्यते ॥ ६० ॥ सूक्ष्मनाडिषु संचारो बुद्धेः स्वप्नः प्रजायते । संचारधर्मरहिते मयि स्वप्नो न विद्यते ॥ ६१ ॥ सुषुप्तिकाले सकले विलीने तमसावृते । स्वरूपं महदा-नन्दं भुङ्क्ते विश्वविवर्जितः ॥ ६२ ॥ अविशेषेण सर्वं तु यः पश्यति चिदन्व-यात् । स एव साक्षाद्विज्ञानी स शिवः स हरिर्विधिः ॥ ६३ ॥ दीर्घस्वप्नमिदं यत्तदीर्घं वा चित्तविभ्रमम् । दीर्घं वापि मनोराज्यं संसारं दुःखसागरम् । सुप्तेरुत्थाय सुप्त्यन्तं ब्रह्मैकं प्रविचिन्त्यताम् ॥ ६४ ॥ आरोपितस्य जगतः प्रविलापनेन चित्तं मदात्मकतया परिकल्पितं नः । शत्रून्निहत्य गुरुषड्कगणा-न्निपाताद्गन्धद्विपो भवति केवलमद्वितीयः ॥ ६५ ॥ अद्यास्तमेतु वपुराशशि-तारमास्तां कस्तावतापि मम चिद्वपुषो विशेषः । कुम्भे विनश्यति चिरं सम-वस्थिते वा कुम्भाम्बरस्य नहि कोऽपि विशेषलेशः ॥ ६६ ॥ अहिनिर्ल्वयनी सर्पनिर्मोको जीववर्जितः । वल्मीके पतितस्तिष्ठेत्तं सर्पो नाभिमन्यते ॥ ६७ ॥ एवं स्थूलं च सूक्ष्मं च शरीरं नाभिमन्यते । प्रत्यग्ज्ञानशिखिध्वस्ते मिथ्या-ज्ञाने सहेतुके । नेति नेतीति रूपत्वादशरीरो भवत्ययम् ॥ ६८ ॥ शास्त्रेण

न स्यात्परमार्थदृष्टिः कार्यक्षमं पश्यति चापरोक्षम् । प्रारब्धनाशात्प्रतिभाननाश एवं त्रिधा नश्यति चात्ममाया ॥ ६९ ॥ ब्रह्मत्वे योजिते स्वामिञ्जीवभावो न गच्छति । अद्वैते बोधिते तत्त्वे वासना विनिवर्तते ॥ ७० ॥ प्रारब्धान्ते देहहानिर्मायेति क्षीयतेऽखिला । अस्तीत्युक्ते जगत्सर्वं सद्रसं ब्रह्म तद्भवेत् ॥ ७१ ॥ भातीत्युक्ते जगत्सर्वं भानं ब्रह्मैव केवलम् । मरुभूमौ जलं सर्वं मरुभूमात्रमेव तत् । जगत्त्रयमिदं सर्वं चिन्मात्रं स्वविचारतः ॥ ७२ ॥ अज्ञानमेव न कुतो जगतः प्रसङ्गो जीवेशदेशिकविकल्पकथातिदूरे । एकान्तकेवलचिदेकरसस्वभावे ब्रह्मैव केवलमहं परिपूर्णमस्मि ॥ ७३ ॥ बोधचन्द्रमसि पूर्णविग्रहे मोहराहुमुषितात्मतेजसि । स्नानदानयजनादिकाः क्रिया मोचनावधि वृथैव तिष्ठते ॥ ७४ ॥ सलिले सैन्धवं यद्वत्साम्यं भवति योगतः । तथाऽऽत्ममनसोरैक्यं समाधिरिति कथ्यते ॥ ७५ ॥ दुर्लभो विषयत्यागो दुर्लभं तत्त्वदर्शनम् । दुर्लभा सहजावस्था सद्गुरोः करुणां विना ॥ ७६ ॥ उत्पन्नशक्तिबोधस्य त्यक्तनिःशेषकर्मणः । योगिनः सहजावस्था स्वयमेव प्रकाशते ॥ ७७ ॥ रसस्य मनसश्चैव चञ्चलत्वं स्वभावतः । रसो बद्धो मनो बद्धं किं न सिद्ध्यति भूतले ॥ ७८ ॥ मूर्च्छितो हरति व्याधिं मृतो जीवयति स्वयम् । बद्धः खेचरतां धत्ते ब्रह्मत्वं रसचेतसि ॥ ७९ ॥ इन्द्रियाणां मनो नाथो मनोनाथस्तु मारुतः । मारुतस्य लयो नाथस्तन्नाथं लयमाश्रय ॥ ८० ॥ निश्चेष्टो निर्विकारश्च लयो जीवति योगिनाम् । उच्छिन्नसर्वसंकल्पो निःशेषाशेषचेष्टितः । स्वावगम्यो लयः कोऽपि मनसां वागगोचरः ॥ ८१ ॥ पुङ्खानुपुङ्खविषयेक्षणतत्परोऽपि ब्रह्मावलोकनधियं न जहाति योगी । सङ्गीततालल‌यवाद्यवशं गतापि मौलिस्थकुम्भपरिरक्षणधीर्नटीव ॥ ८२ ॥ सर्वचिन्तां परित्यज्य सावधानेन चेतसा । नाद एवानुसंधेयो योगसाम्राज्यमिच्छता ॥ ८३ ॥ इति ॥

इति वराहोपनिषत्सु द्वितीयोऽध्यायः ॥ २ ॥

नहि नानास्वरूपं स्यादेकं वस्तु कदाचन । तस्मादखण्ड एवास्मि यन्मदन्यन्न किंचन ॥ १ ॥ दृश्यते श्रूयते यद्यद्ब्रह्मणोऽन्यन्न तद्भवेत् । नित्यशुद्धविमुक्तैकमखण्डानन्दमद्वयम् । सत्यं ज्ञानमनन्तं यत्परं ब्रह्माहमेव तत् ॥ २ ॥ आनन्दरूपोऽहमखण्डबोधः परात्परोऽहं घनचित्प्रकाशः । मेघा यथा व्योम न च स्पृशन्ति संसारदुःखानि न मां स्पृशन्ति ॥ ३ ॥ सर्वं सुखं विद्धि

सुदुःखनाशात्सर्वं च सद्रूपमसत्यनाशात् । चिद्रूपमेव प्रतिभानयुक्तं तस्मादखण्डं मम रूपमेतत् ॥ ४ ॥ न हि जनिर्मरणं गमनागमौ न च मलं विमलं न च वेदनम् । चिन्मयं हि सकलं विराजते स्फुटतरं परमस्य तु योगिनः ॥ ५ ॥ सत्यचिद्घनमखण्डमद्वयं सर्वदृश्यरहितं निरामयम् । यत्पदं विमलमद्वयं शिवं तत्सदाऽहमिति मौनमाश्रय ॥ ६ ॥ जन्ममृत्युसुखदुःखवर्जितं जातिनीतिकुलगोत्रदूरगम् । चिद्विवर्तजगतोऽस्य कारणं तत्सदाऽहमिति मौनमाश्रय ॥ ७ ॥ पूर्णमद्वयमखण्डचेतनं विश्वभेदकलनादिवर्जितम् । अद्वितीयपरसंविदंशकं तत्सदाऽहमिति मौनमाश्रय ॥ ८ ॥ केनाप्यबाधितत्वेन त्रिकालेऽप्येकरूपतः । विद्यमानत्वमस्त्येतत्सद्रूपत्वं सदा मम ॥ ९ ॥ निरुपाधिकनित्यं यत्सुप्तौ सर्वसुखात्परम् । सुखरूपत्वमस्त्येतदानन्दत्वं सदा मम ॥ १० ॥ दिनकरकिरणैर्हि शार्वरं तमो निबिडतरं झटिति प्रणाशमेति । घनतरभवकारणं तमो यद्धरिदिनकृत्प्रभया न चान्तरेण ॥ ११ ॥ मम चरणस्मरणेन पूजया च स्वकतमसः परिमुच्यते हि जन्तुः । न हि मरणप्रभवप्रणाशहेतुर्मम चरणस्मरणादृतेऽस्ति किंचित् ॥ १२ ॥ आदरेण यथा स्तौति धनवन्तं धनेच्छया । तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥ १३ ॥ आदित्यसंनिधौ लोकश्चेष्टते स्वयमेव तु । तथा मत्संनिधावेव समस्तं चेष्टते जगत् ॥ १४ ॥ शुक्तिकाया यथा तारं कल्पितं मायया तथा । महदादिजगन्मायामयं मय्येव केवलम् ॥ १५ ॥ चण्डालदेहे पश्वादिस्थावरे ब्रह्मविग्रहे । अन्येषु तारतम्येन स्थितेषु न तथा ह्यहम् ॥ १६ ॥ विनष्टदिग्भ्रमस्यापि यथापूर्वं विभाति दिक् । तथा विज्ञानविध्वस्तं जगन्मे भाति तन्न हि ॥ १७ ॥ न देहो नेन्द्रियप्राणो न मनोबुद्ध्यहंकृति । न चित्तं नैव माया च न च व्योमादिकं जगत् ॥ १८ ॥ न कर्ता नैव भोक्ता च न च भोजयिता तथा । केवलं चित्सदानन्दब्रह्मैवाहं जनार्दनः ॥ १९ ॥ जलस्य चलनादेव चञ्चलत्वं यथा रवेः । तथाऽहंकारसंबन्धादेव संसार आत्मनः ॥ २० ॥ चित्तमूलं हि संसारस्तत्प्रयत्नेन शोधयेत् । हन्त चित्तमहत्तायां कैषा विश्वासता तव ॥ २१ ॥ क्व धनानि महीपानां ब्राह्मणः क्व जगन्ति वा । प्राक्तनानि प्रयातानि गताः सर्गपरम्पराः । कोटयो ब्रह्मणां याता भूपा नष्टाः परागवत् ॥ २२ ॥ स चाध्यात्माभिमानोऽपि विदुषोऽप्यासुरत्वतः । विदुषोऽप्यासुर-

श्चेत्स्यान्निष्फलं तत्त्वदर्शनम् ॥ २३ ॥ उत्पाद्यमाना रागाद्या विवेकज्ञानवह्निना । यदा तदैव दह्यन्ते कुतस्तेषां प्ररोहणम् ॥ २४ ॥ यथा सुनिपुणः सम्यक् परदोषेक्षणे रतः । तथा चेन्निपुणः स्वेषु को न मुच्येत बन्धनात् ॥ २५ ॥ अनात्मविदमुक्तोऽपि सिद्धिजालानि वाञ्छति । द्रव्यमन्त्रक्रियाकालयुक्त्याप्नोति मुनीश्वर ॥ २६ ॥ नात्मज्ञस्यैष विषय आत्मज्ञो ह्यात्ममात्रदृक् । आत्मनाऽऽत्मनि संतृप्तो नाविद्यामनुधावति ॥ २७ ॥ ये केचन जगद्भावास्तानविद्यामयान्विदुः । कथं तेषु किलात्मज्ञस्त्यक्ताविद्यो निमज्जति ॥ २८ ॥ द्रव्यमन्त्रक्रियाकालयुक्तयः साधुसिद्धिदाः । परमात्मपदप्राप्तौ नोपकुर्वन्ति काश्चन ॥ २९ ॥ सर्वेच्छाकलनाशान्तावात्मलाभोदयाभिधः । स पुनःसिद्धिवाञ्छायां कथमर्हत्यचित्ततः ॥ ३० ॥ इति ॥

इति वराहोपनिषत्सु तृतीयोऽध्यायः ॥ ३ ॥

अथ ह ऋभुं भगवन्तं निदाघः पप्रच्छ जीवन्मुक्तिलक्षणमनुब्रूहीति । तथेति स होवाच । सप्तभूमिषु जीवन्मुक्ताश्चत्वारः । शुभेच्छा प्रथमा भूमिका भवति । विचारणा द्वितीया । तनुमानसी तृतीया । सत्त्वापत्तिस्तुरीया । असंसक्तिः पञ्चमी । पदार्थभावना षष्ठी । तुरीयगा सप्तमी । प्रणवात्मिका भूमिकाऽकारोकारमकारार्धमात्रात्मिका । स्थूलसूक्ष्मबीजसाक्षिभेदेनाकारादयश्चतुर्विधाः । तदवस्था जाग्रत्स्वप्नसुषुप्तितुरीयाः । अकारस्थूलांशे जाग्रद्विश्वः । सूक्ष्मांशे तत्तैजसः । बीजांशे तत्प्राज्ञः । साक्ष्यंशे तत्तुरीयः । उकारस्थूलांशे स्वप्नविश्वः । सूक्ष्मांशे तत्तैजसः । बीजांशे तत्प्राज्ञः । साक्ष्यंशे तत्तुरीयः । मकारस्थूलांशे सुषुप्तविश्वः । सूक्ष्मांशे तत्तैजसः । बीजांशे तत्प्राज्ञः । साक्ष्यंशे तत्तुरीयः । अर्धमात्रास्थूलांशे तुरीयविश्वः । सूक्ष्मांशे तत्तैजसः । बीजांशे तत्प्राज्ञः । साक्ष्यंशे तुरीयतुरीयः । अकारतुरीयांशाः प्रथमद्वितीयतृतीयभूमिकाः । उकारतुरीयांशा चतुर्थी भूमिका । मकारतुरीयांशा पञ्चमी । अर्धमात्रातुरीयांशा षष्ठी । तदतीता सप्तमी । भूमित्रयेषु विहरन्मुमुक्षुर्भवति । तुरीयभूम्यां विहरन्ब्रह्मविद्भवति । पञ्चमभूम्यां विहरन्ब्रह्मविद्वरो भवति । षष्ठभूम्यां विहरन्ब्रह्मविद्वरीयान्भवति । सप्तमभूम्यां विहरन्ब्रह्मविद्वरिष्ठो भवति । तत्रैते श्लोका भवन्ति—ज्ञानभूमिः शुभेच्छा स्यात्प्रथमा समुदीरिता । विचारणा द्वितीया तु तृतीया तनुमानसी ॥ १ ॥ सत्त्वापत्तिश्चतुर्थी स्यात्ततो-

ऽसंसक्तिनामिका । पदार्थभावना षष्ठी सप्तमी तुर्यगा स्मृता ॥ २ ॥ स्थितः किंमूढ एवास्मि प्रेक्ष्योऽहं शास्त्रसज्जनैः । वैराग्यपूर्वमिच्छेति शुभेच्छेत्युच्यते बुधैः ॥ ३ ॥ शास्त्रसज्जनसंपर्कवैराग्याभ्यासपूर्वकम् । सदाचारप्रवृत्तिर्या प्रोच्यते सा विचारणा ॥ ४ ॥ विचारणाशुभेच्छाभ्यामिन्द्रियार्थेषु रक्तता । यत्र सा तनुतामेति प्रोच्यते तनुमानसी ॥ ५ ॥ भूमिकात्रितयाभ्यासाच्चित्तेऽर्थविरतेर्वशात् । सत्त्वात्मनि स्थिते शुद्धे सत्त्वापत्तिरुदाहृता ॥६॥ दशाचतुष्टयाभ्यासादसंसर्गफला तु या । रूढसत्त्वचमत्कारा प्रोक्ता संसक्तिनामिका ॥ ७ ॥ भूमिकापञ्चकाभ्यासात्स्वात्मारामतया भृशम् । आभ्यन्तराणां बाह्यानां पदार्थानामभावनात् ॥ ८ ॥ परप्रयुक्तेन चिरं प्रत्ययेनावबोधनम् । पदार्थभावना नाम षष्ठी भवति भूमिका ॥ ९ ॥ षड्भूमिकाचिराभ्यासाद्भेदस्यानुपलम्भनात् । यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिः ॥१०॥ शुभेच्छादित्रयं भूमिभेदाभेदयुतं स्मृतम् । तथावद्वेद बुद्ध्येदं जगज्जाग्रति दृश्यते ॥ ११ ॥ अद्वैते स्थैर्यमायाते द्वैते च प्रशमं गते । पश्यन्ति स्वप्नवल्लोकं तुर्यभूमिसुयोगतः ॥ १२ ॥ विच्छिन्नशरदभ्रांशविलयं प्रविलीयते । सत्त्वावशेष एवास्ते हे निदाघ दृढीकुरु ॥ १३ ॥ पञ्चभूमिं समारुह्य सुषुप्तिपदनामिकाम् । शान्ताशेषविशेषांशस्तिष्ठत्यद्वैतमात्रके ॥ १४ ॥ अन्तर्मुखतया नित्यं बहिर्वृत्तिपरोऽपि सन् । परिश्रान्ततया नित्यं निद्रालुरिव लक्ष्यते ॥१५॥ कुर्वन्नभ्यासमेतस्यां भूम्यां सम्यग्विवासनः । सप्तमी गाढसुप्त्याख्या क्रमप्राप्ता पुरातनी ॥ १६ ॥ यत्र नासन्न सद्रूपो नाहं नाप्यनहंकृतिः । केवलं क्षीणमनन आस्तेऽद्वैतेऽतिनिर्भयः ॥ १७ ॥ अन्तःशून्यो बहिःशून्यः शून्यकुम्भ इवाम्बरे । अन्तःपूर्णो बहिःपूर्णः पूर्णकुम्भ इवार्णवे ॥ १८ ॥ मा भव ग्राह्यभावात्मा ग्राहकात्मा च मा भव । भावनामखिलां त्यक्त्वा यच्छिष्टं तन्मयो भव ॥ १९ ॥ द्रष्टृदर्शनदृश्यानि त्यक्त्वा वासनया सह । दर्शनप्रथमाभासमात्मानं केवलं भज ॥ २० ॥ यथास्थितमिदं यस्य व्यवहारवतोऽपि च । अस्तङ्गतं स्थितं व्योम स जीवन्मुक्त उच्यते ॥ २१ ॥ नोदेति नास्तमायाति सुखे दुःखे मनःप्रभा । यथाप्राप्तस्थितिर्यस्य स जीवन्मुक्त उच्यते ॥२२॥ यो जागर्ति सुषुप्तिस्थो यस्य जाग्रन्न विद्यते । यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥ २३ ॥ रागद्वेषभयादीनामनुरूपं चरन्नपि । योऽन्तर्व्योमवदच्छन्नः स जीवन्मुक्त उच्यते ॥ २४ ॥ यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते । कुर्वतोऽकुर्वतो वापि स जीवन्मुक्त उच्यते ॥ २५ ॥ यस्मान्नो-

द्विजते लोको लोकान्नोद्विजते च यः । हर्षामर्षभयोन्मुक्तः स जीवन्मुक्त उच्यते ॥ २६ ॥ यः समस्तार्थजालेषु व्यवहार्यपि शीतलः । परार्थेष्विव पूर्णात्मा स जीवन्मुक्त उच्यते ॥ २७ ॥ प्रजहाति यदा कामान्सर्वांश्चित्त-गतान्मुने । मयि सर्वात्मके तुष्टः स जीवन्मुक्त उच्यते ॥ २८ ॥ चैत्यवर्जित-चिन्मात्रे पदे परमपावने । अक्षुब्धचित्तो विश्रान्तः स जीवन्मुक्त उच्यते ॥ २९ ॥ इदं जगदहं सोऽयं दृश्यजातमवास्तवम् । यस्य चित्ते न स्फुरति स जीवन्मुक्त उच्यते ॥ ३० ॥ सद्ब्रह्मणि स्थिरे स्फारे पूर्णे विषयवर्जिते । आचार्यशास्त्रमार्गेण प्रविश्याशु स्थिरो भव ॥ ३१ ॥ शिवो गुरुः शिवो वेदः शिवो देवः शिवः प्रभुः । शिवोऽस्म्यहं शिवः सर्वं शिवादन्यन्न किंचन ॥३२॥ तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तत् ॥ ३३ ॥ शुको मुक्तो वामदेवोऽपि मुक्तस्ताभ्यां विना मुक्तिभाजो न सन्ति । शुकमार्गं येऽनुसरन्ति धीराः सद्यो मुक्तास्ते भव-न्तीह लोके ॥ ३४ ॥ वामदेवं येऽनुसरन्ति नित्यं मृत्वा जनित्वा च पुनःपुन-स्तत् । ते वै लोके क्रममुक्ता भवन्ति योगैः सांख्यैः कर्मभिः सत्त्वयुक्तैः ॥ ३५ ॥ शुकश्च वामदेवश्च द्वे सृती देवनिर्मिते । शुको विहङ्गमः प्रोक्तो वामदेवः पिपीलिका ॥ ३६ ॥ अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन वा । महावाक्यविचारेण सांख्ययोगसमाधिना ॥ ३७ ॥ विदित्वा स्वात्मनो रूपं संप्रज्ञातसमाधितः । शुकमार्गेण विरजाः प्रयान्ति परमं पदम् ॥ ३८ ॥ यमाद्यासनजायासहठाभ्यासात्पुनःपुनः । विघ्नबाहुल्यसंजात अणिमादिवशा-दिह ॥ ३९ ॥ अलब्ध्वापि फलं सम्यक्पुनर्भूत्वा महाकुले । पुनर्वासनयैवायं योगाभ्यासं पुनश्चरन् ॥ ४० ॥ अनेकजन्माभ्यासेन वामदेवेन वै पथा । सोऽपि मुक्तिं समाप्नोति तद्विष्णोः परमं पदम् ॥ ४१ ॥ द्वाविमावपि पन्थानौ ब्रह्मप्राप्तिकरौ शिवौ । सद्योमुक्तिप्रदश्चैकः क्रममुक्तिप्रदः परः । अत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ४२ ॥ यस्यानुभवपर्यन्ता बुद्धिस्तत्त्वे प्रव-र्तते । तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वपातकैः ॥ ४३ ॥ खेचरा भूचराः सर्वे ब्रह्मविद्दृष्टिगोचराः । सद्य एव विमुच्यन्ते कोटिजन्मार्जितैरघैः ॥ ४४ ॥ इति ॥

इति वराहोपनिषत्सु चतुर्थोऽध्यायः ॥ ४ ॥

अथ हैनं ऋभुं भगवन्तं निदाघः पप्रच्छ योगाभ्यासविधिमनुब्रूहीति । तथेति स होवाच । पञ्चभूतात्मको देहः पञ्चमण्डलपूरितः । काठिन्यं

पृथिवीमेका पानीयं तद्द्रवाकृति ॥ १ ॥ दीपनं च भवेत्तेजः प्रचारो वायुलक्षणम् । आकाशः सत्त्वतः सर्वं ज्ञातव्यं योगमिच्छता ॥ २ ॥ षट्शतान्यधिकान्यत्र सहस्राण्येकविंशतिः । अहोरात्रवहैः श्वासैर्वायुमण्डलघाततः ॥ ३ ॥ तत्पृथ्वीमण्डले क्षीणे वलिरायाति देहिनाम् । तद्वदापो गणापाये केशाः स्युः पाण्डुराः क्रमात् ॥ ४ ॥ तेजःक्षये क्षुधा कान्तिर्नश्यते मारुतक्षये । वेपथुः संभवेन्नित्यं नाम्भसेनैव जीवति ॥ ५ ॥ इत्थंभूतं क्षयान्नित्यं जीवितं भूतधारणम् । उड्याणं कुरुते यस्मादविश्रान्तं महाखगः ॥ ६ ॥ उड्डियाणं तदेव स्यात्तत्र बन्धोऽभिधीयते । उड्डियाणो ह्यसौ बन्धो मृत्युमातङ्गकेसरी ॥ ७ ॥ तस्य मुक्तिस्तनोः कायात्तस्य बन्धो हि दुष्करः । अग्नौ तु चालते कुक्षौ वेदना जायते भृशम् ॥ ८ ॥ न कार्या क्षुधितेनापि नापि विण्मूत्रवेगिना । हितं मितं च भोक्तव्यं स्तोकं स्तोकमनेकधा ॥ ९ ॥ मृदुमध्यममन्त्रेषु क्रमान्मन्त्रं लयं हठम् । लयमन्त्रहठा योगा योगो ह्यष्टाङ्गसंयुतः ॥ १० ॥ यमश्च नियमश्चैव तथा चासनमेव च । प्राणायामस्तथा पश्चात्प्रत्याहारस्तथा परम् ॥ ११ ॥ धारणा च तथा ध्यानं समाधिश्चाष्टमो भवेत् । अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ॥ १२ ॥ क्षमा धृतिर्मिताहारः शौचं चेति यमा दश । तपः सन्तोषमास्तिक्यं दानमीश्वरपूजनम् ॥ १३ ॥ सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो व्रतम् । एते हि नियमाः प्रोक्ता दशधैव महामते ॥ १४ ॥ एकादशासनानि स्युश्चक्रादि मुनिसत्तम । चक्रं पद्मासनं कूर्मं मयूरं कुक्कुटं तथा ॥ १५ ॥ वीरासनं स्वस्तिकं च भद्रं सिंहासनं तथा । मुक्तासनं गोमुखं च कीर्तितं योगवित्तमैः ॥ १६ ॥ सव्योरु दक्षिणे गुल्फे दक्षिणं दक्षिणेतरे । निदध्यादृजुकायस्तु चक्रासनमिदं मतम् ॥ १७ ॥ पूरकः कुम्भकस्तद्वद्रेचकः पूरकः पुनः । प्राणायामः स्वनाडीभिस्तस्मान्नाडीः प्रचक्षते ॥ १८ ॥ शरीरं सर्वजन्तूनां षण्णवत्यङ्गुलात्मकम् । तन्मध्ये पायुदेशात्तु द्व्यङ्गुलात्परतः परम् ॥ १९ ॥ मेढ्रदेशादधस्तात्तु द्व्यङ्गुलान्मध्यमुच्यते । मेढ्रान्नवाङ्गुलादूर्ध्वं नाडीनां कन्दमुच्यते ॥ २० ॥ चतुरङ्गुलमुत्सेधं चतुरङ्गुलमायतम् । अण्डाकारं परिवृतं मेदोमज्जास्थिशोणितैः ॥ २१ ॥ तत्रैव नाडीचक्रं तु द्वादशारं प्रतिष्ठितम् । शरीरं ध्रियते येन वर्तते तत्र कुण्डली ॥ २२ ॥ ब्रह्मरन्ध्रं सुषुम्ना या वदनेन पिधाय सा । अलम्बुसा सुषुम्नायाः कुहूर्नाडी वसत्यसौ ॥ २३ ॥ अनन्तरारयुग्मे तु वारुणा च यशस्विनी ।

दक्षिणारे सुषुम्नायाः पिङ्गला वर्तते क्रमात् ॥ २४ ॥ तदन्तरारयोः पूषा वर्तते च पयस्विनी । सुषुम्ना पश्चिमे चारे स्थिता नाडी सरस्वती ॥ २५ ॥ शङ्खिनी चैव गान्धारी तदनन्तरयोः स्थिते । उत्तरे तु सुषुम्नाया इडाख्या निवसत्यसौ ॥ २६ ॥ अनन्तरं हस्तिजिह्वा ततो विश्वोदरी स्थिता । प्रदक्षिणक्रमेणैव चक्रस्यारेषु नाडयः ॥ २७ ॥ वर्तन्ते द्वादश ह्येता द्वादशानिलवाहकाः । पटवत्संस्थिता नाड्यो नानावर्णाः समीरिताः ॥ २८ ॥ पटमध्यं तु यत्स्थानं नाभिचक्रं तदुच्यते । नादाधारा समाख्याता ज्वलन्ती नादरूपिणी ॥ २९ ॥ पररन्ध्रा सुषुम्ना च चत्वारो रत्नपूरिताः । कुण्डल्या पिहितं शश्वद्ब्रह्मरन्ध्रस्य मध्यमम् ॥ ३० ॥ एवमेतासु नाडीषु धरन्ति दश वायवः । एवं नाडीगतिं वायुगतिं ज्ञात्वा विचक्षणः ॥ ३१ ॥ समग्रीवशिरः कायः संवृतास्यः सुनिश्चलः । नासाग्रे चैव हृन्मध्ये बिन्दुमध्ये तुरीयकम् ॥ ३२ ॥ स्रवन्तममृतं पश्येन्नेत्राभ्यां सुसमाहितः । अपानं मुकुलीकृत्य पायुमाकृष्य चोन्मुखम् ॥ ३३ ॥ प्रणवेन समुत्थाप्य श्रीबीजेन निवर्तयेत् । स्वात्मानं च श्रियं ध्यायेदमृतप्लावनं ततः ॥ ३४ ॥ कालवञ्चनमेतद्धि सर्वमुख्यं प्रचक्षते । मनसा चिन्तितं कार्यं मनसा येन सिध्यति ॥ ३५ ॥ जलेऽग्निज्वलनाच्छाखापल्लवानि भवन्ति हि । नाधन्यं जागतं वाक्यं विपरीता भवेत्क्रिया ॥ ३६ ॥ मार्गे बिन्दुं समाबध्य वह्निं प्रज्वाल्य जीवने । शोषयित्वा तु सलिलं तेन कायं दृढं भवेत् ॥ ३७ ॥ गुदयोनिसमायुक्त आकुञ्चत्येककालतः । अपानमूर्ध्वगं कृत्वा समानोऽन्ने नियोजयेत् ॥ ३८ ॥ स्वात्मानं च श्रियं ध्यायेदमृतप्लावनं ततः । बलं समारभेद्योगं मध्यमद्वारभागतः ॥ ३९ ॥ भावयेदूर्ध्वगत्यर्थं प्राणापानसुयोगतः । एष योगो वरो देहे सिद्धिमार्गप्रकाशकः ॥ ४० ॥ यथैवापां गतः सेतुः प्रवाहस्य निरोधकः । तथा शरीरगा च्छाया ज्ञातव्या योगिभिः सदा ॥ ४१ ॥ सर्वासामेव नाडीनामेष बन्धः प्रकीर्तितः । बन्धस्यास्य प्रसादेन स्फुटीभवति देवता ॥ ४२ ॥ एवं चतुष्पथो बन्धो मार्गत्रयनिरोधकः । एकं विकासयन्मार्गं येन सिद्धाः सुसङ्गताः ॥ ४३ ॥ उदानमूर्ध्वगं कृत्वा प्राणेन सह वेगतः । बन्धोऽयं सर्वनाडीनामूर्ध्वं याति निरोधकः ॥ ४४ ॥ अयं च संपुटो योगो मूलबन्धोऽप्ययं मतः । बन्धत्रयमनेनैव सिद्ध्यत्यभ्यासयोगतः ॥४५॥ दिवारात्रमविच्छिन्नं यामे यामे यदा यदा । अनेनाभ्यासयोगेन वायुरभ्यसितो भवेत् ॥ ४६ ॥ वायावभ्यसिते वह्निः प्रत्यहं

वर्धते तनौ । वह्नौ विवर्धमाने तु सुखमन्नादि जीर्यते ॥ ४७ ॥ अन्नस्य परिपाकेन रसवृद्धिः प्रजायते । रसे वृद्धिङ्गते नित्यं वर्धन्ते धातवस्तथा ॥ ४८ ॥ धातूनां वर्धनेनैव प्रबोधो वर्धते तनौ । दह्यन्ते सर्वपापानि जन्मकोट्यर्जितानि च ॥ ४९ ॥ गुदमेढ्रान्तरालस्थं मूलाधारं त्रिकोणकम् । शिवस्य बिन्दुरूपस्य स्थानं तद्धि प्रकाशकम् ॥ ५० ॥ यत्र कुण्डलिनी नाम परा शक्तिः प्रतिष्ठिता । यस्मादुत्पद्यते वायुर्यस्माद्वह्निः प्रवर्धते ॥ ५१ ॥ यस्मादुत्पद्यते बिन्दुर्यस्मान्नादः प्रवर्धते । यस्मादुत्पद्यते हंसो यस्मादुत्पद्यते मनः ॥ ५२ ॥ मूलाधारादिषट्चक्रं शक्तिस्थानमुदीरितम् । कण्ठादुपरि मूर्धान्तं शांभवं स्थानमुच्यते ॥ ५३ ॥ नाडीनामाश्रयः पिण्डो नाड्यः प्राणस्य चाश्रयः । जीवस्य निलयः प्राणो जीवो हंसस्य चाश्रयः ॥ ५४ ॥ हंसः शक्तेरधिष्ठानं चराचरमिदं जगत् । निर्विकल्पः प्रसन्नात्मा प्राणायामं समभ्यसेत् ॥ ५५ ॥ सम्यग्बन्धत्रयस्थोऽपि लक्ष्यलक्षणकारणम् । वेद्यं समुद्धरेन्नित्यं सत्यसंधानमानसः ॥ ५६ ॥ रेचकं पूरकं चैव कुम्भमध्ये निरोधयेत् । दृश्यमाने परे लक्ष्ये ब्रह्मणि स्वयमाश्रितः ॥ ५७ ॥ बाह्यस्थविषयं सर्वं रेचकः समुदाहृतः । पूरकं शास्त्रविज्ञानं कुम्भकं स्वगतं स्मृतम् ॥ ५८ ॥ एवमभ्यासचित्तश्चेत्स मुक्तो नात्र संशयः । कुम्भकेन समारोप्य कुम्भकेनैव पूरयेत् ॥ ५९ ॥ कुम्भेन कुम्भयेत्कुम्भं तदन्तःस्थः परं शिवम् । पुनरास्फालयेदद्य सुस्थिरं कण्ठमुद्रया ॥ ६० ॥ वायूनां गतिमावृत्य धृत्वा पूरककुम्भकौ । समहस्तयुगं भूमौ समं पादयुगं तथा ॥ ६१ ॥ वेधकक्रमयोगेन चतुष्पीठं तु वायुना । आस्फालयेन्महामेरुं वायुवक्त्रे प्रकोटिभिः ॥ ६२ ॥ पुटद्वयं समाकृष्य वायुः स्फुरति सत्वरम् । सोमसूर्याग्निसंबन्धाज्जानीयादमृताय वै ॥ ६३ ॥ मेरुमध्यगता देवाश्चलन्ते मेरुचालनात् । आदौ संजायते क्षिप्रं वेधोऽस्य ब्रह्मग्रन्थितः ॥ ६४ ॥ ब्रह्मग्रन्थिं ततो भित्त्वा विष्णुग्रन्थिं भिनत्त्यसौ । विष्णुग्रन्थिं ततो भित्त्वा रुद्रग्रन्थिं भिनत्त्यसौ ॥ ६५ ॥ रुद्रग्रन्थिं ततो भित्त्वा छित्त्वा मोहमलं तथा । अनेकजन्मसंस्कारगुरुदेवप्रसादतः ॥ ६६ ॥ योगादभ्यासात्ततो वेधो जायते तस्य योगिनः । इडापिङ्गलयोर्मध्ये सुषुम्नानाडिमण्डले ॥ ६७ ॥ मुद्राबन्धविशेषेण वायुमूर्ध्वं च कारयेत् । ह्रस्वो दहति पापानि दीर्घो मोक्षप्रदायकः ॥ ६८ ॥ आप्यायनः प्लुतो वापि त्रिविधोच्चा-

रणेन तु । तैलधारामिवाच्छिन्नं दीर्घघण्टानिनादवत् ॥ ६९ ॥ अवाच्यं प्रणवस्याग्रं यस्तं वेद स वेदवित् । ह्रस्वं बिन्दुगतं दैर्घ्यं ब्रह्मरन्ध्रगतं प्लुतम् । द्वादशान्तगतं मन्त्रं प्रसादं मन्त्रसिद्धये ॥ ७० ॥ सर्वविघ्नहरश्चायं प्रणवः सर्वदोषहा । आरम्भश्च घटश्चैव पुनः परिचयस्तथा ॥७१॥ निष्पत्तिश्चेति कथिताश्चतस्रस्तस्य भूमिकाः । कारणत्रयसंभूतं बाह्यं कर्म परित्यजन् ॥ ७२ ॥ आन्तरं कर्म कुरुते यत्रारम्भः स उच्यते । वायुः पश्चिमतो वेधं कुर्वन्नापूर्य सुस्थिरम् ॥ ७३ ॥ यत्र तिष्ठति सा प्रोक्ता घटाख्या भूमिका बुधैः । न सजीवो न निर्जीवः काये तिष्ठति निश्चलम् । यत्र वायुः स्थिरः खे स्यात्सेयं प्रथमभूमिका ॥ ७४ ॥ यत्रात्मना सृष्टिलयौ जीवन्मुक्तिदशागतः । सहजः कुरुते योगं सेयं निष्पत्तिभूमिका ॥ ७५ ॥ इत्येतदुपनिषदं योऽधीते सोऽग्निपूतो भवति । स वायुपूतो भवति । सुरापानात्पूतो भवति । स्वर्णस्तेयात्पूतो भवति । स जीवन्मुक्तो भवति । तदेतदृचाभ्युक्तम्—तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदमित्युपनिषत् ॥ हरिः ॐ तत्सत् ॥

इति वराहोपनिषत्सु पञ्चमोऽध्यायः ॥ ५ ॥

ॐ स ह नाववत्विति शान्तिः ॥

इति वराहोपनिषत्समाप्ता ॥ १०२ ॥

---

## शाट्यायनीयोपनिषत् ॥ १०३ ॥

शाट्यायनीब्रह्मविद्याखण्डाकारसुखाकृति ।
यतिवृन्दहृदागारं रामचन्द्रपदं भजे ॥ १ ॥

ॐ पूर्णमद इति शान्तिः ॥

हरिः ॐ ॥ मन एव मनुष्याणां कारणं बन्धमोक्षयोः । बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥ १ ॥ समासक्तं सदा चित्तं जन्तोर्विषयगोचरे । यद्येवं ब्रह्मणि स्यात्तत्को न मुच्येत बन्धनात् ॥ २ ॥ चित्तमेव हि संसारस्तत्प्रयत्नेन शोधयेत् । यच्चित्तस्तन्मयो भवति गुह्यमेतत्सनातनम् ॥३॥ नावेदविन्मनुते तं बृहन्तं नाब्रह्मवित्परमं प्रैति धाम । विष्णुक्रान्तं वासुदेवं विजानन्विप्रो विप्रत्वं गच्छते तत्त्वदर्शी ॥ ४ ॥ अथाह यत्परं ब्रह्म सनातनं

ये श्रोत्रिया अकामहता अधीयुः । शान्तो दान्त उपरतस्तितिक्षुर्योऽनूचानो ह्यभिजज्ञौ समानः ॥ ५ ॥ त्यक्तैषणो ह्यनृणस्तं विदित्वा मौनी वसेदाश्रमे यत्र कुत्र । अथाश्रमं चरमं संप्रविश्य यथोपपत्तिं पञ्चमात्रां दधानः ॥ ६ ॥ त्रिदण्डमुपवीतं च वासःकौपीनवेष्टनम् । शिक्यं पवित्रमित्येतद्बिभृयाद्याव-दायुषम् ॥ ७ ॥ पञ्चैतास्तु यतेर्मात्रास्ता मात्रा ब्रह्मणे श्रुताः । न त्यजेद्याव-दुत्क्रान्तिरन्तेऽपि निखनेत्सह ॥ ८ ॥ विष्णुलिङ्गं द्विधा प्रोक्तं व्यक्तमव्यक्तमेव च । तयोरेकमपि त्यक्त्वा पतत्येव न संशयः ॥ ९ ॥ त्रिदण्डं वैष्णवं लिङ्गं विप्राणां मुक्तिसाधनम् । निर्वाणं सर्वधर्माणामिति वेदानुशासनम् ॥१०॥ अथ खलु सोम्य कुटीचको बहूदको हंसः परमहंस इत्येते परिव्राजकाश्चतुर्विधा भवन्ति । सर्व एते विष्णुलिङ्गिनः शिखिनोपवीतिनः शुद्धचित्ता आत्मानमा-त्मना ब्रह्म भावयन्तः शुद्धचिद्रूपोपासनरता जपयमवन्तो नियमवन्तः सुशीलिनः पुण्यश्लोका भवन्ति । तदेतदृचाभ्युक्तम्—कुटीचको बहूदकश्चापि हंसः परमहंस इति वृत्त्या च भिन्नाः । सर्व एते विष्णुलिङ्गं दधाना वृत्त्या व्यक्तं बहिरन्तश्च नित्यम् । पञ्चयज्ञा वेदशिरःप्रविष्टाः क्रियावन्तोऽमी संगता ब्रह्मविद्याम् । त्यक्त्वा वृक्षं वृक्षमूलं श्रितासः संन्यस्तपुष्पा रसमेवाश्नुवानाः । विष्णुक्रीडा विष्णुरतयो विमुक्ता विष्ण्वात्मका विष्णुमेवापियन्ति ॥ ११ ॥ त्रिसंध्यं शक्तितः स्नानं तर्पणं मार्जनं तथा । उपस्थानं पञ्चयज्ञान्कुर्यादामर-णान्तिकम् ॥ १२ ॥ दशभिः प्रणवैः सप्तव्याहृतिभिश्चतुष्पदा । गायत्रीजप-यज्ञश्च त्रिसंध्यं शिरसा सह ॥ १३ ॥ योगयज्ञः सदैकाग्र्यभक्त्या सेवा हरे-र्गुरोः । अहिंसा तु तपोयज्ञो वाङ्मनःकायकर्मभिः ॥ १४ ॥ नानोपनिषद-भ्यासः स्वाध्यायो यज्ञ ईरितः । ओमित्यात्मानमव्यग्रो ब्रह्मण्यग्नौ जुहोति यत् ॥ १५ ॥ ज्ञानयज्ञः स विज्ञेयः सर्वयज्ञोत्तमोत्तमः । ज्ञानदण्डा ज्ञान-शिखा ज्ञानयज्ञोपवीतिनः ॥ १६ ॥ शिखा ज्ञानमयी यस्य उपवीतं च तन्म-यम् । ब्राह्मण्यं सकलं तस्य इति वेदानुशासनम् ॥ १७ ॥ अथ खलु सोम्यैते परिव्राजका यथा प्रादुर्भवन्ति तथा भवन्ति । कामक्रोधलोभमोहदम्भदर्पा-सूयाममत्वाहंकारादींस्तितीर्य मानावमानौ निन्दास्तुती च वर्जयित्वा वृक्ष इव तिष्ठासेत् । छिद्यमानो न ब्रूयात् । तदेवं विद्वांस इहैवामृता भवन्ति । तदेतदृचाभ्युक्तम्—बन्धुपुत्रमनुमोदयित्वानवेक्ष्यमाणो द्वन्द्वसहः प्रशान्तः । प्राचीमुदीचीं वा निर्वर्तयंश्चरेत पात्री दण्डी युगमात्रावलोकी शिखी मुण्डी

चोपवीती कुटुम्बी यात्रामात्रं प्रतिगृह्णन्मनुष्यात् ॥ १८ ॥ अयाचितं याचितं वोत भैक्षं मृद्दार्वलाबूफलपर्णपात्रम् । क्षीणं क्षौमं तृणं कन्थाजिने च पर्ण-माच्छादनं स्यादहतं वा विमुक्तः ॥ १९ ॥ ऋतुसन्धौ मुण्डयेन्मुण्डमात्रं नाधो नाक्षं जातु शिखां न वापयेत् । चतुरो मासान्ध्रुवशीलतः स्यात्स यावत्सुप्तो-ऽन्तरात्मा पुरुषो विश्वरूपः । अन्यानथाष्टौ पुनरुत्थितेऽस्मिन्स्वकर्मलिप्सुर्वि-हरेद्वा वसेद्वा ॥ २० ॥ देवाग्न्यगारे तरुमूले गुहायां वसेदसङ्गोऽलक्षित-शीलवृत्तः । अनिन्धनो ज्योतिरिवोपशान्तो न चोद्विजेदुद्विजेद्यत्र कुत्र ॥ २१ ॥ आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनु-संज्वरेत् ॥ २२ ॥ तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्या-याद्बहूञ्छब्दान्वाचो विग्लापनं हि तत् ॥ २३ ॥ बाल्येनैव हि तिष्ठासेन्नि-र्विद्य ब्रह्मवेदनम् । ब्रह्मविद्या च बाल्यं च निर्विद्य मुनिरात्मवान् ॥ २४ ॥ यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ २५ ॥ अथ खलु सोम्येदं पारिव्राज्यं नैष्ठिकमात्मधर्मं यो विजहाति स वीरहा भवति । स ब्रह्महा भवति । स भ्रूणहा भवति । स महा-पातकी भवति । य इमां वैष्णवीं निष्ठां परित्यजति स स्तेनो भवति । स गुरुतल्पगो भवति । स मित्रध्रुग्भवति । स कृतघ्नो भवति । स सर्वस्माल्लो-कात्प्रच्युतो भवति । तदेतदृचाभ्युक्तम्—स्तेनः सुरापो गुरुतल्पगामी मित्रध्रु-गेते निष्कृतेर्यान्ति शुद्धिम् । व्यक्तमव्यक्तं वा विधृतं विष्णुलिङ्गं त्यजन्न शुध्येदखिलैरात्मभासा ॥ २६ ॥ त्यक्त्वा विष्णोर्लिङ्गमन्तर्बहिर्वा यः स्वाश्रमं सेवते नाश्रमं वा । प्रत्यापत्तिं भजते वाऽतिमूढो नैषां गतिः कल्पकोट्यापि दृष्टा ॥ २७ ॥ त्यक्त्वा सर्वाश्रमान्धीरो वसेन्मोक्षाश्रमे चिरम् । मोक्षाश्रमा-त्परिभ्रष्टो न गतिस्तस्य विद्यते ॥ २८ ॥ पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति । तमारूढच्युतं विद्यादिति वेदानुशासनम् ॥ २९ ॥ अथ खलु सोम्येमं सनातनमात्मधर्मं वैष्णवीं निष्ठां लब्ध्वा यस्तामदूषयन्वर्तते स वशी भवति । स पुण्यश्लोको भवति । स लोकज्ञो भवति । स वेदान्तज्ञो भवति । स ब्रह्मज्ञो भवति । स सर्वज्ञो भवति । स स्वराड् भवति । स परं ब्रह्म भगवन्तमाप्नोति । स पितॄन्संबन्धिनो बान्धवान्सुहृदो मित्राणि च भवादु-त्तारयति । तदेतदृचाभ्युक्तम्—शतं कुलानां प्रथमं बभूव तथा पराणां

त्रिशतं समग्रम् । एते भवन्ति सुकृतस्य लोके येषां कुले संन्यसतीह विद्वान् ॥ ३० ॥ त्रिंशत्पराँस्त्रिंशदपराँस्त्रिंशच्च परतः परान् । उत्तारयति धर्मिष्ठः परिव्राडिति वै श्रुतिः ॥ ३१ ॥ संन्यस्तमिति यो ब्रूयात्कण्ठस्थप्राणवानपि । तारिताः पितरस्तेन इति वेदानुशासनम् ॥ ३२ ॥ अथ खलु सोम्येमं सनातनमात्मधर्मं वैष्णवीं निष्ठां नासमाप्य प्रब्रूयात् । नानूचानाय नानात्मविदे नावीतरागाय नाविशुद्धाय नानुपसन्नाय नाप्रयतमानसायेति ह स्माहुः । तदेतदृचाभ्युक्तम्—विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेऽहमस्मि । असूयकायानृजवे शठाय मा मा ब्रूया वीर्यवती तथा स्याम् ॥ ३३ ॥ यमेव विद्याश्रुतमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् । अस्मा इमामुपसन्नाय सम्यक् परीक्ष्य दद्याद्वैष्णवीमात्मनिष्ठाम् ॥ ३४ ॥ अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा । यथैव तेन न गुरुर्भोजनीयस्तथैव चान्नं न भुनक्ति श्रुतं तत् ॥ ३५ ॥ गुरुरेव परो धर्मो गुरुरेव परा गतिः । एकाक्षरप्रदातारं यो गुरुं नाभिनन्दति । तस्य श्रुतं तथा ज्ञानं स्रवत्यामघटाम्बुवत् ॥ ३६ ॥ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । स ब्रह्मवित्परं प्रेयादिति वेदानुशासनम् ॥ ३७ ॥ इत्युपनिषत् ॥ हरिः ॐ तत्सत् ॥

ॐ पूर्णमद इति शान्तिः ॥

इति शाट्यायनीयोपनिषत्समाप्ता ॥ १०३ ॥

---

# हयग्रीवोपनिषत् ॥ १०४ ॥

स्वज्ञोऽपि यत्प्रसादेन ज्ञानं तत्फलमाप्नुयात् ।
सोऽयं हयास्यो भगवान्हृदि मे भातु सर्वदा ॥ १ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

हरिः ॐ ॥ नारदो ब्रह्माणमुपसमेत्योवाचाधीहि भगवन् ब्रह्मविद्यां वरिष्ठां यया चिरात्सर्वपापं व्यपोह्य ब्रह्मविद्यां लब्ध्वैश्वर्यवान्भवति । ब्रह्मोवाच हयग्रीवदैवत्यान्मन्त्रान्यो वेद स श्रुतिस्मृतीतिहासपुराणानि वेद । स सर्वैश्वर्यवान्भवति । त एते मन्त्राः—विश्वोत्तीर्णस्वरूपाय चिन्मयानन्दरूपिणे । तुभ्यं नमो हयग्रीव विद्याराजाय स्वाहा स्वाहा नमः ॥ १ ॥ ऋग्यजुःसामरूपाय वेदा-

हरणकर्मणे । प्रणवोद्गीथवपुषे महाश्वशिरसे नमः स्वाहा स्वाहा नमः ॥ २ ॥ उद्गीथ प्रणवोद्गीथ सर्ववागीश्वरेश्वर । सर्ववेदमयाचिन्त्य सर्वं बोधय बोधय स्वाहा स्वाहा नमः ॥३॥ ब्रह्मात्रिरविसवितृभार्गवा ऋषयः । गायत्रीत्रिष्टुबनुष्टुप्छन्दांसि । श्रीमान्हयग्रीवः परमात्मा देवतेति । ल्हौं( ह्सौं )मिति बीजम् । सोऽहमिति शक्तिः । ल्हू( ह्सौं )मिति कीलकम् । भोगमोक्षयोर्विनियोगः । अकारोकारमकारैरङ्गन्यासः । ध्यानम् । शङ्खचक्रमहामुद्रापुस्तकाढ्यं चतुर्भुजम् । संपूर्णचन्द्रसंकाशं हयग्रीवमुपास्महे ॥ ॐ श्रीमिति द्वे अक्षरे । ल्हौं( ह्सौं )मित्येकाक्षरम् । ॐ नमो भगवत इति सप्ताक्षराणि । हयग्रीवायेति पञ्चाक्षराणि । विष्णव इति त्र्यक्षराणि । मह्यं मेधां प्रज्ञामिति षडक्षराणि । प्रयच्छ स्वाहेति पञ्चाक्षराणि । हयग्रीवस्य तुरीयो भवति ॥ ४ ॥ ॐ श्रीमिति द्वे अक्षरे । ल्हौं( ह्सौं )मित्येकाक्षरम् । ऐमैमैमिति त्रीण्यक्षराणि । क्लीं क्लीमिति द्वे अक्षरे । सौः सौरिति द्वे अक्षरे । ह्रीमित्येकाक्षरम् । ॐ नमो भगवत इति सप्ताक्षराणि । मह्यं मेधां प्रज्ञामिति षडक्षराणि । प्रयच्छ स्वाहेति पञ्चाक्षराणि । पञ्चमो मनुर्भवति ॥ ५ ॥

इति हयग्रीवोपनिषत्सु प्रथमोपनिषत् ॥ १ ॥

हयग्रीवैकाक्षरेण ब्रह्मविद्यां प्रवक्ष्यामि । ब्रह्मा महेश्वराय महेश्वरः संकर्षणाय संकर्षणो नारदाय नारदो व्यासाय व्यासो लोकेभ्यः प्रायच्छदिति हकारोंसकारोमकारों त्रयमेकस्वरूपं भवति । ल्हौं( ह्सौं ) बीजाक्षरं भवति । बीजाक्षरेण ल्हौं ( ह्सौं ) रूपेण तज्जापकानां संपत्सारस्वतौ भवतः । तत्स्वरूपज्ञानां वैदेही मुक्तिश्च भवति । दिक्पालानां राज्ञां नागानां किन्नराणामधिपतिर्भवति । हयग्रीवैकाक्षरजपशीलाज्ञया सूर्यादयः स्वतः स्वस्वकर्मणि प्रवर्तन्ते । सर्वेषां बीजानां हयग्रीवैकाक्षरबीजमनुत्तमं मन्त्रराजात्मकं भवति । ल्हौं ( ह्सौं ) हयग्रीवस्वरूपो भवति । अमृतं कुरु कुरु स्वाहा । तज्जापकानां वाक्सिद्धिः श्रीसिद्धिरष्टाङ्गयोगसिद्धिश्च भवति । ल्हौं ( ह्सौं ) सकलसाम्राज्येन सिद्धिं कुरु कुरु स्वाहा । तानेतान्मन्त्रान्यो वेद अपवित्रः पवित्रो भवति । अब्रह्मचारी सुब्रह्मचारी भवति । अगम्यागमनात्पूतो भवति । पतितसंभाषणात्पूतो भवति । ब्रह्महत्यादिपातकैर्मुक्तो भवति । गृहं गृहपतिरिव देही देहान्ते परमात्मानं प्रविशति । प्रज्ञानमानन्दं ब्रह्म तत्त्वमसि अयमात्मा ब्रह्म अहं ब्रह्मास्मीति महावाक्यैः प्रतिपादितमर्थं त एते मन्त्राः प्रतिपादयन्ति । स्वरव्यञ्जनभेदेन द्विधा

एते । अथानुमन्त्राञ्जपति । यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा । चतस्त्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम ॥ १ ॥ गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥ २ ॥ ओष्ठापिधाना नकुली दन्तैः परिवृता पविः । सर्वस्यै वाच ईशाना चारु मामिह वादयेति च वाग्रसः ॥ ३ ॥ ससर्परीरमतिं बाधमाना बृहन्मिमाय जमदग्निदत्ता । आसूर्यस्य दुरिता तनान श्रवो देवेष्वमृतमजुर्यम् ॥ ४ ॥ य इमां ब्रह्मविद्यामेकादश्यां पठेद्धयग्रीवप्रभावेन महापुरुषो भवति । स जीवन्मुक्तो भवति । ॐ नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं माच्योढ्वं ममामुष्य ओमित्युपनिषत् ॥ हरिः ॐ तत्सत् ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

इति हयग्रीवोपनिषत्सु द्वितीयोपनिषत् ॥ २ ॥

इति हयग्रीवोपनिषत्समाप्ता ॥ १०४ ॥

---

## दत्तात्रेयोपनिषत् ॥ १०५ ॥

दत्तात्रेयीब्रह्मविद्यासंवेद्यानन्दविग्रहम् ।
त्रिपान्नारायणाकारं दत्तात्रेयमुपास्महे ॥ १ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

हरिः ॐ ॥ सत्यक्षेत्रे ब्रह्मा नारायणं महासाम्राज्यं किं तारकं तन्नो ब्रूहि भगवन्नित्युक्तः सत्यानन्दचिदात्मकं सात्त्विकं मामकं धामोपास्स्वेत्याह । सदा दत्तोऽहमस्मीति प्रत्येतत्संवदन्ति येन ते संसारिणो भवन्ति नारायणेनैवं विवक्षितो ब्रह्मा विश्वरूपधरं विष्णुं नारायणं दत्तात्रेयं ध्यात्वा सद्वदति । दमिति हंसः । दामिति दीर्घं तद्बीजं नाम बीजस्थम् । दामित्येकाक्षरं भवति । तदेतत्तारकं भवति । तदेवोपासितव्यं विज्ञेयं गर्भादितारणम् । गायत्री छन्दः । सदाशिव ऋषिः । दत्तात्रेयो देवता । वटबीजस्थमिव दत्तबीजस्थं सर्वं जगत् । एतदेवैकाक्षरं व्याख्यातम् । व्याख्यास्ये षडक्षरम् । ओमिति द्वितीयम् । ह्रीमिति तृतीयम् । क्लीमिति चतुर्थम् । ग्लौमिति पञ्चमम् । द्रामिति षष्ठम् । षडक्षरोऽयं भवति । योगानुभवो भवति । गायत्री छन्दः । सदाशिव ऋषिः । दत्तात्रेयो देवता । द्रमित्युक्त्वा द्रामित्युक्त्वा वा दत्तात्रे-

याय नम इत्यष्टाक्षरः। दत्तात्रेयायेति सत्यानन्दचिदात्मकम्। नम इति पूर्णानन्दकविग्रहम्। गायत्री छन्दः। सदाशिव ऋषिः। दत्तात्रेयो देवता। दत्तात्रेयायेति कीलकम्। तदेव बीजम्। नमः शक्तिर्भवति। ओमिति प्रथमम्। आमिति द्वितीयम्। ह्रीमिति तृतीयम्। क्रोमिति चतुर्थम्। एहीति तदेव वदेत्। दत्तात्रेयेति स्वाहेति मन्त्रराजोऽयं द्वादशाक्षरः। जगती छन्दः। सदाशिव ऋषिः। दत्तात्रेयो देवता। ओमिति बीजम्। स्वाहेति शक्तिः। संबुद्धिरिति कीलकम्। द्रमिति हृदये। ह्रीं क्लीमिति शीर्षे। एहीति शिखायाम्। दत्तेति कवचे आत्रेयेति चक्षुषि। स्वाहेत्यस्त्रे। तन्मयो भवति। य एवं वेद। षोडशाक्षरं व्याख्यास्ये। प्राणं देयम्। मानं देयम्। चक्षुर्देयम्। श्रोत्रं देयम्। षड्दशशिरश्छिनत्ति षोडशाक्षरमन्त्रो न देयो भवति। अतिसेवापरभक्तगुणवच्छिष्याय वदेत्। ओमिति प्रथमं भवति। ऐमिति द्वितीयम्। क्रोमिति तृतीयम्। क्लीमिति चतुर्थम्। क्लूमिति पञ्चमम्। ह्रामिति षष्ठम्। ह्रीमिति सप्तमम्। ह्रूमित्यष्टमम्। सौरिति नवमम्। दत्तात्रेयायेति चतुर्दशम्। स्वाहेति षोडशम्। गायत्री छन्दः। सदाशिव ऋषिः। दत्तात्रेयो देवता। ॐ बीजम्। स्वाहा शक्तिः। चतुर्थ्यन्तं कीलकम्। ओमिति हृदये। क्रां क्रीं क्लूमिति शिखायाम्। सौरिति कवचे। चतुर्थ्यन्तं चक्षुषि। स्वाहेत्यस्त्रे। यो नित्यमधीयानः सच्चिदानन्दसुखी मोक्षी भवति। सौरित्यन्ते श्रीवैष्णव इत्युच्यते। तज्जापी विष्णुरूपी भवति। अनुष्टुप् छन्दो व्याख्यास्ये। सर्वत्र संबुद्धिरिमानीत्युच्यन्ते। दत्तात्रेय हरे कृष्ण उन्मत्तानन्ददायक। दिगम्बर मुने बालपिशाच ज्ञानसागर ॥ १ ॥ इत्युपनिषत्। अनुष्टुप् छन्दः। सदाशिव ऋषिः। दत्तात्रेयो देवता दत्तात्रेयेति हृदये। हरे कृष्णेति शीर्षे। उन्मत्तानन्देति शिखायाम्। दायक मुन इति कवचे। दिगम्बरेति चक्षुषि। पिशाचज्ञानसागरेत्यस्त्रे। अनुष्टुभोऽयं मयाधीतः। अब्रह्मजन्मदोषाश्च प्रणश्यन्ति। सर्वोपकारी मोक्षी भवति। य एवं वेदेत्युपनिषत् ॥ १ ॥

इति दत्तात्रेयोपनिषत्सु प्रथमः खण्डः ॥ १ ॥

ओमिति व्याहरेत्। ॐ नमो भगवते दत्तात्रेयाय स्मरणमात्रसंतुष्टाय महाभयनिवारणाय महाज्ञानप्रदाय चिदानन्दात्मने बालोन्मत्तपिशाचवेषायेति महायोगिनेऽवधूतायेति अनसूयानन्दवर्धनायात्रिपुत्रायेति सर्वकाम-

फलप्रदाय ओमिति व्याहरेत् । भवबन्धमोचनायेति ह्रीमिति व्याहरेत् । सकलविभूतिदायेति क्रोमिति व्याहरेत् । साध्याकर्षणायेति सौरिति व्याहरेत् । सर्वमनःक्षोभणायेति श्रीमिति व्याहरेत् । महोमिति व्याहरेत् । चिरंजीविने वषडिति व्याहरेत् । वशीकुरु वशीकुरु वौषडिति व्याहरेत् । आकर्षयाकर्षय हुमिति व्याहरेत् । विद्वेषय विद्वेषय फडिति व्याहरेत् । उच्चाटयोच्चाटय ठठेति व्याहरेत् । स्तम्भय स्तम्भय खखेति व्याहरेत् । मारय मारय नमः संपन्नाय नमः संपन्नाय स्वाहा पोषय पोषय परमन्त्रपरयन्त्रपरतन्त्रांश्छिन्धि च्छिन्धि ग्रहान्निवारय निवारय व्याधीन्निवारय निवारय दुःखं हरय हरय दारिद्र्यं विद्रावय विद्रावय देहं पोषय पोषय चित्तं तोषय तोषयेति सर्वमन्त्रसर्वयन्त्रसर्वतन्त्रसर्वपल्लवस्वरूपायेति ॐ नमः शिवायेत्युपनिषत् ॥ २ ॥

इति दत्तात्रेयोपनिषत्सु द्वितीयः खण्डः ॥ २ ॥

य एवं वेद । अनुष्टुप् छन्दः । सदाशिव ऋषिः । दत्तात्रेयो देवता । ओमिति बीजम् । स्वाहेति शक्तिः । द्रामिति कीलकम् । अष्टमूर्त्यष्टमन्त्रा भवन्ति । यो नित्यमधीते वाय्वग्निसोमादित्यब्रह्मविष्णुरुद्रैः पूतो भवति । गायत्र्या शतसहस्रं जप्तं भवति । महारुद्रशतसहस्रजापी भवति । प्रणवायुतकोटिजप्तो भवति । शतपूर्वाञ्छतापरान्पुनाति । स पङ्क्तिपावनो भवति । ब्रह्महत्यादिपातकैर्मुक्तो भवति । गोहत्यादिपातकैर्मुक्तो भवति । तुलापुरुषादिदानैः प्रपापानतः पूतो भवति । अशेषपापान्मुक्तो भवति । भक्ष्याभक्ष्यपापैर्मुक्तो भवति । सर्वमन्त्रयोगपारीगो भवति । स एव ब्राह्मणो भवति । तस्माच्छिष्यं भक्तं प्रतिगृह्णीयात् । सोऽनन्तफलमश्नुते । स जीवन्मुक्तो भवतीत्याह भगवान्नारायणो ब्रह्मागमित्युपनिषत् ॥ हरिः ॐ तत्सत् ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

इति दत्तात्रेयोपनिषत्सु तृतीयः खण्डः ॥ ३ ॥

इति दत्तात्रेयोपनिषत्समाप्ता ॥ १०५ ॥

---

## गारुडोपनिषत् ॥ १०६ ॥

विषं ब्रह्मातिरिक्तं स्यादमृतं ब्रह्ममात्रकम् ।
ब्रह्मातिरिक्तं विषवद्ब्रह्ममात्रं खगेडहम् ॥ १ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ।

हरिः ॐ ॥ गारुडब्रह्मविद्यां प्रवक्ष्यामि यां ब्रह्मा विद्यां नारदाय प्रोवाच नारदो बृहत्सेनाय बृहत्सेन इन्द्राय इन्द्रो भरद्वाजाय भरद्वाजो जीवत्का-

भ्येभ्यः शिष्येभ्यः प्रायच्छत् । अस्याः श्रीमहागरुडब्रह्मविद्याया ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीभगवान्महागरुडो देवता । श्रीमहागरुडप्रीत्यर्थे मम सकलविषविनाशनार्थे जपे विनियोगः । ॐ नमो भगवते अङ्गुष्ठाभ्यां नमः । श्रीमहागरुडाय तर्जनीभ्यां स्वाहा । पक्षीन्द्राय मध्यमाभ्यां वषट् । श्रीविष्णुवल्लभाय अनामिकाभ्यां हुम् । त्रैलोक्यपरिपूजिताय कनिष्ठिकाभ्यां वौषट् । उग्रभयंकरकालानलरूपाय करतलकरपृष्ठाभ्यां फट् । एवं हृदयादिन्यासः । भूर्भुवः सुवरोमिति दिग्बन्धः । ध्यानम् । स्वस्तिको दक्षिणं पादं वामपादं तु कुञ्चितम् । प्राञ्जलीकृतदोर्युग्मं गरुडं हरिवल्लभम् ॥ १ ॥ अनन्तो वामकटको यज्ञसूत्रं तु वासुकिः । तक्षकाः कटिसूत्रं तु हारः कार्कोट उच्यते ॥ २ ॥ पद्मो दक्षिणकर्णे तु महापद्मस्तु वामके । शङ्खः शिरःप्रदेशे तु गुलिकस्तु भुजान्तरे ॥ ३ ॥ पौण्ड्रकालिकनागाभ्यां चामराभ्यां सुवीजितम् । एलापुत्रकनागाद्यैः सेव्यमानं मुदान्वितम् ॥ ४ ॥ कपिलाक्षं गरुत्मन्तं सुवर्णसदृशप्रभम् । दीर्घबाहुं बृहत्स्कन्धं नादाभरणभूषितम् ॥५॥ आजानुतः सुवर्णाभमाकण्ठ्योस्तुहिनप्रभम् । कुङ्कुमारुणमाकण्ठं शतचन्द्रनिभाननम् ॥ ६ ॥ नीलाग्रनासिकावक्त्रं सुमहच्चारुकुण्डलम् । दंष्ट्राकरालवदनं किरीटमुकुटोज्ज्वलम् ॥ ७ ॥ कुङ्कुमारुणसर्वाङ्गं कुन्देन्दुधवलाननम् । विष्णुवाह नमस्तुभ्यं क्षेमं कुरु सदा मम ॥ ८ ॥ एवं ध्यायेत्रिसंध्यासु गरुडं नागभूषणम् । विषं नाशयते शीघ्रं तूलराशिमिवानलः ॥ ९ ॥ ओमीमों नमो भगवते श्रीमहागरुडाय पक्षीन्द्राय विष्णुवल्लभाय त्रैलोक्यपरिपूजिताय उग्रभयंकरकालानलरूपाय वज्रनखाय वज्रतुण्डाय वज्रदन्ताय वज्रदंष्ट्राय वज्रपुच्छाय वज्रपक्षालक्षितशरीराय ओमीकेह्येहि श्रीमहागरुडाप्रतिशासनास्मिन्नाविशाविश दुष्टानां विषं दूषय दूषय स्पृष्टानां नाशय नाशय दन्दशूकानां विषं दारय दारय प्रलीनं विषं प्रणाशय प्रणाशय सर्वविषं नाशय नाशय हन हन दह दह पच पच भस्मीकुरु भस्मीकुरु हुं फट् स्वाहा ॥ चन्द्रमण्डलसंकाश सूर्यमण्डलमुष्टिक । पृथ्वीमण्डलमुद्राङ्ग श्रीमहागरुडाय विषं हर हर हुं फट् स्वाहा ॥ ॐ क्षिप स्वाहा ॥ ओमीं सचरति सचरति तत्कारी मत्कारी विषाणां च विषरूपिणी विषदूषिणी विषशोषणी विषनाशिनी विषहारिणी हतं विषं नष्टं विषमन्तःप्रलीनं विषं प्रनष्टं विषं हतं ते ब्रह्मणा विषं हतमिन्द्रस्य वज्रेण स्वाहा ॥ ॐ नमो

भगवते महागरुडाय विष्णुवाहनाय त्रैलोक्यपरिपूजिताय वज्रनखवज्र-
तुण्डाय वज्रपक्षालंकृतशरीराय एह्येहि महागरुड विषं छिन्धि छिन्धि आवे-
शयावेशय हुं फट् स्वाहा ॥ सुपर्णोऽसि गरुत्माञ्त्रिवृत्ते शिरो गायत्रं चक्षुः
स्तोम आत्मा साम ते तनूर्वामदेव्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं पुच्छं
छन्दांस्यङ्गानि धिष्णिया शफा यजूंषि नाम ॥ सुपर्णोऽसि गरुत्मान्दिवं गच्छ
सुवः पत ओमीं ब्रह्मविद्याममावास्यायां पौर्णमास्यायां पुरोवाच सचरति सच-
रति तत्कारी मत्कारी विषनाशिनी विषदूषिणी विषहारिणी हतं विषं नष्टं
विषं प्रनष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य
वज्रेण स्वाहा ॥ ततस्त्वयम् । यद्यनन्तकदूतोऽसि यदि वानन्तकः स्वयम् ।
सचरति सचरति तत्कारी मत्कारी विषनाशिनी विषदूषिणी हतं विषं नष्टं
विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ।
यदि वासुकिदूतोऽसि यदि वा वासुकः स्वयम् । सचरति सचरति तत्कारी
मत्कारी विशनाशिनी विषदूषिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं
ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा यदि वा तक्षकः स्वयम् । सचरति सचरति
तत्कारी मत्कारी विषनाशिनी विषदूषिणी हतं विषं नष्टं विषं हतमिन्द्रस्य
वज्रेण विषं हतं ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ यदि कर्कोटकदूतोऽसि
यदि वा कर्कोटकः स्वयम् । सचरति सचरति तत्कारी मत्कारी विषनाशिनी
विषदूषिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमि-
न्द्रस्य वज्रेण स्वाहा ॥ यदि पद्मकदूतोऽसि यदि वा पद्मकः स्वयम् । सचरति सच-
रति तत्कारी मत्कारी विषनाशिनी विषदूषिणी हतं विषं नष्टं विषं हतमिन्द्रस्य
वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ यदि महापद्मक-
दूतोऽसि यदि वा महापद्मकः स्वयम् । सचरति सचरति तत्कारी मत्कारी
विषनाशिनी विषदूषिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते
ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ यदि शङ्खकदूतोऽसि यदि वा शङ्खकः
स्वयम् । सचरति सचरति तत्कारी मत्कारी विषनाशिनी विषदूषिणी हतं विषं
नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥
यदि गुलिकदूतोऽसि यदि वा गुलिकः स्वयम् । सचरति सचरति तत्कारी
मत्कारी विषनाशिनी विषदूषिणी विषहारिणी हतं विषं नष्टं विषं हतमिन्द्रस्य
वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ यदि पौण्ड्रकालिक-

दूतोऽसि यदि वा पौण्ड्रकालिकः स्वयम् । सचरति सचरति तत्कारी मत्कारी विषनाशिनी विषदूषिणी विषहारिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ यदि नागकदूतोऽसि यदि वा नागकः स्वयम् । सचरति सचरति तत्कारी मत्कारी विषनाशिनी विषदूषिणी विषहारिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ यदि लूतानां प्रलूतानां यदि वृश्चिकानां यदि घोटकानां यदि स्थावरजङ्गमानां सचरति सचरति तत्कारी मत्कारी विषनाशिनी विषदूषिणी विषहारिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा । अनन्तवासुकितक्षककर्कोटकपद्मकमहापद्मकशङ्खकगुलिकपौण्ड्रकालिकनागक इत्येषां दिव्यानां महानागानां महानागादिरूपाणां विषतुण्डानां विषदन्तानां विषदंष्ट्राणां विषाङ्गानां विषपुच्छानां विश्वचाराणां वृश्चिकानां लूतानां प्रलूतानां मूषिकाणां गृहगौलिकानां गृहगोधिकानां घ्रणसानां गृहगिरिगह्वरकालानलवल्मीकोद्भूतानां तार्णानां पर्णानां काष्ठदारुवृक्षकोटरस्थानां मूलत्वग्दारुनिर्यासपत्रपुष्पफलोद्भूतानां दुष्टकीटकपिश्वानमार्जारजम्बुकव्याघ्रवराहाणां जरायुजाण्डजोद्भिज्जस्वेदजानां शस्त्रबाणक्षतस्फोटव्रणमहाव्रणकृतानां कृत्रिमाणामन्येषां भूतवेतालकूष्माण्डपिशाचप्रेतराक्षसयक्षभयप्रदानां विषतुण्डदंष्ट्राणां विषाङ्गानां विषपुच्छानां विषाणां विषरूपिणी विषदूषिणी विषशोषिणी विषनाशिनी विषहारिणी हतं विषं नष्टं विषमन्तःप्रलीनं विप्रनष्टं विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा । य इमां ब्रह्मविद्याममावास्यायां पठेच्छृणुयाद्वा यावज्जीवं न हिंसन्ति सर्पाः । अष्टौ ब्राह्मणान्ग्राहयित्वा तृणेन मोचयेत् । शतं ब्राह्मणान् ग्राहयित्वा चक्षुषा मोचयेत् । सहस्रं ब्राह्मणान् ग्राहयित्वा मनसा मोचयेत् । सर्पाञ्जले न मुञ्चन्ति । तृणे न मुञ्चन्ति । काष्ठे न मुञ्चन्तीत्याह भगवान्ब्रह्मेत्युपनिषत् ॥ हरिः ॐ तत्सत् ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

इति श्रीगरुडोपनिषत्समाप्ता ॥ १०६ ॥

## कलिसंतरणोपनिषत् ॥ १०७ ॥

यद्दिव्यनाम स्मरतां संसारो गोष्पदायते ।
सा नव्यभक्तिर्भवति तद्रामपदमाश्रये ॥ १ ॥

ॐ स ह नाववत्विति शान्तिः ॥

हरिः ॐ ॥ द्वापरान्ते नारदो ब्रह्माणं जगाम कथं भगवन् गां पर्यटन्कलिं संतरेयमिति । स होवाच ब्रह्मा साधु पृष्टोऽस्मि सर्वश्रुतिरहस्यं गोप्यं तच्छृणु येन कलिसंसारं तरिष्यसि । भगवत आदिपुरुषस्य नारायणस्य नामोच्चारणमात्रेण निर्धूतकलिर्भवति । नारदः पुनः पप्रच्छ तन्नाम किमिति । स होवाच हिरण्यगर्भः । हरे राम हरे राम राम राम हरे हरे । हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ॥ १ ॥ इति षोडशकं नाम्नां कलिकल्मषनाशनम् । नातः परतरोपायः सर्ववेदेषु दृश्यते ॥ २ ॥ इति षोडशकलावृतस्य जीवस्यावरणविनाशनम् । ततः प्रकाशते परं ब्रह्म मेघापाये रविरश्मिमण्डलीवेति । पुनर्नारदः पप्रच्छ भगवन्कोऽस्य विधिरिति । तं होवाच नास्य विधिरिति । सर्वदा शुचिरशुचिर्वा पठन्ब्राह्मणः सलोकतां समीपतां सरूपतां सायुज्यतामेति । यदाऽस्य षोडशीकस्य सार्धत्रिकोटीर्जपति तदा ब्रह्महत्यां तरति । तरति वीरहत्याम् । स्वर्णस्तेयात्पूतो भवति । पितृदेवमनुष्याणामपकारात्पूतो भवति । सर्वधर्मपरित्यागपापात्सद्यः शुचितामाप्नुयात् । सद्यो मुच्यते सद्यो मुच्यते इत्युपनिषत् ॥ ३ ॥ हरिः ॐ तत्सत् ॥

ॐ स ह नाववत्विति शान्तिः ॥

इति श्रीकलिसंतरणोपनिषत्समाप्ता ॥ १०७ ॥

---

## जाबाल्युपनिषत् ॥ १०८ ॥

जाबाल्युपनिषद्वेद्यपदतत्त्वस्वरूपकम् ।
पारमैश्वर्यविभवं रामचन्द्रपदं भजे ॥ १ ॥

ॐ आप्यायन्त्विति शान्तिः ॥

हरिः ॐ ॥ अथ हैनं भगवन्तं जाबालिं पैप्पलादिः पप्रच्छ भगवन्मे ब्रूहि परमतत्त्वरहस्यम् । किं तत्त्वं को जीवः कः पशुः क ईशः को मोक्षोपाय इति । स तं होवाच साधु पृष्टं सर्वं निवेदयामि यथाज्ञातमिति । पुनः स तमुवाच

कुतस्त्वया ज्ञातमिति । पुनः स तमुवाच षडाननादिति । पुनः स तमुवाच तेनाथ कुतो ज्ञातमिति । पुनः स तमुवाच तेनेशानादिति । पुनः स तमुवाच कथं तस्मात्तेन ज्ञातमिति । पुनः स तमुवाच तदुपासनादिति । पुनः स तमुवाच भगवन्कृपया मे सरहस्यं सर्वं निवेदयेति । स तेन पृष्टः सर्वं निवेदयामास तत्त्वम् । पशुपतिरहंकाराविष्टः संसारी जीवः स एव पशुः । सर्वज्ञः पञ्चकृत्यसंपन्नः सर्वेश्वर ईशः पशुपतिः । के पशव इति पुनः स तमुवाच जीवाः पशव उक्ताः । तत्पतित्वात्पशुपतिः । स पुनस्तं होवाच कथं जीवाः पशव इति । कथं तत्पतिरिति । स तमुवाच यथा तृणाशिनो विवेकहीनाः परप्रेष्याः कृष्यादिकर्मसु नियुक्ताः सकलदुःखसहाः स्वस्वामिबध्यमाना गवादयः पशवः । यथा तत्स्वामिन इव सर्वज्ञ ईशः पशुपतिः । तज्ज्ञानं केनोपायेन जायते । पुनः स तमुवाच विभूतिधारणादेव । तत्प्रकारः कथमिति । कुत्र कुत्र धार्यम् । पुनः स तमुवाच सद्योजातादिपञ्चब्रह्ममन्त्रैर्भस्म संगृह्याग्निरिति भस्मेत्यनेनाभिमन्त्र्य मानस्तोक इति समुद्धृत्य जलेन संसृज्य त्र्यायुषमिति शिरोललाटवक्षःस्कन्धेष्विति तिसृभिस्त्र्यायुषैस्त्र्यम्बकैस्तिस्रो रेखाः प्रकुर्वीत । व्रतमेतच्छाम्भवं सर्वेषु वेदेषु वेदवादिभिरुक्तं भवति । तत्समाचरेन्मुमुक्षुर्न पुनर्भवाय । अथ सनत्कुमारः प्रमाणं पृच्छति । त्रिपुण्ड्रधारणस्य त्रिधा रेखा आललाटादाचक्षुषोराभ्रुवोर्मध्यतश्च । याऽस्य प्रथमा रेखा सा गार्हपत्यश्चाकारो रजो भूर्लोकः स्वात्मा क्रियाशक्तिः ऋग्वेदः प्रातःसवनं प्रजापतिर्देवो देवतेति । याऽस्य द्वितीया रेखा सा दक्षिणाग्निरुकारः सत्त्वमन्तरिक्षमन्तरात्मा चेच्छाशक्तिर्यजुर्वेदो माध्यन्दिनसवनं विष्णुर्देवो देवतेति । याऽस्य तृतीया रेखा साऽऽहवनीयो मकारस्तमो द्यौर्लोकः परमात्मा ज्ञानशक्तिः सामवेदस्तृतीयसवनं महादेवो देवतेति त्रिपुण्ड्रं भस्मना करोति । यो विद्वान्ब्रह्मचारी गृही वानप्रस्थो यतिर्वा स महापातकोपपातकेभ्यः पूतो भवति । स सर्वान्देवान्ध्यातो भवति । स सर्वेषु तीर्थेषु स्नातो भवति । स सकलरुद्रमन्त्रजापी भवति । न स पुनरावर्तते न स पुनरावर्तते ॥ इति । ॐ सत्यमित्युपनिषत् ॥ हरिः ॐ तत्सत् ॥

ॐ आप्यायन्त्विति शान्तिः ॥

इति श्रीजाबाल्युपनिषत्समाप्ता ॥ १०८ ॥

# गणेशपूर्वतापिन्युपनिषत् ॥ १०९ ॥

गणेशं प्रमथाधीशं निर्गुणं सगुणं विभुम् ।
योगिनो यत्पदं यान्ति तं गौरीनन्दनं भजे ॥ १ ॥

ॐ नमो वरदाय विघ्नहर्त्रे ॥ अथातो ब्रह्मोपनिषदं व्याख्यास्यामः । ब्रह्मा देवानां सवितुः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । धाता वसूनां सुरभिः सृजानां नमो ब्रह्मणेऽथर्वपुत्राय मीढुषे ॥ धाता देवानां प्रथमं हि चेतो मनो वनानीव मनसाऽकल्पयद्यः । नमो ब्रह्मणे ब्रह्मपुत्राय तुभ्यं ज्येष्ठायाथर्वपुत्राय धन्विने ॥ १ ॥ ॐ प्रजापतिः प्रजा असृजत । ताः सृष्टा अब्रुवन् कथमन्नाद्या अभवन्निति । स त्रेधा व्यभजद्भूर्भुवःस्वरिति । स तपोऽतप्यत । स ब्रह्मा स विष्णुः स शिवः स प्रजापतिः सेन्द्रः सोऽग्निः समभवत् । स तूष्णीं मनसा ध्यायन् कथमिमेऽन्नाद्याः स्युरिति । सोऽपश्यदात्मनाऽऽत्मानं गजरूपधरं देवं शशिवर्णं चतुर्भुजं यतो वा इमानि भूतानि जायन्ते यतो वायन्ति यत्रैव यन्ति च । तदेतदक्षरं परं ब्रह्म । एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुरापो ज्योतिः पृथिवी विश्वस्य धारिणी । पुरुष एवेदं विश्वं तपो ब्रह्म परामृतमिति ॥ २ ॥ सोऽस्तुवत नमो ब्रह्मणे नमो ब्राह्मणेभ्यो नमो वेदेभ्यो नमो देवेभ्यो नम ऋषिभ्यो नमः कुल्येभ्यः प्रकुल्येभ्यो नमः सवित्रे प्रसवित्रे नमो भोज्याय प्रकृष्टाय कपर्दिने चक्राय चक्रधरायान्नायान्नपतये शिवाय सदाशिवाय तुर्याय तुरीयाय भूर्भुवःस्वःपते रायस्पते वाजिपते गोपते ऋग्यजुःसामाथर्वाङ्गिरःपते नमो ब्रह्मपुत्रायेति ॥ ३ ॥ सोऽब्रवीद्वरदोऽस्म्यहमिति । स प्रजापतिरब्रवीत्कथमिमेऽन्नाद्याः स्युरिति । स होवाच ब्रह्मपुत्रस्तपस्तेपे सिद्धक्षेत्रे महायशाः । स सर्वस्य वक्ता सर्वस्य ज्ञातासीति । स होवाच तपस्यन्तं सिद्धारण्ये भृगुपुत्रं पृच्छध्वमिति । ते प्रत्याययुः । स होवाच किमेतदिति । ते होचुः कथं वयमन्नाद्या भवाम इति । स तूष्णीं मनसा ध्यायन् कथमिमेऽन्नाद्याः स्युरिति । स एतमानुष्टुभं मन्त्रराजमपश्यत् । यदिदं किञ्च सर्वमसृजत । तस्मात्सर्वमानुष्टुभमित्याचक्षते यदिदं किञ्च । अनुष्टुभा वा इमानि भूतानि जायन्ते । अनुष्टुभा जातानि जीवन्त्यनुष्टुभं प्रयन्त्यभिसंविशन्ति । तस्यैषा भवति—अनुष्टुप्प्रथमा भवत्यनुष्टु-

त्तमा भवति । वाग्वा अनुष्टुब्वाचैव प्रयन्ति वाचैवोद्यन्ति । परमा वा एषा छन्दसां यदनुष्टुप् । सर्वमनुष्टुप् । एतं मन्त्रराजं यः पश्यति स पश्यति । स भुक्तिं मुक्तिं च विन्दति । तेन सर्वज्ञानं भवति । तदेतन्निदर्शनं भवति— एको देवः प्रापको यो वसूनां श्रिया जुष्टः सर्वतोभद्र एषः । मायादेवो बलगहनो ब्रह्मारातीस्तं देवमीडे दक्षिणास्यम् ॥ आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सङ्गृभाय । महाहस्ती दक्षिणेन ॥ इति सहस्रकृत्वस्तुष्टाव ॥ ४ ॥ अथापश्यन्महादेवं श्रिया जुष्टं मदोत्कटम् । सनकादिमहायोगिवेदविद्भिरुपासितम् ॥ द्रुहिणादिमदेवेशषट्पदालिविराजितम् । लसत्कर्णं महादेवं गजरूपधरं शिवम् ॥ स होवाच वरदोऽस्मीति । स तूष्णीं मनसा वव्रे । स तथेति होवाच । तदेष श्लोकः—स संस्तुतो दैवतदेवसूनुः सुतं भृगोर्वाक्यमुवाच तुष्टः । अवेहि मां भार्गव वक्रतुण्डमनाथनाथं त्रिगुणात्मकं शिवम् ॥ अथ तस्य षडङ्गानि प्रादुर्बभूवुः । स होवाच जपध्वमानुष्टुभं मन्त्रराज षट्पदं सषडक्षरम् । इति यो जपति स भूतिमान् भवतीति यूयमन्नाद्या भवेयुरिति । तदेतन्निदर्शनम्—गणानां त्वा गणनाथं सुरेन्द्रं कविं कवीनामतिमेधविग्रहम् । ज्येष्ठराजं वृषभं केतुमेकं सा नः शृण्वन्नूतिभिः सीद शश्वत् ॥ ५ ॥ ते होचुः कथमानुष्टुभं मन्त्रराजमभिजानीम इति । स एतमानुष्टुभं षट्पदं मन्त्रराज कथयाञ्चक्रे । स साम भवति । ऋग्वै गायत्री यजुरुष्णिगनुष्टुप् साम । स आदित्यो भवति । ऋग्वै वसुर्यजू रुद्राः सामादित्या इति । स षट्पदो भवति । साम वै षट्पदः । ससागरां सप्तद्वीपां सपर्वतां वसुन्धरां तत्साम्नः प्रथमं पादं जानीयाद्रायस्पोषस्य दातेति । तेन सप्तद्वीपाधिपो भवति भूःपतित्वं च गच्छति । यक्षगन्धर्वाप्सरोगणसेवितमन्तरिक्षं द्वितीयं पादं जानीयान्निधिदातेति । तेन धनदादिकाष्ठापतिर्भवति भुवःपतित्वं च गच्छति । वसुरुद्रादित्यैः सर्वैर्देवैः सेवितं दिवं तत्साम्नस्तृतीयं पादं जानीयादन्नदो मत इति । तेन देवाधिपत्यं स्वःपतित्वं च गच्छति । ऋग्यजुःसामाथर्वाङ्गिरोगणसेवितं ब्रह्मलोकं तुर्यं पादं जानीयाद्रक्षोहण इति । तेन देवाधिपत्यं ब्रह्माधिपत्यं च गच्छति । वासुदेवादिचतुर्व्यूहसेवितं विष्णुलोकं तत्साम्नः पञ्चमं पादं जानीयाद्बलगहन इति । तेन सर्वदेवाधिपत्यं विष्णुलोकाधिपत्यं च गच्छति । ब्रह्मस्वरूपं निरञ्जनं परमव्योम्निकं तत्साम्नः षष्ठं पादं जानीयात् । तेन वक्रतुण्डाय हुमिति यो जानीयात्सोऽमृतत्वं च

गच्छति । सत्यलोकाधिपत्यं च गच्छति ॥ ६ ॥ ऋग्यजुःसामाथर्वाश्चत्वारः पादा भवन्ति । रायस्पोषस्य दाता चेति प्रथमः पादो भवति, ऋग्वै प्रथमः पादः । निधिदाताऽन्नदो मत इति द्वितीयः पादः, यजुर्वै द्वितीयः पादः । रक्षोहणो वो बलगहन इति तृतीयः पादः, साम वै तृतीयः पादः । वक्रतुण्डाय हुमिति चतुर्थः पादः अथर्वश्चतुर्थः पादोऽथर्वश्चतुर्थः पाद इति ॥ ७ ॥

इति गणेशपूर्वतापिन्युपनिषत्सु प्रथमोपनिषत् ॥ १ ॥

स होवाच प्रजापतिरग्निर्वै वेदा इदं सर्वं विश्वानि भूतानि विराट् स्वराट् सम्राट् तत्साम्नः प्रथमं पादं जानीयात् । ऋग्यजुःसामाथर्वरूपः सूर्योऽन्तरादित्ये हिरण्मयः पुरुषस्तत्साम्नो द्वितीयं पादं जानीयात् । य ओषधीनां प्रभविता तारापतिः सोमस्तत्साम्नस्तृतीयं पादं जानीयात् । यो ब्रह्मा तत्साम्नश्चतुर्थं पादं जानीयात् । यो हरिस्तत्साम्नः पञ्चमं पादं जानीयात् । यः शिवः स परं ब्रह्म तत्साम्नोऽन्त्यं पादं जानीयात् । यो जानीते सोऽमृतत्वं च गच्छति परं ब्रह्मैव भवति । तस्मादिदमानुष्टुभं साम यत्र क्वचिन्नाचष्टे । यदि दातुमपेक्षते पुत्राय शुश्रूषवे दास्यत्यन्यस्मै शिष्याय वेति ॥ १ ॥ तस्य हि षडङ्गानि भवन्ति—ॐ हृदयाय नमः शिरसे स्वाहा, शिखायै वषट्, कवचाय हुं । नेत्रत्रयाय वौषट्, अस्त्राय फडिति प्रथमं प्रथमेन द्वितीयं द्वितीयेन तृतीयं तृतीयेन चतुर्थं चतुर्थेन पञ्चमं पञ्चमेन षष्ठं षष्ठेन प्रत्यक्षरमुभयतो माया लक्ष्मीश्च भवति । माया वा एषा वैनायकी सर्वमिदं सृजति, सर्वमिदं रक्षति, सर्वमिदं संहरति, तस्मान्मायामेतां शक्तिं वेद । स मृत्युं जयति । स पाप्मानं तरति । स महतीं श्रियमश्नुते । सोऽभिवादी षट्कर्मसंसिद्धो भवत्यमृतत्वं च गच्छति । मीमांसन्ते ब्रह्मवादिनो ह्रस्वा वा दीर्घा वा प्लुता वेति । यदि ह्रस्वा भवति सर्वपाप्मानं तरत्यमृतत्वं च गच्छति । यदि दीर्घा भवति महतीं श्रियमाप्नुयादमृतत्वं च गच्छति । यदि प्लुता भवति ज्ञानवान् भवत्यमृतत्वं च गच्छति । तदेतदृषिणोक्तं निदर्शनम्—स ईं पाहि य ऋजीषी तरुद्रः स श्रियं लक्ष्मीमौपलाम्बिकां गाम् । षष्ठीं च यामिन्द्रसेनेत्युत आहुस्तां विद्यां ब्रह्मयोनिस्वरूपाम् ॥ तामिहायुषे शरणं प्रपद्ये । क्षीरोदार्णवशायिनं कल्पद्रुमाधःस्थितं वरदं व्योमरूपिणं प्रचण्डदण्डदोर्दण्डं वक्रतुण्डस्वरूपिणं पार्श्वाधःस्थितकामधेनुं शिवोमातनयं विभुम् । रुक्माम्बरनिभाकाशं रक्तवर्णं चतुर्भुजम् । कपर्दिनं शिवं शान्तं भक्तानामभयप्रदम् ॥

उन्नतप्रपदाङ्गुष्ठं गूढगुल्फं सपार्ष्णिकम् । पीनजंघं गूढजानुं स्थूलोरुं प्रोन्नम-त्कटिम् ॥ निम्ननाभिं कम्बुकण्ठं लम्बोष्ठं लम्बनासिकम् । सिद्धिबुद्ध्युभया-श्लिष्टं प्रसन्नवदनाम्बुजम् ॥ इति संसर्गः ॥ २ ॥ अथ छन्दोदैवतम् । अनुष्टुप्छन्दो भवति, द्वात्रिंशदक्षरानुष्टुब भवति । अनुष्टुभा सर्वमिदं सृष्टमनुष्टुभा सर्वमुपसंहृतम् । शिवोमायुतः परमात्मा वरदो देवता । ते होचुः कथं शिवोमायुत इति । स होवाच भृगुपुत्रः प्रकृतिपुरुषमयो हि स धनद इति, प्रकृतिर्माया पुरुषः शिव इति । सोऽयं विश्वात्मा देवतेति । तदेतन्निदर्शनम्—इन्द्रो मायाभिः पुरुहूत ईडे शर्वो विश्वं मायया स्विद्धार । सोऽजः शेते मायया स्विद्गुहायां विश्वं न्यस्तं विष्णुरेको विजज्ञे ॥ तदेतन्माया हंसमयी देवानाम् ॥ सर्वेषां वा एतद्भूतानामाकाशः परायणम् । सर्वाणि ह वा इमानि भूतान्याकाशादेव जायन्ते जातानि जीवन्त्याकाशं प्रयन्त्यभिसंविशन्ति । तस्मादाकाशबीजं शिवो विद्यात् । तदेतन्निदर्शनम्—हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्यो-मसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहदिति ॥ ३ ॥ अथाधिष्ठानम्—मध्ये बिन्दुं त्रिकोणं तदनु ऋतुगणं वसुदलं द्वादशारं षोडशकर्णिकेति । मध्ये बीजात्मकं देवं यजेत् । वामदक्षिणे सिद्धिर्बुद्धिः । अग्रे कामदुघा षट्कोणे सुमुखादयः षड्विनायकाः । वसुदले वक्रतुण्डाद्यष्टविनायकाः । द्वादशारे बटुको वामनो महादशकमहोदरौ सुभद्रो माली वरो राम उमा शिवः स्कन्दो नन्दी । तद्बाह्येऽणिमादिसिद्धयः । षोडशारे दिक्पालाः सायुधा इति ॥ ४ ॥ अथ प्रसारः—य एतेन चतुर्थीषु पक्षयोरुभयोरपि । लक्षं जुहुयादपूपानां तत्क्षणाद्धनदो भवेत् ॥ सिद्धौदनं त्रिमासं तु जुह्वदन्ना-वनन्यधीः । तावज्जुह्वत्पृथुकान्हि साक्षाद्वैश्रवणो भवेत् ॥ उच्चाटयेद्विभीतैश्च मारयेद्विषवृक्षजैः । वश्याय पङ्कजैर्विद्वान्धनार्थी मोदकैर्हुनेत् ॥ एवं ज्ञात्वा कृतकर्मा भवति कृतकर्मा भवतीति ॥ ५ ॥

इति गणेशपूर्वतापिन्युपनिषत्सु द्वितीयोपनिषत् ॥ २ ॥

अथ होवाच भृगुपुत्रस्तत्त्वं विजिज्ञासितव्यमिति । मूले शून्यं विजानीयात् । शून्यं वै परं ब्रह्म । तत्र सतारं समायं साम न्यसेत्त्रिरेखं भवति, त्रयो हीमे लोकास्त्रयो हीमे वेदाः । ऋग्वै भूः सा माया भवति । यजुर्वै भुवः स शिवो भवति । साम वै स्वः स हिरण्यगर्भो भवति । षट्कोणं

भवति षड् हीमे लोकाः षड्वा ऋतवो भवन्ति । तत्र तारमायारमामारविश्वेश-धरणीक्रमाद्न्यसेत् । अष्टपत्रं भवत्यष्टाक्षरा गायत्री भवति ब्रह्मगायत्रीं न्यसेत् । द्वादशपत्रं भवति द्वादशादित्या भवन्ति ते स्वरा भवन्ति । स्वरान् ज्ञात्वादित्यलोकमश्नुते । षोडशपत्रं भवति षोडशकलो वै पुरुषो वर्णो ह वै पुरुषः स लोकाधिष्ठितो भवत्यनुष्टुब् वै पुरुषः ॥ १ ॥ स होवाच भृगुपुत्र एतमानुष्टुभं मन्त्रराजं साङ्गं सप्रसृतिकं समायं साधिष्ठानं सतन्त्रं यो जानाति स भूतिमान् भवति सोऽमृतत्वं च गच्छति सोऽमृतत्वं च गच्छतीति ॥ २ ॥

इति गणेशपूर्वतापिन्युपनिषत्सु तृतीयोपनिषत् ॥ ३ ॥

इत्याथर्वणीया गणेशपूर्वतापिन्युपनिषत्समाप्ता ॥ १०९ ॥

---

# गणेशोत्तरतापिन्युपनिषत् ॥ ११० ॥

ॐ ॥ ओमित्येकाक्षरं ब्रह्मेदं सर्वम् । तस्योपव्याख्यानम् । सर्वं भूतं भव्यं भविष्यदिति सर्वमोङ्कार एव । एतच्चान्यच्च त्रिकालातीतं तदप्योङ्कार एव । सर्वं ह्येतद्गणेशोऽयमात्मा ब्रह्मेति । सोऽयमात्मा चतुष्पात् । जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः । स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः । यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम् । सुषुप्तिस्थान एकीभूतः प्रज्ञानघन एवानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः । एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् । नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनमदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स गणेश आत्मा विज्ञेयः । सदोज्ज्वलो विद्यातत्कार्यहीनः स्वात्मबन्धरहितः सर्वदोषरहित आनन्दरूपः सर्वाधिष्ठानः सन्मात्रो निरस्ताविद्यातमोमोहमेवेति सम्भाव्याहमों तत्सत्परं ब्रह्म विघ्नराजश्चिदात्मकः सोऽहमों तद्विनायकं परं ज्योती रसोऽहमित्यात्मानमादाय मनसा ब्रह्मणैकीकुर्यात् । विनायकोऽहमित्येतत्त्वतः प्रवदन्ति ये । न ते संसारिणो नूनं प्रमोदो वै न संशयः ॥ इत्युपनिषत् । य एवं वेद स मुख्यो भवतीति याज्ञवल्क्य इति याज्ञवल्क्य

इति । एतदेव परं ध्यानमेतदेव परं तपः । विनायकस्य यज्ज्ञानं पूजनं भवमोचनम् ॥ अश्वमेधसहस्राणि वाजपेयशतानि च । एकस्य ध्यानयोगस्य कलां नार्हन्ति षोडशीम् ॥

इति गणेशोत्तरतापिन्युपनिषत्सु प्रथमोपनिषत् ॥ १ ॥

ॐ ॥ स विष्णुः स शिवः स ब्रह्मा सेन्द्रः सेन्दुः स सूर्यः स वायुः सोऽग्निः स ब्रह्मायमात्मने सर्वदेवाय आत्मने भूताय आत्मन इति मन्यन्ते । ॐ सोऽहं ॐ सोऽहं ॐ सोऽहमिति । ॐ ब्रह्मन् ॐ ब्रह्मन् ॐ ब्रह्मन्निति । ॐ शिवं ॐ शिवं ॐ शिवमिति । तं गणेशं तं गणेशमिदं श्रेष्ठम् । ॐ गणानां त्वा गणपतिः । सप्रियाणां त्वा प्रियपतिः । सनिधीनां त्वा निधिपतिः । ॐ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्ती प्रचोदयात् । ॐ तद्गणेशः । ॐ सद्गणेशः । ॐ परं गणेशः । ॐ ब्रह्म गणेशः । गणनाकारो नादः । एतत्सर्वो नादः । सर्वाकारो नादः । एतदाकारो नादः । महान्नादः । स गणेशो महान् भवति । सोऽणुर्भवति । स वन्द्यो भवति । स मुख्यो भवति । स पूज्यो भवति । रूपवान् भवति । अरूपवान् भवति । द्वैतो भवति । अद्वैतो भवति । स्थावरस्वरूपवान् भवति । जङ्गमस्वरूपवान् भवति । सचेतनविचेतनो भवति । सर्वं भवति । स गणेशोऽव्यक्तो योऽणुर्यः श्रेष्ठः स वै वेगवत्तरः । अह्रस्वाह्रस्वश्च । अतिह्रस्वातिह्रस्वातिह्रस्वश्च । अस्थूलास्थूलास्थूलश्च । ॐ न वायुर्नाग्निर्नाकाशो नापः पृथिवी न च । न दृश्यं न दृश्यं न दृश्यम् । न शीतं नोष्णं न वर्षं च । न पीतं न पीतं न पीतम् । न श्वेतं न श्वेतं न श्वेतम् । न रक्तं न रक्तं न रक्तम् । न कृष्णं न कृष्णं न कृष्णम् । न रूपं न नाम न गुणम् । न प्राप्यं गणेशं मन्यन्ते । स शुद्धः स शुद्धः स शुद्धो गणेशः । स ब्रह्म स ब्रह्म स ब्रह्म गणेशः । स शिवः स शिवः स शिवो गणेशः । इन्द्रो गणेशो विष्णुर्गणेशः सूर्यो गणेश एतत्सर्वं गणेशः । स निर्गुणः स निरहङ्कारः स निर्विकल्पः स निरीहः स निराकार आनन्दरूपस्तेजोरूपमनिर्वाच्यमप्रमेयः पुरातनो गणेशो निगद्यते । स आद्यः सोऽक्षरः सोऽनन्तः सोऽव्ययो महान्पुरुषः । तच्छुद्धं तच्छबलं ततः प्रकृतिमहत्तत्त्वानि जायन्ते । ततश्चाहङ्कारादिपञ्चतन्मात्राणि जायन्ते । ततः पृथ्व्यप्तेजोवाय्वाकाशपञ्चमहद्भूतानि जायन्ते । पृथिव्या ओषधय ओषधीभ्योऽन्नमन्नाद्रेतस्ततः पुरुषस्ततः सर्वं ततः सर्वं ततः सर्वं जगत् ।

सर्वाणि भूतानि जायन्ते । देवा नु जायन्ते । ततश्च जीवन्ति । देवा नु जीवन्ति । यज्ञा नु जीवन्ति । सर्वं जीवति । स गणेश आत्मा विज्ञेयः । इत्युपनिषत् । य एवं वेद स मुख्यो भवतीति याज्ञवल्क्य इति याज्ञवल्क्य इति ॥

इति गणेशोत्तरतापिन्युपनिषत्सु द्वितीयोपनिषत् ॥ २ ॥

ॐ ॥ गणेशो वै ब्रह्म तद्विद्यात् । यदिदं किञ्च सर्वं भूतं भव्यं जायमानं च तत्सर्वमित्याचक्षते । अस्मान्नातः परं किञ्चित् । यो वै वेद स वेद ब्रह्म ब्रह्मैवोपाप्नोति । तत्सर्वमित्याचक्षते । ब्रह्मविष्ण्वादिगणानामीशभूतमित्याह तद्गणेश इति । तत्परमित्याह यमेते नाप्नुवन्ति पृथिवी सुवर्चा युवतिः सजोषाः । यद्वै वाङ् नाक्रामति मनसा सह नाग्निर्न पृथ्वी न तेजो न वायुर्न व्योम न जलमित्याह । नेन्द्रियं न शरीरं न नाम न रूपम् । न शुक्लं न रक्तं न पीतं न कृष्णमिति । न जाग्रन्न स्वप्नो न सुषुप्तिर्न वै तुरीया । तच्छुद्धमप्राप्यमप्राप्यं च । अज्ञेयं चाज्ञेयं च । विकल्पासहिष्णु तत्सशक्तिकं गजवक्त्रं गजाकारं जगदेवावरुन्धे । दिवमनन्तशीर्षैर्दिशमनन्तकरैर्व्योमानन्तजठरैर्महीमनन्तपादैः स्वतेजसा बाह्यान्तरीयान्व्याप्य तिष्ठतीत्याह । तद्वै परं ब्रह्म गणेश इत्यात्मानं मन्यन्ते । तद्वै सर्वतः पश्यति स्म न किञ्चिद्ददर्श । ततो वै सोऽहमभूत् । नैकाकिता युक्तेति गुणांन्निर्ममे । नाभे रजः स वै ब्रह्मा । मुखात्सत्त्वं स वै विष्णुः । नयनात्तमः स वै हरः । ब्रह्माणमुपदिशति स्म ब्रह्मन् कुरु सृष्टिम् । ब्रह्मोवाच नाहं वेद्मि । गणेश उवाच मद्देहे ब्रह्माण्डान्तर्गतं विलोकय तथाविधामेव कुरु सृष्टिम् । अथ ब्रह्मा जन्मद्वारेण ब्रह्माण्डान्तर्गतं विलोकयति स्म । समुद्रान् सरितः पर्वतान् वनानि महीं दिवं पातालं च नरान् पशून्मृगान्नागान् हयान् गोव्रजान् सूर्याचन्द्रमसो नक्षत्राण्यग्नीन् वायून्दिशस्ततो वै सृष्टिमचीकरत् । ततश्चात्मानमिति मन्यते स्म । न वै मत्तः परं किञ्चिदहमेव सर्वस्येश इति यावद्वदति तावत्क्रूरा अजायेरन् । महद्देहा जिह्वया भुवं लिहाना दंष्ट्राव्याप्ताकाशा महच्छब्दा ब्रह्माणं हन्तुमुद्युक्ताः । तान्दृष्ट्वाबिभ्यत्तत्संस्मार । ततश्चाग्रे कोटिसूर्यप्रतीकाशमानन्दरूपं गजवक्त्रं विलोकयति स्म । तुष्टावाथ गणेश्वरम् । त्वं निर्माता क्ष्माभृतां सरितां सागराणां स्थावराणां जङ्गमानां च । त्वत्तः परतरं किञ्चिन्नैवास्ति जगतः प्रभो । कर्ता सर्वस्य विश्वस्य पात-

संहारकारकः । भवानिदं जगत्सर्वं व्याप्यैव परितिष्ठति ॥ इति स्तुत्वा ब्रह्माणं तदुवाच ब्रह्मंस्तपस्व तपस्वेत्युक्त्वाऽन्तर्हिते तस्मिन् ब्रह्मा तपश्चचार । कियत्स्वतीतेष्वनेहःसु तपसि स्थिते ब्रह्मणि पुरो भूत्वोवाच । प्रसन्नोऽहं प्रसन्नोऽहं वरान् वरय । श्रुत्वैवं वचोन्मील्य नयने यावत्पुरः पश्यति तावद्गणेशं ददर्श । स्तौति स्म । त्वं ब्रह्मा त्वं विष्णुस्त्वं हरस्त्वं प्रजापतिस्त्वमिन्द्रस्त्वं सूर्यस्त्वं सोमस्त्वं गणेशः । त्वया व्याप्तं चराचरं त्वद्दते न हि किञ्चन । ततश्च गणेश उवाच । त्वं चाहं च न वै भिन्नौ कुरु सृष्टिं प्रजापते । शक्तिं गृहाण मद्दत्तां जगत्सर्जनकर्मणि ॥ ततो वै गृहीतायां शक्त्वा ब्रह्मणः सृष्टिरजायत । ब्राह्मणो वै मुखाज्जज्ञे बाह्वोः क्षत्रमूर्वोर्वैश्यः पद्भ्यां शूद्रश्चक्षुषो वै सूर्यो मनसश्चन्द्रमा अग्निर्वै मुखात्प्राणाद्वायुर्नाभेर्व्योम शीर्ष्णो द्यौः पद्भ्यां भूमिर्दिशः श्रोत्रात् । तथा लोकानकल्पयन्निति । ततो वै सत्त्वमुवाच त्वं वै विष्णुः पाहि पाहि जगत्सर्वम् । विष्णुरुवाच न मे शक्तिः । सोवाच गृहाणेमां विद्याम् । ततो वै सत्त्वं तामादाय जगत्पाति स्म । हरमुवाच कुरु हर संहारम् । जगद्धरणाद्धरो भव । हरश्चात्मानमित्यवैति स्म न वै मत्परं किञ्चिद्विश्वस्यादिरहं हर इति गर्वं दधौ यावत्तावद्व्याप्तं व्योम गजवक्त्रैर्महच्छब्दैर्हरं हर्तुमुद्युक्तैः । हरो वै विलोक्य रुदति स्म । रोदनाद्रुद्रसंज्ञः । ततस्तं पुरुषं स्मृत्वा तुष्टाव त्वं ब्रह्मा त्वं कर्ता त्वं प्रधानं त्वं लोकान् सृजसि रक्षसि हरसि । विश्वाधारस्त्वमनाधारोऽनाधेयोऽनिर्देश्योऽप्रतर्क्यो व्याप्येदं सर्वं तिष्ठसीति स्तवनाद्विनायकं ददर्श । ततश्च तं ननाम । गणेश उवाच कुरु हर हरणम् । तद्वै संहर्ताऽभूद्रुद्रः । य एवं वेद स गणेशो भवति । इत्युपनिषत् ॥

इति गणेशोत्तरतापिन्युपनिषत्सु तृतीयोपनिषत् ॥ ३ ॥

ॐ ॥ गणेशो वै सदजायत तद्वै परं ब्रह्म । तद्विदाप्नोति परम् । तदेषाभ्युक्ता यदनादिभूतं यदनन्तरूपं यद्विज्ञानरूपं यद्देवाः सर्वे ब्रह्म ज्येष्ठमुपासते न वै कार्यं करणं न तत्समश्चाधिकश्च दृश्यः । सूर्योऽस्माद्भीत उदेति । वातोऽस्माद्भीतः पवते । अग्निर्वै भीतस्तिष्ठति । तच्चित्स्वरूपं निर्विकारमद्वैतं च । तन्मायाशबलमजनीत्याह । अनेन यथा तमस्ततश्चोमिति ध्वनिरभूत् । स वै गजाकारः । अनिर्वचनीया सैव माया जगद्बीजमित्याह । सैव प्रकृतिरिति गणेश इति प्रधानमिति च मायाशबलमिति च । एतस्माद्वै महत्तत्त्वमजा-

यत । ततः कराग्रेणाहङ्कारं सृष्टवान् । स वै त्रिविधः सात्त्विको राजसस्ताम-सश्चेति । सात्त्विकी ज्ञानशक्तिः । राजसी क्रियाशक्तिः । तामसी द्रव्य-शक्तिः । तामस्याः पञ्चतन्मात्रा अजायन्त पञ्चभूतान्यजायन्त । राजस्याः पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च वायवश्चाजायन्त । सात्त्विक्या दिशो वायुः सूर्यो वरुणोऽश्विनाविति ज्ञानेन्द्रियदेवता अग्निरिन्द्रो विष्णुः प्रजापतिर्मित्र इति कर्मेन्द्रियदेवताः । इदमादिपुरुषरूपम् । परमात्मनः सूक्ष्मशरीरमिदमेवोच्यते । अथ द्वितीयम् । पञ्चतन्मात्राः पञ्चसूक्ष्मभूतान्यु-पादाय पञ्चीकरणे कृते पञ्चमहाभूतान्यजायन्त । अवशिष्टानां पञ्चपञ्चाशानां कल्पारम्भसमये भूतविभागे चैतन्यप्रवेशादहमित्यभिमानः । तस्मादादि-गणेशो भवानुच्यते । ततो वै भूतेभ्यश्चतुर्दश लोका अजायेरन् । तदन्तर्गत-जीवराशयः स्थूलशरीरैः सह विराडित्युच्यते । इति द्वितीयम् । राजसो ब्रह्मा सात्त्विको विष्णुस्तामसो वै हरः । त्रयं मिलित्वा परस्परमुवाच अह-मेव सर्वस्येश इति । ततो वै परस्परमसहमानाश्चोर्ध्वं जग्मुः । तत्र न किञ्चिद्ददृशुः । ततश्चाधःप्रदेशे दशदिक्षु भ्रमन्तो न किञ्चित्पश्यन्ति स्म । ततो वै ध्यानस्थिता अभूवन् । ततश्च हृद्देशे महान्तं पुरुषं गजवक्त्रमसंख्य-शीर्षमसंख्यपादमनन्तकरं तेजसा व्याप्ताखिललोकं ब्रह्ममूर्धानं दिक्श्रवणं ब्रह्माण्डगण्डं चिद्व्योमतालुकं सत्यजननं च जगदुत्पत्त्यपायोन्मेषनिमेषं सोमा-र्काग्निनेत्रं पर्वतेशरदं पुण्यापुण्योष्ठं ग्रहोडुदशनं भारतीजिह्वं शक्रघ्राणं कुलगोत्रांसं सोमेन कण्ठं हरशिरोरुहं सरिन्नदभुजमुरगाङ्गुलिकमृक्षनखं श्रीहृ-त्कमाकाशनाभिकं सागरोदरं महीकटिदेशं सृष्टिलिङ्गकं पर्वतेशोरुं दस्रजा-नुकं जठरान्तःस्थितयक्षगन्धर्वरक्षःकिन्नरमानुषं पातालजंघकं मुनिचरणं कालाङ्गुष्ठकं तारकाजाललाङ्गुलं दृष्ट्वा स्तुवन्ति स्म । यतो वा इमानि भूतानि जायन्ते यतोऽग्निः पृथिव्यपस्तेजो वायुर्यत्कराग्राद्ब्रह्मविष्णुरुद्रा अजायन्त यतो वै समुद्राः सरितः पर्वताश्च यतो वै चराचरमिति स्तवनात्प्रसन्नो भूत्वो-वाचाऽहं सर्वस्येशो मत्तः सर्वाणि भूतानि मत्तः सर्वं चराचरं भवन्तो वै न मद्भिन्ना गुणा मे वै न संशयः । गुणेशं मां हृदि संचिन्त्य राजस त्वं जगत्कुरु सात्त्विक त्वं पालय तामस त्वं हरेत्युक्त्वान्तर्हितः । स वै गणेशः सर्वात्मा विज्ञेयः सर्वदेवात्मा वै स एकः । य एवं वेद स गणेशो भवति । इत्युपनिषत् ।

इति गणेशोत्तरतापिन्युपनिषत्सु चतुर्थोपनिषत् ॥ ४ ॥

ॐ ॥ देवा ह वै रुद्रमब्रुवन् कथमेतस्योपासनम् । स होवाच रुद्रो गणको निचृद्गायत्री श्रीगणपतेरेनं मन्त्रराजमन्योन्याभावात्प्रणवस्वरूपस्यास्य परमात्मनोऽङ्गानि जानीते स जानाति सोऽमृतत्वं च गच्छति । योऽधीते स सर्वं तरति । य एनं मन्त्रराज गणपतेः सर्वदं नित्यं जपति सोऽग्निं स्तम्भयति स उदकं स्तम्भयति स वायुं स्तम्भयति स सूर्यं स्तम्भयति स सर्वान्देवान्स्तम्भयति स विषं स्तम्भयति स सर्वोपद्रवान्स्तम्भयति । इत्युपनिषत् । य एनं मन्त्रराजं नित्यमधीते स विघ्नानाकर्षयति देवान्यक्षान् रोगान् ग्रहान्मनुष्यान् सर्वानाकर्षयति । स भूर्लोकं जयति स भुवर्लोकं जयति स स्वर्लोकं स महर्लोकं स जनोलोकं स तपोलोकं स सत्यलोकं स सप्तलोकं स सर्वलोकं जयति । सोऽग्निष्टोमेन यजते सोऽत्यग्निष्टोमेन स उक्थ्येन स षोडशीयेन स वाजपेयेन सोऽतिरात्रेण सोऽप्तोर्यामेण स सर्वैः क्रतुभिर्यजते । य एनं मन्त्रराजं वैघ्नराजं नित्यमधीते स ऋचोऽधीते स यजूंष्यधीते स सामान्यधीते सोऽथर्वणमधीते सोऽङ्गिरसमधीते स शाखा अधीते स पुराणान्यधीते स कल्पानधीते स गाथा अधीते स नाराशंसीरधीते स प्रणवमधीते । य एनं मन्त्रराजं गाणेशं वेद स सर्वं वेद स सर्वं वेद । स वेदसमः स मुनिसमः स नागसमः स सूर्यसमः सोऽग्निसम इति । उपनीतैकाधिकशतं गृहस्थैकाधिकशतं वानप्रस्थकाधिकशतं रुद्रजापकसमम् । यतीनामेकाधिकशतमथर्वशिरःशिखाध्यापकसमम् । रुद्रजापकैकाधिकशतमथर्वशिरःशिखाध्यापकैकाधिकशतं गाणेशतापिनीयोपनिषदध्यापकसमम् । मन्त्रराजजापकस्य यत्र रविसोमौ न तपतो यत्र वायुर्नक्षत्राणि न वाति भान्ति यत्राग्निर्मृत्युर्न दहति प्रविशति यत्र मोहो न दुःखं सदानन्दं परानन्दं समं शाश्वतं सदाशिवं परं ब्रह्मादिवन्दितं योगिध्येयं परमं पदं चिन्मात्रं ब्रह्मणस्पतिमेकाक्षरमेवं परमात्मानं बाह्यान्ते लब्धांशं हृदि समावेश्य किञ्चिज्जप्त्वा ततो न जपो न माला नासनं न ध्यानावाहनादि । स्वयमवतीर्णो ह्ययमात्मा ब्रह्म सोऽहमात्मा चतुष्पात् । बहिःप्रज्ञः प्रविविक्तभुक् तैजसः । यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम् । तत्रैकीभूतः प्रज्ञानघन एवानन्दभुक् चेतोमुखः प्राज्ञः । एष सर्वेश्वरः सर्वान्तर्यामी एष योनिः सर्वभूतानाम् । न बहिःप्रज्ञं नान्तःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनमव्यपदेश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमैकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतमेवं

चतुष्पादं ध्यायन् स एवात्मा भवति । स आत्मा विज्ञेयः सदोज्ज्वलोऽविद्यातत्कार्यहीनः स्वात्मबन्धरहितो द्वैतरहितो निरस्ताविद्यातमोमोहाहङ्कारप्रधानमहमेव सर्वमिति सम्भाव्य विघ्नराजब्रह्मण्यमृते तेजोमये परंज्योतिर्मये सदानन्दमये स्वप्रकाशे सदोदिते नित्ये शुद्धे मुक्ते ज्ञेश्वरे परे ब्रह्मणि रमते रमते रमते रमते । य एवं गणेशतापनीयोपनिषदं वेद स संसारं तरति घोरं तरति दुःखं तरति विघ्नांस्तरति महोपसर्गं तरति । आनन्दो भवति स नित्यो भवति स शुद्धो भवति स मुक्तो भवति स स्वप्रकाशो भवति स ईश्वरो भवति स मुख्यो भवति स वैश्वानरो भवति स तैजसो भवति स प्राज्ञो भवति स साक्षी भवति स एव भवति स सर्वो भवति स सर्वो भवतीति । इत्युपनिषत् । ॐ स ह नाववतु ॥

इति गणेशोत्तरतापिन्युपनिषत्सु पञ्चमोपनिषत् ॥ ५ ॥

ॐ ॥ अथोवाच भगवती गौरी ह वै रुद्रमेतस्य मन्त्रराजस्यानुष्ठानविधिं मे ब्रूहीति । स होवाच रुद्रो विधिं लब्धांशं गुरुदेवतयोरालभ्य मनसा पुष्पं निवेद्योपक्रम्य भूतोत्सारणमासनबन्धाद्यात्मरक्षासुनियमभूतशुद्धिप्राणस्थापनप्रणवावर्तनमातृपूजनान्तर्मातृकान्तर्यागादि सम्पाद्यात्र केचन समन्त्रं मूलवैदिककल्पैरुपक्रमं ग्रहणसमर्पणनिवेदनानि बाह्येऽन्यथेति महार्घ्यं शंखं त्रिपाद्योर्गन्धादिना पूजितयोः स्थाप्य पात्रासादनं दक्षिणोपक्रमेण पाद्यार्घ्याचमनमधुपर्कपुनराचमननिवेदनपात्राणि संस्थासु यथोपदिष्टं चतुर्थ्योः पर्वणि संस्थासु यथाविधि स्थाप्य निवेदने प्रक्षालनमेव ततोऽर्वाक् पञ्चामृतपात्राणि रिक्तं च मूलेनालभ्य निवेदिन्यार्घ्योदकेनात्मानं पात्राणि सम्भारं च प्रोक्ष्य पात्रातिरिक्तानि महार्घ्योदकेन सर्वनिवेदनं करशुद्धिं मूलासुनियमं यथोक्तर्षिच्छन्दोदैवतं स्मृत्वा विनियोगश्च नित्ये पूजाङ्गो जपो जपाङ्गा पूजा जप इत्यङ्गुष्ठव्यापकस्वान्ताष्टाङ्गदण्डिमुण्डिन्यासादि कृत्वा मुखमवेक्ष्यात्मानं देवरूपिणं सम्भाव्य मूर्ध्नि पुष्पं दत्त्वा पीठं सम्पूज्यासनं दत्त्वा ऋष्यादि कृत्वा ध्यात्वा हृदयाम्भोजे योगिनोऽत्र जपन्ति । स्वान्ताम्भोजाद्देवमावाह्य मुद्रां दर्शयित्वा देवस्य सकलीकरणाङ्गुष्ठहृदयार्पिन्या स्वान्ते मुद्रां निवेद्य पात्राणि च मूलेन दत्त्वा रिक्ते पञ्चामृतं संयोज्य तेन पञ्चवारं सकृद्वाऽभिषिच्य नित्येन संतर्प्य कल्पस्तवनादिपुरुषसूक्तरुद्राध्यायघोषशान्त्यादिना मूलेन चाभिषिच्य सर्वपूजां निवेद्य दीपं त्रिर्भ्राम्य सव्येनाप्लाव्य महानैवेद्यपीठावरणान्युपसंहृत्य दर्शयेत् ।

ताम्बूलान्ते किञ्चिन्मूलमावर्त्य पुनर्धूपादित्रयभक्ष्यादि निवेद्य मुद्राः सर्वोपचारस्य दर्शयित्वा निवेदनमिदमासनं नमः पाद्ये एषोऽर्घ्यः स्वाहेति दक्षिणकरेऽर्घ्ये इदं स्वधेति पुरश्चिके मुखे नम इति स्नानेष्वेष गन्धो नमोऽक्षतेषु ॐ पुष्पाणि नमः पुष्पेष्वेष धूपो दीपो नमो धूपदीपयोः समर्पयामीति नैवेद्यफलताम्बूलेषु निवेदयामि नमो हिरण्ये एष पुष्पाञ्जलिर्नम इति मालायामिति परमं रहस्यमप्रकाश्यं बीजं य एवं वेद स सर्वं वेद स सर्वं वेद। वर्णार्थं लब्धांशेन मन्त्रार्थेन च पीठावरणदेवतावधानेन वा जपति स जपति। मुख्यं लब्धांशमासनं मृदुलं भुक्तरिक्तवासःकौसुम्भमाञ्जिष्ठरक्तकम्बलचित्रमृगव्याघ्राजिनं वा यथोक्तमुक्तान्यतरैरासनान्तरयोजनास्फटिककमलभद्राक्षमणिमुक्ताप्रवालरुद्राक्षकुशग्रन्थिषु वा जपति स जपति। कुशमयी नित्याक्षालनं चन्दनालेपो धूपेनाभिमन्त्र्य पृथगभिमन्त्रणं सद्योजातैः पञ्चभिः प्राणस्थापनजीवनतर्पणगुप्तानि च स्वमूले गुह्यं वामेन स्पृशेन्न दर्शयेत्। एवं श्रावणे पवित्रेण मधौ दमनेन जपमालया महानवम्यां तापस्यां चतुर्थ्यां तिललड्डुकैः सप्तम्यां शीतलचन्दनेन शिवरात्र्यां बिल्वदलमालयाऽन्यस्मिन्पर्वणि महत्यार्चयन्ति तेऽर्चयन्ति। मोदकपृथुकलाजसक्तुरम्भाफलेक्षुनारीकेलापूपानन्यानि च यथोपदिष्टमाहुतिभिर्जुहोति। जपश्च प्राक्प्रवणे होमोऽन्यथोपास्यः। एवं यः करोति सोऽमृतत्वं विन्दति स प्रतिष्ठां प्राप्नोति मुक्तिं विन्दति भुक्तिं भुनक्ति वाचं वदति यशो लभते। इदं रहस्यं यो जानाति स जानाति योऽधीते सोऽधीते स आनन्दो भवति स नित्यो भवति स विशुद्धो भवति स मुक्तो भवति स प्रकाशो भवति स दयावान्भवति ज्ञानवान्भवत्यानन्दवान्भवति विज्ञानवान्भवति विज्ञानानन्दो भवति सोऽमृतत्वं भवत्यमृतत्वं भवतीति।

ॐ स ह नाववत्विति शान्तिः ॥

इति गणेशोत्तरतापिन्युपनिषत्सु षष्ठोपनिषत् ॥ ६ ॥

इत्याथर्वणीया गणेशतापिन्युपनिषत्समाप्ता ॥ ११० ॥

# संन्यासोपनिषत् ॥ १११ ॥

देही संन्यसनाद्याति परां सालोक्यतां पराम् ।
ॐ तत्सच्चिन्मयं ब्रह्म सर्वातीतं समाश्रये ॥ १ ॥
ॐ पूर्णमद इति शान्तिः ॥

हरिः ॐ ॥ अथाहिताग्निर्म्रियेत प्रेतस्य मत्रैः संस्कारोपतिष्ठते । स्वस्थो वाश्रमपारं गच्छेयमिति । एतान्पितृमेधिकानोषधिसंभारान्संभृत्यारण्ये गत्वाऽमावास्यायां प्रातरेवाग्नीनुपसमाधाय पितृभ्यः श्राद्धतर्पणं कृत्वा ब्रह्मेष्टिं निर्वपेत् । स सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्यैषाहुतिर्दिव्याऽमृतत्वाय कल्पतामित्येवमत ऊर्ध्वं यद्ब्रह्माभ्युदयद्दिवं च लोकमिदमसुं च सर्वं सर्वमभिजन्युः । सर्वश्रियं दधतु सुमनस्यमाना ब्रह्मजज्ञानमिति ब्रह्मणेऽथर्वणे प्रजापतयेऽनुमतयेऽग्नये स्विष्टकृत इति हुत्वा यज्ञ यज्ञं गच्छेत्यग्नाचरणी हुत्वोचित्सखायमिति चतुर्भिरनुवाकैराज्याहुतीर्जुहुयात्तैरेवोपतिष्ठते । गय्यग्नेऽग्निगिति चाथो अग्नीन्समारोपयेद्व्रतवान्स्यादतन्द्रित इति ॥ १ ॥ तत्र श्लोकाः—ब्रह्मचर्याश्रमे खिन्नो गुरुशुश्रूषणे रतः । वेदानधीत्यानुज्ञात उच्यते गुरुणाश्रमी ॥ दारमाहृत्य सदृशमग्निमाधाय शक्तितः । ब्राह्मीमिष्टिं यजेत्तासामहोरात्रेण निर्वपेत् ॥ संविभज्य सुतानर्थैर्ग्राम्यकामान्विसृज्य च । चरेत वनमार्गेण शुचौ देशे परिभ्रमः ॥ वायुभक्षोऽम्बुभक्षो वा विहितानोत्तरः फलैः । स्वशरीरे समारोपः पृथिव्यां नाश्रुपातकाः । सह तेनैव पुरुषः कथं संन्यस्त उच्यते ॥ २ ॥ सनामधेयस्तु स किं यस्मिन्संन्यस्त उच्यते । तस्मात्फलविशुद्धाङ्गी संन्यासं सहतेऽर्चिमान् ॥ अग्निवर्णं निष्क्रामति वानप्रस्थं प्रपद्यते । लोकाद्भार्यया सहितो वनं गच्छति संयतः ॥ त्यक्त्वा कामान्संन्यसति भयं किमनुपश्यति । किंवा दुःखं समुद्दिश्य भोगांस्त्यजति सुस्थितान् ॥ गर्भवासभयाद्भीतः शीतोष्णाभ्यां तथैव च । गुहां प्रवेष्टुमिच्छामि परं पदमनामयमिति ॥ ३ ॥ संन्यस्याग्निं न पुनरावर्तनं यन्मन्युर्जायामावहदित्यथाध्यात्ममत्राञ्जपेद्दीक्षामुपेयात् । काषायवासाः कक्षोपस्थलोमानि वर्जयेदूर्ध्वगोपायुर्विमुक्तमार्गो भवत्यनयैव चेद्भिक्षाशनं दध्यात्पवित्रं धारयेज्जन्तुसंरक्षणार्थम् । तत्र श्लोकाः—कुण्डिकां चमसं शिक्यं त्रिविष्टपमुपानहम् । शीतोपघातिनीं कन्थां कौपीनाच्छादनं तथा ॥ पवित्रं स्नानशाटीं चोत्तरासङ्गस्त्रिदण्डकम् । अतोऽतिरिक्तं यत्किंचित्सर्वं तद्वर्जयेद्यतिः ॥ ३ ॥ नदीपुलिन-

शायी स्याद्देवागारेषु वाऽच्युत । नात्यर्थं सुखदुःखाभ्यां शरीरमुपतापयेत् ॥ स्नानं दानं तथा शौचमद्भिः पूताभिराचरेत् । स्तूयमानो न तुष्येत निन्दितो न शपेत्परान् ॥ भिक्षादि वैदलं पात्रं स्नानद्रव्यमवारितम् । एतां वृत्तिमुपासीना घातयन्तीन्द्रियाणि च ॥ विद्याया मनसि संयोगो मनसाकाशश्चाकाशाद्वायुर्वायोर्ज्योतिर्ज्योतिष आपोऽद्भ्यः पृथिवी पृथिव्या इत्येषा भूतानां ब्रह्म प्रपद्यते ॥ ४ ॥ अजरममरमक्षरमव्ययं प्रपद्यते तदभ्यासेन प्राणापानौ संयम्य तत्र श्लोकाः—वृषणापानयोर्मध्ये पाणी आस्थाय संश्रयेत् । संदश्य दशनैर्जिह्वां यवमात्रे विनिर्गताम् ॥ माषमात्रां तथा दृष्टिं श्रोत्रे स्थाप्य तथा भुवि । श्रवणे नासिके न गन्धाय न त्वचं न स्पर्शयेत् ॥ अथ शैवं पदं यत्र तद्ब्रह्म तत्परायणम् । तदभ्यासेन लभ्यते पूर्वजन्मार्चितात्मनः ॥ अथ तैः संभूतैर्वायुः संस्थाप्य हृदयं तपः । ऊर्ध्वं प्रपद्यते देहाद्भित्त्वा मूर्धानमव्ययम् ॥ अथाऽयं मूर्धानमस्य देहैषा गतिर्गतिमताम् । ये प्राप्य परमां गतिं भूयस्ते न निवर्तन्ते परात्परमवस्थात्परात्परमवस्थादिति ॥ ५ ॥

ॐ पूर्णमद इति शान्तिः ॥

इत्याथर्वणीया संन्यासोपनिषत्समाप्ता ॥ १११ ॥

---

# गोपीचन्दनोपनिषत् ॥ ११२ ॥

गोपिकास्वान्तसंलीनं श्रीकृष्णाख्यं परं महः ।
ब्रह्मानन्दस्वरूपं तत्स्वमात्रमिति चिन्तये ॥ १ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

हरिः ॐ ॥ गोपी का नाम । संरक्षणी । कुतः संरक्षणी । लोकस्य नरकान्मृत्योर्भयाच्च संरक्षणी । चन्दनं तुष्टिकारणं च । किं तुष्टिकारणम् । ब्रह्मानन्दकारणम् । य एवंविद्वानेतदाख्यापयेद्य एतच्च धारयेद्गोपीचन्दनमृत्तिकाया निरुक्त्या धारणमात्रेण च ब्रह्मलोके महीयते ब्रह्मलोके महीयत इति ॥ १ ॥ गोप्यो नाम विष्णुपत्न्यः स्युस्तासां चन्दनमाह्लादनम् । कश्चाह्लादः । एष ब्रह्मानन्दरूपः । काश्च विष्णुपत्न्यो गोप्यो नाम । या आत्मना ब्रह्मानन्दैकरूपं कृष्णाख्यं परं धामाजयंस्ता जगत्सृष्टिस्थित्यन्तकारिण्यः प्रकृतिमहदहमाद्या महामायाः । कश्च विष्णुः । परं ब्रह्मैव विष्णुः । कश्चाह्लादः । गोपीचन्दनसंसक्तमानुषाणां पापसंहरणाच्छुद्धान्तःकरणानां ब्रह्मज्ञानप्राप्तिश्च । य एवं

वेदेत्युपनिषत् ॥ २ ॥ गोपीत्यग्र उच्यतां चन्दनं तु ततः पश्चात् । गोपीत्यक्षरद्वयं चन्दनं तु त्रियक्षरं तस्मादक्षरपञ्चकम् । य एवंविद्वान् गोपीचन्दनं धारयेदक्षयं पदमाप्नोति, पञ्चत्वं न स पश्यति, ततोऽमृतत्वमश्नुते, ततोऽमृतत्वमश्नुत इति ॥ ३ ॥ अथ मायाशबलितं ब्रह्मासीत्ततश्च महदाद्या ब्रह्मणो महामायासम्मिलितात् । पञ्चभूतेषु गन्धवतीयं पृथिव्यासीत् । पृथिव्याश्च वैभवाद्वर्णभेदाः । पीतवर्णा मृदो जायन्ते लोकानुग्रहार्थम् । मायासहितब्रह्मसम्भोगवशादस्य चन्दनस्य वैभवम् । य एवंविद्वान्यतिहस्ते दद्यादनुपप्लवः सर्वमायुरेति । ततः प्राजापत्यं रायस्पोषं गौष्पत्यं च । य एतद्रहस्यं सायंप्रातर्ध्यायेदहोरात्रकृतं पापं नाशयति, मृतो मोक्षमश्नुत इति ॥ ४ ॥ गोपीचन्दनपङ्केन ललाटं यस्तु लेपयेत् । एकदण्डी त्रिदण्डी वा स वै मोक्षं समश्नुते ॥ १ ॥ गोपीचन्दनलिप्ताङ्गो यं यं पश्यति चक्षुषा । तं तं पूतं विजानीयाद्राजभिः सत्कृतो भवेत् ॥ २ ॥ ब्रह्महन्ता कृतघ्नश्च गोघ्नश्च गुरुतल्पगः । तेषां पापानि नश्यन्ति गोपीचन्दनधारणात् ॥ ३ ॥ गोपीचन्दनलिप्ताङ्गो म्रियते यत्र कुत्रचित् । अभिव्या[illegible]यतो भूत्वा देवेन्द्रपदमश्नुते ॥ ४ ॥ गोपीचन्दनलिप्ताङ्गं पुरुषं य उपासते । एवं ब्रह्मादयो देवास्तन्मुखास्तानुपासते ॥ ५ ॥ गोपीचन्दनलिप्ताङ्गः पुरुषो येन पूज्यते । विष्णुपूजितभूतित्वाद्विष्णुलोके महीयते ॥ ६ ॥ सदाचारः शुभाकल्पो मिताहारो जितेन्द्रियः । गोपीचन्दनलिप्ताङ्गः साक्षाद्विष्णुमयो भवेत् ॥ ७ ॥ गोपीचन्दनलिप्ताङ्गो व्रतं यस्तु समाचरेत् । ततः कोटिगुणं पुण्यमित्येवं मुनिरब्रवीत् ॥ ८ ॥ गोपीचन्दनलिप्ताङ्गैर्जपदानादि यत्कृतम् । न्यूनं संपूर्णतां याति विधानेन विशेषतः ॥ ९ ॥ गोपीचन्दनमायुष्यं बलारोग्यविवर्धनम् । कामदं मोक्षदं चैव इत्येवं मुनयोऽब्रुवन् ॥ १० ॥ अग्निष्टोमसहस्राणि वाजपेयशतानि च । तेषां पुण्यमवाप्नोति गोपीचन्दनधारणात् ॥ ११ ॥ गोपीचन्दनदानस्य नाश्वमेधकृतः फलम् । न गङ्गया समं तीर्थं न शुद्धिर्गोपिचन्दनात् ॥ १२ ॥ बहुनाऽत्र किमुक्तेन गोपीचन्दनमण्डनम् । न तत्तुल्यं भवेल्लोके नात्र कार्या विचारणा ॥ १३ ॥ चन्दनं चापि गोपीनां केलिकुङ्कुमसम्भवम् । मण्डनात्पावनं नृणां भुक्तिमुक्तिफलप्रदम् ॥ १४ ॥ कृष्णगोपीरतोद्भूतं पापघ्नं गोपिचन्दनम् । तत्प्रसादात्सर्वदैव चतुर्वर्गफलप्रदम् । तिलमात्रप्रदानेन काञ्चनाद्रिसमं फलम् ॥ १५ ॥ कुङ्कुमं कृष्णगोपीनां

जलक्रीडासु सम्भृतम् । गोपीचन्दनमित्युक्तं द्वारवत्यां सुरेश्वरैः ॥ १६ ॥ कृष्णगोपीजलक्रीडाकुङ्कुमं चन्दनैर्युतम् । तिलमात्रं प्रदायेदं पुनात्या दशमं कुलम् ॥ १७ ॥ गोपीचन्दनखण्डं तु चक्राकारं सुलक्षणम् । विष्णुरूपमिदं पुण्यं पावनं पीतवर्णकम् ॥ १८ ॥ आपो वा अग्र आसन् । तत्र प्रजापतिर्वायुर्भूत्वाऽश्राम्यतेदं सृजेयमिति । स तपोऽतप्यत । तत ओङ्कारमपश्यत् । ततो व्याहृतीस्ततो गायत्रीम् । गायत्र्या वेदास्तैरिदमसृजत । धूममार्गविस्तृतं हि वेदार्थमभिसन्धाय चतुर्दश लोकानसृजत । तत उपनिषदः श्रुतय आविर्बभूवुः । अर्चिर्मार्गविस्तृतं वेदार्थमभिसन्धाय सर्वान्वेदान्सरहस्योपनिषदङ्गान्ब्रह्मलोके स्थापयामास । ताश्चोपादिशद्वैवस्वतेऽन्तरे सगुणं ब्रह्म चिद्धनानन्दैकरूपं पुरुषोत्तमरूपेण मथुरायां वसुदेवसद्मन्याविर्भविष्यति । तत्र भवत्यः सर्वलोकोत्कृष्टसौन्दर्यक्रीडाभोगा गोपिकास्वरूपैः परब्रह्मानन्दैकरूपं कृष्णं भजिष्यथ । तत्र श्लोकाः–इति ब्रह्मवरं लब्ध्वा श्रुतयो ब्रह्मश्लोकगाः । कृष्णमाराधयामासुर्गोकुले धर्मसङ्कुले ॥ १९ ॥ श्रीकृष्णाख्यं परं ब्रह्म गोपिकाः श्रुतयोऽभवन् । एतत्सम्भोगसम्भूतं चन्दनं गोपीचन्दनं चन्दनं गोपीचन्दनमित्युपनिषत् ॥ २० ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

इत्याथर्वणीया गोपीचन्दनोपनिषत्समाप्ता ॥ ११२ ॥

---

## सरस्वतीरहस्योपनिषत् ॥ ११३ ॥

प्रतियोगिविनिर्मुक्तब्रह्मविद्यैकगोचरम् ।
अखण्डनिर्विकल्पं तद्रामचन्द्रपदं भजे ॥ १ ॥

ॐ वाङ्मे मनसीति शान्तिः ॥

हरिः ॐ ॥ ऋषयो ह वै भगवन्तमाश्वलायनं संपूज्य पप्रच्छुः केनोपायेन तज्ज्ञानं तत्पदार्थावभासकम् । यदुपासनया तत्त्वं जानासि भगवन्वद ॥ १ ॥ सरस्वतीदशश्लोक्या सऋचा बीजमिश्रया । स्तुत्वा जप्त्वा परां सिद्धिमलभं मुनिपुङ्गवाः ॥ २ ॥ ऋषय ऊचुः ॥ कथं सारस्वतप्राप्तिः केन ध्यानेन सुव्रत । महासरस्वती येन तुष्टा भगवती वद ॥ ३ ॥ स होवाचाश्वलायनः । अस्य श्रीसरस्वतीदशश्लोकीमहामन्त्रस्य । अहमाश्वलायन ऋषिः । अनुष्टुप् छन्दः । श्रीवागीश्वरी देवता । यद्वागिति बीजम् । देवीं वाचमिति शक्तिः । प्रणो

देवीति कीलकम् । विनियोगस्तत्प्रीत्यर्थे । श्रद्धा मेधा प्रज्ञा धारणा वाग्देवता महासरस्वतीत्येतैरङ्गन्यासः ॥ नीहारहारघनसारसुधाकराभां कल्याणदां कनकचम्पकदामभूषाम् । उत्तुङ्गपीनकुचकुम्भमनोहराङ्गीं वाणीं नमामि मनसा वचसा विभूत्यै ॥ १ ॥ ॐ प्रणो देवीत्यस्य मन्त्रस्य भरद्वाज ऋषिः । गायत्री छन्दः । श्रीसरस्वती देवता । प्रणवेन बीजशक्तिः कीलकम् । इष्टार्थे विनियोगः । मन्त्रेण न्यासः ॥ या वेदान्तार्थतत्त्वैकस्वरूपा परमार्थतः । नामरूपात्मना व्यक्ता सा मां पातु सरस्वती ॥ ॐ प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतु ॥ १ ॥ आ नो दिव इति मन्त्रस्य अत्रिर्ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । ह्रीमिति बीजशक्तिः कीलकम् । इष्टार्थे विनियोगः । मन्त्रेण न्यासः ॥ या साङ्गोपाङ्गवेदेषु चतुर्ष्वेकैव गीयते । अद्वैता ब्रह्मणः शक्तिः सा मां पातु सरस्वती ॥ ह्रीं आ नो दिवो बृहतः पर्वतादा सरस्वती यजतागंतु यज्ञम् । हवं देवी जुजुषाणा घृताची शग्मां नो वाचा मुशती शृणोतु ॥ २ ॥ पावका न इति मन्त्रस्य । मधुच्छन्द ऋषिः । गायत्री छन्दः । सरस्वती देवता । श्रीमिति बीजशक्तिः कीलकम् । इष्टार्थे विनियोगः । मन्त्रेण न्यासः ॥ या वर्णपदवाक्यार्थस्वरूपेणैव वर्तते । अनादिनिधनानन्ता सा मां पातु सरस्वती ॥ श्रीं पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धिया वसुः ॥ ३ ॥ चोदयित्रीति मन्त्रस्य मधुच्छन्द ऋषिः । गायत्री छन्दः । सरस्वती देवता । ब्लूमिति बीजशक्तिः कीलकम् । मन्त्रेण न्यासः ॥ अध्यात्ममधिदैवं च देवानां सम्यगीश्वरी । प्रत्यगास्ते वदन्ती या सा मां पातु सरस्वती ॥ ब्लूं चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती ॥ ४ ॥ महो अर्ण इति मन्त्रस्य मधुच्छन्द ऋषिः । गायत्री छन्दः । सरस्वती देवता । सौरिति बीजशक्तिः कीलकम् । मन्त्रेण न्यासः ॥ अन्तर्याम्यात्मना विश्वं त्रैलोक्यं या नियच्छति । रुद्रादित्यादिरूपस्था यस्यामावेश्य तां पुनः । ध्यायन्ति सर्वरूपैका सा मां पातु सरस्वती । सौः महो अर्णः सरस्वती प्रचेतयति केतुना । धियो विश्वा विराजति ॥ ५ ॥ चत्वारि वागिति मन्त्रस्य उचथ्यपुत्र ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । ऐमिति बीजशक्तिः कीलकम् । मन्त्रेण न्यासः । या प्रत्यग्दृष्टिभिर्जीवैर्व्यज्यमानाऽनुभूयते । व्यापिनी ज्ञप्तिरूपैका सा मां पातु सरस्वती ॥ ऐं चत्वारि वाक् परिमिता पदानि

तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥ ६ ॥ यद्वाग्वदन्तीति मन्त्रस्य भार्गव ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । क्लीमिति बीजशक्तिः कीलकम् । मन्त्रेण न्यासः । नामजात्यादिभिर्भेदैरष्टधा या विकल्पिता । निर्विकल्पात्मना व्यक्ता सा मां पातु सरस्वती ॥ क्लीं यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा । चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम ॥ ७ ॥ देवीं वाचमिति मन्त्रस्य भार्गव ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । सौरिति बीजशक्तिः कीलकम् । मन्त्रेण न्यासः ॥ व्यक्ताव्यक्तगिरः सर्वे वेदाद्या व्याहरन्ति याम् । सर्वकामदुघा धेनुः सा मां पातु सरस्वती ॥ सौः देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ॥ ८ ॥ उत त्व इति मन्त्रस्य बृहस्पतिर्ऋषिः त्रिष्टुप् छन्दः । सरस्वती देवता । समिति बीजशक्तिः कीलकम् । मन्त्रेण न्यासः । यां विदित्वाऽखिलं बन्धं निर्मथ्याखिलवर्त्मना । योगी याति परं स्थानं सा मां पातु सरस्वती ॥ सं उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् । उतो त्वस्मै तन्वं १ विसस्रे जायेव पत्य उशती सुवासाः ॥ ९ ॥ अम्बितम इति मन्त्रस्य गृत्समद ऋषिः । अनुष्टुप् छन्दः । सरस्वती देवता । ऐमिति बीजशक्तिः कीलकम् । मन्त्रेण न्यासः । नामरूपात्मकं सर्वं यस्यामावेश्य तां पुनः । ध्यायन्ति ब्रह्मरूपैका सा मां पातु सरस्वती ॥ ऐं अम्बितमे नदीतमे देवितमे सरस्वति । अप्रशस्ता इव स्मसि प्रशस्तिमम्ब नस्कृधि ॥ १० ॥ चतुर्मुखमुखाम्भोजवनहंसवधूर्मम । मानसे रमतां नित्यं सर्वशुक्ला सरस्वती ॥ १ ॥ नमस्ते शारदे देवि काश्मीरपुरवासिनि । त्वामहं प्रार्थये नित्यं विद्यादानं च देहि मे ॥ २ ॥ अक्षसूत्राङ्कुशधरा पाशपुस्तकधारिणी । मुक्ताहारसमायुक्ता वाचि तिष्ठतु मे सदा ॥ ३ ॥ कम्बुकण्ठी सुताम्रोष्ठी सर्वाभरणभूषिता । महासरस्वती देवी जिह्वाग्रे संनिविश्यताम् ॥ ४ ॥ या श्रद्धा धारणा मेधा वाग्देवी विधिवल्लभा । भक्तजिह्वाग्रसदना शमादिगुणदायिनी ॥ ५ ॥ नमामि यामिनीनाथलेखालंकृतकुन्तलाम् । भवानीं भवसंतापनिर्वापणसुधानदीम् ॥ ६ ॥ यः कवित्वं निरातङ्कं भुक्तिमुक्ती च वाञ्छति । सोऽभ्यर्च्यैनां दशश्लोक्या नित्यं स्तौति सरस्वतीम् ॥ ७ ॥ तस्यैवं स्तुवतो

नित्यं समभ्यर्च्य सरस्वतीम् । भक्तिश्रद्धाभियुक्तस्य षण्मासात्प्रत्ययो भवेत् ॥ ८ ॥ ततः प्रवर्तते वाणी स्वेच्छया ललिताक्षरा । गद्यपद्यात्मकैः शब्दैरप्रमेयैर्विवक्षितैः ॥ ९ ॥ अश्रुतो बुध्यते ग्रन्थः प्रायः सारस्वतः कविः । इत्येवं निश्चयं विप्राः सा होवाच सरस्वती ॥ १० ॥ आत्मविद्या मया लब्धा ब्रह्मणैव सनातनी । ब्रह्मत्वं मे सदा नित्यं सच्चिदानन्दरूपतः ॥ ११ ॥ प्रकृतित्वं ततः सृष्टं सत्त्वादिगुणसाम्यतः । सत्यमाभाति चिच्छाया दर्पणे प्रतिबिम्बवत् ॥ १२ ॥ तेन चित्प्रतिबिम्बेन त्रिविधा भाति सा पुनः । प्रकृत्यवच्छिन्नतया पुरुषत्वं पुनश्च ते ॥ १३ ॥ शुद्धसत्त्वप्रधानायां मायायां बिम्बितो ह्यजः । सत्त्वप्रधाना प्रकृतिर्मायेति प्रतिपाद्यते ॥ १४ ॥ सा माया स्ववशोपाधिः सर्वज्ञस्येश्वरस्य हि । वश्यमायत्वमेकत्वं सर्वज्ञत्वं च तस्य तु ॥ १५ ॥ सात्त्विकत्वात्समष्टित्वात्साक्षित्वाज्जगतामपि । जगत्कर्तुमकर्तुं वा चान्यथा कर्तुमीशते ॥ १६ ॥ यः स ईश्वर इत्युक्तः सर्वज्ञत्वादिभिर्गुणैः । शक्तिद्वयं हि मायाया विक्षेपावृतिरूपकम् ॥ १७ ॥ विक्षेपशक्तिर्लिङ्गादि ब्रह्माण्डान्तं जगत्सृजेत् । अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः ॥ १८ ॥ आवृणोत्यपरा शक्तिः सा संसारस्य कारणम् । साक्षिणः पुरतो भातं लिङ्गदेहेन संयुतम् ॥ १९ ॥ चितिच्छायासमावेशाज्जीवः स्याद्व्यावहारिकः । अस्य जीवत्वमारोपात्साक्षिण्यप्यवभासते ॥ २० ॥ आवृतौ तु विनष्टायां भेदे भातेऽपयाति तत् । तथा सर्गब्रह्मणोश्च भेदमावृत्य तिष्ठति ॥ २१ ॥ या शक्तिस्तद्वशाद्ब्रह्म विकृतत्वेन भासते । अत्राप्यावृतिनाशेन विभाति ब्रह्मसर्गयोः ॥ २२ ॥ भेदस्तयोर्विकारः स्यात्सर्गे न ब्रह्मणि क्वचित् । अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ॥ २३ ॥ आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् । अपेक्ष्य नामरूपे द्वे सच्चिदानन्दतत्परः ॥ २४ ॥ समाधिं सर्वदा कुर्याद्धृदये वाथ वा बहिः । सविकल्पो निर्विकल्पः समाधिर्द्विविधो हृदि ॥ २५ ॥ दृश्यशब्दानुभेदेन स विकल्पः पुनर्द्विधा । कामाद्याश्चित्तगा दृश्यास्तत्साक्षित्वेन चेतनम् ॥ २६ ॥ ध्यायेद्दृश्यानुविद्धोऽयं समाधिः सविकल्पकः । असङ्गः सच्चिदानन्दः स्वप्रभो द्वैतवर्जितः ॥ २७ ॥ अस्मीतिशब्दविद्धोऽयं समाधिः सविकल्पकः । स्वानुभूतिरसावेशाद्दृश्यशब्दाद्यपेक्षितुः ॥ २८ ॥ निर्विकल्पः समाधिः स्यान्निवातस्थितदीपवत् । हृदीव बाह्यदेशेऽपि यस्मिन्कस्मिंश्च वस्तुनि ॥ २९ ॥ समाधिराद्यसन्मात्रान्नामरूपपृथ-

कृतिः । स्तब्धीभावो रसास्वादात्तृतीयः पूर्ववन्मतः ॥ ३० ॥ एतैः समाधिभिः षड्भिर्नयेत्कालं निरन्तरम् । देहाभिमाने गलिते विज्ञाते परमात्मनि । यत्र यत्र मनो याति तत्र तत्र परामृतम् ॥ ३१ ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ ३२ ॥ मयि जीवत्वमीशत्वं कल्पितं वस्तुतो नहि । इति यस्तु विजानाति स मुक्तो नात्र संशयः ॥ ३३ ॥ इत्युपनिषत् ॥ हरिः ॐ तत्सत् ॥

ॐ वाङ्मे मनसीति शान्तिः ॥

इति सरस्वतीरहस्योपनिषत्समाप्ता ॥ ११३ ॥

---

## पिण्डोपनिषत् ॥ ११४ ॥

पितॄणां हंसरूपाणां यन्ता श्रीमज्जनार्दनः ।
भवतापप्रणुत्त्यर्थं सततं तमहं श्रये ॥ १ ॥

ॐ पूर्णमदः पूर्णमदमिति शान्तिः ॥

ॐ ॥ देवता ऋषयः सर्वे ब्रह्माणमिदमब्रुवन् । मृतस्य दीयते पिण्डः कथं गृह्णन्त्यचेतसः ॥ १ ॥ भिन्ने पञ्चात्मके देहे गते पञ्चसु पञ्चधा । हंसस्त्यक्त्वा गतो देहं कस्मिँस्थाने व्यवस्थितः ॥ २ ॥ त्र्यहं वसति तोयेषु त्र्यहं वसति चाग्निषु ॥ त्र्यहमाकाशगो भूत्वा दिनमेकं तु वायुगः ॥ ३ ॥ प्रथमेन तु पिण्डेन कलानां तस्य संभवः । द्वितीयेन तु पिण्डेन मांसत्वक्शोणितोद्भवः ॥ ४ ॥ तृतीयेन तु पिण्डेन मतिस्तस्याभिजायते । चतुर्थेन तु पिण्डेन अस्थि मज्जा प्रजायते ॥ ५ ॥ पञ्चमेन तु पिण्डेन हस्ताङ्गुल्यः शिरो मुखम् । षष्ठेन कृतपिण्डेन हृत्कण्ठं तालु जायते ॥ ६ ॥ सप्तमेन तु पिण्डेन दीर्घमायुः प्रजायते । अष्टमेन तु पिण्डेन वाचं पुष्यति वीर्यवान् ॥ ७ ॥ नवमेन तु पिण्डेन सर्वेन्द्रियसमाहृतिः । दशमेन तु पिण्डेन भावानां प्लवनं तथा । पिण्डे पिण्डशरीरस्य पिण्डदानेन संभवः ॥ ८ ॥ हरिः ॐ तत्सदित्युपनिषत् ॥

ॐ पूर्णमद इति शान्तिः ॥

इत्याथर्वणीया पिण्डोपनिषत्समाप्ता ॥ ११४ ॥

---

# महोपनिषत् ॥ ११५ ॥

नारायणः परंब्रह्म सर्वेषां महसां महः ।
अभ्यासाद्यद्विपश्यन्ति सन्तः संसारभेषजम् ॥ १ ॥

अथातो महोपनिषदमेव । तदाहुरेको ह वै नारायण आसीन्न ब्रह्मा न ईशानो नापो नाग्नीषोमौ नेमे द्यावापृथिवी न नक्षत्राणि न सूर्यः स एकाकी नर एव । तस्य ध्यानान्तःस्थस्य यन्नःस्तोममुच्यते । तस्मिन् पुरुषाश्चतुर्दशाजायन्त एका कन्या । दशेन्द्रियाणि मन एकादशम् । तेजो द्वादशम् । अहङ्कारस्त्रयोदशः । प्राणाश्चतुर्दश आत्मा । पञ्चदशी बुद्धिः । पञ्चतन्मात्राणि पञ्चमहाभूतानि । स एष पञ्चविंशकः पुरुषः । तं पुरुषं पुरुषो निवेश्य । नास्य प्रजा नसंवत्सरा जायन्ते संवत्सरादधि जायन्ते ॥ १ ॥

इत्यथ पुनरेव नारायणः सोऽन्यत्कामो मनसा ध्यायेत तस्य ध्यानान्तःस्थस्य ललाटात्र्यक्षः शूलपाणिः पुरुषोऽजायत्त बिभ्रच्छ्रियं सत्यं ब्रह्मचर्यं तपो वैराग्यं मन ऐश्वर्यं सप्रणवा व्याहृतय ऋग्यजुःसामाथर्वाङ्गिरसः सर्वाणि छन्दांसि तान्यङ्गेष्वाश्रितानि ॥ २ ॥

अथ पुनरेव नारायणः सोऽन्यत्कामो मनसा ध्यायेत । तस्य ध्यानान्तःस्थस्य ललाटात्स्वेदोऽपतत् । ता इमाः प्रतता आपस्तासु तेजो हिरण्मयमण्डं तत्र ब्रह्मा चतुर्मुखोऽजायत । सोऽध्यायत पूर्वामुखो भूत्वा भूरिति व्याहृतिर्गायत्रं छन्द ऋग्वेदः । पश्चिमामुखो भूत्वा भुव इति व्याहृतिस्त्रैष्टुभं छन्दो यजुर्वेदः । उत्तरामुखो भूत्वा स्वरिति व्याहृतिर्जागतं छन्दः सामवेदः । दक्षिणामुखो भूत्वों जनदिति व्याहृत्यानुष्टुभं छन्दोऽथर्ववेदः । ॐ सहस्रशीर्षं देवं सहस्राक्षं विश्वशम्भुवम् । विश्वतःपरमं नित्यं विश्वं नारायणं हरिम् । विश्वमेवेदं पुरुषं तं विश्वमुपजीवति । ऋषिं विश्वेश्वरं देवं समुद्रेतं विश्वरूपिणम् । पद्मकोशप्रतीकाशं लम्बत्याकोशसन्निभम् । हृदये चाप्यधोमुखं सन्तते शीकराभिश्च । तस्य मध्ये महानर्चिर्विश्वार्चिविश्वतोमुखम् । तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता । तस्यै शिखायै मध्ये पुरुषः परमात्मा व्यवस्थितः । स ब्रह्मा स ईशानः सोऽक्षरः परमः स्वराट् ॥ ३ ॥

य इदं महोपनिषदं ब्राह्मणोऽधीतेऽश्रोत्रियः श्रोत्रियो भवत्यनुपनीत उपनीतो भवति । सोऽग्निपूतो भवति । स वायुपूतो भवति । स सूर्यपूतो भवति ।

स सोमपूतो भवति । स सत्यपूतो भवति । स सर्वपूतो भवति । स सर्वैर्देवैर्ज्ञातो भवति । स सर्वैर्वेदैरनुध्यातो भवति । स सर्वेषु तीर्थेषु स्नातो भवति । तेन सर्वैः क्रतुभिरिष्टं भवति । गायत्र्याः षष्टिसहस्राणि जप्तानि भवन्ति । इतिहासपुराणानां रुद्राणां शतसहस्राणि जप्तानि भवन्ति । प्रणवानामयुतं जप्तं भवति । आ चक्षुषः पङ्क्तिं पुनात्यासप्तमात्पुरुषयुगात्पुनातीत्याह भगवान् हिरण्यगर्भः । जाप्येनामृतत्वं गच्छत्यमृतत्वं गच्छतीति ॥ ४ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

इत्याथर्वणीया महोपनिषत्समाप्ता ॥ ११५ ॥

---

# बह्वृचोपनिषत् ॥ ११६ ॥

बह्वृचाख्यब्रह्मविद्यामहाखण्डार्थवैभवम् ।
अखण्डानन्दसाम्राज्यं रामचन्द्रपदं भजे ॥ १ ॥

ॐ वाङ्मे मनसीति शान्तिः ॥

हरिः ॐ ॥ देवी ह्येकाग्र आसीत् सैव जगदण्डमसृजत् । कामकलेति विज्ञायते । शृङ्गारकलेति विज्ञायते तस्या एव ब्रह्मा अजीजनत् । विष्णुरजीजनत् । रुद्रोऽजीजनत् । सर्वे मरुद्गणा अजीजनन् । गन्धर्वाप्सरसः किंनरा वादित्रवादिनः समन्तादजीजनन् । भोग्यमजीजनत् । सर्वमजीजनत् । सर्वं शाक्तमजीजनत् । अण्डजं स्वेदजमुद्भिज्जं जरायुजं यत्किंचैतत्प्राणि स्थावरजङ्गमं मनुष्यमजीजनत् ॥ सैषाऽपरा शक्तिः । सैषा शांभवी विद्या कादिविद्येति वा हादिविद्येति वा सादिविद्येति वा रहस्यम् । ओमों वाचि प्रतिष्ठा । सैव पुरत्रयं शरीरत्रयं व्याप्य बहिरन्तरवभासयन्ती देशकालवस्त्वन्तरसङ्गान्महात्रिपुरसुन्दरी वै प्रत्यक् चितिः । सैवात्मा ततोऽन्यदसत्यमनात्मा अत एष ब्रह्मसंवित्तिर्भावाभावकलाविनिर्मुक्ता चिदाद्याद्वितीयब्रह्मसंवित्तिः सच्चिदानन्दलहरी महात्रिपुरसुन्दरी बहिरन्तरनुप्रविश्य स्वयमेकैव विभाति । यदस्ति सन्मात्रम् । यद्विभाति चिन्मात्रम् । यत्प्रियमानन्दं तदेतत्सर्वाकारा महात्रिपुरसुन्दरी । त्वं चाहं च सर्वं विश्वं सर्वदेवता । इतरत्सर्वं महात्रिपुर-

सुन्दरी । सत्यमेकं ललिताख्यं वस्तु तदद्वितीयमखण्डार्थं परं ब्रह्म । पञ्चरूपपरित्यागादस्वरूपप्रहाणतः । अधिष्ठानं परं तत्त्वमेकं सच्छिष्यते महत् ॥ इति । प्रज्ञानं ब्रह्मेति वा अहं ब्रह्मास्मीति वा भाष्यते । तत्त्वमसीत्येव संभाष्यते । अयमात्मा ब्रह्मेति वा ब्रह्मैवाहमस्मीति वा योऽहमस्मि वा सोऽहमस्मीति वा योऽसौ सोऽहमस्मीति वा या भाष्यते सैषा षोडशी श्रीविद्या पञ्चदशाक्षरी श्रीमहात्रिपुरसुन्दरी बालाम्बिकेति बगलेति वा मातङ्गीति स्वयंवरकल्याणीति भुवनेश्वरीति चामुण्डेति चण्डेति वाराहीति तिरस्करिणीति राजमातङ्गीति वा शुकश्यामलेति वा लघुश्यामलेति वा अश्वारूढेति वा प्रत्यङ्गिरा धूमावती सावित्री सारस्वती ब्रह्मानन्दकलेति । ऋचो अक्षरे परमे व्योमन् यस्मिन्देवा अधि विश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति । य इत्तद्विदुस्त इमे समासते ॥ इत्युपनिषत् ॥ हरिः ॐ तत्सत् ॥

ॐ वाङ्मे मनसीति शान्तिः ॥

इति बह्वृचोपनिषत्समाप्ता ॥ ११६ ॥

---

# आश्रमोपनिषत् ॥ ११७ ॥

सर्वाश्रमाः समभवन् यस्मात्सोऽयं जनार्दनः ।
कैवल्यावाप्तये भूयात्सदाचाररतान्हि तान् ॥ १ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

हरिः ॐ ॥ अथातश्चत्वार आश्रमाः षोडशभेदा भवन्ति । तत्र ब्रह्मचारिणश्चतुर्विधा भवन्ति गायत्रो ब्राह्मणः प्राजापत्यो बृहन्निति । य उपनयनादूर्ध्वं त्रिरात्रमक्षारलवणाशी गायत्रीमत्रे स गायत्रः । योऽष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरेत्प्रतिवेदं द्वादश वा यावद्ग्रहणान्तं वा वेदस्य स ब्राह्मणः । स्वदारनिरत ऋतुकालाभिगामी सदा परदारवर्जी प्राजापत्यः । अथवा चतुर्विंशतिवर्षाणि गुरुकुलवासी ब्राह्मणोऽष्टाचत्वारिंशद्वर्षवासी च प्राजापत्यः । आ प्रायणाद्गुरोरपरित्यागी नैष्ठिको बृहन्निति ॥ १ ॥ गृहस्था अपि चतुर्विधा भवन्ति—वार्ताकवृत्तयः शालीनवृत्तयो यायावरा घोरसंन्यासिकाश्चेति । तत्र वार्ताकवृत्तयः कृषिगोरक्षवाणिज्यमगर्हितमुपयुञ्जानाः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते । शालीनवृत्तयो यजन्तो न

याजयन्तोऽधीयाना नाध्यापयन्तो ददतो न प्रतिगृह्णन्तः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते । यायावरा यजन्तो याजयन्तोऽधीयाना अध्यापयन्तो ददतः प्रतिगृह्णन्तः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते । घोरसंन्यासिका उद्धृतपरिपूताभिरद्भिः कार्यं कुर्वन्तः प्रतिदिवसमाहृतोञ्छवृत्तिमुपयुञ्जानाः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते ॥ २ ॥ वानप्रस्था अपि चतुर्विधा भवन्ति वैखानसा उदुम्बरा बालखिल्याः फेनपाश्चेति । तत्र वैखानसा अकृष्टपच्यौषधिवनस्पतिभिर्ग्रामबहिष्कृताभिरग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रियां निर्वर्तयन्त आत्मानं प्रार्थयन्ते । उदुम्बराः प्रातरुत्थाय यां दिशमभिप्रेक्षन्ते तदाहृतोदुम्बरबदरनीवारश्यामाकैरग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रियां निर्वर्तयन्त आत्मानं प्रार्थयन्ते । बालखिल्या जटाधराश्चीरचर्मवल्कलपरिवृताः कार्तिक्यां पौर्णमास्यां पुष्पफलमुत्सृजन्तः शेषानष्टौ मासान् वृत्त्युपार्जनं कृत्वाऽग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रियां निर्वर्तयन्त आत्मानं प्रार्थयन्ते । फेनपा उन्मत्तकाः शीर्णपर्णफलभोजिनो यत्र यत्र वसन्तोऽग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रियां निर्वर्तयन्त आत्मानं प्रार्थयन्ते ॥ ३ ॥ परिव्राजका अपि चतुर्विधा भवन्ति—कुटीचरा बहूदका हंसाः परमहंसाश्चेति । तत्र कुटीचराः स्वपुत्रगृहेषु भिक्षाचर्यं चरन्त आत्मानं प्रार्थयन्ते । बहूदकास्त्रिदण्डकमण्डलुशिक्यपक्षजलपवित्रपात्रपादुकासनशिखायज्ञोपवीतकौपीनकाषायवेषधारिणः साधुवृत्तेषु ब्राह्मणकुलेषु भैक्षाचर्यं चरन्त आत्मानं प्रार्थयन्ते । हंसा एकदण्डधराः शिखावर्जिता यज्ञोपवीतधारिणः शिक्यकमण्डलुहस्ता ग्रामैकरात्रवासिनो नगरे तीर्थेषु पञ्चरात्रं वसन्त एकरात्रद्विरात्रकृच्छ्रचान्द्रायणादि चरन्त आत्मानं प्रार्थयन्ते । परमहंसा नदण्डधरा मुण्डाः कन्थाकौपीनवाससोऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तस्त्रिदण्डकमण्डलुशिक्यपक्षजलपवित्रपात्रपादुकासनशिखायज्ञोपवीतानां त्यागिनः शून्यागारदेवगृहवासिनो न तेषां धर्मो नाधर्मो न चानृतं सर्वंसहाः सर्वसमाः समलोष्टाश्मकाञ्चना यथोपपन्नचातुर्वर्ण्यभैक्षाचर्यं चरन्त आत्मानं मोक्षयन्त आत्मानं मोक्षयन्त इति ॥ ४ ॥ ॐ तत्सदित्युपनिषत् ॥

ॐ पूर्णमद इति शान्तिः ॥

इत्याथर्वणीयाश्रमोपनिषत्समाप्ता ॥ ११७ ॥

---

# सौभाग्यलक्ष्म्युपनिषत् ॥ ११८ ॥

सौभाग्यलक्ष्मीकैवल्यविद्यावेद्यसुखाकृति ।
त्रिपान्नारायणानन्दरामचन्द्रपदं भजे ॥ १ ॥
ॐ वाङ्मे मनसीति शान्तिः ॥

हरिः ॐ ॥ अथ भगवन्तं देवा ऊचुर्हे भगवन्नः कथय सौभाग्यलक्ष्मीविद्याम् । तथेत्यवोचद्भगवानादिनारायणः सर्वे देवा यूयं सावधानमनसो भूत्वा शृणुत तुरीयरूपां तुरीयातीतां सर्वोत्कटां सर्वमन्त्रासनगतां पीठोपपीठदेवतापरिवृतां चतुर्भुजां श्रियं हिरण्यवर्णामिति पञ्चदशर्ग्भिर्ध्यायेत् । अथ पञ्चदश ऋगात्मकस्य श्रीसूक्तस्यानन्दकर्दमचिक्लीतेन्दिरासुता ऋषयः । श्रीरिष्याद्या ऋचः चतुर्दशानामृचामानन्दाद्यृषयः । हिरण्यवर्णाद्याद्यत्रयस्यानुष्टुप् छन्दः । कांसोऽस्मीत्यस्य बृहती छन्दः । तदन्ययोर्द्वयोस्त्रिष्टुप् । पुनरष्टकस्यानुष्टुप् । शेषस्य प्रस्तारपङ्क्तिः । श्र्यग्निर्देवता । हिरण्यवर्णामिति बीजम् । कांसोऽस्मीति शक्तिः । हिरण्मया चन्द्रा रजतस्रजा हिरण्या हिरण्यवर्णेति प्रणवादिनमोऽन्तैश्चतुर्थ्यन्तैरङ्गन्यासः । अथ वक्त्रत्रयैरङ्गन्यासः । मस्तकलोचनाश्रुघ्राणवदनकण्ठबाहुद्वयहृदयनाभिगुह्यपायूरुजानुजङ्घेषु श्रीसूक्तैरेव क्रमशो न्यसेत् । अरुणकमलसंस्था तद्रजःपुञ्जवर्णा करकमलधृतेष्टाऽभीतियुग्माम्बुजा च । मणिकटकविचित्रालंकृताकल्पजालैः सकलभुवनमाता संततं श्रीः श्रियै नः ॥ १ ॥ तत्पीठकर्णिकायां ससाध्यं श्रीबीजम् । वस्वादित्यकलापद्मेषु श्रीसूक्तगतार्धार्धर्चा तद्बहिर्यः शुचिरिति मातृकया च श्रियं यन्त्राङ्गदशकं च विलिख्य श्रियमावाहयेत् । अङ्गैः प्रथमा वृतिः । पद्मादिभिर्द्वितीया । लोकेशैस्तृतीया । तदायुधैस्तुरीया वृतिर्भवति । श्रीसूक्तैराहनादि । षोडशसहस्रजपः । सौभाग्यरमैकाक्षर्या भृगुनिचृद्गायत्री । श्रिय ऋष्यादयः । शमिति बीजशक्तिः । श्रीमित्यादि षडङ्गम् । भूयाद्भूयो द्विपद्माभयवरदकरा तप्तकार्तस्वराभा शुभ्राभ्राभेभयुग्मद्वयकरघृतकुम्भाद्भिरासिच्यमाना । रक्तौघाबद्धमौलिर्विमलतरदुकूलार्तवालेपनाढ्या पद्माक्षी पद्मनाभोरसि कृतवसतिः पद्मगा श्रीः श्रियै नः ॥ १ ॥ तत्पीठम् । अष्टपत्रं वृत्तत्रयं द्वादशराशिखण्डं चतुरस्रं रमापीठं भवति । कर्णिकायां ससाध्यं श्रीबीजम् । विभूतिरुन्नतिः कान्तिः सृष्टिः कीर्तिः सन्नतिर्व्युष्टिः सत्कृष्टिर्ऋद्धिरिति प्रणवादिनमोन्तैश्चतुर्थ्यन्तैर्नवशक्तिं यजेत् । अङ्गैः प्रथमा वृतिः । वासुदेवादिभिर्द्वितीया ।

बालाक्यादिभिस्तृतीया । इन्द्रादिभिश्चतुर्थी भवति । द्वादशलक्षजपः । श्रीलक्ष्मीर्वरदा विष्णुपत्नी वसुप्रदा हिरण्यरूपा स्वर्णमालिनी रजतस्रजा स्वर्णप्रभा स्वर्णप्राकारा पद्मवासिनी पद्महस्ता पद्मप्रिया मुक्तालंकारा चन्द्रसूर्या बिल्वप्रिया ईश्वरी भुक्तिर्मुक्तिर्विभूतिरृद्धिः समृद्धिः कृष्टिः पुष्टिर्धनदा धनेश्वरी श्रद्धा भोगिनी भोगदा सावित्री धात्री विधात्रीत्यादिप्रणवादिनमोन्ताश्चतुर्थ्यन्ता मन्त्राः । एकाक्षरवदङ्गादिपीठम् । लक्षजपः । दशांशं तर्पणम् । दशांशं हवनम् । द्विजतृप्तिः । निष्कामानामेव श्रीविद्यासिद्धिः । न कदापि सकामानामिति ॥ १ ॥ अथ हैनं देवा ऊचुस्तुरीयया मायया निर्दिष्टं तत्त्वं ब्रूहीति । तथेति स होवाच । योगेन योगो ज्ञातव्यो योगो योगात्प्रवर्धते । योऽप्रमत्तस्तु योगेन स योगी रमते चिरम् ॥ १ ॥ समापय्य निद्रां सुजीर्णेऽल्पभोजी श्रमत्याज्यबाधे विविक्ते प्रदेशे । सदा शीतनिस्तृष्ण एष प्रयत्नोऽथ वा प्राणरोधो निजाभ्याससमार्गात् ॥ २ ॥ वक्त्रेणापूर्य वायुं हुतवहनिलयेऽपानमाकृष्य धृत्वा स्वाङ्गुष्ठाद्यङ्गुलीभिर्वरकरतलयोः षड्भिरेवं निरुध्य । श्रोत्रे नेत्रे च नासापुटयुगलमथोऽनेन मार्गेण सम्यक्पश्यन्ति प्रत्ययांशं प्रणवबहुविधध्यानसंलीनचित्ताः ॥ ३ ॥ श्रवणमुखनयननासानिरोधनेनैव कर्तव्यम् । शुद्धसुषुम्नासरणौ स्फुटममलं श्रूयते नादः ॥ ४ ॥ विचित्रघोषसंयुक्तानाहते श्रूयते ध्वनिः । दिव्यदेहश्च तेजस्वी दिव्यगन्धोऽप्यरोगवान् ॥ ५ ॥ संपूर्णहृदयः शून्ये त्वारम्भे योगवान्भवेत् । द्वितीया विघटीकृत्य वायुर्भवति मध्यगः ॥ ६ ॥ दृढासनो भवेद्योगी पद्माद्यासनसंस्थितः । विष्णुग्रन्थेस्ततो भेदात्परमानन्दसंभवः ॥ ७ ॥ अतिशून्यो विमर्दश्च भेरीशब्दस्ततो भवेत् । तृतीयां यत्नतो भित्त्वा निनादो मर्दनध्वनिः ॥ ८ ॥ महाशून्यं ततो याति सर्वसिद्धिसमाश्रयम् । चित्तानन्दं ततो भित्त्वा सर्वपीठगतानिलः ॥ ९ ॥ निष्पत्तौ वैष्णवः शब्दः क्वणतीति क्वणो भवेत् । एकीभूतं तदा चित्तं सनकादिमुनीडितम् ॥ १० ॥ अन्तेऽनन्तं समारोप्य खण्डेऽखण्डं समर्पयन् । भूमानं प्रकृतिं ध्यात्वा कृतकृत्योऽमृतो भवेत् ॥ ११ ॥ योगेन योगं संरोध्य भावं भावेन चाञ्जसा । निर्विकल्पं परं तत्त्वं सदा भूत्वा परं भवेत् ॥ १२ ॥ अहंभावं परित्यज्य जगद्भावमनीदृशम् । निर्विकल्पे स्थितो विद्वान्भूयो नाप्यनुशोचति ॥ १३ ॥ सलिले सैन्धवं यद्वत्साम्यं भवति योगतः । तथात्ममनसोरैक्यं समाधिरभिधीयते ॥ १४ ॥ यदा संक्षीयते प्राणो मानसं च प्रलीयते । तदा समरसत्वं यत्समाधिरभिधीयते ॥ १५ ॥ यत्समत्वं तयोरत्र

जीवात्मपरमात्मनोः । समस्तनष्टसंकल्पः समाधिरभिधीयते ॥ १६ ॥ प्रभाशून्यं मनःशून्यं बुद्धिशून्यं निरामयम् । सर्वशून्यं निराभासं समाधिरभिधीयते ॥ १७ ॥ स्वयमुच्चलिते देहे देही नित्यसमाधिना । निश्चलं तं विजानीयात्समाधिरभिधीयते ॥ १८ ॥ यत्र यत्र मनो याति तत्र तत्र परं पदम् । तत्र तत्र परं ब्रह्म सर्वत्र समवस्थितम् ॥ १९ ॥ इति ॥ २ ॥ अथ हैनं देवा ऊचुर्नवचक्रविवेकमनुब्रूहीति । तथेति स होवाच आधारे ब्रह्मचक्रं त्रिरावृतं भगमण्डलाकारम् । तत्र मूलकन्दे शक्तिः पावकाकारं ध्यायेत् । तत्रैव कामरूपपीठं सर्वकामप्रदं भवति । इत्याधारचक्रम् । द्वितीयं स्वाधिष्ठानचक्रं षड्दलम् । तन्मध्ये पश्चिमाभिमुखं लिङ्गं प्रवालाङ्कुरसदृशं ध्यायेत् । तत्रैवोड्याणपीठं जगदाकर्षणसिद्धिदं भवति । तृतीयं नाभिचक्रं पञ्चावर्तं सर्पकुटिलाकारम् । तन्मध्ये कुण्डलिनीं बालार्ककोटिप्रभां तडित्प्रभां ( तनुमध्यां ) ध्यायेत् । सामर्थ्यशक्तिः सर्वसिद्धिप्रदा भवति । मणिपूरकचक्रं हृदयचक्रम् । अष्टदलमधोमुखम् । तन्मध्ये ज्योतिर्मयलिङ्गाकारं ध्यायेत् । सैव हंसकला सर्वप्रिया सर्वलोकवश्यकरी भवति । कण्ठचक्रं चतुरङ्गुलम् । तत्र वामे इडा चन्द्रनाडी दक्षिणे पिङ्गला सूर्यनाडी तन्मध्ये सुषुम्नां श्वेतवर्णां ध्यायेत् । य एवं वेदानाहता सिद्धिदा भवति । तालुचक्रम् । तत्रामृतधाराप्रवाहः । घण्टिकालिङ्गमूलचक्ररन्ध्रे राजदन्तावलम्बिनीविवरं दशद्वादशारम् । तत्र शून्यं ध्यायेत् । चित्तलयो भवति । सप्तमं भ्रूचक्रमङ्गुष्ठमात्रम् । तत्र ज्ञाननेत्रं दीपशिखाकारं ध्यायेत् । तदेव कपालकन्दवाक्सिद्धिदं भवति । आज्ञाचक्रमष्टमम् । ब्रह्मरन्ध्रं निर्वाणचक्रम् । तत्र सूचिकागृहेतरं धूम्रशिखाकारं ध्यायेत् । तत्र जालन्धरपीठं मोक्षप्रदं भवतीति परब्रह्मचक्रम् । नवममाकाशचक्रम् । तत्र षोडशदलपद्ममूर्ध्वमुखं तन्मध्यकर्णिकात्रिकूटाकारम् । तन्मध्ये ऊर्ध्वशक्तिः । तां पश्यन्ध्यायेत् । तत्रैव पूर्णगिरिपीठं सर्वेच्छासिद्धिसाधनं भवति । सौभाग्यलक्ष्म्युपनिषदं नित्यमधीते सोऽग्निपूतो भवति । स वायुपूतो भवति । स सकलधनधान्यसत्पुत्रकलत्रहयभूगजपशुमहिषीदासीदासयोगज्ञानवान्भवति । न स पुनरावर्तते न स पुनरावर्तत इत्युपनिषत् ॥

ॐ वाङ्मे मनसीति शान्तिः ॥ हरिः ॐ तत्सत् ॥

इति श्रीसौभाग्यलक्ष्म्युपनिषत्समाप्ता ॥ ११८ ॥

---

# योगशिखोपनिषत् ॥ ११९ ॥

योगीश्वरं रमानाथं सच्चिदानन्दविग्रहम् ॥
योगशास्त्रप्रवक्तारं नौमि कैवल्यप्राप्तये ॥ १ ॥

ॐ पूर्णमद इति शान्तिः ॥

ॐ योगशिखां प्रवक्ष्यामि सर्वज्ञानेषु चोत्तमाम् । यदा तु ध्यायते मन्त्रं गात्रकम्पोऽभिजायते ॥ १ ॥ आसनं पद्मकं बद्ध्वा यच्चान्यद्वापि रोचते । कुर्यान्नासाग्रदृष्टिं च हस्तौ पादौ च संयतौ ॥ २ ॥ मनः सर्वत्र संयम्य ओंकारं तत्र चिन्तयेत् । ध्यायेत सततं प्राज्ञो हृत्कृत्वा परमेष्ठिनम् ॥ ३ ॥ एकस्तम्भे नवद्वारे त्रिस्थूणे पञ्चदैवते । ईदृशे तु शरीरे वा मतिमानुपलक्षयेत् ॥ ४ ॥ आदित्यमण्डलं दिव्यं रश्मिज्वालासमाकुलम् । तस्य मध्यगतो वह्निः प्रज्वलेद्दीपवर्तिवत् ॥ ५ ॥

इति योगशिखोपनिषत्सु प्रथमः खण्डः ॥ १ ॥

दीपशिखायां या मात्रा सा मात्रा परमेष्ठिनः ॥ १ ॥ भिन्दन्ति योगिनः सूर्यं योगाभ्यासेन वै पुनः ॥ २ ॥ द्वितीयं सुषुम्नाद्वारं परिशुद्धं विसर्पति । कपालसंपुटं भित्त्वा ततः पश्यन्ति तत्परम् ॥ ३ ॥

इति योगशिखोपनिषत्सु द्वितीयः खण्डः ॥ २ ॥

अथ न ध्यायेज्जन्तुरालस्याच्च प्रमादतः । यदि त्रिकालमात्रैर्तत्स गच्छेत्परमं पदम् ॥ १ ॥ पुण्यमेतत्समासाद्य संक्षेपात्कथितं मया । लब्धयोगेन बोद्धव्यं प्रसन्नं परमेष्ठिनम् ॥ २ ॥ जन्मान्तरसहस्रेषु यदा नाश्नाति किल्बिषम् । तदा पश्यन्ति योगेन संसारच्छेदनं परं संसारच्छेदनं परमिति ॥ ३ ॥

इति योगशिखोपनिषत्सु तृतीयः खण्डः ॥ ३ ॥

ॐ पूर्णमद इति शान्तिः ॥

इत्याथर्वणीया योगशिखोपनिषत्समाप्ता ॥ ११९ ॥

# मुक्तिकोपनिषत् ॥ १२० ॥

ईशाद्यष्टोत्तरशतवेदान्तपटलाशयम् ।
मुक्तिकोपनिषद्वेद्यं रामचन्द्रपदं भजे ॥ १ ॥

हरिः ॐ पूर्णमद इति शान्तिः ॥

हरिः ॐ ॥ अयोध्यानगरे रम्ये रत्नमण्डपमध्यमे । सीताभरतसौमित्रिशत्रुघ्नाद्यैः समन्वितम् ॥ १ ॥ सनकाद्यैर्मुनिगणैर्वसिष्ठाद्यैः शुकादिभिः । अन्यैर्भागवतैश्चापि स्तूयमानमहर्निशम् ॥ २ ॥ धीविक्रियासहस्राणां साक्षिणं निर्विकारिणम् । स्वरूपध्याननिरतं समाधिविरमे हरिम् ॥ ३ ॥ भक्त्या शुश्रूषया रामं स्तुवन्पप्रच्छ मारुतिः । राम त्वं परमात्मासि सच्चिदानन्दविग्रहः ॥ ४ ॥ इदानीं त्वां रघुश्रेष्ठ प्रणमामि मुहुर्मुहुः । त्वद्रूपं ज्ञातुमिच्छामि तत्त्वतो राम मुक्तये ॥ ५ ॥ अनायासेन येनाहं मुच्येयं भवबन्धनात् । कृपया वद मे राम येन मुक्तो भवाम्यहम् ॥ ६ ॥ साधु पृष्टं महाबाहो वदामि शृणु तत्त्वतः । वेदान्ते सुप्रतिष्ठोऽहं वेदान्तं समुपाश्रय ॥ ७ ॥ वेदान्ताः के रघुश्रेष्ठ वर्तन्ते कुत्र ते वद । हनूमञ्छृणु वक्ष्यामि वेदान्तस्थितिमञ्जसा ॥ ८ ॥ निःश्वासभूता मे विष्णोर्वेदा जाताः सुविस्तराः । तिलेषु तैलवद्वेदे वेदान्तः सुप्रतिष्ठितः ॥ ९ ॥ राम वेदाः कतिविधास्तेषां शाखाश्च राघव । तासूपनिषदः काः स्युः कृपया वद तत्त्वतः ॥ १० ॥ श्रीराम उवाच । ऋग्वेदादिविभागेन वेदाश्चत्वार ईरिताः । तेषां शाखा ह्यनेकाः स्युस्तासूपनिषदस्तथा ॥ ११ ॥ ऋग्वेदस्य तु शाखाः स्युरेकविंशतिसंख्यकाः । नवाधिकशतं शाखा यजुषो मारुतात्मज ॥ १२ ॥ सहस्रसंख्यया जाताः शाखाः साम्नः परन्तप । अथर्वणस्य शाखाः स्युः पञ्चाशद्भेदतो हरे ॥ १३ ॥ एकैकस्यास्तु शाखाया एकैकोपनिषन्मता । तासामेकामृचं यश्च पठते भक्तितो मयि ॥ १४ ॥ स मत्सायुज्यपदवीं प्राप्नोति मुनिदुर्लभाम् । राम केचिन्मुनिश्रेष्ठ मुक्तिरेकेति चक्षिरे ॥ १५ ॥ केचित्त्वन्नामभजनात्काश्यां तारोपदेशतः । अन्ये तु सांख्ययोगेन भक्तियोगेन चापरे ॥ १६ ॥ अन्ये वेदान्तवाक्यार्थविचारात्परमर्षयः । सालोक्यादिविभागेन चतुर्धा मुक्तिरीरिता ॥ १७ ॥ स होवाच श्रीरामः । कैवल्यमुक्तिरेकैव पारमार्थिकरूपिणी । दुराचाररतो वापि मन्नामभजनात्कपे ॥ १८ ॥

सालोक्यमुक्तिमाप्नोति न तु लोकान्तरादिकम् । काश्यां तु ब्रह्मनालेऽस्मि-
न्मृतो मत्तारमाप्नुयात् ॥ १९ ॥ पुनरावृत्तिरहितां मुक्तिं प्राप्नोति मानवः ।
यत्र कुत्रापि वा काश्यां मरणे स महेश्वरः ॥ २० ॥ जन्तोर्दक्षिणकर्णे तु
मत्तारं समुपादिशेत् । निर्धूताशेषपापौघो मत्सारूप्यं भजत्ययम् ॥ २१ ॥
सैव सालोक्यसारूप्यमुक्तिरित्यभिधीयते । सदाचाररतो भूत्वा द्विजो नित्य-
मनन्यधीः ॥ २२ ॥ मयि सर्वात्मके भावो मत्सामीप्यं भजत्ययम् । सैव
सालोक्यसारूप्यसामीप्या मुक्तिरिष्यते ॥ २३ ॥ गुरूपदिष्टमार्गेण ध्यायन्म-
द्गुणमव्ययम् । मत्सायुज्यं द्विजः सम्यग्भजेद्भ्रमरकीटवत् ॥ २४ ॥ सैव
सायुज्यमुक्तिः स्याद्ब्रह्मानन्दकरी शिवा । चतुर्विधा तु या मुक्तिर्मदुपासनया
भवेत् ॥ २५ ॥ इयं कैवल्यमुक्तिस्तु केनोपायेन सिध्यति । माण्डूक्यमेकमे-
वालं मुमुक्षूणां विमुक्तये ॥ २६ ॥ तथाप्यसिद्धं चेज्ज्ञानं दशोपनिषदं पठ ।
ज्ञानं लब्ध्वाऽचिरादेव मामकं धाम यास्यसि ॥ २७ ॥ तथापि दृढता नो
चेद्विज्ञानस्याञ्जनासुत । द्वात्रिंशाख्योपनिषदं समभ्यस्य निवर्तय ॥ २८ ॥
विदेहमुक्ताविच्छा चेदष्टोत्तरशतं पठ । तासां क्रमं सशान्तिं च शृणु वक्ष्यामि
तत्त्वतः ॥२९॥ ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः । ऐतरेयं च छान्दोग्यं
बृहदारण्यकं तथा ॥ ३० ॥ ब्रह्मकैवल्यजाबालश्वेताश्वो हंस आरुणिः । गर्भो
नारायणो हंसो बिन्दुर्नादशिरःशिखा ॥ ३१ ॥ मैत्रायणी कौषीतकी बृहज्जाबा-
लतापनी । कालाग्निरुद्रमैत्रेयी सुबालक्षुरिमन्त्रिका ॥ ३२ ॥ सर्वसारं निरा-
लम्बं रहस्यं वज्रसूचिकम् । तेजोनादध्यानविद्यायोगतत्त्वात्मबोधकम् ॥३३॥
परिव्राट् त्रिशिखी सीता चूडा निर्वाणमण्डलम् । दक्षिणा शरभं स्कन्दं
महानारायणाह्वयम् ॥ ३४ ॥ रहस्यं रामतपनं वासुदेवं च मुद्गलम् ।
शाण्डिल्यं पैङ्गलं भिक्षुमहच्छारीरकं शिखा ॥ ३५ ॥ तुरीयातीतसंन्यासपरि-
व्राजाक्षमालिका । अव्यक्तैकाक्षरं पूर्णा सूर्याक्ष्यध्यात्मकुण्डिका ॥ ३६ ॥
सावित्र्यात्मा पाशुपतं परं ब्रह्मावधूतकम् । त्रिपुरातपनं देवीत्रिपुरा कठ-
भावना । हृदयं कुण्डली भस्म रुद्राक्षगणदर्शनम् ॥ ३७ ॥ तारसारमहावा-
क्यपञ्चब्रह्माग्निहोत्रकम् । गोपालतपनं कृष्णं याज्ञवल्क्यं वराहकम् ॥ ३८ ॥
शाट्यायनी हयग्रीवं दत्तात्रेयं च गारुडम् । कलिजाबालिसौभाग्यरहस्यऋच-
मुक्तिका ॥ ३९ ॥ एवमष्टोत्तरशतं भावनात्रयनाशनम् । ज्ञानवैराग्यदं पुंसां
वासनात्रयनाशनम् ॥ ४० ॥ पूर्वोत्तरेषु विहिततत्तच्छान्तिपुरःसरम् । वेद-

विद्याव्रतस्नातदेशिकस्य मुखात्स्वयम् ॥ ४१ ॥ गृहीत्वाऽष्टोत्तरशतं ये पठन्ति द्विजोत्तमाः । प्रारब्धक्षयपर्यन्तं जीवन्मुक्ता भवन्ति ते ॥ ४२ ॥ ततः कालवशादेव प्रारब्धे तु क्षयं गते। वैदेहीं मामकीं मुक्तिं यान्ति नास्त्यत्र संशयः ॥ ४३ ॥ सर्वोपनिषदां मध्ये सारमष्टोत्तरं शतम् । सकृच्छ्रवणमात्रेण सर्वाघौघनिकृन्तनम् ॥ ४४ ॥ मयोपदिष्टं शिष्याय तुभ्यं पवननन्दन । इदं शास्त्रं मयादिष्टं गुह्यमष्टोत्तरं शतम् ॥ ४५ ॥ ज्ञानतोऽज्ञानतो वापि पठतां बन्धमोचकम् । राज्यं देयं धनं देयं याचतः कामपूरणम् ॥ ४६ ॥ इद-मष्टोत्तरशतं न देयं यस्य कस्यचित् । नास्तिकाय कृतघ्नाय दुराचाररताय वै ॥ ४७ ॥ मद्भक्तिविमुखायापि शास्त्रगर्तेषु मुह्यते । गुरुभक्तिविहीनाय दातव्यं न कदाचन ॥ ४८ ॥ सेवापराय शिष्याय हितपुत्राय मारुते । मद्भक्ताय सुशीलाय कुलीनाय सुमेधसे ॥ ४९ ॥ सम्यक् परीक्ष्य दातव्यमेवमष्टोत्तरं शतम् । यः पठेच्छृणुयाद्वापि स मामेति न संशयः । तदेतदृचाभ्युक्तम्— विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि । असूयकायानृ-जवे शठाय मा मा ब्रूया वीर्यवती तथा स्याम् । यमेव विद्याश्रुतमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् । तस्मा इमामुपसन्नाय सम्यक् परीक्ष्य दद्याद्वैष्ण-वीमात्मनिष्ठाम् ॥ इति ॥ १ ॥ अथ हैनं श्रीरामचन्द्रं मारुतिः पप्रच्छ ऋग्वेदादिविभागेन पृथक् शान्तिमनुब्रूहीति । स होवाच श्रीरामः । ऐतरेय-कौषीतकीनादबिन्द्वात्मप्रबोधनिर्वाणमुद्गलाक्षमालिकात्रिपुरासौभाग्यबह्वृचा-नामृग्वेदगतानां दशसंख्याकानामुपनिषदां वाङ्मे मनसीति शान्तिः ॥ १ ॥ ईशावास्यबृहदारण्यजाबालहंसपरमहंससुबालमन्त्रिकानिरालम्बत्रिशिखीब्राह्म-णमण्डलब्राह्मणाद्वयतारकपैङ्गलभिक्षुतुरीयातीताध्यात्मतारसारयाज्ञवल्क्यशा-ट्यायनीमुक्तिकानां शुक्लयजुर्वेदगतानामेकोनविंशतिसंख्याकानामुपनिषदां पूर्णमद इति शान्तिः ॥ २ ॥ कठवल्लीतैत्तिरीयकब्रह्मकैवल्यश्वेताश्वतरगर्भना-रायणामृतबिन्द्वमृतनादकालाग्निरुद्रक्षुरिकासर्वसारशुकरहस्यतेजोबिन्दुध्यान-बिन्दुब्रह्मविद्यायोगतत्त्वदक्षिणामूर्तिस्कन्दशारीरकयोगशिखैकाक्षराक्ष्यवधूत-कठरुद्रहृदययोगकुण्डलिनीपञ्चब्रह्मप्राणाग्निहोत्रवराहकलिसंतरणसरस्वतीरह-स्यानां कृष्णयजुर्वेदगतानां द्वात्रिंशत्संख्याकानामुपनिषदां स ह नाववत्विति शान्तिः ॥ ३ ॥ केनच्छान्दोग्यारुणिमैत्रायणिमैत्रेयीवज्रसूचिकायोगचूडामणि-

वासुदेवमहत्संन्यासाव्यक्तकुण्डिकासावित्रीरुद्राक्षजाबालदर्शनजाबालीनां सामवेदगतानां षोडशसंख्याकानामुपनिषदामाप्यायन्त्विति शान्तिः ॥ ४ ॥ प्रश्नमुण्डकमाण्डूक्याथर्वशिरोऽथर्वशिखाबृहज्जाबालनृसिंहतापनीनारदपरिव्राजकसीताशरभमहानारायणरामरहस्यरामतापनीशाण्डिल्यपरमहंसपरिव्राजकान्नपूर्णासूर्यात्मपाशुपतपरब्रह्मत्रिपुरातपनदेवीभावनाब्रह्मजाबालगणपतिमहावाक्यगोपालतपनकृष्णहयग्रीवदत्तात्रेयगारुडानामथर्ववेदगतानामेकत्रिंशत्संख्याकानामुपनिषदां भद्रं कर्णेभिरिति शान्तिः ॥ ५ ॥ मुमुक्षवः पुरुषाः साधनचतुष्टयसंपन्नाः श्रद्धावन्तः सुकुलभवं श्रोत्रियं शास्त्रवात्सल्यगुणवन्तमकुटिलं सर्वभूतहिते रतं दयासमुद्रं सद्गुरुं विधिवदुपसंगम्योपहारपाणयोऽष्टोत्तरशतोपनिषदं विधिवदधीत्य श्रवणमनननिदिध्यासनानि नैरन्तर्येण कृत्वा प्रारब्धक्षयाद्देहत्रयभङ्गं प्राप्योपाधिविनिर्मुक्तघटाकाशवत्परिपूर्णता विदेहमुक्तिः । सैव कैवल्यमुक्तिरिति । अत एव ब्रह्मलोकस्था अपि ब्रह्ममुखाद्वेदान्तश्रवणादि कृत्वा तेन सह कैवल्यं लभन्ते । अतः सर्वेषां कैवल्यमुक्तिर्ज्ञानमात्रेणोक्ता । न कर्मसांख्ययोगोपासनादिभिरित्युपनिषत् ॥

इति मुक्तिकोपनिषत्सु प्रथमोऽध्यायः ॥ १ ॥

तथा हैनं श्रीरामचन्द्रं मारुतिः पप्रच्छ । केयं वा तत्सिद्धिः सिद्ध्या वा किं प्रयोजनमिति । स होवाच श्रीरामः । पुरुषस्य कर्तृत्वभोक्तृत्वसुखदुःखादिलक्षणश्चित्तधर्मः क्लेशरूपत्वाद्बन्धो भवति । तन्निरोधनं जीवन्मुक्तिः । उपाधिविनिर्मुक्तघटाकाशवत्प्रारब्धक्षयाद्विदेहमुक्तिः । जीवन्मुक्तिविदेहमुक्त्योरष्टोत्तरशतोपनिषदः प्रमाणम् । कर्तृत्वादिदुःखनिवृत्तिद्वारा नित्यानन्दावाप्तिः प्रयोजनं भवति । तत्पुरुषप्रयत्नसाध्यं भवति । यथा पुत्रकामेष्टिना पुत्रं वाणिज्यादिना वित्तं ज्योतिष्टोमेन स्वर्गं तथा पुरुषप्रयत्नसाध्यवेदान्तश्रवणादिजनितसमाधिना जीवन्मुक्त्यादिलाभो भवति । सर्ववासनाक्षयात्तल्लाभः । अत्र श्लोका भवन्ति—उच्छास्त्रं शास्त्रितं चेति पौरुषं द्विविधं मतम् । तत्रोच्छास्त्रमनर्थाय परमार्थाय शास्त्रितम् ॥ १ ॥ लोकवासनया जन्तोः शास्त्रवासनयापि च । देहवासनया ज्ञानं यथावन्नैव जायते ॥ २ ॥ द्विविधो वासनाव्यूहः शुभश्चैवाशुभश्च तौ । वासनौघेन शुद्धेन तत्र चेदनुनीयसे ॥ ३ ॥

तत्क्रमेणाशु तेनैव मामकं पदमाप्नुहि । अथ चेदशुभो भावस्त्वां योजयति संकटे ॥ ४ ॥ प्राक्तनस्तदसौ यत्नाज्जेतव्यो भवता कपे । शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् ॥ ५ ॥ पौरुषेण प्रयत्नेन योजनीया शुभे पथि । अशुभेषु समाविष्टं शुभेष्वेवावतारयेत् ॥ ६ ॥ अशुभाच्चालितं याति शुभं तस्मादपीतरत् । पौरुषेण प्रयत्नेन लालयेच्चित्तबालकम् ॥ ७ ॥ द्रागभ्यासवशाद्याति यदा ते वासनोदयम् । तदाभ्यासस्य साफल्यं विद्धि त्वसमरिमर्दन ॥ ८ ॥ संदिग्धायामपि भृशं शुभामेव समाचर । शुभायां वासनावृद्धौ न दोषाय मरुत्सुत ॥ ९ ॥ वासनाक्षयविज्ञानमनोनाशा महामते । समकालं चिराभ्यस्ता भवन्ति फलदा मताः ॥ १० ॥ त्रय एवं समं यावन्नाभ्यस्ताश्च पुनः पुनः । तावन्न पदसंप्राप्तिर्भवत्यपि समाशतैः ॥ ११ ॥ एकैकशो निषेव्यन्ते यद्येते चिरमप्यलम् । तन्न सिद्धिं प्रयच्छन्ति मन्त्राः संकीर्तिता इव ॥ १२ ॥ त्रिभिरेतैश्चिराभ्यस्तैर्हृदयग्रन्थयो दृढाः । निःशङ्कमेव त्रुट्यन्ति बिसच्छेदाद्गुणा इव ॥ १३ ॥ जन्मान्तरशताभ्यस्ता मिथ्या संसारवासना । सा चिराभ्यासयोगेन विना न क्षीयते क्वचित् ॥ १४ ॥ तस्मात्सौम्य प्रयत्नेन पौरुषेण विवेकिना । भोगेच्छां दूरतस्त्यक्त्वा त्रयमेव समाश्रय ॥ १५ ॥ तस्माद्वासनया युक्तं मनो बद्धं विदुर्बुधाः । सम्यग्वासनया त्यक्तं मुक्तमित्यभिधीयते । मनोनिर्वासनीभावमाचराशु महाकपे ॥ १६ ॥ सम्यगालोचनात्सत्याद्वासना प्रविलीयते । वासनाविलये चेतः शममायाति दीपवत् ॥ १७ ॥ वासनां संपरित्यज्य मयि चिन्मात्रविग्रहे । यस्तिष्ठति गतव्यग्रः सोऽहं सच्चित्सुखात्मकः ॥ १८ ॥ समाधिमथ कार्याणि मा करोतु करोतु वा । हृदयेनात्तसर्वेहो मुक्त एवोत्तमाशयः ॥ १९ ॥ नैष्कर्म्येण न तस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः । न ससाधनजाप्याभ्यां यस्य निर्वासनं मनः ॥ २० ॥ संत्यक्तवासनान्मौनादृते नास्त्युत्तमं पदम् ॥ २१ ॥ वासनाहीनमप्येतच्चक्षुरादीन्द्रियं स्वतः । प्रवर्तते बहिः स्वार्थे वासनामात्रकारणम् ॥ २२ ॥ अयत्नोपनतेष्वक्षि दृग्द्रव्येषु यथा पुनः । नीरागमेव पतति तद्वत्कार्येषु धीरधीः ॥ २३ ॥ भावसंवित्प्रकटितामनुरूपा च मारुते । चित्तस्योत्पत्त्युपरमा वासनां मुनयो विदुः ॥ २४ ॥ दृढाभ्यस्तपदार्थैकभावनादतिचञ्चलम् । चित्तं संजायते जन्मजरामरणकारणम् ॥ २५ ॥ वासना-

वशतः प्राणस्पन्दस्तेन च वासना । क्रियते चित्तबीजस्य तेन बीजाङ्कुरक्रमः ॥ २६ ॥ द्वे बीजे चित्तवृक्षस्य प्राणस्पन्दनवासने । एकस्मिंश्च तयोः क्षीणे क्षिप्रं द्वे अपि नश्यतः ॥ २७ ॥ असङ्गव्यवहारत्वाद्भवभावनवर्जनात् । शरीरनाशदर्शित्वाद्वासना न प्रवर्तते । वासनासंपरित्यागाच्चित्तं गच्छत्यचित्तताम् ॥ २८ ॥ अवासनत्वात्सततं यदा न मनुते मनः । अमनस्ता तदोदेति परमोपशमप्रदा ॥ २९ ॥ अव्युत्पन्नमना यावद्भवानज्ञाततत्पदः । गुरुशास्त्रप्रमाणैस्तु निर्णीतं तावदाचर ॥ ३० ॥ ततः पक्वकषायेण नूनं विज्ञातवस्तुना । शुभोऽप्यसौ त्वया त्याज्यो वासनौघो निराधिना ॥ ३१ ॥ द्विविधश्चित्तनाशोऽस्ति सरूपोऽरूप एव च । जीवन्मुक्तः सरूपः स्यादरूपो देहमुक्तिगः ॥ ३२ ॥ अस्य नाशमिदानीं त्वं पावने शृणु सादरम् ॥ ३३ ॥ चित्तनाशाभिधानं हि यदा ते विद्यते पुनः । मैत्र्यादिभिर्गुणैर्युक्तं शान्तिमेति न संशयः । भूयोजन्मविनिर्मुक्तं जीवन्मुक्तस्य तन्मनः ॥ ३४ ॥ सरूपोऽसौ मनोनाशो जीवन्मुक्तस्य विद्यते । अरूपस्तु मनोनाशो वैदेहीमुक्तिगो भवेत् ॥ ३५ ॥ सहस्राङ्कुरशाखात्मफलपल्लवशालिनः ॥ ३६ ॥ अस्य संसारवृक्षस्य मनोमूलमिदं स्थितम् । संकल्प एव तन्मन्ये संकल्पोपशमेन तत् ॥ ३७ ॥ शोषयाशु यथा शोषमेति संसारपादपः । उपाय एक एवास्ति मनसः स्वस्य निग्रहे ॥ ३८ ॥ मनसोऽभ्युदयो नाशो मनोनाशो महोदयः । ज्ञमनो नाशमभ्येति मनो ज्ञस्य हि शृङ्खला ॥ ३९ ॥ तावन्निशीव वेताला वल्गन्ति हृदि वासनाः । एकतत्त्वदृढाभ्यासाद्यावन्न विजितं मनः ॥ ४० ॥ प्रक्षीणचित्तदर्पस्य निगृहीतेन्द्रियद्विषः । पद्मिन्य इव हेमन्ते क्षीयन्ते भोगवासनाः ॥ ४१ ॥ हस्तं हस्तेन संपीड्य दन्तैर्दन्तान्विचूर्ण्य च । अङ्गान्यङ्गैः समाक्रम्य जयेदादौ स्वकं मनः ॥ ४२ ॥ उपविश्योपविश्यैकां चिन्तकेन मुहुर्मुहुः । न शक्यते मनो जेतुं विना युक्तिमनिन्दिताम् ॥ ४३ ॥ अङ्कुशेन विना मत्तो यथा दुष्टमतङ्गजः । अध्यात्मविद्याधिगमः साधुसंगतिरेव च ॥ ४४ ॥ वासनासंपरित्यागः प्राणस्पन्दनिरोधनम् । एतास्ता युक्तयः पुष्टाः सन्ति चित्तजये किल ॥ ४५ ॥ सतीषु युक्तिष्वेतासु हठान्नियमयन्ति ये । चेतसो दीपमुत्सृज्य विचिन्वन्ति तमोऽञ्जनैः ॥ ४६ ॥ विमूढाः कर्तुमुद्युक्ता ये हठाच्चेतसो जयम् । ते निबध्नन्ति नागेन्द्रमुन्मत्तं

बिसतन्तुभिः ॥ ४७ ॥ द्वे बीजे चित्तवृक्षस्य वृत्तिव्रततिधारिणः । एकं प्राणपरिस्पन्दो द्वितीयं दृढभावना ॥ ४८ ॥ सा हि सर्वगता संवित्प्राणस्पन्देन चाल्यते । चित्तैकाग्र्याद्यतो ज्ञानमुक्तं समुपजायते ॥ ४९ ॥ तत्साधनमथो ध्यानं यथावदुपदिश्यते । विनाप्यविकृतिं कृत्स्नां संभवस्यत्ययक्रमात् । यशोऽरिष्टं च चिन्मात्रं चिदानन्दं विचिन्तय ॥ ५० ॥ अपानेऽस्तंगते प्राणो यावन्नाभ्युदितो हृदि । तावत्सा कुम्भकावस्था योगिभिर्याऽनुभूयते ॥ ५१ ॥ बहिरस्तंगते प्राणे यावन्नापान उद्गतः । तावत्पूर्णां समावस्थां बहिष्ठं कुम्भकं विदुः ॥ ५२ ॥ ब्रह्माकारमनोवृत्तिप्रवाहोऽहंकृतिं विना । संप्रज्ञातसमाधिः स्याद्ध्यानाभ्यासप्रकर्षतः ॥ ५३ ॥ प्रशान्तवृत्तिकं चित्तं परमानन्ददायकम् । असंप्रज्ञातनामायं समाधिर्योगिनां प्रियः ॥ ५४ ॥ प्रभाशून्यं मनःशून्यं बुद्धिशून्यं चिदात्मकम् । अतद्व्यावृत्तिरूपोऽसौ समाधिर्मुनिभावितः ॥ ५५ ॥ ऊर्ध्वपूर्णमधःपूर्णं मध्यपूर्णं शिवात्मकम् । साक्षाद्विधिमुखो ह्येष समाधिः पारमार्थिकः ॥ ५६ ॥ दृढभावनया त्यक्तपूर्वापरविचारणम् । यदादानं पदार्थस्य वासना सा प्रकीर्तिता ॥ ५७ ॥ भावितं तीव्रसंवेगादात्मना यत्तदेव सः । भवत्याशु कपिश्रेष्ठ विगतेतरवासनः ॥ ५८ ॥ तादृग्रूपो हि पुरुषो वासनाविवशीकृतः । संपश्यति यदैवैतत्सद्वस्त्विति विमुह्यति ॥ ५९ ॥ वासनावेगवैचित्र्यात्स्वरूपं न जहाति तत् । भ्रान्तं पश्यति दुर्दृष्टिः सर्वं मदवशादिव ॥ ६० ॥ वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा । मलिना जन्महेतुः स्याच्छुद्धा जन्मविनाशिनी ॥ ६१ ॥ अज्ञानसुघनाकारा घनाहंकारशालिनी । पुनर्जन्मकरी प्रोक्ता मलिना वासना बुधैः । पुनर्जन्माङ्कुरं त्यक्त्वा स्थितिः संभृष्टबीजवत् ॥ ६२ ॥ बहुशास्त्रकथाकन्थारोमन्थेन वृथैव किम् । अन्वेष्टव्यं प्रयत्नेन मारुते ज्योतिरान्तरम् ॥ ६३ ॥ दर्शनादर्शने हित्वा स्वयं केवलरूपतः । य आस्ते कपिशार्दूल ब्रह्म स ब्रह्मवित्स्वयम् ॥ ६४ ॥ अधीत्य चतुरो वेदान्सर्वशास्त्राण्यनेकशः । ब्रह्मतत्त्वं न जानाति दर्वी पाकरसं यथा ॥ ६५ ॥ स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान् । विरागकारणं तस्य किमन्यदुपदिश्यते ॥ ६६ ॥ अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः । उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते ॥ ६७ ॥ बद्धो हि वासनाबद्धो मोक्षः स्याद्वासनाक्षयः । वासनां

संपरित्यज्य मोक्षार्थित्वमपि त्यज ॥ ६८ ॥ मानसीर्वासनाः पूर्वं त्यक्त्वा विषयवासनाः । मैत्र्यादिवासनानाम्नीर्गृहाणामलवासनाः ॥ ६९ ॥ ता अप्यतः परित्यज्य ताभिर्व्यवहरन्नपि । अन्तःशान्तः समस्नेहो भव चिन्मात्रवासनः ॥ ७० ॥ तामप्यथ परित्यज्य मनोबुद्धिसमन्विताम् । शेषस्थिरसमाधानो मयि त्वं भव मारुते ॥ ७१ ॥ अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनामगोत्रं मम रूपमीदृशं भजस्व नित्यं पवनात्मजार्तिहन् ॥ ७२ ॥ दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम् । अलेपकं सर्वगतं यदद्वयं तदेव चाहं सकलं विमुक्त ॐ ॥ ७३ ॥ दृशिस्तु शुद्धोऽहमविक्रियात्मको न मेऽस्ति कश्चिद्विषयः स्वभावतः । पुरस्तिरश्चोर्ध्वमधश्च सर्वतः सुपूर्णभूमाहमितीह भावय ॥ ७४ ॥ अजोऽमरश्चैव तथाऽजरोऽमृतः स्वयंप्रभः सर्वगतोऽहमव्ययः । न कारणं कार्यमतीत्य निर्मलः सदैव तृप्तोऽहमितीह भावय ॥ ७५ ॥ जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते । विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ ७६ ॥ तदेतदृचाभ्युक्तम्—तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ ॐसत्यमित्युपनिषत् ।

ॐपूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

इति मुक्तिकोपनिषत्सु द्वितीयोऽध्यायः ॥ २ ॥

हरिः ॐ तत्सत् ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इति शुक्लयजुर्वेदगता मुक्तिकोपनिषत्समाप्ता ॥ १२० ॥

संपूर्णोऽयमुपनिषत्समुच्चयः ।

ॐतत्सद्ब्रह्मार्पणमस्तु ।

ॐ

# १. योग-उपनिषदः

## योगराजोपनिषत्

योगराजं प्रवक्ष्यामि योगिनां योगसिद्धये ।
मन्त्रयोगो लयश्चैव राजयोगो हठस्तथा ॥ १ ॥
योगश्चतुर्विधः प्रोक्तो योगिभिस्तत्त्वदर्शिभिः ।
आसनं प्राणसंरोधो ध्यानं चैव समाधिकः ॥ २ ॥
एतच्चतुष्टयं विद्धि सर्वयोगेषु सम्मतम् ।
ब्रह्मविष्णुशिवादीनां मन्त्रं जाप्यं विशारदैः ॥ ३ ॥
साध्यते मन्त्रयोगस्तु वत्सराजादिभिर्यथा ।
कृष्णद्वैपायनाद्यैस्तु साधितो लयसंज्ञितः ॥ ४ ॥
नवस्वेव हि चक्रेषु लयं कृत्वा महात्मभिः ।
प्रथमं ब्रह्मचक्रं स्यात् त्रिरावृत्तं भगाकृति ॥ ५ ॥
अपाने मूलकन्दाख्यं कामरूपं च तज्जगुः ।
तदेव वह्निकुण्डं स्यात् तत्त्वकुण्डलिनी तथा ॥ ६ ॥

तां जीवरूपिणीं ध्यायेज्ज्योतिष्ठं मुक्तिहेतवे ।
स्वाधिष्ठानं द्वितीयं स्याच्चक्रं तन्मध्यगं विदुः ॥ ७ ॥
पश्चिमाभिमुखं लिङ्गं प्रवालाङ्कुरसन्निभम् ।
तत्रोड्डीयाणपीठेषु तं ध्यात्वाकर्षयेज्जगत् ॥ ८ ॥
तृतीयं नाभिचक्रं स्यात्तन्मध्ये तु जगत् स्थितम् ।
पञ्चावर्तां मध्यशक्तिं चिन्तयेद्विद्युदाकृति ॥ ९ ॥
तां ध्यात्वा सर्वसिद्धीनां भाजनं जायते बुधः ।
चतुर्थं हृदये चक्रं विज्ञेयं तदधोमुखम् ॥ १० ॥
ज्योतीरूपं च तन्मध्ये हंसं ध्यायेत् प्रयत्नतः ।
तं ध्यायतो जगत् सर्वं वश्यं स्यान्नात्र संशयः ॥ ११ ॥
पञ्चमं कण्ठचक्रं स्यात् तत्र वामे इडा भवेत् ।
दक्षिणे पिङ्गला ज्ञेया सुषुम्ना मध्यतः स्थिता ॥ १२ ॥
तत्र ध्यात्वा शुचि ज्योतिः सिद्धीनां भाजनं भवेत् ।
षष्ठं च तालुकाचक्रं घण्टिकास्थानमुच्यते ॥ १३ ॥
दशमद्वारमार्गं तद्राजदन्तं च तज्जगुः ।
तत्र शून्ये लयं कृत्वा मुक्तो भवति निश्चितम् ॥ १४ ॥
भ्रूचक्रं सप्तमं विद्याद्बिन्दुस्थानं च तद्विदुः ।
भ्रुवोर्मध्ये वर्तुलं च ध्यात्वा ज्योतिः प्रमुच्यते ॥ १५ ॥
अष्टमं ब्रह्मरन्ध्रं स्यात् परं निर्वाणसूचकम् ।
तं ध्यात्वा सूतिकाग्रामं धूमाकारं विमुच्यते ॥ १६ ॥
तच्च जालन्धरं ज्ञेयं मोक्षदं नीलचेतसम् ।
नवमं व्योमचक्रं स्यादश्रैः षोडशभिर्युतम् ॥ १७ ॥

संविद्भ्रूयाच्च तन्मध्ये शक्तिरुद्धा स्थिता परा ।
तत्र पूर्णो गिरौ पीठे शक्तिं ध्यात्वा विमुच्यते ॥ १८ ॥
एतेषां नवचक्राणामेकैकं ध्यायतो मुनेः ।
सिद्धयो मुक्तिसहिताः करस्थाः स्युर्दिने दिने ॥ १९ ॥
एको दण्डद्वयं मध्ये पश्यति ज्ञानचक्षुषा ।
कदम्बगोलकाकारं ब्रह्मलोकं व्रजन्ति ते ॥ २० ॥
ऊर्ध्वशक्तिनिपातेन अधःशक्तेर्निकुञ्चनात् ।
मध्यशक्तिप्रबोधेन जायते परमं सुखं
जायते परमं सुखम् । इति ॥ २१ ॥

इति योगराजोपनिषत् समाप्ता

---

# २. सामान्यवेदान्त-उपनिषदः

## अद्वैतोपनिषत्

ॐ अद्वैतपुरुषस्य न द्वितीयो भेदोऽस्ति। स्थिरजंगममध्ये अद्वैतं ब्रह्म प्रकाशितम्। सर्वलोकमध्ये ब्रह्म द्विधारूपं विचरति। चैतन्यचित्तेजसः अन्तरात्मा। मध्ये कैवल्यात्मा। एकैकं यथा रवितेजः रविर्भवेत् तथा अखण्डितब्रह्म मायाजगत्त्रयं अवस्थात्रयं परमात्मनः एकं भवति। या बुद्धिर्गर्भमध्ये सा बुद्धिर्बाल्यावस्था न भवति। या बुद्धिर्बाल्यावस्था भवति सा बुद्धियौंवनावस्था न भवति। या बुद्धियौंवनावस्था सा बुद्धिर्यूनावस्था न भवति। जरावस्था कालसंप्रीकामेवधर्मक्रीयते कारणं तत्त्वज्ञानं भवति। ज्ञानप्रबोधो यस्मिन्मध्ये मायामोहं परित्यज्य सर्वकर्मविनिर्मुक्तः स शब्दातीतोऽपि जायते। अथेतोऽपि अद्वैतपुरुषस्य पूर्णं ब्रह्म प्रतिभासितम्। यथा नदी जायते सागर एकोऽपि सागरप्रतिभासितः तथा ब्रह्म सर्वान्तरान्मा मध्ये प्रकाशितम्। नाप्रसं संपुटं सत्त्वरजस्तमोगुणरहितं तत्त्वं चेति। यथा योगी वायुनिरोधनं उक्ताचरणगुरुराछिनोति किल्बिषम्। सर्वदिव्यदेहमध्ये परमात्मा प्रकाशितः विनिर्मुक्तभवसागरः स्वर्गे देवमध्ये उत्तमस्वल्पस्य बुद्धिप्रकाशः अस्मिन्मध्ये मायामोहं परित्यजेत्। प्रकाशमध्ये

माया करोति । तैलमध्ये यथा यथा मक्षिका एकदेहिमध्ये ब्रह्म दशधा रूपं विचरति । चक्षु:प्राणमनोबुद्धिपञ्चेन्द्रियाणि पञ्चतत्त्वानि तथा घटघट-मध्ये बहुचन्द्रोऽपि दृश्यते प्रकाशितः सर्वलोकमध्ये ब्रह्मणो रूपं विचरति तथा घटघटमध्ये बहुचन्द्रोऽपि दृश्यते । अद्वैतं कथितं येन पुरुषोऽमूढो भवति । देवासुरमुनिमनुष्याणां अधः ऊर्ध्वं चतुर्दिशम् । भुवर्णायुदेवादाव्य-देहितेरसकारो दृश्यते रसकाराकारमध्ये भवति निराकारः अकारउकार-मध्ये ब्रह्म परिपूर्णं सत्यसत्यं वेदवाक्यं वेदशास्त्रप्रतिभासितं कैवल्यं द्वैताद्वैतरहितं मनोमय आनन्दमयतत्त्वमयतेजोमयसर्वमयः विष्णुवृक्ष-फलं उत्पन्नं परमहंसपूर्णोऽपि जायते । ज्ञानं माता विज्ञानं पिता सगुणब्रह्म निर्गुणब्रह्मार्पितं अष्टमी च निर्गुणावस्था ब्रह्म शरीरज्ञानलहरी ब्रह्मणः । ब्रह्मणो यज्ञोपवीतमनिष्टं गंभीरग्रहे क्षेमसर्ववैराग्यप्रभावेन सन्तोषलाभ-समस्तगुणोऽपि जायते । परमहंसपुरुषस्य द्वितीयं भेदं यथा जलरहिते भिन्नं प्राणप्रीतेयन् । द्वितीयवस्तुरहितः अखण्डितं वस्तु मध्यं प्रविष्टं अर्धस्थाने अर्धमृचस्थाने आत्मा दृश्यते आत्मव्यापकं ब्रह्मज्ञानविज्ञानम् ॥

इति अद्वैतोपनिषत् संपूर्णा

---

# आचमनोपनिषत्

ॐ आचमनविधिं व्याख्यास्यामः । जङ्घे पाणिपादौ प्रक्षाल्य प्राङ्मुख उदङ्मुखो वा बद्धशिखो यज्ञोपवीती । ब्राह्मणस्य दक्षिणे हस्ते पञ्च तीर्थानि भवन्ति । अङ्गुल्यग्रे देवतीर्थं कनिष्ठिकामूले आर्षिकं तीर्थं

[अङ्गुष्ठतर्जन्योर्मध्ये] पैतृकं तीर्थं अङ्गुष्ठमूले ब्रह्मतीर्थं मध्ये अग्नितीर्थम् । न तिष्ठन्न हसन् न बुद्बुदैर्न च लोमैः गोकर्णाकृतिवत् कृत्वा माषमग्नजलं पिबेत् । तेन त्रिराचामेत् । प्रथमं यः पिबेदृग्वेदः प्रीणातु । द्वितीयं यः पिबेद्यजुर्वेदः प्रीणातु । तृतीयं यः पिबेत् सामवेदः प्रीणातु । लोमाधरोष्ठमथर्ववेदः प्रीणातु । मुखमग्नितृप्तं सर्वं प्रोक्षति । यः पादौ प्रोक्षति यश्चक्षुषी यश्चन्द्रमादित्यौ यन्नाभिं तेन पृथिवी यस्ततस्तेन विष्णुः । यच्छिरस्तेन रुद्रः । मूर्ध्नि शतकुबेरः । सर्वदेवत्यास्ते प्रीणन्तु । य एवं वेद । इत्युपनिषत् ॥

इत्याचमनोपनिषत् समाप्ता

---

# आत्मपूजोपनिषत्

ॐ तस्य निश्चिन्तनं ध्यानम् । सर्वकर्मनिराकरणमावाहनम् । निश्चलज्ञानमासनम् । समुन्मनीभावः पाद्यम् । सदामनस्कमर्घ्यम् । सदादीप्तिराचमनीयम् । वराकृतप्राप्तिः स्नानम् । सर्वात्मकत्वं दृश्यविलयो गन्धः । दृगविशिष्टात्मानः अक्षताः । चिदादीप्तिः पुष्पम । सूर्यात्मकत्वं दीपः । परिपूर्णचन्द्रामृतरसैकीकरणं नैवेद्यम् । निश्चलत्वं प्रदक्षिणम् । सोऽहंभावो नमस्कारः । परमेश्वरस्तुतिर्मौनम् । सदासन्तोषो विसर्जनम् । एवं परिपूर्णराजयोगिनः सर्वात्मकपूजोपचारः स्यात् । सर्वात्मकत्वं आत्माधारो भवति । सर्वनिरामयपरिपूर्णोऽहमस्मीति मुमुक्षूणां मोक्षैकसिद्धिर्भवति ॥ इत्युपनिषत् ॥

इत्यात्मपूजोपनिषत् समाप्ता

---

# आर्षेयोपनिषत्

ॐ ऋषयो वै ब्रह्मोद्यमाह्वयितवा ऊचुः परस्परमिवानुब्रुवाणाः। तेषां विश्वामित्रो विजितीयमिव मन्यमान उवाच। यदेतदन्तरे द्यावापृथिवी अनश्नुवदिव सर्वमश्नवद्यदिदमाकाशमिवेतश्चेतश्च स्तनयन्ति विद्योतमाना इवावस्फूर्जयमाना इव तद्ब्रह्मेति। तस्योपव्याख्यानम्। यदिदमग्निभिर्ज्वलयन्ति पोप्लूययन्त्यद्भिरभिषीवयन्ति वद्ध्रीभिरभिग्रश्नंति वरत्राभिरभिन्नंत्ययोघनैर्विध्यंति सूचीभिः निखानयंति शंकुभिरभितृन्दन्ति पड्वीशिकाभिरभिलिम्पन्ति मृत्स्नया तक्ष्णुवंति वासीभिः कृष्णंति फलिभिर्नेहैव शक्नुवत इति नास्येशीमहि नैनमतीयीमहि ॥

तदु ह जमदग्निर्नानुमेने आर्तमिव वा एष तन्मेने यदिदमन्तरेणैनदुपयंति पर्यास इवैष दिवस्पृथिव्योरिति। स होवाच अन्तरिक्षं वा एतद्यदिदमित्थेत्थोपव्याख्ये इति। महिमानं त्वमुष्येह पश्यामीति यदिदमस्मिन्नन्वायत्तमिति। स यदिदमेतस्मिन्नन्वायत्तं वेदाथ तथोपास्तेऽन्वायत्तो हैवास्मिन् भवति। तदेतदविद्वानेवास्मिन्नन्वायत्तमुपास्ते वीवपद्यत् आर्तिमृच्छेत्। तस्मादेवमेवोपासीत ॥

तमितरः पप्रच्छ। कतमत् त्वमनार्तं मन्यस इति। तं होवाच। यदिदमिति द्यावापृथिव्योरनारंभमिव नोपयन्ति नाभिचक्षते नाश्नुवन्ति। तस्योपव्याख्यानम्। यदिदमितश्चेतश्चाण्डकोशा उदयन्ति नापद्यन्त इव न विस्रंसन्त इव न स्खलंतीव न पर्यावर्तन्त इव। न ह वा एनत्केचिदुपधावन्तो विन्दन्ति नाभिपश्यन्ति। यदिदमेक इदप एवाहुस्तम एके ज्योतिरेकेऽवकाशमेके परमं व्योमैक आत्मानमेक इति ॥

तदु ह भरद्वाजो नानुमेने। यदिह सर्वे वेत्थेत्थेति व्यूदिरे नास्य तद्रूपं पर्याप्तमिति। स होवाच। आर्तमिवेदं ते विज्ञानमपि स्विदेनद्रोद-

स्योरेव पर्यायेणोपवन्वीमहि यदिदमित्थेत्थोपव्याख्यास्याम इति । महिमानं त्वेवास्योपासे । यदिदमत्तान्वायत्तमिति । स यदिदमत्तान्वायत्तं वेदाथ तथैवोपास्तेऽत्रैवान्वायत्तो भवति । स य इहान्वायत्तमिदमविद्वानेवैतदुपास्ते पापीयान् भवत्यार्तिमाच्छर्त्यवम्रियते यदेवमेतदन्वायत्तमुपास्ते सर्वमायुरेति वसीयान् भवति । स य एतदेनमुपास्ते ॥

तमितरः पप्रच्छ । कतमत् त्वमनार्तं मन्यस इति । स होवाच । यदेतस्मिन् मण्डलेऽर्चिर्दीप्यते बंभ्रम्यमाणमिव चाकश्यमानमिव जाज्वल्यमानमिव देदीप्यमानमिव लेलिहानं तदेव मे ब्रह्म । तस्योपव्याख्यानं यदिदमद्धैव पराः परावतोऽभिपद्यंते संपन्नमेवैतत् संमितमेव यथोपयातमात्मैवा-भिचक्षत इति । य एतदभिपद्येव गृह्णीयादथो विस्फुरन्तीव धावन्तीवोत्प्लवंतीवो-पश्लिष्यंतीव न हैवाभिपद्यन्ते । तदिदमन्तिके दवीयो नेदीय इव दूरतो न वा अस्य महिमानं कश्चिदेतीति ॥

तदु ह न मेने गौतमो यदिदमार्तमिव स्तिमितमिव पर्यायेण पश्यन्तीवेमं मोघं संविदाना इति । य इमे पुण्ड्राः सुह्माः कुलुम्भा दरदा बर्बरा इति । न ह वा असंविदाना एव द्रागिवाभि तत्पद्यन्त इति । महिमानं त्वेवास्योपासे । य एतदस्मिन्नन्तरे हिरण्मयः पुरुषो हिरण्यवर्णो हिरण्यश्मश्रुरानखाग्रेभ्यो दीप्यमान इव । स य एवमेन-मुपास्तेऽतीव सर्वभूतानि तिष्ठंति सर्वमायुरेति वसीयान् भवति । न ह वा एष परमतीवोदेति । यस्त्वेनं परमतीवोद्यन्तं पश्यन्नुपास्ते पापीयान् भवति वीवपद्यत आर्तिमृच्छति । यस्त्वेनं परमनूद्यन्तं वेदाथ तथोपास्ते परं ज्योति-रुपसंपद्यते सर्वमायुरेति वसीयान् भवति । स य एवमेनमुपास्ते ॥

तमितरः पप्रच्छ । कतमत् त्वमनार्तं मन्यस इति । तं होवाच । विस्फुरंतीरेवेमा लेलायन्तीरिव संजिहाना इव नेदीयसितमा इव दवीय

सितमा एव दवीयसितमा इव नेदीयसितमा एवेति । यदपि बहुधाचक्षीरन्न किञ्च प्रतिपद्यत इति तन्मे ब्रह्मेति ॥

तदु ह वसिष्ठो नानुमेने । यदिमा विस्फूर्जयत एवाभिपद्यन्ते वीवयन्ति मिथु चेति विचक्षतेऽकाण्ड इवेमा न ह वै परमित्था कश्चनाश्नोत्यसंविदान इव । अप ये संविद्रते तदेतदन्तर्विचक्षत इति । महिम्नः पश्येमा विजान इति । स य एवमिमा महिम्न एवास्य पश्यन्नुपास्ते महिम्न एवाश्नोति सर्वमायुरेति वसीयान् भवति । यस्त्विमा अवयतीरेवोपास्ते न परा संपद्यमाना नो एव परेति पापीयान् भवति वीवपद्यते प्रमीयते । अथ य इमाः परा संपद्यमाना एवोपास्ते परैव संपद्यते सर्वमायुरेति वसीयान् भवति ॥

तमितरः पप्रच्छ । कतमत् त्वमनार्तं मन्यस इति । महाविज्ञानमिव प्रतिपदेनाध्यवसायमिव यत्रैतदित्थेत्थेत्यभिपश्यति । अथ नेति नेत्येतदित्थेत्थेति । स वा अयमात्मा अनन्तोऽजरोऽपारो न वा अरे बाह्यो नान्तरः सर्वविद्धारूपो विघसः प्रसरणोऽन्तर्ज्योतिर्विश्वभुक् सर्वस्य वशी सर्वस्येशानः सर्वमभिक्षिपन्न तमश्नोति कश्चन ॥

परोवरीयांसमभिप्रणुत्यमन्तर्जुषाणं भुवनानि विश्वा ।
यमश्नवन्न कुशिकासो अग्निं वैश्वानरमृतजातं गमध्ययी ॥ १ ॥
भरेभरेषु तमुपह्वयाम प्रसासहिं युध्ममिन्द्रं वरेण्यम् ।
सत्रासा [ह] मवसे जनानां पुरुहूतमृग्मिणं विश्ववेदसम् ॥ २ ॥
अहिन्नं तमर्णवे शयानं वावृहाणं तवसा परेण ॥ ३ ॥

तदु ह प्रतिपेदिरे । ते वाभिवाद्यैवोपसमीयुः । नमोऽग्नये । नम इन्द्राय । नमः प्रजापतये । नमो ब्रह्मणे । नमो ब्रह्मणे ॥

इत्यार्षेयोपनिषत् समाप्ता

---

# इतिहासोपनिषत्

ॐ वृषादर्विकुलꣳ ह वै शिबिकुलं बभूव । तस्यायमितिहासः कुलविद्या बभूव । तद्यो ह स्मेममधीते स ह स्मै राजा भवति । स किंचित्प्राप्यान्तर्हितः । सोऽब्रवीत । यो मामितिहासं ग्राहयेत् । वरमस्मै दद्यामिति । ततो ब्राह्मणः संयोगं संयुयुजे । तमादित्यात् पुरुषो भास्करवर्णो निष्क्रम्य स एनं ग्राहयाञ्चकार । तमपृच्छत् । कोऽसीति वा वृषादर्विरिति । तस्माद्य इममितिहासमधीते । आदित्यलोके स कामचारो भवति । तस्माद्य इममितिहासमुपनीतो माणवको गृह्णीयात् । गृहीत्वाऽथ ब्राह्मणाञ्छ्रावयेत् । मेधावी भवेत् । वर्षशतं च जीवेत् । षडङ्गं च वेदमवाप्नुयात् । तस्माद्य इममितिहासं पठन् पितृभ्य उदकाञ्जलिं दद्यात् । अपूपकूला नद्यः सर्पिष्पायसकर्दमा उपतिष्ठेरन् । तस्माद्य इममितिहासं पठन् पितृभ्यः श्राद्धं दद्यात् । तद्यथा स्थूलया गयाश्राद्धं कृतं भवेत् । स्वधा सह पितॄणाम् । एवमस्य पितॄणामनन्ता तृप्तिर्भवति । य एवं वेद । सोऽयमितिहासः धन्यः पुण्यः पुत्रीयः पशव्य आयुष्यः स्वर्ग्यः । सार्वकालिकसर्वभयप्रमोक्षणः । नाधिभ्यो भयं भवति । न चोरेभ्यः । न रक्षोभ्यः । नाध्वनि प्रमीयते । नाप्सु प्रमीयते । नाग्नौ प्रमीयते । नाप्सु न शस्त्रेण वध्यते । नानपत्यः प्रमीयते । सायं प्रयुञ्जानो दिवसकृतं पापं नाशयति । प्रातः प्रयुञ्जानो रात्रिकृतं पापं नाशयति । सायंप्रातः प्रयुञ्जानः पापोऽपापो भवति । पापभाजो हि श्रोतॄणामनसूयावतां पापाꣳश्चापक्रामन्ति । एकशतं चान्ये साधव आगमाः । एतावती परिभाषा । अत ऊर्ध्वं विद्यात् ।

जिह्वा रसं विजानाति हृदयं वेदयत् प्रियम् ।
चक्षुर्दिष्टः साक्षिभागो मनसा साधु पश्यति ॥

मनसा वाचं नयति चक्षुषा मीयते जगत् ।
भूतस्य कर्णौ श्रोतारावन्नं प्राणेन संमितम् ॥
अन्नं प्राणो वृषादर्विः पर्जन्यो दत्तवान्महत् ।
अग्निश्च हव्यवाहनस्तदिदं गाव इद्धविः ॥
वित्तं बन्धुः प्रजातन्तुः कर्मरूपं बृहत्सखा ।
प्रज्ञा प्रतिष्ठा तन्तूनामिष्टापूर्तेः परायणम् ॥
सत्यं वदन्त्यनृतमुद्वहन्ति क्षीरं पिबन्ति मधु ते पिबन्ति ।
सोमं पिबन्त्यमृतेन सार्धं मृत्योः परस्तादमृता भवन्ति ॥
ये ब्राह्मणा ब्रह्मचर्यं चरन्त्यथो खल्वाहुर्वेदसंमितोऽयमितिहासः ॥
धर्मं चरति नाधर्मं सत्यं वदति नानृतम् ।
दीर्घं पश्यति मा ह्रस्वं परं पश्यति माऽपरम् ॥
ऋचो ह यो वेद स वेद देवान् यजूंषि यो वेद स वेद यज्ञम् ।
सामानि यो वेद स वेद सर्वं यो मानसं वेद स वेद ब्रह्म ॥

यः क्रौद्धव्येन क्रुद्धस्तिष्ठति सोऽतिवाचं च दीक्षयति । योऽतिवाचं नयति स वै सर्वं द्विजः खलु मानसं वेदेति नः श्रुतम् ॥

तपोऽवधिः परमा ब्राह्मणस्य श्रद्धा माता पितरंसत्यमाहुः ।
योग आत्मा चरणमस्य बन्धुर्दमः प्रतिष्ठा विदुषो न भूमिम् ॥
दुःखं जन्म जरा दुःखं दुःखं मृत्युः पुनः पुनः ।
संसारमण्डलं दुःखं पच्यन्ते यत्र जन्तवः ॥
यो ब्राह्मणः पापकृत् मन्त्रकृच्च स जीवति ।
ब्रह्मण्यो ब्रह्मकृच्छश्वत् ब्रह्मलोके महीयते ॥
तृणानि ह्रीच्छन्ति कुशत्वमेव वृक्षा यूपत्वं पशवश्च गोत्वम् ।
सर्वाः प्रजा ब्राह्मणत्वं नरेन्द्र न ब्राह्मणत्वात् परमस्ति किञ्चित् ॥

शताह्ववशतशरः शतशक्रऋजीषिणाम् ।
शतं ब्रह्म तपस्विनां कूपोऽरण्यस्य तिष्ठति ॥
ऋतेनापिहिता गुहा श्रुतेनापिहिता गुहा ।
स्मृतेनापिहिता गुहा शमेनापिहिता गुहा ॥
दमेनापिहिता गुहा सत्येनापिहिता गुहा ।
आत्मनापिहिता गुहा ब्रह्मणापिहिता गुहा ॥
ब्रह्मन्निधिं मनसा वेदयन्तः पश्यन्तो गुह्यमपरं परं च ।
अनध्वगा अध्वसु पारयिष्णवः ब्राह्मणास्तु सदृशाः सूर्येण ॥
यः च्छ्राद्धानि कुरुतेऽसंगतानि न देवयानेन पथा स याति ।
परिमुक्तं पिप्पलं बन्धनादिव स्वर्गाल्लोकाच्च्यवतेऽश्राद्धमित्रः ॥

यो यज्ञस्य प्रसाधनः तन्तुर्देवेष्वाहुतः । तमाहुतमशीमहि । नावेदविन्मनुतेदं बृहन्तम् । सर्वानुभुमात्मानꣳसंपराये । एष नित्यो महिमा ब्राह्मणस्य । न कर्मणा वर्धते नो कनीयान् । तस्यैवात्मा पदवित्तं विदित्वा । न कर्मणा लिप्यते पापकेन ॥

अग्निहोत्रं वलीवृद्धाः काले चातिथिरागतः ।
बालाश्च कुलवृद्धाश्च निर्दहन्त्यवमानिताः ॥
संभोजनी नाम पिशाचभिक्षा नैषा पितॄन् गच्छति नोत देवान् ।
इहैव सा चरति क्षीणपुण्या शालान्तरे गौरिव नष्टवत्सा ॥
शूद्रायां सृजते रेतः श्राद्धं भुक्त्वाऽथ यो द्विजः ।
स शूद्रयोनिसञ्छिन्नं रेतसा सिञ्चते पितॄन् ॥
यः काममोहितः शूद्र्यां पुत्रमुत्पाद्यते द्विजः ।
यावदुत्पाद्यते भूमौ तावत्तिष्ठेत् सुदारुणे ॥

अश्रोत्रियं ब्राह्मणं भोजयानस्य षोडश श्राद्धानि पितरो न भुञ्जते ।
ततो निराशाः पितरो भवन्ति सेन्द्राः स्म देवाः प्रहरन्ति वज्रम् ॥

यावतः खलु पिण्डान् स प्राश्नन्ति हविषो नृचः ।
तावतः शूलान् ग्रसति प्राप्य वैवस्वतं यमम् ॥

छिन्दन्ति दातृहस्तं च जिह्वाग्रमितरस्य च ।
मन्त्रपूतं तु यच्छ्राद्धममन्त्राय प्रयच्छति ॥

नियुक्तस्तु यतिः श्राद्धं देवे वा मांसमुत्सृजेत् ।
यावन्ति पशुरोमाणि तावन्नरकमृच्छति ॥

यथेरिणे बीजमुप्तं नरेन्द्र नास्य वप्ता लभते बीजभागम् ।
एवं श्राद्धमप्रतिष्ठितं विनश्यति ॥

श्राद्धं दत्त्वा च भुक्त्वा च सङ्गमं न समाचरेत् ।
पितरस्तस्य तन्मासं भवन्ते रेतभोजनाः ॥

श्राद्धं दत्त्वा च भुक्त्वा च सपङ्क्तिः सहभोजनम् ।
षण्मासान् पितरोऽश्नन्ति कर्तुरुच्छिष्टभोजनम् ॥

श्राद्धं भुक्त्वा पुनः श्राद्धं भुञ्जीयाल्लोभमोहितः ।
नष्टं भवति तच्छ्राद्धं रौरवं नरकं व्रजेत् ॥

श्राद्धं दत्त्वा च भुक्त्वा च भारमुद्वहते द्विजः ।
पितरस्तस्य तन्मासं भवन्ते भारपीडिताः ॥

श्राद्धं दत्त्वा च भुक्त्वा च अध्वानं योऽधिगच्छति ।
पितरस्तस्य तन्मासं भवन्ते पांसुभोजनाः ॥

अनग्निकस्य वेदोऽग्निर्वेदहीनोऽप्यनग्निकः ।
साग्निकोऽप्यनधीतः स्यात् स एषोऽनग्निकः स्मृतः ॥

स्त्रीशूद्रबालिशादिभ्य उच्छिष्टं न प्रदापयेत् ।
यदि दद्यात् प्रमादेन न तद्गच्छति तान् पितॄन् ॥
आहिताग्निः सदा पात्रं सदा पात्रं तु वेदवित् ।
पात्राणामुत्तमं पात्रं शूद्रान्नं यस्य नोदरे ॥
पुनर्भोजनमध्वानं भाराध्ययनसङ्गमम् ।
दानं प्रतिग्रहं होमं श्राद्धभुक्चाष्ट वर्जयेत् ॥
दन्तधावनताम्बूलं नखकेशनिकृन्तनम् ।
कर्ता चैव तु पूर्वेद्युर्भोक्ता चैव परेऽहनि ॥
दन्तधावनताम्बूलं क्षौराभ्यङ्गनभोजनम् ।
रत्यौषधपरान्नं च श्राद्धकर्ता विवर्जयेत् ॥
श्राद्धकर्ता परश्राद्धं यस्तु भुञ्जीत लोलुपः ।
नष्टं भवति तच्छ्राद्धं रौरवं नरकं व्रजेत् ॥
निमन्त्रितेऽध्वानगते पुनर्भुक्त्वा तु वायसम् ।
करोति कर्म यत् गृध्रः ग्रामसूकरसङ्गमात् ॥
प्रतिग्रहेषु दारिद्र्यं दानं निष्फलमेव च ।
होमे तु कुष्ठरोगी स्यात् स्वाध्यायैर्मृत्युमाप्नुयात् ॥
यस्यानृचस्तु भुङ्क्ते तस्य विद्धि ब्रह्मैव वित्तं पुरुषस्य केवलम् ।
धर्मः स्वधायां चरते ददाति च सत्यं रसः स्वादुतमो रसानाम् ।
सत्यं श्रैष्ठ्यं व्याहृतीनां तथैव प्रज्ञानं सप्तमं जीवनानाम् ॥
ब्राह्मणातिक्रमो नास्ति मूर्खो मन्त्रं विवर्जयेत् ।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥
यः शतं च सहस्राणां सहस्रं श्राद्ध आचरेत् ।
एकस्मान्मन्त्रवित् पूतः सर्वमर्हति ब्राह्मणः ॥

ब्राह्मणानां सहस्रेषु भुक्त्वा तु नव सप्त च ।
भवन्ति ज्ञायिके भूत्वा ध्यायिके च न संशयेत् ॥
कुक्षौ तिष्ठति यस्यान्नं वेदाभ्यासेन जीर्यते ।
कुलं तारयते तेषां दशपूर्वां दशापराम् ॥

ब्राह्मणो द्विपदां वरः । चतुष्पदां गौरुत्तमा । लोहानां काञ्चनं वरम् । तिलेषु तैलं दधिनीव सर्पिः । यदापस्स्रोतस्सरण्योरिवाग्निः । एवमात्मात्मनि जायते ॥

सत्येनैनं मनसा साधु पश्यति सत्येनैनं मनसा वाचं नयति ॥
प्राङ्मुखाश्च सुरा हव्यं पितरश्चाप्युदङ्मुखाः ।
प्रतिगृह्णन्ति संबाधमग्निना ब्राह्मणेन च ॥
वेदाध्यायीति यो विप्रः सततं ब्राह्मणः स्थितः ।
साचारः साग्निहोत्री च सोऽग्निर्वै कव्यवाहनः ॥

विकिरं प्रकिरं दद्याद्विकिरं ह वै प्रकिरं भुञ्जीत । तृप्तिरूपाणि दर्शयन् ॥

परिश्रिते त्वेव दद्याद्ध्लीका हि पितरः स्मृताः ।
क्रव्यादाः पितरस्सर्वे तिलज्योतिर्घृतप्रियाः ॥
देशकालपात्रमन्त्राष्टशौचेप्साः कृष्णपक्षक्षयोत्सवाः ॥
उच्छिष्टं शिवनिर्माल्यं वमनं मृतकर्पटम् ।
श्राद्धे सप्त पवित्राणि दौहित्रः कुतपस्तिलाः ॥
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ।
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्सराः ॥
दिवसस्याष्टमे भागे यदा मन्दायते रविः ।
स कालः कुतपो नाम पितॄणां दत्तमक्षयम् ॥

आरभ्य कुतपे श्राद्धं कुर्यादारोहणं बुधः ।
विधिज्ञा विधिमास्थाय रौहिणीं नैव लङ्घयेत ॥
रौहिणीं लङ्घयेद्यस्तु ज्ञानादज्ञानतोऽपि वा ।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥
यातुधानाश्च रक्षांसि पिशाचा असुरास्तथा ।
एते हरन्ति वै श्राद्धं दैवं यत्र निवर्तयेत् ॥
राक्षसं भवति श्राद्धं दैवं यत्र निवर्तयेत् ।
तत्र रक्षांसि पैशाचा न च विद्वेष्टि यो जनः ॥
पुरो देवाः प्रपद्यन्ते पश्चाद्दैवं विसर्जयेत् ।
पक्षैस्तु कुक्कुटो हन्ति निकर्षेण तु सूकरः ।
आगतं गतया श्वानं चक्षुषा वृषळीपतिः ॥
यस्य देशं न जानाति नामगोत्रे त्रिपूरुषम् ।
कन्यादानं पितृश्राद्धं नमस्कारं च वर्जयेत् ॥
यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।
स वै दुर्ब्राह्मणो नाम सर्वकर्मबहिष्कृतः ॥
अष्टवर्षा भवेत् कन्या नववर्षा तु रोहिणी ।
दशवर्षा भवेत् गौरी ह्यत ऊर्ध्वं रजस्वला ॥
पितृगेहेषु या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषळी नाम तत्पतिर्वृषळीपतिः ॥
वृषळीपतिभुक्तानि श्राद्धानि च हवींषि च ।
पितरो न प्रतिगृह्णन्ति दाता स्वर्गं न गच्छति ॥
महिषीत्युच्यते भार्या भगेनोपार्जितं धनम् ।
तदुद्रव्यमुपजीवन् यः स वै माहिषिकः स्मृतः ॥

समर्घं धनमुद्धृत्य महार्घं यः प्रयच्छति ।
स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः ॥
अग्रे माहिषिकं दृष्ट्वा मध्ये तु वृषळीपतिम् ।
अन्ते वार्धुषिकं दृष्ट्वा निराशाः पितरो गताः ॥
श्वित्री कुष्ठी तथा चैव कुनखी श्यावदन्तकः ।
रोगी हीनातिरिक्ताङ्गः काणः पंगुः पुनर्भवः ॥
अवकीर्णी कुण्डगोळावायुधी परदारगः ।
भृतकाध्यापकः क्लीबः कन्यादूष्यभिशस्तकः ॥
मित्रध्रुक् पिशुनश्चैव विक्रयी वेदनिन्दकः ।
मातापितृगुरुत्यागी कुण्डाशी वृषळात्मजः ॥
परपूर्वापरस्तेन शूद्रजः श्राद्धकर्मणि ।
रजस्स्त्रीसंगमी चैव परोपद्रवकारिणः ॥
देवब्राह्मणघाती च तेषां द्रव्यापहारिणः ।
एते गुणा न वक्तव्याः श्राद्धकर्मबहिष्कृताः ॥
आतन्वा भोजयेच्छ्राद्धं पुत्रं वाऽपि गुणान्वितम् ।
आत्मा च वाऽपि भुञ्जीत न विप्रं वेदवर्जितम् ॥
तेभ्यः श्राद्धं तु दत्तं चेत्तच्छ्राद्धं निष्फलं भवेत् ।
निराशाः पितरस्तस्य यान्ति देवाः सहर्षिभिः ॥
मदमोहेन यः शूद्र्यां पुत्रमुत्पाद्यते द्विजः ।
यावत्तिष्ठेत् स वै भूमौ तावत्तिष्ठेत् सुदारुणे ॥
क्षीरं वा दधि वा तैलं तक्रमाज्यं मधूनि च ।
एतेषां विक्रयी विप्रो रौरवं नरकं व्रजेत् ॥

यावदुष्णं भवत्यन्नं तावद्भुञ्जीत वाग्यतः ।
पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः ॥
हविर्गुणा न वक्तव्याः पितरो यावदर्पिताः ।
तृप्तैस्तु पितृभिः पश्चाद्वक्तव्यं शोभनं हविः ॥
य इमां देवीमिह वेद सर्वे
सर्वेषु भूतेषु प्रतिष्ठितानाम् ।
सती नैनं पश्यन्ति हृदयं न शोकाः
न पुत्रदाराः पशुचोदमाहितम् ॥
अपां रसो मधुनस्सर्पिषश्च क्षीरस्य चान्नस्य च संस्थितस्य ।
एते रसानां सरसेन श्राद्धं प्राप्नुवन्ति वाग्यतानां संयुतानाम् ॥

उदेहि सूर्य वरं वृणीष्वेति राजोवाच पञ्चेमानि रत्नानि गौर्मेऽजस्रं दुह्यति । हविर्मेऽजस्रं विलूहति । त्विषिर्मेऽजस्रं पिनष्टि । रथो मे सर्वान् समुद्रान् संयाति । आदित्यवर्णे इमे मणिकुण्डले इति । अथो ह्येवमेवैषामेकं वृणीष्वेति । ब्राह्मण उवाच । यावत्संपृच्छसीति भार्यो समपृच्छत् । हविर्गृहाणेति भार्योवाच । पुत्रं समपृच्छत् । रथं गृहाणेति पुत्र उवाच । कन्यां समपृच्छत् । मणिकुण्डले इति कन्योवाच । दासीं समपृच्छत । दृषदं गृहाणेति दास्युवाच । अनुपेत्योवाच हविर्भार्या रथं पुत्रः कन्या मणिकुण्डले दासी दृषदमिच्छति । गामहं शिबिसप्तमे इति । सर्वाण्येवमेवैनं ददामीति होवाच वृषादर्विस्तदिदमितिहासो ब्रह्मादित्यः पुरोगाय । पुरोगः काश्यपाय । काश्यपो भरद्वाजाय । भरद्वाजः बहुभिः अनेकमहाराजाय । ततः प्रच्य . .

धनपतेर्द्विजः ब्राह्मणकुले जातस्म . . . . भवति ॥

सप्तजन्मकृतात्पापान्मुच्यते यस्तु पर्वभिः ।
कन्यागते यदा सूर्ये तिष्ठन्ति पितरो गृहे ॥

दिने दिने गयातुल्यं भरण्यां गयपञ्चके ।
दशतुल्यं व्यतीपाते पक्षमध्ये तु विंशतिः ॥
द्वादश्यां शतमित्याहुरमावास्यां सहस्रकम् ।
आश्वयुक्छुक्लपक्षस्य द्वितीयामयुतं फलम् ॥
अन्नेन वाऽथवा येन शाकमूलफलेन वा ।
तस्मात् सर्वप्रयत्नेन कुर्याच्छ्राद्धं महालयम् ॥
शून्या प्रेतपुरी तत्र यावद्वृश्चिकदर्शनात् ।
वृश्चिका दर्शनं यान्ति निराशाः पितरो गताः ॥
ततः स्वभवनं यान्ति शापं दत्वा सुदारुणम् ।
अहोवन्नवाच्यमिति केचित् पितरो वदन्ति ॥
अपुत्राश्चैवापशवो लोके सन्ति च निन्दिताः ।
रौरवे नरके घोरे यावदाभूतसंप्लवात् ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाऽश्वमेधं वा लीलं वा वृषमुत्सृजेत् ॥
श्वेतः खुरविषाणाभ्यां मुखे पुच्छे च पाण्डुरम् ।
रोहितो यस्तु वर्णेन स लीलो वृष उच्यते ॥
गौरीं वा वरयेत् कन्यां चरेद्वा श्रवणे . . . . न्ति जपति ॥

अथ संहितायां फलमवाप्नोतीत्याह भगवान् ब्रह्मा । अष्टौ ब्राह्मणान् सम्यक् ग्राहयेन्मेधावी भवेत् । वर्षशतं च जीवेत । षडङ्गं च वेदमवाप्नुयात् ॥

वृद्धो वसूनि पुरोवाच पुत्रेभ्यः परमं निधिम् ।
एतद्वो धनमार्याणां मन्त्राश्चैव व्रतानि च ॥

नमो नमश्च मन्त्राश्च व्रतानि च नमो नमः ।
एतत् सकलं ब्रह्मप्रणवस्तुतिः काण्वशाखे पारयेति ॥

इति इतिहासोपनिषत् संपूर्णा

श्राद्धकाले विशेषेण पितॄणां दत्तमक्षयम् ।
मनोजव आयमानो आया . . . . तरत्परम् ॥
दिवं सुपर्णं गत्वा या सोमं व . . . . महत् ।
सुपर्णोऽसि गरुत्मान् दिवं गच्छ सुवः पत ॥
यस्तिलज्योतिस्त्रिंशत् वृषादर्विसुवः पत ॥

---

# चतुर्वेदोपनिषत्

ॐ अथातो महोपनिषदमेव तदाहुः । एको ह वै नारायण आसीत् । न ब्रह्मा न ईशानो नापो नाग्निः न वायुः नेमे द्यावापृथिवी न नक्षत्राणि न सूर्यः । स एकाकी नर एव । तस्य ध्यानान्तस्स्थस्य ललाटात् स्वेदोऽपतत् । ता इमा आपः । ता एते नो हिरण्यमयमन्नम् । तत्र ब्रह्मा चतुर्मुखोऽजायत । स ध्यातपूर्वामुखो भूत्वा भूरिति व्याहृतिः गायत्रं छन्द ऋग्वेदः । पश्चिमामुखो भूत्वा भूरिति व्याहृतिस्त्रैष्टुभं छन्दः यजुर्वेदः । उत्तरामुखो भूत्वा भुवरिति व्याहृतिर्जागतं छन्दः सामवेदः । दक्षिणामुखो भूत्वा जनदिति व्याहृतिरानुष्टुभं छन्दोऽथर्ववेदः ॥

सहस्रशीर्षं देवं सहस्राक्षं विश्वसंभवम् ।
विश्वतः परमं नित्यं विश्वं नारायणं हरिम् ॥
विश्वमेवेदं पुरुषं तं विश्वमुपजीवति ।
ऋषिं विश्वेश्वरं देवं समुद्रे तं विश्वरूपिणम् ॥

पद्मकोशप्रतीकाशं लम्बत्याकोशसन्निभम् ।
हृदये चाप्यधोमुखं सतस्यत्यैशीत्कराभिश्च ॥
तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः ।
तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता ॥
तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ।
स ब्रह्मा स ईशानः सोऽक्षरः परमः स्वराट् ॥

य इमां महोपनिषदं ब्राह्मणोऽधीते अश्रोत्रियः श्रोत्रियो भवति । अनुपनीतः उपनीतो भवति । सोऽग्निपूतो भवति । स वायुपूतो भवति । स सूर्यपूतो भवति । स सोमपूतो भवति । स सत्यपूतो भवति । स सर्वैर्देवैर्ज्ञातो भवति । स सर्वेषु तीर्थेषु स्नातो भवति । तेन सर्वैः ऋतुभिरिष्टं भवति । गायत्र्याः षष्टिसहस्राणि जप्तानि भवन्ति । इतिहासपुराणानां सहस्राणि जप्तानि भवन्ति । प्रणवानामयुतं जप्तं भवति । आचक्षुषः पङ्क्तिं पुनाति । आसप्तमात् पुरुषं पुनाति । जाप्येन अमृतत्त्वं च गच्छति अमृतत्वं च गच्छति इत्याह भगवान् हिरण्यगर्भः ॥

देवा ह वै स्वर्गं लोकमायंस्ते देवा रुद्रमपृच्छंस्ते देवा ऊर्ध्वबाहवो रुद्रं स्तुवन्ति । भूस्त्वादिर्मध्यं भुवस्ते स्वस्ते शीर्षं विश्वरूपोऽसि ब्रह्मैकस्त्वं द्विधा त्रिधा शान्तिस्त्वं हुतमहुतं दत्तमदत्तं सर्वमसर्वं विश्वमविश्वं कृतमकृतं परमपरं परायणं च त्वम् । अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवा नमस्याम धूर्तेरमृतं मृतं मर्त्यं च सोमसूर्यपूर्वजगदधीतं वा यदक्षरं प्राजापत्यं सौम्यं सूक्ष्मं ग्राह्यं ग्राहेण भावं भावेन सौम्यं सौम्येन सूक्ष्मं सूक्ष्मेण ग्रसति तस्मै महाग्रासाय नमः ॥

इति चतुर्वेदोपनिषत् संपूर्णा

---

# चाक्षुषोपनिषत्

ॐ अथातश्चाक्षुषीं पठितसिद्धविद्यां चक्षूरोगहरां व्याख्यास्यामः । यच्चक्षूरोगाः सर्वतो नश्यंति । चाक्षुषी दीप्तिर्भविष्यतीति । तस्याश्चाक्षुषी-विद्याया अहिर्बुध्न्य ऋषिः । गायत्री छन्दः । सूर्यो देवता । चक्षूरोगनिवृत्तये जपे विनियोगः । ॐ चक्षुः चक्षुः चक्षुः तेजः स्थिरो भव । मां पाहि पाहि । त्वरितं चक्षूरोगान् शमय शमय । मम जातरूपं तेजो दर्शय दर्शय । यथाऽहं अन्धो न स्यां तथा कल्पय कल्पय । कल्याणं कुरु कुरु । यानि मम पूर्वजन्मोपार्जितानि चक्षुःप्रतिरोधकदुष्कृतानि सर्वाणि निर्मूलय निर्मूलय । ॐ नमः चक्षुस्तेजोदात्रे दिव्याय भास्कराय । ॐ नमः करुणाकराया-मृताय । ॐ नमः सूर्याय । ॐ नमो भगवते सूर्यायाक्षितेजसे नमः । खेचराय नमः । महते नमः । रजसे नमः । तमसे नमः । असतो मा सद्गमय । तमसो मा ज्योतिर्गमय । मृत्योर्मा अमृतं गमय । उष्णो भगवाञ्छुचिरूपः । हंसो भगवान् शुचिरप्रतिरूपः । य इमां चक्षुष्मतीविद्यां ब्राह्मणो नित्यमधीते न तस्याक्षिरोगो भवति । न तस्य कुले अन्धो भवति । अष्टौ ब्राह्मणान् ग्राहयित्वा विद्यासिद्धिर्भवति ॥

ॐ विश्वरूपं घृणिनं जातवेदसं
हिरण्मयं पुरुषं ज्योतिरूपं तपन्तम् ।
विश्वस्य योनिं प्रतपन्तमुग्रं
पुरः प्रजानामुदयत्येष सूर्यः ॥

ॐ नमो भगवते आदित्याय अहोवाहिन्यहोवाहिनी स्वाहा । ॐ वयः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः । अपध्वान्तमूर्णूहि पूर्द्धि चक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान् । पुण्डरीकाक्षाय नमः । पुष्करेक्षणाय

नमः । अमलेक्षणाय नमः । कमलेक्षणाय नमः । विश्वरूपाय नमः । महाविष्णवे नमः ॥

इति चाक्षुषोपनिषत् संपूर्णा

[अस्या उपनिषदः "चक्षुरुपनिषत्, चक्षूरोगोपनिषत्, नेत्रोपनिषत्" इति नामान्तराणि वर्तन्ते ।]

---

# छागलेयोपनिषत्

ॐ ऋषयो वै सरस्वत्यां सत्रमासत । तेऽथ कवषमैलूषं दास्याः पुत्र इति दीक्षाया आच्छिदन् । ते होचुः । अप वा एतदृग्यजुषादप साम्न इति । स होवाच । भगवन्तो यदिदं सत्रमाध्वै यदृचोऽधीध्वै यद्यजूंषि यत्सामानि कस्यायं महिमेति । ते होचुर्ब्राह्मणा वाव स्मस्तेषामेवमिति ॥

स होवाच । यदिदमिच्छाचिदिच्छाचिदीक्षध्वै किं तद्येन ब्राह्मण इति । ते होचुर्यदिदमृग्यजुषैरेवोपवत्वन्तो जुहुवुर्यद्वैनमुपाघ्रासिषुर्यदुपानेषतैतद्ब्राह्मणा इति । स हाविदूर एव शवशयितमात्रेयमच्छावदमुपदर्शयन्नुवाच । यदिदमृग्यजुषैरुपवत्वं जुहोपाघ्रासीदथोपानेष्ट नैतदत्यगादिति । किं तदिति होचुः ॥

स होवाच । नैमिषेऽमी शुनकाः सत्रमासत । तेषामात्रेयोऽच्छावदः सर्वाण्येवावर्तयद्याज्या यदनुवाक्या यत्प्रातरनुवाको यत्प्रउगं यदाज्यं यन्मरुत्वतीयमित्यथ यन्महावीरसंभरणानि यदग्नेरभिवर्तनानि यद्राजाभिक्रयणानि यदभिषाविलाणि यदौपयामानि यदुपमन्त्रणान्यथ यत्त्रिवृत्पञ्चदशः सप्तदश एकविंश इति । क्वास्य तदगादिति । तेहामुहन् । अथैते सर्व एवोपसमेत्योचुरुप नो नयस्वेम एव त इति । स ह स्मयमान उवाच ।

संपश्यध्वा एव मा प्रमदत। न होत्तमानधम उपनेतेति। ते होचुर्मैव स्मोपनथा गतिस्तु त्वमिदिति॥

स होवाच। कुरुक्षेत्र एवोपसमेत्य ये बालिशास्तानुपाध्वै। ते व इदं प्रवक्ष्यन्तीति। ते ह तत एवोपसमेत्य कुरुक्षेत्रमुपजग्मुः। ते ह बालिशानेवोपासदन्। तानिम उपसीदत एव विदांचक्रुरिति कामुका इति। ते होचुर्यत्किमिव बालिशानुपासदत महाशाला वै महाश्रोत्रिया वर्षीयांसः सन्तः यन्महाशाला महाश्रोत्रिया वर्षीयांसः कुरुक्षेत्रमध्यासत इति। ते हान्योन्यस्याभिसमीक्षामासुः। ते ह्यपश्यन्न हास्मान्मिथुचिदेवासाववोचद्बालिशानेव चैतान्विचक्षतेति। ते होचुर्नमस्यानतीव वचो रेचयिष्यथ यदन्तर्नोऽसाविह प्राहैयात्। यथैव तु स्मोपसन्ना अथानसूयवो यथोपश्रद्धिन इति॥

ते होचुः। किं वा अस्मत्प्रतीच्छथेति। ते होचुः। नैमिषेऽमी शुनकाः सत्रमासत। तेषामात्रेयोऽच्छावदः सर्वाण्येवावर्तयत्। यद्याज्या यदनुवाक्या यत्प्रातरनुवाको यत्प्रउगं यदाज्यं यन्मरुत्वतीयमित्यथ यन्महावीरसंभरणानि यदग्नेरभिवर्तनानि यद्राजाभिक्रयणानि यदभिषावित्राणि यदौपयामानि यदुपमन्त्रणान्यथ यत्त्रिवृत्पंचदशः सप्तदश एकविंश इति। क्वास्य तदगाद्यदयं शवशयितमशयिष्टेति। ते होचुर्नेहासंवत्सरवासिनामनुब्रूयादिति खलु नः पूर्वेऽन्वशिषन्। यत्संवत्सरं वत्स्यथाथ वेदिष्यथेति। ते ह संवत्सरमूषुः॥

ततो ह बालिशा ऊचुरवात्त वा संवत्सरमिमे ब्राह्मणाः। हन्तैषामनुब्रवामेति। ते ह गृहीत्वैवैनान् पथोऽभिसमीयुः। ते ह संक्रीडत एव कूबरिणो रथकक्ष्यामविन्दन्। ते होचुः संपश्यध्वमिति। किं हीति। कूबरिणमेव सौम्यां इति। तथेति। कथमिवेति। यथैवोपसृत्वरो वार्धिस्तिर्यगुल्ललन्तीभिरिव वीचिभिः शफाभिरेवोपस्कन्दन्नुत्प्लवेदेवं हैवैषोभिसृत्वराणामेव धुर्याणां चंक्रमतामरीणामुत्प्लवतीति। यथैवासौ प्रतिसृत्वरेण

समः समेव क्रीडेदेवं हैष संक्रीडतीति । यथैवासावितश्चेतोऽमुतश्चामुतश्च संप्रद्रवत इवोपशुष्यत इवोपस्कन्दमभिमृद्नात्यभिपातयेदेवं हैष इतश्चेतश्चामुतश्च संप्रद्रवत इवोपशुष्यत इवोपस्कन्दमभिमृद्नात्यभिपातयति । यथैवासौ राजानं वा राजपुरुषं वा निलयनं प्रायेदेवं हैवैष यन्ता निलयनं प्रापयतीति । ते होचुरपीदं साधीय इति । साधीय इति होचुः । ते ह तस्यैव पन्थानमनुप्रातिष्ठन्नन्तं ह सायाह्न्येवोपसंपादयामासुः ॥

तं यदावसायाश्वांस्तक्षापोह्यापागादथ बालिशा व्यलिष्ट । अहीद्दशत् । कथमिवेति । ते होचुर्यथैतं काष्ठभारमानद्धमनुपश्यामस्तथैवावशो भूस्थः स्पन्दते । नेङ्गते न विवर्तते न च वीत इति । ते ह बालिशा ऊचुर्यदयमीदृगभूत् किमस्यापागादिति । तक्षैवेति । तथैवैतत् सौम्या इति । आत्मा वा अस्य प्रचोदयिता करणान्यश्वाः शिरा नद्धयोऽस्थीन्युपग्रहा असृगाञ्जनं कर्म प्रतोदो वाक्यं क्वाणनं त्वगुपानह इति । स यथा प्रचोदयित्रापोज्झितो नेङ्गेन्न रुरुवीतैवं हैष प्राज्ञेनात्मनापोज्झितो न ब्रूते न चैत्यपि न श्वसत्यपि पूयत्यपि श्वान उपधावन्त्यपि काकाः पतन्त्यपि गृध्रा आस्कन्दन्नपि शिवा जिघत्सन्निति । ते तत एव द्रागिव व्यज्ञासिषुः । ते ह पादयोरेवाभिमर्श्य बालिशानूचुः । न ह वाव नस्तद्येन निष्कुर्म इममेवेत्यञ्जलिं कृत्वोपास्थिषतेत्याह भगवान् छागलेयस्त इमे श्लोकाः—

यथैतत्कूबरस्तक्ष्णापोज्झितो नेङ्गते मनाक् ।
परित्यक्तोऽयमात्मा नस्तद्वद्देहो विरोचते ॥ १ ॥
यदस्य प्रधयश्चक्रा युगमक्षो वरत्रिका ।
प्रतोदश्चर्मकील . . . . . ॥ २ ॥

एतावानेवोपलब्धः

---

# तुरीयोपनिषत्

* * * * * * * *

कलातीतश्चेति । तत्र चत्वारः । अकारश्चायुतावयवान्वितः । उकारः शतावयवान्वितः । मकारः सहस्रावयवान्वितः । अर्धमात्रप्रणवोऽनन्तावयवान्वितः । सगुणो विराट्प्रणवः । संहारो निर्गुणप्रणवः । उभयात्मक उत्पत्तिप्रणवः । यथार्थकथनोमित्युच्चार्योभिमानोत्पत्तिप्रणवः । सर्वोपसंहारेण संहारप्रणवः । उभयात्मकत्वात् विराट्प्रणवः । उत्पत्तिप्रणवो दीर्घप्लुतविराट् । प्लुतप्लुत्युपसंहारः । विराट्प्रणवः षोडशमात्रान्वितः । षट्त्रिंशत्तत्वायुतः । षोडशमात्रात्मकं कथमित्युच्यते । अकारः प्रथमः । द्वितीय उकारः । मकारस्तृतीयः । अर्धमात्रा चतुर्थः । नादः पञ्चमः । बिन्दुः षष्ठः । कला सप्तमः । शक्तिरष्टमी । शान्तिर्नवमी । समाना दशमी । आत्मनैकादश । मनोन्मना द्वादश । वैखरी त्रयोदश मध्यमा चतुर्दश । पश्यन्ती पञ्चदश । परा षोडश । इति षोडशमात्रात्मकः प्रणवः । षोडशमात्रा जाग्रत्स्वप्नसुषुप्तितुरीयावस्थाभेदैरेकैकमात्राचातुर्विध्यमेत्य । षोडशमात्राश्चतुष्षष्टिभेदमेत्य । पुनश्चतुष्षष्टिमात्राः प्रकृतिपुरुषद्वैविध्यमापाद्याष्टाविंशत्युत्तरभेदमात्रास्वरूपमासाद्य सगुणनिर्गुणत्वमेत्य एकोपि ब्रह्म प्रणवः ॥

सर्वाधारः परं ज्योतिरेष सर्वेश्वरो विभुः ।
सर्वदेवमयः सर्वप्रपञ्चाधारगर्भितः ।
सर्वाक्षरमयः कालः सदसद्भक्तिवर्जितः ॥ इति ।

य एवं वेदेत्युपनिषत् ॥

इति तुरीयोपनिषत् समाप्ता

---

# द्वयोपनिषत्

ॐ अथातः श्रीमदद्वयोत्पत्तिः । वाक्यो द्वितीयः । षट्पदान्यष्टादश । पञ्चविंशत्यक्षराणि । पञ्चदशाक्षरं पूर्वम् । दशाक्षरं परम् । पूर्वो नारायणः प्रोक्तोऽनादिसिद्धो मन्त्ररत्नः सदाचार्यमूलः ।

आचार्यो वेदसंपन्नो विष्णुभक्तो विमत्सरः ।
मन्त्रज्ञो मन्त्रभक्तश्च सदामन्त्राश्रयः शुचिः ॥
गुरुभक्तिसमायुक्तः पुराणज्ञो विशेषवित् ।
एवं लक्षणसंपन्नो गुरुरित्यभिधीयते ॥
आचिनोति हि शास्त्रार्थानाचारस्थापनादपि ।
स्वयमाचरते यस्तु तस्मादाचार्य उच्यते ॥
गुशब्दस्त्वन्धकारः स्यात् रुशब्दस्तन्निरोधकः ।
अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते ॥
गुरुरेव परं ब्रह्म गुरुरेव परा गतिः ।
गुरुरेव परं विद्या गुरुरेव परं धनम् ॥
गुरुरेव परः कामः गुरुरेव परायणः ।
यस्मात्तदुपदेष्टासौ तस्माद्गुरुतरो गुरुः ॥

यस्सकृदुच्चारणः संसारविमोचनो भवति । सर्वपुरुषार्थसिद्धिर्भवति न च पुनरावर्तते न च पुनरावर्तत इति । य एवं वेदेत्युपनिषत् ॥

इति द्वयोपनिषत् समाप्ता

———

# निरुक्तोपनिषत्

* * * * * *

स यद्यनुरुध्यते तद्भवति। यदि धर्मोऽनुरुध्यते तदेवोद्भवति। यदि ज्ञानमनुरुध्यते तदमृतो भवति। यदि काममनुरुध्यते संचरतां इमां योनिं संदध्यात्तदिदमत्र मनः श्लेष्मरेतसः संभवति। श्लेष्मणो रसः। रसाच्छोणितम्। शोणितान्मांसम्। मांसान्मेदः। मेद्सः स्नावा। स्नावोऽस्थीनि। अस्थिभ्यो मज्जा। मज्जातो रेतः। तदिदं योनौ रेतः सिक्तं पुरुषः संभवति। शुक्रातिरेके पुमान् भवति। शोणितातिरेके स्त्री भवति। द्वाभ्यां समेन नपुंसको भवति। शुक्रभिन्नेन यमो भवति। शुक्रशोणित-संयोगान्मातृपितृसंयोगाच्च कथमिदं शरीरं परं संयम्यते। सौम्यो भवत्येकरात्रोषितं कललं भवति। पञ्चरात्राद्बुद्बुदः। सप्तरात्रात् पेशी। द्विसप्तरात्रादर्बुदः। पंचविंशतिरात्रस्थितो योनौ घनो भवति। मास-मात्रात् कठिनो भवति। द्विमासाभ्यन्तरे शिरः संपद्यते। मासत्रयेण ग्रीवाव्यादेशः। मासचतुष्केण त्वग्व्यादेशः। पञ्चमे मासे नखरोमव्यादेशः। षष्ठे मुखनासिकाक्षिश्रोत्रं च संभवति। सप्तमे चलनसमर्थो भवति। अष्टमे बुद्ध्याध्यवस्यते। नवमे सर्वाङ्गसंपूर्णो भवति ॥

मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः।
नानायोनिसहस्राणि मया यान्युषितानि वै ॥
आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः।
मातरो विविधा दृष्टाः पितरः सुहृदस्तथा ॥
अवाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः।
सांख्यं योगं समभ्यस्ये पुरुषं पञ्चविंशकम् ॥ इति ॥

ततश्च दशमे मासे प्रजायते । जातश्च वायुना स्पृष्टो न स्मरति जन्म मरणम् । अन्ते च शुभाशुभं कर्मैतच्छरीरस्य प्रामाण्यम् ॥

इति निरुक्तोपनिषदि विंशतितमोध्याय:

अष्टोत्तरं सन्धिशतमष्टाकपालं शिर: संपद्यते । षोडश वपापलानि । नव स्नायुशतानि । सप्तशतं पुरुषस्य मर्माणि । अर्धचतस्रो रोमाणि कोटय: । हृदयं ह्यष्टकपलानि । द्वादशकपलानि जिह्वा । वृषणो ह्यष्टसुपर्णौ । तत उपस्थ-गुदयोन्येतन्मूत्रपुरीषं कस्मादाहारापानसिक्तत्वादनुपचति । कर्मणा अन्योन्यं जायत इति । तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च । महत्यज्ञानतमसि मग्नो जरामरणक्षुत्पिपासाशोकक्रोधद्रोहलोभमोहमदभयमत्सरहर्षविषादेर्ष्या-सूयात्मकैर्द्वन्द्वैरभिभूयमान: सोऽस्मादार्जवं जवीभावनान्तं निर्मुच्यते । सोऽस्मा-दान्तं महाभूमिकावत् शरीरान्निमेषमात्रै: प्रक्रम्य प्रकृतिभिरभिपरीत्य तैजसं शरीरं कृत्वा कर्मणानुरूपं फलमनुभूय तस्य संक्षये पुनरिमं लोकं प्रतिपद्यते ॥

इति निरुक्तोपनिषदि एकविंशोऽध्याय:

इति निरुक्तोपनिषत् समाप्ता

---

# पिण्डोपनिषत्

ॐ देवता ऋषय: सर्वे ब्रह्माणमिदमब्रुवन् ।
मृतस्य दीयते पिण्डं कथं गृह्णन्त्यचेतस: ॥
भिन्ने पञ्चात्मके देहे गते पञ्चसु पञ्चधा ।
हंसस्त्यक्त्वा गतो देहं कस्मिन् स्थाने व्यवस्थित: ॥

त्र्यहं वसति तोयेषु त्र्यहं वसति चाग्निषु ।
त्र्यहमाकाशगो भूत्वा दिनमेकन्तु वायुगः ॥
प्रथमेन तु पिण्डेन कलानां तस्य सम्भवः ।
द्वितीयेन तु पिण्डेन मांसत्वक्च्छोणितोद्भवः ॥
तृतीयेन तु पिण्डेन मतिस्तस्याभिजायते ।
चतुर्थेन तु पिण्डेन अस्थि मज्जा प्रजायते ॥
पञ्चमेन तु पिण्डेन हस्ताङ्गुल्यः शिरो मुखम् ।
षष्ठेन कृतपिण्डेन हृत्कण्ठं तालु जायते ॥
सप्तमेन तु पिण्डेन दीर्घमायुः प्रजायते ।
अष्टमेन तु पिण्डेन वाचं पुष्यति वीर्यवान् ॥
नवमेन तु पिण्डेन सर्वेन्द्रियसमाहृतिः ।
दशमेन तु पिण्डेन भावनं प्लावनं तथा ।
पिण्डे पिण्डे शरीरस्य पिण्डदानेन सम्भवः ॥

इति पिण्डोपनिषत् समाप्ता

---

# प्रणवोपनिषत्

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ॥

पुरस्ताद्ब्रह्मणस्तस्य विष्णोरद्भुतकर्मणः ।
रहस्यं ब्रह्मविद्याया धृताग्निं संप्रचक्षते ॥

ओमित्येकाक्षरं ब्रह्म यदुक्तं ब्रह्मवादिभिः ।
शरीरं तस्य वक्ष्यामि स्थानकालत्रयं तथा ॥
तत्र देवास्त्रयः प्रोक्ता लोका वेदास्त्रयोऽग्नयः ।
तिस्रो मात्रार्धमात्रा च प्रत्यक्षस्य शिवस्य तत् ॥
ऋग्वेदो गार्हपत्यं च पृथिवी ब्रह्म एव च ।
अकारस्य शरीरं तु व्याख्यातं ब्रह्मवादिभिः ॥
यजुर्वेदोऽन्तरिक्षं च दक्षिणाग्निस्तथैव च ।
विष्णुश्च भगवान् देव उकारः परिकीर्तितः ॥
सामवेदस्तथा द्यौश्चाहवनीयस्तथैव च ।
ईश्वरः परमो देवो मकारः परिकीर्तितः ॥
सूर्यमण्डलमाभाति ह्यकारश्चन्द्रमध्यगः ।
उकारश्चन्द्रसंकाशस्तस्य मध्ये व्यवस्थितः ॥
मकारश्चाग्निसंकाशो विधूमो विद्युतोपमः ।
तिस्रो मात्रास्तथा ज्ञेयाः सोमसूर्याग्नितेजसः ॥
शिखा च दीपसंकाशा यस्मिन्नु परिवर्तते ।
अर्धमात्रा तथा ज्ञेया प्रणवस्योपरि स्थिता ॥
पद्मसूत्रनिभा सूक्ष्मा शिखाभा दृश्यते परा ।
नासादिसूर्यसंकाशा सूर्यं हित्वा तथापरम् ॥
द्विसप्ततिसहस्राणि नाडिभिस्त्वा तु मूर्धनि ।
वरदं सर्वभूतानां सर्वं व्याप्यैव तिष्ठति ॥
कांस्यघण्टानिनादः स्याद्यदा लिप्यति शान्तये ।
ओङ्कारस्तु तथा योज्यः श्रुतये सर्वमिच्छति ॥

यस्मिन् स लीयते शब्दस्तत्परं ब्रह्म गीयते ।
सोऽमृतत्वाय कल्पते सोऽमृतत्वाय कल्पते ॥ इति ॥

इति प्रणवोपनिषत् समाप्ता

---

# प्रणवोपनिषत्

ब्रह्म ह वै ब्रह्माणं पुष्करे पुष्करे ससृजे । स खलु ब्रह्मा सृष्टश्चिन्तामापेदे । केनाहमेकेनाक्षरेण सर्वांश्च कामान् सर्वांश्च लोकान् सर्वांश्च देवान् सर्वांश्च वेदान् सर्वांश्च यज्ञान् सर्वांश्च शब्दान् सर्वांश्च व्युष्टीः सर्वाणि च भूतानि स्थावरजङ्गमान्यनुभवेयमिति । स ब्रह्मचर्यमचरत् । स ओमित्येतदक्षरमपश्यत् । द्विवर्णं चतुर्मात्रं सर्वव्यापि सर्वविभ्वयातयामब्रह्म ब्राह्मीं व्याहृतिं ब्रह्मदैवतं तथा सर्वांश्च कामान् सर्वांश्च लोकान् सर्वांश्च देवान् सर्वांश्च वेदान् सर्वांश्च यज्ञान् सर्वांश्च शब्दान् सर्वांश्च व्युष्टीः सर्वाणि च भूतानि स्थावरजङ्गमान्यन्वभवत् । तस्य प्रथमेन वर्णेनापस्नेहश्चान्वभवत् । तस्य द्वितीयेन वर्णेन तेजो ज्योतींष्यन्वभवत् । तस्य प्रथमया स्वरमात्रया पृथिवीमग्निमोषधिवनस्पतीनृग्वेदं भूरिति व्याहृतिर्गायत्रं छन्दस्त्रिवृतं स्तोमं प्राचीं दिशं वसन्तमृतुं वाचमध्यात्मं जिह्वां रसमितीन्द्रियाण्यन्वभवत् । तस्य द्वितीयया स्वरमात्रयान्तरिक्षं वायुं यजुर्वेदं भुव इति व्याहृतिं त्रैष्टुभं छन्दः पञ्चदशं स्तोमं प्रतीचीं दिशं ग्रीष्ममृतुं प्राणमध्यात्मं नासिके गन्धघ्राणमितीन्द्रियाण्यन्वभवत् । तस्य तृतीयया स्वरमात्रया दिवमादित्यं सामवेदं स्वरितिव्याहृतिं जागतं छन्दः सप्तदशं

स्तोममुदीचीं दिशं वर्षर्तुं ज्योतिरध्यात्मं चक्षुषी दर्शनमितीन्द्रियाण्यन्वभवत्। तस्य वकारमात्रया यश्चन्द्रमसमथर्ववेदं नक्षत्राण्योमिति स्वमात्मानं जनदित्यंगिरसामानुष्टुभं छन्दः एकविंशं स्तोमं दक्षिणां दिशं शरदमृतुं मनोऽध्यात्मं ज्ञानं ज्ञेयमितीन्द्रियाण्यन्वभवत्। तस्य मकारश्रुत्येतिहासपुराणं वाकोवाक्यगाथानाराशंसीरुपनिषदोनुशासमानानामिति वृधत्करद्रुहन्महत्तच्छमोमिति व्याहृतीः स्वरशम्यनानातन्त्रीस्वरनृत्यगीतवादित्राण्यन्वभवच्चैत्ररथं दैवतं वैद्युतं ज्योतिर्बार्हतं छन्दस्तृणवत्त्रयस्त्रिंशस्तोमौ ध्रुवामूर्ध्वां दिशं हेमन्तशिशिरावृतू श्रोत्रमध्यात्मं शब्दश्रवणमितीन्द्रियाण्यन्वभवत्। सैषैकाक्षर ऋग्ब्रह्मणस्तपसोऽग्रे प्रादुर्बभूव। ब्रह्म वेदस्याथर्वणं शुक्रमत एव मन्त्राः प्रादुर्बभूवुः। स तु खलु मन्त्राणां तपसा शुश्रूषानध्यायाध्ययनेन यदूनं च वरिष्ठं च यातयामं च करोति। तथाप्यथर्वणं तेजसा प्रत्याप्याययेन्मन्त्राश्च मामभिमुखीभवेयुर्गर्भा इव मातरमभिजिघांसुः परस्तादोङ्कारप्रयुक्तयैतयैव तदृचा प्रत्याप्याययंदेष यज्ञस्य पुरस्ताद्युज्यत एषा पश्चात् सर्वत एतया यज्ञस्तपते तदप्येतदृचोक्तं—"या पुरस्ताद्युंजत ऋचोऽक्षरे परमे व्योमन्निति"। तदेतदक्षरं ब्राह्मणो यं काममिच्छेत् त्रिरात्रोपोषितः प्राङ्मुखो वाग्यतो बर्हिष्युपविश्य सहस्रं ऋच आवर्तयेत् सिध्यन्त्यस्यार्थाः सर्वकर्माणि चेति ब्राह्मणम्॥

वसोर्द्धाराणामिन्द्रनगरं तदसुराः पर्यवारयन्त। ते देवा भीता आसन्। क इमानसुरान् हनिष्यतीति। तमोङ्कारं ब्रह्मणः पुत्रं ज्येष्ठं ददृशुस्ते तमब्रुवन्। भवता मुख्येनेमानसुरान् जयेमेति। स होवाच किं मे प्रतीवाहो भविष्यतीति। वरं वृणीष्वेति। वृण इति। स वरमवृणीत। "न मामनीरयित्वा ब्राह्मणा ब्रह्म वदेयुर्यदि वदेयुरब्रह्म तत्स्यात्" इति। तथेति ते देवा देवयजनस्योत्तरार्धेऽसुरैः संयत्ता आसंस्तानोङ्कारेणाग्नीध्रीया

देवा असुरान् पराभावयन्त । तद्यत्पराभावयन्त तस्मादोङ्कारः पूर्वमुच्चार्यते । यो ह वा एतमोङ्कारं न वेदावश्यःस्यादित्यथ य एवं वेद ब्रह्मवशः स्यादिति तस्मादोङ्कार ऋग्भवति यजुषि यजुः साम्नि साम सूत्रे सूत्रं ब्राह्मणे ब्राह्मणं श्लोके श्लोकः प्रणवे प्रणव इति ब्राह्मणम् ॥

ओंकारं पृच्छामः को धातुः किं प्रातिपदिकं किं नामाख्यातं किं लिङ्गं किं च वचनं का विभक्तिः कः प्रत्ययः कः स्वरः उपसर्गो निपातः किं वै व्याकरणं को विकारः को विकारी कतिमात्रः कतिवर्णः कत्यक्षरः कतिपदः कः संयोगः किं स्थानानुप्रदानकरणं शिक्षकाः किमुच्चारयन्ति किं छन्दः को वर्ण इति पूर्वे प्रश्नाः । अथोत्तरे मन्त्राः । कल्पो ब्राह्मणं ऋग् यजुः साम । कस्माद्ब्रह्मवादिन ओङ्कारमादितः कुर्वन्ति । किं दैवतं किं ज्योतिषं किं निरुक्तं किं स्थानं का प्रकृतिः किमध्यात्ममिति षट्त्रिंशत्प्रश्नाः पूर्वोत्तराणां त्रयो वर्गा द्वादश एकाशतैरोङ्कारं व्याख्यास्यामः ॥

इन्द्रः प्रजापतिमपृच्छत् भगवन्नभ्यस्तूय पृच्छामीति । पृच्छ वत्सेत्यब्रवीत् । किमयमोङ्कारः कस्य पुत्रः किं चैतच्छन्दः किं चैतद्वर्णः किं चैतद्ब्रह्मा ब्रह्म संपद्यते । तस्माद्वैतमोङ्कारं पूर्वमालोभस्वरितोदात्त एकाक्षर ओङ्कार ऋग्वेदे त्रैस्वर्योदात्त एकाक्षर ओङ्कारो यजुर्वेदे दीर्घप्लुतोदात्त एकाक्षर ओङ्कारः सामवेदे ह्रस्वोदात्त एकाक्षरः उकारोऽथर्ववेदेऽनुदात्तोदात्तद्विपद अ उ इत्यर्धचतस्रो मात्रा मकारे व्यञ्जनमित्याहुः । या सा प्रथमा मात्रा ब्रह्मदैवत्या रक्ता वर्णेन यस्तां ध्यायते नित्यं स गच्छेद्ब्राह्मं पदम् । या सा द्वितीया मात्रा विष्णुदैवत्या कृष्णा वर्णेन यस्तां ध्यायते नित्यं स गच्छेद्वैष्णवं पदम् । या सा तृतीया मात्रा ईशानदैवत्या कपिला वर्णेन यस्तां ध्यायते नित्यं स गच्छेदैशानं पदम् । या सार्धचतुर्थी मात्रा

सर्वदैवत्या व्यक्तीभूता खं विचरति शुद्धस्फटिकसन्निभा वर्णेन यस्तां ध्यायते नित्यं स गच्छेत् पदमनामकम् । ओङ्कारस्योत्पत्तिं विप्रो यो न जानाति तत्पुनरुपनयनं तस्माद्ब्राह्मणवचनमादर्तव्यम् । यथा लातव्यो गोत्रो ब्राह्मणः । पुत्रो गायत्रं छन्दः शुक्लो वर्णः । पुंसो वत्सो रुद्रो देवता । ओङ्कारो वेदानां उत्तरोपनिषदं व्याख्यास्यामः । को धातुरित्याप्तेर्धातुरवतिमप्येके । रूपसामान्याद्यर्थसामान्यान्यन्यदीयस्तस्मादापेरोङ्कारः सर्वमाप्नोतीत्यर्थः । कृदन्तमर्थवत्प्रातिपदिकमदर्शनं प्रत्ययस्य नाम संपद्यते । निपातेषु चैनं वैय्याकरणा उक्षत्तं समामनन्ति । तदव्ययीभूतमन्वर्थवाची शव्दो न व्येति कदाचनेति ।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

को विकारी च्यवते प्रकारणमाप्नोतिराकारपकारौ विकार्यौ आदितः ओकारो विक्रियते । द्वितीयो मकार एवं द्विवर्ण एकाक्षर ओमित्योङ्कारो निर्वृत्तः । कतिमात्र इत्यादेस्तिस्रो मात्राः अभ्याधाने हि प्लवते । मकारश्चतुर्थी किं स्थानमित्युभावोष्ठौ स्थानमाधानकरणी च द्विःस्थानं सन्ध्यक्षरमवर्णलेशः कण्ठ्यो यथोक्तशेषः पूर्वो विवृत्तकरणस्थितश्च द्वितीयः स्पृष्टकरणस्थितश्च । नायं योगे विद्युत आख्यातोपसर्गानुदात्तः स्वरितलिङ्गविभक्तिवचनानि च संच्छिन्नाध्यायिन आचार्याः पूर्वे बभूवुः । श्रवणादेवं प्रतिपद्यन्ते । न कारणं प्रयच्छन्त्यथापरपक्षीयाणां कविः पञ्चालचण्डः परिपृच्छको बभूवांबुः पृथगुद्गीथदोषान् भवन्तो ब्रुवन्त्विति । तद्वाच्युपलक्षयेत् वर्णाक्षरपदाङ्कशो विभक्त्यामृषिनिषेवितामिति वाचं स्तुवन्ति । तस्मात् कारणं ब्रूमो वर्णानामयमिदं भविष्यतीति षडङ्गविदस्तत्तथाधीमहि । किं छन्द इति । गायत्रं हि छन्दो गायत्री वै

देवानामेकाक्षरा श्वेतवर्णा च व्याख्याता । द्वौ द्वादशकौ वर्गावेतद्वै व्याकरणं धात्वर्थवचनं शैक्षं छन्दो वचनं चाथोत्तरौ द्वौ द्वादशकौ वर्गौ वेदरहसिकी (?) व्याख्याता मन्त्रकल्पो ब्राह्मणमृग्यजुःसामाथर्वाण्येषा व्याहृतिश्चतुर्णो वेदानामानुपूर्व्येण । ॐ भूर्भुवस्सुवरिति व्याहृतयः ॥

असमीक्ष्य प्रवल्हितानि श्रूयन्ते द्वापरादावृषीणामेकदेशो दोषयतीह चिन्तामापेदे । त्रिभिः सोमः पातव्यः समाप्तमिव भवति । तस्माद्दग्य-जुस्सामान्यपक्रान्ततेजांस्यासंस्तत्र महर्षयः परिदेवयाञ्चक्रिरे । महच्छोकभयं प्राप्ताः स्मो न चैतत्सर्वैः समभिहितं ते वयं भगवन्तमेवोपधावाम । सर्वेषामेव शर्म भवानिति । ते तथेत्युक्त्वा तूष्णीमतिष्ठन्नानुपसन्नेभ्य इत्युपोपसीदामेति नीचैर्बभूवुः । स एभ्य उपनीय प्रोवाच । मामिकामेव व्याहृतिमादितः कृणुध्वमित्येवं मामका अधीयन्ते । नर्त्ते भृग्वङ्गिरोविद्भ्यः सोमः पातव्य ऋत्विजः पराभवन्ति । यजमानो रजसापध्वस्यति श्रुतिश्चापध्वस्तापतिष्ठ-तीत्येवमेवोत्तरोत्तराद्योगाल्लोकं तोकं प्रशाध्वमित्येवं प्रतापो न पराभविष्य-तीति । तथाह भगवन्निति प्रतिपेदिरे आप्याययंस्ते तथा वीतशोकभया बभूवुः । तस्माद्ब्रह्मवादिन ओङ्कारमादितः कुर्वन्ति ॥

किं दैवतमित्यृचामग्निर्दैवतं तदेव ज्योतिर्गायत्रं छन्दः पृथिवी स्थानं "अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ।" इत्येवमादिं कृत्वा ऋग्वेदमधीयते । यजुषां वायुर्दैवतं तदेव ज्योतिस्त्रैष्टुभं छन्दोऽन्तरिक्षं स्थानं "इषे त्वोर्जे त्वा वायवः स्थोपायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे" इत्येवमादिं कृत्वा यजुर्वेदमधीयते । साम्नामादित्यो दैवतं तदेव ज्योतिर्जागतं छन्दो द्यौः स्थानं "अग्न आयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि ।" इत्येवमादिं कृत्वा सामवेदमधीयते । अथर्वणां चन्द्रमा दैवतं तदेव ज्योतिः सर्वाणि छन्दांस्यापः स्थानं "शन्नो

देवीरभिष्टये" इत्येवमादिं कृत्वा अथर्ववेदमधीयते । अद्भ्यः स्थावरजङ्गमो भूतग्रामः संभवति । तस्मात् सर्वमापोमयं भूतं सर्वं भृग्वङ्गिरोमयं अन्तरैते त्रयो वेदा भृगूनङ्गिरसः श्रिता इत्यबिति प्रकृतिरपामोङ्कारेण चैतस्माद्व्यासः ॥

इति प्रणवोपनिषत् समाप्ता

---

# बाष्कलमन्त्रोपनिषत्

मेधातिथिं काण्वमिन्द्रो जहार द्या मेषभूयोपगतो विदानः ।
तमन्य इत्तमनं परिप्राट् पद एनं नियुयुजे परस्मिन् ॥ १ ॥
को ह स्मैष भवसि व्यवायो नावायो म इह शश्वदस्ति ।
सुशेवमिच्चंक्रमसि प्रपश्यन्नित्था न कश्चोरणमाचचक्षे ॥ २ ॥
नेमामस्पृक्षदिदुदस्यमानः को अद्धामूमभिचङ्क्रमीति ।
तदिच्छाधि यो असि सर्ववित्तमो न त्वाश्नवद्ब्रह्म रिषा मयस्वि ॥
इन्द्रो नृचक्षा वृषभस्तुराषाट् प्रसासहिस्तपसा मा विचक्षे ।
स इद्देवो ऋतमन्वयन्तं प्रभीमकर्मा तवसोऽपविद्धात् ॥ ४ ॥
कुहेव मावशमितो नयातै कुहेव ते चित्रतमप्रतिष्ठा ।
कुहाचिदेष स्वपिता पिता नो यो न वेद न हृतं हरन्तम् ॥५॥
प्रत्यङ्ङवाङ्प्राङ्ङितरौ च नेह नाहमेनाननुपतस्थिरद्धा ।
न मामिमे नूनमित्था पथो विदुर्ये मा न यन्ति मिथु चाकशानाः ॥
परः स्मियानो अविवरस्य शूकं किं सीमिच्छरणं मन्यमानः ।
न ह त्वाहमप्रणीय स्वविष्ठामित्था जहामि शपमानमिन्नु ॥ ७ ॥
अहमस्मि जरितॄणामु दावा अहमाशिरमहमिदं दधग्वान् ।
अहं विश्वा भुवना विचक्षन्नहं देवानामासन्नवोऽदः ॥ ८ ॥

मम प्रतिष्ठा भुव आण्डकोशा वि चैमि सं च हि नु यो विरश्पी ।
अहं न्वहिं पर्वते शिश्रियाणमुग्रो न्वहं तवसावस्युरद्धा ॥ ९ ॥
प्रवङ्क्षणा अभिदं पर्वतानां यत्सीमिन्द्रो अकरोदनीकैः ।
को अद्धा वेद क इह प्रवोचत् को अश्वबदभिमातिं विजघ्नुषः ॥
को मे अवो दाशुषो विष्वगूतीरित्था ददर्श्रे भुवनाधि विश्वा ।
रूपं रूपं जनुषा बोभवीमि मायाभिरेको अभिचाकशानः ॥११॥
विश्वं विचक्षे यमयन्नभीको नेशे मे कश्च महिमानमन्यः ।
अहं द्यावापृथिवी आततानो बिभर्मि धर्ममवसे जनानाम् ॥१२॥
अहमु ह प्रवर्तिं यज्ञियामियां
अहं वेद भुवनस्य नाभिम् ।
आपिः पिता सूरहमस्य विष्वङ्
अहं दिव्या आन्तरिक्ष्यास्तुका वहम् ॥ १३ ॥
अहं वेदानामुत यज्ञानामहं छन्दसामविदं रयीणाम् ।
अहं पचामि सरसः परस्य यदिदेतीव सरिरस्य मध्ये ॥ १४ ॥
अहमिन्नु परमो जातवेदा यमध्वर्युरभिलोकं पृणैधीत् ।
यमन्वाह नभसो न पक्षी काष्ठा भिन्दन् गोभिरितोऽमुतश्च ॥१५॥
अहमु यन्नपतता रथेन द्विषडारेण प्रधिनैकचक्रः ।
अहमिन्नु दिद्युतानो दिवे दिवे तन्वं पुपुष्यानमृतं वहामि ॥१६॥
अहं दिशः प्रदिश आदिशश्च विष्वक् पुनानः पर्येमि लोकम् ।
अहं विश्वा ओषधीर्गर्भ आधां याभिरिदं धिनुयुर्दाशुषः प्रजाः ॥
अहं चरामि भुवनस्य मध्ये पुनरुच्चावचं व्यश्नुवानः ।
यो मा वेद निहितं गुहा चित् स इदित्था बोभवीदाशयध्यै ॥१८॥

अहं पञ्चधा दशधा चैकधा च सहस्रधा नैकधा चासमत्र ।
मया ततमितीदमश्नुते तदन्यथासद्यदि मे असद्विदुः ॥ १९ ॥
न मामश्नोति जरिता न कश्चन न मामश्नोति परि गोभिराभिः ।
न मेऽनाश्वानुत दाश्वानजग्रभीत् सर्व इन्मामुपयन्ति विश्वतः ॥
क्व शरारुः क्व स्मरः क्व नूरणः सर्वमिदं त्वत्त्वदितो वहामि ।
यन्मदिमे बिभ्यति तन्म एकं ते मे अक्षन्नहमुताननुक्षम् ॥२१॥
यत्तप्यथा बहुधा मे पुरा चित्तन्नु भुवेऽहमुरणो बोभुवे ।
ऋतस्य पन्थामसि हि प्रपन्नोऽयसे स मे सत्यमिदेकमेहि ॥२२॥
अहं ज्योतिरहमृतं विनद्धिरहं जातं जनि जनिष्यमाणम् ।
अहं त्वमहमहं त्वमिन्नु त्वमहं चक्ष्व विचिकित्सीर्मे ऋज्वा ॥२३॥
विश्वशास्ता विधरणो विश्वरूपो रुद्रः प्रणीती तमनः प्रजापतिः ।
हंसो विशोको अजरः पुराण ऋतीयमानो अहमस्मि नाम ॥२४॥
अहमस्मि जरिता सर्वतोमुखः पर्यारणः परमेष्ठी नृचक्षाः ।
अहं विष्वङ्ङहमस्मि प्रसत्वानहमेकोऽस्मि यदिदं नु किं च ॥

इति बाष्कलमन्त्रोपनिषत् समाप्ता

---

# बाष्कलमन्त्रोपनिषत्

(सवृत्तिका)

**मेधातिथिं काण्वमिन्द्रो जहार** इत्याद्या बाष्कलानां मन्त्रोपनिषत् । तस्याश्चेयमल्पाक्षरा वृत्तिरारभ्यते । मेधातिथिनामानमृषिं कण्वस्य पुत्रं

सामवेदब्राह्मणप्रसिद्धमिन्द्रः जहार । **द्या मेषभूयोपगतो विदानः** । मेषभूयं मेषभावम् । भुवः क्यप् । उपगतः प्राप्तः । सामवेदब्राह्मणप्रसिद्धाख्यायिकः । द्याः स्वर्गलोकान् प्रतीति विवक्षितं जहार हृतवान् । विदानः ज्ञानी ॥ **तमन्य इत्तमनं परिप्राट्** । तं इन्द्रं अन्यः मेधातिथिः इदिति निरर्थको निपातः । तमनं हरणेन ग्लानिपदम् । परिपृच्छतीति परिप्राट् । मेधातिथिः **पद एनं नियुयुजे परस्मिन्** ॥ १ ॥ परस्मिन् पदे ज्ञेये तत्स्वरूपे पदार्थे नियुयुजे नियुक्तवान् । विलक्षणमेषीभूतेन्द्रकर्तृकविलक्षणक्रियादर्शनात् आपाततो विलक्षणः परो देवः कश्चिन्न तु मेष इति तात्विकतत्स्वरूपज्ञानाय वक्ष्यमाणप्रश्नेन परं पदं ज्ञेयं स्वस्वरूपं कथयेति प्रश्नेन नियोजितवानित्यर्थः । प्रश्नमेवाह श्रुतिः । **को ह स्मैष भवसि व्यवायः** । ह इति पूर्ववृत्तावद्योतको निपातः । स्मेति निरर्थकम् । एष प्रत्यक्षः । व्यवायो ज्ञेयः । व्यवपूर्वस्यैतेर्घञि रूपम् । कच्चित् ज्ञातुं योग्यस्त्वमसि । **नावायो म इह शश्वदस्ति** । मे मम शश्वदिति ध्रुवार्थं आवायो ज्ञानं नास्ति कस्त्वमिति । दृश्यमाने मेषस्वरूपे कथमेवं संशय इति चेत् । तत्राह । **सुशेवमिच्चंक्रमसि** । शोभनमेव चंक्रमणं करोषि । **प्रपश्यन् इत्था न कश्चोरणमाचचक्षे** ॥ २ ॥ इत्था न । इत्थमिव । नकार इवार्थः । को वा इत्थं क्रममाणं प्रपश्यन् उरणं मेषं आचचक्षे । उक्तवान् । दृष्टवान् वा । इत्थं क्रममाण उरणो न केनचिद्दृष्ट इति भावः क्रमेण वैलक्षण्यमेवाह । **नेमामस्पृक्षदिदुदस्यमानः** । इमां पृथिवीं उदस्यमानः । इत् एवार्थे । कूर्दन्नेव न अस्पृक्षत् न स्पृशतीति लकारव्यत्ययः । नैतावता वैलक्षण्यमत आह । **को अद्धामूमभिचङ्क्रमीति** । अद्धा साक्षात् । अनेनैव शरीरेण । अमूं द्याम् । कः अभिचङ्क्रमीति अभिक्रामति । प्रश्नमुपसंहरति । **तदिच्छाधि यो असि सर्ववित्तमः** । तत् तस्मात् शाधि । इदित्यनर्थकम् । शिक्षय यस्त्वं सर्ववित्तमः सर्वज्ञतमः

असि तत्स्वरूपं कथयेति भावः। अकथनेऽनिष्टं संभाव्यते। तन्मा भवत्वित्याह। **न त्वाश्नवद्ब्रह्म रिषा मयस्वि** ॥ ३ ॥ मयस्वि तेजस्वि ब्रह्म ब्राह्मण्यं रिषा क्रोधेन त्वा त्वां न अश्नवत् न अश्नोति न व्याप्नोत्। अस्मदीयक्रोधव्यापारविषयो मा भूदित्यभिप्रायः। कुतस्तवैवं बलमत आह। **इन्द्रो नृचक्षा वृषभस्तुराषाट्**। इन्द्रः परमेश्वरः नृचक्षा सर्वजगत्कर्मसाक्षी वृषभः कामप्रदस्तुराषाट् तुरः परबलं सहते अभिभवतीति सहेः छन्दसीति ण्विः। **प्रसासहिस्तपसा मा विचक्षे**। प्रसासहिः प्रसहनशीलः। तपसा उपलक्षणे तृतीया। मा मां विचक्षे पश्यति। अतः सत्यमकथयत ईश्वराद्भयमप्याह। **स इद्देवो ऋतमन्वयन्तम्**। इत् एवार्थे। स इत् स एव देवः ऋतं सत्यं अनु लक्षीकृत्य अयन्तं अगच्छन्तं सत्येन पथा अगच्छन्तं सत्यमब्रुवाणमिति यावत्। **प्रभीमकर्मा तवसोऽपविद्धात्** ॥ ४ ॥ अपविद्धात् क्षिप्तात् तवसो वज्रात् प्रभीं प्रकृष्टं भयं मा अकः कार्षीत्। प्रष्टव्यमाह। **कुहेव मावशमितो नयातै**। कुहेव कुत्रेव मा मां अवशं इतः अस्मात् स्थानात् नयातै नेष्यसि। किं च। **कुहेव ते चित्रतमप्रतिष्ठा**। स्पष्टम्। ईदृक्कष्टे कायवाङ्मनोनिर्निषेवितमीश्वरं स्मरति। **कुहाचिदेष स्वपिता पिता नः**। एष मानसप्रत्यक्षो नः पिता ईश्वरः कुहाचित् कुत्र स्वपिता स्वपिति। **यो न वेद न हृतं हरन्तम्** ॥ ५ ॥ यः हृतं मां न वेद न वा हरन्तं वेदेत्यन्वयः। किं च— इतरेऽप्याजन्मनिषेविता देवा न मत्सहाया इत्याह। **प्रत्यङ्ङ्वाङ्प्राङ्ङितरौ च नेह**। पञ्चसु दिक्षु तत्र तत्र वर्तमानाः प्राणपञ्चकाधिष्ठातारो देवा लक्ष्यन्ते। इतरौ चेत्यन्तेषु। सर्वत्र सप्तम्यर्थो बोध्यः। वर्तमाना इति च शेषः। तेऽत्र देवा अपि किं नेह सन्ति। पक्षान्तरमाह। **नाहमेनाननुपतस्थिरद्धा**। एनान् देवान्। अद्धा सत्येन। अहं नोपतस्थिः नोपस्थाता इति न। अपि तु उपस्थातैव। किं च। **न मामिमे नूनमित्था**

**पथो विदुः** । नूनं निश्चितोऽयमर्थः । इमे देवाः मां इत्था इत्थंभूतं न विदुः । **ये मा न यन्ति मिथु चाकशानाः** ॥ ६ ॥ ये पथो मार्गात् मा मां न नयन्ति । कीदृशः मिथु मिथः चाकशानाः भासमानाः । अतः परमिन्द्रस्य मेषवेषधारिणः प्रतिवचनमुपक्रमते । **परः स्मियानो अविवरस्य शूकम्** । परः इन्द्रः स्मियानः हसन् अस्य मेधातिथेः शूकं शङ्कां अविवः विवृतवान् । **किं सीमिच्छरणं मन्यमानः** । सीमिति निरर्थको निपातः । इत् प्रश्ने । किं शरणं रक्षकं मन्यमानः असीति शेषः । इत्थंभूतस्त्व किं शरणं मन्यस इत्यर्थः । पुनरिन्द्र आह-—**न ह त्वाहमप्रणीय स्वविष्ठामित्था जहामि शपमानमिन्नु** ॥ ७ ॥ हेत्यैतिह्यार्थः । त्वा त्वां स्वविष्ठां स्वस्थानं अप्रणीय अप्रापय्य इत्था इत्थंभूतं अज्ञानपङ्कनिमग्नं न जहामि शपमानमिन्नु शपमानमपि । तथा च त्वामज्ञानपङ्कादुद्धृत्य स्वस्थानमात्म-स्वरूपं यावन्न प्रापयामि तावन्न त्वां मुञ्चामीति फलितोऽर्थः । तदिच्छाधि यो असि सर्ववित्तमः इत्यस्योत्तरमाह । **अहमस्मि जरितॄणामु दावा** । अहं उ इति निश्चये । जरितॄणां यजमानानां "जरिता वै यजमानः" इति श्रुतेः । दावा दाता फलस्येति शेषः । अस्मि भवामि । यागादिफल-प्रदोऽहमेव । **अहमाशिरम्** । सोमसंस्कारकं पयः तदप्यहमेव । **अहमिदं दधग्वान्** । इदं हविः दधग्वान् दाहकः । एतस्य हविषो दाहकश्चाहमेवेत्यर्थः । किं च । **अहं विश्वा भुवना विचक्षन्नहं देवानामासन्नवोऽदः** ॥ ८ ॥ विश्वा भुवनानि विश्वेषां भुवनानां विचक्षन् साक्षी सन्नहं देवानां आसन् आस्ये अवः अन्नाद्यं अदः ददामि । कुहेव ते चित्रतमप्रतिष्ठा इत्यस्योत्तरमाह । **मम प्रतिष्ठा भुव आण्डकोशाः** । भुव उत्पादकस्य मम आण्डकोशाः ब्रह्माण्डानि प्रतिष्ठा "तत्सृष्ट्वा" इति श्रुतेः । **वि चैमि सं च हि नु यो विरप्शी** । योऽहं व्येमि वियुक्तो भवामि समेमि सङ्गतश्च भवामि

संसारेऽस्मिन् विरश्पी विविधं रपति शब्दं करोतीति विरश्पी रपधातोः शिनिन्। शब्दवान् वेदप्रवक्तेति यावत्। **अहं न्वहिं पर्वते शिश्रियाणम्।** नु इति निश्चये। अहमेव नान्यः। अहिं वृत्रासुरं पर्वते शिश्रियाणं पर्वताश्रितं अहनम्। **उग्रो न्वहं तवसावस्युरद्धा ॥ ९ ॥** उग्रः क्रूरकर्मा नु निश्चितं अहमेव। तवसा वज्रेण अद्धा निश्चितम्। अवस्युः अन्नेच्छुः। ऐश्वर्येच्छुरिति यावत्। सोऽप्यहमेव। **प्रवङ्क्षणानभिदं पर्वतानाम्।** प्रवङ्क्षणान् पक्षान् पर्वतानां अभिदं भेदितवानस्मि। **यत्सीमिन्द्रो अकरोद्नीकैः।** यत् पुरुषसाध्यं कर्मेन्द्रः अनीकैः अकरोत्तत् अहमेवाकरवमिति वाक्यशेषः। सीमिति निरर्थको निपातः। **को अद्धा वेद क इह प्रवोचत्।** अद्धा सत्यं मम स्वरूपमिति शेषः। को वेद कः वेत्ता। को वा प्रवक्ता। **को अश्नवदभिमातिं विजघ्नुषः ॥ १० ॥** किं च अभिमातिं अरिसैन्यं विजघ्नुषः हतवतो मम मामित्यर्थः। कः अश्नवत् कः अश्नोत्। मयि व्यापकतां कर्तुं न कोऽपि समर्थ इत्यर्थः। **को मे अवो दाशुषो विष्वगूतीरित्था ददर्श भुवनाधि विश्वा।** अवोऽन्नं दाशुषो दत्तवतः मे ऊतीः शक्तीः विश्वा भुवनान्यधि। अधिरीश्वर इति कर्मप्रवचनीयता। सर्वेषु भुवनेषु कः ददर्श कः ददर्श। किं च। **रूपंरूपं जनुषा बोभवीमि।** जनुषा शरीरग्रहणेन रूपंरूपं अनेकरूपः बोभवीमि भवामि शुद्धस्य तव कथं शरीरग्रहणमत आह। **मायाभिरेको अभिचाकशानः ॥ ११ ॥** अनेकाभिर्विचित्रशक्तिभिर्मायाभिः एकोऽपि अभितः चाकशानः भासमानः मायाप्रतिबिम्बित इति यावत्। किं च। **विश्वं विचक्षे यमयन्नभीकः।** अभीको निर्भयः विश्वं यमयन्। अन्तर्यामिस्वरूपेण अधितिष्ठन्। विचक्षे पश्यामि। किं च। **नेशे मे कश्च महिमानमन्यः।** महिमानं प्राप्तुमिति शेषः। स्पष्टम्। किं च। **अहं द्यावापृथिवी आततानो बिभर्मि धर्ममवसे जनानाम् ॥ १२ ॥**

द्यावापृथिवी आततानस्तन्वन्नहं जनानां अवसे जनानां अवितुं धर्मं महावीरं यज्ञशिरो बिभर्मि । इदमुपलक्षणम् । कर्ममार्गप्रवर्तनेनापि लोकरक्षक इति फलितोऽर्थः । "आहुत्याप्यायते सोमः" इत्यादिस्मृतेः । **अहमु ह प्रवतिं यज्ञियामियाम् ।** अहं उ ह यज्ञियां प्रवतिं यज्ञसंबन्धिनं काममहमियाम् । कर्मफलप्रदोऽप्यहमेवेति भावः । **अहं वेद भुवनस्य नाभिम् ।** त्रैलोक्य-वर्तिपदार्थमात्रं नाभिपदेनोपलक्ष्यते । **आपिः पिता सूरहमस्य विष्वङ् ।** आपिः पितामहः पिता जनकः सूर्माता अहमेव अस्य विश्वस्य । किं च । **अहं दिव्या आन्तरिक्ष्यास्तुका वहं ॥ १३ ॥** दिव्या आन्तरिक्ष्याश्च तुकाः बिन्दून् अहं वहं वहामि । लकारव्यत्ययः अडागमाभावश्च छान्दसः । वृष्टिकर्ताप्यहमेवेत्यर्थः । **अहं वेदानामुत यज्ञानामहं छन्दसामविदं रयीणाम् ।** सर्वत्र कर्मणि षष्ठी अविदं वेद्मि । **अहं पचामि सरसः परस्य यदिदेतीव सरिरस्य मध्ये ॥ १४ ॥** परस्य सरसः समुद्रस्य मध्य यत् इत् उदर्थे । उदेतीव । उदयं बडबानलस्वरूपेण उदयं प्राप्नोतीति यावत् । तत् बडबानलस्वरूपं तेजः अहमेव सन् सरिरस्य सलिलस्य कर्मणि षष्ठी सलिल-महमेव पचामि । **अहमिन्नु परमो जातवेदा यमध्वर्युरभिलोकम्पृणैधीत् ।** अहमिन्नु परमः पवित्रतमो जातवेदा अग्निः यं जातवेदसं अध्वर्युः अभिलोकं-पृणा लोकम्पृणामिष्टकामभि लक्षीकृत्य अध्वर्युः ऐधीत् समिद्धं चकार । **यमन्वाह नभसो न पक्षी काष्ठा भिन्दन् गोभिरितोऽमुतश्च ॥ १५ ॥** यमध्वर्युमनु लक्ष्यीकृत्य नभसो न पक्षी नभसः पक्षीव नकार इवार्थे गोभिर्वाग्भिः । इतः अमुतश्च काष्ठाः दिशं भिन्दन् अन्वाह शंसति । होतेति शेषः । **अहमु यन्नपतता रथेन द्विषडारेण प्रधिनैकचक्रः ।** अहं उ । द्विषडारेण द्वादशारेण द्वादशमासात्मकेन संवत्सररूपेण अन्तरिक्षेऽपि अपतता रथेन प्रधिना चक्रधारया उपलक्षितेन यन् गच्छन् यः सोऽहमेवेत्यन्वयः ।

कीदृशोऽहं एकचक्रः । न खल्वन्योऽहमिव एकेन चक्रेण याति । एवं सूर्यरूपेण प्रस्तूय चन्द्ररूपेण स्तौति । **अहमिन्दु दिद्युतानो दिवेदिवे तन्वं पुपुष्यानमृतं वहामि ॥ १६ ॥** अहमेव दिवेदिवे प्रतिदिनं तन्वं शरीरं पुपुष्यान् पोषयन् अमृतं वहामि प्रापयामि प्रजाभ्य इति शेषः । कीदृशः दिद्युतानः प्रकाशमानः । अथ वायुरूपेण स्तौति । **अहं दिशः प्रदिश आदिशश्च विष्वक् पुनानः पर्येमि लोकम्** । स्पष्टम् । अथ पृथिवीरूपेण स्तौति । **अहं विश्वा ओषधीर्गर्भे आधां याभिरिदं धिनुयुर्दाशुषः प्रजाः ॥ १७ ॥** विश्वाः सर्वा ओषधीः अन्नानि । आधां दधे । दाशुषः यजमानस्य प्रजा याभिरोषधीभिः इदं विश्वं धिनुयुः प्रीणयन्ति । अथ सकलजीवरूपतामाह । **अहं चरामि भुवनस्य मध्ये पुनरुच्चावचं व्यश्नुवानः** । उच्चावचं ऊर्ध्वमधश्च । आब्रह्मस्तम्बपर्यन्तजीवरूपोऽहमेवेति भावः । **यो मा वेद निहितं गुहा चित्स इदित्था बोभवीदाशयध्यै ॥१८॥** यो मा मां गुहा गुहायामन्तःकरणे निहितं हृत्कमलान्तर्वर्तिनमेतदुक्तरूपाभेदेन वेद उपास्ते स इत्था इत्थं आशयध्यै आशयितुं आशयं कर्तुं बोभवीति भवति । इत्थमाशयो ब्रह्मज्ञानी मत्तुल्यो भवतीति यावत् । चिदिति निरर्थकम् । **अहं पञ्चधा दशधा चैकधा च सहस्रधा नैकधा चासमत्र** । अत्र विश्वस्मिन् । शेषं स्पष्टम् । **मया ततमितीदमश्नुते तदन्यथासद्यदि मे असद्विदुः ॥ १९ ॥** मया ततमिदं विश्वमिति । (अमुं अमुं प्रकारं) अश्नुते प्राप्नोति । तत् तदेतत् मदुक्तम् । अन्यथा असत् अन्यथा स्यात् । यदि एवं केऽपि ब्रूयुरिति शेषः । तर्हि ते असद्विदुः । स्पष्टम् । **न मामश्नोति जरिता कश्चन न माश्नोति परि गोभिराभिः** । कश्चित् जरिता यजमानः मां न अश्नोति न प्राप्नोति । "न कर्मणा न प्रजया धनेन" इति श्रुतेः । आभिर्गोभिर्वाग्भिः वेदैरिति यावत् । न मां परि

अश्नोति परिप्राप्नोति । परीति सामस्त्यार्थम् । तथा च "नायमात्मा प्रवचनेन लभ्यः" इति श्रुतिसमानार्थमेतत् । **न मेऽनाश्वानुत दाश्वानजग्रभीत् सर्वं इन्मामुपयन्ति विश्वतः ॥ २० ॥** मे मां कर्मणि षष्ठी । अनाश्वान् अनशनव्रती न अजग्रभीत् । न गृह्णाति । दाश्वान् दाता । दानानाशकयोरपि "यज्ञेन दानेन तपसानाशकेन" इति श्रुत्या लोकप्राप्तिहेतुत्वस्यैवोक्तेः । न चाहमेकस्मिन्नेव लोके नियतः । अतो ज्ञानिनः सर्व एव इदेवार्थे मां विश्वतः विश्वस्मिन्नुपयन्ति उपगच्छन्ति । **क्व शरारुः क्व सृमरः क्व नूरणः सर्वमिदं त्वत्त्वदितो वहामि ।** शरारुः व्याघ्रादिः सृमरः वृकश्च क्वेति कचित् प्रत्येकं उरणः मेषः सर्वमिदं त्वत् त्वत् त्वच्छब्दः अन्यपर्यायः । अन्यदन्यच्च इतः अनया दिशा अनेन सृष्टिप्रकारेण तसिलः सर्वविभक्तिकत्वोक्तेः । वहामि । सर्वमपीति भावः । अतश्च पुनरप्याह । **यन्मदिमे बिभ्यति तन्म एकम् ।** यत् मत् मत्तः इमे व्याघ्रादयो बिभ्यति भयं प्राप्नुवन्ति । व्याघ्रादिभ्यो भूयांसो बिभ्यति । व्याघ्रादयोऽपि बहुभ्यो बिभ्यति । यस्माच्च व्याघ्रादयो बिभ्यति सोऽहमेव । तदेतदाह । तन्म एकं तत्सर्वमपि मे मम एकमेव । एवमैक्ये स्वस्य तदपेक्षया विशेषमाह । **मे ते अक्षन्नहमुताननुक्षम् ॥ २१ ॥** ते मे मां न अक्षन् न भक्षयन्ति । अदेर्घस्युपधालोपः । उ इति अनर्थकम् । अहमु तान् अनुक्षं भक्षयामि । अडागमाभावः छान्दसः । **यत्तप्यथा बहुधा मे पुरा चित् ।** यत् बहुधा मे मदर्थं पुरा पूर्वं तप्यथाः तप्तवानसि । चिदित्यनर्थकम् । **तन्नु भुवेऽहं उरणो बोभुवे ।** तत् तस्मादेव हेतोः नु निश्चयेन । भुवे भवाय सत्तायै ज्ञानेन तवैव सत्स्वस्वरूपावाप्तय इति यावत् । उरणो मेषः । बोभुवे अभवम् । अतः परमुपसंहरन्नाह । **ऋतस्य पन्थामसि हि प्रपन्नोऽयसे स मे सत्यमिदेकमेहि ॥ २२ ॥** अयसे प्राप्तये ब्रह्मण इति शेषः । ऋतस्य

सत्यस्य पन्थां पन्थानं प्रपन्नोऽसि । स त्वं मे मम एकं सत्यमित् सत्यमेव । न त्वन्यत् किमपि सांसारिकं ऐहिकं प्राप्नुहि । पुनः शुद्धं स्वस्वरूपमाह । **अहं ज्योतिरहममृतं विनद्धिः** । नद्धिः बन्धनम् । तद्रहितम् । स्पष्टम् । स्वविवर्तत्वेन विश्वस्य स्वाभेदमाह । **अहं जातं जनि जनिष्यमाणम्** । जनि जायमानम् । स्पष्टम् । मेधातिथेः स्वाभेदमुपदर्शयन्नाह । **अहं त्वमहमहं त्वमिन्नु त्वमहं चक्ष्व** । अहं त्वमेव । अहं दृश्यमानश्चेत् प्रतिबिम्बवत् त्वम् । तर्हि कदाचित् मम मिथ्याभूतत्वं प्रतिबिम्बवत् स्यादत आह । अहं चाहमेव । न प्रतिबिम्बवन्मिथ्याभूत इत्यर्थः । तर्हि तवैव प्रतिबिम्बवन्मिथ्याभूतत्वं कदाचित् स्यादत आह । त्वमिन्नु त्वमहं चक्ष्व । त्वमपि त्वमेव अहं चेति चक्ष्व जानीहि । **विचिकित्सीर्म ऋज्वा ॥ २३ ॥** ऋज्वा ऋजुः साम्प्रतं न तथाऽपक्वकषायोऽब्रह्मज्ञश्चेति मा विचिकित्सीः मा संशयं कार्षीः । कुतः सन्देहे सन् । मा इत्यत्र ऋत्यक इति ह्रस्वः । **विश्वशास्ता विधरणो विश्वरूपो रुद्रः प्रणीती तमनः प्रजापतिः** । विधरणः जगद्धारकत्वात् । प्रणीती जगत्प्रणेतृत्वात् अन्तर्यामिस्वरूपेणेति भावः । तमनः शमनः । यमस्वरूपत्वात् । स्पष्टम् । **हंसो विशोको अजरः पुराणो ऋतीयमानो अहमस्मि नाम ॥ २४ ॥** हंसो विवेचकत्वसामान्यात् ऋतीयमानत्वं सर्वत्र घृणावत्त्वेन निर्लेपत्वम् । ऋतिः सौत्रो घृणार्थः प्रसिद्धः । ऋच्छतेरियतेर्वा ल्युट् । **अहमस्मि दरिता सर्वतोमुखः पर्यारणः परमेष्ठी नृचक्षाः** । जरिता यजमान इति व्याख्यातं प्राक् । पर्यारणः व्यापकः । नृचक्षाः साक्षी । **अहं विष्वङ्ङहमस्मि प्रसत्वानहमेको अस्मि यदिदं नु किञ्च ॥ २५ ॥** विष्वङ् व्यापकत्वात प्रसत्वान् साक्षी । स्पष्टम् । इति बाष्कलमन्त्रोपनिषत् ।

इति बाष्कलमन्त्रोपनिषत् सवृत्तिका समाप्ता

---

# मठाम्नायोपनिषत्

ॐ ऊर्ध्वाम्नायगुरूपदेशभुवनाकारसिंहासनसिद्धाचारवन्दितं समस्त-वेदवेदान्तसारनिर्माणं परात्परं निरञ्जनज्ञानार्थषट्चक्रजाग्रतीमयं परावाचा परात्परं सर्वसाक्षिधृतं चिन्मयं ज्योतिर्लिङ्गं निराकारं गळितं पूर्णप्रभाशोभितं शान्तं चन्द्रोदयनिभं भज मनस्तच्छ्रीगुरुचैतन्यं प्रणमामि ॥

अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥

ॐ प्रथमे पश्चिमाम्नायः शारदामठः कीटवारिसंप्रदायः तीर्थाश्रमपदं द्वारकाक्षेत्रं सिद्धेश्वरो देवः भद्रकाळी देवी ब्रह्मस्वरूपाचार्यः गङ्गागोमतीतीर्थे स्वरूपब्रह्मचारी सामवेदप्रपठनं "तत्त्वमसि" इत्यादिवाक्य-विचारः नित्यानित्यविवेकेनात्मनोपास्ति आत्मतीर्थे आत्मोद्धारार्थे साक्षात्कारार्थे संन्यासग्रहणं करिष्ये । ॐ नमो नारायणायेति ॥

ॐ द्वितीये पूर्वाम्नायः गोवर्धनमठः भोगवारिसंप्रदायः वनारण्ये पुरुषोत्तमं क्षेत्रं जगन्नाथः विमला देवी भद्रपद्मपादाचार्यः महोदधितीर्थे प्रकाशब्रह्मचारी ऋग्वेदप्रपठनं तमेवैक्यं जानथ "प्रज्ञानमानन्दं ब्रह्म" इत्यादिवाक्यविचारः नित्यानित्यविवेकेनात्मनोपास्ति आत्मतीर्थे आत्मोद्धारार्थे साक्षात्कारार्थे संन्यासग्रहणं करिष्ये । ॐ नमो नारायणायेति ॥

ॐ तृतीये उत्तराम्नायः ज्योतिर्मठः आनन्दवारिसंप्रदायः गिरिपर्वत-सागरपदानि बदरिकाश्रमक्षेत्रं नारायणो देवता पूर्णगिरी देवी त्रोटकाचार्यः अलकनन्दातीर्थे आनन्दब्रह्मचारी अथर्वणवेदपठनं तमेवैक्यं जानथ "अयमात्मा ब्रह्म" इत्यादिवाक्यविचारः नित्यानित्यविवेकेनात्मनोपास्ति आत्मतीर्थे आत्मोद्धारार्थे साक्षात्कारार्थे संन्यासग्रहणं करिष्ये । ॐ नमो नारायणायेति ॥

ॐ चतुर्थे दक्षिणाम्नायः शृङ्गेरीमठः भूरिवारिसंप्रदायः सरस्वतीभारतीपुरी चेतिपदानि रामेश्वरक्षेत्रं आदिवराहो देवता कामाक्षी देवी शृङ्गी ऋषिः पृथ्वीधराचार्यः तुङ्गभद्रातीर्थे चैतन्यब्रह्मचारी यजुर्वेदप्रपठनं तमेवैक्यं जानथ "अहं ब्रह्मास्मि" इत्यादिवाक्यविचारः नित्यानित्यविवेकेनात्मनोपास्ति आत्मतीर्थे आत्मोद्धारार्थे साक्षात्कारार्थे संन्यासग्रहणं करिष्ये । ॐ नमो नारायणायेति ॥

ॐ पञ्चमे ऊर्ध्वाम्नायः सुमेरुमठः काशीसंप्रदायः जनकयाज्ञवल्क्यादिशुकवामदेवादिजीवन्मुक्ताः एतत्सनकसनन्दनकपिलनारदादिब्रह्मनिष्ठाः नित्यब्रह्मचारी कैलासक्षेत्रं मानससरोवरं तीर्थं निरञ्जनो देवता माया देवी ईश्वराचार्यः अनन्तब्रह्मचारी शुकदेववामदेवादिजीवन्मुक्तानां सुसंवेदप्रपठनं परोरजसेसावदों "संज्ञानमनन्तं ब्रह्म" इत्यादिवाक्यविचारः नित्यानित्यविवेकेनात्मनोपास्तिं आत्मतीर्थे आत्मोद्धारार्थे साक्षात्कारार्थे संन्यासग्रहणं करिष्ये । ॐ नमो नारायणायेति ॥

ॐ षष्ठे आत्माम्नायः परमात्मा मठः सत्यसुसंप्रदायः नाभिकुण्डलिक्षेत्रं त्रिकुटी तीर्थं हंसो देवी परमहंसो देवता अजपासोहंमहामन्त्रः ब्रह्मविष्णुमहेश्वराद्याः जीवब्रह्मचारी हंसविद उपास्तिः उपाधिभेदसंन्यासार्थे ज्ञानसंन्यासग्रहणं करिष्ये । ॐ नमो नारायणायेति ॥

ॐ सप्तमे जम्बूद्वीपः सम्यग्ज्ञानं शिखा न सूत्रं वेद्यवेदकः श्रद्धा नदी विमलातीर्थे आत्मलिङ्गशान्त्यर्थे विचारः नित्यानित्यविवेकेन आत्मनोपास्तिं आत्मतीर्थे आत्मोद्धारार्थे साक्षात्कारार्थे संन्यासग्रहणं करिष्ये । ॐ नमो नारायणायेति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्कराचार्यविरचिता मठाम्नायोपनिषत् समाप्ता

---

# विश्रामोपनिषत्

ॐ पूर्वदले श्वेतवर्णे यदा विश्राम्यते मनः ।
तदा धैर्यमुदारं च धर्मकीर्तिमतिर्भवेत् ॥
अग्निदले रक्तवर्णे यदा विश्राम्यते मनः ।
तदा क्रोधश्च कामश्च मन्दं बुद्धिर्मतिर्भवेत् ॥
कृष्णवर्णे दक्षिणदले यदा विश्राम्यते मनः ।
निद्रालस्यभयं देवि मत्सरे च गतिर्भवेत् ॥
नैर्ऋतदले नीलवर्णे यदा विश्राम्यते मनः ।
तदा क्रोधश्च कामश्च मनोभिन्नमतिर्भवेत् ॥
पश्चिमदले कपिलवर्णे यदा विश्राम्यते मनः ।
तदा हास्यविनोदौ च उत्साहे च मतिर्भवेत् ॥
श्यामवर्णे वायुदले यदा विश्राम्यते मनः ।
तदा चिन्तोच्चाटनं च वैराग्ये च मतिर्भवेत् ॥
पीतवर्णोत्तरदले यदा विश्राम्यते मनः ।
तदा शृंगारभोगौ च कल्पनायां मतिर्भवेत् ॥
गौरवर्णेशानदले यदा विश्राम्यते मनः ।
तदा कृमात्मानं धर्मकीर्तिमतिर्भवेत् ॥
सन्धौ सन्धौ मिश्रितानां यदा विश्राम्यते मनः ।
तदा देहो गृहं राज्यं निर्दोषा च मतिर्भवेत् ॥
श्यामवर्णे मध्यदले यदा विश्राम्यते मनः ।
तदा सर्वगुणं ज्ञानं चैतन्यं च मतिर्भवेत् ॥

यस्य स्मरणमात्रेण सर्वपापैः प्रमुच्यते ।
ये पठन्ति सदा भक्त्या सायुज्यपदमाप्नुयुः ॥

इति विश्रामोपनिषत् संपूर्णा

---

# शौनकोपनिषत्

ॐ देवासुराः संयत्ता आसन् । तेषामिन्द्रो न प्रत्यपद्यत । ते ह वसूनेव प्रातस्सवनेषु पुरोधाय व्यजिगीषन्त । ते ह नुन्नेषु नाराशंसेषु ऋषीणां यज्ञवास्त्वभ्यायन् हनिष्याम वा एतद्वो यद्देवान्न पराभावयिष्यथेति । ते ह बिभ्यत एव स्तोकानुदकल्पयन् विजेष्यध्वे वावैतानन्विति । ते ह तत एवार्तिमार्च्छंस्तानन्वितरान् पराभावयन् । ततो हेन्द्रोऽपश्यत् । स ह गायत्रीमेव प्रतिसंदिदेश । सा होवाच । बिभेमि वा एतदेतेभ्यो यथैतत्परावृतन्निति । स प्रणवमेवास्याः पुरोगमकरोदेष वाव ते गोप्तायेति । सा होवाच । यदेष पुरोगाः उदेष मे भागधेयी स्यादिति । स होवाच । न ह वावैष त्वद्भागधेयी भवति । महान्वा अस्य महिमा न ह वा महीयांसो भागक्लृप्तिमप्याभजन्तीति । विश्वमिन्नु समन्वालभध्वमिति । सेनान्यास्तु प्रथमजानाप्यायथिष्यसीत्योमिति होवाच । स होवाच यत्प्रथमं नाभ्यकीर्तयो नामग्राहमथ नानुवत्स्य इति । नामग्राहमेतेन सर्वमभिपद्यन्ते । सर्वं वा एष सर्वमश्नोतीति । अक्षरं वा एषः । तस्मादोमित्यनुजानन्ति । ओमिति प्रतिपद्यन्त ओमित्यभ्याददत ओमित्यभिनिधापयन्ति । तदेतदक्षरं जैत्रमभित्वरं सर्वाणि भूतान्यभ्यात्तं यदनेकमेकं नानावर्णं नानारूपं नानाशब्दं नानागन्धं नानारसं नानास्पर्शमिति । अथो खल्वाहुरिन्द्रो वा

चैतदक्षरम् । सर्वाणि ह वा इमानि भूतान्येतदक्षरमन्वायत्तानि सर्वे वेदाः सर्वे यज्ञा इत्यथ खल्विन्द्रमन्वायत्तमिति ॥

स मंद्रेणैवान्वाभक्तो विदिद्युतेऽङ्गसैव भ्रातृव्यानपहनानीति । तस्मान्मन्द्रं प्रातःसवनमभवद्यद्गायत्रं तद्गायत्री तद्गायत्रं यद्वसवः तद्वसव्यम् । स ह प्रणव उवाच । यदहं सर्वं भवानि यद्गायत्री वै पुरोगाः तत्किं मे स्यादिति । गायत्रमन्वेव गायत्रीमन्वेव त्वा सर्वरूपमिमं कृत्वा हिंकुर्वन्ति । स हापश्यन्नैतदङ्गसैव सर्वा रूपाण्येवमभिचक्षीरन्निति । स हान्तत एवात्मानमुपसंहृत्य तावदेवाग्राहयत् । स विश्रृङ्ग एवाभवत् । तस्माद्विश्रृङ्गमेवैत-दिहानुद्रवन्ति । तदाहुर्यद्वा एतस्य वीर्यं यच्छुक्रं यज्ज्योतिर्यदमृतं यदजर्यं तदवरमिति । तस्मात्तत एवातो ज्योतिरमृतमजर्यं प्रतिपद्यन्ते । ततो हासु-राः पराभवन् । स एष इन्द्रः सर्वं यद्गायत्री उद्गीथो वसवः प्रातस्सवनमिति । तदाहुः । सर्वं वा एतदिन्द्रो यज्जगद्यथैवेति ॥

ततो हासुराः पुनरेवोदयन्ति । ते ह माध्यंदिनस्यैव सवनस्य पवमानेषु यज्ञवास्त्वभ्यायन् । तेषां जरितारो बिभ्यत एव वस-तीवरीरुपाकल्पयन् । ते ह ताभिरेव जिघांसन् । तेषामिन्द्रो रुद्रानेव सेनान्योऽकः । ते हाक्षीयन्त । स ह त्रिष्टुभमेव प्रतिसंददत् । साब्रवीत् । बिभेमि वा एतदेतेभ्यो यथौजीयांसो बलीयांस इमे पराभवन्निति । स ह प्रणवमेवोवाच पुरोगायमेवारभस्वेति । सोऽब्रवीत् । किं मेऽतः स्यादिति । यदहं स त्वं ममैव रूपेण न्यूंखयिष्यन्ति त्वामिति । स हापश्यत् । सर्वं एव न्यूंखयन्तो मामभिचक्षीरन्निति । स ह सर्वमेवात्मानमुपसंहृत्य श्रृंग एवागूहयत् । स ह विश्रृङ्ग एवाभवत् । तस्मादित्थैव न्यूंखयन्ति । ततो हासुराः पराभावयन् । तस्माद्रुद्रानेव माध्यंदिनं सवनं त्रैष्टुभं चेति ॥

ते हासुराः पुनरेवोदपतिष्यन्त । ते ह तृतीयस्येह सवनस्य पवमानेषु यज्ञवास्त्वभ्यायन् । तेषामिमे बिभ्यत एवांशूनुपाकल्पयन् । ते ह तैरेव देवानपाजिघांसन् । तेषामिन्द्रो जगतीमेव प्रतिसंदिदेश । साब्रवीत् बिभेमि वा एतदेतेभ्यो यथौजीयांसो बलीयांस इमे परावृतन्निति । तस्या इन्द्रः प्रणवमेव पुरोगामकरोत् । स होवाच । किं मेऽतः स्यादिति । स होवाचेन्द्रो यत्त्वामुद्गीथेनोपावनेष्यन्ते तेनैव ते कल्पयिष्यन्तीति । सेनान्यो हि तर्ह्यादित्यानकल्पयन् तस्माज्जागतं तृतीयसवनमादित्यानाम् । स ह्यापश्यदादित्यो वा उद्गीथोऽसौ खल्वादित्यो ब्रह्म । न ह वा एनं मिथु चिदेमीति । स ह स्वेनैव रुपेणादित्यानगच्छत् । स ह तेनैव वज्रेणासुरान् पराभावयन् । तद्यत् स्वेनैव रूपेणाविस्तरामगच्छत्तत्प्रतिष्ठामविन्दत् । प्रतिष्ठा ह वा एषा यत्प्रणवः । सर्वाणि ह वा इमानि भूतानि प्रणव एव प्रतितिष्ठन्ति । तस्य ह वा एषा प्रतिष्ठा यत्रासावात्मानमुपसंहृत्याजूगुपत् । तस्मात्तदेवोपन्वीतेति तदेवोपासीत । तदेतदृचाभ्युक्तम्—

चत्वारि श्रृङ्गा त्रयो अस्य पादाः
द्वे शीर्षे सप्तहस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति
महो देवो मर्त्याँ॰ आविवेश ॥ इति ॥

यदिमास्तिस्रोथासाविति चत्वारीति । यदिमे द्वे एवाक्षरे त्रिभिरुपन्वन्ति तत्त्रय इति । यत्प्रत्यक्षं तद्वे इति । यदुद्गीथं सप्तभिरभिप्रपद्यन्ते तत्सप्तेति । अथो खल्वाहुः । सप्तभिरेनं स्वारयन्तीति । यदीमान् त्रीनभिधत्ते तत्त्रिधेति । यदिन्द्र एवोद्गीथस्तद्वृषभ इति । तदेतदृचाभ्युक्तम्—

मरुत्वन्तं वृषभं वावृधानम् ।
यद्द्रावयन्ति तद्रोरवीति ॥

यदेष सर्वाणि भूतान्यनुप्रविष्टस्तन्मर्त्यां॰ आविवेशेति। तस्मादो-मित्येकाक्षरमुद्गीथमुपासीतेत्याह भगवान् शौनकः शौनक इति ॥

इति शौनकोपनिषत् समाप्ता

---

# सूर्यतापिन्युपनिषत्

## प्रथमः पटलः

ॐ अथ भगवन्तं कमलासनं चतुर्मुखं पितरं ब्रह्माणं सनत्कुमार उपससार। प्रणनामाहं भो इति। अधीहि भो इति पप्रच्छ। को मनुः। दिव्यं किं ध्येयम्। यज्जपात्सर्वैनोनिवृत्तिः। यद्ध्यानात्सारूप्यसिद्धिः तद्ब्रवीतु भगवान् लोकानुग्रहार्येति। तच्छ्रुत्वा पितामह आह —शृणोतु भवानेकमनाः सर्वदा यमामनन्ति यन्नमस्यन्ति देवाः स ब्रह्मा स शिवः स हरिस्सेन्द्रः सोऽक्षरः परमः स्वराट् स सूर्यो भगवान् सहस्रांशुः तं सूर्यं भगवन्तं सर्वस्वरूपिणं निगमा बहुधा वर्णयन्ति। कश्यपः पश्यको भवति। यत्सर्वं परिपश्यतीति सौक्ष्म्यात्। कश्यपादुदिताः सूर्याः पापान्निर्घ्नन्ति सर्वदा। रोदस्योरन्तर्देशेषु। अपैतं मृत्युं जयति। य एवं वेद। योऽसौ तपन्नुदेति। असौ योऽस्तमेति। असौ योऽपक्षीयति। एष हि देवः प्रदिशोऽनुसर्वाः पूर्वो हि जातः स उ गर्भे अन्तः। स विजायमानः स जनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति विश्वतोमुखः। असौ योऽवसर्पति नीलग्रीवो विलोहितः। उतैनं गोपा अदृशन्नदृशन्नुदहार्यः। उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः। ऋग्भिः पूर्वाह्णे दिवि देव ईयते। यजुर्वेदे तिष्ठति मध्ये

अह्नः । सामवेदेनास्तमये महीयते । वेदैरशून्यस्त्रिभिरेति सूर्यः । ऋग्भ्यो जातां सर्वशो मूर्तिमाहुः ॥

एष ब्रह्मा च विष्णुश्च रुद्र एष हि भास्करः ।
त्रिमूर्त्यात्मा त्रिवेदात्मा सर्वदेवमयो रविः ॥ इति ।

योगेन ऊर्ध्वमन्थिनः सूर्यं भगवन्तमुपासते । धनधान्यबहुरत्नवन्तो निर्व्याधिवन्त आयुष्यवन्त आरोग्यवन्तो रयिवन्तो धनवन्तो बलवन्तो बहुपुत्रवन्त इति । यः श्रीकामः शान्तिकामः तुष्टिकामः पुष्टिकामो मेधाकामः प्रज्ञाकाम आयुष्काम आरोग्यकामोऽन्नाद्यकामो भास्करं भगवन्तमुपासीत । सयोनिः सरूपतां सलोकतां गत्वा स्तुत्वा महानन्दमुदकमुपस्पृश्यापोऽवगाह्य वाग्यतः नित्यकर्म कृत्वा शुचौ देशेऽप्यासीनो दर्भान् धारयमाणः प्राङ्मुख उपविश्य प्राणानायम्य देशकालौ सङ्कीर्त्य त्रिवेदमयं त्रिमूर्तिं त्रिगुणं चतुष्पदं पञ्चरूपं षडर्णवेद्यं सप्ताश्वमष्टशापेति (?) मुदयाद्रिसमारूढमुदयन्तं पद्मकरं पद्मासनं पद्मनयनं पद्मबान्धवं दिव्याम्बरधरं दिव्यगन्धानुलेपनं सर्वाभरणभूषितं सर्ववेदसं सर्वदेवाधिदैवतं सर्वदेवनमस्यन्तं काश्यपं भास्करं ध्यात्वा प्रस्कण्वः कण्वपुत्रो मुनिरस्य छन्दोऽनुष्टुब्भास्करो द्वादशात्मको दैवतमुदात्तस्वरो ज्ञानं नेत्रं सूर्यस्तत्त्वं प्रथमं बीजं द्वितीयं शक्तिस्तृतीयं कीलकमथापि श्रींबीजं शक्तिः सूर्य इति कीलकम् । अथ पादाद्यैरर्धर्चैः ऋग्भिस्तृचेन द्वादशभिर्नामभिः मित्ररविसूर्यभानुखगपूषहिरण्यगर्भमरीच्यादित्यसवित्रर्कभास्कराख्यैः षड्बीजैः संपुटिताः । स्तस्य सिध्यन्ति । गच्छेदंते परं पदम् ॥

प्रोक्तमादित्यमाहात्म्यं यन्मां त्वमनुपृच्छसि ।
प्रत्यक्षदैवतं भानुः परोक्षं सर्वदेवताः ॥
तद्ध्यानं पूजनं कार्यं श्रेयस्कामैर्जितेन्द्रियैः ।
जितेन्द्रियाय शान्ताय मन्त्रं देयमिदं महत् ॥

न देयं चञ्चलाक्षाय नाभक्ताय कदाचन ।
हसन्ति लोकायतिका हसन्ति कुटिला जनाः ॥
तस्माद्गोप्यं प्रयत्नेन न देयं यस्य कस्यचित् ।
रोगी रोगात् प्रमुच्येत बद्धो मुच्येत बन्धनात् ॥
तथा प्रत्यर्थिकृत्याभिर्मन्त्रयन्त्रादिकिल्बिषैः ।
किं पुत्र बहुनोक्तेन सत्यं सत्येन मे शपे ॥ इति ॥

इत्याथर्वणशिरसि सूर्यतापिनीये प्रथमः पटलः

---

## द्वितीयः पटलः

सनत्कुमारो भगवन्तं पितरं प्रणिपत्य पप्रच्छ ॥
कथं ध्यानं कथं न्यासः कथं पूजाविधानकम् ।
अर्घ्यदानं कथं कार्यं ब्रवीतु भगवानिदम् ॥ इति ॥

ततो भगवान् पितामह आह—

यतवाक्कायमनसः सूर्यभक्तो ब्रह्मचारी व्रतधरः ष . . . . . समुदायगुरुं कृधि । उद्यन्नद्यमिनो भज । पिता पुत्रेभ्यो यथा । दीर्घायुत्वस्य हेशिषे । तस्य नो देहि सूर्य । इति द्व्यर्चं महामन्त्रं जप्त्वा प्रत्यर्थिनो जयति । उद्यन्नद्यमित्र महः । आरोहन्नुत्तरां दिवम् । हृद्रोगं मम सूर्य । हरिमाणं च नाशय । शुकेषु मे हरिमाणम् । रोपणाकासु दध्मसि । अथो हारिद्रवेषु मे । हरिमाणं निदध्मसि । उदगादयमादित्यः । विश्वेन सहसा सह । द्विषन्तं मम रन्धयन् । मो अहं द्विषतो रथम् । उद्यन्नद्येत्ययं तृचो रोगघ्नः उपनिषदंत्यार्धर्चशो द्विषं (?) ना (?) यो नः शपादशपत् । यश्च नः

शपतः शपात् । उषाश्च तस्मै निम्रुक् च । सर्वं पापं समूहताम् । इत्येकर्चो रोगघ्नः प्रत्यर्थिहारी ॥

आकाशो वह्निना युक्तो दीर्घाद्यश्च सबिन्दुकः ।
आद्योऽयमर्णकोपिष्ठो द्वितीयेन द्वितीयकः ॥
तृतीयेन तृतीयः स्यात् द्वादशेन तृतीयकः ।
भूतेन पञ्चमः प्रोक्तः षष्ठः षोडशतः स्वरात् ॥
षडर्चोऽयं महामन्त्रः सर्वसिद्धिप्रदायकः ।
एतन्मन्त्रं मयोद्दिष्टं गुह्याद्गुह्यतमं महत् ॥
एतज्जप्त्वा महामन्त्रं सर्वपापैः प्रमुच्यते ।
पूजयित्वा विवस्वन्तमर्घ्यदानं समाचरेत् ।
एवं यः कुरुते पूजां मुच्यते सर्वकिल्बिषैः ॥

सर्वामश्नुत इति ॥

इत्याथर्वणशिरसि सूर्यतापिनीये द्वितीयः पटलः

---

## तृतीयः पटलः

अथ सौरमनूनि प्रवक्ष्यामि निगमोदितानि । घृणिरिति द्वे अक्षरे । सूर्य इति त्रीणि । आदित्य इति त्रीणि । एतद्वै सावित्रस्याष्टाक्षरं पदं श्रियाभिषिक्तम् । य एवं वेद । श्रिया हैवाऽभिषिच्यते । सह वा एतस्य स्वधा न यजुषा न साम्नामर्थोऽस्ति । यस्सावित्रं वेद । अहो नाहाश्वश्यः । सावित्रं विदाञ्चकार । तं ह वागदृश्यमानाभ्युवाच । सर्वं बत गौतमो वद । यस्सावित्रं वेदेति । स होवाच । सैषा वागसीति । अयमहं सावित्रः । देवानामुत्तमो लोकः । गुह्यं महो बिभ्रदिति । एतावदिह गौतमः यज्ञोपवीतं

कृत्वाऽधो निपपात । नमो नम इति । स होवाच । मा भैषीर्गौतम जितो वै ते लोक इति । तस्माद्ये केच सावित्रं विदुः । सर्वे ते जितलोकाः । उद्यन्नद्य मित्र महः. । सपत्नान्मे अनीनशः । दिवैनान्विद्युता जहि । निम्रोचन्नधरान् कृधि । न्यासोपयोगस्तथैवार्घ्यदाने च पादन्यास आद्योऽर्धर्चन्यासो द्वितीयरुङ्गस (?) स्तृतीयस्तृचन्यासश्च बीजन्यासो हंसन्यास इति बहुधा वर्णयन्ति ॥

इत्याथर्वणशिरसि सूर्यतापिनीये तृतीयः पटलः ।

---

## चतुर्थः पटलः

अथ पूजाविधानं वक्ष्ये—यन्त्रस्य पूर्वद्वारे द्वारश्रियै क्षेत्रपालाय मायायै नम इति दक्षिणतो द्वारश्रियै गणेशाय मायायै प्रत्यक्तो दुर्गायै मायायै उदक्तो महालक्ष्म्यै मायायै नमः । पूर्वपत्रे सूर्यायाग्नेयपत्रे रवये दक्षिणे विवस्वते नैर्ऋतौ खगाय पश्चिमे वरुणाय वायव्ये मित्राय सौम्ये आदित्याय ईशान्ये नमो महसे भास्कराय नम इत्यथाष्टदळपूजादित्यसवितृसूर्यखगपूषगभस्तिमार्ताण्डजगच्चक्षुभिरष्टभिर्जातैरथ पीठपूजाधारशक्तिमूलप्रकृतिकूर्मानन्तवराहपृथिवीसुवर्णमण्टपरत्नसिंहासनैर्ङिन्तैः धर्मज्ञानवैराग्यैश्वर्यैर्नञ्पूर्वैश्च ङिन्तैर्ऋग्वेदादिभिश्चतुर्भिः कृतादिभिश्चतुर्भिर्मन्दारादिभिः पञ्चभिः पीठकल्पमूलकन्दनाळपद्मपत्रकेसरकर्णिकासूर्यमण्डलसोमवह्निब्रह्मविष्णुरुद्रसत्वरजस्तमआत्मान्तरात्मा परमात्मभूः पुरुषभुवः पुरुषसुवः पुरुषभूर्भुवस्सुवः पुरुषाद्यैर्ङिन्तैस्तृचेन सर्वोपचारोपयोगस्तेन सर्वाघौघनिवृत्तिः सिद्ध्यतीति ॥

इत्याथर्वणशिरसि सूर्यतापिनीये चतुर्थः पटलः

---

## पञ्चमः पटलः

अथ यन्त्रं प्रवक्ष्यामि देवतासु प्रसाधनम् ।
यन्त्रं विना देवता च न प्रसीदति सर्वदा ॥

वृत्तमादौ विलिख्य साष्टपत्रं ततस्त्रिकोणं वृत्तं षडश्रं वृत्तयुगळं साधुकोणं समालिखेदिति । तत्रैता देवता आवाह्य द्वादशावरणानि कुर्यात्तत्र देवतामार्ताण्डादिभान्वादित्यहंससूर्यदिवाकरतपनभास्करा ङिन्ताः प्रथमावरणे मित्राद्यो द्वादशमन्त्राद्याः द्वितीये सूर्योदये नवखेटस्तृतीये धाता ध्रुव-सोमानिलानलप्रत्यूषप्रभासश्चतुर्थे वीरभद्रगिरिशशंकरैकपादहिर्बुध्न्यादीनाः भुवनाधिपतिविशांपतिपशुपतिस्थाणुभवाः पञ्चमे धात्रर्यमांशुमध्यमणि-भवेन्द्रविवस्वत्पूषगभस्तिमार्ताण्डजगच्चक्षुषः षष्ठे अरुणसूर्यवेदाङ्गभान्विन्द्र-रविगभस्तियमसुवर्णरेतोदिवाकरमित्रविष्णुमाघादिद्वादशमासाधिपतयः सप्तमे असिताङ्गो रुरुश्चन्द्रक्रोधोन्मत्तकपालिभीषणसंहाराः अष्टमे ब्राह्मयादयः सप्तमातरो नवमे इन्द्रादयोऽष्टौ दशमे मेषादयो द्वादशैकादशे वज्रशक्ति-खड्गपाशाङ्कुशगदात्रिशूलचन्द्रमुसलपद्मानि द्वादशे मध्ये भास्करं ध्यायेदुप-चारान् समर्प्यार्घ्याणि दद्यात् भगवान् सुप्रीतो भवेत् ॥

इत्याथर्वणशिरसि सूर्यतापिनीये पञ्चमः पटलः

---

## षष्ठः पटलः

अथ यन्त्रे बीजोद्धारं प्रवक्ष्यामि देवतासन्निधये वृत्तभानुमती-द्व्यर्णमुद्धरेत्कमलाष्टपर्णेषु दण्ड एषः पिङ्गाक्षप्रचण्डक्षेत्रपालगणपतिदुर्गाल-क्ष्म्यो ङेन्ता अष्टौ स्याद्वर्ण (?) बीजकाद्याः षट्कोणेषु तारया हंसस्सोहमिति

चतुराशासु मायामङ्कुशं च माख (?) ष्वष्टसु तत्तदाद्यर्णमध्ये तृतीय-नामादिकमिति देशिकोक्त्या सर्वं विज्ञाय साधकः सिद्ध्यति ॥

गुरुभक्ताय शान्ताय प्रदेयं नियतात्मने ।
न च शुश्रूषवे वाच्यं हैतुकाय कदाचन ॥
देशिकोक्तविधानेन यन्त्रे देवं प्रपूजयेत् ।
अर्घ्यदानं ततः कुर्याद्भानुरर्घ्यप्रियः सदा ॥
देशिकोक्तेन मन्त्रेण तृचेन च यथाविधि ।
साधकः साधयेत् सर्वमिह लोके परत्र च ॥
किं पुत्र बहुनोक्तेन सत्यं सत्येन मे शपे ।
प्रत्यक्षदैवतं सूर्यः परोक्षं सर्वदेवताः ॥
सूर्यस्योपासनं कार्यं गच्छेत् सूर्यस꣡सदम् ।
गच्छेत् सूर्यस꣡सदं गच्छेत् सूर्यस꣡सदमिति ॥

इत्याथर्वणशिरसि सूर्यतापिनीये षष्ठः पटलः

सूर्यतापिन्युपनिषत् समाप्ता

---

# स्वसंवेद्योपनिषत्

ॐ सर्वेषां प्राणिबुद्बुदानां निरंजनाव्यक्तामृतनिधौ विलयविलासः स्थितिर्विजृम्भते । तेषामेव पुनर्भवनं नो इहास्ति । स यथा मृत्पिण्डे घटानां तन्तौ पटानां तथैवेति भवति । वस्तुतो नोपादानमत एव नोपादेयमत एव न निमित्तमत एव न विद्या न पुराणं नो वेदा नेतिहासा इति न जगदिति न ब्रह्मा नो विष्णुः नाथ रुद्रो नेश्वरो न बिन्दुः नो कलेति अग्रे

मध्येऽवसाने सर्वं यथावस्थितं यथावस्थितज्ञानं तेषां नो भवत्यागमपुराणेतिहासधर्मशास्त्रेषु धृताभिमानास्ते। यत्तानि तु मुग्धतरमुनिशब्दवाच्यैः जीवबुद्धैः रचितानीति भवन्ति । तत्र प्रामाण्यं तादृशानामेव । ते त्वज्ञानेनावृताः सयत्नेन गर्भास्तदप्येष श्लोको भवति । तदत्र श्लोको भवति ॥

इह तेनाप्यज्ञानेन नो किञ्चित् । अथ यथावस्थितज्ञानेन किंचित् नेति यदस्ति तदस्ति यन्नास्ति नास्ति तत् । कालकर्मात्मकमिदं स्वभावात्मकं चेति । न सुकृतं नो दुष्कृतम् । अत एव सुमेरुदातारो गोदातारो वा गोघ्नैः ब्राह्मणघ्नैः सुरापानैः पश्यतोहरैः परोक्षहरैर्वा गुरुपापनिष्ठैः सर्वपापनिष्ठैः समानास्त एते । तैश्च न गौः न ब्राह्मणः न सुरा न पश्यतोहरः न परोक्षहरः न गुरुपापानि न लघुपापानि मत एव तन्निष्ठाः मत एव न निर्वाणं नो निरय इति तदप्येष श्लोको भवति ॥

तत्त्वज्ञानं गुहायां निविष्टमज्ञानिकृतमार्गं सुष्ठु वदन्ति । ते तत्र साभिमाना वर्तन्ते । पुष्पितवचनेन मोहितास्ते भवन्ति । स यथातुरा भिषग्ग्रहणकाले बाला अपथ्याहितगुडादिना जनन्या वञ्चिता इति नानादेवता गुरुकर्मतीर्थनिष्ठाश्च ते भवन्ति । केचिद्वयं वैदिका इति वदन्ति । नान्येऽस्मभ्यम् । केचिद्वयं सर्वशास्त्रज्ञा इति । केचिद्वयं देवानुग्रहवन्तः । केचिद्वयं स्वप्ने उपास्यदेवताभाषिणः । केचिद्वयं देवा इति । केचिद्वयं श्रीमद्रमारमणनलिनभृङ्गा इति । केचित्तु नृत्यन्तु । केचित्तु मूर्खा वयं परमभक्ता इति वदन्तो रुदन्ति पतन्ति च । ये केचनैते ते सर्वेऽप्यज्ञानिनः । ये तु ज्ञानिनो भवन्ति ये तत्त्वज्ञानिनश्च तैस्तेषां को विशेषः । मत एव केषाञ्चित्कैश्चिद्भेदः । मत एव यत्र विरिञ्चिविष्णुरुद्रा ईश्वरश्च गच्छन्ति तत्रैव श्वानो गर्दभाः मार्जाराः कृमयश्च मत एव न श्वानगर्दभौ न मार्जारः न कृमिः नोत्तमाः न मध्यमाः न जघन्याः । तदप्येष श्लोको भवति ॥

न तच्छब्दः न किंशब्दः न सर्वे शब्दाः न माता नो पिता न बन्धुः न भार्या न पुत्रो न मित्रं नो सर्वे तथापि साधकैरात्मस्वरूपं वेदितुमिच्छद्भिर्जीवन्मुमुक्षुभिः सन्तः सेव्याः। भार्या पुत्रो गृहं धनं सर्वं तेभ्यो देयम्। कर्माद्वैतं न कार्यं भावाद्वैतं तु कार्यम्। निश्चयेन सर्वाद्वैतं कर्तव्यम्। गुरौ द्वैतमवश्यं कार्यम्। यतो न तस्मादन्यत्। येन सर्वमिदं प्रकाशितम्। कोऽन्यः तस्मात्परः। स जीवन्मुक्तो भवति स जीवन्मुक्तो भवति। य एवं वेद। य एवं वेद॥

इति स्वसंवेद्योपनिषत् संपूर्णा

---

# ३. वैष्णव-उपनिषदः

## ऊर्ध्वपुण्ड्रोपनिषत्

अथ श्रीवराहरूपिणं भगवन्तं प्रणम्य सनत्कुमारः पप्रच्छ । अधीहि भगवन् ऊर्ध्वपुण्ड्रविधिम् । किं द्रव्यं किं स्थानं का रेखा को मन्त्रः कः कर्ता किं फलमिति च । श्रीवराह उवाच । क्षीराब्धितः श्वेतद्वीपे क्षीरखण्डान् वैनतेय आनीय सटाभिः द्विदळनश्वेतमृत्तिकाखण्डमुक्तिसाधिका भवन्ति । विष्णुपत्नीं महीं देवीमिति श्वेतमृत्तिकां नमस्कृत्य, ओमिति हस्तेनोद्धृत्य ।

अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरा ।
शिरसा धारिता देवि रक्षस्व मां पदे पदे ॥

इत्येताभिः प्रार्थयेत् । इमं मे गङ्गेति जलमादाय, गन्धद्वारेति निक्षिप्य, विष्णोर्नुकमिति मर्दयेत् । तन्मध्ये नृसिंहबीजं विलिख्य, "अतो देवा अवन्तु नः" इति विष्णुगायत्र्या त्रिवारमभिमन्त्र्य "नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ।" इत्येकवारम् ॥

श्वेतमृद्देवि पापघ्ने विष्णुदेहसमुद्भवे ।
चक्राङ्किते नमस्तेऽस्तु धारणान्मुक्तिदा भव ॥

श्रीचूर्णं श्रीकरं दिव्यं श्रियश्चाङ्गे समुद्भवम् ।
पुण्ड्रं च यस्य मध्ये तु धार्यं मोक्षार्थिभिः स्मृतम् ॥
तिस्रो रेखाः प्रकुर्वीत व्रतमेतत्तु वैष्णवम् ॥

यस्त्वेवं विजानीयात् स नारायणसायुज्यमवाप्नोति । न च पुनः कुत्र कुत्र धार्यम् । मत्पादाकृतयश्च ऊर्ध्वपुण्ड्रा नासादयः स्मृताः रेखाद्वादशकस्थाने । प्रथमं तु ललाटके द्वितीयं तु नाभौ तृतीयं वक्षसि चतुर्थं कण्ठे पञ्चमं नाभिदक्षिणे षष्ठं दक्षिणबाहौ सप्तमं तदूर्ध्वस्कन्धे अष्टमं नाभ्युत्तरे नवमं वामबाहौ दशमं तदूर्ध्वस्कन्धे एकादशं पृष्ठोर्ध्वतः द्वादशं कण्ठपृष्ठे मोक्षं देहि शिरसि । नारायणे मय्यचला भक्तिस्तु वर्धते । संज्ञेन फलं लब्ध्वा तद्विष्णोः परमं पदमवाप्नोति । केशवादिद्वादशनामभिः ब्रह्मचारी गृहस्थो यतिश्च सर्वेभ्यो दुःखेभ्यो मुक्तो भवति । सर्वेषु तीर्थेषु स्नातो भवति । सर्वैर्देवैः ज्ञातो भवति । अश्रोत्रियः श्रोत्रियो भवति । अनुपनीतोऽप्युपनीतो भवति । आचक्षुषः पङ्क्तिं पुनाति । न च पुनरावर्तते न च पुनरावर्तते । इत्याह भगवान् वराहरूपी । य एवं वेदेत्युपनिषत् ॥

इत्यूर्ध्वपुण्ड्रोपनिषत् समाप्ता

---

## कात्यायनोपनिषत्

अथ प्रणिपत्य कात्यायनो ब्रह्माणमन्वयुङ्क्त । अधीहि भगवः किं पवित्राणां पवित्रम् । केन वा कर्मणा सफलानि । किं दुष्करं तपो मर्त्यानाम् । केन सुकरेणामृतत्वमेति । स होवाच । साधु ते सुयोगः श्रृणु ।

भो पवित्रं सुलभं सुकरम् । यद्विष्णुक्षेत्रम् । तत्र मृत्स्नां श्वेतां "उद्धृतासि" इत्युद्धरेत् । अमृतमेव श्वेतमृत्स्ना भवति । तां शुद्धजलेन प्रणवेन घर्षयेत् । देवपितृकर्माण्यारभमाणस्तया नित्यमूर्ध्वपुण्ड्रं बिभृयान्मन्त्रैः केशवादीनाम् । तद्रहितं कर्म निष्फलं रक्षांसि गृह्णीयुः । तदेवमभ्युक्तं भवति । नासादि-केशान्तमूर्ध्वपुण्ड्रं विष्णोः स्थितस्य चरणद्वयाकृति । एकाङ्गुलं पादतरो-रस्य मूलम् । तदुत्पन्ने द्वे शाखे । तदेव च मध्याकारोऽङ्गुलादन्यूनः । स श्रीः प्रतिष्ठायै । श्रीर्हरिद्रा । यतो हरिं द्रावयति तच्छ्रीचूर्णं श्रियावधृतं आदित्यवर्णं श्रीफले धारयेत् । तज्जलेन श्रीबीजेन संमृज्य तत्सूक्ष्मरेखां धारयेत् । स श्रीमान् भवति । ते द्वे शाखे हंसवर्णे गायत्रीत्रिष्टुप्छन्दसी आत्मपरमात्मदैवत्ये दर्शपूर्णमासिके इष्टापूर्तक्रिये भुक्तिमुक्तिफले । सा रेखा श्रीवर्णा । गायत्री छन्दः । आनन्दक्रियामृतत्वफला । अयमूर्ध्वपुण्ड्र-विधिः । एवं विदित्वा यो धारयति स सर्वकर्मार्हो भवति । कायिकात्पूतो भवति । स विष्णुसायुज्यमवाप्नोति स विष्णुसायुज्यमवाप्नोति । य एवं वेद । इत्युपनिषत् ॥

इति कात्यायनोपनिषत् समाप्ता

---

# गोपीचन्दनोपनिषत्

ॐ नमस्कृत्य भगवन्तं नारदः सर्वेश्वरं वासुदेवं पप्रच्छ । श्रीभगवन् ऊर्ध्वपुण्ड्रविधिं द्रव्यमन्त्रस्थलादिसहितं मे ब्रूहीति । तं होवाच भगवान् वासुदेवो वैकुण्ठस्थानोद्भवं मम प्रीतिकरं मद्भक्तैर्ब्रह्मादिभिर्धारितं विष्णुचन्दनं वैकुण्ठस्थानादाहृत्य द्वारकायां मया प्रतिष्ठितं चन्दनं कुङ्कुमादिसहितं

विष्णुचन्दनं ममाङ्गे प्रतिदिनमालिप्तं गोपीभिः प्रक्षालनात् गोपीचन्दनमाख्यातं मदङ्गलेपनं पुण्यं चक्रतीर्थान्तःस्थितं चक्रसमायुक्तं पीतवर्णं मुक्तिसाधनं भवति ॥ अथ गोपीचन्दनं नमस्कृत्योद्धृत्य,

गोपीचन्दन पापघ्न विष्णुदेहसमुद्भव ।
चक्राङ्कित नमस्तुभ्यं धारणान्मुक्तिदो भव ॥

इति प्रार्थनम् । "इमम्मे गङ्गे" इति जलमादाय, "विष्णोर्नुकं" इति मर्दयेत् । "अतो देवा अवन्तु नः" इत्येताभिर्ऋग्भिर्विष्णुगायत्र्या त्रिवारमभिमन्त्र्य,

शंखचक्रगदापाणे द्वारकानिलयाच्युत ।
गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागतम् ॥

इति मां ध्यात्वा, गृहस्थो ललाटादिस्थलेष्वनामिकाङ्गुल्या विष्णुगायत्र्या केशवादिद्वादशनामभिर्वा धारयेत् । ब्रह्मचारी वानप्रस्थो ललाटकण्ठहृदयबाहुमूलेषु वैष्णवगायत्र्या कृष्णादिपञ्चनामभिर्वा धारयेत् । यतिस्तर्जन्या शिरोललाटहृदयेषु प्रणवेन धारयेत् । ब्रह्मादयस्त्रयो मूर्तयस्तिस्रो व्याहृतयस्त्रीणि छन्दांसि त्रयो लोकाः त्रयो वेदास्त्रयः स्वराः त्रयोऽग्नयो ज्योतिष्मन्तस्त्रयः कालास्तिस्रोऽवस्थास्त्रय आत्मानः पुण्ड्रास्त्रयः ऊर्ध्वाः अकारोकारमकाराः एते सर्वे प्रणवमयोर्ध्वपुण्ड्रत्रयात्मकास्तदेतदोमित्येकधा समभवन् । परमहंसो ललाटे प्रणवेनैकमूर्ध्वपुण्ड्रं वा धारयेत् । तत्र दीपप्रकाशं स्वमात्मानं परं ब्रह्मैवाहमस्मीति भावयन् योगी मत्सायुज्यमवाप्नोति ॥

अथान्यो हृदयस्योर्ध्वं पुण्ड्रं मध्ये वहुहृदयकमलमध्ये वा स्वमात्मानं भावयेत् ॥

तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता ।

गोपी का । का नाम संरक्षणी । कुतः संरक्षणी । लोकस्य नरकात् मृत्योर्महाभयाच्च संरक्षणी । चन्दनं तुष्टिकरणम् । किं तुष्टिकरणम् । ब्रह्मानन्दकारणम् । य एवं विद्वानेतदाख्यापयेत् । य एतच्च धारयेद्गोपीचन्दनमृत्तिकानिरुक्त्यानि (?) धारणमात्रेण च ब्रह्मलोके महीयते ब्रह्मलोके महीयत इति ॥

गोप्यो नाम विष्णुपत्न्यस्तासां चन्दनं आह्लादनम् । कश्चाह्लाद एष ब्रह्मानन्दरूपः । काश्च विष्णुपत्न्यो गोप्यो नाम जगत्सृष्टिस्थित्यन्तकारिण्यः प्रकृतिमहदहमाद्या महामायाः । कश्च विष्णुः परं ब्रह्मैव विष्णुः । कश्चाह्लादो गोपीचन्दनसंसक्तमानुषाणां पापसंहरणाच्छुद्धान्तःकरणानां ब्रह्मज्ञानप्राप्तिश्च य एवं वेद । इत्युपनिषत् ॥

गोपीत्यग्र उच्यताम् । चन्दनं तु ततः पश्चात् । गोपीत्यक्षरद्वयम् । चन्दनं त्र्यक्षरम् । तस्मादक्षरपञ्चकम् । य एवं विद्वान् गोपीचन्दनं धारयेदक्षयं पदमाप्नोति । पंचत्वं न स पश्यति । ततोऽमृतत्वमश्नुत इति । अथ मायाशबलितब्रह्मासीत्ततश्च महदाद्या ब्रह्मणो महामायासंमीलनात् पंचभूतेषु गन्धवती पृथिव्यासीत् । पृथिव्याश्च वैभवाणवभेदाः पीतवर्णा मृदो जायन्ते । लोकानुग्रहार्थं मायासहितं ब्रह्म संभोगवशादस्य चन्दनस्य वैभवं य एवं विद्वान् यतिहस्ते दद्यादनुग्रहार्थं मायापल्लवः सर्वमायुरेति ॥ ततः प्राजापत्यं रायस्पोषं गौपत्यं यच्च एतद्रहस्यं सायंप्रातर्ध्यायेदहोरात्रकृतं पापं नाशयति मृतो मोक्षमश्नुते मृतो मोक्षमश्नुत इति ॥

गोपीचन्दनपङ्केन ललाटं यस्तु लेपयेत् ।
एकदण्डी त्रिदण्डी वा स वै मोक्षं समश्नुते ॥ १ ॥
गोपीचन्दनलिप्ताङ्गो यं यं पश्यति चक्षुषा ।
तं तं पूतं विजानीयाद्राजभिः सत्कृतो भवेत् ॥ २ ॥

ब्रह्मघ्नश्च कृतघ्नश्च गोघ्नश्च गुरुतल्पगः ।
तेषां पापानि नश्यन्ति गोपीचन्दनधारणात् ॥ ३ ॥
गोपीचन्दनलिप्ताङ्गो म्रियते यत्र कुत्रचित् ।
अभिव्यग्प्यायतो भूत्वा देवेन्द्रपदमश्नुते ॥ ४ ॥
गोपीचन्दनलिप्ताङ्गं पुरुषं य उपासते ।
एवं ब्रह्मादयो देवाः सन्मुखास्तमुपासते ॥ ५ ॥
गोपीचन्दनलिप्ताङ्गः पुरुषो येन पूज्यते ।
विष्णुपूजितभूतित्वाद्विष्णुलोके महीयते ॥ ६ ॥
सदाचारः शुभाकल्पो मिताहारो जितेन्द्रियः ।
गोपीचन्दनलिप्ताङ्गः साक्षाद्विष्णुमयो भवेत् ॥ ७ ॥
गोपीचन्दनलिप्ताङ्गो व्रतं यस्तु समाचरेत् ।
ततः कोटिगुणं पुण्यमित्येवं मनुरब्रवीत् ॥ ८ ॥
गीपीचन्दनलिप्ताङ्गैर्जपदानादिकं कृतम् ।
न्यूनं संपूर्णतां याति विधानेन विशेषतः ॥ ९ ॥
गोपीचन्दनमायुष्यं बलारोग्यविवर्धनम् ।
कामदं मोक्षदं चैव इत्येवं मुनयोऽब्रुवन् ॥ १० ॥
अग्निष्टोमसहस्राणि वाजपेयशतानि च ।
तेषां पुण्यमवाप्नोति गोपीचन्दनधारणात् ॥ ११ ॥
गोपीचन्दनदानस्य चाश्वमेधसमं फलम् ।
न गङ्गया समं तीर्थं न शुद्धिर्गोपिचन्दनात् ॥ १२ ॥
बहुनात्र किमुक्तेन गोपीचन्दनमण्डनम् ।
न तत्तुल्यं भवेल्लोके नात्र कार्या विचारणा ॥ १३ ॥
चन्दनं वापि गोपीनां केलिकुङ्कुमसम्भवम् ।
मण्डनात् पावनं नृणां भुक्तिमुक्तिफलप्रदम् ॥ १४ ॥

कृष्णगोपीरतोद्भूतं पापघ्नं गोपिचन्दनम् ।
तत्प्रदानात्सर्ववेदचतुर्वर्गफलप्रदम् ॥ १५ ॥
तिलमात्रप्रदानेन काञ्चनाद्रिसमं फलम् ।
कुङ्कुमं कृष्णगोपीनां जलक्रीडासु संभृतम् ॥ १६ ॥
गोपीचन्दनमित्युक्तं द्वारवत्यां सुरेश्वरैः ।
कृष्णगोपीजलक्रीडाकुङ्कुमं चन्दनैर्युतम् ॥ १७ ॥
तिलमात्रं प्रदायेदं पुनात्यादशमं कुलम् ।
गोपीचन्दनखण्डं तु चक्राकारं सुलक्षणम् ।
विष्णुरूपमिदं पुण्यं पावनं पीतवर्णकम् ॥ १८ ॥

आपो ह वाग्रे आसन् । तत्र प्रजापतिर्वायुर्भूत्वाश्राम्यतेदं सृजेयमिति । स तपोऽतप्यत । तत ओङ्कारमपश्यत्ततो व्याहृतीस्ततो गायत्री गायत्र्या वेदास्तैरिदमसृजत् । धूममार्गविसृतं हि वेदार्थमभिसन्धाय चतुर्दश लोकानसृजत् । तत उपनिषदः श्रुतयः आविर्बभूवुः । अर्चिर्मार्गविसृतं वेदार्थमभिसन्धाय सर्वान् वेदान् सरहस्योपनिषदङ्गान् ब्रह्मलोके स्थापयामास । स एताश्चोपनिषद्वैवस्वतेन्तरे सगुणं ब्रह्म विधिनानन्दैकरूपं पुरुषोत्तमरूपेण मथुरायां वसुदेवसद्मन्याविर्भविष्यति । तत्रभवत्यः सर्वलोकैः कृष्णसौन्दर्यं क्रीडाभोगागोपिकास्वरूपैः परब्रह्मानन्दैकरूपं कृष्णं भजिष्यथ । तत्र श्लोकौ—

इति ब्रह्मवरं लब्ध्वा श्रुतयो ब्रह्मलोकगाः ।
कृष्णमाराधयामासुर्गोकुले धर्मसंकुले ॥
श्रीकृष्णाख्यपरं ब्रह्म गोपिकाः श्रुतयोऽभवन् ।
एतत्संभोगसंभूतं चन्दनं गोपिचन्दनम् । इति ॥

इत्यथर्ववेदोक्तगोपीचन्दनोपनिषत् समाप्ता

# तुलस्युपनिषत्

अथ तुलस्युपनिषदं व्याख्यास्यामः । नारद ऋषिः । अथर्वाङ्गिरश्छन्दः । अमृता तुलसी देवता । सुधा बीजम् । वसुधा शक्तिः । नारायणः कीलकम् । श्यामां श्यामवपुर्धरां ऋक्स्वरूपां यजुर्मनां [?] ब्रह्माथर्वप्राणां कल्पहस्तां पुराणपठितां अमृतोद्भवां अमृतरसमञ्जरीं अनन्तां अनन्तरसभोगदां वैष्णवीं विष्णुवल्लभां मृत्युंजन्मनिबर्हणीं दर्शनात्पापनाशिनीं स्पर्शनात्पावनीं अभिवन्दनाद्रोगनाशिनीं सेवनान्मृत्युनाशिनीं वैकुण्ठार्चनाद्विपद्धन्त्रीं भक्षणात् वयुनप्रदां प्रादक्षिण्याद्दारिद्र्यनाशिनीं मूलमृल्लेपनान्महापापभञ्जिनीं घ्राणतर्पणादन्तर्मलनाशिनीं य एवं वेद स वैष्णवो भवति । वृथा न छिन्द्यात् । दृष्ट्वा प्रदक्षिणं कुर्यात् । यां न स्पृशेत् । पर्वणि न विचिन्वेत् । यदि विचिन्वति स विष्णुहा भवति । श्रीतुलस्यै स्वाहा । विष्णुप्रियायै स्वाहा । अमृतायै स्वाहा । श्रीतुलस्यै विद्महे विष्णुप्रियायै धीमहि । तन्नो अमृता प्रचोदयात् ॥

अमृतेऽमृतरूपासि अमृतत्वप्रदायिनि ।
त्वं मामुद्धर संसारात् क्षीरसागरकन्यके ॥
श्रीसखि त्वं सदानन्दे मुकुन्दस्य सदा प्रिये ।
वरदाभयहस्ताभ्यां मां विलोकय दुर्लभे ॥
अवृक्षवृक्षरूपासि वृक्षत्वं मे विनाशय ।
तुलस्यतुलरूपासि तुलाकोटिनिभेऽजरे ॥
अतुले त्वतुलायां हि हरिरेकोऽस्ति नान्यथा ।
त्वमेव जगतां धात्री त्वमेव विष्णुवल्लभा ॥

त्वमेव सुरसंसेव्या त्वमेव मोक्षदायिनी ।
त्वच्छायायां वसेल्लक्ष्मीस्त्वन्मूले विष्णुरव्ययः ॥
समन्ताद्देवताः सर्वाः सिद्धचारणपन्नगाः ।
यन्मूले सर्वतीर्थानि यन्मध्ये ब्रह्मदेवताः ॥
यदग्रे वेदशास्त्राणि तुलसीं तां नमाम्यहम् ।
तुलसि श्रीसखि शुभे पापहारिणि पुण्यदे ॥
नमस्ते नारदनुते नारायणमनःप्रिये ।
ब्रह्मानन्दाश्रुसंजाते बृन्दावननिवासिनि ॥
सर्वावयवसंपूर्णे अमृतोपनिषद्रसे ।
त्वं मामुद्धर कल्याणि महापापाब्धिदुस्तरात् ॥
सर्वेषामपि पापानां प्रायश्चित्तं त्वमेव हि ।
देवानां च ऋषीणां च पितॄणां त्वं सदा प्रिये ॥
विना श्रीतुलसीं विप्रा येऽपि श्राद्धं प्रकुर्वते ।
वृथा भवति तच्छ्राद्धं पितॄणां नोपगच्छति ॥
तुलसीपत्रमुत्सृज्य यदि पूजां करोति वै ।
आसुरी सा भवेत् पूजा विष्णुप्रीतिकरी न च ॥
यज्ञं दानं जपं तीर्थं श्राद्धं वै देवतार्चनम् ।
तर्पणं मार्जनं चान्यन्न कुर्यात्तुलसीं विना ॥
तुलसीदारुमणिभिः जपः सर्वार्थसाधकः ।
एवं न वेद यः कश्चित् स विप्रः श्वपचाधमः ॥

इत्याह भगवान् ब्रह्माणं नारायणः, ब्रह्मा नारदसनकादिभ्यः, सनकादयो वेदव्यासाय, वेदव्यासः शुकाय, शुको वामदेवाय, वामदेवो मुनिभ्यः, मुनयो मनुभ्यः प्रोचुः । य एवं वेद स स्त्रीहत्यायाः प्रमुच्यते । स वीरह-

त्यायाः प्रमुच्यते । स ब्रह्महत्यायाः प्रमुच्यते । स महाभयात् प्रमुच्यते । स महादुःखात् प्रमुच्यते । देहान्ते वैकुण्ठमवाप्नोति वैकुण्ठमवाप्नोति । इत्युपनिषत् ॥

इति तुलस्युपनिषत् समाप्ता

---

# नारदोपनिषत्

अथ प्रणिपत्य नारदो ब्रह्माणं प्रायुङ्क्त । अधीहि भगवन्मे किं पवित्राणां पवित्रं केन सुकरेणामृतत्वमेति । स होवाच साधुत्वे नियोगं सुलभं पवित्रं सुलभं सुकरं तद्विष्णुक्षेत्रं तत्र मृदं श्वेतं "उद्धृतासि" इत्युद्धरेत् । अमृतमेव श्वेतमृद्भवति । मूलमन्त्रद्वयं च "विष्णोर्नुकम्," "गन्धद्वाराम्" इत्येताभिरभिमन्त्रयेत् । देवपितृकर्माण्यारभमाणस्त्रयी नित्यमूर्ध्वपुण्ड्रं च कुर्यान्मन्त्रैः केशवादीनाम् । तत्कर्म सफलं च भवति । न रक्षांसि गृह्णीयुः । तदेवमभ्युक्त भवति । नासादिकेशान्तमूर्ध्वपुण्ड्रं विष्णोः स्थितस्य चरण-द्वयाकृति । आयतमेकाङ्गुलं पादतरोरस्य मूलम् । तदुत्पन्ने द्वे रेखे । तथैव च धृतं विष्णुना वा "आदित्यवर्णे तपसः" इति हरिद्रां श्रीफले धारयेत् । तज्जलेन श्रीबीजेन संमृज्य तत्सूक्ष्मरेखां धारयेत् । ते द्वे शाखे हंसवर्णे गायत्रीत्रिष्टुब्दैवत्ये आत्मपरमात्मदैवत्ये लक्ष्मीनारायणदैवत्ये दर्शपूर्णमासेष्टके इष्टापूर्तक्रिये . . . .

मातृकाय मितावदेवोपलब्धम्

---

# नारायणपूर्वतापिनीयोपनिषत्

## प्रथमः खण्डः

अथ ब्रह्माणं भगवन्तं सनत्कुमारः पप्रच्छ । कीदृशं नारायणाष्टाक्षरं भवतीति व्याचष्टे । अथ यो वै नारायणः स भगवान् परब्रह्मण आनन्दो भवति । ज्ञात्वा जीवन्मुक्तो भवति । सच्चिदानन्दस्वरूपपरवस्तु भवति । अष्टाक्षरं अष्टमूर्तिं भवति । प्रथमरूपः पृथिवीरूपो भवति । द्वितीयमापो भवति । तृतीयस्तेजो भवति । चतुर्थो वायुर्भवति । पञ्चम आकाशो भवति । षष्ठश्चन्द्रमा भवति । सप्तमः सूर्यो भवति । अष्टमो यजमानः ॥

भूमिरापस्तथा तेजो वायुर्व्योम च चन्द्रमाः ।
सूर्यः पुमांस्तथाचेति मूर्तयश्चाष्ट कीर्तिताः ॥

अकारोकारमकारनादबिन्दुकलानुसन्धानध्यानाष्टविधा अष्टाक्षरं भवति । अकारः सद्योजातो भवति । उकारो वामदेवः । अघोरो मकारो भवति । तत्पुरुषो नादः । बिन्दुरीशानः । कला व्यापको भवति । अनुसन्धानो नित्यः । ध्यानस्वरूपं ब्रह्म । सर्वव्यापकोऽष्टाक्षरः ॥

नारायणः परं ब्रह्म ज्ञानं नारायणः परः ।
नारायणं महापुरुषं विश्वमात्मानमव्ययम् ॥
अन्तर्बहिश्च तत्सर्वं स्थितो नारायणः परः ।
सहस्रशीर्षं देवमक्षरं परमं पदम् ॥
नारायणं शिवं शान्तं सर्ववेदान्तगोचरम् ।
सृष्टिः स्थितिश्च संहारतिरोधानानुसंमतम् ।
पञ्चकृत्यस्य कर्तारं नारायणमनामयम् ॥

इत्याथर्वणरहस्ये नारायणपूर्वतापिनीये प्रथमः खण्डः

---

## द्वितीयः खण्डः

स होवाच भगवान् ब्रह्मा नारायणाष्टाक्षरमन्त्रं व्याचष्टे। श्रीमन्नारायणस्य दशमन्त्राः कथ्यन्ते। ॐ नमो नारायणाय इत्यष्टाक्षरो मन्त्रः। स एव मन्त्रराजो भवति। एतन्नारायणस्य तारकं भवति। तदेवोपासितव्यं भवति। इत्युवाच भगवान्नारायणशब्दपरब्रह्मश्रीमहामाया-प्रकृतिसर्वमेकजननीलक्ष्मीर्भवति। देवानां देवलक्ष्मीर्भवति। सिद्धानां सिद्धलक्ष्मीर्भवति। मुमुक्षूणां मोक्षलक्ष्मीर्भवति। योगिनां योगलक्ष्मीर्भवति। मुनीनां विवेकबुद्धिर्भवति। राज्ञां राज्यलक्ष्मीर्भवति। सृष्टिरूपा सरस्वती भवति। स्थितिरूपा महालक्ष्मीर्भवति। संहाररूपा रुद्राणी भवति। तिरोधानकरी पार्वती भवति। अनुग्रहरूपा उमा भवति। पञ्चकृत्यरूपा परमेश्वरी भवति। श्रीमहालक्ष्म्यै नम इति सप्ताक्षरो मन्त्रः॥

सर्वेषामेव भूतानां महासौभाग्यदायिनी।
महालक्ष्मीर्महादेवी सर्वलोकैकमोहिनी॥
साम्राज्यदायिनी नित्यं सर्ववेदस्वरूपिणी।
महाविद्या जगन्माता मुनीनां मोक्षदायिनी।
ज्ञानिनां ज्ञानदा सत्यं दानवानां विनाशिनी॥

इति महालक्ष्मीर्मूलप्रकृतिर्भवति। नारायणः स भगवान् परब्रह्मस्व-रूपी सर्ववेदान्तगोचरः नित्यशुद्धबुद्धपरब्रह्मानन्दमयो भवति। तस्माल्लक्ष्मी-नारायण इति स होवाच भगवान् य एवं वेद। इत्युपनिषत्॥

इत्याथर्वणरहस्ये नारायणपूर्वतापिनीये द्वितीयः खण्डः

---

## तृतीयः खण्डः

स होवाच भगवान् ब्रह्मा नारायणमन्त्रः कीदृशो भवति । "ॐ नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात्" इति गायत्री भवति । "इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे।", "अतो देवा भवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिः" इति मन्त्रद्वयेन नारायणप्रतिपादितं भवति । "स ब्रह्मा स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट्"। नारायणायेति पञ्चाक्षरं भवति । ॐ नमो विष्णव इति षडक्षरं विज्ञातम् । नमो नारायणायेति सप्ताक्षरं भवति । ॐ नमो भगवते वासुदेवायेति द्वादशं परिकीर्तितम् । ॐ श्रीं ह्रीं क्लीं नमो नारायणाय स्वाहा । यस्य कस्यापि न देयम् ।

पुत्रो देयः शिरो देयं न देया षोडशाक्षरी ।
न वदेद्यस्य कस्यापि किं तु शिष्याय तां वदेत् ॥

ॐ श्रीं ह्रीं नमो भगवते लक्ष्मीनारायणाय विष्णवे वासुदेवाय स्वाहा ॥

श्रीमहाविष्णवे तुभ्यं नमो नारायणाय च ।
गोविन्दाय च रुद्राय हरये ब्रह्मरूपिणे ॥
नारायण महाविष्णो श्रीधरानन्त केशव ।
वासुदेव जगन्नाथ हृषीकेश नमो नमः ॥

इत्यनुष्टुब्द्वयं मन्त्रं व्याख्यातम् । अथ मालामन्त्रं व्याख्यास्यामः । स होवाच भगवान् ब्रह्मा य एवं वेद । इत्युपनिषत् ॥

इत्याथर्वणरहस्ये नारायणपूर्वतापिनीये तृतीयः खण्डः

---

## चतुर्थः खण्डः

स होवाच भगवान् पितामहः गायत्रीं व्याचष्टे । गोविन्दाय विद्महे वासुदेवाय धीमहि । तन्नो नारायणः प्रचोदयात् । कामदेवाय विद्महे पुष्पबाणाय धीमहि । तन्नोऽनङ्गः प्रचोदयात् । महादेव्यै च विद्महे विष्णुपत्नी च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् । "विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाꣳसि यो अस्कभायदुत्तरꣳ सधस्थं विचक्रमाणस्त्रेधोरुगायः", "त्रिर्देवः पृथिवीमेष एताम् । विचक्रमे शतर्चसं महित्वा । प्रविष्णुरस्तु तवसस्तवीयान् । त्वेषꣳ ह्यस्य स्थविरस्य नाम ।"

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि ॥

"प्रतद्विष्णुस्तवते वीर्याय । मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेषु । अधिक्षियन्ति भुवनानि विश्वा ।", "य ईꣳ शृणोत्यलकꣳ शृणोति । न हि प्रवेद सुकृतस्य पन्थाम् ।" अक्षन्वन्तः कर्णवन्तः सखायो मनो जीवेष्वसमा बभूवुः । तस्माल्लक्ष्मीनारायणं सर्वबीजं सर्वभूताधिवासं यो वेत्ति स विद्वान् भवति । उपासकानां मोक्षप्राप्तिर्भवति । स जीवन्मुक्तो भवति । स होवाच भगवान् उपासनविधिं व्याचष्टे । ब्रह्मा ऋषिर्भवति । गायत्री छन्द उच्यते । श्रीमन्नारायणपरमात्मा देवता । प्रणवं बीजम् । नमः शक्तिरुच्यते । कीलकं नारायणेति ॥

धर्मार्थकाममोक्षेषु विनियोगोऽथ भावना ।

महोल्काय वीरोल्काय वृद्धोल्काय पृथूल्काय विद्युल्काय ज्वलदुल्काय च षडङ्गकल्पिताः नमःस्वाहावषड्वौषट्पदान्ता अङ्गन्यासा भवन्ति ।

नीलजीमूतसंकाशं पीतकौशेयवाससम् ।
किरीटकुण्डलधरं कौस्तुभोद्भासितोरसम् ॥

शङ्खचक्रगदाखड्गधारिणं वनमालिनम् ।
वामभागे महालक्ष्म्यालिङ्गितार्धशरीरिणम् ॥
सनकादिभिः संसेव्यं स्तूयमानं महर्षिभिः ।
ब्रह्मादिभिः सदा ध्येयं ध्यात्वा नारायणं विभुम् ॥
कर्मणा मनसा वाचा संस्मरेत् प्रजपेत् सुधीः ।
अयुतं जपमात्रेण सर्वज्ञानप्रदो भवेत् ॥
लक्षमात्रं तु प्रजपेत् स्वस्वरूपं भवेन्मनुः ।
अत ऊर्ध्वं सदा ध्यायेत् साक्षान्नारायणो हरिः ॥

स होवाच भगवान् य एवं वेद । इत्युपनिषत् ॥

इत्याथर्वणरहस्ये नारायणपूर्वतापिनीये चतुर्थः खण्डः

---

### पञ्चमः खण्डः

स होवाच भगवान् ब्रह्मा दशकळात्मकोऽवतारः कथ्यते ॥

जरा पालिनिका शान्तिरीश्वरी रतिकामिका ।
वरदा ह्लादिनी प्रीतिर्दीर्घा दशकला हरेः ॥

नारायणादवतारा मन्त्ररूपा जायन्ते । ॐ नमो नारायणाय स्वाहा । एवं दशाक्षरो महामन्त्रो भवति । तत्र प्रथमो मत्स्यावतारः । द्वितीयः कूर्मः । तृतीयो वराहः । चतुर्थो नरसिंहः । पञ्चमो वामनः । षष्ठो जमदग्निः । सप्तमो रामचन्द्रः । अष्टमः कृष्णः परमात्मा । नवमो बुद्धावतारः । दशमः कल्किर्जनार्दनः । ॐ मत्स्यावताराय नमः । श्रीं कूर्मावताराय नमः । ह्रीं वराहावताराय नमः । हुं नृसिंहावताराय नमः ।

सौः वामनावताराय नमः । ऐं परशुरामावताराय नमः । ग्लौं रामचन्द्राय नमः । क्लीं कृष्णाय नमः । ब्लूं बुद्धावताराय नमः । सः कल्क्यवताराय नमः इति । प्रजापतिः प्रजायते । तस्मान्नारायणः प्रजायते । ब्रह्मा जायते । ब्रह्मणःसकाशात् पञ्चमहाभूतानि तन्मात्राणि जायन्ते । ज्ञानेन्द्रिय-कर्मेन्द्रियाणि मनोबुद्धिचित्ताहंकारा जायन्ते । प्रकृतिर्जायते । चतुर्विंशति-तत्त्वात्मको नारायणः । पञ्चविंशतितत्त्वात्मकः पुरुषत्वं परब्रह्म भवेत् । शिवश्च नारायणः । शक्रश्च नारायणः । दिशश्च नारायणः । ऊर्ध्वञ्च नारायणः । अन्तश्च नारायणः । नारायणः सर्वं खल्विदं ब्रह्म । तस्मान्नारायणादण्डजस्वेदजोद्भिज्जजरायुजमनसिजादयः सर्वे महाभूताः प्रजायन्ते ॥

अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीꣳ सरूपाम् ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥

अण्डजाः सर्वखगरूपा जायन्ते । स्वेदजाः क्रिमिकीटादयः । उद्भिज्जास्तरुगुल्मलतादयः । जरायुजा नरपशुमृगादयो जायन्ते । मनसिजा नारदादयः सर्वे ऋषयः । नारायणः स्थावरजङ्गमात्मको भवति । अष्टवसवो नारायणः । एकादशरुद्रा नारायणः । नारायणात् द्वादशादित्याः । सर्वे देवा ऋषयो मुनयः सिद्धगन्धर्वयक्षरक्षःपिशाचाः सर्वे नारायणः । नारायण एवेदं सर्वम् । लक्ष्मीर्मूलप्रकृतिरिति विज्ञायते । वस्त्वेकं परब्रह्म नारायणः सनातनः ॥

साक्षान्नारायणो देवः परब्रह्माभिधीयते ।
सच्चिदानन्दात्मकाः स्युर्विष्णौ नित्ये प्रकल्पिताः ।
नानाविधानि रूपाणि हाटके कटकादिवत् ॥

" चत्वारि वाक्परिमिता पदानि । तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति । तुरीयं वाचो मनुष्या वदन्ति ।" परापश्यन्तीमध्यमावैखरीरूपा सरस्वतीति चतुर्विधा वाचो वदन्ति । वैखरी सर्वविद्यासु प्रशस्ता ॥

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वं मन्त्रशास्त्रकम् ।
विद्याश्चाष्टादश प्रोक्ता नारायणनिवेशिताः ॥

तस्य निश्वसितमेव ऋग्वेदो यजुर्वेदः सामवेदो ह्यथर्वाङ्गिरश्चेति । सर्ववेदवेदान्तानां नारायणपरब्रह्मण्येव तात्पर्यम् । स होवाच भगवान् य एवं वेद । इत्युपनिषत् ॥

इत्याथर्वणरहस्ये नारायणपूर्वतापिनीये पञ्चमः खण्डः

---

## षष्ठः खण्डः

स होवाच भगवान् ब्रह्मा नारायणयन्त्रमन्त्रावरणपूजामाचचक्षे । त्रिकोणं प्रथमं भवति । द्वितीयं षट्कोणं भवति । वृत्तमष्टदलं तृतीयम् । चतुर्थं द्वादशदलम् । पञ्चमं षोडशदलम् । चतुर्विंशति[:]षष्ठम् । द्वात्रिंशति[:] सप्तमम् । अष्टमं भूपुरम् । एवं यन्त्रं समालिखेत । मध्ये लक्ष्मीनारायणं विक्षेपशक्त्यावरणं शक्तिप्रभाशक्तित्रिकोणदेवताः षट्कोणं वृद्धोल्कादयः पूज्याः । सर्वज्ञानित्वतृप्त्यनादिबोधस्वतन्त्रनित्यमलुप्तानन्तं षट्कोणशक्तयः । सनकसनन्दनसनत्सुजातसनत्कुमारसनातननारदतुम्बुरुसमन्तादयोऽष्टदलाः ।

वसिष्ठवालखिल्यविश्वामित्रकश्यपात्रिभरद्वाजाङ्गीरसजामदग्निगौतमागस्त्यजाबालिकपिला द्वादशदलाः । मत्स्यकूर्मवराहनारसिंहवामनरामरामकृष्णबुद्धकल्किसद्योजातवामदेवा अघोरतत्पुरुषेशानपरमेश्वराः षोडशदलाः । शंखचक्रगदापद्मखड्गश्रीवत्सकौस्तुभवनमालादिकिरीटकुण्डलकेयूरहाराङ्गदशार्ङ्गिशरनन्दकपद्मवेणुबर्हिपिञ्छशेषानन्तगरुडविष्वक्सेनब्रह्माणश्चतुर्विंशतिदलाः केशवादिचतुर्विंशत्यनुक्रमम् । हरिश्रीकृष्णमुकुन्दकुमुदाक्षपुण्डरीकाक्षधामकशङ्खवर्णसर्वनेत्रसुमुखसुप्रतीका द्वात्रिंशद्दलाः । ऐरावतपुण्डरीकवामनकुमुदाञ्जनपुष्पदन्तसार्वभौमसुप्रतीकाक्षाश्चतुरश्रदेवताः । ॐ नमो नारायणायाष्टाक्षरसंज्ञावरणदेवतापूजा कर्तव्या । स होवाच भगवान् य एवं वेद । इत्युपनिषत् ॥

इत्याथर्वणरहस्ये नारायणपूर्वतापिनीये षष्ठः खण्डः

इति नारायणपूर्वतापिनीयोपनिषत् समाप्ता

---

# नारायणोत्तरतापिनीयोपनिषत्

## प्रथमः खण्डः

स होवाच भगवान् ब्रह्मा आनन्दं ब्रह्मणो विद्वान् सच्चिदानन्दस्वरूपो भवति ।

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥
यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥

अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥
वासनाद्वासुदेवस्य वासितं हि जगत्त्रयम् ।
सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ॥

भूश्च नारायणः । भुवश्च नारायणः । सुवश्च नारायणः । महश्च नारायणः । जनश्च नारायणः । तपश्च नारायणः । सत्यं च नारायणः । नारायणः परं ब्रह्म । नारायण एवेदं सर्वम् । नारायणान्न किञ्चिदस्ति । सत्य ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात्पुरुषः । नारायणः सर्वपुरुष एवेदं परब्रह्म । नारायणः सर्वभूतान्तर्याम्यात्मा । आत्मेदं सर्वं नारायणः । नारायणः स्वयं ज्योतिः । तस्मात्प्रकाशात्मा ॥

नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा ।
तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ॥
पाशबद्धः स्मृतो जीवः पाशमुक्तः सनातनः ।
तुषेण बद्धो व्रीहिः स्यात्तुषाभावेन तण्डुलः ॥
परब्रह्म स्वयं चात्मा साक्षान्नारायणः स्मृतः ।
नारायणमनादिं च योगनिद्रापरायणम् ॥
जाग्रत्स्वप्नसुषुप्तीषु सर्वकालव्यवस्थितम् ।
नारायणं महात्मानं महाध्यानपरायणम् ।
सर्ववेदान्तसंलक्ष्यं तद्ब्रह्मेत्यभिधीयते ॥

स होवाच भगवान् नारायण एवेदं सर्वं प्रतिष्ठितं य एवं वेद । इत्युपनिषत् ॥

इत्याथर्वणरहस्ये नारायणोत्तरतापिनीये प्रथमः खण्डः

---

## द्वितीयः खण्डः

स होवाच भगवान् ब्रह्मा नारायणः परवस्तु भवतीति विज्ञायते ।

सच्चिदानन्दरूपाय ज्ञानायामिततेजसे ।
परब्रह्मस्वरूपाय नारायण नमोऽस्तु ते ॥
नित्यशुद्धाय बुद्धाय नित्यायाद्वैतरूपिणे ।
आनन्दायात्मरूपाय नारायण नमोऽस्तु ते ॥

ओं नमो भगवते श्रीमन्नारायणाय महाविष्णवे अमितबलपराक्रमाय शङ्खचक्रगदाधराय लक्ष्मीसमेताय गरुडवाहनाय दशावताराय सर्वदुष्टदैत्यदानवसंहरणाय शिष्टप्रतिपालकाय परब्रह्मरूपाय महात्मने परमपुरुषाय पुण्डरीकाक्षाय पुराणपुरुषाय शुद्धबुद्धाय सच्चिदानन्दस्वरूपाय महात्मने घृणिः सूर्य आदित्य ॐ नमो नारायणाय सहस्रार हुं फट् स्वाहा ॥

नारायणाय शान्ताय शाश्वताय मुरारये ।
यज्ञेश्वराय यज्ञाय शरण्याय नमो नमः ॥

स होवाच भगवान् ब्रह्मा सर्वं विश्वमिदं नारायणः य एवं वेद इत्युपनिषत् ॥

इत्याथर्वणरहस्ये नारायणोत्तरतापिनीये द्वितीयः खण्डः

---

## तृतीयः खण्डः

स होवाच भगवान् ब्रह्मा नारायणः परब्रह्मेति य एवं वेद । नारायणात्मा वेदं सर्वं निर्विकारं निरञ्जनवस्तु प्रतिपाद्यते । स नारायणो विराट्पुरुषो भवति । देवानां वासवो भवति । इन्द्रियाणां मनो भवति ।

सर्वेषां वस्तूनां मुख्यवस्तु भवति। ॐ नमो नारायणादन्यो मन्त्रः नारायणादन्योपास्तिर्नास्ति। नान्यन्नारायणादुपासितव्यम्। सर्वं नारायण एव भवतीति विज्ञायते। योऽधीते नित्यं सर्वान् कामानवाप्नोति। स ब्रह्महत्यायाः पूतो भवति। सुरापानात् पूतो भवति। स्वर्णस्तेयात् पूतो भवति। गुरुतल्पगमनात् पूतो भवति। अगम्यागमनात् पूतो भवति। अभक्ष्यभक्षात् पूतो भवति। स उपपातकमहापातकेभ्यः पूतो भवति। सर्ववेदमधीयानो भवति। सर्वक्रतुफलं प्राप्नोति। सर्वकर्मकर्ता भवति। चतुःसमुद्रपर्यन्तभूदानफलं प्राप्नोति। द्विजोत्तमो भवति। चतुर्वर्गफलं प्राप्नोति। ब्रह्मचारी ज्ञानवान् भवति। गृही पुत्रपौत्रमहैश्वर्यवान् भवति। सन्न्यासी मोक्षवान् भवति॥

पठनाच्छ्रवणाद्वाऽपि सर्वान् कामानवाप्नुयात्।
नारायणप्रसादेन वैकुण्ठपदमश्नुते॥

इति स होवाच भगवान् य एवं वेद। इत्युपनिषत्॥

वेदाक्षराणि यावन्ति पठितानि द्विजोत्तमैः।
तावन्ति हरिनामानि कीर्तितानि न संशयः॥
नारायण हरे कृष्ण वासुदेव जगद्गुरो।
मुकुन्दाच्युत देवेश महाविष्णो नमोऽस्तु ते॥
भूतानि तत्त्वसंज्ञानि कूटस्थोऽक्षरसंज्ञितः।
उत्तमश्चापि पुरुषो नारायण इतीर्यते॥

इत्याथर्वणरहस्ये नारायणोत्तरतापिनीये तृतीयः खण्डः

इति नारायणोत्तरतापिनीयोपनिषत् समाप्ता

---

# नृसिंहषट्चक्रोपनिषत

ॐ देवा ह वै सत्यं लोकमायंस्तं प्रजापतिमपृच्छन्नारसिंहचक्रन्नो ब्रूहीति। तान्प्रजापतिर्नारसिंहचक्रमवोचत्। षड्वै नारसिंहानि चक्राणि भवन्ति। यत् प्रथमं तच्चतुररं यद्द्वितीयं तच्चतुररं यत्तृतीयं तदष्टारं यच्चतुर्थं तत्पञ्चारं यत्पञ्चमं तत्पञ्चारं यत् षष्ठं तदष्टारं तदेताति षडेव नारसिंहानि चक्राणि भवन्ति ॥

अथ कानि नामानि भवन्ति। यत् प्रथमं तदाचक्रं यद्द्वितीयं तत्सुचक्रं यत्तृतीयं तन्महाचक्रं यच्चतुर्थं तत्सकललोकरक्षणचक्रं यत्पञ्चमं तद्द्यूतचक्रं यद्वै षष्ठं तदसुरान्तकचक्रं तदेतानि षडेव नारसिंहचक्रनामानि भवन्ति ॥

अथ कानि त्रीणि वलयानि भवन्ति। यत्प्रथमं तदान्तरवलयं भवति। यद्द्वितीयं तन्मध्यमं वलयं भवति। यत् तृतीयं तद्बाह्यं वलयं भवति। तदेतानि त्रीण्येव वलयानि भवन्ति। यदा तद्वैतद्बीजं यन्मध्यमं तां नारसिंहगायत्रीं यद्बाह्यं तन्मन्त्रः ॥

अथ किमान्तरं वलयम्। षड्वान्तराणि वलयानि भवन्ति। यन्नारसिंहं तत्प्रथमस्य यन्माहालक्ष्म्यं तद्द्वितीयस्य यत्सारस्वतं तत्तृतीयस्य यस्य यत्कामं देवं तच्चतुर्थस्य यत् प्रणवं तत्पञ्चमस्य यत्क्रोधदैवतं तत् षष्ठस्य। तदेतानि षण्णां नारसिंहचक्राणां षडान्तराणि वलयानि भवन्ति ॥

अथ किं मध्यमं वलयम्। षड्वै मध्यमानि वलयानि भवन्ति। यन्नारसिंहाय तत्प्रथमस्य यद्विद्महे तद्द्वितीयस्य यद्वज्रनखाय तत्तृतीयस्य यद्धीमहि तच्चतुर्थस्य यत्तन्नस्तत्पञ्चमस्य यत्सिंहः प्रचोदयादिति तत् षष्ठस्य। तदेतानि षण्णां नारसिंहचक्राणां षण्मध्यमानि वलयानि भवन्ति ॥

अथ किं बाह्यं वलयम् । षड्वै बाह्यानि वलयानि भवन्ति । यदाचक्रं यदात्मा तत्प्रथमस्य यत्सुचक्रं यत्प्रियात्मा तद्द्वितीयस्य यन्महाचक्रं यज्ज्योतिरात्मा तत्तृतीयस्य यत्सकललोकरक्षणचक्रं यन्मायात्मा तच्चतुर्थस्य यदाचक्रं यद्योगात्मा तत्पञ्चमस्य यदसुरान्तकचक्रं यत्सत्यात्मा तत् षष्ठस्य । तदेतानि षण्णां नारसिंहचक्राणां षट् बाह्यानि वलयानि भवन्ति ॥

क्वैतानि न्यस्यानि । यत्प्रथमं तद्धृदये यद्द्वितीयं तच्छिरसि यत्तृतीयं तच्छिखायां यच्चतुर्थं तत्सर्वेष्वङ्गेषु यत्पञ्चमं तत्सर्वेषु [?] यत् षष्ठं तत्सर्वेषु देशेषु । य एतानि नारसिंहानि चक्राण्येतेष्वङ्गेषु बिभृयात् तस्यानुष्टुप् सिध्यति । तं भगवान् नृसिंहः प्रसीदति । तस्य कैवल्यं सिध्यति । तस्य सर्वे लोकाः सिध्यन्ति । तस्य सर्वे जनाः सिध्यन्ति । तस्मादेतानि षण्णां नारसिंहचक्राण्यङ्गेषु न्यस्यानि भवन्ति । पवित्रं च एतत्तस्य न्यसनम् । न्यसनान्नृसिंहानन्दी भवति । कर्मण्यो भवति । ब्रह्मण्यो भवति अन्यसनान्न नृसिंहानन्दी भवति । न कर्मण्यो भवति । तस्मादेतत्पवित्रं तस्य न्यसनम् ॥

यो वा एतं नारसिंहं चक्रमधीते स सर्वेषु वेदेष्ववीतो भवति । स सर्वेषु यज्ञेषु याजको भवति । स सर्वेषु तीर्थेषु स्नातो भवति । स सर्वेषु मन्त्रेषु सिद्धो भवति । स सर्वत्र शुद्धो भवति । स सर्वरक्षो भवति । भूतपिशाचशाकिनीप्रेतवेतालनाशको भवति । स निर्भयो भवति । तदेतन्नाश्रद्दधानाय प्रब्रूयात्तदेतन्नाश्रद्दधानाय प्रब्रूयादिति ॥

इत्याथर्वणीये नृसिंहषट्चक्रोपनिषत् समाप्ता

---

# पारमात्मिकोपनिषत्

## सव्याख्या

ओं विष्णुस्सर्वेषामधिपतिः परमः पुराणः परो लोकानामजितो जितात्मन् भवते भवाय स्वाहा ॥ १ ॥

यः सर्वलोकैरपि वन्दनीयः स्मृतिं शुभां यच्छति यो नराणाम् ।
तस्मै नमो यः कुलदैवतं नरः स राघवो मे हृदि सन्निधत्ताम् ॥
श्रीलक्ष्मीवल्लभाद्यां तां विखनोमुनिमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥
श्रीविष्णुमानसाज्जातो विष्ण्वागमविशारदः ।
तं वन्दे सूत्रकर्तारं वैष्णवं विखनोमुनिम् ॥

व्याप्नोतीति विष्णुः सर्वव्यापक इत्यर्थः ॥

यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥ इति श्रुतेः
विश्वव्यापनशीलत्वाद्विष्णुरित्युच्यते बुधैः ॥ इति ॥

नन्वादौ तावत् परंब्रह्मपरंज्योतिःपरंतत्त्वपरमात्मादिशब्दा विद्यन्ते चत्वारः पारमात्मिकं भवति ।

उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥

इति वचनात् त्रयाणां पारमात्मिकत्वमिति चेदुच्यते ॥

अष्टाक्षरश्च यो मन्त्रो द्वादशाक्षर एव च ।
षडक्षरश्च यो मन्त्रो विष्णोरमिततेजसः ॥

एते मन्त्राः प्रधानास्तु वैदिकाः प्रणवैर्युताः ।
प्रणवेन विहीनास्तु तान्त्रिका एव कीर्तिताः ॥

इति भगवन्मन्त्रेष्वव्यापकमन्त्रापेक्षया व्यापकमन्त्राः प्रधानाः । व्यापकमन्त्रेषु च अष्टाक्षरषडक्षरौ । अष्टाक्षरेण प्रतिपाद्यो नारायणः । षडक्षरेण प्रतिपाद्यो विष्णुः । प्रधानभूतनारायणविष्णुशब्दाभ्यां वासुदेवादिशब्दैश्च उत्तरत्र प्रतिपाद्यैः परंब्रह्मपरंज्योतिःपरंतत्त्वपरमात्मादिशब्दैः पर्यायवाचकैश्च क्रियाकाण्डत्वाद्दुःखित एव विष्णुशब्दप्रयोगः ॥

किञ्च—"विष्णोरंशस्तु पुरुषः" इति दैविकव्यूहभूतस्य पुरुषस्य मानुषव्यूहभूतस्य वासुदेवस्य मूलभूतत्वाद्विष्णुशब्दग्रहणम् । यद्वा—सर्वमन्त्रा अपि परंब्रह्मपरंज्योतिःपरंतत्त्वपरमात्मादिशब्दप्रयोगात् अद्वारकत्वेन सद्वारकत्वेन भगवल्लीलाप्रतिपादकत्वात् भगवत्प्रादुर्भावाविभावलीलाप्रतिपादकत्वाद्वा **सर्वेषामधिपतिः** सर्वेषां ब्रह्मरुद्रादीनां नित्यमुक्ता. . . . . सर्वशब्दस्य सङ्कोचाभावात् . . . . . . चेतनाचेतनवर्गाणामण्डाद्बहिर्भूतानामप्यधिपतिनि . . . "पतिं विश्वस्यात्मेश्वरम्" इति श्रुतेः ॥

श्वेताश्वतरे—

पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ।
ब्रह्मादिदेवसङ्घेषु स एव पुरुषोत्तमः ।
स्त्रीप्रायमितरत् सर्वं जगद्ब्रह्मपुरस्सरम् ॥ इति ।

**परमः** परि . . मास्येति परमः समाभ्यधिकरहितः । यद्वा उत्कृष्टः **पुराणः** अनादिः **परो लोकानाम्** ।

एकतो वा जगत्सर्वमेकतो वा जनार्दनः ।
सारतो जगतः कृत्स्यादतिरिक्तो जनार्दनः ॥ इति ॥

अजितः जेतुमशक्यः ब्रह्मरुद्रादिभिर्देवदानवयक्षराक्षसादिभिः रहितः इत्यर्थः ।

यद्वा—

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।

इति श्रुतेरवाङ्मनसो गोचरत्वात् योगिभिरप्यजितः ॥

नारसिंहपुराणे —

हिरण्यकशिपोस्त्रस्तान् सेन्द्रान् देवान् बृहस्पतिः ।
क्षीरोदस्यान्तरं गत्वा स्तूयतां तत्र केशवः ।
युष्माभिः संस्तुतो विष्णुः प्रसन्नो भवति क्षणात् ॥

इत्यारभ्य हिरण्यवधानन्तरम् ।

तस्य कोपाभिभूतस्य नृसिंहस्य जगत्पतेः ।
दृष्ट्वा भयानकं रूपं तत्रसुर्देवदानवाः ॥

इत्यारभ्य शरभनिर्माणादिकं प्रतिपाद्यते । ततस्तस्य भवानीश . . . ण्डस्थानमयाचत ।

पृष्ठभागे चतुर्वक्त्रं तस्य रुद्रो न्यवेशयत् ।
सोमसूर्यौ नयनयोर्मारुतं पक्षयोर्द्वयोः ॥
पादेषु भूचरान् सर्वान् शिवस्तस्य न्यवेशयत् ।
एवं निर्माय शरभं भवः प्रमथनायकः ॥
ससर्ज नरसिंहं तं समुद्दिश्य भयानकम् ।
ततः क्षणेन शरभो नादपूरितदिङ्मुखः ॥
अभ्याशमगमद्विष्णोः निनदन्भैरवस्वनम् ।
तमभ्याशगतं दृष्ट्वा नृसिंहः शरभं रुषा ।
जघान निशितैरुग्रैस्तीक्ष्णैर्नखवरायुधैः ॥

निहते शरभे तस्मिन् रौद्रे मधुनिघातिना ।
तुष्टुवुः पुण्डरीकाक्षं देवा देवर्षयस्तथा ॥ इति ॥

भवाय रुद्राय अजितः जितार्तभक्तैः जितात्मन्,

अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विजः ॥

इति वचनात्,

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।

इति भगवद्वचनाच्च ।

यद्वा—परशुराममन्तरत्वात् रामभद्रेण जितात्मन् । यद्वा—स्वभक्तस्य भीष्मस्य प्रतिज्ञापरिपालनार्थं जगद्रक्षणार्थं च भवाय उत्पन्नाय भवते तुभ्यं स्वाहा ।

स्वाहास्वधावषड्वौषण्णमःपर्यायवाचकाः ।

भारते —

ओमिति ब्रह्मणो योनिर्नमःस्वाहास्वधावषट् ।
यस्यैतानि प्रयुज्यन्ते यथाशक्ति कृतान्यपि ॥
न तस्य त्रिषु लोकेषु परं लोकेषु संविदुः ।
इति वेदा वदन्ति स्म वृद्धाश्च परमर्षयः ॥
स्वधा नम इति . . . वषट्कारोति च [?] ।
नमःशब्दप्रधानाद्वा स्वाहाशब्द इवेति तु ॥

स्वाहाशब्दे नमःशब्दः प्रतिपादितः । अनेन प्रपत्तिः प्रतिपादिता ॥

लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया ।
रक्षकः सर्वसिद्धान्ते वेदान्तेषु च गीयते ॥
लक्ष्मीं महीं च शेषं हि विभूतिमुभयात्मिकाम् ॥

" अस्येशाना जगतो विष्णुपत्नी ",

लक्ष्मीविशिष्ट एवैकः प्रपत्तव्य इहोदितः ॥ इति ॥

लक्ष्मीविशिष्ट एव प्रपत्तव्य इत्यभिप्रायेणादौ विष्णुशब्दः । एतत्सर्वमेकादशानुवाके विस्तरेणोच्यते ॥ १ ॥

**सुसूक्ष्मः सार्वः सर्वेषामन्तरात्मा तस्युः तस्थुषां जङ्गमो जङ्गमानां विभुर्विभूणां विभवोद्भवाय स्वाहा ॥ २ ॥**

अजडं स्वात्मसंबोधि नित्यं सर्वावगाहि यत् ।
ज्ञानं नाम गुणं प्राहुः प्रथमं गुणचिन्तकाः ॥
स्वरूपं ब्रह्मणस्तच्च गुणश्च परिगीयते ।
जगत्प्रकृतिभावो यः सा शक्तिः परिकीर्तिता ॥
श्रमहानिस्तु या तस्य सततं कुर्वतो जगत् ।
बलं नाम गुणस्तस्य कथितो गुणचिन्तकैः ॥
कर्तृत्वं नाम यत्तस्य स्वातन्त्र्यं परिबृंहितम् ।
ऐश्वर्यं नाम तत्प्रोक्तं गुणतत्त्वार्थचिन्तकैः ॥
तस्यापादानभावेऽपि विकारविरहे हि यः ।
वीर्यं नाम गुणस्यायमच्युतस्यापराह्वयः ।
सहकार्यमपेक्ष्यं यत् तत्तैजसमुदाहृतम् ॥ इति ॥

ज्ञानादिषाड्गुण्यसंपूर्णं नानाव्यूहैकहेतुकं लक्ष्मीलक्षणसंयुक्तम् । "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुतेः । निरुपाधिकसत्तायोगत्वं सत्यत्वं नित्यासङ्कुचितज्ञानैकाकारत्वं ज्ञानत्वं कालतो वस्तुतो देशतश्चापरिच्छिन्नत्वमनन्तत्वमिति ब्रह्मस्वरूपशोधकवाक्यप्रतिपन्नसत्त्वादिविशिष्टम् ।

श्रीविष्णुपुराणे—

संभर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः ।
नेता गमयिता स्रष्टा गकारार्थस्तथा मुने ॥

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥
वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि ।
स च सर्वेषु भूतेषु वकारार्थस्तथा मुने ॥
ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥
एवमेव महाभाग मैत्रेय भगवानिति ।
परमब्रह्मभूतस्य वासुदेवस्य नान्यथा ।
शब्दोऽयं सोपचारेण ह्यन्यत्र ह्युपचारतः ॥ इति ॥

भगवच्छब्दशब्दितमित्यादिगुणविशिष्टं परं ब्रह्म विष्णुरेवेति विज्ञाप [नेन] सुसूक्ष्म इत्युक्तम् ।

श्रीवैखानसे तर्ककाण्डे ब्रह्मचिन्ताध्यायेऽभिहितम्—

आपः पृथिव्या सूक्ष्मास्तु तेभ्यस्तेजस्ततोऽनिलः ।
तस्मादाकाशमेतस्मात्तन्मात्राणि मनीषिणः ॥
तेभ्यः सूक्ष्मो ह्यहङ्कारस्त्रिधाभूय व्यवस्थितः ।
तस्मान्महान् त्रिधा भूतो बुद्धिलक्षणलक्षितः ॥
तस्मात्तु मूलप्रकृतिरव्यूढगुणबृंहिता ।
ततो व्यष्टिसमष्ट्याख्यो जीवः सूक्ष्मतरः स्मृतः ॥
ततो व्योमपदं विष्णोः स्थानमानन्दपूरितम् ।
तस्मात्तत्पञ्चशक्तिस्थं पञ्चोपनिषदात्मकम् ॥
पञ्चमूर्तिविभेदेन विभिन्नं विश्वतोमुखम् ।
आभूतसंप्लवस्थानं स्वरूपं चिद्घनं परम् ॥

विष्णोरकुण्ठवीर्यस्य नानाव्यूहैकहेतुकृत् ।
ततः षड्गुणसंपूर्णं लक्ष्मीलक्षणसंयुतम् ॥
सत्यं ज्ञानमनन्ताख्यं भगवच्छब्दशब्दितम् ।
सूक्ष्मात्सूक्ष्ममिति ख्यातं स्वरूपं रूपवर्जितम् ॥
जातिक्रियादिरहितं सरूपं गुणसङ्गतम् ।
सूक्ष्मात्सूक्ष्ममवाप्नोति परंब्रह्मेदमव्ययम् ॥ इति ॥

**सार्वः** "सर्वं खल्विदं ब्रह्म" इत्यादिश्रुतिसिद्धम् ।
आत्मा बुद्धौ धृतौ जीवे स्वभावे परमात्मनि ॥ इति ॥

**सर्वेषामन्तरात्मा** ब्रह्मरुद्रादीनामन्तरात्मा । "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इति श्रुतेः, "यस्त्वात्मा शरीरं यस्य पृथिवी शरीरम्" इत्यादिश्रुतेश्च । **तस्थुः तस्थुषां** स्थावराणां मध्ये अतिशयेन तथा परभूतः "मेरुः शिखरिणामहम्" इति भगवद्वचनात । **जङ्गमो जङ्गमानां** जङ्गमेष्वप्यतिशयं जङ्गमभूतः । यद्वा शक्तिप्रदः । **विभुर्विभूणां** आकाशादीनामपि । तथा **विभवोद्भवाय** एवं तस्य परमात्मन उद्भवः प्रादुर्भावः अवतारादिषु—

यस्यावताररूपाणि समर्चन्ति दिवौकसः ।
अपश्यन्तः परं भावं नमस्तस्मै परात्मने ॥ इति ॥

एवमवतारादिषु प्रादुर्भावः—

न ह्यस्य जन्मनो हेतुः कर्मणो वा महीपते ।
आत्ममायां विनेशस्य परस्य स्रष्टुरात्मनः ॥

रामायणे—

स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः ॥
अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः ॥ इति ॥

तस्मै दिशं प्रतिपाद्य ज्योतिर्मयानि सर्वाण्यपि पारमात्मिकान्येवेति प्रतिपादयति ॥ २ ॥

**ज्योतिर्वा पारमात्मिकं सार्वं विश्वं भवं भवाय प्राभूतं प्राहिण्वन् परम्पराय सुकृतं कृताय तस्मै पराय ईशिषे स्वाहा ॥३॥**

सूर्यचन्द्राग्न्यादिषु स्थितं ज्योतिः पारमात्मिकम् ।
यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ इति ॥
ज्योतींषि विष्णुर्भुवनानि विष्णुना
सर्वाणि विष्णुर्गिरयो दिशश्च ।
नद्यः समुद्राश्च स एव सर्वं
यदस्ति यन्नास्ति च विप्रवर्यः ॥ इति ॥

नक्षत्राणि च विश्वलोकं साव विश्वं सर्वलोकसंज्योतिः । पारमात्मिकं "अथ यदतः परो दिवो ज्योतिर्दीप्यते", "विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषु" इत्यादिश्रुतिसिद्धम् । "एक एव रुद्रो न द्वितायाय तस्थे", ।

यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः ।
हिरण्यगर्भं जनयामास पूर्वं स नो बुद्धया शुभया संयुनक्तु ॥

इति श्रुतिषु श्रूयमाणत्वात् । विश्वाधिपस्य रुद्रस्य जननं कथमुपपद्यत इति शङ्कायां तद्वा श्रुत्यर्थं भवशब्दः भवाय रुद्राय प्राभूतं प्रभूतं बहुविधमित्यर्थः । परं भवमुत्पत्तिं प्राहिण्वन् प्रायच्छन् । "नारायणाद्रुद्रो जायते" इत्यादिश्रुतिभ्यः "ललाटात्क्रोधजो रुद्रो जायते" इत्यादि ।

ब्रह्मणो वै ललाटाच्च ततो देवस्य वै द्विज ।
क्रोधाविष्टस्य संजज्ञे रुद्रः संहारकारकः ॥ इति ॥

"अष्टौ वसव एकादश रुद्राः", "सहस्राणि सहस्रशो ये रुद्राः" इति श्रुत्यन्तरेषु श्रूयमाणत्वात् पारमात्मिकोपनिषदि च प्राभूतं प्राह्णिव-न्नित्युक्तम्। अनेनैकत्वनिवृत्तिः। अस्य मन्त्रस्य परम्पराय इत्यारभ्य ईशो यस्मादित्यत्रान्वयः। सुकृतं कृताय तस्मै पराय ईशिषे ॥ ३ ॥

**ईशो यस्माद्विततं वितत्य कं धृतं कामहुतो जुहोति ककुदं वकुच्छित्वा भूयः पराय स्वाहा ॥ ४ ॥**

ईशः रुद्रः **यस्मात्** सागराणामुज्जीवनकारणात् **विततं** विस्तृतं **धृतं** शिरसा धृतं **कं** गङ्गाजलं **वितत्य** भूमौ विस्तार्य सुकृताय कृतवते वरमनं **विश्वं भवं भवाय प्राभूतं प्राह्णिवन् परम्पराय सुकृतं कृताय तस्मै पराय** परं **कामहुतः** कामदाहको रुद्रः **ककुदं** श्रेष्ठः दक्षः **ककुच्छित्वा जुहोति** अग्नौ प्रक्षिप्तवान्। **भूयः** पुनरपि **पराय** विभक्तिव्यत्ययः ब्रह्मणः शिरश्छित्वा प्रक्षिप्तवान्। एवंभूताय रुद्राय **सुकृतं कृताय ईशिषे** समर्थाय तुभ्यं इत्यर्थः।

अयमेवार्थो मात्स्ये—

ततः क्रोधपरीतेन संरक्तनयनेन च।
वामाङ्गुष्ठनखाग्रेण छिन्नं तस्य शिरो मया ॥

ब्रह्मा—

यस्मादनपराद्धस्य शिरश्छिन्नं त्वया मम।
तस्माच्छापसमायुक्तः कपाली त्वं भविष्यसि ॥
ब्रह्महत्याकुलो भूत्वा चरन् तीर्थानि भूतले।
ततोऽहं गतवान्देवि हिमवन्तं शिलोच्चयम् ॥
तत्र नारायणः श्रीमान् मया भिक्षां प्रयाचितः।
ततस्तेन स्वकं पार्श्वं नखाग्रेण विदारितम् ॥

स्रवतो महती धारा तस्य रक्तस्य निःसृता ।
विष्णुप्रसादात्सुश्रोणि कपालं तत्सहस्रधा ।
स्फुटितं बहुधा जातं स्वप्नलब्धं धनं यथा ॥

विष्णुधर्मे—

अच्युतानन्तगोविन्दमन्त्रमानुष्टुभं परम् ।
ॐ नमःसंपुटीकृत्य जपन् विषधरो हरः ॥
यन्नजीर्णं च गरळं कण्ठे स्तब्धं कपालिनः ।
अन्तरात्मधृतस्तस्य हृदये गरुडध्वजः ॥ इति ॥
मैत्रलोके भक्ष्यमाणे तथा मातृगणेन वै ।
नृसिंहमूर्तिंदेवेशं प्रदद्याद्भगवान् शिवः ॥ इति ॥

वराहे—

प्रागितिहासेऽगस्त्यं प्रति रुद्रः—ब्रह्माणं च पुरा सृष्टः पुण्डरीकाक्षः रुद्रेण दृष्टः । कस्त्वमिति प्रोक्तः सृज इति प्रजाः ।

अविज्ञातासमर्थोऽहं निमग्नः सलिले द्विजः ।

इत्यारभ्य जलमध्ये कालमेघसङ्काशः पुण्डरीकाक्षः रुद्रेण दृष्टः कस्त्वमिति पृष्टस्य वचनम्—

अहं नारायणो देवो जलशायी सनातनः ।
दिव्यं चक्षुर्भवतु ते तेन व . . यत्नतः ॥
एवमुक्तस्तदा तेन यावत्तस्याप्यहं तनुः ।
तावदङ्गुष्ठमात्रं तु ज्वलद्भास्करतेजसम् ॥
तमेवाहं प्रपश्यामि तस्य नाभौ तु पङ्कजम् ।
ब्रह्माणं तत्र पश्यामि ह्यात्मानं च तदङ्कतः ॥

इत्यारभ्य रुद्रेणानन्तरं [?] विष्णुः—

सर्वज्ञस्त्वं न सन्देहो ज्ञानराशिः सनातनः ।
देवानां च परः पूज्यः सर्वदा त्वं भविष्यसि ॥
एवमुक्तः पुनर्वाक्यमुवाचोमापतिस्तथा ।
अन्यद्देहि वरं देव प्रसिद्धं सर्वजन्तुषु ॥
मर्त्यो भूत्वा भवानेव मामाराधय केशव ।
मां वहस्व च देवेशं वरं मत्तो गृहाण च ।
येनाहं सर्वदेवानां पूज्यात्पूज्यतरोऽभवम् ॥

विष्णुः—

देवकार्यावतारेषु मानुषत्वमुपागतः ।
त्वामेवाराधयिष्यामि त्वं च मे वरदो भव ॥
यत्त्वयोक्तं वहस्वेति देवदेव उमापते ।
सोऽहं नमामि देव त्वां मेघो भूत्वा शतं समाः ॥
एवमेव हरिर्देवः सर्वेशः सर्वभावनः ।
वरदोऽभूत्ततो मह्यं तेनाहं दैवतैर्नतः ॥ इत्यादि ॥

पुराणसङ्ग्रहे—

अङ्गुष्ठाग्रविनिर्भिण्णादण्डकोशात्स्रवज्जलम् ।
विष्णोरादाय चार्घ्यं वै ददौ तस्मै चतुर्मुखः ॥
तत्पादशौचविमलं तोयमासीत्सरिद्वरा ।
पुण्या त्रिपथगङ्गा यां दधार शिरसा स्वयम् ॥

ईश्वरसंहितायाम्—

पुरा त्रिभुवनाक्रान्तं हरिणा बलिबन्धने ।
मम लोके पदं प्राप्तं दृष्ट्वा विष्णोर्महात्मनः ॥

पाद्यं दत्तं मया पुत्र कमण्डलुजलेन वै ।
कमण्डलुजलं स्वल्पं कृतमन्तर्गतं हि तत् ॥
धर्मं समीपतो दृष्ट्वा . . चोक्तं जलं भव ।
द्रवीभूतस्तथा धर्मो हरिभक्त्या महामुने ॥
गृहीत्वा धर्मपानीयं पादं नाथस्य तुष्टये ।
क्षाळितं परया भक्त्या पाद्यार्घ्यादिभिरर्चितः॥
तदम्बु पतितं दृष्ट्वा दधार शिरसा हरः ।
पावनार्थं जटामध्ये योग्योऽस्मीत्यवधारणात् ।
वर्षायुतानथ बहून् न मुमोच तथा हरः ॥

श्रुतिरपि—"ये मरुतामर्चयन्ति रुद्रं यत्तेजनी चारुदन्तं पदं यद्विष्णोरुपमं निधाय तेन पासि गुह्यं गोनाम्" इतीयं श्रुतिः त्रिविक्रमावतार-मुद्दिश्य गङ्गाविषयत्वेन श्रूयत इति केचिद्वदन्ति । ब्रह्मरुद्रादीनामपि वरप्रदानादिषु समर्थतेत्यर्थः ॥ ४ ॥

**रायामीशो रहितो भरन्त्यै रां रां वहन्त्याहितः रायां पतिं रां रां धरते धरित्र्यै रां वहतोद्वहाय स्वाहा ॥ ५ ॥**

**रायां** "रै ऐश्वर्ये" इति धातुसिद्धैश्वर्यवाचकरैशब्दाभिहि-तानामैश्वर्याणां **ईशः** तद्भोगार्हः परमतमः प्रभुः **रहितः** ताभिरैश्वर्यैर्वि-हीनः चतुर्दशाब्दप्रमाणवनवासहेतुकपितृवाक्यपरिपालनद्वारा समस्तैश्वर्यरहित इत्यर्थः । **रां** सकलप्राणिपोषकां **रां** भूमिं प्रति **वहन्त्या** आत्मसौशील्यानुकूल-प्रभुसेवां वाञ्छन्त्या अतिभक्तिभरसहितभरतोपयुजा सकलप्रजया **भरन्त्यै** सकलप्राणिसंरक्षणमाप प्रक्रियायै **रां आहितः** भूमिं प्रति तत्प्राप्तिं प्रति यः वनवासात्पुरमागच्छेति महाभक्तिपुरस्कृतप्रयत्नेन प्रार्थितः यः **रायां पतिं**

प्रसिद्धक्षत्रियधर्मरूपाणामैश्वर्याणां **पतिं** अत्र विभक्तिव्यत्ययश्छान्दसः । "बहुळं छन्दसि" इत्यत्र बहुळग्रहणादतः पतिः प्रतिष्ठापक इत्यर्थः । यः **रां** स्वीयपठनश्रवणधारणानुष्ठानैः परिपावयित्रीं सकललोकान् **रां** रावयति समस्तदुरितातिगा ऋग्यजुस्सामात्मिका श्रुतिः तां **धरते** तत्प्रतिपाद्यत्वेन प्रतिष्ठां धत्ते । प्रतिपाद्यमाहात्म्य इत्यर्थः । यः पुनरपि चतुर्दशाब्दसङ्कल्पित-वनवासप्रतिज्ञानिवृत्त्यनन्तरं **धरित्र्यै** श्रीमदयोध्याभूमिप्राप्त्यै हेतुभूतां **रां** सकललोकपावनहेतुभूतश्रीरामायणकथारूपिणीं कीर्तिसम्पत्तिं **वहतः** वहते । अत्रापि विभक्तिव्यत्ययश्छान्दसः । **उद्वहाय** अवतारविशेषेऽपि परमपावन-शक्तिवहाय श्रीरामस्वरूपाय परमात्मने **स्वाहा** नम इति सूत्रार्थः ॥ ५ ॥

**यो ब्रह्मशब्दः प्रणवः प्रधानः शब्दः शब्दान्तरात्मनित्यो वियन्तः यत्तः प्रतरन् प्रकामं प्राजापत्यं प्रतरन् प्रकुर्वन् भूयो भूत्यै अचरं चराय स्वाहा ॥ ६ ॥**

उत्तरप्रतिपाद्यमानायाः न्यासविद्यायाः प्रधानभूतप्रणवस्वरूपप्रति-पादनमुखेन न्यासविद्याफलं च प्रतिपादयति—**यो ब्रह्मशब्द** इत्यादिना । **यो ब्रह्म**शब्दवाच्य**प्रणवः** । "ओमिति ब्रह्म" इति श्रुतिः । तस्य प्रधानोऽयं शब्दः शब्दान्तरात्मशब्दबुद्धिकर्मणां त्रित्रिक्षणावस्थायित्वात् शब्दनाशेऽपि परमात्मनो नाशाभावात् नित्य इत्युक्तम् ।

कठवल्लिकोपनिषदि—

सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्ती ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत् ॥
एतद्ध्येवाक्षरं ब्रह्म ह्येतदेवाक्षरं परम् ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥

एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ इति ॥
विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥
अकारेणोच्यते विष्णुः सर्वलोकेश्वरो हरिः ।
उद्धृता विष्णुना लक्ष्मीरुकारेण तथोच्यते ।
मकारस्तु तयोर्दास इति प्रणवलक्षणम् ॥

सर्वशेषिंस्तवाहमिति प्रपत्तिप्रतिपाद्यद्वारा प्रपन्नस्य प्राप्यं प्रतिपादयति— **वियत्त** इत्यादिना । **वियत्तः** आकाशात्परं **प्रतरन्** स्वर्गादिकमतिक्रम्य **प्रकामं** अत्यन्तं **प्राजापत्यं** प्रजापतिलोकं **प्रतरन् प्रकुर्वन्** प्रकर्षेण ब्रह्मलोकमपि तरणं कुर्वन् **भूयो भूत्यै** नित्यैश्वर्याय अणिमाद्यष्टैश्वर्यानपेक्षया नित्यत्वात् "अपहत-पाप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इति गुणाष्टकाविर्भावायार्चिरादिमार्गेण गत्वा सायुज्यं प्रतिपन्नायेति प्रपन्नास्ते तपस्विनः भक्तास्तपस्विनः ।

किंकरा मम ते नित्यं भवन्ति निरुपद्रवाः ॥
लोकेषु विष्णोर्निवसन्ति केचित्समीपमृच्छन्ति च केचिदन्ये ।
अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः ॥
सायुज्यमुभयोरत्र भोक्तव्यस्याविशिष्टता ।
सार्ष्टिता तत्र भोगस्य तारतम्यविहीनता ।
सामरस्यं हि सायुज्यं वदन्ति ब्रह्मवादिनः ॥
ऐहलौकिकमैश्वर्यं स्वर्गाद्यं पारलौकिकम् ।
कैवल्यं भगवन्तं च मन्त्रोऽयं साधयिष्यति ॥

वसिष्ठकराळजनकसंवादे—

परेण परधर्मे च भवत्येष समेत्य वै ।
विशुद्धधर्मा शुद्धेन बुधेन च सुबुद्धिमान् ॥
विमुक्तधर्मा मुक्तेन समेत्य भरतर्षभ ।
वियोगधर्मणा चैवावियोगात्मा भवत्यपि ॥
विमोक्षणाविमोक्षश्च समेत्येह तथा भवेत् ।
शुचिकर्मा शुचिश्चैव भवत्यमिति . . . त्पमान् ॥
विमलात्मा च भवति समेत्य विमलात्मना ।
केवलात्मा तथा वैषः केवलेन समेत्य वै ॥
स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमुपाश्नुते ।
एतावदेतत्कथितं मया ते तथ्यं महाराज यथार्थतत्त्वम् ।
अमत्सरस्त्वं प्रतिगृह्य चार्थं सनातनं ब्रह्म विशुद्धमाद्यम् ॥ इति ॥

अष्टैश्वर्यं मानसोल्लासे—

अत्यन्तमणुषु प्राणिष्वात्मत्वेन प्रवेशनम् ।
अणिमासंज्ञमैश्वर्यं व्याप्तस्य परमात्मनः ॥
ब्रह्माण्डादिशिवान्तायाः षट्त्रिंशत्तत्त्वसंहतेः ।
भवाश्च व्याप्यवृत्तित्वमैश्वर्यं महिमाह्वयम् ॥
परमाणुसमाङ्गस्य समुद्धरणकर्मणि ।
गौरवे मेरुतुल्यत्वं गरिमाणं विदुर्बुधाः ॥
महामेरुसमाङ्गस्य समुद्धरणकर्मणि ।
अत्यल्पत्वमतुल्यत्वं लघिमेति प्रकीर्त्यते ॥
पाताळवासिनः पुंसो ब्रह्मलोकावलम्बनम् ।
प्राप्तिनामकमैश्वर्यं सुप्तुहाष्टचौपयोगिनाम् [?] ॥

आकाशगमनादीनामन्यासां सिद्धिसम्पदाम् ।
स्वेच्छामात्रेण संसिद्धिः प्राकाम्यमभिधीयते ॥
स्वशरीरप्रकाशेन सर्वार्थानां प्रकाशनम् ।
प्राकाम्यमिदमैश्वर्यमिति केचित्प्रचक्षते ॥
स्वेच्छामात्रेण लोकानां सृष्टिस्थित्यन्तकर्तृता ।
सूर्यादिना वियोक्तृत्वमीशित्वमभिधीयते ॥
सलोकपालाः सर्वेऽपि लोकाश्चेद्वशवर्तिनः ।
तदैश्वर्यं वशित्वाख्यं सुलभं शिवयोगिनाम् ॥ इति ॥

**चराय** संसरते प्रत्यगात्मने अचरन्नाशरहितमैश्वर्यं कुर्वन् । यद्वा अचरन्नाशरहितमैश्वर्यं कुर्वन् चराय सृष्टिस्थितिसंहारादिगतिं कुर्वते तुभ्यमित्यर्थः ॥

विष्णुपुराणे—

प्राजापत्यं ब्राह्मणानां ब्राह्मं सन्यासिनां स्मृतम् ।
एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ते ।
तेषां तत्परमस्थानं यद्वै पश्यन्ति सूरयः ॥ इति ॥

प्रधानशब्द इत्यनेन त्रिमात्रशब्दः । एवं श्रूयते उपनिषदि—" यः पुनरेतत्त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नः । यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम् " इति । प्रणवशब्दार्थः अथर्वशिरसि—" अरसादुच्यते प्रणवः यस्मादुच्चार्यमाण एव ऋचो यजूंषि सामान्यथर्वाङ्गिरसश्च यज्ञब्रह्म ब्राह्मणेभ्यः प्रणवयति । तस्मादुच्यते प्रणवः " इति । न्यासविद्यास्वरूपमुत्तरत्र प्रतिपाद्यते ॥ ६ ॥

**यो वा त्रिमूर्तिः परमः परश्च**
**त्रिगुणं जुषाणः सकलं विधत्ते।**
**त्रिधा त्रिधा वा विदधे समस्तं**
**त्रिधा त्रिरूपं सकलं धराय स्वाहा ॥ ७ ॥**

त्रिविक्रमस्यायं मन्त्रः। **यः** परमात्मा विष्णुः **त्रिमूर्तिः** ब्रह्मविष्णुशिवात्मकः।

विष्णुपुराणे—

सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम्।
स संज्ञां याति भगवानेक एव जनार्दनः ॥ इति ॥

यद्वा—त्रिविक्रमत्वात्पदविक्षेपभेदेन त्रिमूर्तिः "इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्" इति श्रुतिः। **परमः** त्रिविक्रमावतारापेक्षया ब्रह्मरुद्रादिषु समाभ्यधिकाभावात् परमशब्दः। **परश्च** अवतारत्वेऽपि उत्कृष्टः। **त्रिगुणं जुषाणः** "जुषी प्रीतिसेवनयोः" इति त्रिगुणेषु सात्विकराजसतामसेषु प्रीतिं कुर्वन्। यद्वा—सेवमानः **सकलं** चिदचिदात्मकं प्रपञ्चं **विधत्ते।** "व्यस्कभ्नाद्रोदसी विष्णुरेते दाधार पृथिवीमभितो मयूखैः" इति विष्णुरेव ब्रह्मशब्दवाच्य इति ज्ञापयितुं ब्रह्माभ्यधितिष्ठतु भुवनानि धारयन्निति। "नमो विष्णवे बृहते करोमि।"

बृहत्वात् बृंहणत्वाच्च तद्ब्रह्मेति प्रकीर्तितम् ॥ इति ॥

यद्वा—विधत्ते जगत्सृष्ट्यादिश्वरभेदेन **त्रिधा त्रिधा वा विदधे समस्तं** हृस्वदीर्घसमरूपेण गार्हपत्यान्वाहार्याहवनीय इति त्रिधाग्निरूपेण उत्तममध्यमाधमस्वर्गनरकमोक्षइत्यादि समस्तं त्रिधा त्रिधा विदधे चकार त्रिरूपं स्त्रीपुन्नपुंसकादि त्रिधा भूत्वा त्रिविक्रमरूपी भूत्वा निवहं स्वस्वकीयसहितैर्देवमनुष्यादिभिराघृतं **विधत्ते** धृतवान् तस्मै ॥ ७ ॥

**यद्वा कृतममृतश्चराणां यत्सर्वनिष्ठमजरं समस्तं यत्पश्यमानमात्माभिजुषाणमन्तस्सुषुप्त्यानभिगम्यमानाय स्वाहा ॥ ८ ॥**

त्रिविक्रमावतारे प्रत्यक्षे कृतस्य परमात्मानपरं रूपं स्वप्नेऽपि देवैर्द्रष्टुमशक्यमित्याह—यच्चेति । कृतं त्रिविक्रमरूपेण कृतं सर्वनिष्ठमन्तर्व्याप्तमजरमपहतपाप्मत्वादियुतं समस्तं बहिश्च व्याप्तम् । यद्वा परिदृश्यमानं सर्वमात्माभिजुषाणम् ।

आत्मा बुद्धौ धृतौ जीवे स्वभावे परमात्मनि । इति ॥

जीवात्मना सेवमानमेवंविधरूपमन्तर्हृदये **सुषुप्त्या** स्वप्नेनापि **अमृतंचराणां** अमृतं चरन्तीति **अमृतंचरा** देवाः । तेषामपि **अनभिगम्यमानाय** ध्यातुमशक्याय । यद्वा—चराणां देवादीनाममृतं कृतं समुद्रमथनादिकं कृतम् । **यद्रूपं** तत्**पश्यमान** चेदपि **सुषुप्त्या** स्वप्नेनापि प्राप्तुमशक्यमिति तस्मै ॥ ८ ॥

**कः कोशमङ्गे कुशलं विधाय साकृतं कृण्वतेऽग्र इद९ँ सुकान्तं ककुद्मते ते कामचरं चराय स्वाहा ॥ ९ ॥**

**कः कोशं** ब्रह्माण्डकोश**मङ्गे** स्वाङ्गे **कुशल** क्षेमसहितं **विधाय साकृत** आकृतिसहितं **कृण्वते** तत्र ब्रह्माणं कुर्वते **अग्रे** सृष्ट्यादौ **ककुद्मते** श्रेष्ठचराय ब्रह्मणे **सुकान्त** मनोहरं **कामचरं** अण्डकोशं विधाय तत्र साकृतं आकृतिसहितब्रह्माणं कृण्वते तुभ्यम् । अन्यत्रोपनिषदि—"अथ पुनरेव नारायणः सोऽन्यं कामो मनसाध्यायत । तस्य ध्यानान्तस्थस्य ललाटात् स्वेदोपहताः प्रपत आपस्तासु तेजो हिरण्मयमण्डलस्तत्र ब्रह्मा चतुर्मुखोऽजायत" इति ॥ ९ ॥

यं यज्ञैर्मुनयो जुषन्ति यं देवाः परमं पवित्रं भविष्यन्त्यार्तिषु प्रणताः प्रधानाः यं सूरयो जपन्तो योगिनः सूक्ष्मैः सुप्रदर्शनैः पश्यन्तीश्वराय स्वाहा ॥ १० ॥

यं परमात्मानं महाविष्णुं यज्ञैः "यज देवपूजासङ्गतिकरणदानेषु" इति समाराधनैः पाकयज्ञहविर्यज्ञसोमयज्ञैः ।

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ इति ॥

"यज्ञेन दानेन तपसा नाशकेन ब्राह्मणा विविदिषन्ति" इतिश्रुतेः । द्रव्ययज्ञादिभिर्मुनयः वैखानसाः ।

वैखानसैर्मुनिगणैः नित्यमाराधितोऽमलैः ।
वैखानसैर्मुनिश्रेष्ठैः पूजिताय वेङ्कटेशाय नमः ॥

इति पद्मवचनार्चनम् । अत्र प्रतिपादिता मुनय आपस्तम्बादयः । किंनरः स्वरिति चेत् ।

गारुडे—

पुरा चतुर्मुखादेशाच्चत्वारो मुनयोऽमलाः ।
प्रणीय वैष्णवं शास्त्रं भूमावभ्यर्च्य यं नृपः ॥
मरीचिर्मन्दरे विष्णुमर्चयामास केशवम् ।
आदेशाद्ब्राह्मणो विष्णुं श्रीनिवासे त्रिरर्चयेत् ॥
काश्यपो विष्ण्वधिष्ठाने शुभक्षेत्रे भृगुर्मुनिः ।
नन्दायां दक्षिणे सीम्नि श्रमात्तरे [?] सखा ।
तच्छुद्धौ शुचिषं नाम भृगुणा स्थापितो हरिः ॥ इति ।

ब्रह्मकैवर्ते पुष्करतीर्थवैभववर्णने—"निम्नगानां यथा गङ्गा" इत्यारभ्य,

यथा मुनीनां विखना आदिभूत उदाहृतः ॥ इति श्रुतिः ॥

धेनुर्वहाणामदितिस्सुराणां ब्रह्मा ऋभूणां विखना मुनीनाम् ॥ इति ॥

एवं श्रुतिस्मृतिपुराणादिमुख्यत्वेन वैखानसानामेव मुनिशब्दवाच्यत्वप्रतिपादनात् **यज्ञैर्मुनयो जुषन्ति** इत्युक्तत्वात् । आपस्तम्बादीनामद्वारभगवद्भजनविधिप्रतिपादनाभावात् । पञ्चपूजाप्रतिपादकस्य यमित्यत्र एकवचनास्वारस्याभावाच्च । वैखानसाः **मुनयः जुषन्ति** । **यज्ञैः** प्रीणयन्ति सेवां कुर्वन्तीति वा । यज्ञशब्द आराधनपरः **यं** महाविष्णुं प्रधान**देवाः** ब्रह्मरुद्रादयः ।

न यस्य रूपं न बलप्रभावो न च स्वभावः परमस्य पुंसः ।

विज्ञायते शर्वपितामहाद्यैस्तं वासुदेवं प्रणमाम्यचिन्त्यम् ॥ इति ॥

रूपबलप्रभावातिशयेन चिन्त्यत्वात् **परमं** इत्युक्तम् । **पवित्रं** उपनिषदि "स एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः" इति ।

अशुद्धा ब्रह्मरुद्राद्या जीवा विष्णोर्विभूतयः ।

तान्वै कुदृष्टसाम्यत्व परत्वादप्युपासते ॥ इति ॥

अतएव पवित्रमित्युक्तम् । यद्वा स्वभक्तान् वज्रादपि त्रायत इति पवित्रशब्दप्रयोगः ।

दन्ता गजानां कुलिशाग्रविष्णुराशीर्णयत्तेन जलं ममैतत् ।

महद्विपत्तित्वविनाशनो यो जनार्दनानुस्करणानुभावः ॥ इति ॥

अमृतापहरणे गरुडेन्द्रयोर्युद्धे च द्रष्टव्यम् । अत एव **आर्तिषु प्रणता भविष्यन्ति ।**

श्रीमद्रामायणे बालकाण्डे—

राक्षसो रावणो मूर्खो वीर्योत्सेकेन बाधते । इत्यादि ।

वधार्थं वयमायातास्तस्य वै मुनिभिस्सह ।

सिद्धगन्धर्वयक्षाश्च ततस्त्वां शरणं गताः ॥

त्वं गतिः परमो देवः सर्वेषां नः परन्तपः ।
वधाय देवशत्रूणां नृणां लोके मनः कुरु ॥
एवमुक्तः सुरगणैः विष्णुस्त्रिदशपुङ्गवः ।
पितामहपुरोगांश्च सर्वलोकनमस्कृतः ॥
अब्रवीत् त्रिदशान् सर्वान् समेतान् धर्मसंहितान् ।
भयं त्यजत भद्रं वो वधार्थं युधि रावणम् ॥
सपुत्रपौत्रं सामात्यं समन्त्रिज्ञातिबान्धवम् ।
हत्वा क्रूरं दुरात्मानं देवर्षीणां भयावहम् ॥ इत्यादि ॥

भागवते—

पुरासुराय गिरिशो वरं दत्वाप सङ्कटम् ।

इत्यारभ्य अन्ते तु सङ्कटं लेभे नर चितः शिव इत्युक्तम् [?] बाणासुर-युद्धे च द्रष्टव्यम् ।

प्रसादयामास भवो देवं नारायणं प्रभुम् ।
शरणं च जगामाद्यं वरेण्यं वरदं हरिम् ॥ इति ॥

अनेन ब्रह्मरुद्रादीनामुपास्यराहित्यं तत्प्रयुक्तव्रतानामप्युपादेयराहित्यं च दर्शितम् । प्रधानधर्मार्थकाममोक्षचतुर्विधपुरुषार्थेषु स्वाभिमतार्थप्रधान-मार्तिषु स्वाभिमतार्थालाभे नाशे च प्रणता भविष्यन्ति ।

गीतायाम्—

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् । इति ॥

यं परमात्मानं यं मन्त्रमिति काकाक्षिन्यायेनोभयत्रान्वयः। यं मन्त्रराजमष्टाक्षरं यं विष्णुषडक्षरं मन्त्रं जपन्तः।

पराशरः—

त्रिविधो जपयज्ञः स्यात्तस्य भेदं निबोधत।
यदुच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः॥
मन्त्रमुच्चारयेद्वाचा वाचिकोऽयं जपः स्मृतः।
शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयेत्॥
अपरैरश्रुतं किञ्चिच्च उपांशुजपः स्मृतः।
धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम्॥
मन्त्रार्थचिन्तनं भूयः कथ्यते मानसो जपः।
त्रयाणां जपयज्ञानां श्रेष्ठं स्यादुत्तरोत्तरम्॥
अष्टाक्षरश्च यो मन्त्रो द्वादशाक्षर एव च।
षडक्षरश्च यो मन्त्रो विष्णोरमिततेजसः॥
एते मन्त्राः प्रधानाः स्युर्वैदिकाः प्रणवैर्युताः।
प्रणवेन विहीनास्तु तान्त्रिका एव कीर्तिताः॥ इति॥

**सूरयो** नित्यसूरयः अनन्तगरुडादयः **पश्यन्ति**। "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इति श्रुतिः। यद्वा ब्रह्मविदः पश्यन्ति **योगिनः** यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरित्यष्टाङ्गयोगिनः ध्यानेन **पश्यन्ति**।

यद्वा

योगः सन्नहनोपायध्यानसङ्गतिभक्तिषु।

इति भगवत एवोपायोपेयत्वम्। अनेन सिद्धरूपा प्रपत्तिः साध्यरूपा प्रतिपाद्यते।

समर्थपुरुषार्थानां साधकस्य दयानिधेः ।
प्रमतः पूर्वसिद्धत्वात्सिद्धोपायविदो विदुः ॥
भक्तिप्रपत्तिप्रमुखैस्तद्वशीकारकारणम् ।
तत्तद्बलानि साध्यत्वात्साध्योपायं विदुर्बुधाः ॥ इति ॥
ईदृशः परमात्मा यः प्रत्यगात्मा तथेदृशः ।
तत्सम्बन्धानमिति [?] योगः प्रकीर्तितः ॥

यद्वा—

योगःसन्नहनोपायध्यानसङ्गतिभक्तिषु ॥ इति ॥
स्वामिन् स्वशेषं स्ववशं स्वभरत्वेन निर्भरम् ।
स्वदत्तस्वधया स्वार्थं स्वस्मिन्नयस्यति मां स्वयम् ॥ इति ॥

सर्वदानुसन्धानम्—

स्वोज्जीवनेच्छा यदि ते स्वदत्तायां स्पृहा यदि ।
आत्मनिक्षेपणं दास्यं हरेः स्वाम्यं सदा स्मरेत् ॥ इति ॥

कर्मयोगिनस्तं सुप्रदर्शनैः उद्दिष्टादिकालव्यतिरिक्तकालेषु भगवदाराधनादिकं कुर्वन्ति । भगवद्भक्ताः कैङ्कर्यपराः परात्मयोगिन इत्युच्यन्ते । एतेषां भगवद्विश्लेषमसहमानानाम् ।

न प्रदोषे हरिं पश्येत् . . . . . ।
यदि पश्येत्प्रमादेन द्वादशाब्देन नश्यति ॥

इति हरिदर्शननिषेधे नास्त्येव स्मृतिः—

अर्चकान् परिचारांश्च वैष्णवान् ज्ञानिनो यतीन् ।
दासीदासादिकांश्चैव . . . . . . . . ॥
तापत्रयानलोज्वालामालिते देहमन्दिरे ।
विष्णुभक्तिरसैः शान्तिं जानन् कः कालमीक्षते ॥

कालोऽस्ति यज्ञे कालोऽस्ति दाने कालोऽस्ति वै जपे ।
सर्वेशदर्शने कालो वक्ष्यमाणस्तदञ्चितः ॥ इति ॥
मौनं वाचोनिवृत्तिः स्यान्नात्र भाषणसंस्कृतम् ।
नान्यदेवेरणं विष्णोः सदा ध्यायेच्च कीर्तयेत् ॥

सुप्रदर्शनैरित्युक्तं सुप्रदर्शनैः पश्यन्ति । अत्र प्रणता इत्यनेन परमात्मनो नारायणस्य पादारविन्दे न्यस्तभरा उच्यन्ते । परमात्मनि नारायणे सर्वभारसमर्पणात् ।

संज्ञातनैरपेक्षं तु नम इत्युच्यते बुधैः ।
भरन्यासबलादेव स्वयत्नविनिवृत्तये ।
अत्रोपायान्तरस्थाने रक्षको विनिवेशते ॥ इति ॥

प्रकर्षेण नताः प्रणताः । नमःशब्दस्य स्थूलसूक्ष्मपरमो जन इति अहिर्बुध्न्येन व्याख्यातम् ।

प्रेक्षावतः प्रवृत्तिर्या प्रह्वभावात्मिका स्वतः ।
उत्कृष्टः परमुद्दिश्य तन्नमः परिगीयते ॥
लोके चेतनवर्गस्तु द्विधैव परिगीयते ।
ज्यायांश्चैव तथाज्यायान् नैवाख्या विद्यते परा ॥
कालतो गुणतश्चैव प्रकर्षो यत्र तिष्ठति ।
शब्दस्यौन्मुख्यया वृत्त्या ज्यायानित्यवलम्ब्यते ॥
अतश्चेतनवर्गस्तु स्मृतः प्रत्यवरो बुधैः ।
तज्ज्यायांश्च तयोर्योगः शेषशेषितयेष्यते ॥
अज्यायांसः परे सर्वे ज्यायानेको मतः परः ।
नन्वनन्तृस्वभावेन तेषां तेन समन्वयः ॥

नन्तव्यः परमः शेषी शेषा नन्तार ईरिताः ।
नन्तृनन्तव्यभावोऽयं न प्रयोजनपूर्वकः ॥
निश्चयो हि स्वभावोऽयं नन्तृनन्तव्यतात्मकः ।
उपाधिरहितो नायं येन भावेन चेतनाः ॥
नमनं जायते तस्मै तद्वा नमनमुच्यते ।
भगवान् नः परो नित्यमहं प्रत्यवरः सदा ॥
इति भावो नमः प्रोक्तो नमसः कारणं हि सः ।
नमयत्यपि वा देवं प्रह्वभावयति ध्रुवम् ।
अतो वा नम उद्दिष्टं यत्तन्नामयति स्वयम् ॥
वाचा नम इति प्रोच्य मनसा वपुषा च यत् ।
तन्नमः पूर्वमुद्दिष्टमतोऽन्यन्न्यूनमुच्यते ॥
इयं करणपूर्तिः स्यादङ्गपूर्तिमिमां शृणु ।
शाश्वती मम संसिद्धिरियं प्रह्वो भवामि यत् ॥
पुरुषं परमुद्दिश्य न मे सिद्धिरतोऽन्यथा ।
इत्यङ्गमुदितं श्रेष्ठं फलेच्छा तद्विरोधिनी ॥
अनादिवासनारोहादनैश्वर्यत्वभावजात् ।
मलावकुण्ठितत्वाच्च दृक्क्रियाविहतिर्हि या ॥
तत्कार्पण्यं तदुद्बोधो द्वितीयं त्वङ्गमीदृशम् ।
स्वस्वातन्त्र्यावबोधस्थं तद्विरोध उदीर्यते ॥
परत्वे सति देवोऽयं भूतानामनुकम्पया ।
अनुग्रहैकधीर्नित्यमित्येतद्भक्तवत्सलः ॥

उपेक्षको यथा कर्मफलदायीति या मतिः ।
विश्वासात्मतया यत्तो त्वदीयं वा तु वै सदा ॥
एवंभूतोऽप्यशक्तः सन् नस्त्राता भवितुं क्षमः ।
इति बुद्ध्वा स्वदेवस्य गोप्तृशक्तिनिरूपणम् ॥
चतुर्थमङ्गमुद्दिष्टममुष्या व्याहृतिः पुनः ।
उदासीनो गुणाभावादित्युत्प्रेक्षा निमित्तजा ॥
स्वस्वस्वामिनिवृत्तिर्या प्रातिकूल्यविवर्जनम् ।
तदङ्गं पञ्चमं प्रोक्तमाज्ञाव्याख्यातवर्जनम् ॥
अशास्त्रीयोपवासे तु तद्व्याख्यात उदीर्यते ।
चराचराणि भूतानि सर्वाणि भगवद्वपुः ॥
अतस्तदानुकूल्यं मे कार्यमित्येव निश्चयः ।
षष्ठमङ्गं समुद्दिष्टं तद्विघाते निराकृतिः ॥
पूर्णमङ्गैरुपाङ्गैश्च नमनं ते प्रकीर्तितम् ।
स्थूलो यो नमनस्यार्थः सूक्ष्ममन्यं निशामय ॥
चेतनस्थं यदा मन्त्रं स्वस्मिन् स्वीये च वस्तुनि ।
नम इत्यक्षरद्वन्द्वं तद्धाम ह्यन्यवाचकम् ॥
अनादिवासनारूढमिथ्याज्ञाननिबन्धनात् ।
आत्मात्मीयपरार्थेस्ता यास्वतन्त्रस्वतामिति [?] ।
मेन एवं समीचीना बुद्ध्या साऽत्र निवार्यते ॥
नाहं मम स्वतन्त्रोऽहं नास्तितस्स्वार्थ उच्यते ।
न मे देहादिकं वस्तु स शेषः परमात्मनः ॥
इति बुद्ध्वा निवर्तन्ते तानि सेयं मनीषिका ।
अनादिवासनाजातैर्बोधैस्तैस्तैर्विकल्पितैः ॥

रुषितं यद्दृढं चित्तं स्वातन्त्र्यं सत्त्वधीमयम् ।
चित्तद्वैष्णवसार्वात्म्यप्रतिबोधसमुत्थया ॥
नम इत्यनया वाचा मन्त्रात्स्वस्मादपोह्यते ।
इति ते सूक्ष्म उद्दिष्टः परमं स्वं निशामय ॥
पन्था नकार उद्दिष्टो मः प्रधान उदीर्यते ।
विसर्गः परमेशस्तु तत्रार्थोऽयं निरूप्यते ॥
अनादिपरमेशस्तु शक्तिमान् पुरुषोत्तमः ।
स्वप्राप्तये प्रधानोऽयं पन्था नमननामवान् ॥
इति ते त्रिविधः प्रोक्तो नमःशब्दार्थतां प्रति ।
निवेदयेत् स्वमात्मानं विष्णोरमिततेजसि ॥
तदात्मना मनःशान्तस्तद्विष्णोरिति मन्त्रतः ।
शरीरपातकाले च सार्थस्वानुग्रहं स्वयम् ॥
परिपाकं प्रपन्नानां प्रयच्छति यथातथम् ।
अङ्कोलतैलसिक्तानां बीजानामचिराद्यथा ।
विपाकः फलपर्यन्तस्तथात्रेति निदर्शितः ॥ १० ॥

इति प्रथमोऽनुवाकः

---

## द्वितीयोऽनुवाकः

यो वा गविष्टः परमः प्रधानः पदं वा यस्य सत्त्वमासीत्
यस्योपरि त्वं मुनयो न पश्यन्ति तस्मै मुख्याय विष्णवे स्वाहा ॥ १ ॥

**यो वा गविष्ठ** इत्यादि पञ्चमन्त्राननुक्रमात् पञ्चोपनिषन्मन्त्रे **यः** परमात्मा **गविष्ठः** भूमिस्थः अवकाशप्रदः । यद्वा चराचरात्मकेषु लोकेषु आकाशरूपेण स्थितः । परमः व्याप्त्या **परमः प्रधानः** पञ्चभूतेषु प्रधानः कारणभूतः । **पदं वा यस्य सत्त्वमासीत्** यस्याकाशस्य पदमुत्पत्तिस्थानं त्वमेवासीत् । आसीदिति छान्दसः । **यस्य** परमात्मनस्तव **उपरि त्वं मुनयो न पश्यन्ति** । मननशीलो मुनिः नारायणपारायणो निर्द्वन्द्वो मुनिरिति वा **मुख्याय तस्मै विष्णवे** तुभ्यम् ॥ १ ॥

**यो वा वायुर्द्विगुणोऽन्तरात्मा सर्वेषामन्तश्चरतीह विष्णोः**
**स त्वं देवान् मनुष्यान् मृतान् परिसंजीवसे स्वाहा ॥ २ ॥**

यः परमात्मा **वायुः** महाभूतचतुर्थः । **द्विगुणः** शब्दस्पर्शवान् इति । द्वौ वायोरिति **अन्तरात्मा** व्याप्तः । **सर्वेषामन्तश्चरतीह** प्रकृतिमण्डले **विष्णोः** स वायुः **त्वं देवान् मनुष्यान् मृतान् परिसंजीवसे** देवान् वर्धयसि मृतान् मनुष्यान् सान्दीपनीपुत्रब्राह्मणपुत्रादीन् **सञ्जीवसे** तुभ्यम् ॥ २ ॥

**त्वमग्ने त्रिगुणो वरिष्ठः परं ब्रह्म परं ज्योतिः सर्वेषां त्वं**
**पालनाय हुतममृतं वहिष्यसे स्वाहा ॥ ३ ॥**

हे **अग्ने त्वं त्रिगुणो** गन्धरसविहीनास्त्रयोऽग्नेरिति **वरिष्ठः** श्रेष्ठः **परं ब्रह्म परं ज्योतिः** "अग्निः सर्वा देवताः" इति श्रुतिः । सर्वदेवात्मकत्वात्परं-ब्रह्मशब्दप्रयोगः । प्रळयकालापेक्षया उत्कृष्टज्योतिः । **सर्वेषां** देवमनुष्यादीनां **त्वं पालनाय** रक्षणाय **हुतममृतं वहिष्यसे** । अमृतरूपेण सर्वेषां प्रापयिष्यसि । **त्वया** हुतममृतरूपेण कलाद्वारेण प्रापयिष्यसि । श्रीवैखानससूत्रे "यथावास्य सुषुम्ना ज्योतिष्मती प्राणाहुती रेतोधाः" इत्येता आहुतीर्गृहीत्वा "रश्मयश्च-तस्रः पृश्नौ सन्दधीरन् सह वा शुद्धा अमृतावहाचीनुहि दिव्यालोकपावनीत्ये-

तामिश्चन्द्रमसमाप्याययत्यसौ नु राजा सोम आप्यायितो मूलगामीव पायान्नस्यमृतोद्गारिसुरप्रिया" इत्येताभिरमृतेन तां देवतां तर्पयति। मनुष्याणां त्वधिकं पाकभेदेन प्राप्स्यसि। त्वं समर्थः। एवंरूपायाभिस्वरूपिण इत्यर्थः ॥ ३ ॥

**त्वं जीवस्त्वमापस्सर्वेषां जनिता त्वमाहरः त्वं विष्णो श्रमापनुदाय चतुर्गुणाय स्वाहा ॥ ४ ॥**

हे विष्णो जीवकारणभूता आपस्त्वं छान्दोग्ये ईरितम् "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति"इति ॥

आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः॥ इति ॥

**सर्वेषां जनिता** उत्तरोत्तरं कारणत्वेन जनिता। **त्वमाहरः** त्वमाहर छान्दसत्वात् त्वमाहर इति। सर्वेषां **श्रमापनुदः** सर्वेषां स्नानपानादिना श्रमशान्तिप्रदः। यद्वा रामकृष्णाद्यवतारादिषु काळिन्द्यादिरूपेण श्रमशान्तिप्रदः।

संभक्षयित्वा भूतानि जगत्येकार्णवीकृते।
नागपर्यङ्कशयने शेतेऽसौ परमेश्वरः॥ इति ॥

**चतुर्गुणाय** गन्धविहीनाश्चत्वारोऽपां गुणा इति तस्मै ॥ ४ ॥

**भूमेर्वितन्वन् प्रतरन्प्रकामः पोपूयमानः पञ्चभिः स्वगुणैः प्रसन्नैस्सर्वाणि मां धारयिष्यसि स्वाहा ॥ ५ ॥**

हे परमात्मन् **प्रकामः**।

धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ।

कामभूतः **भूमेः पञ्चभिः स्वगुणैः** शब्दस्पर्शरूपरसगन्धा इति पञ्चेन्द्रियविषयभूतैर्गुणैः सर्वान् **वितन्वन्** विस्तारयन् विषयप्रवणान् कुर्वन् **पोपूयमानः** पवित्रभूतः **प्रतरन्** तदाक्रम्य स्थितस्सन् ,

गीतायाम्—

त्रिभिर्गुणमयैर्भावैरेभिस्सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ।। इति ।।

स्वतेजसाऽप्याधीतैः **प्रसन्नैर्गुणैरिमान् लोकान् धारयिष्यसि** । "व्यस्कभ्नाद्रोदसी विष्णुरेते दाधार पृथिवीमभितो मयूखैः" इति श्रुतेः । भूम्या ऐन्द्रियविषयशक्तप्रदायेत्यर्थः ।। ५ ।।

**मनस्त्वं भूत्वा मनःप्रदोऽग्रे त्वत्तो भूतं सम्भावयिष्यसि सर्वेषां कायानामर्हमर्हते स्वाहा ।। ६ ।।**

हे परमात्मन् त्वं **अग्रे** सृष्ट्यादौ **मनो भूत्वा त्वत्तः** त्वत्सकाशादुद्भूत-मनोभिमानिदेवतां **संभावयिष्यसि** सङ्कल्पयिष्यसि । **सर्वेषां** देवमनुष्यादीनां **कायानां** शरीराणां यथार्हं **मनःप्रदः** ।

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । इति श्रुतेः ।।
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।। इति ।।

मनोरूपेण भवितुं **अर्हते** समर्थायेत्यर्थः ।। ६ ।।

**त्वं बुद्धिर्भूतानामन्तरात्मा पुण्यवतां पुण्येषु सज्जमानः त्वं बुद्ध्वा विचिन्वमानः पुण्यरूपाय स्वाहा ।। ७ ।।**

हे परमात्मन **त्वं बुद्धिः** बुद्धिरूपः । **भूतानां** पञ्चभूतानां **अन्तरात्मा** तत्तदभिमानिदेवतानामन्तरात्मा । **पुण्यवतां पुण्येषु सज्जमानः** निविष्टः ।

**त्वं बुद्ध्वा विचिन्वमानः** "बुद्धिस्तात्कालिकी मता" इति । तया बुद्ध्या विचिन्वमानः **पुण्यरूपाय** "सत्यं तपो दमः शमो दानं धर्मः प्रजननमग्नयोऽग्नि-होत्रं यजमानः संन्यासः" इति ते पुण्यशब्दवाच्याः । "यद्वयोम्नः स्थानं गळान्तरं बुद्धेर्वचनमहंकारस्य हृदयचित्तस्य नाभिरिति बुद्ध्या विचिन्वमानः" इत्युक्तत्वात् । अभ्यासरूपमात्रेण वा **विचिन्वमानः** तस्मै ॥ ७ ॥

**यः सूक्ष्मान् सञ्चरमाणान् भावाभावान् भव्याभव्यान् कुर्वन्नात्मीयममितो धुनोति धुरं वहिष्यसे स्वाहा ॥ ८ ॥**

**यः** परमात्मा **सूक्ष्मान्** भूतसूक्ष्मान् **सञ्चरमाणान्** विरजापर्यन्तं सञ्चरमाणान् **भावाभावान्** सूक्ष्मरूपत्वात् **भावरूपान्** सुखदुःखानुभवा-भावात् **अभावरूपान्** भव्यान् "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इति गुणाष्टकाविर्भावाय **भव्यान्** अमानवकरस्पर्शात्पूर्वं गुणाष्टकाविर्भावाभावात् **अभव्यान्** **कुर्वन्नात्मीयं** ब्रह्मालङ्कारादिनालङ्कृत्य मुक्तं परमात्मसम्बन्धं कुर्वन् **अमितः** अमानवः सुकृतदुष्कृते **धुनोति** ।

कौषीतकिब्राह्मणे—

"तमेतं देवयजनं पन्थानमासाद्याग्निलोकमागच्छति । स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम् । तस्य ह वा एतस्य ब्रह्मलोकस्यारो ह्रदो मुहूर्तोऽन्वेष्टिहा विरजा नदील्यो वृक्षः सालज्जं संस्थानं अपराजितमायतनं इन्द्रप्रजापती द्वारगोपौ विभुप्रमितं विचक्षणसन्ध्यमितौजाः पर्यङ्कः प्रिया च मानसी प्रतिरूपा च चाक्षुषी पुष्पाण्यादायावयतौ वै च जगन्यम्बा चाम्बावयवाश्चाप्सरसोऽम्बया नद्यः । तमित्थंविधा गच्छति । तं ब्रह्माहाभिधावत मम यशसा विरजां वा पालयन्नदीं प्रापं न वा अयं जिगीष्यतीति ॥

तं पञ्चशतान्यप्सरसां प्रतिधावन्ति । शतं मालाहस्ताः शतमाञ्जनहस्ताः शतं चूर्णहस्ताः शतं वासोहस्ताः शतं फणहस्तास्तं ब्रह्मालङ्कारेणालङ्कुर्वन्ति । स ब्रह्मालङ्कारेणालङ्कृतो ब्रह्मविद्वान् ब्रह्मैवाभिप्रैति । स आगच्छत्यारं ह्रदं तं मनसात्येति । तमृत्वा संप्रतिविदो मज्जन्ति । स आगच्छति । मुहूर्तान्विहेष्टिहास्तेऽस्मादपद्रवन्ति । स आगच्छति विरजां नदीं तां मनसैनात्येति । तत्सुकृतदुष्कृते धूनुते । तस्य प्रिया ज्ञातयस्सुकृतमुपयन्त्यप्रिया दुष्कृतम् । तद्यथा रथेन धावयन् रथचक्रे पर्यवेक्षत एवमहोरात्रे पर्यवेक्षते । एवं सुकृतदुष्कृते धूनुते सर्वाणि च द्वन्द्वानि । स एष विसुकृतो विदुष्कृतो ब्रह्मविद्वान् ब्रह्मैवाभिप्रैति ॥

स आगच्छतील्यं वृक्षं तं ब्रह्मगन्धः प्रविशति । स आगच्छति सालज्जं संस्थानं तं ब्रह्म स प्रविशति । स आगच्छत्यपराजितमायतनं तं ब्रह्मतेजः प्रविशति । स आगच्छतीन्द्रप्रजापती द्वारगोपौ तावस्मादपद्रवतः । स आगच्छति विभुप्रमितं तं ब्रह्मयशः प्रविशति । स आगच्छति विचक्षणामासन्दीं बृहद्रथन्तरे सामनी पूर्वौ पादौ श्यैत नौधसे चापरौ पादौ वैरूपवैराजे शाक्वररैवते तिरश्ची सा प्रज्ञा प्रज्ञया हि विपश्यति । स आगच्छत्यमितौजसं पर्यङ्कं तं स प्राणः । तस्य भूतं च भविष्यच्च पूर्वौ पादौ श्रीश्चेरा चापरौ बृहद्रथन्तरे अनूच्ये भद्रयज्ञायज्ञीये शीर्षण्यमृचश्च सामानि च प्राचीनागानं यजूंषि तिरश्चीनानि सोमांशव उपस्तरणमुद्गीथ उपश्रीः श्रीरुपबर्हणम् । तस्मिन् ब्रह्मास्ते । तमित्थंवित्पादेनैवाग्र आरोहति । तं ब्रह्माह कोऽसीति । तं प्रतिब्रूयात् ऋतुरस्म्यार्तवोऽस्म्याकाशाद्योनेस्संभूतो हाव । एतत् संवत्सरस्य तेजोभूतस्य भूतस्य त्वमात्मासि यस्त्वमसि सोऽहमस्मीति । तमाह कोऽहमस्मीति ॥

सत्यमिति ब्रूयात् । किं तत्सत्यमिति । यदन्यद्देवेभ्यश्च प्राणेभ्यश्च तत्सद्ध यद्देवाश्च प्राणाश्च तद्यत्तदेतया वाचाभिव्याह्रियते सत्यमिति । एतावदिदं सर्वमिदं सर्वमसीत्येवैनं तदाह ।

तदेतच्छ्लोकेनाप्युक्तम्—

यजूदरः सामशिरा असावृङ्मूर्तिरव्ययः ।
स ब्रह्मेति हि विज्ञेय ऋषिर्ब्रह्ममयो महान् ॥ इति ॥

तमाह केन पौंसानि नामान्याप्नोतीति । प्राणेनेति ब्रूयात् । केन स्त्रीनामानीति । वाचेति । केन नपुंसकनामानीति । मनसेति । केन गन्धानिति । प्राणेनेति ब्रूयात् । केन रूपाणीति । चक्षुषेति । केन शब्दानिति । श्रोत्रेणेति । केनान्नरसानिति । जिह्वयेति । केन कर्माणीति । हस्ताभ्यामिति । केन सुखदुःखे इति । शरीरेणेति । केनानन्दं रतिं प्रजातिमिति । उपस्थेनेति । केनेत्या इति । पादाभ्यामिति । केन धियो विज्ञातव्यं कामानिति । प्रज्ञयेति प्रब्रूयात् । तमाहापैव खलु मे ह्यसावयं ते लोक इति । सा या ब्रह्मणि चिति या व्यष्टिस्तां चितिं जयति तां व्यष्टिं व्यश्नुते य एवं वेद य एवं वेद ॥

धुरं वहिष्यसे पारमात्मिकोपनिषन्मन्त्राध्येता वैष्णवो मन्त्रार्थवित्पर-मैकान्ती च तस्य धुरं वहिष्यसे ॥

शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः ।
तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम् ॥

"ब्रह्मविदाप्नोति परम्" इति श्रुतेश्च ।

मत्पदद्वन्द्वमेकं ये प्रपद्यन्ते परायणम् ।
उद्धरिष्याम्यहं देवि तस्मात् संसारसागरात् ॥ इति ॥ ८ ॥

**यस्या दौ भयाद्भगवानुत्तस्ते स्वयं सूर्यस्य त्वं कालं वहमानः यस्मात्तेज आत्मीयं कृत्वा सर्वानस्मान् पालयिष्यसि स्वाहा ॥ ९ ॥**

**यस्य** सृष्टिस्थितिसंहारादिकं परमात्मनो नारायणस्य नियमनातिक्रमभयात् **भगवान्**—

उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥

उत्पत्त्यादिकं परमात्माधीनमिति यो वेत्ति स भगवान् षाड्गुण्यवित्पूर्वं . . . . "भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति ।" कथमुपेति । सत्यं **कालं वहमानः** । "कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः । अर्धमासा मासा ऋतवः संवत्सरश्च कल्पन्ताम् ।" इति । अहोरात्रादिकालं यथाप्रकारं देवमनुष्यादिषु प्रापय . . त्वं देहाद्यैः प्रतिदिनं युद्धसामर्थ्यसंभवकारणात् । **आत्मीयं तेजः** पराभवाभिभवसामर्थ्यं तेज इति प्रणवादिकं तेजः सर्वानस्मान् सूर्यरूपेण पालयिष्यसि ।

षड्विंशब्राह्मणे—

"देवाश्च वा असुराश्च लोकेष्वंसन्ततेऽसुरा आदित्यमभिद्रवन् स आदित्यो . . भित्त . . मेरूपेण तिष्ठत्यप्रजापतिमुपायावत् । तस्य प्रजापतिरेतत् भेषजमश्यत् ऋतं च सत्यं च ब्रह्म चोङ्कारं च त्रिपदां च गायत्रीं ब्रा . . . मपश्यत् " इत्यादि ॥

श्रीविष्णुपुराणे—

मन्देहा राक्षसा घोराः सूर्यमिच्छन्ति घातितुम् ।
प्रजापतिकृतः शापस्तेषां मैत्रेय रक्षसाम् ॥

अक्षयत्वं शरीराणां मरणं च दिनेदिने ।
ततः सूर्यस्य तैर्युद्धं भवत्यत्यन्तदारुणम् ॥

इत्यादि ।

वैष्णव . . . . . . कारं तस्य तत्प्रेरकं परम् ।
तेन तत्प्रेरितं ज्योतिरोङ्कारेणाथ दीप्तिमान् ॥
दहत्यशेषरक्षांसि मन्देहाख्यानि यानि वै ।
ततः प्रयाति . . ब्राह्मणैरभिरक्षितः ॥
वालखिल्यादिभिश्चैव प्रभुर्वैखानसैरपि ।
महात्मभिर्महात्मा वै जगतः पालनाद्यतः ॥

इति भगवदाज्ञा . . . . . . . यात् जगत्पालनादिकं करोति जगत्पालनादिशक्तिप्रदाय तुभ्यम् ॥ ९ ॥

**यं त्वं पालनायाभिभूतं देवास्सर्वे विचरन्ति ते देवास्त्वमेव सर्वे माया मायैषते स्वाहा ॥ १० ॥**

हे परमात्मन् पुत्रेण सह बाणासुरपरिपालनार्थमागतं सर्वं त्वयाभि**भूतं** अभिभवं प्राप्तं रुद्रं सर्वदेवाः ब्रह्मादयः प्रमुखं श्रुत्वा अध्याहारः पश्येति जीवभूतेन नरसिंहे कोपशान्त्यर्थं **विचरन्ति** शरभ . . . . विनागतिं कुर्वन्ति ये च **सर्वे** रुद्र**देवाः** [?] ब्रह्मादयः विचरन्ति स्वरक्षकत्वेन गतिं कुर्वन्ति **देवास्त्वमेव सर्वे**

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् इति ॥

त्वद्विभूतिभूताश्चेच्छरभनिर्माणादिगतं कथं कुर्वन्तीति चेत् तत्राह **माया मायैषते** पूषा ते माया आश्चर्यकारिणी विद्या सैव माया । अन्येषां माया का माया ।

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।

मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥

इति भगवद्वचनात् । शरभरूपेण गतानां ब्रह्मरुद्रादीनामपि नृसिंहरूपिणा संहारादिकं नारसिंहपुराणादिष्ववगम्यते सप्तत्रिंशेऽध्याये—

हिरण्यकशिपोस्त्रस्तान् सेन्द्रान् देवान् बृहस्पतिः ।

क्षीरोदस्यान्तरं गत्वा स्तूयतां तत्र केशवः ।

युष्माभिः संस्तुतो विष्णुः प्रसन्नो भवति क्षणात् ॥

इत्यारभ्य —

युष्मदागमनं सर्वं जानाम्यसुरसूदनाः ।

हिरण्यकविनाशार्थं स्तुतोऽहं शङ्करेण च ॥

इत्यारभ्य हिरण्यवधानन्तरम्—

तस्य कोपाभिभूतस्य नृसिंहस्य जगत्पतेः ।

दृष्ट्वा भयानकं रूपं तत्रसुर्देवदानवाः ॥

इत्यादिस्तोत्रानन्तरं ब्रह्मसमीपगमनादिकं प्रतिपाद्य—

तस्मिन् भगवति क्रुद्धे नरसिंहे महात्मनि ।

प्रवेपते जगदिदं देवेशे कुपिते भृशम् ॥

त्वत्तो हि नान्यच्छरणं देवानामिह विद्यते ।

नरसिंहसमुद्भूतं भयं नाशय नो हरे ॥

इत्यारभ्य अनन्तरं रुद्रवचनम्—

हतो हिरण्यकशिपुर्यो स दैत्यो महाबलः ।

को नः शमयिता तस्य . . . हरिमेधसः ॥

त्वं मे जनयिता तात स ते जनयिता हरिः ।

तस्य देवस्य कः शक्तो विष्णोर्वै निग्रहे भवेत् ॥

यद्भयात्पवते वायुः सूर्यस्तपति यद्भयात् ।
यद्भयाद्धरणी धत्ते निग्रहे तस्य कः प्रभुः ॥
तथाप्युपायं पश्यामः परमेण समाधिना ।
कृते यस्मिन् भवेच्छ्रेयस्तूष्णींभावो न रोचते ॥
अश्वानां माहिषः शत्रुर्वारणानां मृगाधिपः ।
वानराणां तथा मेषः पक्षिणां गरुडः स्मृतः ॥
मूषकानां तु मार्जालो मृगाणां श्वा प्रकीर्तितः ।
वायसानां दिवाभीतः सिंहानां शरभस्तथा ॥
ततः समे भजिष्यामः शरभं भयशान्तये ।
शरभोऽधिष्ठितोऽस्माभिः नृसिंहं शमयिष्यति ॥
इत्येवमुक्तो भगवान् ससर्ज शरभं तथा ।
यस्य सन्दर्शनादेव त्रस्तमासीज्जगत्त्रयम् ॥
ततस्तस्य भवानीशस्तुण्डस्थानमरोचत ।
पृष्ठभागे चतुर्वक्त्रस्तस्य रुद्रो न्यवेशयत् ॥
सोमसूर्यौ नयनयोर्मारुतः पक्षयोर्द्वयोः ।
पादेषु भूधरान् सर्वान् शिवस्तस्य न्यवेशयत् ॥
एवं निर्माय शरभं भवः प्रमथनायकः ।
ससर्ज नरसिंहं तं समुद्दिश्य भयानकम् ॥
ततः क्षणेन शरभो नादपूरितदिङ्मुखः ।
अभ्याशमगमद्विष्णोर्विनदन् भैरवस्वरम् ॥
तमभ्याशगतं दृष्ट्वा नृसिंहः शरभं रुषा ।
जघान निशितैरुग्रैर्दंष्ट्रानखवरायुधैः ॥

निहते शरभे तस्मिन् रौद्रे मधुनिघातिना ।
तुष्टुवुः पुण्डरीकाक्षं देवा देवर्षयस्तथा ॥ इति ॥

गारुडे —

हन्तुमभ्यागतं रौद्रं शरभं नरकेसरी ।
नखैर्विदारयामास हिरण्यकशिपुं यथा ॥
निकृत्तबाहूरुशिरा वज्रकल्पमुखैर्नखैः ।
मेरुपृष्ठे नृसिंहेन सहस्रार्कसमं च तत् ॥

पाद्मे —

तौ युध्यमानौ तु चिरं वेगेन बलवत्तरौ ।
विनाशं जग्मतुर्देवौ नृसिंहशरभाविति ॥
ततः क्रुद्धो महाकायो नृसिंहेऽभिमुखस्वनः ।
सहस्रशिरसं नेत्रैस्तस्य गात्रं न्यकर्तयत् ॥
पतितं भीममत्युग्रं विबुधा द्रष्टुमागताः ।
ऋषयो देवगन्धर्वा यत्र शेते हरो हतः ॥
तं दृष्ट्वा परमं जग्मुर्विस्मयं ते दिवौकसः ।
प्रशशंसुस्तदा कर्म नरसिंहस्य चाद्भुतम् ॥ इति ॥ १० ॥

इति द्वितीयोऽनुवाकः

---

## तृतीयोऽनुवाकः

यस्त्वं भूत्वा पर्जन्यो बिभेति रन्ध्रे प्रजाभिराकृष्यमाणः सत्यं कालं व्रतेन पालयन् ह्लादयिष्यसे स्वाहा ॥ १ ॥

यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ।

इति यज्ञोद्भवो भूत्वा यः पर्जन्यः सत्यं कालं पालयन् रन्ध्रे भगवदाज्ञाभङ्गे बिभेति सः । त्वं रन्ध्रे अनावृष्ट्याद्यौ व्रतेन कारिकेष्ट्यादिना प्रजाभिराकृष्यमाणः वर्षप्रदानादिना ह्लादयिष्यसे तुभ्यम् ॥ १ ॥

**कामो भूत्वा प्रजानामन्तरास्थितस्सर्वान् लोकान् ह्लादयन् जीवमानः सन्दर्पणाय हरये पराय स्वाहा ॥ २ ॥**

हे परमात्मन् **कामो भूत्वा प्रजानामन्तरास्थितः** । अनङ्गत्वात्तत्र स्थितस्सन् **सर्वान् लोकान्** जनान् **ह्लादयन् जीवमानः** अभिलषितवस्तुलाभादिमुखेन सन्तोषयन् **सन्दर्पणाय** गर्वरूपाय **हरये** हरयित्रे ननु कामदाहकत्वाद्रुद्रस्य सर्वहन्तृत्वमुपपद्यत इति चेत् तदसंत् ।

ब्रह्माणमिन्द्रमग्निं च यमं वरुणमेव च ।
निगृह्य हरते यस्मात्तस्माद्धरिरिहोच्यते ॥
स शुक्राज्जायते कामो मज्जायाः क्रोध एव च ।
अस्थिभ्यो जायते लोभो मेदसश्च मदस्तथा ॥
मांसात् प्रजायते मोहोऽसृग्भ्यः क्रोधः प्रजायते ।
त्वचश्चैवापि धर्मस्तु क्रमाज्जातस्ततो दश ॥ इति ॥

भगवतोऽपि शुक्रादुत्पत्त्यादिकं श्रूयत इति चेत् ॥ २ ॥

**अङ्गादङ्गादनुप्राविशत्सर्वान् लोकान् संरक्षणाय यो वा वसन् देवो मातरिश्वा स योऽस्माकं भूत्यै भूतये स्वाहा ॥ ३ ॥**

यः परमात्मा **मातरिश्वा** वाय्वन्तर्यामी **देवः** क्रीडाकामः **अङ्गादङ्गादनुप्राविशत्** त्वदङ्गात्पुत्रस्याङ्गं जीवेन सह दीपात् दीपमिव जननात्प्राविशत् "अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे "इति श्रुतेः ।

भारते --

वायुः प्रवेशनं चक्रे सङ्गतः परमात्मना । इति ।

**स देवः सर्वान् लोकान्** जनान् प्रति **संरक्षणाय निवसन् योऽस्माकं** मातरिश्वनः अन्तर्यामिणः **अस्माकं भूत्यै भूतये** निरवधि-कैश्वर्याय ॥ ३ ॥

**यो मोहयन् भूतानां सर्गादिरक्षणाय यः सङ्कोचः सङ्कोचनाय भवते स्वाहा ॥ ४ ॥**

**यः** परमात्मा **सर्गादिरक्षणाय** सृष्टिस्थितिसंहारार्थं **भूतानां** इन्द्रियाणि मोहयेत् । "मुह वैचित्र्ये" इति **यः** अन्तर्यामी सन् **सङ्कोचः** । "अणोरणी-यान्" इत्यादि **सङ्कोचनाय भवते** तस्मै ॥ ४ ॥

**यो वा दशात्मा उपरि स्पृशन्वा देवानां जेनातिषामुत्तरः जेनातिर्ज्योतिषे स्वाहा ॥ ५ ॥**

**यः** परमात्मा मत्स्यादिदशावताररूपी द्वादशात्मापि केषांचित् **वा** आदित्यमण्डलवर्ती **उपरि स्पृशन्** सेर्वषामुपरि स्थित्वा स्वकिरणैर्मेध्या-मेध्यादिकं स्पृशन **देवानां** मध्ये ज्योतीरूपः **जेनातिषां** चन्द्रा-ग्न्यादिज्योतिषां **उत्तरः** स्वयं **वा स्पृशन्** तैरमेध्यैरस्पृष्टः **जेनातिर्ज्योतिषे** ज्योतिषां जेनातिर्भवति तस्मै ॥ ५ ॥

**यो ब्रह्मा ब्रह्मविदामात्मा स्यादात्मचक्षुषां भूतिर्भूतिमतां सुकृतं कृताय स्वाहा ॥ ६ ॥**

यः परमात्मा **ब्रह्मविदां** ब्रह्मा छान्दसत्वात् दीर्घः परंब्रह्म । **आत्मा स्यादात्मचक्षुषां** अन्तः प्रविश्य नियन्ता य आत्मा । परमात्मत्वेन पश्यतां

परमात्मा । **भूतिर्भूतिमतां** ऐश्वर्यवतामैश्वर्यरूपः **सुकृतं कृताय** कृतवते तस्मै ॥ ६ ॥

**सारस्वतो वा एष देवो न हि पारमात्मिकः हयोऽभयो वा सर्वं सन्धुषे स्वाहा ॥ ७ ॥**

हयग्रीवमन्त्रः—**एष देवो** लीलाविभूतो हयग्रीवरूपेण स्थितः अयं केवलहयो न भवति । किन्तु अभयप्रदः भयरहितः **सारस्वतः** अखिल-विद्याधारस्वरूपी **पारमात्मिकः** परमात्मा जगत् **सर्वं सन्धुषे** कृपाकटाक्षेण प्रेक्षयसि तुभ्यम् ॥ ७ ॥

**यो वा परं ज्योतिः परं सन्दधानः परमात्मा पुरुषं संजनयिष्यसे स्वाहा ॥ ८ ॥**

**यः परं ज्योतिः परमात्मा** यं निर्हेतुककृपाकटाक्षेण रक्षितुमिच्छति तं पुरुषं परं सन्दधानः उत्कृष्टगुणं सन्दधानं संजनयति **संजनयिष्यसे** तुभ्यं व्यत्ययः । यद्वा रामकृष्णाद्यवतारादिषु वसुदेवदशरथादिषु परं सन्दधानः पुरुषं प्रति सम्यक् जनिष्यसे "जनी प्रादुर्भावे" इति प्रादुर्भावं प्रजननं कुर्वते ।

न तस्य जन्मनो हेतुः कर्मणो वा महीपते ।
आत्ममायां विनेशस्य परमा सृष्टिरात्मना ॥ इति ॥
नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥इति॥
जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।
सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः ॥

पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः
रजसा तमसा चास्य मानसं समभिप्लुतम् ॥ इति ॥

अनेन निर्हेतुत्वं प्रतिपादितम् । अधिकारिविशेषेण निर्हेतुकं सहेतुकं च ॥ ८ ॥

**यो दोषश्चतुरश्चतुर्थश्चतुरः पदार्थान् सर्वं लोकस्य सन्दधानस्ते सन्ते सत्त्वमादधानाय स्वाहा ॥ ९ ॥**

**यो दोषः** यस्य परमात्मनो बाहुषु **चतुर्थः** । वरप्रदानहस्तः चतुरः वरप्रदानेन **चतुरः** समर्थः **चतुरः पदार्थान्** धर्मार्थकाममोक्षाख्यान् **सर्वं लोकस्य** सर्वजनानां **सन्दधानः** प्रयच्छमानः **सन्ते** सत्सु **सत्त्वमादधानाय** "एको बहूनां यो विधाति कामान्" इति श्रुतिः । ते इदम् ॥ ९ ॥

**यस्यैता ब्रह्ममूर्तयो बृहद्ब्रह्माणं ब्रह्म आदधानः यं ब्रह्म ब्रह्मगुप्तये परम्पराय स्वाहा ॥ १० ॥**

**यस्य** परंब्रह्मणः **एताः** अव्यया **ब्रह्ममूर्तयः** दत्तोऽयं चतुर्मुखब्रह्म**गुप्तये** वेदगुप्तये **परम्पराय** सृजति तस्मै ।

श्वेताश्वतरे—

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ॥ इति ॥ १० ॥

इति तृतीयोऽनुवाकः

---

## चतुर्थोऽनुवाकः

**वाको वा अनुवाको वाकं वाकं संजुषमाणः देवस्य स्वं स्वगुप्तये स्वयं जेनातिषे ज्योतिषे स्वाहा ॥ १ ॥**

**वाकः अनुवाक** एव यद्वा **वाकं वाकं** प्रत्यनुवाकं प्रतिवाक्यं **वा संजुषमाणः** अस्य मन्त्रस्याध्येतरि प्रियमाणः ॥

वेदाक्षराणि यावन्ति पठितानि द्विजोत्तमैः ।
यावन्ति हरिनामानि कीर्तितानि न संशयः ।
तपसा विद्यया तुष्ट्या धत्ते वेदं हरेस्तनुम् ॥

इति स्वनामत्वाच्च "स ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः" इत्यादिश्रुतेर्निश्वासरूपत्वाच्च वाकं संजुषमाण इत्युक्तम् । देवः "दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु" इति । स देवः **स्वं** स्वतेजोरूपं **स्वगुप्तये** स्वकृतलोकमर्यादरक्षणार्थं त्रयोमयं सूर्यं **जेनातिषे** कल्पयति । "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति श्रुतिः । "आदित्यो वा एष एतन्मण्डलं तपति तत्र ता ऋचस्तदृचा मण्डलꣳ स ऋचां लोकोऽथ य एष एतस्मिन् मण्डलेऽर्चिर्दीप्यते तानि सामानि स साम्नां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिषि पुरुषस्तानि यजूꣳषि स यजुषा मण्डलꣳ स यजुषां लोकः सैषा त्रय्येव विद्या तपति" इत्यादि**स्वय ज्योतिषे** अनश्वरज्योतिषे तुभ्यम् ॥ १ ॥

**द्वावेतौ पक्षी अचरं चरन्तौ नाधुरं व्यधुनीते यश्चैकं भुनक्ति भोक्त्रे स्वाहा ॥ २ ॥**

शरीरस्य तौ **एतौ द्वौ** जीवात्मपरमात्मानौ **पक्षी** पक्षिप्रायौ **अचरं** प्रकृतिं **चरन्तौ** शरीरे स्थितौ । यद्वा " चर गतिभक्षणयोः " इति प्रयोज्य-प्रयोजकभावेन प्रकृतिं भक्षयन्तौ ।

यद्वा कर्मफलमुपनिषदन्तरे—

ऋतं पिबन्तौ सुकृतस्य लोके
गुहां प्रविष्टौ परमे परार्धे ।
छायातपौ ब्रह्मविदो वदन्ति
पञ्चाग्नयो ये च त्रिणाचिकेताः ॥ इति ॥

**नाधुरं व्यधुनीते** तत्र परमां धुरं भारं धुनित इति न धुनित एव । श्रुत्यन्तरे—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥

**यश्चैकं भुनक्ति** यः परमात्मा एकजीवात्मानं चकारात्प्रकृतिं च भुनक्ति संहरति ।

श्रुतिः—

यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ इति ॥

हरेरेव सर्वसंहारकरत्वं श्रूयते " हरिꣳ हरन्तमनुयन्ति देवाः । विश्वस्येशानं वृषभं मतीनाम् " इति । ईशानशब्दश्रवणाद्रुद्र एवेति चेत् सत्यम् । " विश्वस्येशानम् ", " पतिं विश्वस्यात्मेश्वरम् ", " अस्येशाना जगतो विष्णुपत्नी" इत्यादिश्रुतिषु लक्ष्मीनारायणयोर्जगदीश्वरत्वश्रवणात्केवलेशानशब्दश्रवणाभावात् । " ईशानः सर्वविद्यानाम् " इति विद्यामात्रेशानत्वस्य श्रवणात् ।

ब्रह्मा शम्भुस्तथैवार्कश्चन्द्रमाश्च शतक्रतुः ।
एवमाद्यास्तथा चान्ये युक्ता वैष्णवतेजसा ॥
जगत्कार्यावसाने तु वियुज्यन्ते च तेजसा ।
वितेजसश्च ते सर्वे पञ्चत्वमुपयान्ति च ॥ इति ॥

अत एव सर्वसंहारकत्वं श्रीमन्नारायणस्य सर्वसंहारकस्य ॥ २ ॥

**यो वा आयुः परमात्मा न मीढुषः पारम्पर्यात्परं परायणः पराय लोकानां परमाद्धानः परम्पराय स्वाहा ॥ ३ ॥**

**यः परमात्मा** नारायणः **मीढुषो** रुद्रस्य "नमो रुद्राय मीढुषे" इति **परमायुः** आपन्निवारकत्वात् परममृत्युत्वाच्च । आरण्यके—"किं तद्विष्णोर्बलमाहुः" इत्यारभ्य बलादिकमुत्पाद्य "पृच्छामि त्वा परं मृत्युम्" इति प्रश्नस्य प्रतिवचनम् । "अमुमाहुः परं मृत्युम् । पवमानं तु मध्यमम् । अग्निरेवावमो मृत्युः । चन्द्रमाश्चतुरुच्यते ॥" इति भगवत्येव परं मृत्युत्वं प्रतिपादितम् । परमात्मानमन्तर्यामिणम् । विभक्तिव्यत्ययः । परमात्मा **पारम्पर्यात्परम्पराय लोकानां** परमुत्कृष्टपरः भिन्नपरः शत्रुश्च **परमाद्धानः** उत्कृष्टत्वं प्रथमानः अत एव **परायणः** परमगतिभूतः मोक्षोपायभूत इत्यर्थः । यद्वा चतुर्विधपुरुषार्थानां गतिभूतः । **पराय** उत्कृष्टगतिभूताय ।

ननु,

यो ब्रह्मा ब्रह्मण उज्जहार प्राणेश्वरः कृत्तिवासाः पिनाकी ।
ईशानो देवः स न आयुर्दधातु तस्मै जुहोमि हविषा घृतेन ॥

इत्यायुषो निमित्ते कथं रुद्रप्रार्थना प्रतिपाद्यत इति चेत्सत्यम् ।

भारते—

ततस्ते च सुरास्सर्वे ब्रह्मा ते च महर्षयः ।
वेददृष्टेन विधिना वैष्णवं क्रतुमारभन् ॥
तस्मिन् सत्रे तदा ब्रह्मा स्वयं भागमकल्पयत् ।
देवा महर्षयश्चैव सर्वे भागानकल्पयन् ॥
ते कार्तयुगधर्माणो भागाः परमसत्कृताः ।
प्रापुरादित्यवर्णान्तं पुरुषं तमसः परम् ॥

श्रीभगवान्—

येन यः कल्पितो भागः स तथा समुपागतः ।
यतोऽहं प्रविशाम्यद्य फलमावृत्तिलक्षणम् ॥
यज्ञैर्ये वापि यक्ष्यन्ति सर्वलोकेषु वै सुराः ।
कल्पयिष्यन्ति वै भागांस्ते नरा वेदकल्पितान् ॥
यो मे यथा कल्पितवान् भागमस्मिन् महाक्रतौ ।
स तथा यज्ञभागार्हो वेदसूत्रे मया कृते ॥ इति ॥

अतो ब्रह्मरुद्रादीनां तत्तत्कर्मसु पूजार्हत्वं भगवतो नारायणस्य वरप्रदानलब्धम्। यद्वा संहारकत्वेन भगवता सृष्टत्वात् तत्पूजेति इदं प्रपन्नविषयं न भवति। भगवन्मन्त्रस्य मृत्युञ्जयत्वम्। "एते सहस्रमयुतं पाशा मृत्यो मर्त्याय हन्तवे। तान् यज्ञस्य मायया सर्वानवयजामहे।" अस्यार्थः—हे मृत्यो मर्त्याय हन्तवे वर्तसे व्रतसहस्रमयुतमेते पाशाः तान्पाशान् यज्ञस्य मायया "यज्ञो वै विष्णुः" इति श्रुतेः।

उपनिषदन्तरे—

यज्ञाख्यः परमात्मा य उच्यते तस्य होतृभिः ।
उपनीतं ततोऽस्यैतत्तस्माद्यज्ञोपवीतकम् ॥ इति ॥

विष्णोर्मायया आश्चर्यकारिण्या वैष्णव्या विद्यया मन्त्रेण सर्वान् तान् पाशानवयजामहे अधस्तात्कुर्मः ।

यदन्तस्तमशेषेण वाङ्मयं देववैदिकम् ।
तस्मै व्यापकमुख्याय मन्त्राय महते नमः ॥

ननु "हरिँ हरन्तमनुयन्ति देवाः । विश्वस्येशानं वृषभं मतीनाम् । ब्रह्म सरूपमनु मेदमागात् ।" इत्यादिषु हरिं नृसिंहं हरन्तं शरभरूपेण ईशानं रुद्रं देवा अनुयान्ति गतिं कुर्वन्ति । अतः सर्वसंहारकारको रुद्र एवेति चेत् तदसत् ।

पूर्वापरपरामृष्टशब्दानां कुरुते मतिम् । इति ।

पूर्वानुवाके—"भर्ता सन्भ्रियमाणो बिभर्ति । एको देवो बहुधा निविष्टः ।" इत्यारभ्य "तमेव मृत्युममृतं तमाहुः । तं भर्तारं तमु गोप्तारमाहुः" इत्यादिषु भर्तृशब्देन "व्यष्टभ्नाद्रोदसी विष्णवेते । दाधर्थ पृथिवीमभितो मयूखैः" इति स्वकान्त्यैवावतीर्य तेन रूपेण जगद्धरणम् "किं तद्विष्णोर्बलमाहुः । का दीप्तिः किं परायणम् । एको यद्धारयद्देवः । रेजती रोदसी उभे । वाताद्विष्णोर्बलमाहुः ।" इत्यारभ्य । "पृच्छामि त्वा परं मृत्युम् । अवमं मध्यमं चतुम् । लोकं च पुण्यपापानाम् । एतत्पृच्छामि संप्रति । अमुमाहुः परं मृत्युम् । पवमानं तु मध्यमम् । अग्निरेवावमो मृत्युः । चन्द्रमाश्चतुरुच्यते ॥" इति परमात्मनो विष्णोरेव परं मृत्युत्वं प्रतिपादितम् । देवशब्दः सामान्यवाचीति एको देव इत्युक्तम् । "एको देवो नारायणः", "अपहतपाप्मा दिव्यो देव एको नारायणः", "रुद्रास्तु बहवः", "सहस्राणि सहस्रशो ये रुद्राः", "तमेव मृत्युम्", "परं मृत्यो अनु परेहि पन्थाम् ।" इति ।

नृसिंहतापनीयोपनिषदि—

उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ।
नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ॥ इति ॥

तत्रैव—" अथ कस्मादुच्यत उग्रमिति । स होवाच प्रजापतिः—यस्मात्स्वमहिम्ना सर्वान् लोकान् सर्वान् देवान् सर्वानात्मनः सर्वाणि भूतानि उद्गृह्णाति अजस्रं सृजति विसृजति वासयति उदग्राह्यत उद्गृह्यते ।

स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् ।
मृडा जरित्रे सिंह स्तवानो अन्यं ते अस्मन्निवपन्तु सेनाः ॥

तस्मादुच्यत उग्रमिति ॥ "

" अथ कस्मादुच्यते वीरमिति । यस्मात्स्वमहिम्ना सर्वान् लोकान् सर्वान् देवान् सर्वानात्मनः सर्वाणि भूतानि विरमति विरामयत्यजस्रं सृजति विसृजति वासयति । यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः । तस्मादुच्यते वीरमिति ॥ "

" अथ कस्मादुच्यते महाविष्णुमिति । यस्मात्स्वमहिम्ना सर्वान् लोकान् सर्वान् देवान् सर्वानात्मनः सर्वाणि भूतानि व्याप्नोति व्यापयति स्नेहो यथा पललपिण्डं शान्तमूलमोतं प्रोतमनुव्याप्तं व्यतिषिक्तो व्याप्यते व्यापयते ।

यस्मान्न जातः परो अन्यो अस्ति
य आविवेश भुवनानि विश्वा ।
प्रजापतिः प्रजया संविदानः
त्रीणि ज्योतीꣳषि सचते स षोडशी ॥

तस्मादुच्यते महाविष्णुमिति ॥ "

"अथ कस्मादुच्यते ज्वलन्तमिति । यस्मात् स्वमहिम्ना सर्वान् लोकान् सर्वान् देवान् सर्वानात्मनः सर्वाणि भूतानि स्वतेजसा ज्वलति ज्वालयति ज्वाल्यते ज्वालयते । सविता प्रसविता दीप्तो दीपयन् दीप्यमानः ज्वलन् ज्वलिता तपन् वितपन् संतपन् रोचनो रोचमानः शोभनः शोभमानः कल्याणः । तस्मादुच्यते ज्वलन्तमिति ॥"

"अथ कस्मादुच्यते सर्वतोमुखमिति । यस्मात्स्वमहिम्ना सर्वान् लोकान् सर्वान् देवान् सर्वानात्मनः सर्वाणि भूतानि स्वयमनिन्द्रियोऽपि सर्वतः पश्यति सर्वतः शृणोति सर्वतो गच्छति सर्वत आदत्ते सर्वगः सर्वगतस्तिष्ठति ।

एकः पुरस्ताद्य इदं बभूव यतो बभूव भुवनस्य गोपाः ।
यमप्येति भुवनꣳ सांपराये नमामि तमहं सर्वतोमुखमिति ।

तस्मादुच्यते सर्वतोमुखमिति ॥"

"अथ कस्मादुच्यते नृसिंहमिति । यस्मात्सर्वेषां भूतानां ना वीर्यतमः श्रेष्ठतमश्च सिंहो वीर्यतमः श्रेष्ठतमश्च तस्मान्नृसिंह आसीत् परमेश्वरो वा जगद्धितमेतद्रूपं यदक्षरं भवति ।

प्रतद्विष्णुः स्तवते वीर्याय मृगो न भीमः कुचरो गरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥

तस्मादुच्यते नृसिंहमिति ॥"

"अथ कस्मादुच्यते भीषणमिति । यस्माद्भीषणं यस्य रूपं दृष्ट्वा सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि भीत्या पलायन्ते स्वयं यतः कुतश्च न बिभेति ।

भीषास्माद्वातः पवते भीषोदेति सूर्यः ।
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम इति ॥

तस्मादुच्यते भीषणमिति ॥"

"अथ कस्मादुच्यते भद्रमिति । यस्मात् स्वयं भद्रो भूत्वा सर्वदा भद्रं ददाति । रोचनो रोचमानः शोभनः शोभमानः कल्याणः ।

भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाꣳ सस्तनूभिः व्यशेम देवहितं यदायुः ॥

तस्मादुच्यते भद्रमिति ॥"

"अथ कस्मादुच्यते मृत्युमृत्युमिति । यस्मात् स्वमहिम्ना स्वभक्तानां स्मृत एव मृत्युमपमृत्युं च मारयति ।

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥

तस्मादुच्यते मृत्युमृत्युमिति ॥"

"अथ कस्मादुच्यते नमामीति । यस्माद्यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च ।

प्रनूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।
यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥

तस्मादुच्यते नमामीति ॥"

"अथ कस्मादुच्यते अहमिति ।

अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाभिः ।
यो मा ददाति स इ देवमावाः अहमन्नमन्नमदन्तमद्मि ।
अहं विश्वं भुवनमभ्यभवां सुवर्णज्योतीः ॥

य एवं वेद । इत्युपनिषत् ॥" उपनिषत्सु नृसिंहस्य प्रभावा एवं श्रूयन्ते ।

पुराणेषु च—

ब्रह्मरुद्रेन्द्रवह्नीन्दुदिवाकरमनुग्रहाः ।
तच्छक्त्याऽधिष्ठितास्सन्तो मोदन्ते दिवि देवताः ॥
जगत्कार्यावसाने तु वियुज्यन्ते च तेजसा ।
वितेजसश्च ते सर्वे पञ्चतामुपयान्ति च ॥ इति ॥

भारते—

सत्त्वमादाय सर्वेषां तेजसोऽथ दिवौकसाम् ।
तेजसाऽप्यधिको भूत्वा भूयोऽप्यतिबलोऽभवत् ॥
ततः प्रभृति देवानां देवदेवो भवोद्भवः ।
पतिश्च सर्वभूतानां पशूनां चाभवत्तदा ॥
भासयामास तान् सत्त्वान् देवदेवो महाद्युतिः ।
अर्थमादाय सर्वेषां तेजसा प्रज्वलन्निति ॥
ततोऽभिषिषिचुः सर्वे सुरा रुद्रा मुरारिहम् ।
महादेव इति ह्यासीद्देवदेवो महेश्वरः ॥

अत एव महादेवादिशब्दवाच्यत्वं रुद्रस्य वरप्रदानलब्धं अत एव तमेव मृत्युमित्युक्तम् । अत्र परंब्रह्मण एवामृतशब्दवाच्यत्वं न तु रुद्रस्य । आरण्यके— "नैव देवो न मर्त्यः । न राजा वरुणो विभुः । नाग्निर्नेन्द्रो न पवमानः । मातृक्कचन विद्यते । दिव्यस्यैका धनुरार्त्निः पृथिव्यामपरा श्रिता । तस्येन्द्रो वम्रिरूपेण । धनुर्ज्यामच्छिनत्स्वयम् । तदिन्द्रधनुरित्यज्यम् । अभ्रवर्णेषु चक्षते । एतदेव शंयोर्बार्हस्पत्यस्य । एतद्रुद्रस्य धनुः । रुद्रस्य त्वेव धनुरार्त्निः । शिर उत्पिपेष । स प्रवर्ग्योऽभवत । तस्माद्यस्स प्रवर्ग्येण यज्ञेन यजते । रुद्रस्य स शिरः प्रतिदधाति । नैनꣳ रुद्र आरुको भवति" ॥ इति ॥

त्रिपुरसंहारकस्य रुद्रस्य पशुपतित्वादिप्रार्थना श्रूयते यजुषि—

"तेषामसुराणां तिस्रः पुर आसन्नयस्मय्यवमाथ रजताथ हरिणी ता देवा जेतुं नाशक्नुवन् ता उपसदैवाजिगीषन् तस्मादाहुर्यश्चैवं वेद यश्च नोपसदा वै महापुरं जयन्तीति त इषु॰ समस्कुर्वताग्निमनीक॰ सोम॰ शल्यं विष्णुं तेजनं तेऽब्रुवन् क इमामसिष्यतीति रुद्र इत्यब्रुवन् रुद्रो वै क्रूरः सोऽस्यत्विति सोऽब्रवीद्वरं वृणा अहमेव पशूनामधिपतिरसानीति तस्माद्रुद्रः पशूनामधिपतिः" इत्यादि ॥

श्वेताश्वतरे—

तं विश्वरूपं भवभूतमीड्यं देवं स्वचित्तस्थमुपास्य पूर्वम् ।
स वृक्षकालाकृतिभिः परोऽन्यो यस्मात्प्रपञ्चः परिवर्ततेऽयम् ॥
धर्मावहं पापनुदं भगेशं ज्ञात्वात्मस्थममृतं विश्वधाम ।
तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ॥
पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ।
न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ॥
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ।
न तस्य कश्चित्पतिरस्ति लोके नचेशिता नैव च तस्य लिङ्गम् ।
स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ॥

इत्यादि ।

तं विश्वरूपमित्यारभ्य प्रतिपादितानि विशेषणानि रुद्रपराणीति चेत् तदसत् ।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम् ॥

विश्वं नारायणं देवमक्षरं परमं पदम् ।
विश्वतः परमं नित्यं विश्वं नारायणꣳ हरिम् ॥
विश्वमेवेदꣳ सर्वं तद्विश्वमुपजीवति ।
पतिं विश्वस्यात्मेश्वरꣳ शाश्वतꣳ शिवमच्युतम् ॥ इत्यादि ॥

मुण्डकोपनिषदि—

अग्निर्मूर्धा चक्षुषि चन्द्रसूर्यौ
दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य
पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥ इत्यादि ॥

दिवौकसामर्धतेजसाप्यायै तस्य अखिलदेवतावरप्रदानेन पशुपतित्वादिकं प्राप्तस्य पशुपतेः सर्वसंहारकत्वं नोपपद्यते ।

किञ्च—

नमाम्यहं पापनुदं भगेशं ज्ञात्वात्मस्थममृतं विश्वधाम ।
तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ।
पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ॥

इत्याद्युपनिषद्वाक्येषु भगवन्महिमा प्रतिपाद्यते ।

व्यक्तं हि भगवान् देवः साक्षान्नारायणः स्वयम् ।
अष्टाक्षरस्वरूपेण मुखेषु परिवर्तते ॥

इति भगवन्मन्त्राः केवलमृत्युञ्जया न भवन्ति। किन्तु चतुर्वर्गफलप्रदा वा ॥ ३ ॥

**तेजसां तेजस्तेज आदधानः सत्त्वस्तेजस्तेजसां तेजस्तेजसे स्वाहा ॥ ४ ॥**

यः परमात्मा **तेजसां तेजस्तेज आदधानः** नक्षत्राग्निचन्द्रसूर्याणा-मुत्तरोत्तरं तेजः प्रयच्छमानः **सत्त्वस्तेजस्तेजसां** सूर्यादीनां तेजोयुक्तानां यदा कदाचित् तेजोदर्शनाभावात् ।

कठवल्लीषु—

न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनु भाति सर्वं
तस्य भासा सर्वमिदं विभाति ॥ इति ॥

सूर्याद्यपेक्षयाऽधिकतेजोरूपत्वश्रवणात् नाशरहितत्वाच्च सत्त्वस्तेजसा-मित्युक्तम् । तेजस्विषु स्थितानां तेजसां तेषां तेजसामपि **तेजसे** पराभि-भवनसामर्थ्यं **तेज** इति तस्मै ॥ ४ ॥

**सह संपायास्त्वमाशिषमाशिभूताभूतमाशिषमाशिराशी-राशिरनुभूमिः स्वाहा ॥ ५ ॥**

चेतनाचेतनेषु सर्वत्रान्तर्यामित्वेन वसन् वैषम्यनैर्घृण्याभावात् शत्रुमित्रोदासीनानां **सहा**समत्वे समत्वायाः पासि त्वं **आशिषमाशिभूताभूतं** आशिभूतं अभूतं च **आशिषमाशिः आशीराशिः** आशिषां राशिः **अनुभूमिः** उत्पत्तिस्थानम् । तुभ्यमित्यर्थः ॥ ५ ॥

**यो ह संयोगो ध्यानं जुषमाणः सन्धुः सन्धुक्षणानां संयोगः सन्दधानः पुण्यः पुण्यानां पुण्याय स्वाहा ॥ ६ ॥**

जीवात्मपरमात्मनोर्यो वा **संयोगः** उपायत्वेन च **ध्यानं संयोगः** । उपायत्वेनोपेयत्वेन च प्रीतिपूर्वकं **जुषमाणः** सेवमानः **सन्धुक्षणानां** कृपाकटाक्षेण प्रोक्षणाप्रोक्षणानां विषयभूतः **सन्धुः** सम्यक् प्रोक्षित इत्यर्थः ।

**संयोगः सन्दधानः** एवंभूतः संयोगः सन्दधानः । **पुण्यानां** पुण्यशरीराणां एष एव साधु कर्मकरायते । यमेभ्यो लोकेभ्य उन्निषति एष एव साधुकर्म कारयति यमरो निनीषतीति ।

श्रीगीतायाम्—

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥

यद्वा **पुण्यानां पुण्य** इतरेषां मध्यस्थः तेन विना तृणाग्रमपि न चलतीति । **पुण्याय** पुण्यस्वरूपिणे तुभ्यम् ॥ ६ ॥

**सहस्रं वा यस्य वै षितानमादधानः सहस्रं वा आशिषः सहस्रं यस्य वै सासिकाः सहस्रं सहस्राय स्वाहा ॥ ७ ॥**

मुक्तानामैश्वर्यं प्रतिपादयति । **यस्य** मुक्तस्य परमपदं गच्छतः **सहस्रं वा यस्य वै वितानं** मण्टपादूर्ध्वोच्छादनादि **आदधानः** । स्वयमेवा-तपमप्रयच्छमानः । **सहस्रं वा आशिषः** स्रक्चन्दनादयः । **सासिकाः** आसनादिभिः सहिताः । **सहस्रं यस्य वै सासिकाः** आसने सह रन्तुं योग्याः स्त्रियः । **सहस्रं सहस्राय** । "सहस्रशीर्षा पुरुषः" इत्यादिश्रुति-सिद्धाय तुभ्यम् । "तं पञ्चशतान्यप्सरसां प्रतिधावन्ति शतं मालाहस्ताः" इत्यादि ॥ ७ ॥

**स्वातीका गुप्तयो गुप्तिः सत्त्वं सत्त्वानां (सत्यं सत्यानां) सात्वंपदं तत्सत्त्वं सत्त्वमासीत् सात्त्वं सात्त्वं वै सत्त्वमादधानाय स्वाहा ॥ ८ ॥**

**स्वातीका गुप्तयः** स्वर . . शं परमात्मानं नारायणमतिक्रम्य देवतान्तरमन्त्रान्तरसाधनान्तरप्रयोजनान्तरादीनामकिञ्चित्करत्वात् तेषां गोप्तृ-

त्वशक्त्यभावात् गोप्तृत्वेन वरणं **गुप्तयः**। यद्वा स्वान्तर्यामिणः परमात्मन एव गोप्तृत्वादयः।

आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम्।
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा॥
आत्मनिक्षेपकार्पण्यं षड्विधा शरणागतिः।
अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम्।
तदेकोपायता याच्ञा प्रपत्तिः शरणागतिः॥ इति॥

**गुप्तिः** रक्षणं **सत्त्वं** यथार्थं **सत्त्वानां** सत्त्वभूतहितमिति भूतहित-युक्तानां **सात्त्वंपदं** सत्त्वपदप्रदं **तत्सत्त्वं** तत्सात्त्विकपदं नान्यदिति।

यत्पदं सात्वताभिख्यं विष्णुलोके महीयते।

"देवैः सुकृतकर्मभिस्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव" इति ऋग्वेदब्राह्मणे। यद्वा परमात्मनो गुप्तयः गोप्तृत्वादिकमेव धर्मोत्तरापेक्षया **सत्यं** यथार्थमिति ये गृह्णन्ति तेषां **सत्यानां** सत्यत्वेन गृहीतानां **सात्त्वंपदं** परमपदं **सत्त्वमासीत्**। सात्त्विकमेवासीत्। **सात्त्वं वै** सत्त्वमेव **सात्त्वं** सात्वतशब्दवाच्यम्। "नामैकदेशे नामग्रहणम्" भीमो भीमसेन इतिवत्।

नित्यनैमित्तिकाजस्रा याज्ञीयाः परमाः क्रियाः।
सर्वं सात्वतमास्थाय विधिश्चक्रे समाहितः॥ इति॥

सत्त्वप्रधानत्वात् सात्वतशब्दप्रयोगः। भारतोक्तसात्वतशब्दवाच्यं पञ्चरात्रं न भवति सात्त्विकनामत्वेन प्रणीतत्वात्।

अथांशोः सात्वतो नाम विष्णुभक्तः प्रतापवान्।
महात्मा दाननिरतो धनुर्वेदविदां वरः॥
स नारदस्य वचनाद्वासुदेवार्चने रतः।
शास्त्रं प्रवर्तयामास कुण्डगोळादिभिः श्रुतम्॥

तस्य नाम्ना तु विख्यातं सात्वतं नाम शोभनम् ।
प्रवर्तते महाशास्त्रं कुण्डादीनां हितावहम् ॥ इति ॥

साङ्ख्यपुराणे—

श्रुतिभ्रष्टः श्रुतिप्रोक्तप्रायश्चित्ते भयं गतः ।
क्रमेण श्रुतिविध्यर्थं मनुष्यस्तन्त्रमाश्रयेत् ॥
धर्मशास्त्रपुराणे च प्रोक्तं हि मरणान्तिकम् ।
प्रायश्चित्तं मनुष्याणां पापिष्ठानां सुदारुणम् ॥
भयं प्रबलचित्तानां मरणे जायते भृशम् ।
तेषामेवाभिरक्षार्थं खल्वहं तन्त्रमुक्तवान् ॥
पाञ्चरात्रं भागवतं तन्त्रं सात्वतनामकम् ।
वेदाग्रहं समुद्दिश्य कमलापतिरुक्तवान् ॥ इति ॥

भागवते—

त्रिवक्त्राया उपश्लोकः पुत्रः कृष्णमनुव्रतः ।
शिष्यः साक्षान्नारदस्य ददौ चित्तमखण्डितम् ॥
तेनोक्तं सात्वतं तन्त्रं यज्ज्ञात्वा मुक्तिभाग्भवेत् ।
यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवः स्मृतः ॥

इति परमात्मपरत्वात् पारमात्मिकं सात्वतशब्दवाच्यं स्वातन्त्र्येण देवतान्तर-मन्त्रान्तरादिप्रतिपादनाभावात् वैदिकत्वेन प्रसिद्धं श्रीमद्वैखानसं सात्विक-मेव । **सत्वमादधानाय** सात्त्विकगुणं प्रयच्छमानाय **तुभ्यम्** ॥ ८ ॥

**सत्त्वं वा उद्रेकमासीद्यत्सत्त्वमुभयोरनुगोप्ता तत्सत्यं सत्यं-पदाय सत्याय स्वाहा ॥ ९ ॥**

**सत्त्वं वा** सात्विकमेव यत्तस्य परमात्मनः **उद्रेकमासीत्** प्रचुरमासीत् । **यत्सत्त्वं** सात्त्विकप्रधानं ब्रह्म **उभयोरपि** ऐहिकामुष्मिकयोः **अनुगोप्ता**

साकल्येन गोप्ता । यद्वा स्थावरजङ्गमात्मकयोः । यद्वा मृते जन्मनो रक्षतः **तत्सत्यं सत्यंपदाय** ततः ब्रह्मपदाय परमपदाय **सत्यं** परमपदप्राप्तये सत्यमित्यर्थः । "नान्यः पन्था अयनाय विद्यते" इति श्रुतेः । **सत्याय** यथार्थभूताय तुभ्यम् ॥ ९ ॥

**सत्यो जेनातिः सत्यान्तरात्मा सत्योद्योगः सत्यः सत्कर्मा**
**सत्यं सत्यं वितानमासीत्सत्यं सत्याय स्वाहा ॥ १० ॥**

विनाशरहितत्वात् **सत्यो जेनातिः** । यद्वा भूतहितत्वात् सर्वेषां हितरूपः । **जेनातिः** दीप्तिः । **सत्यान्तरात्मा** सत्यस्वभावः । **सत्योद्योगः** सत्यसङ्कल्पः । **सत्यः** नित्यः । **सत्कर्मा** शोभनकर्मा । ननु यदि परमात्मा विष्णुः सत्कर्मा तर्हि भृगुपत्न्यादिस्त्रीवधादिकमेव नोपपद्यत इति चेत्सत्यम् ।

उत्तरश्रीरामायणे—

श्रृणु राजन् यथावृत्तं पुरा देवासुरा युधि ।
दैत्यासुरैर्भज्यमाना भृगुपत्नीं समाश्रिताः ॥
यदा दत्ताभयास्तत्र न्यवसन्निर्भयास्तदा ।
तया परिगृहीतांस्तान् दृष्ट्वा क्रुद्धः सुरोत्तमः ॥
चक्रेण शितधारेण भृगुपत्न्याः शिरोऽहरत् ।
ततस्तान्निहतान् दृष्ट्वा पत्नीं भृगुकुलोद्भवः ॥
शशाप सहसा क्रुद्धो विष्णुं परबलार्दनम् ।
यस्मादवध्यां मे पत्नीमवधीः क्रोधमूर्च्छितः ॥
तस्मात्त्वं मानुषे लोके जनिष्यसि जनार्दन ।
तत्र पत्नीवियोगं त्वं प्राप्स्यसे बहुवार्षिकम् ।
ततः प्रतिहरः शापस्तमृषिं पुनरागमत् ॥

इत्यादिसृष्टिस्थितिसंहारकर्तृत्वात् दुष्टनिग्रहकर्तृत्वाच्च ॥

अप्रमेयोऽनियोज्यश्च यत्र कामागमो वशी ।
मोदते भगवान् भूतैर्बालः क्रीडनकैरिव ।। इति ।।

लीलाविभूतिकत्वात् सर्वात्मकत्वात् निरङ्कुशे स्वतन्त्रत्वाच्च न दोषः। अत एव **सत्कर्मा सत्यं सत्यं वितानमासीत् सत्यं** यथार्थभूतहितं **सत्याय** यथार्थभूताय तुभ्यम् ।। १० ।।

इति चतुर्थोऽनुवाकः ।

---

## पञ्चमोऽनुवाकः

**सत्यः सत्यं पुण्यमासीत्पुण्यो वा दैविकं सत्यं सत्त्वमार्षं सत्यं सत्त्वं सत्पथाय स्वाहा ।। १ ।।**

**सत्यः** चिदचिदात्मकः परमात्मा **सत्यं पुण्यमासीत्** । सत्यशब्देन मोक्षोपायभूतज्ञानरूपः । पुण्यशब्देन इष्टापूर्तादयः स्वयमेवासीत् । **पुण्यो वा दैविकं** "तानि त्रेतायां बहुधा सन्ततानि तान्याचरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके" इति श्रुतेः । भगवत्प्रीत्यर्थं कृतं पुण्यदैविकं कालान्तरेऽपवर्गप्रदम् । **सत्यं सत्त्वमार्षं** मोक्षोपायभूतज्ञानरूपं शुभाश्रय-संशीलनमननमिति मननविषयत्वादार्षमित्युक्तम् । तत्परं ब्रह्म "नारायणपरं ब्रह्म" इति श्रुतेः । श्रीमन्नारायण एव **सत्यं सत्त्वं सत्पथाय** सन्मार्गभूतः सत्त्वशब्दवाच्यः परमात्मा अर्चिरादिमार्गभूत इत्यर्थः । "ये चत्वारः पथयो देवयानाः" इति देवयानमार्गाश्चतुर्विधाः ।

स्वामिन् स्वशेषं स्ववशं स्वभरत्वेन निर्भरम् ।
स्वदत्तस्वधियं स्वार्थं स्वस्मिन्न्यस्यति मां स्वयम् ॥

इति न्यासविद्यानां विविधानामर्चिरादिमार्गाः प्रतिपद्यन्ते। "अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षड्डुदङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इत्यादि ।

ये तु दग्धेन्धना लोके पुण्यपापविवर्जिताः ।
तेषां वै क्षेममध्वानं गच्छतां द्विजसत्तमः ॥
सर्वलोकतमोहन्ता आदित्यश्चारमुच्यते ।
ज्वालामालिमहातेजा येनेदं धार्यते जगत् ॥
आदित्यदग्धसर्वाङ्गा अदृश्याः केचन क्वचित् ।
परमाण्वात्मभूताश्च तं देशं प्रविशन्त्युत ॥
तस्मादपि विनिर्मुक्ता अनिरुद्धं तथा स्थिताः ।
मनोभूतास्ततो भूयः प्रद्युम्नं प्रविशन्त्युत ॥
प्रद्युम्नाच्च विनिर्मुक्ता जिह्वासङ्कर्षणं ततः ।
प्रविशन्तीति प्रबला सङ्ख्यायोनांश्च तैस्सह ॥
ततस्त्रैगुण्यहीनास्ते परमात्मानमोजसा ।
सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः ॥
समाहितमनस्कास्तु नियताः संयतेन्द्रियाः ।
एकान्तभावा हि गताः वासुदेवं व्रजन्ति ते ॥
श्वेतद्वीपमितः प्राप्य विश्वरूपधरं हरिम् ।
ततोऽनिरुद्धमासाद्य श्रीमन् क्षीरोदधौ हरिम् ॥

ततः प्रद्युम्नमासाद्य देवं सर्वेश्वरेश्वरम् ।
ततः सङ्कर्षणं दिव्यं भगवन्तं सनातनम् ॥
ततोऽप्यपरो मार्गः सदा ब्रह्महितैषिणाम् ।
परमैकान्तिसिद्धानां पञ्चकालरतात्मनाम् ॥
तेभ्यो विशिष्टाज्जानामि गतिमेकान्तिनां नृणाम् ।
उत्क्रामन्ति च मार्गस्थाः शीतभूतो निरामयः ॥
देवयानः परं पन्था योगिनां क्लेशसङ्क्षये ।
अनन्ता रश्मयस्तस्य दीपवद्यः स्थितो हृदि ॥
सितासिता ष्णनिलाः [?] कपिलाः पीतलोहिताः ।
ऊर्ध्वमेते स्थितास्तेषां यो भित्त्वा सूर्यमण्डलम् ॥
ब्रह्मलोकमतिक्रम्य [नूनं] याति परां गतिम् ।
यदस्यां न द्रव्यमस्ति ह्यूर्ध्वमेतद्व्यवस्थितम् ॥
तेन देवशरीराणि सधामानि प्रपद्यते ।
एकैकरूपाश्चाधस्ताच्छर्म येऽस्यामृतप्रभाः ।
इह कर्मप्रभोगाय तैस्सन्नरतिरेव सः ॥ इति ॥

"अग्नयो वै त्रयी विद्या देवयानः पन्था गार्हपत्य ऋक् पृथिवी रथन्तरमन्वाहार्यपचनं यजुरन्तरिक्षं वामदेव्यमाहवनीयस्साम सुवर्गो लोको बृहत्तस्मादग्नीन् परमं वदन्ति" इति श्रुतिः । अथाऽयं देहजं जन्म कृत्वा भार्यामयपाशबन्धनो भगवन्मायया कामक्रोधलोभमोहमदमात्सर्यहिंसादीनि कार्याणि कृत्वा तद्द्वारेण निष्क्रम्य पुनः पापीयसीं योनिं प्राप्य पुनर्जायते । स्वर्गनरकफलेषु प्रवर्तते । तस्माद्भगवन्मायया मोहितत्वात् भगवन्तं समाश्रित्य भक्त्या नारायणमुपासीत । उपासनात्सोऽपि भक्तवत्सलत्वात् भक्तानुकम्पया स्वमायया विमोचयति । तत आत्मा सम्यक् ज्ञानं प्रविशति । पश्चादाश्रम-

धर्मसंयुक्तो भगवत्समाश्रयणं करोति। तत्समाश्रयणेन संसारार्णवनिमग्नो जीवात्मा परमात्मानं नारायणं पश्यति। सोऽप्यपुनरावृत्तिकं दिव्यलोकं प्रापयति। पश्चात्कृतकृत्यो भवति। संसारवनवासनामोक्षो मुक्तिः मोक्षविशेषः। चतुर्विधपदावाप्तिः सालोक्यसामीप्यसारूप्यसायुज्य इति। आमोदप्राप्तिः सालोक्यम्। प्रमोदप्राप्तिः सामीप्यम्। वैकुण्ठप्राप्तिः सायुज्यमिति। तच्च नित्यानन्दामृतरसपानवत्सर्वदा तृप्तिकरं परमात्मनो नित्यनिषेवणं परंज्योतिः-प्रवेशनम्। "तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः" इति श्रुतिः। तस्मात् भगवतो नान्यथाप्राप्तिरिति विज्ञायते इति। मोक्षोपि तारतम्यता-श्रवणात् ब्रह्मविदां भगवदाराधकानामग्निहोत्रिणामर्चिरादिना ब्रह्मप्राप्तिः "अर्चिरादिना तत्प्रथितेः" इति वेदान्तसूत्रे उक्तत्वात्। भक्त्या भगवन्तं नारायणमर्चयेत् "तद्विष्णोः परमं पदम्" सम्यक् भवतीति विज्ञायत इति। अर्चिरादिमार्गप्रतिपादनाच्च। न्यासविद्यानिष्ठानामर्चिरादिना परमपदप्राप्तिः। साङ्ख्यानां योगनिष्ठानामामोदप्राप्तिः। एकान्तिनां प्रमोदप्राप्तिः। परमैकान्तिसिद्धानां पञ्चकालरतात्मनां श्वेतद्वीपादिना ब्रह्मप्राप्तिः। मोदप्राप्तिः केवलस्यामोद एव। तत्रापि स्वानुभव एव।

छान्दोग्ये—"यथाक्रतुरस्मिन् लोके पुरुषा भवन्ति। तथेतः प्रेत्य ते भवन्ति" इति श्रुतेः। तं यथायथोपासते तथैव भवन्तीति॥ १॥

**सत्यो ज्योतिः सत्त्वं प्राणाः सत्त्वाधाराः सत्त्वं संयानाः**
**सत्यः सत्त्वं प्रकाशं ज्योतिषे स्वाहा॥ २॥**

हे परमात्मन् **सत्यो ज्योति**र्ज्योतिष्मत् षड्भावविकाररहितत्वात् अनेकरूपरहित इत्यर्थः। **सत्त्वं प्राणाः** "नव वै पुरुषे प्राणाः" इति भगवदभिमानदेवतान्तर . . . . . वागाद्यभिमानिदेवतीन्तर्यामिसत्त्वाधाराः

वागादयः **सत्त्वाधाराः** आधारभूता इत्यर्थः । **सत्त्वं संयानाः सत्यः** सत्य-भूतहितः **सत्त्वं** "सत्त्वात् संजायते ज्ञानम्" इति । ज्ञानरूपं ज्योतिः-**प्रकाशं** ज्योतिषे तस्मै ज्योतिषे तुभ्यम् ॥ २ ॥

**कामीमुमामीशिषमीशिषाणां तत्सत्यं सत्यरूपं सत्यं सत्याय सन्दधानाय स्वाहा ॥ ३ ॥**

कामीमुमां ब्रह्मणो मा ईशोऽहं सर्वदेहिनाम् ।
अहं तवाङ्गसम्भूतस्तस्मात्केशवनामवान् ॥ इति ॥

**कां** सरस्वतीं **ई** लक्ष्मीं **उमां** पार्वतीं **ईशिषं** सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् ।

स संज्ञां याति भगवानेक एव जनार्दनः ।
तत्तद्रूपे पाल्यन्तमाशिषस्सत्यमीशिषम् ॥

रुद्रस्यापि पालकं **ईशिषाणां तत्सत्यं सत्यरूपं** "तमीश्वराणां परमं महेश्वरम्" इति श्रुतेः । तत्परममहेश्वरत्वं यथार्थसत्यरूपं यथार्थसत्यं **सत्याय** चिदचिदात्मकप्रपञ्चाय **सत्यं** हितं **सन्दधानाय** प्रयच्छमानाय तुभ्यम् ॥ ३ ॥

**अरिणिर्वा आरन्द आवारन्द आरन्दोऽयमानन्दते मारन्द-मीशिषे स्वाहा ॥ ४ ॥**

**अयं** परमात्मा अरं वेगः येषामस्तीति **अरिणिः** वेगवत्सु मुख्यः वेगवानेव । **आरन्दः** आसस्फतादरं वेगं ददाति **आरन्दः आवारन्दः** अवगत वेगमान्द्यं ददातीति आवारन्दः । "आर पीडायाम्" इति पीडाप्रदः ।

यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहम् ।
बन्धून् वा नाशयिष्यामि व्याधीनुत्पादयाम्यहम् ॥ इति ॥

अयं परमात्मा मारं कामं ददातीति **मारन्दः** कामप्रदः । **आनन्दते** एवमाकारेण क्रीडते—

अप्रमेयोऽनियोज्यश्च यत्र कामगमो वशी ।
मोदते भगवान् भूतैर्बालः क्रीडनकैरिव ॥

इति तुभ्यम् ॥ ४ ॥

**यत्सत्यं वा विष्णुरुद्योगः सूर्यो गौर्वा विष्णुर्विशत् विश्वं विश्वं सन्दधानः तद्विश्वं विष्णवे विश्वरूपाय स्वाहा ॥ ५ ॥**

**यत्सत्यं** स हरिर्देव इति जीवजातमित्यर्थः । **विष्णुः** व्याप्तिमान् **उद्योगः** सर्वोपायभूत इत्यर्थः । **सूर्यो गौर्वा** सूर्यं किरणं च **विष्णुर्विशत् विश्वं विश्वं सन्दधानः** प्रविश्य चिदचिदात्मकं जगत् वसन्ते ग्रीष्मके रश्मिशतैस्सन्तपतन् त्रिभिः—

तदा शरदि वर्षासु वर्षत्येष चतुःशतैः ।
हेमन्ते शिशिरे चैव हिममुत्सृजति त्रिभिः ॥ इति ॥

भारते—

उदितो वर्धमानाभिरा मध्याह्नं तपन् रविः ।
ततः परं ह्रसन्तीभिर्गोभिरस्तं निगच्छति ॥ इति ॥

"तदेवानुप्राविशत्" इत्यादिश्रुतेः । प्रविश्य **विश्वं** जीवं **विश्वं** लोकं **सन्दधानः** धारयन् **तद्विश्वं** जीवात्मानं **विष्णवे** सर्वभूतात्मकाय ददामीति आत्मसमर्पणमुच्यते ॥

नीचीभावेन संयोज्य ह्यात्मनो यत्समर्पणम् ।
विष्ण्वादिषु चतुर्धा तु तत्प्रदानप्रदर्शिनी ॥
नीचीभूतोऽप्यसावात्मा यतत्यंशतयेष्यते ।
तत्तस्मादित्यपेक्षायां विष्णवे स इतीर्यते ॥ इति ॥

आत्मसमर्पणप्रतिपादनान्न्यासविद्या ।

हविर्गृहीत्वा स्वात्मानं वसुरण्वेति मन्त्रतः ।
जुहुयात्प्रणवेनाग्नावच्युताख्यं सनातने ॥

योगरत्ने—

पयोभक्षा वायुभक्षाः शीणपर्णाशिनो वा समलोष्टकाञ्चना वाग्यताः प्राणायामाद्यासननिरताः सर्वतोऽरता बहिष्कृतसर्वकामाः परमशान्ताः परमात्मनि गोविन्दे सदा निहितमानसाः वसुरण्वमन्त्रमुच्चारयन्त आत्मानं तेजोमये परमात्माग्नौ दहन्ति तेऽपि मुक्ता भवन्ति। एष जीवात्मपरमात्मनोर्ज्ञानगो मोक्षयुक्त इति विजानीयात्। एतज्ज्ञानमात्रादेवाचिरान्मोक्षः सिध्यतीति जानीयादिति। प्रसङ्गाद्वसुरण्वमन्त्रस्यार्थ उच्यते। हे प्रत्यगात्मन् वसुर्वसुस्सर्वेषां सवितासि सर्वेषां धनमिवासीति। वसुरण्वशब्दे च सर्वैः कीर्तनीयश्चासि। विभूरसि सङ्कल्पमात्रेण विविधं भावयितासि। प्राणे त्वमसि सन्धाता प्राणे वसन् सर्वस्यानुसन्धाता चासि ब्रह्मन् तृचोत्तरस्त्वमसि विश्वं त्वमेवासि विश्वस्रष्टा चासि। तेजोदास्त्वमस्यग्नेः तेजसि भास्कराग्नेये प्रकाशोष्णस्वरूपिणीति पराभवसामर्थ्यम्। तेजसो वा वर्चोदास्त्वमसि सूर्यस्य वर्चोदा अस्त्विति दीप्तिप्रदः द्युम्नोदास्त्वमसि चन्द्रमसः द्युम्नशब्दो दीप्तिविशेषपरः उपयामगृहीतोऽसि हविषोः स्कन्दने हेतुभूत उपभृदादिरूप उपयामः तत्र प्रकृतिपुरुषज्ञानमुपयामः तेन गृहीतोऽसि ब्रह्मणे त्वामहस ओमित्यात्मानं युञ्जीत ॥

अकारेणोच्यते विष्णुः सर्वलोकेश्वरो हरिः ।
उद्धृता विष्णुना लक्ष्मीरुकारेण तथोच्यते ।
मकारस्तु तयोर्दास इति प्रणवलक्षणम् ॥

अकारवाच्याय सर्वकारणभूताय सर्वरक्षकाय सर्वशेषिणे श्रियः पतय एवाहमनन्य इत्याह → निरुपाधिकशेषभूतस्तच्चरणारविन्दयोरेकात्मीयभरस्तस्यात्मा नारायणायैव सर्वदेशसर्वकालसर्वावस्थोचितसर्वकैङ्कर्याणि स्युरिति कारणभूताय विष्णवे तुभ्यम् ॥ ५ ॥

**तद्भूर्भूस्थं भूस्थो वा विश्वरूपस्तद्भूः प्राणः सङ्ख्यातः भूरासीद्भूरसि भुवोऽसि सुवरसि भूर्भूतये स्वाहा ॥ ६ ॥**

**तद्भूः** आकाशः **भूस्थं** जलं **भूस्थः** अग्निः **विश्वरूपः** नानारूपः पञ्चसङ्ख्यात्वेन विद्यमानः **प्राणः** तद्भूश्रुतिः । "तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः" इत्यादि **भूरासीत्** । भूमेरपि भूमिः आधारभूतेत्यर्थः । **भूरसि भुवोऽसि सुवरसि** भूरादिलोकरूपोऽसि **भूः भूतये** भूरादिलोकानामैश्वर्यभूतोऽसि तुभ्यम् ॥ ६ ॥

**आपो वा अपोऽन्तरात्मा यो वेदो वेदानामाधारः वेदान्तरात्मा सरसो रससङ्ख्यातो रसं रसमासीद्रसाय स्वाहा ॥ ७ ॥**

यः परमात्मा सर्वकारणभूता **आपः** सृष्ट्यर्थमित्यर्थः । अण्डस्यापि कारणभूता इत्यभिप्रायेण पृथक्त्वेनोपादानम् । ततो "येन जीवान्व्यचसर्ज भूम्याम्" इति श्रुतिः ।

अप एव ससर्जादौ तासु वीर्यमपासृजत् ।
तदण्डमभवद्धैवं सहस्रांशुसमप्रभम् ॥ इति ॥

**अपोऽन्तरात्मा** योऽप्सु तिष्ठन्निति । **यः** परमात्मा **वेदः** वेदरूपः **वेदानामाधारः** "तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः"

इत्यादि । **वेदान्तरात्मा** तदन्तर्यामी **सरसः** अन्तर्बहिश्च सारवान् **रससङ्ख्यातः** समग्रषाड्गुण्यपरिपूर्णः । यद्वा—

श्रृङ्गारवीरकरुणाद्भुतहास्यभयानकाः ।
बीभत्सरौद्रशान्ताश्च रसाश्च नव कीर्तिताः ॥ इति ॥

यद्वा—लवणाम्लकटुतिक्तकषायाः । **रसं रसमासीत्** रसानां रस आसीत् । **रसाय** रसरूपाय तुभ्यम् ॥ ७ ॥

**त्रयी वा कामं त्रयीमयं त्रिगुणं त्रेतात्मकं त्रयी वा जेनातिः त्रिगुणं त्रिगुणात्मकं तस्मै त्रेताग्नये त्रिगुणाय स्वाहा ॥ ८ ॥**

**त्रयी वा कामं** इत्यनेनैव वेदवाक्यव्यतिरिक्तभाषान्तरव्यावृत्तिः । शान्तिपर्वणि—

ओङ्कारमुद्गिरन्नेतां सावित्रीं च तदन्वयात् ।
शेषेभ्यश्चैव वक्त्रेभ्यश्चतुर्वेदगतं वसु ॥ इति ॥

**त्रयीमयं** वेदस्वरूपं वेदेषु प्राचुर्येण प्रतिपाद्यं वेदभेदादुच्च-नीचादिस्वरभेदेन **त्रिगुणं त्रेतात्मकं** गार्हपत्यान्वाहार्यपचनाहवनीयभेदेन त्रेतात्मकम् । यद्वा गार्हपत्यादीनां प्राणभूतत्वात् त्रेतात्मकमित्युक्तम् । **त्रयी वा जेनातिः** वेदरूपजेनातिः **त्रिगुणं** त्रियनैमित्तिककाम्यभेदेन त्रिगुणम् । यद्वा—सात्विकराजसतामसभेदेन त्रिगुणम् । **त्रिगुणात्मकं** आधारभूतमेवं-भूताय **तस्मै त्रेताग्नये त्रिगुणाय** गुणत्रयसहिताय तुभ्यम् ॥ ८ ॥

**द्वौ वा मुख्यौ मुख्याधारौ ससुखौ सानन्दौ सस्मेरौ स्मेरायितौ सानन्दमानन्दते स्वाहा ॥ ९ ॥**

**द्वौ** ब्रह्मरुद्रौ । यद्वा प्रतिपुरुषौ **मुख्यौ मुख्याधारौ** अस्वतन्त्रौ परमात्माधारौ । "अन्तरस्मिन्निमे लोकाः" इति । **ससुखौ** सुखसहितौ

**सानन्दौ** हितरूपं सुखं अहितं दुःखं **सस्मेरौ** स्मेरयुतौ हाससहितौ स्मेरायितौ,

एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ ।
तथा दर्शितपन्थानौ सृष्टिसंहारकारकौ ॥
ब्रह्मरुद्रेन्द्रवह्नीन्दुदिवाकरमनुग्रहाः ।
तच्छक्त्याधिष्ठितास्सन्तो मोदन्ते दिवि देवताः ॥ इति ॥

**सानन्दं** आनन्दसहितं **आनन्दते ।**

इष्टे वस्तुनि दृष्टे च प्रियमेवावभासते ।
तद्वस्तुलाभान्मोदः स्यात्प्रमोदस्तस्य भोगतः ।
एते स्म जठरानन्दात् स्वदन्ते जलधेरिव ॥ इति ॥

" सैषाऽऽनन्दस्य मीमाꣳसा भवति । युवा स्यात्साधुयुवाध्यायकः । आशिष्ठो द्रढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः " इत्यारभ्य " स एको ब्रह्मण आनन्दः " इत्यन्तं मानुषमनुष्यगन्धर्वदेवगन्धर्वाणां पितॄणामाजानजानां कर्मदेवानामिन्द्रस्य बृहस्पतेः प्रजापतेर्ब्रह्मण इति मानुषानन्दमुपक्रम्य ब्रह्मानन्दपर्यन्तमुक्त्वा ब्रह्मानन्दस्यापरिमितत्वात् आनन्दो ब्रह्मेति सदतिशयानन्दस्वरूपत्वाच्च ब्रह्मणः " यतो वाचो विवर्तन्ते अप्राप्य मनसा सह " इत्युक्तम् । एवंभूताय तुभ्यम् ॥ ९ ॥

**स एकैकः साधारः साधिष्ठानो नाधिष्ठानः कं कं कस्मै पदे पदे पातः पादाय पादिते स्वाहा ॥ १० ॥**

**स** परमात्मा **एकैकः** अनेन " सदेव सोम्येदमग्र आसीत् ", " एकमेवाद्वितीयम् " इतिश्रुतेः । सृष्टेः प्राक् निमित्तोपादानकारणान्तररहिते

**साधारः** हृदयकमलाद्याधारः । **साधिष्ठानः** "तद्विष्णोः परमं पदम्" इति श्रुतेः परमपदाद्यदिष्ठानसहितः । **नाधिष्ठानः** अवान्तरकत्वेनाधिष्ठानभूतो न भवति । यद्वा—धारकान्तररहितः एवंभूतस्य परमात्मनः **पादाय पातः** प्रणतिः **कं कं** पुरुषमपि **पदे पदे** परमात्मना संपादिते ।

आमोदश्च प्रमोदश्च संमोदस्तदनन्तरम् ।
वैकुण्ठमिति विज्ञेयास्तेऽन्योन्यमुपरि स्थिताः ॥
अतः परं चतुर्थः स्याल्लोकः परमभास्वरः ।
वासुदेवस्य सुमहत्तद्दीप्तमजरावृतम् ॥
द्वादशावरणोपेतं पूर्णचन्द्रायुतप्रभम् ।
सर्वतेजोमयं भास्वदनिर्देश्यं सुरैरपि ॥
आनन्दं नाम तं लोकं परमानन्दमद्भुतम् ।
यस्मिन् कस्मिन् कुले जाता यत्र कुत्र निवासिनः ।
वासुदेवरता नित्यं यमलोकं न यान्ति ते ॥ इति ॥

पदे पदे आमोदादिपदे पदान्तरे वा तापयतीति शेषः । नित्यमुक्तबन्धैश्च क्रीडते तुभ्यम् ॥ १० ॥

इति पञ्चमोऽनुवाकः ।

---

## षष्ठोऽनुवाकः

**स्वयमादिः सर्वान्तरात्मा देवस्य स्वयं क्रीडात्मकमवासृजत् यः स्वयं लोकमवधारमवधारयन् स्वाहा ॥ १ ॥**

अतः परं परब्रह्मणो नारायणस्य परत्वान्तर्यामित्वादिप्रतिपादनमुखेन अर्चावतारादिकं प्रतिपादयति—**स्वयमादिः** इत्यादिना। स्वयमित्यनेन "सदेव सोम्येदमग्र आसीत्", "एकमेवाद्वितीयम्" इति श्रुतेरभिन्ननिमित्तोपादानकारणभूतं "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिभिः सत्यत्वज्ञानत्वानन्तत्वविशिष्टं "आनन्दो ब्रह्म" इति निरतिशयानन्दस्वरूपं "नारायणपरं ब्रह्म" इत्यादिभिः परंब्रह्मपरंतत्त्वपरंज्योतिःपरमात्मादिशब्दवाच्यं नारायणमेवाह—**स्वयमिति**॥

नारस्त्विति सर्वपुंसां समूहः परिकीर्तितः।
गतिरालम्बनं तस्य तेन नारायणः स्मृतः॥ इति॥

अखिलजगत्कारणभूतो नारायण एवादिरित्युच्यते। यद्वा—आदिशब्देन परत्वम्।

परत्वं नाम—

वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः।
आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागवतैः सह॥

परे लोके—

अतःपरं चतुर्थः स्यादित्यादि॥

श्रिया सार्धम्—

नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी।
यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम॥

जगत्पतिः—

पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम्।
एक एव जगत्स्वामी शक्तिमानच्युतः प्रभुः॥

तदंशाच्छक्तिमन्तोऽन्ये ब्रह्मेशानादयोऽमराः ।
ब्रह्मादिदेवसङ्घेषु स एव पुरुषोत्तमः ॥
स्त्रीप्रायमितरत्सर्वं जगद्ब्रह्मपुरस्सरम् ।
विश्वव्यापकशीलत्वाद्विष्णुरित्यभिधीयते ॥

अचिन्त्यात्मा—

न यम्य रूपं न बलप्रभावो न च स्वभावः परमस्य पुंसः ।
विज्ञायते शर्वपितामहाद्यैस्तं वासुदेवं प्रणमाम्यचिन्त्यम् ॥

भक्तैः—

भक्तैस्तद्भक्तवात्सल्यं तत्पूजास्वनुरञ्जनम् ।
तत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रिया ॥
तदनुस्मरणं नित्यं तदन्यस्य च वर्जनम् ।
नित्यं तदेकशेषत्वं यद्भुक्तेनोपजीवति ॥ इति ॥

भांगवतैः—

उत्पत्तिञ्च विनाशञ्च भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥
पञ्चशक्तिमयो विष्णुर्वासुदेवः सनातनः ।
लोकस्थितिमिमां दीर्घां विशालामतिदुस्तराम् ।
पश्यन्नास्ते हृषीकेशः परमे व्योम्नि भास्वति ॥

एवं परत्वमुपपादितम् । **सर्वान्तरात्मा** इत्यनेन "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा", "यस्यात्मा शरीरं यस्य पृथिवी शरीरम्" इत्याद्यन्तर्यामित्वं **स्वयमादिः** इत्युक्तत्वात् । दैविकमानुषभेदेन व्यूहो द्विविधः ।

कथं त्वमर्चनीयोऽसि मूर्तयः कीदृशास्तु ते ।
वैखानसाः कथं वा स्युः कथं वा पाञ्चरात्रिकाः ॥

श्रीभगवान्—

शृणु पाण्डव तत्सर्वमर्चनाश्रममात्मनः ।
स्थण्डिले पद्मकं कृत्वा साष्टपत्रं सकर्णिकम् ॥
अष्टाक्षरविधानेन अथवा द्वादशाक्षरैः ।
वैदिकैरथवा मन्त्रैर्मनुनोक्तेन वा पुनः ॥
स्थितं मामन्तरे तस्मिन्नर्चयित्वा समाहितः ।
पुरुषं च ततस्सत्यमच्युतं च युधिष्ठिर ॥
अनिरुद्धं च मां प्राहुर्वैखानसविदो जनाः ।
अन्ये त्वेवं विजानन्ति मां राजन् पाञ्चरात्रिकाः ॥
वासुदेवं च राजेन्द्र सङ्कर्षणमथापि च ।
प्रद्युम्नं चानिरुद्धं च चतुर्मूर्तिं प्रचक्षते ॥
एताश्चान्याश्च राजेन्द्र संज्ञाभेदेन मूर्तयः ।
विद्धि मेऽर्चान्तराण्येव मामेवं चार्चयेद्बुधः ॥ इति ॥

वैभवं त्ववताराणाम्—

मत्स्यः कूर्मो वराहश्च नारसिंहश्च वामनः ।
रामो रामश्च रामश्च बुद्धः कल्कीति ते दश ॥ इति ॥

देवशब्दप्रयोगसामर्थ्यात् व्यूहविभवे अभिप्रेते स्वयं इत्यनेन "पञ्चधा पञ्चात्मा" इत्यादिश्रुत्यर्थोऽत्रानुसन्धेयः । पञ्चधेत्यनेन परव्यूह-विभवान्तर्याम्यर्चावतार इति पञ्चधा प्रतिपादितासु,

व्याप्तिः कान्तिः प्रवेशोऽर्चा तत्क्रियासु निबन्धनाः ।
परत्वेऽप्यधिकं विष्णोर्देवस्य परमात्मनः ॥

मुक्तोऽपि भोगभोग्यत्वात्परव्यूहात्मनो हरेः ।
तत्कालसन्निकृष्टे च लक्ष्यत्वाद्विभवात्मनः ॥
विशुद्धैर्योगसंसिद्धैश्चिन्त्यत्त्वादन्तरात्मनः ।
अर्चात्मन्येव सर्वेषामधिकारो निरङ्कुशः ॥
अर्चावतारविषयं ममाप्युद्देशतस्तथा ।
उक्ता गुणा न शक्यन्ते वक्तुं वर्षशतैरपि ॥
एवं पञ्चप्रकारोऽहमात्मनां पततामधः ।
पूर्वस्मादपि पूर्वस्माज्जायांश्चैवोत्तरोत्तरः ।
सौलभ्यतो जगत्स्वामी सुलभो ह्युत्तरोत्तरः ॥ इति ॥

परत्वादौ सौलभ्याभावात् सर्वसुलभत्वादर्चावतारः ।

शिलादारु च ताम्रं च रजतं काञ्चनं मणिः ।
उक्तानि कौतुकार्थं तु षड् द्रव्याणि मनीषिभिः ॥ इति ॥

शैलजादिरूपेण विग्रहपरिग्रहादिकं भगवतः प्रतिपादयति इयं श्रुतिः—**क्रीडात्मकमवासृजत्** इति ॥

नृसिंहतापनीयोपनिषदि—

अथ कस्मादुच्यते वीरमिति यस्मात्स्वमहिम्ना सर्वान् लोकान् सर्वान् देवान् सर्वानात्मनः सर्वाणि भूतानि विरमति विरामयत्यजस्रं सृजति विसृजति वासयति यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः तस्मादुच्यते वीरमिति ॥ इत्यादि ॥ यतः भक्तसंरक्षणादिहेतुत्वेन वीरः—

यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥

इत्यादिभगवद्वचनानुरोधेन नित्यविभूतौ पादप्रक्षाळनादिकर्मकरणे योग्यताभावात्, विभूतौ पादप्रक्षाळनाचमनस्नानादिकर्मकरणायोग्यतात्वमिच्छन् सुदक्षां सुतरां स्वापकादीनां यथायोग्यं कामितफलप्रदानसमर्थः "युक्तग्रावा जायते देवकामः" देवतात्वमिच्छन् श्रीवैखानसादिशास्त्रोक्तशैलादिप्रतिमारूपे जायते । ग्रावाग्रहणं सुवर्णरजतादीनामप्युपलक्षणम् ।

किञ्च—

पिशङ्गरूपस्सुभरो वयोधाः श्रुष्टी वीरो जायते देवकामः ।

पिशङ्गरूपः सुवर्णवर्णः सुभरः सुखेन भर्तुं शक्यः वयोधाः वयसा गरुडेन ध्रियत इति वयोधाः वीरशब्देन पूर्वोक्तमन्त्रप्रतिपाद्य एवात्रापि प्रतिपाद्यते पिशङ्गरूप इत्यादि गुणशिष्टत्वेनोक्तत्वात सालग्रामपरत्वेन वा ग्रावापरत्वेन वा वक्तुमयुक्तमित्यवगम्यते ।

भारते—

सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम् ।
कृत्वात्मनः प्रीतिकरीं सुवर्णरजतादिभिः ॥
तामर्चयेत्तां प्रणमेत्तां जपेत्तां विचिन्तयेत् ।
विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम् ॥

ग्रन्थान्तरे—

द्वीपवर्षविभागेषु तीर्थेष्वायतनेषु च ।
मानुषाश्चात्मना चाहं ग्रामेग्रामे गृहेगृहे ॥
पुंसिपुंसि संभवानि दारुलोहशिलामयः ।
अहं पञ्चोपनिषदः परव्यूहादिषु स्थितः ॥
आविर्भावेषु सर्वेषु स्वसङ्कल्पशरीरवान् ।
आवेशांशावतारेषु पाञ्चभौतिकविग्रहः ॥

दारुलोहशिलामृत्स्नाशरीरोर्चात्मकः स्मृतः ।
चेतनाचेतनैर्देही परमात्मा भवाम्यहम् ॥
अर्चात्मनावतीर्णं मां जानन्तो हि विमोहिताः ।
कृत्वा दारुशिलाबुद्धिं गच्छन्ति नरकायुतम् ॥
स्वयम्भूनां विमानानामभितो योजनद्वयम् ।
क्षेत्रे पापहरं प्रोक्तं मृतानामपवर्गदम् ॥
योजनं दिव्यदेशानां सिद्धानामर्थमेव च ।
मनुष्याणां विमानानामभितः क्रोशमुत्तमम् ।
गृहमात्रं प्रशस्तं वा गृहार्चा यत्र विद्यते ॥ इति ॥

पुरुषसंहितायां नारदं प्रति सनत्कुमारः—

पुरा नारायणो देवः कृपया परयान्वितः ।
देवतिर्यङ्मनुष्यादीन् वीक्ष्य संसारमध्यगान् ॥
एवं सञ्चिन्तयामास संस्मरन् वैभवं स्वकम् ।
स्वतःप्रमाणवाक्यैश्च दुर्विज्ञानं वदन्ति माम् ॥
अणोरणीयान्महतो महीयान्निर्गुणो गुणी ।
दिग्देशकालावस्थाद्यैरसौ चाभेद्यवैभवः ॥
प्रधीक्षयविहीनश्च सत्यकामो निरञ्जनः ।
विनेन्द्रियेण सर्वज्ञो विना पादेन सर्वगः ॥
अनासोऽनुभवन् गन्धं स्पृशन् सर्वमपाणिकः ।
शृण्वन् श्रुतिं विना शब्दमजिह्वोऽपि लिहन् रसम् ॥
साधनेन विना सर्वं साध्यं साधयतेऽन्वहम् ।
तस्मात्सर्वप्रमाणेन सुदुर्ज्ञानतरो ह्यहम् ॥

मज्ज्ञानाभावगे मोक्षो न सिद्धयति कदाचन ।
तस्मात्संसारचक्रेऽस्मिन् भ्राम्यन्ते च सुदुस्तरे ॥
उद्धरेयमिमान् सर्वान् यातनाशतसंकुलान् ।
इति सञ्चिन्त्य भगवान् स्वच्छन्दोपात्तविग्रहः ॥
हित्वौपनिषदं वेषं प्रमाणानामगोचरम् ।
सर्वेषां हर्षदं भक्त्या दृष्टमात्रेण मुक्तिदम् ॥
सर्वकल्याणसंपूर्णं गुणराशिसमाश्रयम् ।
सहस्रमुखदृक्पादमाददे रूपमद्भुतम् ॥ इति ॥
अतः स्वयं च भगवान् क्रीडात्मकमवासृजत् ।
अवतारस्य सत्यत्वमजिहासन् स्वभावतः ॥
शुद्धसत्त्वमयत्वं च स्वेच्छामात्रेण दासता ।
धर्मज्ञोऽसौ समूहश्च साधुसंरक्षणार्थता ।
इति जन्मरहस्यं यो वेत्ति नास्य पुनर्भवः ॥ इति ॥

पाद्मे—

उद्धृतायां स मेदिन्यां पूर्णे तद्भूनभोन्तरे ।
जलं तत्कृतमर्यादं व्यवच्छिन्नमभूत्तव ॥
संस्थाप्य पृथिवीमित्थं तदुर्व्याधारसिद्धये ।
दिग्गजानहिराजं च कमठं च न्यवेशयत् ॥
तेषामपि च सर्वेषामाधारत्वेन सादरम् ।
अव्यक्तरूपां स्वां शक्तिं युयुजे च दयापरः ॥ इति ॥

यः परमात्मा स्वयं लोकं भूरादिसर्वलोकान् अवधारं अधस्ताद्धृतम् ।

ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ।
पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥

इति शेषदिग्गजादिभिर्धृतं दिग्गजादीनामाधारत्वेन अधस्तात् धारयन् कूर्मरूपेणेत्यर्थः ॥ १ ॥

**यः स्वयं सृष्टमात्मना गुप्तमनुसंदितानमचरं चरन्तं स्वयं क्रीडं क्रीडयन् क्रीडान्तरमनुप्राविशत् स्वाहा ॥ २ ॥**

**यः** परमात्मा **स्वयं सृष्टं** स्वेन सृष्टं **आत्मना** स्वेनैव **गुप्तं** रक्षितं **अनुसन्दितानं** साकल्येन जीवस्य चात्मनः फलितं **अचरं** स्वातन्त्र्येण गतिरहितं **चरन्तं** जीवं यद्वा स्थावरजङ्गमात्मकं तं प्रत्यात्मानं

अप्रमेयोऽनियोज्यश्च यत्र कामागमो वशी ।
मोदते भगवान् भूतैर्बालः क्रीडनकैरिव ॥ इति ॥

स्वतन्त्रत्वात्प्रतिमाप्रायेण **क्रीडं क्रीडयन्** अन्योन्यं क्रीडयन् **स्वयं क्रीडान्तरं** वारोहादिरुक्तं **अनु** साकल्येन **प्राविशत्** । यद्वा कूर्मविषयत्वेन स्वसृष्टमन्दरपर्वतं समुद्रमथनेन मन्थरस्योपरि चरन्तं गतिं कुर्वन्तं स्वयं क्रीडयन् तथारणेन क्रीडयन् क्रीडान्तरममृतप्रदानार्थं स्त्रीवेषधारणादिकं साकल्येन प्राविशत् ।

देवतिर्यङ्मनुष्याख्यचेष्टामत्ति स्वलीलया ।
जगतामुपकाराय मनःकर्मनिमित्तजः ॥
समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशाद्धृतभूतसर्गः ।
इच्छागृहीताभिमतोरुदेहः सनाथिताशेषजगद्धितोऽसौ ॥

इति तस्मै ॥ २ ॥

**स्वौजसा सर्वमादधाति यः पापीयांसमनुपदमाहिंसत् सुपुण्यं पुण्यात्मकं पुण्यं वितानं दाधार देवाय स्वाहा ॥ ३ ॥**

यः परमात्मा **स्वौजसा** परबलाहरणशक्त्या **सर्वं जगत् आदधाति** स्थापयति यः परमात्मा बलभद्ररूपी **पापीयांसं** प्रलम्बासुरं **अनुपदं** लीलाकाले गृहीत्वा गच्छन्तं पदमनुसृत्य **आहिंसत्** हिंसितवान् ।

श्रीवैखानसे—

योगनिद्रे ममादेशात् पातालतलसंश्रयान् ।
एकैकशश्च षड्गर्भान् देवकीजठरे नय ॥
हतेषु तेषु कंसेन शेषाख्यांशस्ततो मम ।
अंशांशेनोदरात्तस्याः सप्तमः स भविष्यति ॥
गोकुले वसुदेवस्य तथान्या रोहिणी तथा ।
तस्य संभूतिसमये स विनेयस्त्वयोदरम् ॥ इति ।

**सुपुण्यं** सुतरां पुण्यस्वरूपं **पुण्यात्मकं** पुण्यशब्दवाच्यानामन्तर्यामिणं **पुण्यं वितानं** वितानरूपत्वेन **दाधार** शेषरूपेण कृष्णं दाधार सङ्कर्षणमूर्तित्वेन क्रीडमानस्तस्मै । यद्वा पापीयांसं सर्वयज्ञविनाशकं हिरण्याक्षपदमनुसृत्य अहिंसत् हिंसितवान् सुपुण्यं पुण्यात्मकं यज्ञ "यज्ञो वै विष्णुः" इति पुण्यं वितानं दाधार त्रयीसंवरणं यत इति वेदमूलत्वात् आच्छादकं दाधार स्थापितवान् ।

भृगुः—

हिरण्याक्षोऽपि दैत्येन्द्रो बलवान् बलिनां वरः ।
परेण गर्वाद्दुर्बुद्धिर्यज्ञविद्वेषकोऽभवत् ॥
तद्यथाकृतवान्विष्णुर्नरसूकरमूर्तिमान् ।
हत्वा स दैत्यं सबलं पश्चाद्यज्ञोनुवर्तयन् ॥

यज्ञवराहरूपिणौ इत्यर्थः ।

किञ्च—

आद्ये कलियुगे प्राप्ते सोमकेन हृता त्रयी ।

इत्यारभ्य ।

अथ मत्स्याकृतिः श्रीशः प्रविश्याम्बुधिमध्यगम् ।
निर्मथ्य सोमकं वेदानदात् कञ्जनयोनये ॥
तादृशं पुण्डरीकाक्षं स्तोत्रैः सन्तोष्य पद्मभूः ।
उवाच वचनं प्रेम्णा दण्डवत्प्रणिपत्य च ॥
तान्त्रिकेण पुरा प्रोक्तं मार्गेण भवदर्चनम् ।
न प्रसिद्ध्यति चास्माकं मनः कमललोचन ॥
वैदिकेन त्वदर्चां वै यथापूर्वं वदाच्युत ।
इत्युक्तो भगवान् देवः शास्त्रं श्रुतिपथागतम् ॥
सहस्रकोटिभिः श्लोकैः सङ्ख्यातं बहुविस्तरम् ।
सूत्रे मूलमनाद्यन्तं कल्पे कल्पे समाश्रितम् ॥
उवाच जगतां प्रीत्यै यज्ञानां पूरणाय च ।
मूलं सर्वागमानां च पुराणानां तथैव च ॥
स्मृतीनां सर्वसूत्राणां प्रत्यङ्गोपाङ्गशोभनम् ।
श्रुत्युक्तं तदिदं शास्त्रं वैखानसमहार्णवम् ॥
इत्युक्त्वा भगवानाद्यस्तत्रैवान्तरधीयत ।
ततः परं चतुर्वक्त्रो जटाकाषायदण्डभृत् ॥
नैमिशारण्यमासाद्य मुनिबृन्दनिषेवितम् ।
तपस्तप्त्वा चिरं कालं ध्यायंस्तेजस्तु वैष्णवम् ॥
पश्चादपश्यद्विष्णूक्तमागमं विस्तरं तथा ।
सश्रौतं च स्वमात्रं च वेदमन्त्रैरभिष्टुतम् ॥

सङ्क्षिप्य सारमादाय शाणोल्लिखितरत्नवत् ।
धातुर्विखनसा नाम्ना मरीच्यादीन् सुतान् मुनीन् ॥
अबोधयदिदं शास्त्रं सार्धकोटिप्रमाणतः ।
मुनिभिस्तस्य सङ्क्षिप्तं चतुर्लक्षप्रमाणतः ॥
कल्पेकल्पे महाविष्णोरुद्धृतं पूर्वतस्सदा ।
तस्माद्वैदिकमाचारं यः कर्तुं भुवि वाञ्छति ।
तस्येदं शास्त्रमित्युक्तं नेतरेषामितीरितम् ॥ इति ॥

देवशब्दसामर्थ्यान्मत्स्यादिरूपेण क्रीडते तुभ्यम् ॥ ३ ॥

**क्ष्मामेकां सलिलावसन्नां श्रुत्वा स्वनन्तीमनु स्वयं भूत्वा वराहो जहार तस्मै देवाय सुकृताय पित्रे स्वाहा ॥ ४ ॥**

क्ष्मां भूमिं एकां सलिलावसन्नां प्रळयजलाक्रान्तां स्वनन्तीं क्रोशन्तीं श्रुत्वा अनु पश्चात् स्वयं वराहो भूत्वा जहार उद्धृतवान् देवाय द्योतमानाय सुकृताय सुकृतं कृतवते पित्रे रक्षकाय ।

शान्तिपर्वणि—

आदौ महार्णवे घोरे भाराक्रान्तामिमां पुनः ।
तदा बलादहं पृथ्वीं सर्वभूतहिताय वै ॥
सत्त्वैराक्रान्तसर्वाङ्गां नष्टां सागरमेखलाम् ।
आगमिष्यामि संस्थातुं वाराहं रूपमास्थितः ॥

इति तस्मै ॥ ४ ॥

**यः कुं धरमाणः कुं धरतां कुं धरतामित्यवोचत् तां सानुमन्तो विदधत्स्वतेजसा तस्मै देवाय वरिष्ठाय वरप्रदाय पित्रे स्वाहा ॥ ५ ॥**

यः परमात्मा कुं भूमिं धरमाणः आधारकूर्मादिरूपेण धारयमाणः कुं धरां धरतां गोवर्धनपर्वतभङ्गभयभीतानां भयनिवारणार्थं वर्षादिभयनिवारणार्थं च गोपान् प्रति कुं धरतां पर्वतानां सानुषु वसन्त्वित्यध्याहारः अवोचत् इत्युक्तवान् औचित्यवशात् समीचीनार्थश्च-कारनियमाच्च तां भूमिं सानुमन्तः पर्वताश्च गोपानां रक्षणार्थं स्वतेजसा—

सहकार्यनपेक्षं यत्तत्तेजः समुदाहृतम् ॥ इति ॥

विदधत् भृतवान् वरिष्ठाय श्रेष्ठाय वरप्रदाय पित्रे रक्षकाय तस्मै तुभ्यम् ॥ ५ ॥

पृथां प्रस्खलन्तीं प्रमृज्यामृजाङ्गीं य ऊर्वोरुपादधात् तस्मै प्रमुख्याय वरदाय पित्रे स्वाहा ॥ ६ ॥

पृथां भूमिं प्रस्खलन्तीं जलमज्जनायासेन प्रकर्षेण स्खलन्तीं यथास्थाने स्थातुमसमर्थां अमृजाङ्गीं पङ्कादिभिर्लिप्तशरीरां प्रमृज्य शुद्धिं कृत्वा ऊर्वोरुपादधात् ऊरुमध्ये स्थापितवान् तस्मै प्रमुख्याय वरदाय पित्रे ॥ ६ ॥

यां गामुशन्तीमुशन्नभिपूर्णामारक्तनीलाममृतां रजन्तीमा-लालयन् लालितकङ्कणाङ्गीं तस्मै प्रजेशाय वरदाय पित्रे स्वाहा ॥ ७ ॥

यां गां भूमिं उशन्तीं आक्रोशन्तीं भूतभूभारपीडया क्रोशन्तीं वराहरूपेणावतीर्य उशन् शब्दं कुर्वन् अभिपूर्णां स्थावरजङ्गमादिभिः समृद्धां आरक्तनीलां रक्तनीलवर्णां अमृतां जलेनार्द्रां रजन्तीं रजसाभिप्लुतां लालितकङ्कणाङ्गीं जवोद्धरणवेळायां लालितानि जलकणानि यद्वा कङ्कणानि यस्याः सा लालितकङ्कणाङ्गी तां भूमिं आलालयन् यः परमात्मा तिष्ठति प्रजानामीशाय प्रजेशाय वरदाय पित्रे तस्मै ॥ ७ ॥

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां स्वाहा ॥ ८ ॥

प्रजानां प्रतिः प्रजापतिः हे प्रजापते शब्दवाच्यपरमात्मन् त्वदन्यः विश्वा जातानि विश्वस्मिन् जातानि परिता पालयिता रक्षकः स्रष्टा वा न बभूव यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां पतये स्याम तुभ्यम् ॥ ८ ॥

यो धूर्धुरं धूर्धुरं धूर्वराणां सुधूर्धूरसि धूर्धुराणां धूरसि धूर्वक्र मे स्वाहा ॥ ९ ॥

यः परमात्मा धूर्धुरं भारस्यापि भारभूतः धूर्वराणां भारवहने पुष्टानां धूर्धुरं भाररूपं सुधूर्धूरसि धूर्धुराणां धूरसि भारभूतोऽसि तुभ्यम् ॥ ९ ॥

यो वाप्यर्हिसीज्जरया जरन्तं तं दैत्यमुख्यममृतात्मरूपं सुखुरं खुराणां किंचित्स्वनन्तं तस्मै नृसिंहाय सुरेशपित्रे स्वाहा ॥ १० ॥

यः परमात्मा नृसिंहरूपी जरया जरन्तं जीर्णतारहितं दैत्यमुख्यं प्रथमं अमृतात्मरूपं वरप्रदानेन देवमनुष्यादिभिः दिवारात्रौ च मरणरहितं

भृगुः—

हिरण्यकशिपुर्नाम दैत्यराट् स प्रभुर्भवेत् ।
वरेण गर्वी दैत्येन्द्रो हिरण्यकशिपुस्तथा ॥
देवैर्वा मानुषैर्वापि मृगैर्जीवैरजीवकैः ।
दिवारात्रौ तथा चैवं वयो नैवं ममेति च ॥
एवं वरेण गर्वन्तं दैत्यं देवविरोधिनम् ।
वधं कर्तुं कृतोद्योगश्चिन्तयित्वा हरिः प्रभुः ॥

नरसिंहवपुः कृत्वा दिवारात्रौ व्यपोह्य च ।
सन्ध्यायां तु वधं कुर्यात् स्वीयाङ्के तु नखाङ्कुरैः ॥
बाह्यमभ्यन्तरं भित्त्वा जीवाजीवैर्नखैः शुभैः ।
एवं दैत्यवधं कृत्वा देवदेवो जगत्पतिः ॥ इति ॥

**सुखुरं खुराणां** नृसिंहनखापेक्षया सुकुमारनखं **किंचित्स्वनन्तं** वज्राधिकनखाग्रैः हिंसितत्वात् सन्धितुमशक्याद्वा प्रभुत्वाद्वा **किञ्चित्स्व नन्तमहिंसीत्** हिंसितवान् **तस्मै नृसिंहाय** नरसिंहरूपिणे सुरेशो ब्रह्मा रुद्रः तस्य पित्रे रक्षकाय **तस्मै** ॥ १० ॥

इति षष्ठोऽनुवाकः

---

## सप्तमोऽनुवाकः

**तपोनिधिं तपसां रयिंदं रयिमाधुरङ्गं व्यसनौघहन्तृ सासिष्वसन्तं सवने सवित्रे तस्मै सुरेशाय सुरबृन्दकर्त्रे स्वाहा ॥१॥**

**तपोनिधिं** "ऋतं तपः सत्यं तपः श्रुतं तपश्शान्तं तपो दमस्तपः शमस्तपो दानं तपो यज्ञं तपो भूर्भुवस्सुवर्ब्रह्मैतदुपास्वैतत्तपः " इति, तपः स्वधर्मवर्तित्वम् , "तप इति तपो नानशनात् परम् " इत्यादिश्रुतिसिद्धानां तपःशब्दवाच्यानामावासभूतम् । **तपसां रयिंदं** तपसामप्यैश्वर्यप्रदम् । **रयिं** ऐश्वर्यभूतम् । **व्यसनौघहन्तृ** आपन्निवारकं स्वभक्तस्वापन्निवारकत्वं ब्रह्मादेरदृष्टम् । **सासिष्वसन्तं** असिसहिताः सासिः प्रतिघ इत्यर्थः तेष्वसन्तम् । **सवने**

समये सवित्रे फलप्रदाय सुरेशाय ब्रह्मरुद्रादीनामीश्वराय सुरवृन्दकर्त्रे देवसमूहकर्त्रे तस्मै तुभ्यम् ॥ १ ॥

**यो वा नृसिंहो विजयं बिभर्षि साराजिमन्तं रयिदं कवीनां साराजिमन्तं सजयं सहस्रं तस्मै सुयन्त्रे सुशेवधये स्वाहा ॥ २ ॥**

यः परमात्मा हिरण्यवधादिना **विजयं बिभर्षि** । विष्णुसूक्ते "प्रतद्विष्णुस्तव ते वीर्याय । मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेषु । अधिक्षियन्ति भुवनानि विश्वा" । प्रकर्षेण तस्माद्धि-रण्यवधादिकारणादाविर्भूतो **नृसिंहो** न मृगः किन्तु विष्णुः भीमः दैत्य-दानवरक्षसां भयंकरः,

उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ।
नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ॥ इति ॥

कुचरो गिरिष्ठाः रत्नकूटपर्वते स्थितः सन् पादचारी भूत्वा सन्ध्याकाले हिरण्यवधादिकं कृतवान् । यस्य विष्णोरुरुषु महत्सु त्रिषु विक्रमणेषु भुवनानि अधिक्षियन्ति अधिक्षिप्तानि भवन्ति । तस्माद्विष्णुः वीर्यवत्तया स्तवत इति ॥ श्रीमद्वैखानसेऽखिलसंहितायामप्येवमेवोक्तम्—

नरसिंहः सुभविता कस्माच्च भुवनेश्वरः ।

इत्युपक्रम्य ।

गत्वा तत्पुरसाह्ये तु पर्वतं शृङ्गिरूपिणम् ।
रत्नकूटमिति ख्यातं पर्वतं सुमनोहरम् ॥
तस्यैव शिखरे रम्ये दृष्टः स भगवान् किल ।
नारायणस्तु सिंहत्वे मुखं कृत्वा च दारुणम् ॥

दंष्ट्राणां च तु तीक्ष्णत्वं सटाभिः स्कन्धसङ्कटम् ।
नररूपं वपुः कृत्वा मानुषत्वे व्यवस्थितः ॥
सुदारुणं महद्रूपं शत्रूणां साधनाय च ।
नखैस्तीक्ष्णैः सुदंष्ट्रैश्च चतुर्भिर्बाहुभिर्युतम् ॥
नागराश्च किलोद्युक्ता हिरण्यपुरवासिनः ।
अपराह्णे महासिंहं पर्वताग्रे प्रतिष्ठितम् ॥
सहस्रादित्यसङ्काशं ज्वलन्तं प्रभया युतम् ।
आगच्छन्तं समुत्प्रेक्ष्य विद्रुता भयमोहिताः ॥
अपराह्णे मन्दभूते रक्तादित्यकरप्रभे ।
शीघ्रमुत्थाय वेगेन मन्दिरं प्राविशद्धरिः ॥

इत्यादि ।

शीघ्रं चापं च गृह्णन्तं तत्प्रमुच्यासिमुत्तमम् ।
उत्पत्य खड्गं दृष्ट्वा तं हिरण्यकशिपुं रिपुम् ॥
एकेनैव च हस्तेन खड्गं जग्राह तस्य तम् ।
अन्येन पाणिना चारु समालम्ब्यादिकङ्कतम् ।
अस्त्रेण सह संयोज्य बिभिदे तद्द्विधा हरिः ॥ इति ॥

**साराजिमन्तं** सर्वैश्वर्यवन्तं **कवीनां** ज्ञानिनां यद्वा भक्तानां **साराजिमन्तं** साम्राज्यं **सजयं** जयसहितं **सहस्रं** अपरिमितं **तस्मै** प्रह्लादाय **सुयन्त्रे** भगवद्भक्ताय यद्वा परमात्मज्ञानिने **सुशेवधये** निधिभूताय ॥ २ ॥

**रयिः ककुद्मान् दधद्विनष्टं रयिमद्विधानं तस्मै ककुत्त्रे विकटाय पित्रे स्वाहा ॥ ३ ॥**

**रयिः** ऐश्वर्यरूपः **ककुद्मान्** वृषभाववान् यद्वा श्रेष्ठः **दधद्विनष्टं** येन केन प्रकारेण यस्मै कस्मैचित् विनष्टं पदार्थं वरप्रदानादिमुखेन प्रापयन्

रयिमद्विधानं रयिः इत्यनेन "ऋचः सामानि यजूंषि । सा हि श्रीरमृता सताम्" इति श्रुत्युक्तं विधानं विधिः श्रुतिप्रसिद्ध इत्यर्थः । अनेन शास्त्रयोनित्वं दर्शितम् । ककुत्स्थे ककुदि स्थिताय विकटाय वेङ्कटाय । ऋग्वेदे "अरायि काणे विकटे गिरिं गच्छ सदान्वे शिरिंबिठस्य सत्त्वभिस्तेभिष्ट्वा चातयामसि" इति ॥ हे अरायि ऐश्वर्यहीने काणे एकाक्षिन् अन्धस्य गमने सामर्थ्याभावात्काणस्य यथाकथंचित् गमनयोग्यता संभवतीति काणेत्युक्तम् । विकटे गिरिं गच्छ वेङ्कटगिरिं प्रति गच्छ "चतुर्हूतो ह वै नामैषः । तं वा एतं चतुर्हूतꣳ सन्तम् । चतुर्होतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः ॥", "इन्द्रो ह वै नामैषः । तं वा एतमिन्द्रꣳ सन्तम् । इन्द्र इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः ॥" इति श्रुतेः परोक्षेणोक्तम् । सदान्वे सर्वदा अन्वेषणं कुरु ॥ यद्वा सर्वदा अन्वेषय शिरिंबिठस्य श्रीपीठस्य,

स्वामिपुष्करिणीतीरे कोटिकन्दर्पमूर्तिमान् ।
आस्ते लक्ष्म्या च धरया रमन् षोडशवार्षिकः ॥ इति ॥

सत्त्वभिः सात्त्विकगुणैः तेभिः तैः त्वा त्वां चातयामसि चातयामः विनाशयामः ।

पाद्मे—

स्वामिपुष्करिणीतीरे सर्वान्तर्याम्यधोक्षजः ।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥
चिन्तितस्य तु विद्या तु चिन्तामणिमिमं जगुः ।
केचिद्दानप्रदत्वाच्च ज्ञानाद्रिरिति तं विदुः ॥
सर्वतीर्थमयत्वाच्च तीर्थाद्रिं प्राहुरुत्तमाः ।
पुष्कराणां च बाहुळ्यात् गिरावस्मिन् सरस्सु च ।

पुष्करादिं प्रशंसन्ति मुनयस्तत्त्वदर्शिनः ।
गिरावस्मिन् तपस्तेपे सोऽपि च स्वाभिवृद्धये ।।
तस्मादाहुर्वृषादिं तं मुनयो वेदपारगाः ।
शातकुम्भस्वरूपत्वात् कनकादिं च तं विदुः ।।
द्विजो नारायणः कश्चित् तपः कृत्वा महत्पुरा ।
पश्चादश्वस्य नामा च व्यपदेशं मुरारितः ।।
वैकुण्ठादागतत्वेन वैकुण्ठाद्रिरिति स्मृतः ।
हिरण्याक्षविनाशाय प्रह्लादानुग्रहाय च ।।
नारसिंहाकृतिं लेभे यस्मात्तस्मात्स्वयं हरिः ।
सिंहाचल इति प्राहुस्तस्मादेव मुनीश्वराः ।।
अञ्जनाद्रौ तपः कृत्वा हनूमन्तं व्यजायत ।
तदा देवाः समागत्य देवकार्यार्थकारकम् ।।
यस्मात्पुत्रं मम सुतं जग्मुस्तस्मादमुं गिरम् ।
अञ्जनाद्रिं वराहाद्रिं वराहक्षेत्रलक्ष्मतः ।।
नीलस्य वासुरेन्द्रस्य यस्मान्नित्यमवस्थितिः ।
तस्मान्नीलगिरिं नामावदंस्ते तं महर्षयः ।।
वेकारोऽमृतबीजं तु कट ऐश्वर्यमुच्यते ।
अमृतैश्वर्यसङ्घत्वाद्वेङ्कटाद्रिरिति स्मृतः ।।
अयं कदाचिद्देवानां श्रीनिवास इवाबभौ ।
श्रीनिवासगिरिं प्राहुस्तस्माद्देवा दिवौकसः ।।
आनन्दाद्रिमिमं प्राहुर्वैकुण्ठपुरवासिनः ।
प्राहुर्भगवतः क्रीडाप्राचुर्यात्तु तवासुराः ।।

श्रीप्रदत्वाच्छ्रियो वासाच्छब्दशक्त्या च योगतः ।
रूढ्या श्रीशैल इत्येतन्नाम चास्य गिरेर्भवेत् ॥
बहूनि चान्यनामानि कल्पभेदाद्भवन्ति हि ॥
सर्वपापानि वें प्राहुः कटस्तद्दाह उच्यते ।
सर्वपापदहो यस्माद्वेङ्कटाचल इत्यभूत् ॥
कलिदोषपरीतानां नराणां पापचक्षुषाम् ।
वेङ्कटेशात्परो देवो नास्त्यन्यः शरणं भुवि ॥ ३ ॥

**राकामह१ं सुहवा१ं सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीर१ं शतदायमुक्थ्यं स्वाहा ॥ ४ ॥**

**राका** परमपुरुषरञ्जनाद्राका यद्वा रातीति राका परमपुरुषरञ्जनयोग्या **अहं** तापत्रयाभिभूतोऽहं यद्वा चतुर्विधपुरुषार्थकामोऽहं **सुहवां** शोभनहवां लक्ष्म्याराधनं अधिकं शोभनार्थमेव नाभिचारनिमित्तम् ॥

श्रीविष्णुपुराणे—

सत्वेन शौचसत्याभ्यां तथा शीलादिभिर्गुणैः ।
धनैश्वर्यैश्च युज्यन्ते पुरुषा निर्गुणा अपि ॥
स श्लाघ्यः स गुणी धन्यः स कुलीनः स बुद्धिमान् ।
स शूरः स च विक्रान्तो यं त्वं देवि निरीक्षसे ॥
सद्यो वैगुण्यमायान्ति शीलाद्याः सकला गुणाः ।
पराङ्मुखी जगद्धात्री यस्य त्वं विष्णुवल्लभे ॥ इति ॥

चतुर्विधपुरुषार्थेष्वपि लक्ष्म्या एव प्राधान्यात् सुहवां इत्युक्तम् । **सुष्टुती** सुषन्ति शोभनरूपया स्तुत्या **हुवे** आह्वये **शृणोतु नः** आर्तनादं शृणोतु यद्वा मम विज्ञापनं **सुभगा,**

भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु ॥ इति ॥
श्रृणोति निखिलं दोषं श्रृणोतु च गुणैर्जगत् ॥
श्रूयते चाखिलैर्नित्यं श्रूयते च परं पदम् ॥ इति ॥

सा भक्तस्य आर्तनादं श्रुत्वा तन्निवारणे यत्नं कर्तुं समर्था महानुभावा वीर्यवती कीर्तिमतीत्यादिगुणविशिष्टेत्यभिप्रायेण सुभगा इत्युक्तम् । बोधतु त्मना वेगेन बुध्यताम् । यद्वा सीव्यत्वपः सूच्याच्छिद्यमानया सूच्यग्र-सन्ततधारया कृपाकटाक्षजलेन नः सिञ्चतु ददातु वीरं परमात्मानं यद्वा पुत्रपौत्रादिकं शतदायमुक्थ्यं प्राणभूतं ददातु प्रयच्छतु ॥

ननु "पूर्वपक्षो राकापरपक्षः कुहूः" इति श्रुतेः देवतान्तरपरत्वेन श्रूयमाणो राकाशब्दः कथं लक्ष्मीपरो भविष्यतीति चेत्—उच्यते; प्रकरणानुक्तादुक्तां योगो रूढिमपहरतीति न्यायात् भगवच्छब्दस्य तत्रैव मुख्यवृत्तत्वात् पुरुषाकारभूतत्वात् राज्ञि हं रञ्जनात् सतामिति "अस्येशाना जगतो विष्णुपत्नी" इत्यादिभिः पुंस्त्वाभिधानेश्वरेश्वरीमिति सर्वशेषित्वाच्च ॥४॥

**वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसस्तु पारे सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाऽभिवदन् यदास्ते स्वाहा ॥ ५ ॥**

श्रीवेङ्कटेशत्वेन पूर्वं प्रतिपादितस्य परमात्मनः स्वरूपं स्तोतुमारभते—वेदाहं इति ॥ एतं वेङ्कटाचलनिवासिनं पुरुषं पुरुषसूक्तेन प्रतिपाद्यम् । श्रूयते हि—भगवन् कूर्मरूपं प्रस्तुत्य कूर्मरूपो भगवान् ब्रह्माणमाह—"मम वै त्वङ्माऽसा । समभूत्"—इति ॥ ब्रह्माह—"नेत्यब्रवीत्"—इति ॥ पुनश्च भगवान् कूर्मः प्राह—"पूर्वमेवाहमिहासमिति । तत्पुरुषस्य पुरुषत्वम्"—इति ॥ तदेव न्यस्तपुरुषत्वात् परं दर्शयति—"स सहस्रशीर्षा

पुरुषः । सहस्राक्षः सहस्रपात् । भूत्वोदतिष्ठत्" ॥ इत्यादि ॥ महान्तं "तेनेदं पूर्णं पुरुषेण सर्वम्" इति ॥ पूर्णत्वात्पुरुषः इति ॥

पाद्मे--

शब्दोऽयं सोपचारेण तथा पुरुष इत्यपि ।
निरुपाधौ वदन्त्येते वासुदेवे सनातने ॥
सर्वलोकप्रतीत्या च पुरुषः प्रोच्यते हरिः ।
तं विना पुण्डरीकाक्षं कोऽन्यः पुरुषशब्दभाक् ॥
ब्रह्माद्याः सकला देवा यक्षतुम्बुरुनारदाः ।
ते सर्वे पुरुषांशत्वादुच्यन्ते पुरुषा इति ॥

उत्तररामायणे अगस्त्यः---

असौ राम महाबाहुः रतिमानुषचेष्टया ।
तेजोमहत्तया चासि संस्कार इति पूरुषम् ॥

हरिवंशे--

गोवर्धनादिधरणीनाथ नन्दसुतोऽपि सन् ।
पुरुषस्यांशभूतं त्वामाहुर्षभिरणे वही ॥

स्कान्दे—

यदा भास्करशब्दोयमादित्ये प्रतितिष्ठति ।
यदा चाग्नौ बृहद्भानुर्यदा वायौ सदा गतिः ॥
तथा पुरुषशब्दोऽयं वासुदेवेऽवतिष्ठति ।
यदा शङ्करशब्दोऽयं यथा देवे व्यवस्थितः ॥

श्रीविष्णुपुराणे—

देवतिर्यङ्मनुष्येषु पुंनामा भगवान् हरिः ।
श्रीर्नाम लक्ष्मीर्मैत्रेय नानयोर्विद्यते परम् ॥

नारसिंहे—

य एव वासुदेवोऽयं पुरुषः प्रोच्यते बुधैः ।
प्रकृतिस्पर्शराहित्यात् स्वातन्त्र्ये वैभवादपि ॥
स एव वासुदेवोऽयं साक्षात्पुरुष उच्यते ।
स्त्रीप्रायमितरत्सर्वं जगद्ब्रह्मपुरस्सरम् ॥ इत्यादि ॥

सहस्रशीर्षेत्यादिशब्दसिद्धः पुरुषः श्रीवेङ्कटेशः तस्य वैभवं प्रतिपादयति ॥

अत्र प्रथमया विष्णोर्देशतो व्याप्तिरीरिता ।
द्वितीययास्य विष्णोश्च कालतो व्याप्तिरीरिता ॥
विष्णोर्मोक्षप्रदत्वं च कथितं तु तृतीयया ।
एतावानिति मन्त्रेण वैभवं कथितं हरेः ॥
तस्माद्विराडित्यनया वदेन्नारायणाद्धरेः ।
प्रकृतेः पुरुषस्यापि समुत्पत्तिः प्रदर्शिता ॥
यत्पुरुषेणेत्यनया सृष्टियज्ञः समीरितः ।
अनेनैव तु मन्त्रेण मोक्षश्च समुदीरितः ॥
तस्मादिति च सप्तार्चान् जगत्सृष्टिः समीरिता ।
वेदाहमिति मन्त्राभ्यां वैभवं कथितं हरेः ॥
यज्ञेनेत्यनया चर्चा सृष्टेर्मोक्षस्य चेरितः ।
य एवमेतज्जानाति स हि मुक्तो भवेदिति ॥

पुरुषसंहितायां किं स्वरूपं **आदित्यवर्णम्**—

आदित्यवर्णं पुरुषं वासुदेवं विचिन्तय ॥ इति ॥

**तमसस्तु पारे** तमश्शब्देन प्रकृतिरुच्यते—

तमसः परमे दान्ते ह्यस्ति प्रकृतिमण्डलम् ।
ऊर्ध्वमवस्थितं **सर्वाणि विचित्य** निर्माय **नामानि कृत्वा** ॥

नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥

भारते—

सर्वेषां च सनामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥ इति ॥

**धीरः**—धियो रममाणः अभिवदंस्तैराभिमुख्येन वदन् **यदास्ते** अस्त्येव तमित्यनेन पूर्वं प्रस्तुतमेव नान्यं दद इति । सन्निहितस्य परित्यागे कारणाभावात् ॥

वेङ्कटाचलमाहात्म्ये—

स्वामिपुष्करिणीतीरे सर्वान्तर्याम्यधोक्षजः ।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥

इति पुरुषसूक्तप्रतिपाद्यत्वेनोक्तत्वाच्च ॥ ५ ॥

**दिग्दोषो यस्य विदिशश्च कर्णौ द्यौरास वक्त्रमुदरं नभो वा सासि वा स्म या स्वयमाप दन्तं तस्मै वरत्रे वरदाय कस्मै स्वाहा ॥ ६ ॥**

**यस्य** परमात्मनः **दिग्दोषः** दिशः दोषः बाहवः **विदिशश्च** अवान्तरकर्णौ **द्यौर्वक्त्रमास उदरंनभः** "नाभ्या आसीदन्तरिक्षम्" इत्यादिश्रुतयः । या विश्वंभरा भूमिः सा त्वमेवासि स्म भूतार्थसूचकं अन्तर्यामीत्यर्थः ॥

श्रुत्यन्तरे—

यस्यास्यमग्निर्द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः ॥ इत्यादि ॥

पादभूता या भूमिः सा **स्वयं** वराहरूपेण तत्र दन्तमाप दंष्ट्राग्रस्थि नेत्यर्थः **तस्मै वराहरूपिणे वरत्रे** वरप्रदानेन त्रायते **वरत्रः** वरप्रदानसमर्थाय

**कस्मै** परब्रह्मणे कस्मा इत्युक्तत्वात् ब्रह्मकं ब्रह्ममुखमिति परब्रह्मपरत्वेनोक्तत्वात्। "सदेव सोम्येदमग्र आसीत्", "एकमेवाद्वितीयम्" इत्यादिश्रुत्यनुसारेण पृथग्देवीभूषणायुधादिरहितत्वेन श्रुतिसिद्धम्। वेङ्कटाचले विद्यमानोऽपि मन्त्रो वेङ्कटेशपरः॥

पाद्मे—

येनैव दंष्ट्राग्रसमुद्धृता धरा बिभर्ति विश्वं ससुरासुरेन्द्रम्।
नताः स्म तस्मै वरदाय पुंसे सर्वात्मने शेषविभूतिदायिने॥ इति॥

**पद्मास्य वक्षाः परमः सुपुण्यः पद्मा जनित्री परमस्य वासः**
**सूक्ष्मं सावित्रं स्वयमादधानः सावित्ररूपं परमं सुपुण्यं स्वाहा॥७॥**

**पद्मा** लक्ष्मीः **अस्य** पूर्वं प्रतिपादितस्य वेङ्कटेशस्य **वक्षाः** वक्षसि विभक्तिव्यत्ययः **परमः** अर्चावतारे वरप्रदानादिषु समाभ्यधिकरहितः **सुपुण्यः**,

वेङ्कटाद्रिसमं स्थानं ब्रह्माण्डे नास्ति किञ्चन।
वेङ्कटेशसमो देवो न भूतो न भविष्यति॥
याश्च सप्तमहापुर्यः कीर्त्यन्ते मोददायकाः।
ता वेङ्कटाद्रिपर्यन्ता ग्रामकोट्यंशशक्तयः॥
नास्ति पुण्यतमं तीर्थं स्वामिपुष्करिणीसमम्।
सममस्तीति यो ब्रूयात्तत्समो नास्ति पातकी॥ इत्यादि॥

**पद्मा जनित्री** सर्वत्र जननी। ऋग्वेदे—"अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ। अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आविवेश। अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वन्तस्समुद्रे।" श्रीसूक्ते—"मातरं पद्ममालिनीम्", श्रीविष्णुपुराणे—

त्वं माता सर्वभूतानां देवदेवो हरिः पिता ।
त्वयैतद्विष्णुना चाम्ब जगद्व्याप्तं चराचरम् ॥ इति ॥

**परमस्य** अभ्यधिकरहितस्य अस्य वक्षः **पद्मावास** इति वा ॥
भगवच्छास्त्रे—

महाप्रळयकाले तु सर्वलोकविनाशने ।
तस्मिन्नपि च काले तु वत्सरूपावसत्स्वयम् ॥
श्रीवत्साङ्को हरिस्तस्मात् हरिवक्षसि सुस्थिता ।
प्रळयान्ते पुनस्सृष्टा पृथग्भूता च सा भवेत् ।
स्त्रीवेषेण च सर्वासां भेदमूर्तित्वमेयुषी ॥ इति ॥

**सूक्ष्मं सावित्रं स्वयमादधानः** "अन्तस्तद्धर्मोपदेशात्" इत्यस्यार्थोऽत्राभिप्रेतः । छान्दोग्ये—"य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी" इति ॥ मैत्रायणीश्रुतिः—"स्थिरमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वापरं धाम" इति ॥

योगयाज्ञवल्क्यः—

ईश्वरं पुरुषाख्यं च सत्यधर्माणमच्युतम् ।
भर्गाख्यं विष्णुसंज्ञं च ध्यात्वामृतमुपाश्नुते ॥ इति ॥
दृश्यो हिरण्मयो देव आदित्यो नित्यसंस्थितः ।
यः सूक्ष्मः सोऽहमित्येव चिन्तयामः सदैव तु ॥

किञ्च—सूक्ष्मं सावित्रं इत्युक्तत्वात् "घृणिरिति द्वे अक्षरे । सूर्य इति त्रीणि आदित्य इति त्रीणि । एतद्वै सावित्रस्याष्टाक्षरं पद९ श्रियाभिषिक्तम् । य एवं वेद । श्रिया हैवाभिषिच्यते" ॥ इति ॥ यजुषि—"घृणिः सूर्य आदित्यो न प्रभावात्यक्षरम् । मधु क्षरन्ति तद्रसम् । सत्यं वै तद्रसमापो ज्योती

रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम्" ॥ इति ॥ एवं श्रुतिस्मृतिषु प्रतिपादितं सावित्रं रूपं पूर्वोक्तः परमात्मा स्वयमादधानः **सावित्ररूपं परमं सुपुण्यम्** । "आदित्यो वा एष एतन्मण्डलम्" इत्यादिश्रुत्यनुसारेण, "असावादित्यो ब्रह्म" इति श्रुतेश्च, आदित्यमण्डलान्तर्वर्ती श्रीवेङ्कटेश इत्यभिप्रायेण सावित्ररूपं परमं सुपुण्यं इत्युक्तम् ॥ ७ ॥

**यः पुण्डरीकः परमान्तरात्मा कम्राङ्गरूपं कमलं दधार**
**सासिष्वसन्तं सरसे रसाय स्वाहा ॥ ८ ॥**

**यः** परमात्मा **पुण्डरीकः** पुण्डरीकः छान्दसत्वात् । **परमान्तरात्मा** अत्रापि दहरपुण्डरीकमध्यवर्ती चेत्यर्थः । छान्दोग्ये—"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इति ॥ यद्वा—पुरुषव्याघ्रः **कम्राङ्गरूपं** कमनीयमङ्गरूपं यस्य तत् । **कमलं** जलमलङ्करोतीति कमलं **दधार** कमले दधार ब्रह्माणं **सरसे** रससहिते द्रवेऽपि चेति रागात्मकरससूते पद्मे **रसाय** लोकसृष्टये ब्रह्माणं दधार तस्मै ।

भारते—

स्वयंभूस्तस्य देवस्य पद्मं सूर्यसमप्रभम् ।
नाभ्या विनिस्सृतमरुक् तत्रोत्पन्नः प्रजापतिः ॥ इति ॥ ८ ॥

**रयीणां पतिं यजतं बृहन्तं राराग्मुक्तं गुरुं सश्रीकं तं**
**रायिरूपं रयिभूतभूतं रयिमत्सुरत्रः स्वाहा ॥ ९ ॥**

**रयीणां पतिं** ऐश्वर्याणां पतिं **बृहन्तं** "बृहद्ब्रह्ममहश्चेतिशब्दाः पर्यायवाचकाः" इति पूर्वस्मिन्मन्त्रे प्रतिपादितं ब्रह्माणं परब्रह्मभूतं **राराग्मुक्तं** समग्रषाड्गुण्यपरिपूर्णैश्वर्यत्वात् तुच्छरूपपरत्वादिन्द्राद्यैश्वर्यरागरहितम् ,

एते वै निरयास्तात स्थानस्य परमात्मनः ।

इति वचनात् । **गुरुं—**

गुशब्दस्त्वन्धकारः स्यात् रुशब्दस्तन्निरोधकः ।
अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते ॥ इति ॥

विसृष्ट्यादिसामर्थ्यज्ञानप्रदं **सर्श्राकं** सर्वैश्वर्यवन्तं **तं रायिरूपं** ऐश्वर्यरूपं **रयिभूतभूत** ऐश्वर्यस्यापि ऐश्वर्यभूतं **रयिमत्सुरत्रः** ऐश्वर्यवतां देवानां रक्षिता अस्मै ।

आरोग्यं भास्करादिच्छेच्छ्रियमिच्छेद्धुताशनात् ।
शंकराज्ज्ञानमन्विच्छेन्मोक्षमिच्छेज्जनार्दनात् ॥ इति ॥

ज्ञानप्रदोऽपि परमात्मैवेत्यभिप्रायेण गुरुशब्दप्रयोगः यद्वा तत्त-दन्तर्यामित्वेन ॥ ९ ॥

**रायां पतत्त्रे रयिमादधात्रे रायो बृहन्तं रयिमत्सुपुण्यं**
**राराजिमन्तं रतये रमन्तं तं बिम्बवन्तं ककुदाय भद्रे स्वाहा ॥१०॥**

**रायां पतत्त्रे** स्वभक्तस्थतुच्छैश्वर्याणां पतनानन्तरं त्रात्रे रक्षित्रे,

यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहम् ।
बन्धून् वा नाशयिष्यामि व्याधीनुत्पादयाम्यहम् ॥ इति ॥

**रयिमादधात्रे** अनश्वरैश्वर्यप्रदात्रे **रायो बृहन्तं** लीलाविभूत्यपेक्षया नित्यविभूतेरधिकत्वात् "पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि" इति श्रुतेः । **रयिमत्सुपुण्यम्** ,

सत्पात्रदानेन भवेद्धनाढ्यो धनप्रकर्षेण करोति पुण्यम् ।
पुण्यादवश्यं त्रिदिवं प्रयाति पुनर्धनाढ्यः पुनरेव भोगी ॥

सुपुण्यं सुप्रसिद्धानां पुण्यप्रदं **राराजिमन्तं** देशकालाद्यपेक्षा-राहित्येन निरन्तरैश्वर्यवन्तं **रतये** लीलारसानुभवार्थं **रमन्तं परमात्मानं**

शैलजादिरूपेण **बिम्बवन्तं ककुदाय श्रैष्ट्याय भद्रे** शुभाश्रयाय **स्वाहा** जुहोमीत्यर्थः ॥ १० ॥

इति सप्तमोऽनुवाकः ।

---

## अष्टमोऽनुवाकः

**यत्सारभूतं सकलं धरित्रीं मोदप्रायेणानुभूतमनुविधं सूक्ष्मः**
**सुरेशः सकलं बिभर्ति तस्मै सुरेशाय सकलं सुपुण्यं स्वाहा ॥१॥**

**यत्सारभूतं** प्रकृतिपुरुषयोर्बलभूतं यद्वा जगतः **सकलं** "षोडशकलो वै पुरुषः" इति श्रुतेः । सकलासु हितां **धरित्रीं** धारणात् त्रायत इति धरित्रीं प्रकृतेः **मोदप्रायेणानुभूतं** लीलाप्रायेण परमात्मनानुभूतं **अनुविधं** अनुप्रविद्धं "तदेवानुप्राविशत्" इति श्रुतेः ॥ **सूक्ष्मः,**

वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ इति श्रुतेः ॥

"अणोरणीयान" इति जीवापेक्षया सूक्ष्मः **सुरेशः** ब्रह्मादीनामीशः **सकलं** चिदचिदात्मकं जगत् **बिभर्ति** । "व्यष्टभ्नाद्रोदसी विष्णुरेते । दाधार पृथिवीमभितो मयूखैः" इति **तस्मै सुरेशाय** पूर्वोक्तसुरेशः **सकलं** ब्रह्मादिस्तम्बपर्यन्तं **सुपुण्यं** सुतरां पुण्यं यत्सुरेशाय तस्मै ॥ १ ॥

**फलो वा एष लोकानामजरो महात्मा विश्वं यः पाति**
**विमलोऽमलाख्यस्तस्मै ककुत्त्रे वरदस्य पुष्ट्यै स्वाहा ॥ २ ॥**

**एष** परमात्मा **लोकानां** भूरादीनां तत्तल्लोकानां देवमनुष्यादीनां च **फलः** फलभूतः फलप्रदश्च । "फलमत उपपत्तेः" इति । **अजरः** जरारहितः ।

अशनायापिपासे च शोकमोहौ जरामृती ।
एताः षडूर्मयः प्रोक्ताः षडूर्मिरहितश्च सः ॥

**महात्मा** महान् **विश्वं** जगत् **यः पाति** रक्षति **विमलः** अपहतपाप्मत्वादिगुणः **अमलाख्यः,**

वसा शुक्रमसृङ्मज्जा मूत्रं विट्कर्णविण्णखाः ।
श्लेष्माश्रुदूषिका स्वेदो द्वादशैते नृणां मलाः ॥

इति द्वादशमलरहितः **ककुत्स्थे** श्रेष्ठाय पोषणादिशक्तिसहिताय **तस्मै वरदस्य** वरप्रदानसमर्थस्य **पुष्ट्यै,**

भृगुः—

श्रीः सा सरस्वती चैव रतिः प्रीतिस्तथैव च ।
कीर्तिः शान्तिस्तथा पुष्टिस्तुष्टिरित्यष्टशक्तयः ॥ इति ॥

पोषणरूपायै शक्त्यै परमात्मने ॥ २ ॥

**धूर्नो वहन्तां रतये रमन्तां प्रभूतिमन्तस्समयं सुषुम्ना अं राजिमन्तं सकलस्य गुप्त्यै स्वाहा ॥ ३ ॥**

**नः धूः** भारं भरन्यासं **वहन्तां** "वह प्रापणे" इति । परमात्मा स्वयमेव प्रापयताम् ।

स्वामी स्वशेषं स्ववशं स्वभरत्वेन निर्भरम् ।
स्वदत्तस्वधिया सार्धं स्वस्मिन्न्यस्यति मां स्वयम् ॥

इति सर्वदानुसन्धाय संयोज्य धूर्वहन्तां **रतये** तत्तद्विषयानुभवार्थं तत्तत्स्थाने **रमन्तां** इन्द्रियाणां **प्रभूतिं** परमपुरुषानुभवैश्वर्यरूपां **अन्तस्समयं सुषुम्ना** अन्तस्समयं अं **राजिमन्तं** अकाराक्षरपूर्वकमन्त्रं प्रतिपादयन्तं **सकलस्य** कला तु षोडशो भागः सर्वेन्द्रियोपरतस्य सुषुम्नानाड्यां गमनं च भरन्यासं श्रुतवतः प्रयच्छति तस्मै ॥ ३ ॥

**विश्वं बिभर्ति प्रसुरोऽभूदन्तं संराजवन्तं सकलं प्ररूढं स नो वितत्य प्रहिणोतु पत्त्रे स्वाहा ॥ ४ ॥**

**विश्वं** समस्तं **प्रसुरोऽभूदन्तं** तापत्रयादिना प्रकर्षेण सुरोऽभूदन्तं **संराजवन्तं** समूहवन्तं **सकलं** कलासहितं **प्ररूढं** देवमनुष्याद्यनुकारेण समस्तं **वितत्य** विस्तार्य **बिभर्ति स** देवः **नः** श्रेयः **प्रहिणोतु** प्रयच्छतु पत्त्रे पदात् त्रायत इति तस्मै ॥ ४ ॥

**सो वा स्वरूपः समदृक् समग्रो विधुदं तुदन् यो विदधत्पदं वा वियति प्रकाशं बृहते गुहेन तं बिम्बवन्तं समदं समग्रं स्वाहा ॥ ५ ॥**

**यः** परमात्मा देवासुरेषु समुद्रमथनवेळायां **समदृक् समग्रः** वञ्चितुं सावधानः **विधुदं** विधुश्चन्द्रः तं दमयतीति । दम इतीन्द्रियनिग्रहशक्तिसम्भवात् विधुदो राहुः **तं समदं** मदसहितं **समग्रं** सावधानं **बिम्बवन्तं** राहुममृतपानवेळायां **तुदन्** हिंसां कुर्वन् तस्य राहोः **वियति** आकाशे **पदं** स्थानं **गुहेन** ग्रहरूपेण **बृहते** पूर्वचन्द्राय **विदधत्** कल्पितवान् **स** एव **स्वरूपः** तस्मै ॥५॥

**भूर्भुवं वा भुवो वा सुवो वा किञ्चित्स्वनन्तं सुषुवे समस्तं सर्वस्य दातारमजरं जरित्रे स्वाहा ॥ ६ ॥**

**भूर्भुवं** भूमेरपि भूमिं उत्तरकुरुदेशादिकं **भुवो वा सुवो वा** अन्तरिक्षं स्वर्गं **वा** वाशब्दो लोकान्तरपरः । **किञ्चित्स्वनन्तं** अल्पशब्दवाच्यत्वेन स्वनन्तं शब्दयन्तं **सुषुवे** सृष्टवान् **समस्त**मपि **सर्वस्य दातारं** चतुर्वर्गफलप्रदं **अजरं** जरारहितम् ।

न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥इति॥

**जरित्रे** प्रकृतिद्वारेण जरित्रे ।

वासांसि जीर्णानि यथा विहाय

नवानि गृह्णाति नरोऽपराणि ।

तथा शरीराणि विहाय जीर्णा—

न्यन्यानि संयाति नवानि देही ॥ इति ॥

तस्मै ॥ ६ ॥

**दाक्षायण्यां प्रसृतं समस्तं सङ्कोचयित्वा सकलं वितानं संवासयन् यः सकलं वरिष्ठं तस्मै प्रजेशाय धुरन्धराय स्वाहा ॥७॥**

दाक्षायण्यदितिः तस्यां तं **प्रसृतं** उद्भूतं **समस्तं** दैतेयजातं **सङ्कोचयित्वा** अल्पावशिष्टं कृत्वा **सकलं** कलासहितं **वितानं** लोकस्याच्छादनभूतदेवजातं **संवासयन् वरिष्ठं** श्रेष्ठं मनुष्याणां रक्षणार्थे स्थापितवान् "त एनं तृप्त आयुषा तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसेनान्नाद्येन च तर्पयन्ति" इत्यादि **प्रजेशाय** प्रजानामीश्वराय **धुरंधराय** सर्वभारवहाय तुभ्यम् ॥ ७ ॥

**आशास्समस्ताः प्रतरन्ननु तमन्तस्तास्ता वसेद्धौः कमला समस्ताः सा मे गृहे समधत्त पुष्टिं स्वाहा ॥ ८ ॥**

**स्वभक्तानां स्वाराधकानां आशाः** कामान् **प्रतरन्** प्रयच्छन् **अनु** साकल्येन **तं अन्तः** हृदये परमात्मा तिष्ठति । या **कमला** लक्ष्मीः सापि तास्ताः प्रविश्य **वसेत्** ।

श्रीविष्णुपुराणे—

त्वं माता सर्वभूतानां देवदेवो हरिः पिता ।

त्वयैतद्विष्णुना चाम्ब जगद्व्याप्तं चराचरम् ॥ इति ॥

सर्वत्र व्याप्तिरुच्यते कथं व्याप्तिरिति चेत् यथा परमात्मना जगद्व्याप्तं तथेति भावः सर्वात्मना **सा** लक्ष्मीः सैषा लक्ष्मीः **मे गृहे पुष्टिं**,

त्वयावलोकिताः सद्यः शीलाद्यैः सकलैर्गुणैः ।
धनैश्वर्यैश्च युज्यन्ते पुरुषा निर्गुणा अपि ।

**समधत्त** अन्तर्यामिणः परमात्मनो लक्ष्म्याश्चायं मन्त्रः ॥ ८ ॥

**यो जङ्गमानां सकलं बिभर्षि सर्वं वियद्विचरते शक्ष्यन् तन्नौकूले वान्तिकेऽजस्रं स्वाहा ॥ ९ ॥**

**यः** परमात्मा **जङ्गमानां** देवमनुष्यादीनां **सकलं** योगक्षेमादिक **बिभर्षि वियद्विचरते** आकाशे यत्किंचित् विचरते तत् **सर्वं** त्वमेव बिभर्षि **शक्ष्यन्** शक्तः **तन्नौकूले वा** तत्सर्वं नौरिव जलधौ नौरिव **अन्तिके** समीपे **अजस्रं** पुष्टिं बिभर्षि तुभ्यम् ॥ ९ ॥

**यो वा दशानां प्रसृताः समस्तास्तां तां दधानास्समयात्सुबीजाः शब्दादिरीत्यै स्वबलं बलाय स्वाहा ॥ १० ॥**

बीजाङ्कुरप्ररोहादिकं परमात्मशक्त्येत्याह—**यो वा दशानां** इति ॥ **यः** परमात्मा **दशानां** देवमनुष्यमृगपक्षिसरीसृपक्रिमिश्वेतवृक्षजगुल्मलतादीनां **प्रसृताः** प्रसूतयः **समस्ताः** नामरूपकृत्यविभागादिकं **तां तां दधानाः समयात्** समये **सुबीजाः शब्दादिरीत्यै** परमात्मशक्त्या प्ररोहादिसामर्थ्ययुक्ता भवन्ति ये **स्वबलं** तत्सर्वं परमात्मन एव बलं तस्मै **बलाय** बलरूपाय ॥ १० ॥

इत्यष्टमोऽनुवाकः

---

## नवमोऽनुवाकः

**चत्वारो दोषः प्रहरन्ति यस्य सर्वस्य गोप्त्रे सुरसाय धाम्ने सोमस्य पुण्यं रयिमत्प्रवृद्ध्यै स्वाहा ॥ १ ॥**

**यस्य** सवितृमण्डलवर्तिनः परमात्मनः **चत्वारः** सुषुम्नादिका **दोषः** बाहवः पुण्यमाहुति **प्रहरन्ति** ।

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ॥ इति ॥

**सर्वस्य गोप्त्रे**—

पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ।

इति सर्वौषधीनां पोषणद्वारा मनुष्यादीनां गोप्तृत्वं **सुरसाय** सुतरां रसरूपाय **धाम्ने** अमृतमयतेजःस्वरूपिणे **प्रहरन्ति** प्रकर्षेण हरन्ति **रयिमत्प्रवृद्ध्यै**—

दिनेदिने कलावृद्धिः पौर्णमास्यां तु पूर्णता ॥ **इति** ॥

श्रीवैखानससूत्रे—

"यथा हवास्य सुषुम्ना जेनातिप्यति प्राणावति रेतोधा इत्येताहुतिं गृहीत्वा रश्मयश्चतस्रः प्रश्नाः सन्दधीरन् सह वा शुद्धा अमृतवह चिनुहि दिव्यालोकपावनीत्येताभिश्चन्द्रमसमाप्याययति . . . . . . मूलगामीव वा यावन्नमृतोद्गारिसुरप्रियेत्येताभिरमृतेन तां तर्पयति ।" किंच सर्वस्य गोप्तृत्वश्रवणात् ॥

ऋषय ऊचुः—

कौतूहलसमुत्पन्ना देवता ऋषिभिः सह ।
संशयं परिपृच्छन्ति व्यासं धर्मार्थकोविदम् ॥
कथं वा क्षीयते सोमः क्षीणो वा वर्धते कथम् ।
इमं प्रश्नं महाभाग ब्रूहि सर्वमशेषतः ॥

व्यासः—

शृण्वन्तु देवताः सर्वे यदर्थमिह आगताः ।
तदहं संप्रवक्ष्यामि सोमस्य गतिमुत्तमाम् ॥

अग्नौ हुतं च दत्तं च सर्वं सोमगतं भवेत् ।
तत्र सोमः समुत्पन्नः शीतांशुर्हिमलक्षणः ॥
अष्टाशीतिसहस्राणि विस्तीर्णं योजनानि तत् ।
प्रमाणं तत्र विज्ञेयं कलाः पञ्चदशैव हि ॥
षोडशी तु कलाप्यत्र त्वित्येकोऽपि विधेर्बले ।
पपुः सोमवपुर्देवाः पर्यायेणानुपूर्वशः ॥
प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः ।
विश्वेदेवास्तृतीयां तु चतुर्थीं सलिलाधिपः ॥
पञ्चमीं तु वषट्कारः षष्ठीं पिबति वासवः ।
सप्तमीमृषयो दिव्या अष्टमीमज एकपात् ॥
नवमीं कृष्णपक्षस्य यमः प्राश्नाति वै कलाम् ।
दशमीं पिबते वायुः पिबत्येकादशीमुमा ॥
द्वादशीं पितरः सर्वे समं प्राप्नोति भागशः ।
त्रयोदशीं धनाध्यक्षः कुबेरः पिबते कलाम् ॥
चतुर्दशीं पशुपतिः पिबत्यन्त्यां प्रजापतिः ।
एवं पीतः कलाशेषश्चन्द्रमा न प्रकाशते ॥
कला षोडशिका या तु ह्यपः प्रविशते सदा ।
अमायां तु सदा सोम ओषधीः प्रतिपद्यते ॥
तमोषधिगतं गावः पिबन्त्यम्बुगतं च यत् ।
तत्क्षीरममृतं भूत्वा मन्त्रपूतं द्विजातिभिः ॥
हुतमग्निषु यज्ञेषु पुनराप्यायते शशी ।
दिनेदिने कलावृद्धिः पौर्णमास्यां तु पूर्णिमा ॥
"नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रे" ॥ इत्यादि ॥

त्रिमुहूर्तं वसेदर्के त्रिमुहूर्तं जले वसेत् ।
त्रिमुहूर्तं वसेद्गोषु त्रिमुहूर्तं वनस्पतौ ॥
वनस्पतिगते सोमे स्त्रियं वा योऽधिगच्छति ।
स्वर्गस्थाः पितरस्तस्माच्च्यवन्ते नात्र संशयः ॥
वनस्पतिगते सोमे यस्तु हिंस्याद्वनस्पतिम् ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥
वनस्पतिगते सोमे यस्तु भुङ्क्ते परौदनम् ।
तस्य मासगतं पुण्यं दातारमधिगच्छति ॥
वनस्पतिगते सोमे नातिहेयांस्तु वाहयेत् ।
नाश्नन्ति पितरस्तस्य दशवर्षाणि पञ्च च ॥
वनस्पतिगते सोमे मन्थानं यस्तु कारयेत् ।
गावस्तस्य प्रणश्यन्ति चिरकालमुपस्थिताः ॥
वनस्पतिगते सोमे स्त्रियं वा योऽधिगच्छति ।
स्वर्गस्थाः पितरस्तस्माच्च्यवन्ते नात्र संशयः ॥
सोमोत्पत्तिमिमां यस्तु गर्भिणीं श्रावयेत्स्त्रियम् ।
ऋषभं जनयेत्पुत्रं सर्वज्ञं वेदपारगम् ॥
सोमोत्पत्तिमिमां यस्तु श्राद्धकाले सदा पठेत् ।
तदन्नममृतं भूत्वा पितॄणां दत्तमक्षयम् ॥
सोमोत्पत्तिमिमां यस्तु सर्वकाले सदा पठेत् ।
सर्वं मानव आप्नोति सोमलोकं स गच्छति ॥ इति ॥

एवंविधाकारचन्द्ररूपेण गोप्त्रे तुभ्यम् ॥ १ ॥

**वक्षो वसत्यस्य वरा वरिष्ठं वार्क दधाना वद्वधे समस्तं तस्मै वरिष्ठाय वरप्रवृद्धयै स्वाहा ॥ २ ॥**

**अस्य** परमात्मनो वक्षसि **वाकं दधाना वरिष्ठं** श्रेष्ठं **वक्षः** प्राप्य या **वसति वरां** वाकं दधाना उत्कृष्टरूपां वाकं वाचं दधाना पुरुषाकाररूपां वाचं दधाना श्रावयन्ती **वसति वव्र्धे समस्तं** जङ्गमाजङ्गमादिकं प्रति वृद्धिं गता तस्यै **वरिष्ठाय तस्मै** ॥ २ ॥

**अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशं स्वाहा ॥ ३ ॥**

**अणोरणीयान्महतः** आकाशादिभूपर्वतादिभ्यो **महीयानात्मा** अन्तः प्रविश्य नियन्ता ह्यात्मा **अस्य** जीवस्य **गुहायां** हृदयगुहायां **निहितः** एवंभूतं तं अक्रतुं अकर्माणं **पश्यति वीतशोकः धातुः प्रसादात्** परमात्मनः प्रसादाद्यः पश्यति वीतशोकः **महिमानं** महिमावन्तं **ईशं** इत्यर्थः ॥ धातुः प्रसादादित्यनेन—

नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यः
तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥

इति निर्हेतुकत्वं तस्य प्रसादात् ॥ ३ ॥

**विष्णुर्वरिष्ठो वरदानमुख्यो यो बिभ्रर्षीन् ध्यायन्नकुर्वन् विश्वं हीषद्विष्णवे याः प्रभविष्णवे ता अमितंभरत्रे स्वाहा ॥४॥**

**विष्णुः** व्याप्तः परमात्मा **वरिष्ठः** श्रेष्ठः **वरदानमुख्यः यः** परशुरामरूपी **बिभ्रर्षीन्** जमदग्नीन् । पूजायां बहुवचनम् । **ध्यायन्** **अकुर्वन्** **विश्वं** यथायोग्यत्वेन क्षत्रियवंशजातं ईषत्कार्यं **हि विष्णवे याः** शक्तयः—

परमेष्ठी पुमान्विश्वो निवृत्तः सर्व एव च ।
पञ्चैताः शक्तयः प्रोक्ताः परस्य परमात्मनः ॥
आचार्या वैष्णवी सूक्ष्मा लक्ष्मीः पुष्टिर्निरञ्जना ।
जीवनी मोहिनी माया नवैता विष्णुशक्तयः ॥ इति ॥

ता विष्णुशक्तयः **प्रभविष्णवे** रामभद्राय **अमितंभरत्रे** मितरहित-धनुर्भरणादमितंभरः तेन जनकप्रतिज्ञाप्रातिभरत्वधनुः स्वशक्तिभिस्सहस्र-शोऽधाद्यः अत्र विश्वर्षिशब्दप्रयोगात् अत्यन्तश्रेष्ठत्वं वा । श्रुतिः—"विश्वा-मित्रजमदग्नी वसिष्ठेनास्पर्धेता३ँ स एतज्जमदग्निर्विहव्यमपश्यत्तेन वै स वसिष्ठस्येन्द्रियं वीर्यमवृङ्क्त" इत्यादि ॥ ४ ॥

**अब्जोऽजुषन्तः प्रपतत्पतन्तः पूंपूंपुषन्तः पुनयः प्रवाळः कंकं जनित्रे समतेजसं ते स्वाहा ॥ ५ ॥**

**अब्जः** ब्रह्मा । भारते—

निशि सुप्त्वाथ भगवान् क्षपान्ते प्रतिबुध्य यः ।
पश्चाद्बुध्वा ससर्जापस्तासु वीर्यमवासृजत् ॥
तदण्डमभवद्दैवं सहस्रांशुसमप्रभम् ।
अहं कृत्वा ततस्तस्मिन् ससर्ज प्रभुरीश्वरः ॥
हिरण्यगर्भं विश्वात्मा ब्रह्माणं जलजं मुनिम् ।
भूतभव्यभविष्यस्य कर्तारमनघं विभुम् ॥ इति ॥

**अजुषन्तः** सृष्टिकर्तृत्वाभिमानेन त्वत्पादसेवामकुर्वन्तः । अब्ज इति जातावेकवचनम् । यद्वा अण्डबाहुळ्यत्वाभिप्रायेण **प्रपतत्पतन्तः पूंपूंपुषन्तः** शरीरं पोषयन्तः **पुनयः प्रवाळः** प्रकर्षेण बालं वबयोरभेदः **कंकं जनित्रे समतेजसं ते** एवं रजोगुणदोषदुष्टं ब्रह्माणं ते त्वं समतेजसं जनित्रे "नारायणाद्ब्रह्मा जायते" इति श्रुतयः तुभ्यम् ॥ ५ ॥

मामात्मगुप्तां वहते स्वभूत्यै तां राजिमन्तां धूर्धूरयन्तीं
धूरसि ध्रुवाय स्वाहा ॥ ६ ॥

मां लक्ष्मीं आत्मगुप्तां आत्मभूतेन स्वेनैव गुप्तां भूत्यै लोकानामैश्वर्याय वहते वक्षसि वहते स्म भूतार्थसूचनत्वात् प्रळयकालेऽपीत्यर्थः । तां राजिमन्तां लावण्यसंपत्सारभूतां धूर्धूरयन्तीं समग्रैश्वर्यगतिभूतां मां वहत इति पूर्वत्रान्वयः धूरसि भारभूतोऽसि ध्रुवाय स्थिराय तुभ्यम् ॥ ६ ॥

यं चिन्तयन्तो निगमान्तरूपं यं विश्वरूपं परमात्मपुण्यं
तं विन्दमानां सकलं व्रजन्तीं तं दैवमुख्यं सुरतं भवाय
स्वाहा ॥ ७ ॥

यं निगमान्तरूपं "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिवेदान्तप्रतिपाद्यरूपम् । यद्वा यं विश्वरूपं—

यस्यास्यमग्निर्द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः ।

इत्यादिविश्वरूपम् । यद्वा परत्वव्यूहविधावन्तर्याम्यर्चावतारादिरूपं वा चिन्तयन्तः ध्यायन्तः सकलं स्वकलासहितत्वेन ।

लक्ष्मीतन्त्रे—

महालक्ष्मीः समाख्याता साऽहं सर्वाङ्गसुन्दरी ।
महाश्रीः सा महालक्ष्मीश्चण्डाचण्डी च चण्डिका ॥
भद्रकाळी तथा भेदा काळी दुर्गा महेश्वरी ।
त्रिगुणा भगवत्पत्नी तथा भगवती परा ॥
एताः संज्ञास्तथान्याश्च तत्र मे बहुधा स्मृताः ।
विकारयोगादन्याश्च तास्ता वक्ष्याम्यशेषतः ॥
रक्षयामि जगत्सर्वं पुण्यापुण्ये कृताकृते ।
महनीया च सर्वत्र महालक्ष्मीः प्रकीर्तिता ॥

महाब्धिश्रयणीयत्वान्महाश्रीरिति गद्यते ।
भण्डस्य दयिता भण्डी भण्डत्वाद्भण्डिका मता ॥
कल्याणरूपा भद्रास्मि काळी भद्रा प्रकीर्तिता ।
कलात्सतां स्वरूपत्वादपि काळी प्रकीर्तिता ॥
सुहृदां च द्विषां चैव युगपत्सदसद्विभोः ।
भद्रकाली समाख्याता मायाश्चर्यगुणात्मिका ॥
माया योग इति ज्ञेया यज्ज्ञानाज्ञानयोर्नृणाम् ।
पूर्णषाड्गुण्यरूपत्वात्स्मृता चाऽहं परात्परा ॥
शासनाच्छक्तिरूपाहं राज्ञ्यहं रञ्जनात्सताम् ।
सदा शान्तविकारत्वाच्छान्ताहं परिकीर्तिता ॥
मत्तः प्रक्रमते विश्वं प्रकृतिः सास्मि कीर्तिता ।
श्रयन्ति ह्ययना चास्मि श्रृणामि दुरितं सताम् ॥
श्रृणोमि करुणां वाचं श्रृणोमि च गुणैर्जगत् ।
शरणं सर्वभूतानां रमेऽहं सर्वकर्मणाम् ॥
ईडिता च सदा देवैः शरीरं चास्मि वैष्णवम् ।
एतान्मयि गुणान् दृष्ट्वा वेदवेदाङ्गपारगाः ॥
गुणयोगविधानज्ञाः श्रियं मां संप्रचक्षते ।
साऽहमेवंविधा नित्या सर्वाकारा सनातना ॥ इति ॥

व्रजन्तीं सर्वस्यापि गतिभूतं तं परमात्मानं विन्दमानां प्राप्तवतीं च चिन्तयन्तो ये तिष्ठन्ति तेषां भोग्यरूपाय "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति" इति श्रुतेः ॥ ७ ॥

**पुण्यां च पुण्यः पुरुषे पुरग्रे तां राजिमन्तां निशि चोदितानां निदधाति पुष्ट्यै हरन् पराय स्वाहा ॥ ८ ॥**

**पुण्यः** पोषकः परमात्मा यद्वा परमपावनः **पुण्यां** पोषिकां पुरुषे पुरुषशब्दः साधारणः स्वकृपाकटाक्षविषयभूते **पुरुषे पुरग्रे** शरीरपूर्वभागे पादगुह्यनाभिहृदयकण्ठमुखेषु **पुष्ट्यै** ऐश्वर्यानुभवार्थं लक्ष्मीं **निदधाति** स्थापयते **निशि चोदितानां** रात्रौ चकारात् सन्ध्याकाले च उदिताः जाताःसुरदानवादयः "दिवा देवानसृजत नक्तमसुरान्" इति श्रुतेः । **तां राज्ञिं** दीप्तिरूपां लक्ष्मीं **हरन्** तेषामैश्वर्यं हरन् **अन्तां** शिरसि स्थितां निदधाति अयमेवार्थो मार्कण्डेयपुराणेऽवगम्यते—

सप्तस्थानान्यतिक्रम्य येषां लक्ष्मीः शिरःस्थिता ।
आयुरारोग्यमैश्वर्यं तेषां सम्यक्प्रहीयते ॥

एवंरूपेण मर्यादास्थापकाय तुभ्यम् ॥ ८ ॥

**स नो भूतो यो वाऽमृतात्मा सुपुष्टिमस्मत्पितरं पवित्रं स नोऽस्तु भूत्यै कमलं पराय स्वाहा ॥ ९ ॥**

**स** परमात्मा **नो भूतः** न जातः "अमानोनाः प्रतिषेधे" इति । श्वेताश्वतरे—

न तस्य कश्चित् पतिरस्ति लोके
न चेशिता नैव च तस्य लिङ्गम् ।
स कारणं करणाधिपाधिपो
न चास्य कश्चिज्जनिता न चाधिपः ॥ इत्यादयः ॥

**अमृतात्मा**—

षड्भावषट्कोशषडूर्मिहीनं शुद्धात् परं निर्मलमप्रमेयम् ।
ब्रह्माद्यमेकं सदनं समग्रं भजन्ति ये तत्र भवन्ति धन्याः ॥इति॥

अस्ति जायते परिणमते वर्धते अपक्षीयते विनश्यतीति षड्भावविकाराः अस्थिशुक्लमज्जाः पितृतः, त्वङ्मांसरुधिराणीति मातृतः, इति षट्कोशाः ।

अशनायापिपासे च शोकमोहौ जरामृती ।
एताः षडूर्मयः प्रोक्ता देहिनां तु विशेषतः ॥ इति ॥

अस्माकं **सुपुष्टिं** सुतरां पुष्टिं ऐहिकं **अस्मत्पितरं पवित्रं** पितृ-शब्देन पितृवंशजानां मातृवंशजानां सर्वेषामुपलक्षणम् ।

आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः ।
वैष्णवो नः कुले जातः स पुनस्तारयिष्यति ॥

**स नोऽस्तु भूत्यै स** परमात्मा **नः** भूत्यै भगवत्प्राप्तिरूपैश्वर्याय **अस्तु कमलम्** ॥ ९ ॥

**स एव नित्यं सकलाः समूर्तयः सुरतास्त्वनन्तास्ते जयन्तो वियति क्षयाणां तत्तत्सवित्रे हरते पराय स्वाहा ॥१०॥**

**नित्यं वियति** आकाशे यद्वा **अनन्ता** इत्यनेन आकाशास्ता उच्यन्ते **सुरताः** रतिसहिताः **सकलाः** नृत्यगीतवाद्यादिकलासहिताः **समूर्तयः** मूर्तिमन्तः **जयन्तः** जयशीलास्सन्तः ये तिष्ठन्ति **ते** सर्वे **स एव** । **तु** शब्दो विशेषद्योतकः । सद्वारकत्वेन यद्वा अन्तर्यामित्वेन—

ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च ।
नद्यः समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य ॥

**वियति क्षयाणां** आकाशे स्थानं प्राप्तानां "देवगृहा वै नक्षत्राणि" इति श्रुतेः । **तत्तत्सवित्रे** तत्तत्कर्मफलानुभवस्थानजनकाय **हरते**—

ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान् ।
ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ॥

इति भगवद्वचनात् । **पराय**—

ब्रह्माण्डे-—

ब्रह्मा शंभुस्तथैवार्कश्चन्द्रमाश्च शतक्रतुः ।
एवमाद्यास्तथा चान्ये युक्ता वैष्णवतेजसा ॥

जगत्कार्यावसाने तु वियुज्यन्ते च तेजसा ।
वितेजसश्च ते सर्वे पञ्चत्वमुपयान्ति च ॥ इति ॥

श्रीविष्णुपुराणे—

सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् ।
स संज्ञां याति भगवानेक एव जनार्दनः ॥ इति ॥

जगत्संहारकत्वेन रुद्ररूपक्षयशब्देन स्थानम् ।

निरुक्ते—

क्रमादिह गृहादीनां नामानि विविदुर्बुधाः ।
प्रासादमास्पदं सद्म गृहं धाम सनातनम् ॥
विमानं निलयं धिष्ण्यं गेहं च वसतिस्तथा ।
हर्म्यं निकेतनं चैव सौधं वासः श्रयः क्षयम् ।
आलयो मन्दिरं चैव भवनावासवाचकाः ॥ इति ॥

इति श्रीवेङ्कटेशपादाब्जसपर्यासुरतात्मना श्रीमत्कौशिकगोत्रेण गोविन्दाचार्यसूनुना वेदान्तदेशिकश्रीनिवासयज्वना विरचितपारमात्मिकोपनिषद्व्याख्याने नवमानुवाकार्थविवरणं समाप्तम्



---

## दशमोऽनुवाकः

या गौर्वरिष्ठा सह सोर्धरित्री वसुं वसुं वै वसुनीह भद्रा रेरीजयन्तो रजतं रजते स्वाहा ॥ १ ॥

या गौः वरिष्ठा धरित्री विश्वंभरा वरिष्ठा या गौः भूत्वा वसुं व्रीहियवादिकं वसुं द्रव्यादिकं वसुनीह भूलोके तत्तज्जात्यानुसारेण दुग्ध्वा

जङ्गमाजङ्गमादिकं च परमात्मना सह **सोर्भद्रा** शोभनानां कारणभूता बिभर्ति **रेरीजयन्तो** दीप्तिमन्तो लोकस्थान् **रजतं** रजोयुक्तं यत्किंचिद्व-स्तुजातं रजते दीप्तिं कुर्वते तुभ्यम् ॥ १ ॥

**वायोरन्तरात्मा वहति समस्तः सपुण्यदेवेति स सूरिमुक्तः सूरिः सुराणां सुरसोऽप्यसुंदः समूह्य देवा वरदाय पित्रे स्वाहा ॥ २ ॥**

अयं मन्त्रः सुदर्शनपरः । वायोरन्तस्य सुदर्शनस्य वायोर्गतिः अन्तरात्मा बुद्धिरूपः चलस्वरूपमत्यन्तमन्तरितानलम् ।

चक्रस्वरूपं च मनो धत्ते विष्णुः करे स्थितम् ॥ इति ॥

**समस्तः**—

विष्णोरपररूपत्वात्सर्वं विष्णुवदाचरेत् ॥ इति ॥

सर्वस्वरूपी **वहति** भगवता मनसि यत्किंचिच्चिन्तितं तत्सर्वं प्रापयति **स** सुदर्शनः **सूरिमुक्तः** भगवता राक्षसवधादिकं प्रति मुक्तः तद्वधप्रयुक्तदो-षाभावात् । **सपुण्यदेवेति** सर्वत्रापि प्रसिद्धः । **सुराणां सूरिः** पूज्यः **सुरसः** हत्त्यादिदोषदुष्टस्य लोके त्याज्यताप्रतिपादनात् तद्दोषाभावात्सुरसः । यद्वा रुद्रनिवासभूतत्वाद्वा **असुंदः** सुन्द दाहे [?] इति प्रतिसंहारकः । यद्वा प्राणदः अनध्यायेष्वधीयानास्ते चक्रेण हताः प्रणष्टा इति चरण-व्यूहैश्छन्दोगानां शिखाग्रहणमात्रेण प्राणदः **समूह्य देवा** य एवंरूपं सुदर्शनं समूह्य सम्यक् धृत्वा देवाय **वरदाय** रुद्रस्य वरदायेत्यर्थः । **पित्रे** "नारायणाद्रुद्रो जायते" इत्यादिश्रुतिभ्यः रुद्रस्य पित्रे रक्षकाय ॥

ननु जगत्संहारकस्य कथं सुदर्शने वास उपपद्यत इति चेत् उच्यते । वेङ्कटगिरिमाहात्म्ये—

कथं सूर्यं परित्यज्य प्रभाऽन्यस्य भविष्यति ।
एवं श्रीकौस्तुभं चक्रं शार्ङ्गं शङ्खं तथैव च ॥

एवमादीनि वस्तूनि नित्यसिद्धानि शंकर ।
नैतेषां च परित्यागे नान्यस्तेषां व्यपाश्रयः ॥
अशक्यमिदमत्यर्थमित्याह प्रमथाधिपम् ।
स चाह चान्वेतु वक्ष्ये तथैवास्तु यथेप्सितम् ॥

तत्रैव—

अन्तरात्मा हि सर्वेषां स्तौति नारायणं प्रभुम् ।
तदशक्यं महच्चक्रं विष्णोरन्यस्य कस्यचित् ॥
शुद्धसत्त्वस्य तद्विष्णोः सर्वेशस्य मया वपुः ।
साक्षात्स्पृष्टो महान् भीतस्तमोगुणसमाश्रयः ॥
यस्तत्त्वं च मया विष्णो दिव्यमङ्गलविग्रह ।
त्वामेव तदहं नित्यं विष्णोर्नित्यानपायिनम् ॥
अनुप्रविश्य त्वद्देहे वसिष्यामि सुदर्शन ।
ननु यद्वैष्णवं तेजः शाणितं विश्वकर्मणा ॥
जाज्वल्यमानमपतत्तद्भूमौ मुनिसत्तम ।
तेन चक्रं महाविष्णोः शिबिकामप्यकल्पयत् ॥
दैत्यः पञ्चजनो नाम प्रभुर्जलभरस्तथा ।
तस्यास्थिप्रभवं शङ्खमादाय पुरुषोत्तमः ॥ इति ॥

अनुशासनिके उमा—

बहूनामायुधानां तु पिनाकं धर्तुमिच्छसि ।
किमर्थं देवदेवेश तन्मे शंसितुमर्हसि ॥

महेश्वरः—

शस्त्रग्रहं ते वक्ष्यामि शृणु धर्मे शुचिस्मिते ।
युगान्तरे महादेवि कण्वनामा महामुनिः ॥

सेहे तीव्रां तपश्चर्यां कर्तुमेवोभयोः प्रियम् ।
महाविष्णोश्च या माऽस्ति तां मायां प्रकृतिं विदुः ॥
लोकयात्रा विना तां तु नैति श्रीः सा स्मृता बुधैः ।
तस्याः श्रियाः स्त्रियोऽभिन्नाः पूर्षाश्च पुरुषोत्तमात् ॥
तस्मात्तया श्रिया सार्धं पूजयेत्पुरुषोत्तमम् ।
संसारचक्रयत्नाभ्यां निजं ते स्यात्सुदर्शनम् ॥
हंसाख्यं चेतनारूपं सर्वप्राणिहृदि स्थितम् ।
तच्छङ्खरूपो देवश्च पाञ्चजन्याख्य उच्यते ॥
पञ्चभूतात्मको ह्यस्य सर्ववेदमयोऽक्षरः ।
छन्दोमयाभ्यां पक्षाभ्यां युक्तः पक्षिगणेश्वरः ॥
गरुडो वाहनं चापि विष्णोर्देवस्य कीर्तितः ।
पृथिवीवायुसंयोगश्चापः शार्ङ्गं हरेः स्मृतः ॥
तेजो वायुमयो ह्यस्य नाम्ना संशरणाच्छरः ।
विद्याविद्याशरैर्युक्ते अक्षये ते महेषुधी ॥
लोकालोकाचलः प्रोक्तो विद्योताख्यं तु खेटकम् ।
कृतान्तो नन्दकः खड्गं सर्वप्राणिहृदि स्थितम् ॥
या दण्डनीतिः सा ख्याता गदा कौमोदकी हरेः ।
सर्वार्थेषु जयो ह्यस्य स त्वजागरता स्थिता ॥
सर्वबन्धुषु यद्बद्धं प्रेमपाशं परस्परम् ।
दृढं भ्रातृसमाख्यं तत्त्वाशुसर्वार्थसंमतम् ॥
सर्वप्राणिषु या शक्तिः शक्तिर्विद्युन्निभा मता ।
मर्यादा यदधोलोके भेरी सा तु महारवा ॥

संसारभित्तियों देहो लीलाख्यः स हरेर्द्विजाः ।
यन्मनः शीघ्रगं तस्य स रथः कामगो मतः ॥
यो वायुर्वाति सोऽश्वस्तु पुण्डरीकपदाह्वयः ।
इत्येवं ब्रह्मणा चोक्तं तस्माद्देवि श्रिया सह ॥
आत्मानमस्य जगतो निर्लेपमगुणोऽमलम् ।
बिभर्ति कौस्तुभमणिस्वरूपं भगवान् हरिः ॥
श्रीवत्ससंस्थानधरमनन्तेन समाश्रितम् ।
प्रधानं बुद्धिरप्यास्ते गदारूपेण माधवे ॥
भूतादिमिन्द्रियादींश्च द्विधा वै परमीश्वरः ।
बिभर्ति शङ्खरूपेण शार्ङ्गरूपेण च स्थितम् ॥
चलस्वरूपमत्यन्तं जपेनान्तरितानिलम् ।
चक्रस्वरूपं च मनो धत्ते विष्णुःकरे स्थितम् ॥
पञ्चरत्ने तु या माता वैजयन्ती गदाभृतः ।
सा भूतहेतुसङ्घातभूता माता च वै द्विज ॥
यानीन्द्रियाण्यशेषेण बुद्धिकर्मात्मकानि वै ।
शराणि यान्यशेषेण तानि धत्ते जनार्दनः ॥
बिभर्ति यच्चासिरत्नमच्युतोऽत्यन्तनिर्मलम् ।
विद्यामयं नु तज्ज्ञानमविद्याचर्मसंस्थितम् ॥
भूतानि च हृषीकेशो धत्ते सर्वेन्द्रियाणि च ।
विद्याविद्ये च मैत्रेय सर्वमेतत्समाश्रितम् ॥
अस्त्रभूषणसंस्थानस्वरूपं रूपवर्जितम् ।
बिभर्ति मायारूपोऽसौ श्रेयसे भगवान् हरिः ॥
सविकारं प्रधानं च पुमान् स्वं चाखिलं जगत् ।
बिभर्ति पुण्डरीकाक्षस्तदेवं परमेश्वरः ॥ इति ॥

एवं स्वतः सिद्धानामकृतकानां शङ्खादीनामन्येन धर्तुमशक्यत्वात् योगेन पाञ्चजन्यत्वादिशब्दवाच्यत्वाभावात् रूढ्या पाञ्चजन्यत्वादिकमुपपन्नं ब्रह्मणा कल्पितं शार्ङ्गमिति नाम । एवमन्येषाममप्राकृतानां पाञ्चजन्यादिकं परमात्मन एव । अवतारादिष्वन्यत् अप्राकृतं वाचकवृत्तिप्रभृतिर्वा । कल्पितानि शङ्खादीनि ॥ २ ॥

**यस्योपरिष्टादधितिष्ठदात्मा सर्वोपरिष्टात् परमात्मा मुक्तं तं विरजं नित्यमनु संपराय स्वाहा ॥ ३ ॥**

**यस्य** बद्धस्य **उपरिष्टात्** बद्धापेक्षया मुक्तपरमसर्वोपरिष्टादधि**तिष्ठदात्मा** बद्धमुक्तनित्यापेक्षया **परमात्मा तं विरजं** बद्धापेक्षया **मुक्तं** विरजं अपहतपाप्मत्वादिगुणविशिष्टं मुक्तापेक्षया **नित्यं अनु** साकल्येन **संपराय** उत्कृष्टाय यद्वा प्रकृत्यपेक्षया बद्धायेत्यादि ॥ ३ ॥

**तमस्सर्वभूतमधुनाध्वरेण तं सत्त्वरूपमनुप्रविश्य संक्लेशयन् सृष्टिनिमित्ताय तस्मै परब्रह्मणे परंज्योतिषे स्वाहा ॥ ४ ॥**

"नासदासीन्नो सदासीत्तदानीम् । नासीद्रजो नो व्योमापरो यत् । किमावरीवः कुह कस्य शर्मन् । अम्भः किमासीद्गहनं गभीरम् । न मृत्युरमृतं तर्हि न । रात्रिया अह्न आसीत् प्रकेतः । आनीदवातꣳ स्वधया तदेकम् । तस्माद्धान्यं न परः किंच नास । तम आसीत् तमसा गूढमग्रे प्रकेतम्" इति । जाबालोपनिषदि—"ओं तदाहुः । किं तदासीत् । तस्मै स होवाच । न सन्नासन्न सदसदिति तस्मात्तमः स जायते तमसो भूतादिराकाशमाकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी तदण्डं समभवत् । तद्वत्संवत्सरमात्रमुषित्वा द्विधाऽकरोत् । अधस्तात् भूमिरुपरिष्टादाकाशं मध्ये पुरुषो दिव्यः । सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् सहस्रबाहुरिति

सर्वं तमोभूतं सृष्टेः प्रागा मनोस्तु सत्त्वरूपं सहस्रशीर्षेत्यादिरूपं प्रजासृष्टिनिमित्ताय सृष्ट्यर्थम् ।

श्रीविष्णुपुराणे—

प्रकृतिं पुरुषं चैव प्रविश्य स्वेच्छया हरिः ।
क्षोभयामास संप्राप्ते सर्गकाले व्ययः स्वयम् ॥
प्रकृतिं पुरुषं चैव विध्यनादी उभावपि ।
मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥

एवमुक्तप्रकारेण **अनुप्रविश्य** प्रकृतिपुरुषौ **शंक्षोभयन्** सृष्टिमकरोत् । कथमिति चेत् सहस्रबाहुरिति सोऽग्रे भूतानां मृत्युमसृजत् । त्र्यक्षं त्रिपादं खण्डपरशुमजीजनत् । तस्य ब्रह्माभिपेदे स ब्रह्माणमेव विवेश । स मानसात् सप्त पुत्रानसृजत् । ते ह विराजं सप्तमानसानसृजन् प्रजापतयः "ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः । पद्भ्याᳪ शूद्रो अजायत । चन्द्रमा मनसो जातः । चक्षोः सूर्यो अजायत", "श्रोत्राद्वायुश्च प्राणश्च हृदयात् इदं जायते अपानान्निषादा यक्षराक्षसगन्धर्वा अप्सरोभ्यः पर्वतो लोमभ्यः ओषधिवनस्पतयो ललाटात् क्रोधजो रुद्रो जायते । तस्यैतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदस्सामवेदोऽथर्वणवेदःशिक्षा कल्पो व्याकरणं छन्दो निरुक्तं ज्योतिषं न्यायो मीमांसा धर्मशास्त्राणि व्याख्यानान्युपव्याख्यानानि सर्वाणि च भूतानि हिरण्यज्योतिर्यस्मिन्नयमात्मा धीयन्ते भुवनानि विश्वा आत्मानं द्विधाऽकरोत । अर्धेन स्त्री अर्धेन पुरुषो देवो भूत्वा देवानसृजत् ऋषिर्भूत्वा ऋषीन् यक्षराक्षसगन्धर्वान् ग्राम्यानारण्यांश्च पशूनसृजत् । इतरा गा इतरोऽनडुह इतरा बडबा इतरोऽश्वतरान् इतरा गर्दभीः इतरो गर्दभान् इतरा विश्वंभरीरितरो विश्वंभरान्" इति एवं

सृष्टवान् । अयं परमात्मा क इत्याकाङ्क्षायां **तस्मै परब्रह्मणे परंज्योतिष** इति पुरुषनारायणपरंब्रह्मपरंतत्त्वपरंज्योतिःपरमात्मादिशब्दवाच्यो नारायण एवेति ज्ञापयितुं परब्रह्मणे परंज्योतिष इत्युक्तम् । परब्रह्मग्रहणात् सर्वमपि गृहीतं भवति ।

किञ्च—

तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ।
पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ॥
न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥

इत्यादि । किंच—"यतो वा इमानि भूतानि जायन्ते" इत्यादि । जगत्कारणं ब्रह्मेत्युक्तं जगत्कारणत्वात् विष्ण्वादिमूर्तीनां मूलभूतानां षट्कोश-षडूर्मिलेशाभावात् ।

न भूतसङ्घसंस्थानं देवस्य परमात्मनः ।
न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भिता ।
सर्वभूतमयं देहं त्रैलोक्ये सर्वजन्तुषु ॥

इत्यप्राकृतत्वात् "ऋतꣳ सत्यं परं ब्रह्म" इत्यादिपरब्रह्मस्वरूप-प्रतिपादनात् पादादर्धात् त्रिपादात् देवेषु क्रमेणादिमूर्तिश्च मूर्त्या क्रमेण विष्णुं महाविष्णुं सदाविष्णुं व्यापिनारायण इति चतुर्मूर्तयो भवन्तीति मरीच्यादिभिः प्रतिपादितत्वात् "तमीश्वराणां परमं महेश्वरम्" इत्युक्तत्वाच्च । "ऋतमग्निर्वा ऋतमसावादित्यम्", "अग्निस्सर्वा देवताः", "असा-वादित्यो ब्रह्म" इति समस्तकल्याणगुणाभिप्रायेण ऋतं सत्यमित्युक्तं "पूर्ण त्वात् पुरुषः" इति पादनारायणादिषु पूर्णत्वाभावात्पूर्णत्वाद्व्यापिनारायणस्य ।

परशब्देन च व्यापी नारायण इतीरितः ।
नारशब्देन जीवानां समूहः प्रोच्यते बुधैः ॥

तेषामयनभूतत्वान्नारायण इहोच्यते ।
नरसंबन्धिनो नारा नरश्च पुरुषोत्तमः ॥
नाम्यत्यखिलविज्ञानं नाशयत्यखिलं तमः ।
नरिष्यति च सर्वत्र नरस्तस्मात्सनातनः ॥
नरसंबन्धिनः सर्वे चेतनाचेतनात्मकाः ।
नृगन्तव्यतया नारा भार्या पोष्यतया नराः ॥

तथा—

नियाम्यत्वेन सृज्यत्वप्रवेशभरणैस्तथा ।
अयं ते निहितो नारात् व्याप्नोति क्रिययाऽखिलम् ॥
नाराश्चाप्ययनं तस्य तस्मै भावनिरूपणात् ।
नराणामयनं वासश्चेतनस्यायनं सदा ।
परमा च गतिस्तेषां नराणामात्मना स्थितिः ॥

व्यापिनारायणपरत्वाभिप्रायेण तस्मै परब्रह्मणे इत्युक्तम् ॥ ४ ॥

**जेनातिर्जेनातिषां जेनातिरोजो बलमाहरत्सत्त्वात्मकं संजेनातिरित्थं तस्मै सूक्ष्मसूक्ष्माय तेजसे स्वाहा ॥ ५ ॥**

परब्रह्मभूतनारायणस्य माहात्म्यं प्रतिपादयति अत्यन्तदीपवत् सूर्यचन्द्राग्न्यादीनां **जेनातिः** दीप्तिः **ओजः** परबलाहरणसामर्थ्यमोजः जगत्सृष्ट्यादिकं कुर्वतस्तस्य श्रीमहाविष्णोः **बलं** सत्त्वं **सत्त्वात्मकं** तदन्तर्यामिणां **संजेनातिः** सम्यक् ज्योतिः **इत्थं** उक्तप्रकारेण **तस्मै** ॥ ५ ॥

**सत्त्वं सत्त्वात्मकं वा रजो रजस आत्मकस्तमस्तमस आधारः साकृतं निरीश्वरमीश्वराय स्वाहा ॥ ६ ॥**

अयमपि मन्त्रः पूर्वोक्तपरमात्मपरः सत्त्वं सात्त्विकं सत्त्वात्मकं तदन्तर्यामिणं रजो रजस आत्मकः तदन्तर्यामिणं तमः तमस आधारः साकूतं आकूतसहितं निरीश्वरम् ,

न तस्य कश्चित् पतिरस्ति लोके
न चेशिता नैव च तस्य लिङ्गम् ।
स कारणं करणाधिपाधिपो
न चास्य कश्चिज्जनिता न चाधिपः ॥ इति ॥

ईश्वराय सर्वेश्वरायेत्यर्थः ।

विग्रहो हविरादानं युगपत्कर्मसन्निधिः ।
प्रीतिः फलप्रदत्वं च देवतानां न विद्यते ॥ इति ॥

विग्रहादिपञ्चकाभावात् चतुर्थ्यन्तः शब्दो देवता शब्दातिरिक्तदेवताभावात् मन्त्रार्थवादानां तत्र तात्पर्याभावाच्च ईश्वरायेति कथमुच्यत इति चेत्—उच्यते ; "यद्वै किंच मनुरवदत् तद्भेषजम्" इति श्रुतेः,

मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते ॥

इति संवर्तस्मरणाच्च । प्रमाणत्वेनाभिहितायां मनुस्मृतौ—

प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥

इति प्रत्यक्षादीनां त्रयाणां प्रामाण्यपतिपादनात "महाꣳ इन्द्रो वज्रबाहुः", "वज्रहस्तः पुरन्दरः", "उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे अवेपयः" इत्यादिदेवतासद्भावप्रतिपादनात् गारुडादिषु मन्त्रेषु मन्त्रवर्णानां स्वार्थे तात्पर्यदर्शनात विषहरणादिषु दृष्टत्वाच्च ईश्वरसद्भावोऽस्तीत्यवगन्तव्यः । स्मृतीनामपि वेदमूलत्वे त्रेधा निर्वाहः कार्य इति । नित्यानुमेयश्रुतिमूलत्वं

प्राभाकराः। उत्सन्नशाखामूलत्वमापस्तम्बाद्याः। विप्रकीर्णशाखामूलत्वमितरे। नित्यानुमेयश्रुतिमूलत्वे अक्षरानुपूर्व्यविशेषविशिष्टस्य नित्यानुमेयश्रुतिमूलत्वम्। नाक्षरानुपूर्व्यमूलत्वं यद्युच्यते तर्हि घटपटादीनामपि नित्यानुमेयश्रुतिमूलत्वं स्यात्। आनुपूर्व्यविशेषविशिष्टस्येति चेदुच्चार्यमाणानुपूर्व्यविशेषणविशिष्टत्व-मिति सिद्धान्तेऽनुमेयत्वं भज्येतेति। उत्सन्नशाखा मूलमिति चेत् तेऽपि भिन्नभिन्नपाठाः प्रयोगादनुमीयन्त इति विक्षेपोत्सन्ना वा एकैवेति चेन्न सर्ववेदसाक्षात्कारवतो व्यासस्य एकस्यापि शिष्यस्याध्यापनसामार्थ्याभावेन तथा वक्तुमयुक्तम्। भवेदेवेति चेत् सः पदक्रमादिरूपेणाधीयमानत्वात् तथा वक्तुमयुक्तम्। किन्तु प्रकीर्णशाखामूलत्वं वक्तुं युक्तम्॥

तदुक्तम्—

दुर्बोधा वैदिकाश्शब्दाः प्रकीर्णत्वाच्च ते खिलाः।
तथैत एव स्पष्टार्थाः स्मृतितन्त्रे प्रतिष्ठिताः॥ इति॥

प्रसङ्गादेतत्सर्वमुपपादितम्॥ ६॥

**अनिर्भिण्णं यस्येदमासीदुदकात्मकं यस्योदावोऽयनुथमुच्च-मुच्चैरुरुगाय स्वाहा॥ ७॥**

**यस्य** परमात्मनः यदा प्रळयः तदा लोके **अनिर्भिण्णं** भेदरहितं **निरन्तरमुदकात्मकमासीत्**। **यस्य** परमात्मनो दग्धुमिच्छा यदा यदा **उदावः** उत्कृष्टो दावः प्रळयाग्निः **अयनुथं** तथा असमृद्धिः **उच्चं** अत्यन्तं **उच्चैरुरुगाय** श्रुतिस्मृतिषु सर्वत्र अत्यन्तं गायति इति उरुगः तस्मै॥ ७॥

**यस्येच्छा लोके वा प्रजायतिर्लोके यस्मै वासि तस्मै वासीत् यद्वास्संजातं [?] यत्सर्वमीशमाशिषे स्वाहा॥ ८॥**

**यस्य** परमात्मनः **इच्छा लोके** प्रजानामायतिः सृष्ट्यादिकं "सोऽकामयत बहु स्यां प्रजायेयेति" इत्यादिश्रुतेः । मनसैव जगत्सृष्टि-संहारौ करोति यः तस्यां पक्षक्षपणे कियान् विस्तर इति **लोके** . . . . . .

(मातृकायामेतावदेवोपलब्धम्)

---

# यज्ञोपवीतोपनिषत्

यज्ञोपवीती धृतचक्रधारी यो ब्रह्मविद्ब्रह्मविदां मनीषी हिरण्यमादाय सुदर्शनं कृत्वा वह्निसंयुक्तं स्त्री शूद्रो बाहुभ्यां धारयेत् । तस्माद्गर्भेण जायते । ब्राह्मणस्य शरीरं जायते । श्रीविष्णुं सर्वेश्वरं भजन्ति ।

नासादिकेशपर्यन्तमूर्ध्वपुण्ड्रं तु धारयेत् ।
उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥
भूमिर्धेनुर्धरणी लोकधारिणी ॥
मृत्तिके हन मे पापं त्वयि सर्वं प्रतिष्ठितम् ॥

तस्माद्विरेखं भवति तं देवकीपुत्रं समाश्रये । अग्निना वै होत्रा चक्रं पाञ्चजन्यं प्रतप्तं द्वयोर्भुजयोर्धारयेत् । आत्मकृतमाचरेत् । आचार्यस्य संमुखं प्रपद्येत । तस्माद्वैकुण्ठं न पुनरागमनं सालोक्यसामीप्यसारूप्यसायुज्यं गच्छति । य एवं वेद । इत्युपनिषत् ॥

इति यज्ञोपवीतोपनिषत् समाप्ता

---

# राधोपनिषत्

## प्रथमः प्रपाठकः

ॐ अथ सुषुप्तौ रामः स्वबोधमाधायेव किं मे देवः क्वासौ कृष्णो योऽयं मम भ्रातेति तस्य का निष्ठा ब्रूहीति। सा वै ह्युवाच। राम शृणु भूर्भुवस्स्वर्महर्जनस्तपस्सत्यं तलं वितलं सुतलं रसातलं तलातलं महातलं पातालं एवं पञ्चाशत्कोटियोजनं बहुलं स्वर्णाण्डं ब्रह्माण्डमिति अनन्तकोटिब्रह्माण्डानामुपरि कारणजलोपरि महाविष्णोर्नित्यं स्थानं वैकुण्ठः। स ह पृच्छति। कथं शून्यमण्डले निरालम्बने वैकुण्ठ इति साऽनुयुक्ता। पद्मासनासीनः कृष्णध्यानपरायणः शेषदेवोऽस्ति। तस्यानन्तरोमकूपेष्वनन्तकोटिब्रह्माण्डानि अनन्तकोटिकारणजलानि तस्य सप्तकोटिपरिसहस्रपरिमिताः फणाः तदुपरि वैकुण्ठो विष्णुलोक इति। रुद्रलोकः शिववैकुण्ठ इति। दशकोटियोजनविस्तीर्णो रुद्रलोकः। तदुपरि विष्णुलोकः। सप्तकोटियोजनविस्तीर्णो विष्णुलोकः। तदुपरि सुदर्शनचक्रं त्रिकोटियोजनविस्तीर्णम्। तदुपरि कृष्णस्य स्थानं गोकुलाढ्यं माथुरमण्डलं महत्पदं सुधामयसमुद्रेणावेष्टितमिति। तत्राष्टदलकेसरमध्ये मणिपीठे सप्तावरणकमिति। स पृच्छति। किं रूपं किंस्थानं किं पद्मं किमन्तःकेसरः किमावरणम्। इत्युक्ते साऽनुयुक्ता। गोकुलाढ्ये माथुरमण्डले बृन्दावनमध्ये सहस्रदळपद्मे षोडशदलमध्ये अष्टदलकेसरे गोविन्दोऽपि श्यामपीताम्बरो द्विभुजो मयूरपिञ्छशिराः वेणुवेत्रहस्तो निर्गुणः सगुणो निराकारः साकारो निरीहः स चेष्टते विराजत इति। पार्श्वे राधिका चेति। तस्या अंशो लक्ष्मीदुर्गाविजयादिशक्तिरिति। पश्चिमे सम्मुखे ललिता। वायव्ये श्यामला। उत्तरस्मिन् श्रीमती। ऐशान्यां हरिप्रिया। पूर्वस्मिन् विशाला। अग्नेय्यां

श्रद्धा । याम्यां पद्मा । नैर्ऋत्यां भद्रा । षोडशदले अग्रे चन्द्रावती । तद्वामे चित्ररेखा । तत्पार्श्वे चित्रकरा । तत्पार्श्वे मदनसुन्दरी । तत्पार्श्वे श्रीमदा । तत्पार्श्वे शशिरेखा । तत्पार्श्वे कृष्णप्रिया । तत्पार्श्वे बृन्दा । तत्पार्श्वे मनोहरा । तत्पार्श्वे योगनन्दा । तत्पार्श्वे परानन्दा । तत्पार्श्वे प्रेमानन्दा । तत्पार्श्वे सत्यानन्दा । तत्पार्श्वे चन्द्रा । तत्पार्श्वे किशोरीवल्लभा । तत्पार्श्वे करुणाकुशला इति । एवं विविधा गोप्यः कृष्णसेवां कुर्वन्तीति । इति वेदवचनं भवति । इति वेदवचनं भवति । इति वेदवचनं भवति । मानसपूजया जपेन ध्यानेन कीर्तनेन स्तुत्या मानसेन सर्वेण नित्यस्थलं प्राप्नोति । नान्येनेति । नान्येनेति । नान्येनेति ॥

इत्याथर्वण्यां पुरुषबोधन्यां पारमहंस्यां प्रथमः प्रपाठकः

---

## द्वितीयः प्रपाठकः

ॐ साऽनुयुक्ता । तस्य बाह्येषु शतदलपद्मपत्रेषु योगपीठेषु रासक्रीडानुरक्ता गोप्यस्तिष्ठन्ति । एतच्चतुर्द्वारं लक्षसूर्यसमुज्ज्वलम् । तत्र द्रुमाकीर्णम् । तत्प्रथमावरणे पश्चिमे सम्मुखे स्वर्णमण्डपे देवकन्या । द्वितीये सुदामादि । तृतीये किङ्किण्यादि । चतुर्थे लवङ्गादि । पञ्चमे कल्पतरोर्मूले उषा तत्सहितोऽनिरुद्धोऽपि । षष्ठे देवाः । सप्तमे रक्तवर्णो विष्णुरिति द्वारपालाः । एतद्बाह्यं राधाकुण्डम् । तत्र स्नात्वा राधाङ्गं भवति । ईश्वरस्य दर्शनयोग्यं भवति । यत्र स्नात्वा नारद ईश्वरस्य नित्यस्थलसामीप्ययोग्यो भवति । राधाकृष्णयोरेकमासनम् । एका बुद्धिः । एकं मनः । एकं ज्ञानम् । एक आत्मा । एकं पदम् । एका आकृतिः । एकं ब्रह्म । तया समं हेममुरळीं वादयन् हेमस्व-

रूपामनुरागसंवलितां कल्पतरोर्मूले [आस्ते ।] सुरभिविद्या अक्षमाला श्रुतिरिव परमा सिद्धा सात्त्विकी । ([1]शुद्धा सात्त्विकी गुणातीता स्नेहभावरहिता । अत एव द्वयोर्न भेदः । कालमायागुणातीतत्वात् । तदेव स्पष्टयति अथेति । अथानन्तरं मन्त्रले वा । अथ वा श्रीबृन्दावनमध्ये ऋग्यजुस्सामस्वरूपम् । ऋगात्मको मकारः । यजुरात्मक उकारः । श्रीरामः सामात्मकोऽपि अकारः । श्रीकृष्णः अर्धमात्रात्मकोऽपि । यशोदा इव बिन्दुः । परब्रह्म सच्चिदानन्दानंद-राधाकृष्णयोः परस्परसुखाभिलाषरसास्वादन इव तत्सच्चिदानन्दामृतं कथ्यते । तल्लक्षणं यत् प्रणवं ब्रह्मविष्णुशिवात्मकं इच्छाज्ञानशक्तिनिष्ठं कायिकवाचिकमानसिकभावं सत्त्वरजस्तमस्स्वरूपं सत्यत्रेताद्वापरानुगीतम् । द्वापरस्य पश्चाद्वर्तते कलिः । एतच्चतुर्युगेषु गीयते । तद्भूर्भुवस्स्वलेक्षणमोङ्कार एव । यच्चान्यदतिरिक्तं कालातीतं तदप्योङ्कार एव । सर्वं ह्येतद्ब्रह्म आत्मा सोऽहमस्मि इति धीमहि चिन्तयेमहि । "आदित्यो वा एष एतन्मण्डलं तपति" इति यत् श्वेताख्यं श्वेतद्वीपनाम स्थानं तुरीयातीतं गोकुलमथुराद्वारकाणां तुरीयमेतद्दिव्यं बृन्दावनमिति पुरैवोक्तं सर्वं संपत्संप्रदायानुगतं यत्र ।।)

इत्याथर्वण्यां पुरुषबोधन्यां पारमहंस्यां द्वितीयः प्रपाठकः

---

## तृतीयः प्रपाठकः

अथानन्तरं भद्रश्रीलोहभाण्डीरमहातालखदिरवकुलकुमुदकाम्यमधुबृन्दावनानि द्वादशवनानि कालिन्द्याः पश्चिमे सप्तवनानि पूर्वस्मिन् पञ्चवनानि उत्तरस्मिन् गुह्यानि सन्ति । मथुरावनमधुवनमहावनखादिरवनभाण्डीरवननन्दीश्वरवननन्दवनानन्दवनखाण्डववनपलाशवनाशोकवनकेतकवनद्रुमवन-

[1] कुण्डलद्वयान्तर्गतो भागो व्याख्यानवत् भाति ।

गन्धमादनवनशेषशायिवनश्यामायुवनभुज्युवनदधिवनवृषभानुवनसंकेतवनदीप - धनरासवनक्रीडावनोत्सुकवनान्येतानि चतुर्विंशतिवनानि नित्यस्थलानि नाना-लीलयाधिष्ठाय कृष्णः क्रीडति । [तानि वनानि] वसन्तऋतुसेवितानि मन्दादिपवनयुक्तानि [सन्ति] यत्र दुःखं नास्ति सुखं नास्ति जरा नास्ति मरणं नास्ति क्रोधो नास्ति तत्र पूर्णानन्दमयः श्रीकैशोरकृष्णः शिखण्डिदललम्बित-त्रियुमगुञ्जावतंसमणिमयकिरीटशिराः गोरोचनातिलकः कर्णयोर्मकरकुण्डलौ वन्यस्रग्वी मालतीदामभूषितशरीरः करे कङ्कणं बाहौ केयूरं पादयोः किङ्किणीं कट्यां पीताम्ब [रं च धारयन्] गम्भीरनाभिकमलः सुवृत्तनासायुगलो ध्वजवज्रादिचिह्नितपादपद्मो महाविष्णु [रास्ते] ।

एवंरूपं कृष्णचन्द्रं चिन्तयेन्नित्यशः सुधीः ।। इति ।।

तस्याद्या प्रकृती राधिका नित्या निर्गुणा सर्वालङ्कारशोभिता प्रसन्नाशेषलावण्यसुन्दरी । अस्मदादीनां जन्म तदधीनं अस्यांशाद्बहवो विष्णुरुद्रादयो भवन्ति । एवंभूतस्यागाधमहिम्नः सुखसिन्धोरुत्पन्नमिति मानसपूजया ध्यानेन कीर्तनेन स्तुत्या मानसेन सर्वेण नित्यस्थलं प्राप्नोति । नान्येनेति । नान्येनेति । नान्येनेति । इति वेदवचनं भवति । इति वेदवचनं भवति । इति वेदवचनं भवति ।।

इत्याथर्वण्यां पुरुषबोधन्यां पारमहंस्यां तृतीयः प्रपाठकः

---

## चतुर्थः प्रपाठकः

अथ पुरुषोत्तमो यस्यां निशायां तुरीयं साक्षाद्ब्रह्म । यत्र परमसंन्या-सस्वरूपः कृष्णः कल्पपादपः । यत्र लक्ष्मीर्जाम्बवती राधिका विमला चन्द्रावली

सरस्वती ललितादिरिति । साक्षाद्ब्रह्मस्वरूपो जगन्नाथः अहंशेषांशज्योतीरूपः सुदर्शनो भक्तश्च । एवं पञ्चधा विभूतमिति । यत्र च मथुरा गोकुलं द्वारका वैकुण्ठपुरी श्वेतपुरी रामपुरी यमपुरी नरसिंहपुरी नरनारायणपुरी कुबेरपुरी गणेशपुरी शक्रपुरी एता देवतास्तिष्ठन्ति । यत्र रसातलपातालगङ्गारोहिणी-कुण्डममृतकुण्डमित्यादिनानापुरी । यत्रान्नं सिद्धान्नम् । ([1]शूद्रादिस्पर्शदोषरहितं ब्रह्मादिसंस्कारापेक्षारहितं यत्र श्रीजगन्नाथस्य योगमित्यर्थः । "नाभ्या आसीत्" इति मन्त्रेण, "अन्नपतेऽन्नस्य" इति मन्त्रेण, "अन्नाद्याय व्यूहध्वं सोमो राजाय भागमत्समे सुखं प्रमार्यते यशसा च बलेन च" इति मन्त्रेण, "विश्वकर्मणि स्वाहा" इति मन्त्रेण, "आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम्" इति मन्त्रेण, "पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि स्वाहा" इति मन्त्रेण; "अन्नं ब्रह्म" इति श्रुत्या च कैवल्यमुक्तिरुच्यते । यत्रान्नं ब्रह्म परमं पवित्रं शान्तो रसः कैवल्यमुक्तिः सिद्धा भूर्भुवस्स्वर्महत्तत्त्वमित्यादि यत्र भार्गवी यमुना समुद्रममृतमयं बृन्दावनानि नीलपर्वतगोवर्धनसिंहासनं प्रासादो मणिमण्टपो विमलादिषोड-शचण्डिकागोप्यो यत्र समुद्रतीरे च निरन्तरं कामधेनुबृन्दं यत्र नृसिंहादयो देवता आवरणानि यत्र न जरा न मृत्युर्न कालो न भङ्गो न जयो न विवादो न हिसा न शान्तिर्न स्वप्न एवं लीलाकामशरीरी स्वविनोदार्थं भक्तैः सहोत्कण्ठितैस्तत्र क्रीडति कृष्णः ।)

एको देवो नित्यलीलानुरक्तो
भक्तव्यापी भक्तहृद्यन्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः
साक्षी चेता केवलो निर्गुणश्च ॥

[1] कुण्डलद्वयान्तर्गतो भागो व्याख्यानवत् भाति ।

मानसपूजया जपेन ध्यानेन कीर्तनेन स्तुत्या मानसेन सर्वेण नित्यस्थलं प्राप्नोति । नान्येनेति । नान्येनेति । नान्येनेति । इति वेदवचनं भवति । इति वेदवचनं भवति । इति वेदवचनं भवति ॥

इत्याथर्वण्यां पुरुषबोधन्यां पारमहंस्यां चतुर्थः प्रपाठकः

इति राधोपनिषत् समाप्ता

---

# लाङ्गूलोपनिषत्

ॐ अस्य श्रीअनन्तघोरप्रलयज्वालाग्निरौद्रस्य वीरहनुमत्साध्यसाधनाघोरमूलमन्त्रस्य ईश्वर ऋषिः । अनुष्टुप् छन्दः । श्रीरामलक्ष्मणौ देवता । सौं बीजम् । अञ्जनासूनुरिति शक्तिः । वायुपुत्र इति कीलकम् । श्रीहनुमत्प्रसादसिद्ध्यर्थे भूर्भुवस्स्वर्लोकसमासीनतत्त्वंपदशोधनार्थे जपे विनियोगः ।

ॐ भूः नमो भगवते दावानलकालाग्निहनुमते अङ्गुष्ठाभ्यां नमः । हृदयाय नमः । ॐ भुवः नमो भगवते चण्डप्रतापहनुमते तर्जनीभ्यां नमः । शिरसे स्वाहा । ॐ स्वः नमो भगवते चिन्तामणिहनुमते मध्यमाभ्यां नमः । शिखायै वषट् । ॐ महः नमो भगवते पातालगरुडहनुमते अनामिकाभ्यां नमः । कवचाय हुम् । ॐ जनः नमो भगवते कालाग्निरुद्रहनुमते कनिष्ठिकाभ्यां नमः । नेत्रत्रयाय वौषट् । ॐ तपः सत्यं नमो भगवते भद्रजातिविकटरुद्रवीरहनुमते करतलकरपृष्ठाभ्यां नमः । अस्त्राय फट् । पाशुपतेन दिग्बन्धः । अथ ध्यानम्—

वज्राङ्गं पिङ्गनेत्रं कनकमयलसत्कुण्डलाक्रान्तगण्डं
दम्भोलिस्तम्भसारप्रहरणविवशीभूतरक्षोऽधिनाथम् ।

उद्यल्लाङ्गूलघर्षप्रचलजलनिधिं भीमरूपं कपीन्द्रं
ध्यायन्तं रामचन्द्रं प्लवगपरिवृढं सत्त्वसारं प्रसन्नम् ॥

इति मानसोपचारैः संपूज्य, ॐ नमो भगवते दावानलकालाग्निहनुमते [जयश्रियो जयजीविताय] धवलीकृतजगत्त्रय वज्रदेह वज्रपुच्छ वज्रकाय वज्रतुण्ड वज्रमुख वज्रनख वज्रबाहो वज्ररोम वज्रनेत्र वज्रदन्त वज्रशरीर सकलात्मकाय भीमकर पिङ्गलाक्ष उग्र प्रलयकालरौद्र वीरभद्रावतार शरभसालुवभैरवदोर्दण्ड लङ्कापुरीदाहन उदधिलङ्घन दशग्रीवकृतान्त सीताविश्वास ईश्वरपुत्र अञ्जनागर्भसंभूत उदयभास्करबिम्बानलग्रासक देवदानवऋषिमुनिवन्द्य पाशुपतास्त्रब्रह्मास्त्रबैलवास्त्रनारायणास्त्रकालशक्तिकास्त्रदण्डकास्त्रपाशाघोरास्त्रनिवारण पाशुपतास्त्रब्रह्मास्त्रबैलवास्त्रनारायणास्त्रमृड सर्वशक्तिग्रसन ममात्मरक्षाकर परविद्यानिवारण आत्मविद्यासंरक्षक अग्निदीप्त अथर्वणवेदसिद्धस्थिरकालाग्निनिराहारक वायुवेग मनोवेग श्रीरामतारकपरब्रह्मविश्वरूपदर्शन लक्ष्मणप्राणप्रतिष्ठानन्दकर स्थलजलाग्निमर्मभेदिन् सर्वशत्रून् छिन्धि छिन्धि मम वैरिणः खादय खादय मम संजीवनपर्वतोत्पाटन डाकिनीविध्वंसन सुग्रीवसख्यकरण निष्कलङ्क कुमारब्रह्मचारिन् दिगम्बर सर्वपाप सर्वग्रह कुमारग्रह सर्वं छेदय छेदय भेदय भेदय भिन्धि भिन्धि खादय खादय टङ्क टङ्क ताडय ताडय मारय मारय शोषय शोषय ज्वालय ज्वालय हारय हारय देवदत्तं नाशय नाशय अतिशोषय अतिशोषय मम सर्वं च हनुमन् रक्ष रक्ष ॐ ह्रां ह्रीं ह्रूं हुं फट् घे घे स्वाहा ॥

ॐ नमो भगवते चण्डप्रतापहनुमते महावीराय सर्वदुःखविनाशनाय ग्रहमण्डलभूतमण्डलप्रेतपिशाचमण्डलसर्वोच्चाटनाय अतिभयङ्करज्वर-माहेश्वरज्वर-विष्णुज्वर-ब्रह्मज्वर-वेताळब्रह्मराक्षसज्वर-पित्तज्वर-श्लेष्मसान्निपा-

तिकज्वर-विषमज्वर-शीतज्वर-एकाहिकज्वर-द्व्याहिकज्वर-त्र्यैहिकज्वर-चातु - र्थिकज्वर - अर्धमासिकज्वर - मासिकज्वर-षाण्मासिकज्वर-सांवत्सरिकज्वर-अ-स्थ्यन्तर्गतज्वर-महापस्मार-भ्रमिकापस्मारांश्च भेदय भेदय खादय खादय ॐ ह्रां ह्रीं ह्रूं हुं फट् घे घे स्वाहा ॥

ॐ नमो भगवते चिन्तामणिहनुमते अङ्गशूल-अक्षिशूल-शिरश्शूल-गुल्मशूल-उदरशूल-कर्णशूल-नेत्रशूल गुदशूल-कटिशूल-जानुशूल-जङ्घाशूल-हस्तशूल-पादशूल-गुल्फशूल-वातशूल-पित्तशूल-पायुशूल-स्तनशूल-परिणामशूल-परिधामशूल-परिबाणशूल-दन्तशूल-कुक्षिशूल सुमनश्शूल-सर्वशूलानि निर्मूलय निर्मूलय दैत्यदानवकामिनीवेतालब्रह्मराक्षसकोलाहलनागपाशानन्तवासुकि-तक्षककार्कोटकलिङ्गपद्मककुमुदज्वलरोगपाशमहामारीन् कालपाशविषं निर्विषं कुरु कुरु ॐ ह्रां ह्रीं ह्रूं हुं फट् घे घे स्वाहा ॥

ॐ ह्रीं श्रीं क्लीं ग्लां ग्लीं ग्लूं ॐ नमो भगवते पातालगरुडहनुमते भैरववनगतगजसिंहेन्द्राक्षीपाशबन्धं छेदय छेदय प्रलयमारुत कालाग्नि-हनुमन् शृङ्खलाबन्धं विमोक्षय विमोक्षय सर्वग्रहं छेदय छेदय मम सर्वका-र्याणि साधय साधय मम प्रसादं कुरु कुरु मम प्रसन्न श्रीरामसेवकसिंह भैरवस्वरूप मां रक्ष रक्ष ॐ ह्रां ह्रीं ह्रूं ह्रां ह्रीं क्ष्मौं भ्रैं श्रां श्रीं क्लां क्लीं क्रां क्रीं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ह्रां ह्रीं हुं ख ख जय जय मारण मोहन घूर्ण घूर्ण दम दम मारय मारय वारय वारय खे खे ह्रां ह्रीं ह्रूं हुं फट् घे घे स्वाहा ॥

ॐ नमो भगवते कालाग्निरौद्रहनुमते भ्रामय भ्रामय लव लव कुरु कुरु जय जय हस हस मादय मादय प्रज्वलय प्रज्वलय मृडय मृडय त्रासय त्रासय साहय साहय वशय वशय शामय शामय अस्त्रत्रिशूलडमरुखड्ग-कालमृत्युकपालखट्वाङ्गधर अभयशाश्वत हुं हुं अवतारय अवतारय हुं हुं

अनन्तभूषण परमन्त्र-परयन्त्र-परतंत्र-शतसहस्त्र-कोटितेजःपुञ्जं भेदय भेदय अग्निं बन्धय बन्धय वायुं बन्धय बन्धय सर्वग्रहं बन्धय बन्धय अनन्तादिदुष्ट-नागानां द्वादशकुलवृश्चिकानामेकादशलूतानां विषं हन हन सर्वविषं बन्धय बन्धय वज्रतुण्ड उच्चाटय उच्चाटय मारणमोहनवशीकरणस्तम्भनजृम्भणाक-र्षणोच्चाटनमिलनविद्वेषणयुद्धतर्कमर्माणि बन्धय बन्धय ॐ कुमारीपदत्रिहार-बाणोग्रमूर्तये ग्रामवासिने अतिपूर्वशक्ताय सर्वायुधधराय स्वाहा अक्षयाय घे घे घे घे ॐ लं लं लं घ्रां घ्रौं स्वाहा ॐ ह्रां ह्रीं ह्लूं हुं फट् घे घे स्वाहा ॥

ॐ श्रां श्रीं श्रूं श्रैं श्रौं श्रः ॐ नमो भगवते भद्रजानिकटरुद्रवीर-हनुमते टं टं टं लं लं लं लं देवदत्तदिगम्बराष्टमहाशक्त्यष्टाङ्गधर अष्ट-महाभैरवनवब्रह्मस्वरूप दशविष्णुरूप एकादशरुद्रावतार द्वादशार्कतेजः त्रयोदशसोममुख वीरहनुमन् स्तंभिनीमोहिनीवशीकरिणीतन्त्रैकसावयव नगर-राजमुखबन्धन बलमुखमकरमुखसिंहमुखजिह्वामुखानि बन्धय बन्धय स्तम्भय स्तम्भय व्याघ्रमुखसर्ववृश्चिकाग्निज्वालाविषं निर्गमय निर्गमय सर्वजन-वैरिमुखं बन्धय बन्धय पापहर वीर हनुमन् ईश्वरावतार वायुनन्दन अञ्जना-सुत बन्धय बन्धय श्रीरामचन्द्रसेवक ॐ ह्रां ह्रां ह्रां आसय आसय ह्रीं ह्रां घ्रीं क्रीं यं भै म्रं म्रः हट् हट् खट् खट् सर्वजन-विश्वजन-शत्रुजन-वश्यजन-सर्वजनस्य दृशं लं लां श्रीं ह्रां ह्रीं मनः स्तम्भय स्तम्भय भञ्जय भञ्जय अद्रि ह्रीं व ह्रीं ह्रीं मे सर्व ह्रीं ह्रीं सागरह्रीं ह्रीं वं वं सर्वमन्त्रार्थाथर्वण-वेदसिद्धिं कुरु कुरु स्वाहा । श्रीरामचन्द्र उवाच । श्रीमहादेव उवाच । श्रीवीरभद्रस्तौ उवाच । त्रिसन्ध्यं यः पठेन्नरः ॥

इत्याथर्वणरहस्ये लाङ्गूलोपनिषत् समाप्ता

---

# श्रीकृष्णपुरुषोत्तमसिद्धान्तोपनिषत्

निरञ्जनो निराख्यातो निर्विकल्पो नमो नमः ।
पूर्णानन्दो हरिर्मायारहितः पुरुषोत्तमः ॥

अष्टावष्टसहस्रे द्वे स्त्रियो जायन्ते पुरुषोत्तमात् । स्मृतिर्जायते पुरुषोत्तमात् ! षट्च्छास्त्राणि जायन्ते पुरुषोत्तमात् । छन्दो जायते पुरुषोत्तमात् । निगमो जायते पुरुषोत्तमात् । प्रजापतिर्जायते पुरुषोत्तमात् । शशिरवी जायेते पुरुषोत्तमात् । सकलतीर्थानि जायन्ते पुरुषोत्तमात् । परशिवशक्तिर्जायते पुरुषोत्तमात् । ऋषयोऽनृषयो जायन्ते पुरुषोत्तमात् । इन्द्रो जायते पुरुषोत्तमात् । द्वादशादित्या रुद्राः सर्वा देवता जायन्ते पुरुषोत्तमात् । देवा जायन्ते पुरुषोत्तमात् । सप्त सागरा जायन्ते पुरुषोत्तमात् । सर्व आत्मा जायते पुरुषोत्तमात् । मनःसर्वेन्द्रियाणि जायन्ते पुरुषोत्तमात् । अष्टादश ब्रह्माण्डानि जायन्ते पुरुषोत्तमात् । अष्टसिद्धिनवनिधयो जायन्ते पुरुषोत्तमात् । वनभारा अष्टादश जायन्ते पुरुषोत्तमात् । अमृतो जायते पुरुषोत्तमात् । अम्भो जायते पुरुषोत्तमात् ॥

ॐ निगमं शङ्करोऽब्रवीत् । गौः । ग्मा । ज्मा । क्ष्मा । क्षा । क्षमा । क्षोणिः । क्षितिः । अवनिः । उर्वी । पृथ्वी । मही । रिपः । अदितिः । इळा । [1]जीवामकालाशूता जीवः जीवा अस्ताजीव्यामं सर्वमायुजीव्यासं [?] । लोदंकंचनंकांचानु अमृतं न भवति [?] पारमधाराणि [परमधर्माणि] जातवेदाः प्रोवाचैवेदं सर्वम् । शिवशक्तिपशुजीवो ब्रह्मा भक्तः पशुवत् [?] । यन्नत्यादेव पर श्रत्कौ परशिवः अन्या अवतारातेहि व्यासवल्लश्रविठलेहरयस्तथा [?] । ललाटे ऊर्ध्वपुण्ड्रं मध्यच्छिद्रं चन्दनतिलकं

[1] "जीवामकालाशूता जीवः" इत्यारभ्य "पुरुष एवेदं सर्वम्" इत्येतत्पर्यन्तं अतीव विकला मातृकेति सानुतापं यथास्थित दीयते ॥

शुभं हरिमन्दिरं मध्यपद्मं कण्ठेतुलसी शङ्खचक्रं गदा बाहुगोपीचन्दनचर्चनं परं गतिः जीवोत्तमस्य । ब्रह्मा शक्तिर्महादेवो जन्यते पुरुषोत्तमात् । ॐ आपोऽमृतमर्त्यस्य मर्त्योऽपश्यत यस्तु जन्यते पुरुषोत्तमात् । अमृतात् प्राणाश्चाहो मम जायन्ते पुरुषोत्तमात् । मनसि निषण्णः श्रीप्राणाय प्रज्ञानाय स्वराट् पुरुषोत्तमः । श्रीकृष्णभगवान् नारायणः परमात्मा पुरुषोत्तमः त्रिगुणरहितः स्वयम् । कथम् ? पुरुष एवेदं सर्वम् ॥

इति श्रीकृष्णपुरुषोत्तमसिद्धान्तोपनिषत् समाप्ता

---

# सङ्कर्षणोपनिषत्

अथ तद्विष्णोः इति शान्तिः । अथ सङ्कर्षणोपनिषदुच्यते । शेषो ह वै वासुदेवात्सङ्कर्षणो नाम जात आसीत् । सोऽकामयत प्रजाः सृजेयेति । ततः प्रद्युम्नसंज्ञं मन आसीत् । तस्मादहंकारनामाऽनिरुद्धः । ततो हिरण्यगर्भोऽजायत । तस्माद्दश प्रजापतयो मरीच्यादयः स्थाणुदक्षकर्दमप्रियव्रतोत्तानपादादयोऽप्यजायन्त । तेभ्यः सर्वाणि भूतानि च । तस्माच्छेषादेव सर्वाणि समुत्पद्यन्ते । तस्मिन्नेव प्रलीयन्ते । स एव बहुधा जायमानः सर्वान् परिपाति । स एव काद्रवेयो व्याकरणज्यौतिषादिशास्त्राणि निर्मिमाणो बहुभिर्मुमुक्षुभिरुपास्यमानोऽखिलां भुवमेकस्मिन् शीर्ष्णि सिद्धार्थवद्धारयमाणस्सर्वैर्मुनिभिः संप्रार्थ्यमानः सहस्रशिखरमेरोश्शिरोभिर्वारयमाणो महावायोरहंकारं निराचकार । स भगवान् युगसन्धिकाले स्वेन रूपेण युगे युगे तेनैव जायमानः स्वयमेव सौमित्रिरैक्ष्वाके[वंशे जा]यमा[नो] रक्षांसि सर्वाणि विनिघ्नन् चातुर्वर्ण्यधर्मान् प्रवर्त[यति ।]स एव भगवान् युगसन्धिकाले[शरदभ्रस]निकाशो रौहिणेयो वासुदेवः सर्वाणि

ग[दा]द्यायुधशास्त्राजन्यमण्डलान्निराचिकीर्ष[ति ।]भूभारमखिलं निचखान । स एव भगवान् [शेषः] युगे तुरीयेऽपि ब्राह्मण्यां जायमा[नो] रामानुजो भूत्वा सर्वा उपनिषद उद्दिधीर्ष[ति ।] सर्वाणि धर्मशास्त्राणि विस्तारयिष्णुः सर्वानपि वैष्णवान् धर्मान् विजृंभयन् सर्वानपि पाषण्डान्निचखान । स एष जग[दाविर्भावतिरोभावहेतुः ।] स एष सर्वात्मकः । स एष मुमुक्षुभिर्ध्येयः । स एष मोक्षप्रदः एतत्स्मृ[त्या] सर्वेभ्यः पाप्मे-[प्म]भ्यो मुच्यते । तन्नाम संकीर्तयन् विष्णुसायुज्यं गच्छति । तदेतद्दिवाऽधीयानो रात्रिकृतं पापं नाशयति । नक्तमधीयानो दिवसकृतं पापं नाशयति । तदेतद्वेदानां रहस्यम् । तदेतदुपनिषदां रहस्यम् । एतदधीयानः सर्वक्रतुफलं लभते । शान्तिमेति । मनश्शुद्धिमेति । सर्वतीर्थफलं लभते । य एवं वेद । देहबन्धाद्विमुच्यते । देहबन्धाद्विमुच्यते । इत्येवोपनिषत् ॥

इति सङ्कर्षणोपनिषत् समाप्ता

---

# सामरहस्योपनिषत्

एकदा ब्रह्मणः पुत्राः सनकादयस्तत्त्वविवित्सया पितामहं पप्रच्छुः प्रणिपातपुरस्सरम् । अहो पितः निरन्तरं वैकुण्ठे या लीलास्ता ध्यायमानाः निरन्तरं चिदानन्देन सह संप्रेक्षामहे । वद यदि रुचिरापद्यते । चिदानन्दरसं ब्रह्म किं वदन्ति ? व्यापकतया जगद्व्याप्य तिष्ठति यत्तद्ब्रह्म वदन्तितराम् । आपद्यमानोऽस्ति प्रकृतिं पुरुषः । कस्मात्प्रकृतियोगिता भवति ? जीवाः कीदृग्विधाः ? कस्मात्समुत्पन्ना भवन्ति ? तेषां लोका अलोकाः कियत्प्रमाणाः ? यान् वदन्ति पुराविदः । पितामह उवाच । नारायण-

मुखाच्छ्रुतोऽयं धर्मः । शृणुत सर्वा यैषा सृष्टिस्समुत्पद्यते । क्षराक्षराभ्यामधिकः पुरुषोत्तमसंज्ञितो भक्तिगम्य आनन्दमयो लोकः संविराजते । तस्य पुरुषोत्तमस्य उत्तरकटाक्षात्समुत्पन्ना जीवाः । तेषां स्नेहमार्गोऽयमापद्यते । दक्षिणकटाक्षादुत्पन्नाः कर्मजडा आसुरा अल्पोपासका भवन्ति । तस्मिन् रसिकानन्दस्वरूपात्पार्श्वात् द्वे एव मूर्ती प्रकटिते । प्रथमा भक्तिसुन्दरी प्रकटिता । पश्चान्मायादासी प्रकटिता । तयोः प्रथमा अत्यन्तवल्लभा आस्त । भक्तेस्सकाशादुत्पन्ना जीवाः स्नेहमार्गीया भवन्ति । मायायाः समुत्पन्ना आसुराः कर्मजडा अन्यधर्मरता एव भवन्ति । यदा कर्ममार्गे रतिरसतां ते आसुरा भवन्ति । सा भक्तिस्त्रिविधैव भवति । एका कर्ममिश्रिता देवानामृषीणामुपासकानां भवतितराम् । श्रवणकीर्तनस्मरणवन्दनसेवनोपकरणदास्यभावेनात्मसमर्पणम् । ते जीवा भक्तिमार्गीयाः एवैते । स एवायं पुरुषः स्वरमणार्थं स्वस्वरूपं प्रकटितवान् । तद्रूपं रससंवलितमानन्दरसोऽयं पुराविदो वदन्ति । सर्वे आनन्दरसा यस्मात् प्रकटिता भवन्ति । आनन्दरूपेषु पुरुषोऽयं रमते । स एवायं पुरुषः स्वयमेव समाराधनतत्परोऽभूत् । तस्मात् स्वयमेव समाराधनमकरोत् । अतो लोके वेदे श्रीराधा गीयते । तत्स्वरूपात्सृष्टिर्या समुत्पन्ना सा रसिकानन्देन सुसेव्यतां प्राप्ता आसीत् । प्रमाणप्रमेयादस्मान्मार्गादतिरिक्तोऽयं मार्गो रसात्मकः । य एतन्मार्गे आसक्तास्ते रसरूपिर्णी सृष्टिमन्तरुत्पद्यमानाः भवन्ति । लक्ष्मीनारायणीयोऽयं संवादः । निरन्तरं नारायणो वैकुण्ठे रमया रहस्यलीलां सञ्ज्ञायमानोऽभवत् । रमारमणो वैकुण्ठे नारायणः स्वयं ध्यानापन्नोऽभवत् । तदा लक्ष्मीः रहस्युपासमाना तस्य तामवस्थां निरीक्ष्य प्रश्रयावनता पप्रच्छ । किं ध्यायसि? किं जपसि? परं कौतूहलं मे मनसि वर्तते । त्वत्तः परं को देवः? को लोकः? यस्य त्वं ध्यायसे

प्रतिक्षणम् । तव मनः कां लीलामापन्नं दृश्यते ? स होवाच लक्ष्मीं प्रति । महालीलास्थानं क्षराक्षराभ्यामधिकं पुरुषोत्तमाधिष्ठानम् । यत्र सप्तावरणानि तेजोमयानि । यत्र ब्रह्माण्डान्युत्पद्यन्ते लीयन्ते । कोटिश अण्डकटाहाः उत्पद्यन्ते लीयन्ते । यस्य प्रतापकल्पा उत्पन्ना ब्रह्मविष्णुरुद्रादयो देवाश्च दिक्पालाः कोटिश उत्पद्यमाना लीयमानाश्च भवन्ति । सा लक्ष्मीः पुनरुवाचेदम् । अहो क्षराक्षराभ्यामधिकस्य रसिकानन्दस्य स्थानं विस्तरशो ब्रूहि । स होवाच । आदौ पुरुषोत्तमस्य रसिकानन्दस्य अनादिसंसिद्धा लीलाः भवन्ति । अनादिरयं पुरुष एक एवास्ति । तदेव रूपं द्विधा विधाय समाराधनतत्परोऽभूत् । तस्मात् तां राधां रसिकानन्दां वेदविदो वदन्ति । तस्मादानन्दमयोऽयं लोकः । यत्रायं पुरुषो रमते तत्रायं रसो व्रजति । तस्माल्लोके वेदे व्रजलीला गीयते । तन्मध्ये वनानि द्वादश सन्ति । तेषां पृथक् नामानि सन्ति । तालवनं बृहद्वनं कुमुदवनं लोहवनं बकुलवनं भाण्डीरवनं महावनं गोष्ठं काम्यवनमरिष्टं च सदाशुभं दधिवनं बृन्दावनमिति । सदा आनन्दमयोऽयं लोको वेदविदो यं वदन्ति । यत्र बृन्दावनं सर्वकामसुखावहं भवति । यत्र वृक्षा आधिदैविका देवा एव भवन्ति । यत्र साधनवट-भाण्डीरवटौ । यत्र वंशीवटसंकेतवटौ । अन्ये वृक्षाः कदम्बाद्या यत्र राजन्ते । यत्रोभयतटबद्धा यमुना रत्नखचिता आस्ते । यस्यां कुमुदवनानि राजन्ते । यस्यां हंससारसयूथानि क्रीडापराणि शोभाढ्यानि भवन्ति । यस्यास्तटे कोटिशः कुञ्जाश्च निकुञ्जाश्च राजन्ते । तस्मिन् मण्डले गोवर्धनोऽयं गिरिः । रत्नमयोऽयं गिरिः राजमानो भवति । अयं गिरिः श्रीराधिकायाः रमणस्थानम् । स एवायं गिरिर्बृन्दावने सदा रसिकानन्दस्य क्रीडास्थानं भवति । तस्मिन् वने पशुपक्षिगणा आधिदैविकीं सृष्टिं प्राप्ताः सदा सानुभवा भवन्ति । आधिदैविकी या सृष्टिः सा सृष्टिस्तस्मिन् लोके

लोकतां प्राप्नोति। सा सृष्टिर्द्विभेदा भवति। एका संसिद्धा अन्या साधनसिद्धा भवति। या संसिद्धा सा तस्या निकुञ्जदेव्याः स्वस्वरूपात् समुत्पाद्या भवति। या साधनसिद्धा सा भजनमार्गे प्रपन्ना। भक्तास्तां लीलां तद्भावेन प्राप्नुवन्ति। रसलीलायामुपकरणानि रसलीलायामधिकरणे सख्यश्चातुर्यगुणयुताः ससखीसमूहा यौवनसंपत्तिपूर्णा अनेककलाकोविदाः रसभावेन पूर्णा भवन्ति। यत्र चन्दनवृक्षाणां श्रेणयो राजमाना भवन्ति। मणिविद्रुमलताग्रथिताः सुवर्णसुगन्धसंवलिता वृक्षास्तेषां पुष्पाणि संराजमानानि भवन्ति। तत्र सखीयूथानि भोज्यं हस्ते गृहीत्वा तिष्ठन्ति। तासु श्रेणिषु लतान्तरैर्ग्रथितानि द्वाराणि मणिलतायुतानि भवन्ति। मणिमण्डलं यत्र तेजोमयं मणिमण्डपेन सह भ्राजमानं भवति। लताग्रथिता मणिस्तंभाः शतशो राजमाना भवन्ति। तस्मिन् मण्टपे परितः सुवर्णभित्तिषु जटिताः मणयस्तेजोमयाः संराजमाना भवन्ति। तत्राधित्यकासु चन्द्रकान्तमणिना द्योतिता जलमणयो जलधाराश्च भवन्ति। तेन जलेन पूरिताः सुगन्धमणिपुष्करिण्यो राजमाना भवन्ति। तत्र कमलानि प्रफुल्लानि श्वेतरक्तपीतानि मनोहरशोभां ददति। तत्रोपस्थितपरागस्तद्वनं वासयति। तत्र हंसयुग्मानि कोटिशो देववाण्या निकुञ्जदेव्या यशो गायन्ति। यत्र भ्रमराः सानुभवा देववाण्या निकुञ्जदेव्या यशो गायन्ति। तत्र पुष्करिणीः परितो दश दश मन्दिराणि चतुष्कोणेषु सन्ति। रत्नमयकुड्येषु कृत्रिमाः पक्षिणः सानुभवा इव दृश्यन्ते। तत्र मध्ये मध्ये वृक्षा निकुञ्जतां प्राप्नुवन्ति। सुकोमलैः पत्रैस्तेजोमयै राजन्ते। तेषां सुगन्धेन उन्मदा भ्रमरास्तस्याः श्रीराधिकाया यशो गायन्ति। तत्र केचित् वृक्षाः पुष्पैः शाखाप्रतिशाखाः नम्रा भवन्ति। तेषु वृक्षेषु हरितपीतशुभ्रश्वेता द्योतिताः पुष्पगुच्छा भवन्ति। तेषामधःशृङ्गारवत्यादयः सख्यः पुष्पाणां शय्या रचयन्ति। तत्र लतान्तरैः

आच्छादिता वृक्षा निकुञ्जतां प्राप्नुवन्ति । तत्र मणिजटितानि रमणस्थानानि कोटिशो राजन्ते । यत्र ललिता विशाखा सुभगा कलावती मनोरमा चन्द्रकलामोहिनी गतिरतिविलासिनी मोहिनी शास्त्रगीतज्ञा गुणज्ञा भोगज्ञा भोगप्रदा कामप्रदा कामदा केलिदा सुरतकलाकोविदा संभोगसुखदा गतत्रपा निःशङ्करतिदा सुतरां सुरतान्तनिद्रिता अन्याः कोटिशः सख्यः संविराजमाना भवन्ति । दश मन्दिराणि भक्ष्यभोज्यैः संपूरितानि भवन्ति । यत्र घृतपक्कानि पक्कान्नान्यनेकशो विविधरसयुक्तानि सन्ति । तेषु मन्दिरेषु कटुतिक्तकषायमाधुर्यरसा भोगवत्या सख्या कृताः संपूर्णाः प्रतिक्षणं नूतना भवन्ति । अन्ने सिद्धान्नभोगापूपपायसपक्कान्नभागाः शाकविविध-षड्रससंवलिता अन्नपूर्णया सख्या संपादितास्तया निकुञ्जदेव्या सेव्य-माना भवन्ति । वस्त्रवत्या सख्या संपादितान्यनेकशो वस्त्राणि समयो-चितानि मनोरमाणि सन्ति । भूषणभूष्या सख्या रचितानि भूषणानि तस्या निकुञ्जदेव्याः प्रीणनाय तेषु मन्दिरेषु शय्याभोजनशृङ्गाराः कोटिशः सन्ति । तत्रान्ये शृङ्गारादिभोगा भोगवत्या कृतास्तेषु मन्दिरेषु तस्याः सुखार्थं भवन्ति । तत्र चतुःश्रेणीनि दशदशमन्दिराणि सन्ति । तेषु मन्दिरेषु शय्याभोजनशृङ्गारा अनेकधा रचिता भवन्ति । तेषु मन्दिरेषु सखीनां समूहाः पृथक् पृथक् कार्येषु संलग्ना भवन्ति । तेषां मध्ये रास-मण्डलं तेजोमयमानन्दमयं तस्याः श्रीराधिकायाः सुखार्थं बृन्दानाम्ना सख्या तया संपादितं भवति । तेषु मन्दिरेषु सखीनां एका योगमाया सखी सर्वासां सखीनां सर्वत्र एकभावं करोति । तस्मिन् स्थाने सुनादाः सख्यः सुनादेन सप्तस्वराणि श्रावयन्ति । तत्र ब्रह्माण्डे याः सिद्धयोऽणिमा-दयस्तत्र सखीरूपं विधाय तां श्रीराधिकां सेवमाना भवन्ति । सुमेरुहेमा-द्रिमलयाद्याः पर्वता अन्ये ये निधयो देवानां सन्ति ते निधयस्तस्याः

निकुञ्जदेव्याः प्रीणनाय सखीनां रूपाणि विधाय तन्मण्डलं सेवन्ते। तस्मिन्मण्डले श्रीरपि सखीरूपं विधाय आकारं गोपयन्ती सेवमाना भवति। नित्यलीलायां षड्तवोऽपि सखीनां रूपाणि विधाय सेवमाना भवन्ति। काले काले तासु निकुञ्जश्रेणिषु सञ्चारिणीनां नानाभोगान् ददति। मेघा नाना-सखीनां रूपाणि कृत्वा जलसेचनं कुर्वन्ति। कामदेवोऽपि सखीरूपं विधाय तत्स्थानं सेवमानो भवति। अहोरात्रमपि स्वस्वरूपेण अहनि निशि च सेवते तन्मण्डलम्। तदिच्छया क्वचिद्दिवा क्वचिन्निशा क्वचित्प्रातः क्वचित्सायं क्वचिन्मध्याह्नः क्वचिन्निशीथं नानाभावेन कालेकाले तन्मण्डलं सेवते। नानामणय ओषधयो वनस्पतयो वृक्षा ये पृथिव्यां सन्ति ते आधिदैविकीं सृष्टिं प्राप्ताः सेवमाना भवन्ति। सिन्धवः स्वरूपेण निधीन् गृहीत्वा तन्मण्डलं सेवमाना भवन्ति। सुमेरुहेमाद्रिमलयाद्याः पर्वताः तत्स्थानं सेवमाना भवन्ति। सखीरूपेणात्यन्तमणिज्योत्स्नाभिर्यत्र तत्र अन्ये च ब्रह्माण्डवर्तिनस्तत्स्थानं दीपयन्तो भवन्ति। पृथिव्यां यत्किञ्चिद्वस्तुमात्रं तस्याधिदैविकं रूपं तत्रैवास्ति। तस्मात्सर्वं समुत्पन्नं भवति। ब्रह्माण्डे ये देवास्ते आधिदैविकेन रूपेण तत्स्थानं सेवमाना भवन्ति। तस्मात्ते सर्वे समुत्पन्ना ब्रह्माण्डे भवन्ति। वेदाः स्वऋचाभिस्तस्मिंस्थाने तस्या निकुञ्ज-देव्या यशो गायन्ति। कामदुघाः स्वयूथेनाधिदैविकं रूपं विधाय संसेवन्ते। दधिदुग्धतक्रनवनीतघृताद्यान् रसान् गृहीत्वा सेवमाना भवन्ति। तत्र रासमण्डलमेतैर्गुणैरन्यैर्विविधैः संपूरितं रसिकानन्देन सह श्रीराधिकां सेवमानं भवति। यस्य रासमण्डलस्य परितः स्थानानि द्वादश संशोभमानानि भवन्ति। एकं मज्जनस्थानम्। यत्रोष्णोदकपुष्करिण्यो जलैः संपूर्णा भवन्ति तत्र मज्जनवत्यादयः सख्यो मज्जनार्थं सेवमाना भवन्ति। तत्रान्याः पुष्करिण्यः शीतोदकपूर्णा भवन्ति। तत्र निकुञ्जानां श्रेणयो रत्नालवालैश्चन्द्रोद्भवैर्जलैः

सेव्यमाना भवन्ति । तत्रान्याः पुष्करिण्यः शीतोदकपूर्णा भवन्ति । चन्द्रकान्तमणेरुत्पन्नैर्जलैः सेव्यमाना मुक्तालता मुक्तागुच्छैः संपूरिता भवन्ति । मणिलतासु ज्योत्स्नायां प्रतिबिम्बिताः पक्षिणः परस्परं दृष्टिबन्धेन नृत्यं कुर्वन्ति । द्वितीयं शृङ्गारस्थानम् । यत्र शृङ्गारवत्या सख्या अधिश्रितम् । तस्मिन् स्थाने अधिश्रिता रङ्गवत्यादयः सख्यो मोदन्ते । तृतीयं मानस्थानम् । यत्र मानवत्यादयः सख्यो मानं रचयन्ति । यस्मिन् मन्दारवृक्षाः सुवर्णलताः सुगन्धा ग्रथिता भवन्ति । तेषु वृक्षेषु पुष्पाणि सुगन्धसंवलितानि भवन्ति । लतान्तरैराच्छादितं स्थानं सुगन्धसंवलितं मनोरमं तेजसा दीप्यमानं भवति । हरितपीतच्छायाभिः संयुतं तेजसा दीप्यमानं भवति । मन्दारनिकुञ्जाः श्रीराधिकाया अधिष्ठानम् । यमुनायास्तीरे धीरसमीरे एकवटश्चकास्ति । तस्य वटस्य परितो निकुञ्जानां श्रेणयो राजमाना भवन्ति । द्वादश निकुञ्जाः सन्ति । सखीनां सञ्चाराः सूक्ष्मतरा लतान्तरैर्ग्रथिता भवन्ति । तत्र ललितादयः सख्यो रसिकानन्देन सह वचनप्रतिवचनोत्तरं ददति । कुञ्जान्तरश्रेणिषु सखीनां मध्यसञ्चारोऽस्ति । रसिकानन्दः पुरुषोत्तमः स्वयमेव प्रणिपातं करोति । स्वामिनी मनोरमा निकुञ्जे स्वयमेवातिमानातुरतया मनोभावापन्ना भवति । स्वभावसंसिद्धाः सख्यो भावापन्ना भवन्ति । अतिरसलंपटो रसिकानन्दः सर्वासां सखीनां प्रणिपातं करोति । अत्यन्तमग्नाः सख्यस्तत्सुखं निरीक्ष्य सुरतानन्दे मग्ना भवन्ति । चतुर्थं भोगस्थानम् । यत्र सुभोज्या सख्या सेवितम् । यत्र खाद्यपेयलेह्यचोष्यरसा अनेकस्वादुयुताः भवन्ति । अन्नपूर्णया सख्या पाचितानन्नरसानत्युष्णान् सद्यःपाचितानिव श्रीराधिकया सह रसिकानन्दः सेवते । अगुरुरसांस्तैलरसान् पुष्परसान् नानासुगन्धरसान् श्रीराधिकया सह रसिकानन्दः संसेवमानो भवति । अन्ये ताम्बूलादयो लवङ्गकर्पूरादय एलाजातीफलपूगफलनाळिके-

रपनससहकारभद्राक्षेक्षुरसैः शर्करादयः पिष्टरसपूर्णतया निकुञ्जदेव्या संसेव्यन्ते। ललिता रङ्गवती भोगवती प्रेमोत्कण्ठा सुरतानन्दा सुरतरसकोविदा चेति सख्यः श्रीराधिकया दत्तं प्रसादं भुञ्जते। तत्रैकं रसिकानन्दश्रृङ्गारस्थानम्। यत्र पारिजातकवृक्षाः सदा पुष्पैः प्रफुल्लिता नम्रा भवन्ति। तत्र सुगन्धसुवर्णलताभिः संवलितं भवति। सुगन्धमुक्तालताभिः पारिजातकवृक्षा ग्रथितनिकुञ्जतां प्राप्नुवन्ति। तत्र एको भ्रमरो देववाण्या चातुर्येण मानस्थाने राधिकां प्रति दूतत्वं करोति। स भ्रमरो रसिकानन्दं प्रति प्रियो भवति। स भ्रमरः स्वचातुर्येण श्रीराधिकाया मानापकरणं करोति। स भ्रमरोऽत्यन्तमनोहरचातुर्यासीमगुणज्ञः स्वभावसंसिद्धः साधनसिद्धो भवति। स भ्रमरो रसिकानन्दस्य दूतो भवति। निरन्तरं श्रीराधिकायाः मानलीलायां सहकारी भवति। तस्माद्रसिकानन्दस्यातितरां वल्लभो भवति। तेऽत्र भ्रमरा मनोहरशब्देन सङ्गीतरसं गमयन्ति। तत्रैकः शुकः साधनसिद्धः श्रीराधिकाया मानस्थाने मन्दारनिकुञ्जे निवसति। तेन शुकेन भ्रमरचातुर्यं निरीक्ष्य तस्या निकुञ्जदेव्याः कृपां निरीक्ष्य अत्याश्चर्यं प्रपेदे। स भ्रमरस्तेन शुकेन पृष्टः अहो अले त्वं कः? केन साधनेन त्वयेदं रूपं प्राप्तम्? कथं श्रीरसिकानन्दस्य श्रीराधिकाया दूतत्वं प्राप्तः? अलिरुवाच। अहो शुक त्वं पूर्वं कोऽसि? केन साधनेनेदं लीलास्थानं प्राप्तम्? शुक उवाच। अहं पूर्वं ब्राह्मणोऽस्मि। विष्णोरुपासककुलोत्पन्न एकात्मभावेन मम मनो हरिं भजमानं भवति। एकस्मिन् वासरेऽस्मि ब्रह्मलोकं गतः। तत्रानन्यमार्गीया भक्ताः मया दृष्टाः। रसमार्गीया भक्ता मया दृष्टाः। तेषां सङ्गमेन मया निकुञ्जलीला अनुभूताः। तत्रारिष्टे श्रीराधाकृष्णपुष्करिण्युद्भवां मृत्तिकां भक्षयता तत्र निरन्तरक्रीडास्थलं मया श्रुतं पूर्वम्। अस्या मृत्तिकायाः माहात्म्यं महालीलायाः प्राप्तेः कारणम्। भ्रमरो वदति। त्वया किं

श्रुतमस्या माहात्म्यम् ? शुक उवाच । श्रीरसिकानन्देन वन्दितम् । श्रीराधिकायाः प्रेमवत्यादयः सख्यस्तस्मात्स्थानात्समुत्पन्नाः । स्वयमपि तस्मिंस्थले रासलीलायाः प्रारम्भः कृतः । तस्मिन् काले श्रीरसिकानन्देन स्वयमेव वन्दितं तपसा ध्यानेनाधिकृतम् । तस्माल्लोके वेदे वन्दितमिदं स्थानम् । अस्य स्थानस्य मृत्तिका मया अनुभूता । तेनेदं स्थानं प्राप्तम् । इदं शरीरं तया मृत्तिकया पुष्टं साधनसिद्धं जातम् । अहो भ्रमर त्वं कथय यदि रुचिः स्यात् । अलिरुवाच । अहमपि पूर्वं गौडदेशोद्भवकायस्थः । वैष्णवोऽहं निरन्तरं प्रेमाधिक्येन रसिकानन्दं सेवमानोऽभवम् । गुर्वनुग्रहेण साधूनां रसमार्गीयाणां सङ्गेन मया रसमार्गरूपा कथा श्रुता । तेषां साधूनां सङ्गो मयानुभूतः । तत्कथाद्वारेण मम हृदि प्रविष्टो रसः । अहं रसलीलायां प्रपन्नोऽभवम् । रसलीलायां प्रवृत्तिरन्यधर्मविस्मारणपूर्विका जाता । तस्याः सेवाकथायां प्रत्ययो बभूव । ये रसमार्गीया भक्तास्तेषां सम्बन्धालापकीर्तनगोष्ठीमार्गानुभवान्मनो भावमापन्नं प्रेमाधिक्यं सुखसंपत्तिः इष्टतमवस्तुपात्रदेहादि यत्किञ्चित् समर्पयेदिति । इत्यानुभविकेन मार्गेण भक्तैस्सह व्रजलोके प्राप्तोऽहं सर्वसङ्गरिक्तोऽभवम् । तस्मिन् व्रजमण्डले निवसन्नहं प्रतिकक्षं प्रतिकुञ्जं तां लीलां चिन्तयमानस्तद्भावापन्नो भवामि । तद्भक्तैः सह देहादिसुखं ततो ग्राह्यं ततो देयमिति मनसा वाचा तैः सह कालोऽज्ञातकालविषयोऽयते । एवं मम धर्मः सिद्धो भवति । सिद्धधर्मेण शरीरं साधनसिद्धं बभूव । तदा ममाभिलाषो मनस एवं भूतो भवति । येनाभिलाषेणाहं भ्रमररूपेण तस्या निकुञ्जदेव्या यशः सङ्गायामि । पश्चात्प्रसन्नेन रसिकानन्देन तया देव्या मनसेप्सितं रूपं दत्तम् । इदं मान्यस्थानं दत्तम् । अहो शुक अहमस्मिन् स्थाने श्रीराधिकाया वने क्रीडापरो भवेयमिति । तद्बृन्दावनं सर्वकालसुखसमृद्धिसंपूर्णं श्रीराधिकया

सदा सेवितं रसिकानन्देन सह । तस्मिन् वायवः शीतमन्दसुरभिभावेन सेवमानाः सन्ति । तत्र स्थाने अमृतोदा पुष्करिणी आस्ते । तासु पुष्करिणीषु कन्दुकलीलया श्रान्ताः सख्यो मज्जनं कुर्वन्ति । अतितरां सितजलकल्लोलैर्मज्जनक्रियायां तस्मिन्नत्यन्तरसमग्नानि हंसयूथानि राजन्ते । उपरि पक्षिणां पङ्क्तिः कलकण्ठैः सेव्यमाना अभ्येति । अतितरामानन्दमग्नाः सखीनां गणा गुणगणान् सङ्गायमाना भवन्ति । तत्रोपर्येकं शृङ्गारस्थलं मन्दिरमस्ति । एकं भक्ष्यभोज्यस्थलमस्ति । एकं सखीसङ्गमोपवेशताम्बूलसुगन्धरससेवनायैवेति । एकं शय्यागृहं सुगन्धमणिमयभोगान्वितम् । आधिदैविकेन रूपेण कामः सखीरूपं विधाय स्वयमेव सेवमान आस्ते । रतिसंभोगातिकलाकौतुकानि नेत्रहावभावकटाक्षसंवलितकामरसभावभेदानि संयोक्ष्यमाणकामरससुखसंपत्तियोग्यतां मनोभवः संयोक्ष्यमाणसुखं च पिबति । नित्यं नित्यनूत्नभावभेदशृङ्गारं नूत्नम् । रूपं नूत्नम् । क्रीडा नूत्ना । वचनं नूत्नम् । प्रतिक्षणं प्रतिक्षणं नूत्नमेव सुखं सखीनाम् । नूत्नः सर्वो भाव आस्ते । एकादशश्रेणयः सदा वसन्तस्थानम् । किंशुकवकुलाम्रवृक्षाः शोभायमानलवङ्गलतापरिशीलिता अत्यन्तं निगूढगुच्छपुष्पपरागा भवन्ति । उन्मदकोकिलभ्रमरसूक्ष्मस्वरसङ्गीयमानानि सखीनां यूथानि केशबन्धनवस्त्राण्यतिरञ्जितानि शोभामातन्वन्ति । कलगीतानि वसन्तोद्भवानि सङ्गीयन्ते । तस्मिन् स्थाने सदा कौतुकाविष्टा गोप्यः केसरकर्पूरमृगमदागुरुरसान् सेचयन्त्यो भवन्ति । परस्परं हस्तैः कनकखचितजटिताः सर्वाः कन्या मृगमदकर्पूररसं सिञ्चन्त्य आपद्यन्ते । अभिलिम्पन्त्यः परिमृजन्त्यः अञ्जन्त्यो लोचने काश्चित् काश्चित् गानं गायन्त्यो गोप्यः । तां व्रजेश्वरीं व्रजनायिकां ताः सख्यो वेषशृङ्गारशोभासंराजितामशोभयन्त । तस्मिन् वसन्तऋतुः सखीरूपं विधाय तां व्रजेश्वरीमुपसेवमान आस्ते । यत्र

वसन्तस्तत्रैव कामावेशो जन्यते । स कामः सखीरूपं विधायोपसेवमानः आस्ते । रतिभावे सा व्रजेश्वरी तां देवीमुपसेवमानातिगुणगणनया क्वचित्पुष्पावेशेन वसन्तं सुखमुपसेवते । क्वचित्फलावेशेन वसन्त उपसेवते । क्वचित्कोमलाङ्कुरावेशेन वसन्त उपसेवमान आस्ते । क्वचित्पक्षिणां रवेण उपसेव्यमान आसेवामातनोत् । क्वचिल्लतान्तरैराविर्भावेनोन्मदभ्रमर-पिकशुका गीतगानं कुर्वाणा आपद्यन्ते । रसिकानन्दस्तया निकुञ्जदेव्या सह वसन्तोद्भवैः पत्राङ्कुरैः शय्यां विधाय वसन्तसुखान्यनुभवन्नास्ते । विविधलतान्तरेषु पुष्पगुच्छसंवलिताः सख्यः शय्यां विविधप्रकारां प्रतिकुञ्जं रचयन्ति । उपकरणकामकलया सुरतकेलिञ्च उपतापसुखमन्वभूत् । आसे-दिवान् रतिरससुरतानन्दो विविधकलारूपेण प्रतिपद्यमानो भवति । हाव-भावकेलिकौतुकानि भवन्ति । वसन्तः कामेन सह रसलीलारतिं विस्तार-यति । तत्रानेकलता वसन्तोद्भवैः कुसुमैर्वनलीलायां प्रफुल्लिता नम्राः भवन्ति । नानाकौतुकाविष्टाः प्रेमवत्यादयः सख्य अतिभावापन्ना बभूवुः । तस्यां लीलायां चतस्रः सख्यः श्रीराधिकां संसेवमाना भवन्ति । तस्य वसन्तस्य सुखं केनोपवर्ण्यते । चतस्रः सख्यः कथिताः । तासां नामानि शृणुत । रङ्गवती गुणवती गानवती मनोरमा । एताः सख्यस्तस्मिन् वसन्तस्थाने सेवमाना भवन्ति । तद्वसन्तस्थानं श्रीराधिकाया अतितरां वल्लभं भवति । तत्स्थानं श्रीराधिकया रसिकानन्देन सह सेव्यमानं भवति । ताः सख्यस्तस्मिन् स्थाने प्रेम्णो भावं विस्तारयन्ति । रङ्गवती रसरङ्गलीलां विस्तारयति । नानाभावेन वसन्तरङ्गभोगान् विस्तारयति । एवं नानाभाव-भेदं सुरतानन्दं विस्तारयति । गुणवती रागरङ्गसुगन्धरसवीणावेणुप्रणाळिकया सर्वासां सखीनां कामलीलायाः प्रबोधं जनयति । गानवती गीतगानगुणेन श्रीरसिकानन्दस्य श्रीराधिकां प्रीणयति । मनोरमा मनोरमं भावमापन्ना

भवति । ताः सख्यो भावापन्नाः साधनसिद्धा भवन्ति । ता ऊचुः । तास साधनं किं येन साधनेन वसन्तलीलायाः स्थानं प्राप्तम् । अहो भक्तानां रसमार्गीयाणां पुण्या रसमार्गिणी कथा निःश्रेयसाय भवति । येषां स्नेहमार्ग-धर्मैकर्मरहितकेवलमनसा वृत्तिः श्रीराधिकायां गतिरतिभावो भवेत् ते एव तां लीलां प्राप्नुवन्ति । तस्मात्ताभिर्यत्साधनं कृतं तत्सर्वं कथय । अहो ताः सख्यः वैवस्वतमनोः पुत्र्य आसन् । ताः कन्याः पितुर्गृहे निरन्तरं क्रीडमानाः बभूवुः । एकरूपा एकस्थिता एकप्राणा एकभावापन्ना बभूवुः । अतिगुण-गणनारताः पितृवत्सला भवन्ति । तस्य राज्ञो गृहे एकदा नारदः समागतः ।

ताः कन्या नारदं दृष्ट्वा प्रणिपातपुरस्सराः ।
तद्रूपमद्भुतं दृष्टं जटामकुटमण्डितम् ॥
वस्त्रालंकरणैर्युक्तं वीणावादनतत्परम् ।
कृताञ्जलिपुटाः सर्वाः स्थितास्तं चोपतस्थिरे ॥
पप्रच्छुस्तं तथाभूतं विनयान्वयकोविदाः ।
भगवन् सर्वभूतानां हिताय भुवनेऽटसि ॥
भवादृशा महाभागा लोकानां च हिते रताः ।
शरणागतदीनानां कृपां कुर्वन्ति साधवः ॥

इति संप्रार्थितो नारदः प्रसन्नो बभूव । भोः पुत्र्यः को भवतीनां मनोऽभिलाषः ? तत्सर्वं विस्तरशो ब्रूत । नारदेनैवं चोदिताः कन्याः पुनः प्रोचुः । पितुर्गृहे भावापन्नैर्भक्तैः सङ्गीयमानोऽयं व्रजलोकः । त्वं विस्तरशो ब्रूहि तम् । श्रुतमात्रोऽयं रसलीलां ददाति । तस्मात्तत्स्थानं रसिकानन्देन श्रीराधिकया सह सेवितं वर्णय । नो मनोऽभिलाषो भवति । यदि कृपा स्यात्तर्हि तल्लोकविस्तारं वद । पुनर्नारद उवाचेदं तासां मनोऽभिलाषं ज्ञात्वा । शृणुत सख्यो रहस्यम् । न कदाचिद्वचनीयम् । तत्स्थानं कोटिसूर्यप्रतीकाशं

तेजोमयं यत् निर्गुणं ब्रह्म पुराविदो वदन्ति। यस्मात्प्रजाः समुत्पन्नाः। ब्रह्मविष्णुरुद्रादयो यस्मादुत्पद्यन्ते लीयन्ते। आत्मविदो ज्ञानिन उत्पद्यन्ते लीयन्ते रसमार्गिणो भक्ता यं स्थानं प्राप्नुवन्ति। कन्या ऊचुः। ये रसमार्गीयाः भक्तास्तेषां लक्षणानि वद। नारद उवाचेदम्। ये रसिकानन्दोपासकास्ते सर्वात्मभावेन भजनं कुर्वते। भजनानन्दोपासकानां न वर्णो नाश्रमो न देशो न कालोऽस्ति। यो धर्माधर्मौ परित्यज्य श्रीरसिकानन्दं सेवमानो भवति सः तां लीलां प्राप्नोति। येषां मनसि निश्चयस्तेषां प्रीतिरुत्पद्यते। य एवं रसमार्गे प्रपन्ना न तेषां धर्माधर्मौ बाधमानौ भवतः। विषयैर्बाध्यमानोऽपि न बाध्यते। येषामहोरात्रं सेवाकथायां नित्यमासक्तिस्तेषां भजनानन्दो भवति। ये तस्मिन् मार्गे प्रपन्ना भक्तास्तेषां देयं ततो ग्राह्यं यत्किञ्चिद्वस्तुमात्रम्। भक्तानां भक्तैस्सह कार्यं नान्यैः। भक्तानां भक्त एव ज्ञातिः। कुलवर्णधर्मादि सर्वं दैवतं यत्किञ्चिन्मात्रम्। रसगाः सेवकाः तेषां संबन्धो नान्यैः। अहो वेदैः पुराणैः सिद्धान्तैः शास्त्रैर्नानावादैः नानाकर्मव्रतोपवासादिभिर्यमैर्नियमैश्च नानाऋषिकृतस्मृतिसिद्धान्तैरेकादश्युपवासादिव्रतनियमैस्तुलापुरुषदानादिभिर्नानादर्शनसिद्धान्तविचारैर्वर्णाश्रमोचितधर्मैः पितृश्राद्धादिभिः सूर्यचन्द्रोपरागकालोचितैर्ग्रहनक्षत्रताराज्योतिश्शास्त्रनिश्चयेन भ्रान्तचित्तैर्विधिनिषेधस्मृत्योक्तैर्धर्मैर्भ्रान्ताः सन्ध्योपासनकालसंस्कारैर्बलिवैश्वदेवबलिदानोपसर्पणैर्वेदमार्गादिभिर्नियमैरेतैश्चान्यैर्धर्मैर्विभ्रान्तास्तेषां रसिकानन्दः पुरुषोत्तमो न रमते। अहो सख्यः कर्मविभ्रान्तास्तां लीलां कदाचिन्न जानन्ति। साग्निका अग्निव्रतधारकाः कर्मजडास्तैः सह कदाचित्तद्धर्मालापनं न कुर्यात्। अतः किं बहुनोक्तेन। ब्राह्मणा ये भक्तिमार्गं न विदन्ति तेषां संभाषणं स्पर्शं न कुर्यात्। कदाचिन्नालपेत्।

ता ऊचुः—

भगवन् सर्वभूतानां हिताय भुवनेऽटसि ।
शरणागतदीनानां कृपां कुर्वन्ति साधवः ॥

अतः प्रार्थयामो महालीलाया दर्शनं यत्र रसिकानन्दपुरुषोत्तमो रमते । एवं प्रार्थितो भगवान् नारदस्तासामत्यानन्दमयलोकं दर्शयामास । महामन्त्रविद्यया कृतसंस्कारास्ताः सख्यस्तस्यां लीलायां भावापन्ना बभूवुः । ता ऊचुः । नारदेनोपदिष्टां विद्यां कथय यया विद्यया श्रीरसिकानन्दस्य श्रीराधिकया सह क्रीडास्थानं द्रक्ष्यामः । स होवाच । शृणुत सख्यः । यस्यां विद्यायां सद्यः समभ्यसनेन महावनविहारस्पर्शनं भवति । कृपासमभ्यसनात् रमणानन्दलोकस्पर्शनं भवेत् । क्लीं सकलकामदात्रीं भ्रूं भोगदात्रीं ह्रीं रसिकानन्दविलासदात्रीं ह्रीं रतिकेलिकलाकोविदां बां बृन्दावनशशिनीं स्तुं सुरतानन्दरूपां श्रीं मनोहारिणीं नृं निकुञ्जकेलिकौतुकाविष्टदेहां भ्रूं भोगात्मिकां स्रां सखीनां सुखदायिनीं ह्रीं रासकेलिकलात्मिकां ध्यायेत् । क्लीं नमः । इमां विद्यां भोगात्मिकां नारदेन दत्तां ताः कन्या जगृहुः । रसिकानन्दप्राप्त्यर्थे गृहीत्वा तां विद्यामभ्यसेत् । तासां पितुर्गृहे एकं वनं नानापुष्पवृक्षैः सुशोभाढ्यम् । तत्र पुष्पलतानां निकुञ्जाः सुशोभाढ्याः संराजमाना मनोहराः सन्ति । तत्र ताः कन्या इमां विद्यामभ्यस्तवत्यः बृन्दावनबुद्ध्या । अहोरात्रं तद्बुद्ध्यस्तदालापास्तद्विचेष्टास्तदात्मिकाः तस्यां लीलायां मग्ना नान्यं देहविषयं विदुः । क्वचिद्रुदन्त्यस्तच्चिन्तया क्वचिन्नृत्यन्त्यः क्वचिदलौकिकाः कथा वदन्त्यः क्वचिद्भक्तैस्सह अनुशीलयन्त्यः क्वचित्तस्मिन् वने बृन्दावनशोभां विधाय तद्भक्तैः सह राधारसिकलीलयोरनुभवं कुर्वन्ति । एकदा तासामाश्विन्यां पौर्णमास्यां महालीलाया महोत्सवकाले निकुञ्जदेव्या दर्शनं प्रदत्तम् । अशरीरया वाण्या वरो दत्तः । भवतीनां मनोऽभिलाषो मया ज्ञातः । यदि मम लोकदर्शना-

काङ्क्षा स्यात्। बृन्दावने गोवर्धनाद्रिशिरसि पुष्करिणीं विधाय तत्र मम ध्यानापन्नैर्भूयताम्। ममानुग्रहेण मम लीलावलोको भविष्यतीति ता वरेण छन्दयित्वा अन्तर्दधे। ताः कन्यास्तत्र गत्वा तथाकुर्वन्। तस्मिन् गोवर्धने अप्सरःपुष्करिण्यां ताः सर्वाः पूर्वोक्तया विधया श्रीराधिकाया भजनं चक्रुः। इत्थं भजनमापन्नाः कन्या मासेनैकेन तं लोकमपश्यन्। बृन्दावनं श्रीमत् सर्वकालसुखावहम्। यत्र षड्ऋतवः आधिदैविकेन रूपेण सेवमाना भवन्ति। यत्र रत्नजटिला भूमयो मणिज्योत्स्नाभिर्दीप्यमाना भवन्ति। यत्र फलैः पुष्पैः पत्रैर्मणीनां स्तंभाः शतशो राजमाना भवन्ति। यत्र मणीनां लता भ्राजमाना विद्रुमलताभिः ग्रथिता भवन्ति। सुवर्णलताग्रथिता मुक्तालता मुक्तागुच्छैः पूर्यमाणाः भवन्ति। यत्र सखीनां यूथानि परस्परं शृङ्गाररसेन क्रीडमानानि भवन्ति। यत्र फलैः पुष्पैः सुकोमलैः पत्रैर्विराजमाना वृक्षा लताभिः संकीर्णा भवन्ति। यत्र मध्यश्रेणीषु सखीनां चारा अतिसुशोभमाना भवन्ति। यत्र वकुलवृक्षाणां वनानि कुत्रचित्संराजमानानि भवन्ति। कुत्रचिन्मन्दारवृक्षाः संराजन्ते। अम्लानपुष्पैर्नारङ्गैः सुशोभाढ्या भवन्ति। कुत्रचित्पारिजातक-वनानि सुगन्धसंवलितानि सन्ति। तत्र वनेषून्मदाः कोकिला गायमानाः भवन्ति। कुत्रचिन्मन्दारवृक्षाः पुष्पपरागैश्छिता वस्त्रैश्छादिता इवासन्। तासु वृक्षाणां श्रेणीषु ताः कन्या एकं महास्थानं ददृशुः। पञ्चविंशद्योजनायतं परितो वाप्यो दशदशचतुष्कोणेषु नानारसैः संपूर्यमाणा भवन्ति। दश वायवः केसरकर्पूरमृगमदरसैः संपूर्यमाणा भवन्ति। दश वायवोऽगुरुरस-संपूर्यमाणा भवन्ति। दश वायवः सुगन्धपयसा संपूर्णा भवन्ति। दश वायव उष्णोदकेनातिनिर्मलेन सुगन्धेन संपूर्यमाणा भवन्ति। तत्र दश वायवो मृज्जलेन सुशीतलेन संपूर्यमाणा भवन्ति। तत्र मध्यमण्डले

पञ्चविंशद्योजनायते सुशोभाढ्ये मणिज्योत्स्नाभिः संवेष्टिते सखीनां यूथानि यत्र क्रीडां कुर्वन्ति तत्र परितो निकुञ्जानां श्रेणयः सूक्ष्मलतान्तरैः संवेष्टिता भवन्ति । तत्र मध्ये एकं रत्नासनं सुखसंपूरितं सुरतानन्दस्थानं भवति । यत्र प्रेमवती स्नेहवती गुणवती उत्कण्ठावती उत्साहवती भोगवती कलावती गानवती मनोरमा सुरतानन्दा सुखसंवलिता निद्रा-संवलिता निःशङ्का लज्जागतत्रपा सुभगा शृङ्गारवती संभोगवतीं भावशुद्धा एता अन्याश्च सख्यस्तत्स्थानं सेवमाना भवन्ति । निरन्तरं रासकेलिकौतुकेन नृत्यपरा सुगन्धकलावती संगीतज्ञा अङ्गसंवलिता रागज्ञा गुणज्ञा एताः अन्याश्च सिद्धान्तस्थानं सेवमाना भवन्ति । तत्र विहङ्गमानां पङ्क्तयो नानारूपैः कलशब्दैः सङ्गायन्त्यो भवन्ति । क्वचित् सखीमण्डले ताः रासक्रीडां कुर्वन्ति । क्वचित् कुञ्जान्तरे पुष्पपल्लवैः रचितशय्यायां क्रीडां कुर्वन्ति । क्वचिन्नानापुष्पैरङ्गप्रत्यङ्गेषु परस्परं शृङ्गारं कुर्वन्ति । क्वचित् पुष्पमालाभिरङ्गप्रत्यङ्गैः शृङ्गाररसं कुर्वन्ति । क्वचित्कुञ्जान्तरे शृङ्गाररसं कृत्वा सुखं संसेवमाना भवन्ति । ताः कन्याः श्रीराधिकारसिकं दृष्ट्वा अत्यन्तमेव मुमुहुः स्तुतिं चक्रुः । अतितरां नम्राः कन्याः प्रश्रयावनताः नमश्चक्रुः विनयभावापन्ना बभूवुः । तया श्रीराधिकया स्वस्वरूपं प्रदत्तम् । तासां महालीलायां योग्यता प्रदत्ता । अहो सत्सङ्गमाहात्म्यं केन वर्ण्यते । दर्शनात्स्पर्शनादालापाद्भोजनाच्छयनादासनाद्भोजनोच्छिष्टकृपाप्रसादात् रसि-कानन्देन सहितायाः श्रीराधिकायाः कृपा भवति । अहो रसिका-नन्दोपासकानां लक्षणानि वद येनाहं सतां सङ्गे विचरामि । अहो श्रुतमहालीलाः ! ये निरन्तरं सेवमाना भक्ता वेदमार्गकर्मातिरिक्ता भवन्ति ते रसिकानन्दमार्गमाचार्योक्तमधीत्य यो बृन्दावनोक्तमार्गः सखीभिरुपासितः तासां मार्गे प्रपन्ना भवन्ति । अहो नानास्मृत्युक्तान् धर्मान् ये कुर्वन्ति

त इह संसारे विचरन्ति। ये पितॄन् यजन्ति ते पितृलोकं प्राप्नुवन्ति। देवान् ये यज्ञकर्मणा यजन्ति ते देवलोकं स्वकर्मोपार्जितं यान्ति। ये ब्राह्मणाः ब्रह्मवर्चसमुपासमानास्ते ब्रह्मलोकं प्राप्नुवन्ति। गायत्रीं य उपासते ते सूर्यमण्डले लयं यान्ति। येषां मध्ये शैवाः शिवोपासकास्तेषां प्रमादेनापि संभाषणं न कुर्यात्। ये कैवल्यधर्मरतास्तेषां संभाषणं स्पर्शनं च कृतं चेत्तर्हि सवासाः जलमाविशेत्। अहो रुद्रोपासका ये तमोधर्मरतास्तेषां संभाषणं स्पर्शनं न कृतं चेत्तर्हि सवासा जलमाविशेत्। यक्षोपासकाः सदा त्याज्याः। गणपतिदुर्गायाः भजनभेदा अनेकशः सन्ति। तान् ये भजन्ति तेषां संभाषणं स्पर्शनं च कृतं चेत्तर्हि सवासा जलमाविशेद्रसिकानन्दोपासकः। कर्मकाण्डोपासका रसिकानन्दमार्गं न जानन्ति। जैनबौद्धचार्वाकमीमांसकवेदान्तन्यायपातञ्जलमतान्तराणि तेषां सिद्धान्तं कुर्वन्ति। ये भ्रान्ता भजनमार्गमविदुषः पण्डितमानिनस्तेषां संभाषणं स्पर्शनं च न कुर्यात्। विष्णुभजनरता नारायणोपासकाः श्रवणकीर्तनस्मरणवन्दनरता मत्स्यकच्छपवराहनृसिंहवामनपरशुरामरामोपासका वैष्णवास्तेऽपि तं लोकं न जानन्ति। तस्मात्तेषां सङ्गस्त्याज्यः। विष्णुभक्ताः ज्ञानवैराग्ययुक्ता अनन्याश्रययुक्तास्तेऽपि तं मार्गं न जानन्ति। सूक्ष्मतरमार्गो ब्रह्मादिभिर्नारदादिभिः रुद्रादिभिः सृष्टिकर्तृभिः प्रजापतिभिरप्यगम्यः। तस्मात्तया श्रीराधिकयानुगृहीतास्तं रसं जानन्ति नान्ये। यदा यस्य देवतान्तरभजनं भवति वैष्णवेषु विद्वेषो भवति तान् रसिकानन्दपुरुषोत्तमो न स्पृशेत्। अहो रसिकानन्दोपासकानां क्रियाः श्रृणुत। ये मनसि भजने सुनिश्चयास्तल्लीलोपासकाः सत्कथाक्षिप्तमानसाः तल्लीलोपासकानां सङ्गेन कथाकीर्तनासक्तास्ते तत्सेवातद्भावेन शोकमोहभयोद्वेगरहिता अमत्सरा अहंभावरहिता ज्ञानवैराग्यसहिता वृन्दावनलीलोपासका भवन्ति। रसलीलायां निमग्नानां तेषां तद्भजनमेव

साधनं तद्भजनमेव ज्ञानं तद्भक्ता एव ज्ञातिः तद्भक्ता एव कुलं एवं रसलीलाप्रपन्नो भवति । गृहादिधर्मान् त्यक्त्वा वर्णाश्रमधर्मान् त्यक्त्वा जातिकुलधर्मान् त्यक्त्वा मोक्षधर्मान त्यक्त्वा सन्न्यासधर्मान् त्यक्त्वा देशकालकर्मस्वभावसंसिद्धान् धर्मान् त्यक्त्वा रसलीलामभ्यसेत् । रसलीलायाः सेवावधिं कथय येन विधिना महालीलायाः प्राप्तिर्भवति । तद्भक्तानां दर्शनं भवेत् । स होवाच । रसलीलाया भजनं त्रिविधात्मकम् । एकं ध्यानमयम् । प्रतिकुञ्जं प्रतिवृक्षं ध्यानापन्नो भवेत् । रात्रौ दिवा रसिकानन्दं श्रीराधिकया सह हृदि चिन्तयमानः सखीभावेन भावापन्नो भवेत् । तदनुभावेन पुल्लिङ्गं विधूय महालीलायां लयलीयमानो भवेत् । द्वितीयं भजनप्रकारं शृणुत । येन भजनेन रसिकानन्दः श्रीराधिकया सह दृष्टिपथमापद्येत योऽश्ममयं वा धातुमयं वा रसिकानन्दस्वरूपं श्रीराधिकया युतं विधाय शय्याभोजनश्रृङ्गारै राजोपचारैः स्नेहभावेन भजनं करोति अहोरात्रं तद्भावेनापन्नो भजनं करोति स तां लीलां प्राप्नोति । ये रसिकानन्दोपासका भक्तास्तेषां सेवायां व्रतधारणम् । अहो भक्तानां सेवास्तु दुर्लभतराः । येषां हृदि निश्चय आपन्नस्तेषां श्रीरसिकानन्दः श्रीराधिकया सह प्रसन्नो भवति । भक्तानां सेवास्तु अत्यन्तदुर्लभा भवन्ति । ये निष्कर्ममार्गिणो भक्तिमार्गं केवलमापन्नास्ते सेव्याः पूज्या एव भवन्ति । ये अन्यधर्मं त्यक्त्वा रसिकानन्दसेवकास्ते भक्ता नान्ये । भक्ताः सुसेवमाना भवन्ति । तस्मात्सुसेवमाना भक्ताः कृपां कुर्वन्ति । साधूनां समचित्तानां कृपया महालीलाया दर्शनं भवति । तस्मात् रसिकानन्दं हृदि स्थाप्य साधूनां सङ्गेन बृन्दावनरहस्यमार्गानुसारेण सुसेवमानो भवति । अतिरसमग्ना भक्ता नान्यं विदन्ति । अहो पुनर्महालीलाया वर्णनं श्रुत्वा वयं न तृप्यामः । शृणुत पुत्राः । वनविहारलीला पूर्वं नारायणेन लक्ष्म्यग्रे

कथिता तदा श्रुतं तदहं वर्णयामि । अहो महालीलायाः स्थानं नारायणेनापि न दृष्टम् । यत्राष्टौ मणयः संराजमाना भवन्ति । चन्द्रकान्तमणिनामृतेन पुष्पपल्लविता वृक्षाः सेव्यमाना भवन्ति । लतानामालवालानि सौवर्णानि दीप्यमानानि जलैः पूर्यमाणानि भवन्ति । तत्र सूर्यकान्तमणिना प्रदीप्य-माना वृक्षलताः शोभायमाना भवन्ति । मणिलताभिर्ग्रथितानि मन्दिराणि तेजोमयानि संराजन्ते । प्रसारितलता वृक्षैर्ग्रथिता निकुञ्जतां प्राप्नुवन्ति । तेषु निकुञ्जेषु लतानां नानारङ्गाः संदीप्यन्ते । तत्र श्रृङ्गारवत्यादयः सख्यः शय्योपकरणानि रचयन्ति । सुशोभायमानाः पक्षिणः कलशब्देन श्रीराधि-काथाः श्रृङ्गाररसं सङ्गायन्तो भवन्ति । पिकयूथानि मनोहरेण शब्देन देववाण्या तस्याः श्रीराधिकाया रमणलीलां गायन्ति । तत्र मध्येमण्डलं तेजोमयमस्ति । हाटकमयास्तेजोभूमयस्तेजोमयाः संविराजन्ते । यत्र भूमौ परित अष्टौ मणयः सन्ति तेषां प्रसारिता लता सुवर्णलताभिर्मुक्ता-लताभिर्ग्रथिताः पुष्पैः पल्लवैः संवलिता भवन्ति । प्रतिमण्येकैकं मन्दिरं सकलसिद्धवस्तुसमन्वितं भवति । रतिमन्दिरे शय्याः पयःफेननिभाः संराजन्ते । तत्रान्नानि विविधानि अन्यपूर्णया सख्या पाचितानि । प्रतिक्षणं नूत्नानि श्रीराधिकायै भोज्यार्थे भवन्ति । तत्र सुगन्धरसिकया सख्या रचिताः सुगन्धरसा अगुरुचन्दनकेसरीमृगमदकर्पूराद्या अनेकसुगन्धरसाः श्रीराधिकया संभोज्या भवन्ति । तत्र श्रृङ्गारवत्या सख्या रचिताः श्रृङ्गारा वस्त्रालङ्कारसंयुक्ताः सुभगा नानावस्तुमयाः श्रीराधिकार्थे कल्पिताः सुभोज्या भवन्ति । रङ्गवत्या रचिता रतिरङ्गा वचनप्रतिवचनमया इन्द्रि-यादिभावमयाः श्रीराधिकाया भोगार्थे भवन्ति । गानवत्या रचिता नाना-रागरङ्गभोगाः समयोचिताः प्रतिक्षणं नूत्नाः श्रीराधिकार्थे सुभोज्या भवन्ति । नृत्यकवत्या रचिताः सुगन्धकलाः श्रीराधिकार्थे कल्पिता भवन्ति । तत्र

स्थाने भोगवती नाम्ना सखी नानाभोगान् कल्पयति। कटुतिक्तमधुरकषायाः सुस्वादा भोगाः श्रीराधिकाया भोज्यापन्ना भवन्ति। रतिवती नाम्ना सखी नानारतिसुखमुत्पादयति। रतिकलाकौतुकानि मनोज्ञानि भवन्ति। सुरतानन्दा सखी नानासुरतकलां श्रीराधिकायै कल्पयति। मनोज्ञा सखी नानामनोभावं ददाति। सुखदा सखी नानासुखं रसिकानन्दं प्रति राधिकार्थे कल्पयति। ताः सर्वाः सख्यः सुखकेलिकलानुभावेन रासलीलां कुर्वन्ति। तस्मिन् मध्यमण्डले सुरचिता सखी कस्मिंश्चित्समये रासलीलां रचयति। तत्र मध्ये कामेन सेवितं तेजोमयमासनं कल्पयित्वा श्रीराधिकया सह रसिकानन्दं समावेशयति। तत्र परित एताः सख्यः क्रीडाकलां दर्शयन्ति। कलावती गुणवती पुष्पवती अङ्गचपला सुरतकलाकोविदा रसकलाभिज्ञा रसभावज्ञा विपरीतसुरतनृत्यकलाकोविदा एताश्चान्याः सख्यः तस्मिन् मण्डले स्वान् स्वान् गुणान् प्रकटीकृत्य रसिकानन्दं सेवमानाः भवन्ति। साधनसिद्धाः संसिद्धाः सख्य अनेकरूपैस्ताभ्यां सुसेव्यमानाः भवन्ति। यादृशा भक्तास्तादृशं सुखं तादृशो लीलाभावश्च भवेत्। पुनस्ते ऊचुः। महास्थानं कियत्प्रमाणम्? संसिद्धोऽयं रसः। संसिद्धः कीदृग्विधः? ते संसिद्धा भक्ताः कीदृग्विधाः? तेषां रूपं कीदृग्विधम्? रसिकशिरोमणिरानन्दात्मकपुरुषोत्तमः श्रीराधामानन्दरमणानन्दरूपां तेन रूपेण सह बुभुजे। नित्यानन्दरूपेण सह पुरुषोत्तमो नित्यानन्दरूपः संक्रीडमानो भवति। सः एवं रूपं गोपिकास्वाविर्भावेन क्रीडयिष्यति। पृथग्रूपेण क्रीडमाना अभ्येति। तद्भावे क्रीडिष्यमाणा गोप्यः पृथक् संक्रीडमाना इव एकमेव स्थानमध्यासते। तेषां स्थानं कियत्प्रमाणम्? कीदृग्विधा भक्ताः? क्रीडमानं रूपं ताभिः संपीयमानसौष्ठवं किम्? पुनरुवाचेदम्। रहस्यमतितरां सौष्ठवम्। षड्विधोऽयं रासः। तेषामेव रासलीलायामापद्यमानं

रूपम् । रहस्यस्थानं महालीलायां शतयोजनायतं पद्मरागजाम्बूनदसुवर्ण-खचितम् । नीलमणिना परिधयः शोभाढ्या एवासन् । मध्येमध्ये पुष्यराग-मणीनां स्थानं संभ्राजते । तेषामतितरां मणिज्योत्स्नां राजमानामभ्येत्य तस्मात् परितः शतकुञ्जविद्रुमलताः सुवर्णसुगन्धलताग्रथिताः सुसुगन्धाढ्य-मातन्वन् । तेषामेव मणीनां शक्तयो विराजन्ते । पुष्पितवृक्षलता सुगन्धर-साभ्येति । तत्सुगन्धावेशिताः सख्यो भावापन्ना रमणरसरमणे रसरमणा-नन्दे रसे मग्ना भक्ताः प्रेमवत्यादयो लीलायां योग्यतामभियन्ति । रतिक्रीडा-यामानन्दरसः संभवति । ते सख्यस्तस्मादुत्पन्ना भवन्ति । शृङ्गाररसं दृष्टि-गोचरमुपसंपद्यन्ते । तस्मात् रमणानन्दादुत्पन्ना आत्मानन्दरूपिणः । यत्र यत्र तया देव्या स्वावेशेन सुखं सुसंसिद्धोऽयं रसः । तासां गोपीनां गृहंगृहमापद्यमानः प्रतिरूपं सुखं संयोजयति । तासामेव रसावेशेन रासस्थानं शतयोजनायतं पद्मरागमणिजटिलनीलमणिना विराजितं जांबूनदमणिना सुवर्णेन जटितं शतशो मणिखचितम् । तस्मिंस्थाने मणिस्तंभाः शतशो विराजमानास्तस्या निकुञ्जदेव्याः स्वावेशेन अनेकशो रूपाणि कृत्वा आत्मानं विभज्य स्वरसभोगसुखं संभुञ्जते । यथायथा रूपाणि तथातथा रसिकानन्दस्य रूपाणि सुखं संभोक्ष्यन्ते । तेषु तेषु रूपेषु क्रीडन्त्यस्ताः निकुञ्जदेव्याः स्वामिभावेन व्रजलीलायाः सुखमापद्यन्ते । स एव रासः । आनन्दाद्रमणानन्दोऽयं योज्यते । चन्द्रावलीचन्द्रभागासुश्रोणीसुभगाद्याः शतशो गोपभार्या वेदऋचः । वेदपुरुषा इमे गोपास्तासां गोपीनां स्वामिन्या आत्मस्वरूपेण स्वयमेव रमणानन्देनायोज्यन्त । अग्निना प्रज्वलिता रज्जुर्दृश्यमाना अग्निरेवाभाति । गोकुलोऽयमग्नेः संयोगादेवा-भाति । ता गोप्यस्तद्भावेन रसं अनुभवन्त्यस्तस्या निकुञ्जदेव्या भावमा-पन्ना आसन् । द्वयो रासयोरिदं भवति । तृतीये रासे तु गृहं गृहं प्रति

स्वयंस्वयमेव रसिकानन्दस्वरूपे क्रीडिता आसन् । स्वानन्दाविर्भावाय तासां योग्यतां निरूपयति । सुखमनुभवन्त्य आत्मभाव एवासन् । चतुर्थे तु गोरसविक्रीडा गोप्यश्चन्द्रावळीप्रभृतयोऽनेकशो दानलीलया निकुञ्जदेव्या स्वावेशेन सुखमनुभूय तद्वचनादभीष्टानि प्रतिपद्य योग्यानीन्द्रियाणि परस्परसुखं भुञ्जानास्तस्या निकुञ्जदेव्या रसिकशिरोमणिना सह सुखं स्वयमेव रूपेण अनुभवन्ति । पञ्चमी महालीला स्वयमेव वृषभानुगृहे प्रकटिता । तां तया सह पुरुषोत्तमरसिकानन्दोऽयं स्वयमेव व्रजलीलायां प्रकटितवान् । सः एव सुखं रमणानन्दरूपेण संभोक्ष्यमाणोऽभवत् । परस्परबाललीलासुखयुग्मरूपे एकमेव रूपं भवति । एवं तस्मिन् वृषभानुगृहे स्थानानि शतशः पद्मरागकुड्यानि गृहाणि तप्तसुवर्णपरिधीनि विराजमानानि भवन्ति । ललिताविशाखाश्रृङ्गारवत्यादयः स्वयमेव प्रकटिताः सख्यः स्वयमेव स्वरसं प्राप्ताः रसमानन्दात्मकमनुभवन्ति । अन्याश्च शतशो गोपीभावं प्राप्तास्तां लीलां प्राप्ता भवन्ति । यं यं भावं संयोक्ष्यमाणा गोपी भवेत्तं भावं द्वारि प्राप्य रासलीलाकृते उज्जहार । अत्यन्तभावलीलायां संयोक्ष्यमाणा गोपी पुष्करिण्यां तासामङ्गरागेण गीपीचन्दनं तासामेवोच्छिष्टं बुभुजे । भक्तानां तदेव हितकारि भवेत् । तदङ्गरागोद्भूततदाविर्भावेन महालीलायोग्यतां प्रतिपेदिरे । पुनः संशयं पप्रच्छुः । अहो द्वारिकायां रासः कस्मिन् समये कृतः? तत्र महालीलायाः स्थानं कुत्रास्ति? यत्र रसिकानन्दः पुरुषोत्तमः क्रीडति । केऽत्र भक्ताः? केषां सहायेन महालीलास्थानं प्रकटितम्? श्रृणुत सख्यः । महानयं गोप्यो रसः । ये प्रत्ययापन्ना भक्तास्ते तं रसमनुभवन्ति व्रजलीलायाम् । त्रिविधा गोप्यः सन्ति । एका वेदऋचः सन्ति । एके अग्निकुमाराः सन्ति । एके संसिद्धाः श्रीराधिकया सह प्रकटिता भवन्ति । अष्टौ यूथानि संसिद्धानां भवन्ति । तेषां द्वादश यूथानि ब्रह्मणः पुत्राः

अग्निकुमाराः सन्ति । द्वादश यूथानि वेदस्त्रीणां सन्ति । ते साधनसिद्धाः ये भक्ताः श्रीराधिकया सह रसिकानन्दोपासका भवन्ति । याः संसिद्धास्तासां नित्यलीलायामनुभवः । ये अग्निकुमारास्ते व्रजलीलायां श्रीराधिकया सह रसिकानन्दमुपासमानास्तां लीलां प्राप्ता भवन्ति । या वेदरूपिण्यस्तासां विरहभावेन महाननुग्रहः कृतः । प्रथमं महालीलायाः प्राप्तिः पश्चाद्विरहः । ता विरहोत्कण्ठिता गोप्यो नान्यसुखं विदुः । तासामर्थे पञ्चयोजनपर्यन्तं महालीलायाः स्थानं प्रकटीकृतम् । तासां मनोभावबुभुत्सया एकं स्वगणं रहस्यलीलायोग्यं प्रेषयामास । द्वारिकालीलायां महालीला प्रकटिता । स एव गणस्तास्तत्रैव नयति । रसिकानन्दस्तासां स्वलीलामाविष्करोति । रुक्मिण्याद्याः पट्टराज्ञ्यस्तां लीलां श्रुत्वा उत्कण्ठिताः बभूवुः । ताभिः प्रार्थितो रसिकानन्दो महालीलां दर्शयामास । तदा रसिकानन्देनोक्तास्ताः पट्टराज्ञ्यो भवन्त्यस्तल्लीलायोग्या न भवन्ति । इमाः लीला लोके वेदमर्यादातिरिक्ताः । रसमार्गोपासका भक्ताः स्त्रियस्तां लीलां जानन्ति । वयं राजपुत्र्यः कथं तस्यां लीलायां योग्या न भवेम । बहुशः प्रार्थितो रसिकानन्दस्तथेत्युक्त्वा पुनराह । अहो राजपुत्र्यो भवतीनां यदि महालीलादर्शनाकाङ्क्षा भवति तर्हि अहं निशीथे आधिदैविकीं रात्रिं प्रकटयिष्यामि । तत्राधिदैविकोऽयं चन्द्रस्तत्राधिदैविका भक्ताः लीलोपयोग्या भवन्ति । भवत्यस्तत्रैवायान्तु । इति कथितास्ताः सर्वाः विस्मयापन्ना बभूवुः । अहो अत्यन्तमाश्चर्योऽयं विलासः । तत्रागता सुयोगा सखी रासलीलायां योगं चकार । सखी तत्र रासलीलां रचयति । तत्र रसिकानन्दः पुरुषोत्तमोऽतिमनोहररूपेण तासां मनांसि जह्रे । ताः सर्वा गोप्यः श्रीराधिकायाः कृपावशेन रमयांचक्रुः । तत्र रसिकानन्देन ब्रह्मरात्रिः प्रकटिता । तस्यां रात्रौ ताः सर्वा मनोरथशतै रमयांचक्रुः ।

क्रीडान्ते ब्रह्मरात्रिरपावृत्ता बभूव । द्वारिकायां स्थिता राजपुत्र्यः द्वारे स्थितान् गुरूनुग्रसेनवसुदेवाद्यान् ददृशुः । रसिकानन्देन मोहितास्तत्र स्थिता गुरवो ददृशुः । तासां ता रात्रयो रासलीलाया ध्यानेन व्यतीताः । ब्रह्मरात्रिरपापावृत्तेति प्रातस्ताः सर्वास्तत्रैव समागताः । तत्र तत्स्थानं ददृशुः । यत्र मणिलता मुक्तालताः सुवर्णलताः पुष्पैः पत्रैः फलैः संपूर्णा मणिस्तंभैर्ग्रथिता निकुञ्जतां प्राप्नुवन्ति । सिद्धयो मूर्तिमत्यः तत्रैव स्थिता ददृशिरे । कामदेवो रत्या सह तत्रैव ददृशे । तत्र स्थिताः गोप्यो रसिकानन्देन संयुक्तास्तासां राजपुत्रीणां लीलां दृष्ट्वा निर्गलितमाना बभूवुः । ताः प्रश्रयावनता रसिकानन्दं पप्रच्छुः । अहो रासलीलामस्माकं दर्शय । ताभिः प्रार्थितो रसिकानन्दः प्रोवाच । समयोऽयं व्यतीतः । ब्रह्मरात्रिस्तु गता । मया भवतीनां पूर्वं कथितमस्ति । भवत्यो रासलीलायां योग्या न भवन्ति । ये वेदोक्तकर्ममार्गरतास्ते कदाचिदिमां लीलां न जानन्ति । तस्मात् भवत्य इमा लीलायोग्या न भवन्ति । ब्रह्मलोके स्थिता रुद्रलोके स्थिता इन्द्रलोके स्थिता नागलोके स्थिताः स्त्रियस्ता अपीमां लीलां न जानन्ति । अन्ये मम भक्ताः बहवः सन्ति । तेऽपीमां लीलां न जानन्ति । तस्मात् भवत्यो निर्गलितमाना जाताः । तेन भावेनैतासां दर्शनं न प्राप्ताः । ताः राजपुत्र्यो रुक्मिण्याद्या रसिकानन्देनोक्ता दृष्ट्वा प्रसन्ना बभूवुः । तासां नामानि पप्रच्छुः । सुयोगजा सखी तासां गोपीनां नामानि कथयामास । इयं चन्द्रावली नाम्ना तथा चन्द्रकला विख्याता । चन्द्रानना रोहिणी मनोरमा माधवी पुष्पगन्धा सुरतकलावती भोगवती हंसगमना गुणवती गानवती सुरतकलाकोविदा सुविहारवती नृत्यकलाभिज्ञा एताः सख्यः स्वयूथैस्तन्मण्डलं सेवमाना भवन्ति । ताः पट्टराज्ञ्यस्ताः संपूजयामासुः ।

नानासुगन्धाङ्गरागेण वस्त्रालङ्कारभूषणैस्तासां शृङ्गारमकुर्वन् । तासामुच्छिष्ट-जलेन पङ्काङ्गरागेण गोपीपुष्करिणीति विख्याता बभूव । यस्यामुत्पन्ना मृत्तिका अतिपवित्रा भवति । ता गोप्यस्तद्भावेन महालीलायां लयं प्राप्ता बभूवुः । सा लक्ष्मीः प्रश्रयावनता नारायणं पप्रच्छ । तेऽग्निकुमाराः ऋषयः कुतः समुत्पन्नाः ? तैरिदं स्थानं कथं प्राप्तम् ? केन साधनेन ते सिद्धा भवन्ति ? स होवाच । पूर्वं ब्रह्मा लोकपितामहः सनकादिना पृष्टः । महालीलायाः स्थानं कथय । यत्र रसिकानन्दः श्रीराधिकया सह नित्यं क्रीडति । तत्प्रश्नेनातुरो ब्रह्मा ध्यानापन्नो बभूव । स समाधौ महालीलां ददर्श । तद्दर्शनेन विकलेन्द्रियो बभूव । तत इन्द्रियेभ्यो रेतः आपद्यत । ततो रेतः अग्नौ न्यपतत् । गार्हपत्यकुण्डे निपतितं रेतः पुरुषायितं बभूव । ततः समुत्पन्नाः पुरुषा अग्निकुमरा भवन्ति । ततस्ते ऋषयो गोवर्धनाद्रौ शिरसि तप आतन्वन् । तद्दिनमारभ्यैते तु ऋषयो व्रजं सेवमाना बभूवुः । एकदा ते ऋषयो गोवर्धनाद्रौ शिरस्येकां कन्यां ददृशुः । श्रीराधिकयानु-गृहीतां सर्वाङ्गमनोहरां तत्राप्सरःपुष्करिण्यां मज्जमानां तां दृष्ट्वा ते प्रश्रयेण नम्रा बभूवुः । सा कन्या तान् प्रत्युवाच । भो ऋषयः कुतः समायाताः ? किं कुरुत ? ऋषय ऊचुः । वयं ब्रह्मणः पुत्रा अस्मिन् वने निवसन्तो महावनविहारलीलादर्शनकाङ्क्षिणो भवामः । पुनस्तेऽग्निकुमारा ऋषयः ऊचुः । भो भवती कुतः समायाता किं कार्यं कुरुते ? इदं रहस्यम् । यदि मनसि कृपाविष्टा तर्हि रहस्यं कथय । साधवो दीनवत्सला एवासते । तया देव्या अनुगृहीतानां तेषामतिकृपाशाली स्वभावोऽयमापद्यते । सा पुनरुवाचेदं स्वयमेव करुणया । अहो अहमपि पूर्वं महारुद्रराज्ञः पुत्री आसम् । तस्य गृहे निरन्तरमत इतः क्रीडमाना गीतगानैर्हरेर्लीलां मनस्या-सादितास्मि । तस्य गुरुविभाण्डकमुनिपुत्री रूपशालिनी नाम्ना सा

निरन्तरं तस्यां लीलायां सदा ध्यानानुभावना तया देव्यानुगृहीता लीलोपयोग्यैति । तदा श्राविंतानामधुनातनीं लीलां सोपरिष्टामभ्येति । ते ऊचुः । को मन्त्रः ? क उपदेशः ? किं ध्यानं तस्याः ? उपदिश । यदि करुणावती वद । शृणुतेदं रहस्यम् । न कदाचिद्वचनीयोऽयं रसः सर्व एव । धर्माधर्मविरक्ता ये भक्तास्तेषामप्यवचनीयः । रसरहस्यविद्यामुपासमानः सद्योदर्शनमापद्यते । ॐ क्लीं क्लीं राधे संमोहिनि कामदात्रि कामकेळिकलारूपिणि नमो नमस्ते । इदं रहस्यं सर्वेषामपि दुर्लभतरम् । आनन्दरसिकशिरोमणिमोहनेन रूपेण सद्योलक्षं जपित्वा ध्यानापन्नो भवेत् । संश्रृणुयात्तां सा नवकिशोरी तप्तहाटकाभरणा केशच्छटाचिक्कणसुगन्धरसप्लावितसीमन्तसिन्दूरसेचितमणिघटितसुवर्णभूषणैर्भूषिता रत्नकर्णभूषणज्वलितकुण्डलाभ्यामन्यैः शुट्याद्यैर्भूषणैः संयोजिता केसरमृगमदकर्पूरचन्दननानारेखासंयोजितललाटा मणिहीरकजात्यतिलकयोजिता संशोभते । कामकार्मुकभ्रूलतासंमोहितरसिकानन्दा तद्बाणमूर्च्छितेयं सदा तदावेशयोग्यतां प्रपद्य ध्यायमाना भवति । तां प्रपद्य स विश्वजयी भवेत् । नेत्रकृपाकटाक्षैर्भक्तानामभयदायिनी भवति । खञ्जनमीनचाञ्चल्यवशीकृतो रसिकानन्दो भवेत् । नासाचञ्चुरतितरां तेजसा राजते । कपोलौ सुवर्णसंपुटौ तेजोमयौ भातः । शोभते नासा आभरणरचिता । मणिमयमुक्ताफलैर्गुम्भितो भवति विम्बाधरो विद्रुमकान्तिः । द्विजाली ताराकारा भवति । सा तेजसा भातितराम् । ज्योत्स्नाराजमानाननोत्कण्ठग्रीवा राजन्तेऽतितरां कपोलकण्ठादयः । तिरस्कुर्वन्ति तस्या बाहुशोभां केयूरकटकानि मरकतगुम्भितानि वलयानि शतशः तेजोमयानि । अतितरां लघु ताराकान्ति तिलकं शोभामत्येति । राजमानौ हस्तौ करतलाभ्यां यावकरसविभाविताङ्गुलीभ्यां सूक्ष्मतरमणिघटिकाभ्यां भवेताम् । सुवर्णभूषणानि संराजमानानि सुरोचन्ते । तस्या वक्षोजावति-

मृगमदागुरुर्चितावेव पुरुषोत्तमरसिकानन्दरमणाधिष्ठानं संराजमानावेव भवतः। मुक्तागुम्भितहारवल्लीद्वयौ च गिरी इव संराजमानौ भवतः। गम्भीरनाभिह्रदसन्निधाने नवरोमराजीया शोभा हाटकोपघटितनीलमणिराजिरिव राजते। कटिमेखला क्षुद्रघण्टिकाराजमाना मणिघटितहाटकखचिततताराजालशोभामभ्येति। संराजमानजघनस्थलवासिमोहनगृहं सौभाग्याढ्यं शंबरवैरिणोऽधिष्ठानं रसिकानन्दैककलसुरतममलाम्बरैः परिवेष्टितं सुवर्णतार गुम्भितं शोभायमानं राजते। कदळीकाण्डरुचिरावूरू शोभामभीतः। चरणकमलमञ्जरीशोभा राजमाना यावकरङ्गरञ्जितेव शोभामभ्येति। नखचन्द्रतेजसा राजमानोऽयं लोको विराजमभ्येति। अतः परं शृणुत सखायः। रसिकानन्दस्य रूपं सदा निकुञ्जदेव्या ध्येयम्। आनन्दमात्रोऽयं करपादे तेजोमयोऽमृतमयः। श्यामहिरण्यपरिमध्यवनमालया युतो बर्हापीडो नटनाट्ययुक्तो मञ्चो रोचमानो राजमानः शोभायमानः शोभया संराजते अतितराम्। एक एव पुरुषोऽयं स्त्रीषु रमणानन्दीयति। रसः संराजमानत्वमभ्येति। संशोभायमानो भवेत्। एक एव रसो द्विधा भिन्नोऽयं श्रीराधाकृष्णरूपाभ्याम्। नित्यानन्दाय नमो नमः। तस्मात् रससंयोगे भक्तास्तस्मिन् रसे संप्रीयमाणमनसः सखिस्थाने शोभायमानमभ्येत्य संगच्छन्ते। कोटिसूर्यप्रतीकाशं कोटिचन्द्रप्रभं संराजमानं तेजोमयं ब्रह्मेति पुराविदो वदन्ति। यस्मात् सृष्टिरुत्पद्यमानाभ्येति। संरोचमानाद्यस्मात् समुत्पन्नसृष्टयो ब्रह्मविष्णुरुद्रादयो यस्य प्रतापशक्त्योत्पन्ना नानासृष्टिं कुर्वन्ति। यस्य प्रतापशक्त्योत्पत्तिस्थितिलयानातन्वन्ति। यस्मात् प्रेमानन्दान्नित्यानन्दोऽयं लोकः प्रकटितो भवति। प्रेमानन्द एव सृष्टिस्त्वाधिदैविकी। तस्मात् प्रेमानन्दरक्तपुरुषोत्तमाधिष्ठानसौष्ठवं यत्र कोटिशो निकुञ्जनानालताग्रन्थिस्तासु गन्धवृक्षादिः राजमानत्वमभ्येति। यत्र निकुञ्जश्रेणिषु सखीनां यूथान्यतितरां

क्रीडाश्रृङ्गारयोग्यान्युपकरणानि राजमानान्यभ्येत्य शोभायमानानि राजन्ते। स्थाने स्थाने पृथक् प्रक्रियमाणानि श्रृङ्गारस्थानानि। हाटकमणिमय्यो भूमयः। नानारङ्गमयफलपुष्पवृक्षादिराजमानामभियन्ति षड्तवः। यत्राधिदैविकरूपेण विराजमाना नानातन्वन्। तेषामेव यादृशा भक्तास्तादृशलीलादृष्टिमामद्यमानं श्रृणुत। सखिप्रेम्णाऽयं लोकः सृष्टोऽस्माभिः पितृगृहं त्यक्त्वा अस्मिन् वने पर्वते नानारमणस्थानमस्माकमनुभवं प्रतिपद्य रचितं आधिदैविकं स्थानं बृन्दावनं अतिपुष्टपुष्करिणि यत्र निकुञ्जदेव्या सह पुरुषोत्तमो रमणानन्दो नित्यक्रीडामातनोत्। संकेतस्थानं रमणानन्दयुतो रसिकानन्दः क्रीडते। रमणानन्दः स्वरूपस्वामिन्यावेशः। रसिकानन्दस्तु पुरुषावेशः। इमां लीलाविद्यामधीयते ये तेऽनेन व्रजसङ्गिनः सङ्गेन सङ्गच्छन्ते। तस्मात् तस्या लीलायाः कथा मद्भक्तैः सह भक्त्या लीलाकथायां मग्नाः रात्रौ यत्र यत्र पुरुषासक्ता आत्मानन्दं तद्रूपिणं कुर्वाणा भवेयुः। रुचिरां लीलां योज्यमानां तां प्रतिपद्यमाना हि तया स्तुत्या ध्यानेन तल्लीलानुभवेन तन्मन्त्रोपासनेन तां लीलां पश्यन्तस्त ऋषयस्तद्भावेन गोवर्धनाद्रिशिरसि अटन्तः आत्मानं तद्भावेन भावयन्तोऽभवन्। रतिरसभावेनानन्दयोग्यतां वृक्षलतौषधयोऽनेकशोऽतितरामापद्यन्त। श्रीराधापुष्करिण्यां तं मन्त्रं जेपुः। तद्ध्यानं चक्रुः। तद्रूपे गुणात्मके एकरसे प्रत्यपद्यन्त। अतितरां गाढप्रेमरूपमापद्यन्त। अतीन्द्रियज्ञानेन संयोक्ष्यमाणा आपद्यन्त। रतिप्रसङ्गेन तया निकुञ्जदेव्या स्वलोकदर्शनमनुभाविता अभूवन्। सा अत्यन्तगाढप्रेम्णा तल्लोकसेवनात् स्वोच्छिष्टं भुञ्जानान् तान् प्रति तद्भावाभवत्। बृन्दावनेरहस्यक्रीडायां महारासस्थलं दर्शयामास। तद्दर्शनेन योग्यतां प्राप्ता अत्यन्तस्तवनं चक्रुः। ते अभिनमः। नम आनन्दरसदायिने। प्रेमानन्दाय रतिदायकसुरतानन्दाय

कुमारा ऊचुः । श्रीरसिकानन्दाय नमः । नमस्तुभ्यम् । रसिकानन्दाय नमो नमः ।

अव्याकृतविहारिण्यै सर्वव्याकृतिहेतवे ।
नमः कल्याणनिधये नमस्तुभ्यं नमो नमः ॥

नमोऽनन्तभोगवर्धिन्यै भोगात्मिकायै भोगसाक्षिण्यै । नमः शृङ्गाररूपाय । नमो भोगरूपाभ्याम् ।

शरदि क्रीडते तुभ्यं नम आनन्दशालिने ।
नमोऽनन्तविहाराय नमस्ते रसरूपिणे ॥

नमो रससाक्षिणे । नमो गूढकेलिकलाय । नमो दानशीलाय । नमो बृन्दारण्यविहारिणे । तदनुरूपेण तदा साक्षिणे नमोऽणुरूपाय । नमो धर्माय । नमः सर्वधर्मातिरिक्ताय । नमः कामदेवकुञ्जराय नमो नमः । सङ्केतविहारिणे नमः । दानलीलासुखदायिने नमः । भोगसुखरूपाय नमः । अत्यन्तसुखदेहिने नमः । सर्वधर्मातिरिक्ताय नमः । अनन्तसुखसंभवाय नमः । श्रीराधिकावल्लभाय नमः । श्रीराधाधरसुधाशालिने नमः । क्लीं कामवने कुञ्जकेलिरसिकाभ्यां नमः । व्रां व्रीं बृन्दावने रहसि संवलितनित्यानन्दरूपाभ्यां नमः । नमः ह्रीं सृष्टिसमुत्पन्नाभ्याम् । नमः ह्रां सर्वचैतन्यभोगश्रावकाभ्याम् । युवाभ्यां नमो रमणसुखवल्लभाभ्याम् । ॐ श्रीबृन्दावनसदामोददायिभ्यां नमः । ॐ नमो बृन्दावने सखीसमूहे परस्परक्रीडासंवलितदेहाभ्याम् । ॐ नमः परस्परशृङ्गारसुखभोगवद्भ्याम् । ॐ नम आद्यनादिसंभोगसुखभोक्तृभोगाभ्याम् । ॐ नमो वृषभानुनन्दगृहे क्रीडार्थं संप्रकटितदेहसंभवाभ्याम् । ॐ नमो ललितादिसंस्तुत्यदेहाभ्याम् । ॐ नमो यमुनाकेलिरसिकाभ्याम् । ॐ नमो जलकेलिरसिकाभ्याम् । ॐ नमो नौकारसकल्लोलाभ्याम् ।

ॐ नमो ग्रीष्मर्तुसेवितरूपाभ्याम्। ॐ नमो वसंतर्तुसेवितरूपाभ्याम्। ॐ नमः शरदि रासक्रीडाकुतूहलेनानन्दविहारसर्वप्रदायिभ्याम्। यत् यौवनेऽद्भुतं रूपं कामकलाचातुर्याभिसंमितं तेभ्य एव नमो नमः। अत्रातिस्नेहसंकुलितमनोसद्म येषां तेभ्य एव नमो नमः। सर्वकारणरूपाभ्यां नमो नमः। सर्वरूपाविर्भावाभ्यां नमो नमः। भक्तवात्सल्याविर्भावाभ्यां नमो नमः। अत्यन्तनिगूढभावसंमोहिताभ्यां नमो नमः। प्रत्ययरस-वीरुत्सुखदातृगुणगणयोग्याभ्यां नमो नमः। अनन्यभावरूपशोभासञ्चरित-स्वारस्यसंवलितगुणगणनाभ्यां नमो नमः। रूपशोभासञ्चरितरसरसवादिगुण-गणनाभावाभावसंवाहिभ्यां नमो नमः। यद्रूपवत्पृथिव्यां तदेकरूपाभ्यां नमो नमः। एवं स्तुत्या स्ताविती सद्योदर्शनमभवताम्। तद्दर्शनप्राप्त्या कोटिसूर्यप्रतीकाशं कोटिचन्द्राह्लादं तस्या निकुञ्जदेव्याः कटाक्षमन्वभवन्। तस्या निकुञ्जदेव्याः स्वस्वरूपेणाहो प्रार्थयत वरमित्युक्त्वा मनोऽभिलषितं उपाच्छन्दयन्त। व्रजगोपकन्या भविष्यामः। तथा ममावेशेन रसिकानन्दे सुरतानन्दा भवन्तु। तेऽग्निपुत्रा व्रजे सत्स्वरूपतां प्राप्ता महालीलायाम्। नित्यानन्दरूपमेव यन्ति ते येषां स्थानं शतशो निकुञ्जरासस्थलानि। निकुञ्जदेव्या श्रीराधिकयात्मानं शतसहस्रधा कृत्वा तस्मिन् रसिकानन्दे तया देव्यात्मानं रसयाञ्चक्रुस्त ऋषयः। तदभावोऽनल्पं विपर्ययमातनोत्। तस्यां लीलायां भावापन्ना भावा अभवन्। शृणु महालक्ष्मि लीलायां येऽप्यरण्य-धर्मिणो ये ज्ञानवैराग्यरहितास्ते तां लीलां प्राप्नुवन्ति। तस्माद्धर्माधर्मौ परित्यज्य पापपुण्यं परित्यज्य ये रसिकानन्दीमाज्ञां प्राप्तास्ते तां प्राप्नुवन्ति। इदं रहस्यं न कदाचिद्वाच्यम्। सा लक्ष्मीः पुनरुवाच। ये योग्येषु सदा सहकारिणोऽभवन् नित्यलीलयानुभवलीलामापद्यन्त तैः किं साधनं कृतम्? केन साधनेन सिद्धा आसत? अत्यन्तरसलीलामग्नाः

रसिकानन्दे तया देव्या श्रीराधिकया दर्शनसुखं प्राप्तवन्तः। किं प्राप्तं येन आनन्दे अभवन्। स होवाचेदं रहस्यं प्रश्नम्। सखायः समुत्पद्य नित्यं व्रजलीलायां सहकारिणोऽयुज्यन्त। यथापूर्वं गोपानां द्विधा भेदा अभवन्। ये गोपाः सदा वनलीलायां सहकारिण आसत ते सदा सुश्लोकदेवप्रस्थवरूथपकृष्णबलरामदेवहारकुमुदरोचिष्मद्रमणाद्या विराजमाना अभियन्ति। तेषां स्वलीलार्थं स्वर्गानन्दात् ते गोपाः प्रकटिताः। तेषां प्रेमानन्दं दत्तवान्। ते प्रेम्णा भजनेन रमणानन्ददर्शनयोग्या अभवन्। येषां प्रेमानन्दसंपत्तिस्ते रमणानन्ददर्शनयोग्या एव भवन्ति। रमणसंपदि योग्या दर्शनस्पर्शालापसुखलीलारतिरास्तां तेषाम्। रमणानन्ददर्शनयोग्यतामातन्वन्नन्येषाम्। एकरतिरास्ताम्। रमणसेवायां संस्थापकशय्योपकरणगुणरूपगानरतिध्यानकीर्तनलीलास्मरणतद्भावापत्तिरूपसेवा यथाकालोपपन्नसेवैवास्ताम्। रतिसेवायां रतिसेवाकथायां मनोऽयुञ्जत। अहो लक्ष्मि मम रूपाण्यनेकशो ममावतारा अनेकशः। अंशकला आवेशाः पूर्णांशास्तेऽपीमां लीलां न जानन्ति। अन्यास्तवांशकला उत्पन्नास्ताः अपि लीलां न जानन्ति। अन्ये ये शतशः सहस्रशस्तेऽपि तस्या लीलायाः अनन्तरा आपद्यन्ते। तस्मात्तत्तल्लीलोपयोगिलीलाप्राप्तिरेवास्ताम्। न धर्मो न कर्म न ज्ञानम्। न कर्म केवलम्। एक एव तल्लीलापाठः। एकैव लीलोपसेवा। किशोरनवनूत्ननवीयस्सदाविहारानन्दकलानिधेः रसिकानन्दशिरोमणेः श्रीराधाश्रियोऽतिमोहनस्योपासका भक्तास्तेषामुपासनम्। तल्लीलायोग्यतया धर्मोपासका वैष्णवा वैकुण्ठलीलामनाश्रिताः सनकादयो नारदादयोऽपि। जयन्तकुमुदजयविजया अन्ये च ये तेषां मम रूपाणि रासलीलायोग्या ये ममाविर्भावास्तेषां दर्शनं न भवत्येव। अन्ये कर्मोपासकास्तां लीलां स्वप्नेऽपि न ददृशुः। अहो अनन्यभक्तिपरा काष्ठा। अहो मद्भक्तानां पङ्क

एव परा काष्ठा। तल्लीलाकथा परा काष्ठा। तस्यां लीलायां प्रत्ययः परा काष्ठा। अन्यकथाधर्मदानव्रततीर्थसाधनानि विमुक्तानि। यमनियमप्राणायाम-प्रत्याहारकलासुखभाविता सामान्यभक्तिरपि त्यक्ता। तल्लीलोपासकानां एकैव व्रजलीलातायत। रतौ रमणानन्दे रतिरासां भवति। अवस्थि-तोऽयं रसः। शुष्कवादिनामन्यां लीलां न शृणुयात्। कर्मवेदजनितानि कर्मोपासनानि ये कुर्वन्ति ते कर्मजडा आसुरास्तेषां हठात्सङ्गस्त्यज्यते। चित्तवृत्तिं दूषयति। येषां सङ्गं नालपेन्न शृणुयात् ते धर्मविरोधिनस्तां लीलां न जानन्ति। तस्मात्तद्धर्मदृढकारिणो ये ते सेव्याः पूज्याः। ते तां लीलां ददति। अनन्यधर्मान् शृणुयादिति रसमार्गिणां धर्मः। अरसिका जीवाः कर्मजडा ये तेषां स्वेष्टं न दर्शयेत्। स्वेष्टस्य वार्तामपि न श्रावयेत्। सखायो येषां विद्याविर्भावस्तेषाम्। अन्य-विद्यारुचिर्न भवत्येव। यदनन्यधर्मे रुचिरास्तेऽरुचिरन्यत्र भवेत्। तस्य स्वेष्टे आविर्भवति रतिः। सोऽन्यदिष्टं विस्मरति। गुरुकृपया जीवत्वं प्रपन्ना-नामनुग्रहत अनुग्राह्यानुग्राहकभावेन रतिराविर्भवति। अतिरतेः स्नेहं विना न प्राप्तिः स्यात्। नारायणं प्रति लक्ष्म्या आविर्भूतया तया निकुञ्जदेव्या यानि सुखान्यनुभूयन्ते तेषां प्रश्नं पुनरभिवदति। ये साधनसिद्धास्तेषां कुतः स्थितिः। कया सरण्या तल्लोकप्राप्तिः स्वरतिरास्ते। कया रसिकानन्देन तस्या निकुञ्जदेव्याः प्राप्तिर्भवेत्। ये गवां गणास्तेऽतितरां तस्या देव्याः दृष्टिगोचरा एवासताम्। पुरुषो रसिकानन्दः स्वहस्तेन तेषां यथासुखं परिमार्जयन् दधिदुग्धनवनीताद्यान् रसान् स्वयमेव भुङ्क्ते। ये वत्सतरास्तेषां स्वहस्तेन पृष्ठभागान् परिमार्जयति। तेषां स्थानं कियत्प्रमाणम्। नन्दादयो गोपा वृषभान्वादयश्च ते गोपाः साधनसिद्धा वा संसिद्धा वा। यशोदाद्याः स्त्रियो मातृभावं प्राप्तास्ता अनादिसंसिद्धा वा साधनसंसिद्धा वा। यासां

गृहे रसिकानन्दोऽयं पूर्वं तया श्रीराधया स्वयमेव संसिद्धासु भावप्रकटितः एव भवति । अत्यन्तस्नेहावभवताम् । अत्यन्त उत्सवो रमण एव भवति भजनप्रेमानन्दसुखप्राप्तौ । अतितरां रूपासक्तिर्न कथं भवेत् । सुखरूप-रतिर्येषामन्यत्किं स्मर्यते । स होवाच पूर्वं सृष्ट्युत्पन्ना अष्टौ वसवः । तेषां वसुनाम्ना अष्टौ कोटयो वसवो देवप्रवरा मम लीलालोकं श्रुत्वा तल्लोके श्रुते उत्कण्ठमाना लीलयापेदुरिति श्रुतम् । इमं महिमानमभ्येत्य वनलीलासक्ताः अतितरामासताम् । अतिलोलुपे चित्ते तस्यां व्रजलीलायां राधा आस्त । संसिद्धनिकुञ्जलीलायां मयोपविष्टा मौनेनापन्नभावा अभवन् । ओङ्कारा-विर्भावलीलारूपश्रीराधारसिकानन्दरूपं प्रतिपद्य मनो भावापन्नं कृत्वा तां लीलां गायमाना अभवन् । ते वसव ऊचुः । ॐ श्रीराधारसिका-नन्दविनोदाभ्यां संयुक्ताभ्यां नमो नमः । नित्यक्रीडात्मने नमो नमः । कामकेलिकौतुकात्मने नमो नमः । केलिकौतुकात्मने नमो नमः । शृङ्गाररसविनोदिने नमो नमः । धात्रे क्रीडासंपादिने नमो नमः । अनन्तरससंपादकारिणे नमो नमः । सीमन्तिने नमो नमः । रतौ संभोगिने नमो नमः । नानासुरतानन्दनिधये नमो नमः । रसिकानन्दशि-रोमणये नमो नमः । रासमानजलक्रीडात्मने नमो नमः । क्रीडाविनो-दिने नमो नमः । रतिसंभावितसुखसंवलितात्मने नमो नमः । सुरतो-त्कण्ठिने नमो नमः । यौवनात्मने नमो नमः । रससंभोगात्मने नमो नमः । अत्यन्तक्रीडाश्रान्तिसंवलितवदनाय नमो नमः । प्रथमसङ्गरञ्जितात्मने नमो नमः । संभोगचटुचाटुवचनाय नमो नमः । मृदुकपोलवाण्यात्मने नमो नमः । निकुञ्जे पुष्पशय्याशृङ्गारवत्सखीसुखदात्रे नमो नमः । आलिङ्गनचुम्बनसुरत सुखसंवलितवदनाय नमो नमः । सुरतानन्दसमग्रवशीकृतरसिकानन्दाय नमो नमः । आसनभेदसंयोगसुखदात्रे नमो नमः । विपरीतसुखदाय

उदारचेतसे संभावितजितरसिकशिरोमणये नमो नमः। सुरतानन्दवशीकृतस्वाधीनपतिकाश्रृङ्गारात्मसुखदायिने नमो नमः। ललितायां विशाखायां कलावत्यां शृङ्गारवत्यां योजितात्मने नमो नमः। भोगद्रष्टे भोगसंभवाय नमो नमः। निद्रासंभावितविप्रलंभसुखसमनुभवतिरस्कृतरसिकानन्दात्मने नमो नमः। अत्यन्तप्रवीणरससुखरसिकशिरोमणिभोगभावुकात्मने नमो नमः। सर्वक्रीडारसपूरिणे नमो नमः। पृथिव्यां यत्र सुरतानन्दभोगास्तद्भोगाविर्भावान्तर्यामिणे नमो नमः। पृथिव्यां यदानन्दरूपं तत्तदानन्ददायिने नमो नमः। पृथिव्यामतिकाममनोरथं सिद्धं वासिद्धं सुन्दरं सुभगं तेषामेव नमो नमः। एवं स्तुतस्तदा वसुभिः स्वानन्दाविर्भावं ददावतिप्रीतो रुद्रोऽयम्। वसूनां प्रवरोऽयं नन्दोऽभवत्। धरानाम्नी स्त्री यशोदास्त। बृहद्वसुश्रेष्ठः कीर्तिदेव्या सह वृषभानुरभवत्। निकुञ्जदेव्या रसिकानन्देन सह यत्रानन्दोऽभवत्। नन्दोपनन्दभद्राश्वकृतवदुग्रभङ्गोदधिसामन्तातिरोचिष्मत्कात्येयमत्यनघरोचिष्मदुष्णीषरश्मिवसुसुजया अन्ये च शतशो वसवः साधनसिद्धाः एवासत। तेषां स्त्रीषु श्रीयशोदा सा च सत्या आस्त। रसिकानन्दशिरोमणिर्बृन्दावनेश्वर्या सह संक्रीडमानोऽभवत्। अतिरूपलावण्यलवकसूक्ष्मस्वरूपेणैनं भजमानाय नन्दरूपं दत्तवान्। ते गोपा गोप्यः। ते परस्परमेकप्राणा एवासत। ते गोपा एकप्राणा एकरूपिण एकभावा अभवन्। येषां पुरुषोत्तम आनन्दः। अन्याश्च गोप्यो नानाभजनभावमाविष्कृत्य भजनानन्दे भजनं कुर्वन्ति। अतितरां स्नेहीऽभवत्। सा लक्ष्मीर्नारायणमुवाचेदम्। अत्यानन्दोऽयं लोकः। यस्मिन् लोके केवलरसनिधिर्मोहनेन रूपेण क्रीडामकरोत्। सा बृन्दावनेश्वरी कोट्यानन्दरूपा यत्र बालकेलिक्रीडां व्यदधात्। तेषां स्थानानि कीदृग्विधानि। गृहाणि कीदृग्विधानि। वद सर्वमानन्दाविर्भावेन। भजनानन्दः सुखं श्रीराधारसिकमोहनमेवं

क्रीडामातनोत् । स होवाच लक्ष्मीम् । नन्दस्य गृहं सर्वसमृद्ध्या-नन्दावधि मणिमयमाधिदैविकेन रूपेण स्वप्रकाशमकरोत् । पद्मराग-मयः कुड्यः । सुवर्णजाम्बूनदप्राकारा वीथयो विराजमाना भवन्ति । यत्र वृषभानुगृहं नन्दगृहाद्योजनायितम् । तस्मात् स्थानात् द्वादश श्रेणयोऽतितरां लघुकोमलमणय एवासन् । तासु श्रेणिष्वनेकशो लताप्रतानिन्य एवासन् । सुवर्णयूथिकाप्रवाळैर्मणीनारङ्गप्ररोहैरानन्द-क्रीडास्थानमनुरचितं भवति । तत्रेदं संकेतस्थानम् । अहो लक्ष्मि किं वर्ण्यते चतुर्योजनायितम् । नन्दवृषभानोर्गृहात् द्वादश श्रेणयो विराजमानाः सङ्केतस्थलादुपरितः । तेषु स्थानेषु मध्यस्थिता अनेकशो विविधलताप्रावारा अभियन्ति । मुक्तालताग्रथिता मणीनां तेजसा प्रद्योतिता अभ्येत्यतितराम् । सहस्रनिकुञ्जा कदम्बलता सुगन्धसंवलितातितरां विस्तीर्णाभ्येति सुभगा कदम्बमञ्जरी । हरितपीतनीलश्वेतशुभ्राः कदम्बाश्च परागोद्धूतपरिधयः सुवासिता आसन् । तद्गन्धलोलुपभ्रमराः संसिद्धाः साधनसिद्धा अनेकशः कोमलकलं यशो गायमानाः सन्ति । कोकिलपिकशुकाः संसिद्धाः साधनसिद्धा अनेककोमलकलं गायमानाः सन्ति । रूपलावण्ययुताः हंसमयूरादयोऽनेकशो रुचिरा भवन्ति । ते तस्मिन् स्थाने रसिकानन्देऽति-मोहनरूपे नित्यं संक्रीडमाना भवन्ति । बृन्दावनेश्वरीनित्यक्रीडाप्रधानं भवति राससखीनां समूहेन दशसहस्राणां समेतानां वृषभानोर्गृहम् । वृषभानुपुरं पूर्णानन्दयुतं प्रेमानन्दयुतं सुखसन्तातियुतम् । सर्वाः समृद्धयो द्वारे तिष्ठन्ति । अष्टमहासिद्धयो द्वारे द्वारे तिष्ठन्ति । अतितरां सुखसंपत्तिः स्वरूपेण सुसेवते । ये ये विद्यासधर्माणः सुभगाः सुरतकलाकामनिद्रालज्जाप्रेमसुरतो-त्कण्ठादयस्ते विराजमाना भवन्ति । अधितत्स्थानं निकुञ्जे मध्ये सुगन्ध-शीतला मणयो ग्रीष्मादिषु ऋतुषु सेव्यरूपाः क्वचित् सुगन्धपारिजाताः

केचिद्वृक्षाश्चम्पकाः सदापुष्पिताः सदा सुकोमलैः पत्रैर्विराजन्ते सुगन्धाः। केचिद्वृक्षाः पक्कफलसुगन्धरसयुक्ता विराजमाना आसते। केचिल्लताप्रकीर्णाः अतितरां सुगन्धयुताः। आमोदगन्धलुब्धा भ्रमरा मुदा गायन्ति। काश्चिद्गोप्यस्तत्र मज्जन्त्य आसते। काश्चिद्गोप्यस्तस्यां वस्त्रालंकरणैर्भूषयांचक्रुः। काश्चिद्गोप्यः प्रेमासक्ता राधारसिकानन्दाभ्यां भोजनं चक्रुः। काश्चिद्गोप्यो दोळां ताभ्यां सह दोलयित्वा गायमाना आसन्। मुदा काश्चिद्गोप्यस्तच्चित्रशालायां स्वानि स्वानि रूपाणि पश्यन्ति हृष्यन्ति रात्रौ दिवानवरतम्। गोप्यो भावाश्रितास्तद्बाललीलां गायमाना भजनं चक्रुः। अत्यासक्ताः प्रेमभजनरूपा आनन्दं विन्दन्ते। ततो गोपास्तथा रसिकानन्दे मग्ना अत्यन्तप्रेमभजनं कुर्वते। ये प्रेमभजने निमग्नास्ते तां लीलामापद्यन्त। नित्यलीलाभजनानन्दोऽयं रसोऽनिर्वचनीयः। नन्दयशोदावृषभानुसत्यादयो ये भक्तास्ते भजनानन्दं नित्यमनुभवन्त्यतितराम्। भूयो भूयः सुखसौष्ठवमभवत। एवं गोपा गोप्यस्तन्मयतां प्राप्नुवन्ति। तासां मातृभावं प्रपन्ना गोप्यो भजनानन्दे भजनमेव कुर्वाणा आसन्। तासां गृहा दिष्ट्यानादिसुखसमृद्धिसंपत्तयो भवन्त्यानन्दसुखसमृद्धिसिद्धयः। नानाभजनयोग्यान्युपकरणानि तदर्थे संपादितानि भवन्ति। गोपगोपिकादीनां समृद्धिसुखं तस्य भजनार्थमेव भवति। अतितरां सुखार्थमेव योग्यतापद्यते। अनन्तसुखसंपत्तितया निकुञ्जदेव्याः स्वावेशेन सुखकोट्यानन्दं प्राप्नुवन्ति। अभियन्ति च सुखसंयोग्यताम्। पृथिव्यां भारते क्षेत्रे आनन्दमयो लोकः स्वसृष्टिलीलार्थं स्वयमेव प्रकटितः। तस्मिन् व्रजलोके सर्वा एव लीलाः सन्ति। ये गोपा गोप्यस्ते आधिदैविकीं लीलामतितरां संसिद्धा अनुभवन्ति। सा लक्ष्मीरुवाचेदम्। रहस्य इह व्रजमण्डले यानि पृथक्स्थानानि तानि ब्रूहि। एकविंशतियोजना भूमिरानन्दमय्येवास्ति।

यमुनाया दक्षिणकूलतो महास्थानं पञ्चयोजनायतं विहारस्थानमतितरां सूक्ष्मं नित्यविहाररहस्यकेलिकलाविर्भावभावितम् । तस्मिन् स्थाने ये वृक्षाः गृहाणि निकुञ्जा अन्यानि विहारस्थानानि तान्याधिदैविकान्यासन् । यो वंशीवटोऽयं साक्षाच्छिवोऽयम् । यो भण्डीरवटः स एव देवेन्द्र आसीत् । तत्र स्थिता ये पक्षिणस्ते साधनसिद्धा आसन् । ते निरन्तरं ताभ्यामासन् । ये तत्र मनुष्या आधिदैविकरूपा एवासन् ते बृन्दावनेश्वरीसमनुगृहीतास्सदा तां लीलां दर्शयन्ति तदनुग्रहतः । यासामज्ञात्वा ज्ञात्वा वा यस्मिन् कस्मिन् भावे भावो भवेत्ता भावेन तां लीलां प्राप्नुवन्ति । यत्र कुत्रापि स्थितोऽपि तद्बृन्दावनोद्भवां मृत्तिकां भक्षयेत् । स एव तां लीलां प्राप्नोति । तत्स्थानोद्भवानां वृक्षाणां पुष्पमालां ये कण्ठे धारयन्ति ते सर्वकृत्यं विधूय तां लीलां प्राप्नुवन्ति । सदा तां लीलां गायमानास्तां लीलां प्राप्ता एव सन्ति । यैः प्रतिक्षणं बृन्दावनं स्मर्यते ते कृतार्थतां प्राप्नुवन्त्यतितराम् । अस्यामाधिदैविकीं लीलां प्राप्तास्तां लीलां गायन्ति ध्यायन्ति । स्नेहासक्ता ये तस्मिन् स्थले निवसन्ति ते पूर्वं तत्सृष्ट्युत्पन्ना एव सन्ति नान्यत्र । तस्मिन् बृन्दावने गोवर्धनोऽयं पर्वतः पञ्चयोजनायतः । त्रीणि योजनान्यच्छिद्रितसप्तशृङ्गाणि निरस्तधातुमयानि । यत्र निरन्तरं श्रीराधारसिकः पुरुषोत्तमः संक्रीडते । यस्य गह्वराणि सुकोमलानि सुगन्धजुष्टानि विराजमानानि भवन्ति । यस्मिन् गोवर्धने स्वयमेव श्रीराधारसिकशिरोमणिः क्रीडां करोति । अतितरामानन्दमयोऽयं पर्वतो यस्मिन् पर्वते रुद्रो रुद्राण्या सह पूर्वं सृष्ट्यादौ तप आतनोत् । येन तपसा शिवः शिवोऽभूत् तत्र रुद्रशिवपुष्करिण्यां ये मज्जनं कुर्वन्ति ते तां लीलां प्राप्नुवन्ति । ये तं पर्वतमुपसेवमाना भवेयुस्तेषामनेनैव शरीरेण लीलायोग्यतास्ति । अनेनैव गोवर्धनाद्रौ कामदुघा या तप आतनोत् सेयं गोविन्दपुष्करिणी ।

ये प्रेममग्नास्तस्यां पुष्करिण्यां मज्जन्ति सेवन्ते ते तां काले काले तस्याः दर्शनयोग्यतामतिप्रेमानन्दप्राप्तिमनुभवन्ति। यत्र मानससरोवरं विधाय मयापि तप आतन्यत। तत्तल्लोकेच्छया अप्सरसा उर्वश्या तस्मिन् गोवर्धनाद्रौ तप आतन्यत। सानुभवोऽयं लोको यत्र यत्र परितः शिलाः श्रीराधाकृष्णनामाङ्कितास्तत्र ताः शिलाः श्रीवृन्दावनेश्वर्यधिवसति। आनन्दमयेन सह ये भक्तास्तस्य परिक्रमं कुर्वन्ति ते तल्लीलादर्शनयोग्यतां प्राप्नुवन्ति। इन्द्रपराजयमहोत्सवे अहमपि ब्रह्मादिना सह तस्मिन् स्थाने दर्शनार्थं गमिष्यामि। अतितरां श्रीराधारसिकस्य क्रीडास्थानं भवति। सा लक्ष्मीः पुनरुवाचेदम्। रहस्यस्थानेऽस्मिन् पर्वते रुद्रेण कस्मिन् काले तपः आतन्यत। तल्लीलां विस्तरशो ब्रूहि। मम मनोऽतिलोलं तस्यां कथायाम्। सुखे कस्तृप्तिं याति। येन तपसा ध्यानेन तद्भावो भवेदतितराम्। अहो अहं तं लोकं श्रोतुकामा। विस्तरेण ब्रूहि। एवं प्रपन्नां हृद्याधाय स्वयमेव नारायण अभिवदत्यतितरामानन्दमयेन चेतसा। स होवाच। शृणु लक्ष्मि अस्य लोकस्य हन्त माहात्म्यम्। अहं वक्तुमशक्तश्च। यस्य श्रीराधिका रसिकानन्दस्य विहारस्थस्य दर्शनालापकथानुभव अतितरां सद्यः सरूपे रमणानन्दे स्नेहाधिक्यं प्रापयन्ति। तथैव ते धन्यास्ते कृतार्थाः। ते अन्य-धर्मरहितत्वेन प्रेमानन्दे प्रीतिमापद्यन्ते। अतितरामासक्तिर्भवेत्। ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा अन्ये जात्यन्तरजाः शतशो जात्यन्तरभेदास्ते प्राप्नुवन्ति। न वर्णेन न धर्मेण येषां लीलारतिरास्ते ते तां लीलां प्राप्नुवन्ति। अन्यभावेनेश्वराविष्टचित्ता अन्यदेव प्राप्नुवन्ति। तद्भावे न कदाचित्तमेव प्राप्नुवन्ति। येषां तल्लीलानुभवो न स्यात तेषामनेकशः साधनानि वृथा स्युः। ब्रह्मविद्यासेविनो ज्ञानिन आत्मवेदनेन तां लीलां न प्राप्नुवन्ति। तस्मात्तल्लीलादर्शनयोग्या भक्ताः स्वभावेन तस्याः श्रीराधि-

काया अनुग्रहात्स्वात्मभावा भवन्ति । शिष्टानुशिष्टस्वेष्टध्यानकथासेवानुभावेन तेषामनुभवकथायामासक्तिः स्यात् । सा संयोक्ष्यमाणा रतिरिन्द्रियार्थे । रतिसञ्ज्ञो भावापन्नो भवति । ये रतिकलनयानुगृह्यन्ते ते तां लीलां प्राप्तवन्तो भवन्ति । सर्वं त्यक्त्वा तल्लीलाया अनुभविनो भवन्ति । अनुभवसंभवस्तदा भवेत् यदा साधवः कृपां कुर्वन्ति रतिर्भवति च । सा लक्ष्मीः पुनरुवाचेदम् । त्वयोक्तं यैषा व्रजवासिनी सृष्टिरद्भुतं स्थानं प्राप्तैवेति यस्मिन् स्थाने गोवर्धनोऽयं राजमान आस्ते । तस्मिन् गोवर्धने रुद्रेण तपो रुद्राण्या सहाक्रियत । पुष्करिणीं विधाय तप आतनोत् । यथायं लोको रुद्रेण तपता दृष्टः स्तुतः कथितो हृदि ध्यात एवायं लोकः सर्वेषां भक्तानां संदृश्यते । सुशोभनोऽयं लोकः सर्वेषां लोकमहालीलाया आवेशेन तेषां भक्तानामनुग्रहं प्रपद्यमानो भवेत् । कथं रुद्रेण दर्शनं प्राप्तम् ? केन साधनेन शिवः सिद्धोऽभवत् ? स एवं गोवर्धनाद्रौ कियत्कालं किंरूपं तपोऽतप्यत ? दृष्टविभवोऽयम् । विस्तरशो ब्रूहि यदि कृपाभावो भवेत् । स होवाच । पूर्वं सृष्ट्यादावेकस्मिन् समये शिवः शिवया वैकुण्ठे तल्लीलादर्शनार्थं गतवान् । तत्र नानासत्त्वमयानि संक्रीडमानान्यनेकशो रुद्रेण दृष्टानि । सर्वा मया क्रीडिताः क्रीडा दृष्ट्वा अनुभूय अतृप्तेन्द्रियोऽभवत् । ममाग्रे स्थितो रुद्रो मम ध्यानावस्थां दृष्ट्वा अत्याश्चर्यवान् अहो साक्षान्नारायणोऽयं परं ब्रह्म । रुद्रादयो यं ध्यायन्ति । रुद्रादयो यां वैकुण्ठाश्रितां लीलामभिलषन्ति । आदित्यादयो यं द्योतयन्ति । यस्य कलावतारान् पृथिव्यां देवा ऋषयः स्तुवन्ति । यं नारायणं ध्यायन्ती तेन रमा सदा क्रीडते । यं गत्वा चतुर्धा मुक्तयो द्वारे तिष्ठन्ति । तद्धाम सर्वेषां देवादीनामपि दुर्लभतरम् । स एव नारायणः कस्य भजनं कुरुते । अत्याश्चर्यं गतो रुद्रो बद्धाञ्जलिः सन् नारायणं स्तौति । स होवाच रुद्रः । नमोऽनन्ताय महते वैकुण्ठाय श्रीमते

तेजोमयाय तुभ्यं नित्यं नमो नमः। तवांशकला या नृसिंहाद्याः रामाद्या अनेकशो लीलामयास्ता ध्यायमानोऽहं शिवतां प्राप्तः। अहमधुनात्याश्चर्यं गतवानस्मि। अहं निरन्तरं तव ध्यानेन विचरामि पृथिव्याम्। त्वं कं ध्यायसि? सर्वं वर्णय तव कृपा यदि स्यात्। इति शिवेन संप्रार्थितोऽहं तल्लोकस्थितिं कथयिष्यन्—शृणु तात अहं नित्यं तल्लोकं ध्यायामि। यत्र निकुञ्जेश्वर्या क्रीडते रसिकानन्दो वनविहारे। यद्रहसि क्रीडास्थानम्। यत्र आनन्दमयकामकेलिकौतुकरतिरासविनोद-कुञ्जाश्च शतशो विराजन्ते। यत्र गोवर्धनोऽयं गिरिः राजमानो भवति। यत्र कदम्बकुञ्जश्रेणयो गह्वराणि रत्नानि धातुमयानि। यत्र पुष्करिण्योऽमृतोदैः पूर्णा विराजन्ते। यत्र मणिगणाकरा ज्योत्स्नातितेजोरूपसंवलित-परस्परवस्तुप्रतिबिम्बिता आसते। तस्य लोकस्य दैवतं श्रीराधिकया सहानन्दरसिकं पुरुषं ध्यायेम। यस्य कटाक्षात् समुत्पन्ना लोकानां ब्रह्माण्डानामुत्पत्तिस्थितिलयान् कुर्वन्ति। अनेकशो विद्या अविद्या देवाश्चासुराश्चानेकशः सृष्टिस्थितिलयान् लभन्ते। यत्र ब्रह्माण्डानि कोटिशो विराजमानानि राजन्ते। तदतितरां सुशोभायमानं ब्रह्मेति पुराविदो वदन्ति। यत्र गत्वा धाम्नि लयं यान्ति योगीन्द्राः। शृणु यदि ते तस्य लोकस्य द्रष्टुमिच्छा वर्तते तर्हि त्वं व्रज। व्रजमण्डले गोवर्धनो गिरिरास्ते। रत्नधातुमयोऽयं पर्वतः। यत्र रसिकानन्दो बृन्दावनेश्वर्या सह क्रीडमानोऽभवत्। परितः क्रीडोपयुक्तानि वनानि द्वादश शोभायमानानि सुगन्धलतौषधिभिः संलग्नानि राजन्ते। यमुनामृतोदकैः क्रीडाविहार-स्थलानि संराजन्ते। यत्र यमुना बद्धोभयतटीविराजमाना भवति। अतितरां पद्मरागपुष्परागचन्द्रकान्तसूर्यकान्तमणीनां तेजोभिर्विराजमानानि जलानि शोभन्ते। यत्र यमुनाया उपरि शतशो वानीरकुञ्जा विराजन्ते।

जातियूथिकामल्लिकासुवर्णयूथिकाप्रकरसुगन्धसंवलितेऽस्मिन् परागधूतोन्मद्राः भ्रमरपिकशुकसारसहंसश्रेणयः शोभायमानाः कलकण्ठैर्निकुञ्जदेव्या यशोऽतितरां गायमाना भवन्ति । यत्र बृन्दावनलीलाया निकुञ्जदेव्याः रमणलीलास्थानम् । यस्य स्मरणादेव रसाविष्टचित्तो भवेत् । बृन्दावनं बृन्दावनं इति प्रतिक्षणं ये वदन्ति ते देहोपाधिं त्यक्त्वा तस्य लीलारतिमनुभवन्ति । तन्ममापि निरन्तरं ब्रह्मादीनामप्यदृष्टगोचरम् । सहस्रयोजनात् ये बृन्दावनं संस्मरन्ति बृन्दावनमिति प्रतिक्षणं वदन्ति ते तल्लीलोपयोग्या एव भवन्ति । यत्र कुत्रापि मृतो बृन्दावनोपासकस्तत्स्थलं तीर्थरूपं भवेत् । ये बृन्दावनोद्भवास्तुळसीकाष्ठाङ्कितमालाः कण्ठे धारयन्ति ते कृतार्थतां प्राप्नुवन्ति । तस्यां लताः सरसा आसते । अतितरां प्रीतिः भवति । ये बृन्दावने वृक्षास्ते आधिभौतिकाः सिद्धाः । साधनसिद्धा इतस्ततो भ्रमन्तीर्लता ओषधिक्रीडास्थलानि कुर्वन्ति । तया देव्या बृन्दावनेश्वर्या त्रयः कोटयः पुलिन्दगणा उत्पादिताः । तेषां बृन्दावनवासिनां देहोच्छिष्टानि मलमूत्रादीनि देहोद्भवानि कफलालामूत्राणि ते पुलिन्दगणा ऊषरे उत्क्षिपन्ति । तेषां भक्तानां दिव्यदेह आधिदैविक एवास्ते । अतितरां सौभाग्याढ्यो भवति । अहो शिव बृन्दावनमाहात्म्यं केन वर्ण्यते ? सेवका यत्र कुत्रापि यत्किञ्चित् भोगार्थे कुर्वन्ति तद्भोगो रसिकानन्देन सह निकुञ्जदेव्या सर्वः संभोक्ष्यते । अतितरां सुखसंभोगस्थानं तत् स्थानं ममापि ध्येयं भवति । अहं निरन्तरं ध्यानापन्नो भवामि । तस्मिन् बृन्दावने मध्यस्थानं निरन्तरं मम ध्येयम् । तस्य स्थानस्य ध्यानेनाहमानन्दस्थानमानन्दावेशेन भवामि । आनन्दध्यानादहं तत् प्रतिपद्ये । अहो शिव त्वमप्यानन्दस्थानमतितरां प्रतियोज्य तदभ्येहि । ध्यानापन्नो भव । रतिरसभावभेदध्यानापन्नो भव । तद्बृन्दावनेश्वरीरूपमङ्गप्रत्यङ्गं रसिकानन्देन सह यो ध्यायति

स एव क्रीडायां मनोभावापन्नो भवति । पुनः शिव उवाच । त्वयोक्तानि द्वादशवनानि । तेषु वनेषु पृथक् पृथक् वद सर्वम् । स होवाच । शृणु शिव वर्णनं वनानां यानि श्रुत्वा व्रजलीलायामत्यन्तसुखिनः संभवन्ति । महावने नन्दस्याधिष्ठानम् । गोकुले गवामधिष्ठानम् । यमुनायां क्रीडाधिष्ठानम् । बृन्दावने स्वामिन्या लीलाधिष्ठानम् । कामवने महालीलासङ्केतस्याधिष्ठानम् । बृहद्वने वृषभानुपुरनन्दपुराधिष्ठानम् । लोहवने पुलिन्दस्याधिष्ठानम् । तालवने उपनन्दाद्यधिष्ठानम् । दधिग्रामे दध्यधिष्ठानम् । गोवर्धनाद्रिपृष्ठे दधिविक्रयाधिष्ठानम् । गोवर्धनाद्र्यधो दानश्रेणिदानलीलाधिष्ठानम् । अयं गोवर्धनाद्रिः रमणलीलाधिष्ठानं भवति ।

अरिष्टे गोगणे कुब्जवटे बृन्दावने तथा ।
गोवर्धनगिरौ रम्ये सृष्टिः सर्वात्मना भवेत् ॥

भोः शिव अस्मिन् स्थाने श्रीराधारसिकानन्दावेव रूपेण सदा रमणं कुरुतो लीलासमेतौ । अत्यद्भुता संसिद्धा लीला सदा गोवर्धनाद्रौ । आनन्दमये स्थाने तप आचर । स रुद्रो रुद्राण्या सह तत्र पुष्करिणीं विधाय तन्नारायणमुखात् श्रुतं लोकस्य ध्यानमकरोत् । किञ्चिद्ध्यानेन ध्यानापन्नोऽभवत् । दशसहस्रवर्षं तल्लोकदर्शनार्थं तप आचरत् । तद्ध्यानेन निकुञ्जदेव्या दृष्टिपथमतिमोहनेन रूपेणानन्ददर्शनमापेदे । घनविद्युदुपमरूपनवीनया जायया सह केलिसम्पत्तिसमवेतं रमणानन्दं क्रीडासमेतमरूपयत् । तद्रूपदर्शनेन समाकुलोऽयं शिवस्त्रिभिर्नेत्रैर्निरूपयन् पुनःपुनः पञ्चभिर्वक्त्रैः स्तुतिमापेदे । उवाचायं शिवः । अं अं अनन्ताय नमो नमः । श्रीं श्रीं श्रीकृष्णाय तुभ्यं नमो नमः । सं सं संभोगप्रियाय नमो नमः । बृं बृं बृन्दावनविहारिणे नमो नमः । कुं कुं कुञ्जविहारिणे नमो नमः । लं लं ललिताविहारिणे नमो नमः । क्रीं क्रीं क्रीडावनविहारिणे नमो नमः । रां रां

राधामनोहारिणे नमो नमः । किंच निरन्तररासक्रीडासक्ताय नमो नमः । सदामनोहारिणे नमो नमः । सदा रतिप्रियाय नमो नमः । सदा गानप्रियाय नमो नमः । सुरतानन्दाय नमो नमः । आलिङ्गनप्रियाय नमो नमः । कूटस्थाय नमो नमः । रमणानन्दसुखदात्रे नमो नमः । अतिभोगप्रियाय नमो नमः । अन्तरात्मने नमो नमः । अतिरतिविहारिणे नमो नमः । अत्यद्भुतचारित्राय नमो नमः । भारद्वाजरूपिणे नमो नमः । रामाय नमो नमः । मोक्षदाय नमो नमः । भक्तप्रियाय नमो नमः । भक्तानन्दप्रदाय नमो नमः । अत्यानन्ददायकाय नमो नमः । सकलकलाकोविदाय नमो नमः । महाक्रीडासुखदाय नमो नमः । महालीलाविहारिणे नमो नमः । कस्तूरीतिलकाङ्किताय नमो नमः । शृङ्गारवत्यादीनां सखीनां सुखदायकाय नमो नमः । मोक्षदाय नमो नमः । स्वच्छन्दोपात्तदेहाय नमो नमः । शोकमोहभयवैराग्यदुःखनाशहेतवे नमो नमः । अन्तर्यामिणे नमो नमः । रसिकानन्दाय नमो नमः । परस्पररासकेलिकलाकौतुकाय नमो नमः । विप्रलम्भसुखप्रदाय नमो नमः । अतिरतिकौतुकाय नमो नमः । अगणितानन्ददायिने नमो नमः । एवं स्तुत्वा तदा रुद्रस्तूष्णीं केवलेन्द्रियस्तद्भावभावितोऽप्यासीत् । सरतिरासीत् । गतव्यथः आसीत् । समचेता आसीत् । स्तुत्वा रसिकानन्देऽभवत् । तया बृन्दावनेश्वर्या स्तुत्या प्रसन्नया वरेण छन्दितः साभिप्रायेण स्तवेन स्तविता त्वं वरं प्रार्थयेति । अकामो वा सकामो वा मद्भक्तो यजमानोऽयम् । वरेण तां प्रति छन्दयित्वा शिश्राय । अहो मयि यदि तुष्यसि तर्हि व्रजलोके क्रीडास्थानं दर्शय । अयं देयो वरो ममाभिलषितः । वरोऽसौ तव भवेत् । तया निकुञ्जदेव्या दत्तो वरोऽयं ते दिव्यं चक्षुर्दत्तवत्यस्मि । त्वं चक्षुषाऽनेन मम विहारस्थलं दर्शयिष्यसि । तस्मिन् गोवर्धनाद्रौ रुद्रस्य

सर्वा व्रजलीला दृष्टिपथे आविरभूवन् । प्रथमं नन्दस्य भवनं कोटिवैकुण्ठव्यापिरत्नकुडचैर्वरमणिस्तम्भैः शोभितमप्यासीत् । अतितरां नन्दगृहं पञ्चविंशतियोजनायतं पञ्चयोजनभूमौ मणिस्तम्भाकुलं बालक्रीडायां रमणयोग्यं यत्र पुरुषोत्तमो रसिकानन्दः संसिद्धलीलां करोति । सा व्रजेश्वरी स्वयमेव देवरूपं विधाय तस्मिन् रसिकानन्दे क्रीडां करोति । यथा पुरुषोत्तमस्य रसिकानन्दस्य संसिद्धप्रकटानुभावस्तथा संसिद्धोऽयं नन्दवसुभिः स्वावेशप्रकटानुभावो वितन्यते । नन्दगृहाद्वृषभानोर्गृहं योजनायितम् । रङ्गवत्यादयः सख्यः प्रेमवत्यादयश्च यशोदायाः समीपे क्रीडोपकरणान्यकुर्वन् । उपनन्दस्य पुत्री विशाखा नाम्ना रसिकानन्दस्य भावाभिज्ञैवास्ते । नन्दस्य वृषभानोर्गृहात् श्रीरसिकशिरोमणिद्वादशश्रेणयः एवासते । रमणस्थानं पञ्चयोजनविस्तीर्णमेवास्ते । अतिरतिरमणकोटिकामपूर्णं जाम्बूनदसुवर्णखचितसुकोमलमास्ते । रमणसरसाः शतशः सुगन्धपारिजातका इव मणयो ललामभूतपरस्परगन्धाढ्या भवन्ति । कल्पद्रुमवृक्षाः वाञ्छितफलदातारो भवन्ति । अतितरां फलपुष्पमणिलताहरितपीतश्वेतशुभ्रभ्रमरसंवलितयोजितानि रतिकलाभावस्थानानि संराजन्ते यमलैर्यमलैः कुञ्जविद्रुमलताग्रथितानि । अतिरसरमणानन्दयोग्यानि शय्योपकरणानि संयोक्ष्यमाणानि भवन्ति । शाखासक्ताः पक्षिणो विराजमाना नानारङ्गैश्चञ्चुपक्षैर्भवन्ति । ते पक्षिणः कलशब्दं समवेता यशो गायमाना भवन्ति । तेषु पक्षिषु केचित् साधनसिद्धाः संसिद्धाश्च भवन्ति । अतिप्रव्रजिताः परस्परगोष्ठीयुक्ता आसतेऽतितराम् । मणिज्योत्स्नापाकृतान्धकारैरतितरां रात्रौ दिवा तेजसा व्यक्तान्यासत । तस्मिन् स्थाने रङ्गवती प्रेमवती रसिकानन्देन सह क्रीडतः । वृषभानुकुमारी ललिता विशाखा अनूराधा चन्द्रकला सुमुखी सुभगा भोगवती सुगन्धाङ्गी रतिमती कामपूरा कामदा

कामाक्षी कलावती हरिणाक्षी हंसगमना श्रृङ्गारवती दृष्टिमोहना जितकामा वशकामा कामवर्धिनी सर्वाङ्गकामा कामदृष्टिः कामकलाकोविदा रतिदात्री रतिसुखसंपत्प्रदा सलज्जा निःशङ्का निर्लज्जा अतिरतिभोक्त्री श्रान्ता सोत्साहा सुरतागमज्ञा वनस्थानज्ञा सङ्केतज्ञा लतावृक्षज्ञा निकुञ्जश्रेणिषु मार्गज्ञा लतापरीक्षाकोविदा मणिपरीक्षाकोविदा अतिसन्धिज्ञा सङ्केतरसज्ञा केकाभिज्ञा पक्षिणां भाषाभिज्ञा पक्षिसंबन्धाभिज्ञा सङ्केतस्थानज्ञा संभावितरसज्ञा शय्योत्पाता खाद्यपेयचोष्यलेह्यरसास्वादज्ञा नानासुगन्धरसभेदज्ञा वस्त्र-सुगन्धभेदज्ञा भूषणज्ञा अङ्गयोग्यभेदाभिज्ञा शृङ्गारयथायोग्यकालाभिज्ञा तालाभिज्ञा गीतज्ञा गीतरसभेदज्ञा तन्तूत्पाद्यरागभेदज्ञा सुगन्धज्ञा अङ्गरसभेद-गुणज्ञा सुगन्धनृत्यभेदज्ञा संपत्तिसुखज्ञा सदारासक्रीडाप्रकटगुणगानको-विदा रासागमसोत्साहा रासलीला वचनसुखदायिनी एताः सख्यो विहार-स्थाने आसते। कुञ्जप्रतिकुञ्जसुखदायिनीषु सखीनां कुञ्जश्रेणिषु सुखसंपत्ति-सुखार्थं विद्रुमश्रेणीया नानाकुञ्जा अतितरां संशोभन्ते। तासु श्रेणिषु पुष्पपरागोद्भूता यवनिकाः संभवन्ति। तत्सृष्टिवेष्टितेऽङ्गभूषणैर्भूषितानि स्थानानि भूषयन्ति। शोभायमानानि रचितयोग्यान्यत्युन्नतश्रेणिषु वियूथानि विराजमानानि भवन्ति। सखीनां समूहाः श्रेणिषु संभोक्ष्यमाणाः क्रियामारभन्ते। द्वादशश्रेणिषु श्रीनन्दस्य श्रीवृषभानोर्गृहात् पृथग्द्वाराणि राजन्ते। तत्र जाम्बूनदसुवर्णभूमिमणिगणचित्रितमध्यस्थलं क्रीडाविहारसं-युक्तं मण्डलाकारं पञ्चयोजनायतम्। यत्र काम आधिदैविकेन रूपेण उपसेवमानो भवति। श्रेणीनां द्वाराणि तस्मिन्मण्डले पृथक्शोभायमानानि सन्ति। एका श्रेणी मणिलतासुगन्धाढ्या सुकोमलातितरां न कोमला न कठिना। अत्यद्भुतसुरचितायां बृन्दा सखी आस्ते। तयातितरां तस्य सेवार्थे श्रीराधिकायाश्च रचिता शय्यैवास्ते। तत्र तस्मिन्

मणिलतान्तरे चतस्रः श्रेणयः शोभायमाना भवन्ति । तासु श्रेणिषु चतस्रः पुष्करिण्य आसते । एका पुष्करिण्युष्णोदकेन पूर्णैवास्ते । एका पुष्करिणी सुगन्धशीतजलैवास्ते । एका पुष्करिण्यमृतोदकेन पूर्णैवास्ते । तत्र मज्जनस्थानमत्यन्तशोभायमानं चतुःसरं यत्र मणीनां द्वादश शृङ्गाणि शोभायमानानि भवन्ति । एकस्माद्गृहादन्तःसुगन्धतैलागुरुरसकर्पूरमृगमदकेसररसाः शतशः पुष्पलतापत्रत्वक्पयोभिः सुगन्धितेषु रसेषु संपूरिता भवन्ति । मज्जनक्रियोपयोग्याः सखीनां समूहाः मज्जनं कारयन्ति । नानाजलकेलिसुखसंपत्तिर्मज्जनावती तन्मज्जनेऽतितरां सरतिरास्ते । जलसंपत्त्यै अतितरां सुजलकल्लोला सखी उपसेवते । तत्र हंसीहंसाः सारसाः पक्षिणोऽग्रेऽग्रे क्रीडन्ति । अतितरां जलकेलिकल्लोलकर्मकरणादनन्तरं तत्राधिदैविकेन रूपेणाग्निरत्यन्तसुखदायकरूपेण सेवते । अतितरां सूक्ष्मस्वरूपकिरणैः सूर्यरूपः सेवमान आस्ते । अङ्गरागसंपूर्णमङ्गरागस्थानम् । मन्दिरमत्यमृतमङ्गसुखदायि शोभायमानमभ्येति । यत्र चन्द्रकिरणाः शोभायमाना आसते । सूक्ष्मतरतेजसा सेवमानाः आसते । तत्र रङ्गवत्यो नानाङ्गरागं प्रकुर्वन्ति । अतिसुखदायिनोऽतितरामङ्गरागाः शोभायमानाः सुखभोगा आसते । शोभते तृतीयं शृङ्गारगृहम् । यत्र गृहात् गृहन्तरात् द्वाराणि शोभायमानानि भवन्ति । तत्र सखीनां सञ्चार आस्ते । अतिरतिसञ्चरिताः सख्यः सुखदायिन्यः शृङ्गारमधिकुर्वन्ति । प्रथममगुरुवासितकबरीसुगोप्यमानानि मन्दारपारिजातपुष्पाणि शोभायमानान्यातन्वन् । तत्कालं मण्डलेन गुम्भितकेशपाशः शोभते । क्षुद्रघण्टिकाशब्दसूक्ष्मतरसंभाविता बृन्दावनेश्वरी प्रीयमाणा भवति । सीमन्तो नानामणिमुक्ताग्रथितजाम्बूनदसुवर्णखचित एवैति । मेघोपरि चन्द्रज्योत्स्ना इव नक्षत्रगणा विराजन्ते । स्यूतपुष्पसुवर्णजटितमणिमुक्ता-

खचितान्तरज्योत्स्नाभाविता: शोभायमाना आसते । कुटिलजटितज्योत्स्नाभिः अभ्रच्छायाकर्वुरितचन्द्र इवास्ते । कर्णकुण्डलज्योत्स्नारुचिमण्डलं कुण्डलयुगळम् । ललाटं तिलकहाटकहीरकमणिज्योत्स्नाभिरतितरां जटितं संराजते । मणिभ्रुवौ विजयकामकार्मुकखण्डलते इव संविराजेते । नेत्रे चितखञ्जनमीनचातुर्यं जितवती । नासा कनकमुक्तायोजिता संराजते नितराम् । नासाभरणनीलपीतरक्तमणिज्योत्स्ना राजमाना नासामभ्येति । अतिरतिबिम्बाधरोष्ठौ विद्रुमरङ्गरञ्जितावास्ताम् । हीरकावलीघटितमुक्ताफलज्योत्स्नाभिः रञ्जितमध्यचिबुकं मुखमण्डलं सलाञ्छनं चन्द्रमण्डलमिवास्ते । घटितकोमळमुक्तावलीकौ कुचकुंभौ हाटकमणिज्योत्स्नाभिः पुष्पपरागपरीताविवास्ताम् । भुजलताकरकङ्कणमरकतज्योत्स्नाभिर्हस्ताङ्गुलिमुद्रिकाजटितमणितेजांसि राजमानानि सन्ति । नाभिह्रदकुहरे लोक इव आशङ्क्यते । कटिमेखलाक्षुद्रघण्टिका: कामदेवदुन्दुभिभूषणानि भवन्ति । नागेन्द्रहस्ता अतितिरस्कृता एव त्वचि कर्कशत्वेन । कदलीस्तम्भाः एकान्तशैत्येन तदूर्वोरुपमानबाह्या एवासन् । चरणकमलौ नूपुराभ्यां शोभायमानावास्ताम् । आपद्यमाना आसेदुष्यो विशदचरणाङ्गुल्यः शोभायमानाः भवन्ति । गतिरतिविलासवत्यास्ते । रङ्गवती सखी वानीरश्रेणिनिकुञ्जे रसिकानन्दस्य शृङ्गारं दर्शयन्त्यास्ते । श्यामहिरण्यपरिधिवनमाल्यबर्हाद्योतितमुक्तावली शोभते । धातुप्रवालनटवेषविचित्रिताङ्गशोभाढ्या सन्निकृष्यन्त्यासीत् । मकराकृतिकुण्डलौ शोभायमानमाननमतनुताम् । कनककपिशं वनमालया विराजते वेणुवादनकलरवकलापकलितं पीताम्बरम् । तस्मिन् मध्यस्थाने चतुर्धा श्रेणयः विद्रुमलतालवङ्गलताग्रथिताः । वृक्षाग्रग्रथिताभिः श्रेणिसञ्चार आस्ते । तस्यां श्रेण्यां मध्ये एकं शय्यामन्दिरं मणिकुञ्जघटितं विराजते । पुष्परागमणिना खचितज्योत्स्नाभिः संवलिताः प्रतिबिम्बिताः

मणयोऽतितरां राजमाना भवन्ति । रङ्गवती प्रेमवती नन्दगृहं सकलशृङ्गार-भूषणैर्भूषितं रसिकानन्दमतिप्रेम्णा आनयति । अत्यन्तानन्दमग्नान्यानन्द-रसेन वनान्युत्फुल्लितानि संसिद्धानि कोटिशः । सखीनां समूहाः कोटिशो गीतानि गायन्ति । तासु श्रेणिषु परस्परसञ्चाराय सखीनां मार्गा आसते । मार्गे मणिद्योतिताः परिधयो राजमानाः शोभन्ते । एका पञ्चमी श्रेणी पुष्पिता नानारङ्गरचिता आस्ते । पुष्पाणि फलानि लतायां सन्ति । अनेकमणिलताप्रवरज्योत्स्नापुष्पलता आरक्ता एवासते । पुष्पितवृक्षाणां सुगन्धमणिलतानां परस्परज्योत्स्नासंवलितवीथयो विराजन्ते । अमृतफल-फलिता वृक्षा अतितरां पीतरक्तरञ्जितनानाज्योत्स्नाः परस्परमतितरां शोभायमाना भवन्ति । अतिस्वादूनि मधुराणि फलानि नम्राणि सन्ति तेषाम् । तेषामधः सूक्ष्माः पुष्पलता नानारागरञ्जिता एवासते । तासां लतानामधः शय्यारचिता रमणानन्दसुखसंभोगायैवातितरां सुगन्धपुष्पसिकतारचिताः योग्या नानास्तरणैः संवलिताः कामरसपोषका एवासते । तासु श्रेणिषु विचित्रशाला अनेकशः संराजमाना भवन्ति । तासु शालासु सूक्ष्माणि सुगन्धमणीनां गृहाणि संराजन्ते । तेष्वन्तर्नानाभक्ष्यभोज्यानि वस्तून्य-तितरां सौष्ठवेन राजमानानि प्रकाशन्ते । अन्यतो रचिता शय्या विविक्ता आस्ते । यत्र सा वृषभानुसुता सुरतानन्दश्च संभाषेते । तस्मिन् क्रीडामण्डले षष्ठी श्रेणी मणिप्रेष्ठैर्विराजमाना भवतितराम् । द्वारं त्वारक्तमणिखचित-यन्त्रकवाटस्थलहाटकजटितमणिराजिराजमानं भवति । तत्र षड्तवः संलग्नाः सेवन्तेऽतितराम् । यत्र ग्रीष्मोऽयं ऋतुः तत्र शीतलजलाः पुष्करिण्यस्तट-भूमिरत्नकुटीचन्द्रकान्तमणिजलयन्त्राणीवासीदन्ति । यत्र हंसीनां यूथानि क्रीडां कुर्वन्ति । अन्ये पक्षिणः देववाण्या परस्परसुखमनुभवन्त आसते । भोगताम्बूलाद्या अतितरां तस्मिन् स्थाने आसते । श्रेणिसप्तमद्वारमतितेजो-

मयमुत्तरा शतं मन्दिराणि एकावल्या सन्ति । दक्षिणतः शतं मन्दिराण्येकावल्या राजन्ते । यत्र सखीनां यूथानि तेषां स्थानानि क्रीडाविहारस्थलानि योज्यमानानि संभवन्ति । यत्र ललिता विशाखा अन्याश्च शतशः सख्यो रतिप्रेमानन्दस्थाने रमणानन्दयोग्या भक्तास्तिष्ठन्ति । यस्यां श्रेण्यां गृहं गृहं प्रति अष्ट सिद्धयो मूर्तिमत्यः संराजमाना आसते । अनेकशो भूषणैर्भूषिता अलं गोप्यस्तेषु गृहेषु क्रीडां कुर्वन्ति । नानारसा नवनीतरसाः राधास्वादितमिष्टरसा अनेकरसास्वादसुखदाः सन्ति । दुग्धफेनानेकभोगाः सुखसंभोग्या भवन्ति । तेषु आस्तरणयुक्ताः शय्याः शतशो राजमानाः भवन्ति । तेषु स्थानेषु सुरतानन्दप्रेमानन्दमग्नाः सख्यस्तदुपकरणरसं सङ्कलयन्ते । अष्टमी श्रेणिः आम्रकदम्बकदळीचम्पकाशोकपुन्नागरोध्रमन्दारपारिजातकल्पकनीपनीरवटन्यग्रोधोदुम्बरजम्बूवृक्षसरलशिंशुपाखदिरवकुलपिप्पलश्लेष्मातकबदरीतालतालीवनमधुरशाखालवङ्गैलाजातीत्वक्पूगनालिकेरमातुलङ्गक्रमुककण्टकिनोऽनेकशः वृक्षाः पुष्पलताग्रथिताः केतक्यः अमृतवल्ल्यमृतफलैर्ग्रथिता अनेकपुष्पगुच्छलताग्रथिता वल्ल्यो वसन्ते वासन्तीपल्लवैः योग्यास्तस्मिन् कदम्बवने निर्भरसेचनरससङ्कुलिता अनेकलताग्रथिताः सुवर्णालवालश्रेणयो ग्रथिताः जलपुष्करिण्य इवागाधजलपूरिता एवासते । पट्टडोरिग्रथितसुवर्णघटिको जलप्रवाहो जलयन्त्रमुखाविर्भूतो भवति । तत्र मध्ये पुष्करिण्यां रत्नखचिता मुक्ताखचिता द्वार्जलयन्त्रशीकरैराविष्टा भवति । नवमी श्रेणिर्जलेन सिच्यमाना अनेकजलक्रीडोपकरणा संयोक्ष्यमाणा भवति । क्वचित्सूर्यवंशीकमलानि क्वचित्सोमवंशीकमलानि विराजमानानि । तस्य मध्यस्थले वानीरकुञ्जे यमुना जलकल्लोलवती रत्नबद्धोभयतटी राजमाना भवति । यत्र वृक्षशाखा जलस्पर्शाद्दोलाविद्रुमलता भवन्ति तत्र बृन्दावनेश्वरी रसिकानन्देन सह दोलायामेति । ललिताद्याः सख्यः संगायन्त्यो

भवन्ति । तत्र मयूरकोकिलहंससारसविहगाद्याः सञ्ज्ञायमाना गुणगणनायुताः भवन्तितराम् । दशमी श्रेणिः रसिकानन्दस्य कन्दुकलीलाधिष्ठानस्थानं प्रति योजनायतं सुवर्णभूमिजटितखचितं पद्मरागमणिगणावलितं भूमिरचितं रङ्गश्रेणिविराजितमतितरां शोभते । अतिविविक्ते तस्मिंस्थाने कन्दु-कलीलया सुशोभमानं स्थानम् । ताः सर्वाः सख्यः कन्दुकलीलायां कन्दुकलीलापरस्परस्वमर्यादा नातिक्रामन्ति । श्यामा रसवती ललिता शृङ्गा-रवती रङ्गवती कलावती गुणवती गानवती कुञ्जवती सुश्रोणी चन्द्रमुखी चन्द्रलेखा ताः सर्वाः सख्यः कन्दुककेलियष्टिं गृहीत्वा स्वमर्यादाः नातिक्रामन्त्यः क्रीडन्ति । रसिकानन्दशिरोमणिः स्वयमेव कन्दुकयष्टिं गृहीत्वा क्रीडति । विशाखा चन्द्रलेखानूराधा अतिरतिज्ञा रमणानन्दज्ञा सुरतोपदेशा सुरतकलाकोविदा गानवतीत्येताः सर्वाः सख्यः कन्दुकयष्टिं गृहीत्वा श्रीराधिकायाः कन्दुकमर्यादामनतिक्रम्य कन्दुकं नयन्ति । एवं परस्परं स्वं स्वं मर्यादया कन्दुकं नयन्ति । यदा श्रीराधिकया सह रसिकानन्दः कन्दुकव्याजेन क्रीडामनुभवति तदा ताः सर्वाः सख्यो जयशब्दमुदीरयन्ति । अन्याः पुष्पवत्यादयः सख्यः पुष्पवृष्टिं कुर्वन्ति । तस्मिन् क्रीडास्थाने एकं मन्दिरं प्रेमवत्या सुरचितं सर्वभोगाढ्यं मनोरममस्ति । प्रेमवती प्रणिपातपुरस्सरं श्रीराधिकया सह रसिकानन्दं श्रमापनोदार्थं नयति । तत्र भोगवती सर्वभोगान् गृहीत्वाऽग्रतस्तिष्ठति । तत्रान्तः सुरचिता सखी सुभगां सर्वभोगान्वितां शय्यां रचयित्वा प्रश्रयावनता श्रीराधिकया सह रसिकानन्दं नयति । तत्र मनसि सोत्साहं करोति । तत्र रहसि चतस्रः सख्यः सुसेवमाना भवन्ति । सुकामा अलज्जा सुरतोद्गमा सुरतानन्दा सेवमाना भवन्ति । अन्या ललितादयः सख्यस्तत्सुखं निरीक्ष्यातिरसमग्नास्तां लीलां गायमाना भवन्ति ।

तदा लीलान्ते चतस्रः सख्यः सेवमाना भवन्ति । निद्रालसा संमीलिता सुसुखा गतत्रपा सुसेवमाना भवन्ति । तत्र जाताः सुलज्जा भोगवती गानवती सुसेवमाना भवन्ति । एवं कन्दुकलीलायाः सुखं प्रत्यवसरं श्रीराधिकया सह रसिकानन्दः सुसेवते । तत्र सहस्रनिकुञ्जैर्ग्रीष्मर्तुः सेव्यमानो भवति । रत्नजटिताः पुष्करिण्यः सुवासितैः सुजलैः संपूर्णाः भवन्ति । तत्र नम्रा वृक्षाः परितः पुष्पैः फलैः संपूर्णा भवन्ति । तत्र रसिकानन्दः श्रीराधिकया सह जलक्रीडां करोति । तत्र मज्जनवती तरङ्गिणी जलकल्लोला प्रेङ्खितवती सेव्यमाना अगाधजला नौकावती सुप्लवनवती जलाभिज्ञा सुलहरी हस्तपल्लवा एताश्चान्याः सख्यः श्रीराधिकया सह जलक्रीडां कुर्वन्ति । तत्र जलक्रीडाव्याजेन रसिकानन्दो नानासुखं करोति । तत्र जलक्रीडान्ते श्रृङ्गारवती सखी श्रृङ्गारस्थानं नयति । तत्र पुष्पवती पुष्पमण्डनं रचयति । एवं ग्रीष्मलीलां नानासखीभिः सार्धं रसिकानन्दः श्रीराधिकया सह संसेवमानो भवति । ततः प्रावृल्लीलाया अनुभवः कथ्यते । सहस्रनिकुञ्जैः प्रसारिता प्रावृडानन्दमयी भवति । मेघा नानारूपाणि विधाय मणिमयभूमिं जलैः सिञ्चमाना हरितशाड्लैः शोभायमानां कुर्वन्ति । मयूरपिकहंससारसयुताः पक्षिणः नानाकलशब्दैः कुञ्जान्तरं सेवमाना भवन्ति । कौसुम्भासुरञ्जाक्षणिकाप्रद्योतिताः सोत्साहाः सख्यः रसिकानन्दं श्रीराधिकया सह सेवन्ते । नानावृक्षा लताभिर्ग्रथिताः पुष्पैर्नम्रा भवन्ति । तत्र रसिकानन्दः श्रीराधिकया सह नानावेषैः श्रृङ्गारानुभवैः सुरतानन्दसुखं भुञ्जमानो भवति । प्रावृल्लीलां निरीक्ष्य ललितादयस्तां लीलां सञ्जायमाना भवन्ति । ततः शारदलीलायाः सुखं संवर्ण्यते । सहस्रैर्निकुञ्जैः प्रसृता शरत् प्रद्योतमाना भवति । यत्र सर्वाः लताः प्रफुल्लिताः सर्वे वृक्षाः प्रफुल्लिताः सर्वासां सखीनां मनांसि

प्रफुल्लितानि भवन्ति। यत्र शारदनिकुञ्जाः प्रफुल्लिताः तत्र मध्ये नित्यं रासमण्डलं सदा रसिकानन्देन सेवितम्। यत्र श्रीराधिका स्वसखीभिः सार्धं नित्यानन्दलीलां करोति। तन्मण्डलं पञ्चयोजनायतं नानारङ्गभणिस्तंभ-शतशोभितं नानालताभिः पुष्पिताभिराच्छादितं परितः द्वादशश्रेणि-संवलितम्। तासु श्रेणिषु अनेकशः सख्यः संशोभमाना भवन्ति। प्रथमश्रेण्यां ललिताविशाखादयः सख्यः नानाविधान्युपकरणानि कुर्वन्ति। द्वितीय-श्रेण्यां प्रेमवत्यादयः सख्यः राजमाना भवन्ति। तृतीयश्रेण्यां शृङ्गारवत्या-दयः सख्यो नानालंकारसुखरूपा अनेकशः शृङ्गारं कुर्वन्ति। चतुर्थश्रेण्यां भोगवत्यादयः सुगन्धवत्यादयः सख्यो नानाभोगरसान् रचयन्ति। पञ्चम-श्रेण्यां पुष्पवत्यादयः सख्यो नानाविचित्राणि माल्यानि कुर्वन्ति। षष्ठश्रेण्यां भूषावत्यादयः सख्यो रत्नजटितानि हाटकमयानि मनईप्सितानि रचयन्ति। सप्तमश्रेण्यामन्नपूर्णाद्याः सख्यो नानान्नमयरसान् पाचयन्ति। नानाविधानि पक्वान्नानि प्रतिक्षणं नूतनानि पाचयन्ति। अन्या रसभेदान् रचयन्ति। अष्टमश्रेण्यां सुगन्धवत्यादयः सख्यो नानासुगन्धान् रचयन्ति। गानवत्यादयः सख्यो गानं कुर्वन्ति। तन्तुवादिन्यादयः सख्यस्तालैः सुगानं कुर्वन्ति। नवमश्रेण्यां विलाससुरतरङ्गवत्यादयः सुरतानन्दादय अभिनव-कला आसनभेदान् सङ्गीतसाहित्यकलाकुशलाः सख्य ऋग्यजुस्सा-माथर्वणवेदरूपाः सख्यो नानास्तुतिभेदैर्गुणगणनां कुर्वन्ति। एकादश-श्रेण्यां रङ्गवत्यादयो रङ्गरसभावान् नानाविचित्राणि वचनानि नम्राणि प्रेमोत्पादकयुतानि श्रावयन्ति। द्वादशश्रेण्यां सखीनां विविधसञ्चार आस्ते। तस्यां श्रेण्यामन्तर्भागे चतस्रः श्रेण्यो विराजन्ते। तत्र गृहाणि शतशो हाटकमणिखचितानि संरोचमानानि भवन्ति। रत्नविथिषु योज्यमानाः श्रेणयः सुवर्णयूथिका अतिसुगन्धा मुक्तायूथिका अतितरां राजमानाः

भवन्ति । तत्र तरुपुष्पाणि नानारङ्गमयानि सुगन्धाढ्यान्यनेकशो राजमानानि भवन्ति । तस्यां हरितपीतारक्तरक्तलता अनेकशः शोभाभेदैरत्यन्तं राजमानाः आसते । मणिलता आन्तरैर्मणिपुष्पैः संराजमाना भवन्ति । तासां लतान्तः सूक्ष्मलताः पुष्पिता राजमाना आसते । तासु श्रेणिषु सखीनां रमणस्थानानि सुरच्यमानानि गुणगन्धाढ्यानि रूपप्रतिकृतियुतान्यतितरां भवन्ति । सा श्रेणी श्रीराधाया अतितरां वल्लभा आस्ते । यदा गृहवनविहारेच्छाविर्भवति तदा तस्यां श्रीराधा स्वयमेव विचिन्वती स्वयमेव पुष्पहारावलीं ग्रथयति । रसिकानन्दः पुष्पाणि चिनोति । हरितपीतश्वेतारक्तपुष्पगुच्छैर्ग्रथितां हारावलिं श्रीराधायाः कण्ठे स्वहस्तेन परिधापयति । सा अतितरां विराजते । तस्यां श्रेण्यामेकं मन्दिरं गुप्तक्रीडास्थलं महातेजोमयं मणिमयसप्तभूमिकं संराजमानं भवति । एका भूमिः कनकमयी । तदुपरि रत्नसोपानसंवलिता भूरारक्तमणियुता भवति । अनेकरङ्गरञ्जितान्तरा सोपानपरम्परा संराजमाना भवति । तदुपरि भूः पुष्परागरचितातितरां सुशोभाढ्या भवति । तत्र सोपानपरम्परा शोभायमाना भवति । तदुपरि सोपानपरम्परा रत्नावलीखचिता नानारङ्गैः सुरचिता जाम्बूनदसुवर्णभूषिता परस्परसुगन्धसंवलितैवास्ते । सुरचितमणिवल्ली पुष्पपरागपरिधिमतितरां करोति । तदुपरि चन्द्रकान्तरचिता तत्सकाशात् चतुर्थी भूमिर्जलशीकरसंयोगिनी भवति । जलयन्त्रशीकरकणिकामयैः सुगन्धजलैः पूरितायां पुष्करिण्यां ग्रीष्मादौ श्रीराधिकया श्रीरसिकानन्देन च सुरतानन्दसुखमनुभूयते । यत्र सुखमनुभवन्तावासाते तत्र मणिलताग्रथिता विद्रुमदोलास्ते । रत्नजटितदोलायां मणिज्योत्स्नाः प्रतिबिम्बभावापन्ना एव भवन्तितराम् । तदुपरि सोपानपरंपरा मणिग्रथिता भवति । तदुपरि सुगन्धमणिरसवलिता भूः संराजमाना आस्ते । तत्र भूम्यां सूर्यचन्द्राग्नि-

देवता आधिदैविकेन रूपेण सखीरूपं विधायोपसेवमाना भवन्ति। तस्यां भूम्यां सुरतानन्दसुखमनुभवन्तो भवन्ति। श्रीराधिकायाः रसिकानन्देन सह देहात्समुत्पन्नाः सख्यो दृष्टवती कलावती सोत्साहा प्रेमसंवलिता लज्जावती गुणवती गुणाढ्या भवन्ति। अन्या अनेकसख्यो रतिसुखमनुभवन्त्यो भावापन्ना भवन्ति। तदुपरि सोपानपरम्परा चत्वरे आस्ते। अत्यन्तसुखश्रेणिसञ्चारा सोपानपरम्परा रत्नावलीभूषिता भवति। रतिसुखसंपत्तिप्रतिकूजा अनेकभूमयो योजिताः। एवंविधं मण्डलं द्वादशद्वारयुतम्। द्वादशद्वारे द्वादश श्रेणिसञ्चारा भवन्ति। अतः परम्पराश्रेणिसञ्चारो भवति। तन्मण्डलं यदेतत् षड्गुणप्रसिद्धं भवति। षड्गुणाः षडृतवः उपसेवमाना भवन्ति। एतस्मिन् मण्डले पूर्वतः सखीरूपं विधाय सूर्यः सुकोमलैः किरणैरुपसेवमान आस्ते। तस्य मण्डलस्योत्तरतश्चन्द्रः उपसेवमानो भवति। एतस्मिन् मण्डले पश्चिमतोऽग्निराधिदैविकेन रूपेण उपसेवमानो भवति। ग्रहास्तास्तारका अन्यानि नक्षत्राण्याधिदैविकं रूपं विधाय सदा उपसेवमाना भवन्ति। इन्द्रोऽपि सखीरूपं विधाय देवाङ्गनाभिः सह विमानावलीषूपविश्य सदोपसेवमानो भवति। पितामहोऽपि सूक्ष्मरूपं विधायान्तरिक्षे तल्लोकदर्शनाकाङ्क्षो भवति निरन्तरम्। अन्ये दिक्पालाः संसिद्धा निरन्तरमाधिदैविकेन रूपेण तन्मण्डलमुपसेवमानास्तन्मण्डललोकानन्दमग्ना भवन्ति। तन्मण्डलोपासका भक्ता अन्यं न भजेरन्। अन्यधर्मासक्ता इदं मण्डलं न जानन्ति। सा लक्ष्मीः पुनरुवाचेदम्। ये मण्डलमुपासते ते किं कर्म कुर्वन्तो भवन्ति? स होवाच। तेऽनन्योपासकाः भवन्ति। अनन्यभजनसिद्धा आत्मभावा भवन्ति। आत्मभावा मण्डलमुपासते। आत्मानात्मभावो भवेत्। अतितरामात्मानन्दे मग्ना अन्यरसं न भावयन्ति। आत्मानन्दे मग्ना अभक्तान्न स्पृशन्ति। आत्मानन्दे

मग्ना आत्मभावा भवन्ति । नान्यं शृण्वन्ति न नमन्ति न गायन्ति । ते भक्ता आत्मरसभाविता आत्मनो रतिरसभावनयानन्दं शृण्वन्त्यानन्दं गायन्ति । आनन्दयुता भक्ता अतिरसमग्ना गुणान् गृणन्ति । अतिरस-मग्नास्तदुच्छिष्टमुपभुञ्जते । अनुच्छिष्टं कदाचिन्न भुञ्जते । तन्मण्डलोपासकाः भक्ता अभक्तान् न स्पृशन्ति । ये अन्योपासका भक्ता आनन्देऽनाश्रिताः कर्मजडाः कर्मकाण्डोपासका एव ते । अग्न्युपासका ये ब्राह्मणा ब्रह्मवर्चसो-पासका एव ते । तेषां संभाषणं तन्मण्डलोपासकः प्रमादेनापि न कुर्यात् । ये अन्यधर्मरहिता अन्यासक्तिरहितास्ते तन्मण्डलं प्राप्नुवन्ति । अन्य-धर्मरहिता एव प्राप्नुवन्ति । अन्ये आत्मानं न विदुरात्मना । किं बहुनोक्तेन धर्मेण । ये ब्राह्मणा अन्यविद्योपासकाः कर्मजडाः कर्मकाण्डो-पासकाः कालोपासकाः कर्मधर्मदेवपित्रुपासका एव भवन्ति ते । ये शैवाः शाक्ताः सुरामांसरताः कौला जैनाः पातञ्जला मीमांसकाः जडतां प्राप्ताश्चार्वाका अन्यधर्मदृढासक्ता भवन्ति । ये तां व्रजेश्वरीं रसिकानन्देन सहोपासते सदानन्दरसमनुभवन्तो भवन्ति । रतिकला-कोमला गुणगणनां कुर्वन्ति । तमेव रसं गायन्तो भवन्ति । अतिरतिमापद्य-माना भवन्ति । ये दर्भं हस्ते गृह्णन्ति ते तं रसं न प्राप्नुवन्ति । तिलाञ्जलिं पितॄणां ये ददति ते तन्मण्डलं न प्राप्नुवन्ति । देवाश्चासुराश्च कर्मकाण्डोपासका एवेति, देवाः सद्विद्योपासका वैष्णवा एवेति, गुणातीतास्ते बृन्दावनेश्वरीमुपासते । रसिकानन्देन सह उपसेव्यमानमभियन्ति । अतिगुणमग्ना रात्रौ दिवा सदा सुरतानन्दसुखमनुभवन्तो युज्यन्ते । रतिकलाकौतुकानि संभोक्ष्यमाणा भवन्ति । भक्तानामनुग्रहात् भगवान् रसिकानन्दोऽनुग्रहं करोति । ते मण्डलं विदुः । ये व्रजमण्डलं सेवन्ते ते मण्डलं जानन्तोऽन्यासक्तिं विना मण्डलासक्तिं कुर्वन्तः सदा सर्वलोक-

रसलीलायामासक्ता भवन्ति । ये मनोरथशतैः रात्रौ दिवा तल्लीलाः ग्रश्नन्ति ते तन्मण्डले भावापन्ना भूत्वा प्रतिष्ठितचित्ता भवन्ति । तन्मण्डलं श्रुत्वानन्दमासीदन्ति । सा लक्ष्मीः पुनरुवाचेदं नारायणं तदा । रमारमण वैकुण्ठे यो वै क्रीडयित्वात्मभावो भवतितरामतिप्रीत्या नारायणोऽयं वदत्यभीष्टमनन्तरम् । अन्त्ये व्रजमण्डले पञ्चयोजनायतं मण्डलमस्ति । अधितन्मण्डलमासेदिवान् रुचिररतिमातनोति । यत्र शतशो गृहाणि हाटकमणिमयानि सहस्रपङ्क्तयोऽतितरां श्रेणयो विराजमानाः भवन्ति । येषु मन्दिरेषु सप्तभूमिष्वतितरामभ्येत्य मनुष्या रतिरसमग्नाः भावापन्ना भवन्ति । मणिभूमिष्वतितरामास्ते पुरुषः । तत्र गोपानां गृहाणि पङ्क्तिशो विराजमानानि भवन्ति । गोपानां गृहे गृहे अष्टमहासिद्धयो राजमानाः सन्ति । तेषां गृहे गृहे कल्पद्रुमा राजमाना एव भवन्ति । तेषां गृहाश्रमः केवलं क्रीडार्थमेव भवति । तेषामात्मसुखार्थमेव न भवति । कदाचन तेषामतिरसक्रीडा । अतिरसमग्ना हि संसिद्धा एवेति ते गोपाः गायन्ति रसिकानन्दस्य यशः । व्रजेश्वर्या सह सङ्क्रीडमानो मानेन रसिकानन्दो गवां यूथान्यनेकशो हरितपीतश्वेतशुभ्रधूम्राताम्राणि विराजमानान्यनुयाति । कपिलाकज्जलिकाशुभ्राशुभ्राभ्राजमानानि यूथान्यनेकशो राजन्ते । यूथेषु प्रतिपङ्क्ति घटोध्नीः शतशो राजमानाः सा व्रजेश्वरी प्रतिक्षणमभ्येति । गाः कृपादृष्ट्यासेदिवान् संपोष्यमाणो भवति । सिद्धाभं पञ्चयोजनायतं गवाममृतमयं मण्डलम् । गवां गणा गोपैः सह सङ्क्रीडिताः भवन्ति । तत्र दुग्धसिन्धुरास्ते । वत्सवत्सतरीसहिता महोक्षाः सङ्क्रीडमानाः भवन्ति । तत्र मलमूत्ररहिता गावोऽमृतरसं संभुञ्जाना भवन्ति । तत्र तत्र ता गावः कुञ्जे निकुञ्जे क्रीडमाना भवन्ति । अतिरतिमग्ना गावः क्रीडापरा भवन्ति । नन्दगृहात्परितो गवां गणाः कोटिशः शोभमानाः

भवन्ति । ताः सर्वा गोप्यो दधिमथनक्रियापरा रसिकानन्दस्य व्रजेश्वर्या सह क्रीडां तां तां लीलां गायमाना भवन्ति । सा लक्ष्मीः पुनरुवाचेदम् । कामदुघया किं तप आचरितम् ? अतिरतिप्रीतिः कथमभूत् ? यासामेव दुग्धदधिनवनीतरसा घृतरसास्तया निकुञ्जदेव्योपसेव्यमाना वृषभानुगृहे प्रकटिता भवन्ति । निकुञ्जदेव्या सह तस्मिन् गृहे पुरुषो ह वै सङ्क्रीडामातनोत् । तस्मिन् गृहे गवां गणाः शतशो राजमाना भवन्ति । ताः किमाचरितवत्यः किं कृतवत्यः कामापेदिरे रतिप्रीतिं कथमासत ? किं शृण्वन्त्य आपेदिरे ? स होवाच नारायणोऽयम् । गवां भेदौ द्वावेव भवतः । संसिद्धाः साधनसिद्धाश्च । या गावो व्रजमण्डले तिष्ठन्ति ताः संसिद्धाः भवन्ति । एकस्मिन्नवसरेऽहं तां व्रजेश्वरीं रसिकानन्देन सह संवलितां तस्मिन् व्रजमण्डले मनसासेदिवान् । कामदुघा या तप आतनोत् तस्मिन्नवसरे वैकुण्ठे आगता । कामदुघा मां निरन्तरं ध्यानावस्थायां रममाणं वीक्ष्य विचारितवती । अहो नारायणोऽयं सदा लक्ष्मीकान्तोऽपि प्रतिकलं कस्य ध्यानापन्नो भवतितराम् । पश्चात् यं नारायणो देव्या सह ध्यायति स्म । यस्यावतारकलाः कोविदाः सर्वे ध्यात्वा उपजीवन्ति । यद्येवंविधो नारायणः सर्वसुखसंपत्तिपूर्णानन्दः कस्य ध्यानमापन्न आसेदिवानिति । तथैवेत्यस्या मनोभिलाषं ज्ञात्वाहमुवाचेदम् । अहो कामदुघे तव मनसि किमागतमिति । सोवाचेदम् ।

नमोऽनन्ताय महते कृष्णायाकुण्ठमेधसे ।
योगेशाय च योगाय ब्रह्मणेऽनन्तशक्तये ॥

त्वयानुगृहीता भक्ता आत्मानं तन्मयं मत्वा आत्मभावा भवन्ति । गवां यूथानि शतशो विराजमानान्यमृतरससंज्ञिता गावो भवन्ति । तस्मिन्नवसरे वनेषु तृणसंवलिता निकुञ्जा अतिरसपूर्णा जलाशयाः शतशः

शोभमाना आसते । तस्मिन् स्थाने संभाषमाणान् तृणजलौषधयः संभाषमाणा भवन्ति । अतिपुष्टा गावो गोष्ठ्या आसेदुष्यः सुखसंभोज्यदुग्धरसघृतरसदधिरसनवनीतरसाद्यान् भावापन्ना दाशुष्यो भवन्ति । शुभ्रश्वेतकर्बुरिताः गावो रससंवलिता गोष्ठान्यनेकशो राजमानान्यभियन्ति । ता गोप्यो दधिमन्थनघोषेण सह संगायमाना भवन्ति । तासां शृङ्गारसुखमापद्यमानोऽभवत् । गोलोकादागता कामदुघा नारायणमुखाच्छ्रुतमात्रे गोवर्धनाद्रौ शिरसि मन्त्रं जप्त्वा तद्भावेनाभवत् । सा व्रजेश्वरी रसिकानन्देन प्रत्यक्षभावमातेने । सा प्रसन्ना सती तां लीलां दत्तवतीति । नारायणः प्रत्युत्तरमुवाच । अहो प्रिये अस्य लोकस्य कथा श्रूयमाणा सर्वेषां निविशमाना हृदि गतं कामक्रोधादिकं नाशयति । अतिरतिभक्तिरापद्यते रसिकानन्दरतिरापद्यते । वर्णाश्रमस्वधर्मा बाधका न भवन्ति । कामदुघा गोवर्धनाद्रिशिरसि गोविन्दपुष्करिण्यां तपश्चकार । महामन्त्रमसुं जजाप । शृणु तन्मन्त्रध्यानम् । ॐ नमः श्रीराधारसिकानन्दाभ्याम् । मूलमन्त्रोऽयम् । द्वादशाक्षरसंवलितमोङ्कारबीजसंवलितं यो ध्यायेत् स एव तां लीलां प्राप्नोति । अत एव कृतं पुष्करिण्यां गोविन्दकुण्डमिति नाम्ना प्रसिद्धं कुञ्जम् । पृथिव्यां तस्मिन्नद्रौ सा वनफलतृणौषधीर्भक्षयामास । सा कामदुघा तपः आचरन्ती तस्मिन्नद्रौ परिचक्राम । एवं शतं समास्तप आचरितवती । यत्र गोवर्धनाद्रौ रत्नधातुमयलतौषधयः सदा प्रफुल्लिताः फलिता रससंवलिताः अतिशोभायमाना भवन्ति । यत्र गह्वराणि रत्नहाटकमयान्यनेकशः शोभायमानानि क्रीडास्थानानि भवन्ति । अनेकरङ्गविचित्रा ओषधयो नानारङ्गैः रचिता एवं यत्र फलपुष्पैर्भासिता भवन्ति । यत्र सा व्रजेश्वरी रसिकानन्देन सह सङ्क्रीडामतितरामातनोति । यत्र सखीनां वृन्दानि विहारपराणि । तत्र तस्यां पुष्करिण्यां सा व्रजेश्वरी स्वस्वरूपं दर्शयामास । रसिकानन्दरूपं

रसरूपमेव साक्षादेवंविधमतिगुणसंवलितमेवास्ते। नूतनो नवजायया सह क्रीडनं दर्शयामास। सा कामदुघा स्तोत्रं चकार। नमो रसात्मने। नमो ज्ञानात्मने। नमः सदावनविहारिणे। नमः स्वभक्तकर्मस्वभावदुःखनाश-हेतवे। नमः प्राकट्यदेहरूपिणे। नमो यमुनाजलकल्लोलविहारात्मने। नमः कामकेलिकौतुकात्मने। नमः कामप्रियाय। नमः कामात्मने। नमः काम-संवलितदेहदात्रे। नम आदिकर्त्रे। नम आदिहेतुरतिदात्रे। नमः श्रीराधा-ध्यानापन्नदेहात्मने। नमो रसात्मने। नमो रसलंपटपरिपूर्णदेहदातृरूपिणे। नमोऽनिर्वचनविहारिणे। नमो रतिदात्रे। नमो रतिकेलिकलाकौतुकात्मने। नमो भक्तिरतिदात्रे। नमो ज्ञाननिर्वाणदात्रे। नम आनन्दस्वरूपिणे। नमस्तद्द्रष्ट्रे। नमस्तस्य हेतवे। नमः कलरासज्ञानविहारात्मने। नमोऽगुणाय। नमः सृष्टिरूपगुणदायिने। नमो गुणकेलिसुरतानन्दसुखभोक्त्रे। नमो भोग-दायिने। नमो भोगात्मने। नम आत्मरूपिणे। नमः सुरतानन्दरूपरसदात्रे। नमोऽनन्तचरित्रदायिने। नमः क्रमलीलात्मने। नमः श्रीराधाकृष्णरूपिणे। नमः श्रीकृष्णराधारूपिणे। नमोऽनेकविहारदेहधारिणे। नमः शतसहस्र-कोटिशो लक्षकोटिविहाररूपिणे। नमो ललिताप्रतिक्षणसुखदात्रे। नमः कुञ्जान्तरविशाखाद्यनेकसखीविहारात्मने। नम आद्यनादिरूपसंसिद्धभक्ति-रूपिणे। नमो दानधर्मदात्रे। नमः सुखरूपिणे। नमो व्रजाविर्भावभावि-ताय। नमोऽत्यन्तदानरूपिणे। नमः सदा वृन्दावनश्रेणिविहारिणे। नम आदिद्वादशवनविहारात्मने। नमः पृथिव्यां यानि रूपाणि सुन्दराण्यने-कशस्तत्तव विजानीयात्। इति लक्ष्मीलज्जाधृतिकान्त्यनेकाकाराय गुणरति-दायिने नमो नमः इति स्तुत्वा स्थितां कामदुघां तद्दर्शनमहोत्सवाकुलां रसिकानन्दस्तया निकुञ्जदेव्या सहोवाचेदम्। अहो का त्वं स्तुतिं ब्रुवाणासि। मम भक्तिरिह लोके दुर्लभा। दुर्लभतरं वरं वरय। तव मनसि मम

दर्शनादधिकं न किञ्चिदवशिष्यते। तव स्तवेन यो नित्यं स्तौति समाहितः सदाभीष्टं प्राप्नोति। पुनरुवाचेदं कामदुघा यदि देयो वरो नाथ तव लोके वसाम्यहम्। गोरसदधिरसदुग्धरसनवनीतरसघृतरसफाण्टरसैरहं सेवे। रसिकानन्द उवाच। अनेकशः स्वाविर्भावेन लोके मम वल्लभा त्वं सदा वस। अहं त्वां रक्षिष्यामि। वनविहारे यथेच्छं विहर। ये अनन्याश्रया मम भक्तास्तेषां न वर्णाश्रमधर्मा आन्तराळिका जायन्ते। तेषां न कर्माणि आन्तराळिकानि जायन्ते। तेषां साधनमान्तराळिकं न जायते। व्रतानि यज्ञाश्छन्दांसि योगक्षेमफलानि चानन्यानि धर्मसाधनानि यत्किञ्चिदपि कृत्यं सर्वमान्तराळिकं न जायते। ये ब्राह्मणाः कर्मज्ञानसाधकास्तेषां ज्योतिषागमकर्मसाधकास्तेषां च सङ्गो हठात् त्याज्य एवेति वचनमस्ति। दशयोजनं व्रजपरिणाहः। तत्र पशुपक्षिणो मृगा गावोऽन्ये ये वृक्षाः अनन्यपरा आसते। अतिरसमग्ना गायन्ति। तस्मिन्मण्डले देवाः दर्शनकाङ्क्षा एव भवन्ति। भक्तक्रियामापद्यमाना भक्तास्तन्मण्डलं वन-विहारस्थानं ये व्रजवासमिच्छन्ति ते एव सर्वधर्मातिरिक्ता भवन्ति। कर्मातिरिक्ता भवन्ति। सङ्गातिरिक्ता भवन्ति। व्रजमण्डलोपासकाः भवन्ति। अहो लक्ष्मि सा सृष्टिस्तु सृष्ट्यतिरिक्तैवास्ते। तत्सृष्टेरुत्पद्यमानो रसमार्गमाश्रितो भवति। मनः सोत्साहं यद्येतस्मिन्मण्डले तदङ्गीकारं प्राप्तोऽमनोमोहोऽतितरां प्रतिसंयोक्ष्यमाणस्तं रसमनुभवन् भावापन्न आस्ते। यदा यदा देवाश्च पितरश्च कालश्च व्रजातिसाधने यतन्ते तावत्सहस्र-शाखाध्यायी भवति। सर्वयज्ञकर्मकरोऽपि तन्मण्डलं स्वप्नेऽपि न जानाति। ज्ञानिनो ये ब्रह्मबोधका योगिनस्तपस्विनस्ते स्वप्नेऽपि तन्मण्डलं न जानन्ति। सा लक्ष्मीः पुनरुवाचेदम्। कैश्चिह्नैस्तान् भक्तान् जानीमहे। स होवाच। ते सदा प्रेममार्गिणो भवन्त्येव। न निर्विण्णा नातिसक्ता गृहादौ विषयादौ

नातिसक्ता यदृच्छया प्राप्तवस्तुमात्रमुपसेवमाना एव भवन्ति । न निर्वेदो नाश्रमो न कर्म यदृच्छाकथासेवा भक्तानां प्रीतिरनन्या भक्तिर्भवति । एवंविधसंसारातिरिक्तः स्वभावसंसिद्धो भवति । ततस्तां लीलां प्राप्तवन्तो भवन्ति । एवमुपासकास्तस्मिन्मण्डले गत्वातितरां संयोक्ष्यमाणाः आपद्यन्ते । सा लक्ष्मीः पुनरुवाचेदम् । रसमार्गीया भक्तास्तन्मण्डलं प्राप्तवन्तः । तेषामेका दशा । तेषां का गतिः ? स होवाच । तन्मण्डलोद्भवाः भक्ता आत्मरतिगुणा रतिगुणाढ्या अनन्यमार्गाढ्यास्तां लीलां प्राप्तवन्तस्तन्नामाङ्कितवर्ष्माणस्तुलसीकाष्ठाङ्कितदेहा आत्मनाम्ना सुखालङ्कृतशरीरा रासादिलीलाध्यानावस्थायामापद्यमाना युज्यन्ते । कुञ्जे निकुञ्जे श्रेण्यां श्रेण्यां रतियोग्यताभावमापद्यमाना भवन्ति । तामेव कथां प्रतिक्षणं नूतनामासेवमाना आसते । श्वपचो वा ब्राह्मणो वा वर्णान्तरो वा यो भक्तानां सह सङ्गमापद्यते स एव तां लीलां प्राप्तो भवति । रतिमासेदिवान् यदि तदुच्छिष्टे कदाचिदन्नबुद्धिस्तेषामस्ति । तदुच्छिष्टे जले सदा तीर्थबुद्धिः भवति । तत्र तत्कथायां साक्षाद्बुद्धिर्भवति । ये मण्डलमुपासमानास्तेषां को धर्मः ? किं कर्म ? को रसो भवतितराम् ? ये तन्मण्डलमुपासमानाः भवन्ति तेषां किं तीर्थव्रतयज्ञधर्माः सन्ति ? किं बाध्यमानं भवेत् ? तेषां मुख्यं मनो भवति । ये गुणाढ्या रसरूपिण आनन्दरसनिमग्नास्ते गुणतद्भागिनो भवन्ति । तन्मात्रप्राप्तमार्गोऽयं लोकः सदाण्डजो भवेत् । आत्मानन्दे मग्नासु ये रात्रौ दिवा व्रजध्यानापन्ना भवन्ति सदा तेषां नित्यं निकुञ्जदेव्या अनुग्रहो भवति । ये महालीलायामत्यासक्तास्तेषां कदाचित्कालधर्मभयं न भवत्येवेति सद्यः कृतार्थतोत्पद्यमाना भवति । अवर्णोऽपि सवर्णतां प्राप्नोति । ये न भवन्ति ते दुष्टगतयो भवन्ति । ये व्रजमण्डलोपासकास्ते व्रजे निवसन्ति । ये रासमण्डलोपासकास्ते रासलीलां

प्राप्नुवन्ति। अनन्तसुखं संभुञ्जते। या यशोदाद्या लीलामुपासमाना भजने प्रपद्यमाना भजनानन्दे संयोक्ष्यमाणा भवन्ति। ये नन्दादयोऽत्यन्तसखीभावमुपासमाना अत्यन्तसङ्गं प्राप्तास्ते रमणानन्दसखीसमूहं प्राप्ताः। ते तां लीलां प्राप्नुवन्ति ये निकुञ्जदेवीं ध्यायन्ति रमणानन्दमुपासते। अत्यन्तं सुरतानन्दं प्राप्ता ये संयोक्ष्यमाणा व्रजमण्डलं मध्यस्थानं भजन्ति ते महालीलां प्राप्य संभोगसुखं संप्राप्नुवन्ति। स आह लक्ष्मीम्। श्रुतपरकाष्ठा ये सखीभावं प्राप्तवन्तस्ते गोपास्तां लीलां संप्राप्नुवन्ति। यः सर्वधर्मान्परित्यज्य तन्मण्डलोपासको भवति स एव तां लीलां प्राप्य सर्वव्रतातिरिक्तो ज्ञानातिरिक्तो विधूतविधिनिषेधकृत्याकृत्यगुणागुणभावाभावः सदा सङ्कृष्यमाणो लीलायां प्रतिपद्यमानः संयुज्यतेऽतितरां रसे। अहो लक्ष्मि षड्विधेयं रासमाया कथिता। सर्वो लीलां परित्यज्य तत्स्थानं प्राप्तवन्तो भवन्ति। सा लक्ष्मीः पुनरुवाचेदम्। कीदृग्विधं रासस्थानम्? निरन्तरं तत्स्थानस्योपासका यदुपासनामात्रात्तां लीलां प्राप्नुवन्ति तद्वर्णय। स होवाच नारायणोऽयम्। एकं सहस्रादित्यसङ्काशमतिह्लादमयम्। अहं ब्रह्मा रुद्रो देवा दिक्पाला यस्मात्समुत्पद्यमानाः यस्य प्रतापात्तस्मिन् स्थाने संसिद्धाः साधनसिद्धा अनेकशो भक्ताः। यत्र मणय आधिदैविकेन रूपेण तेजांसि ददति। यत्र संसिद्धः सूर्यः सखीरूपं विधायोपसेवते। सूक्ष्मसूक्ष्मरूपं विधाय यत्रात्मना चन्द्रः सेवमानो भवतितराम्। यत्राग्निः सखीरूपं विधायोपसेवमान आस्ते। देवास्तस्मिन् स्थाने सदा संसिद्धा एवोपसेवमाना आसते। पृथिव्यां सूर्यचन्द्रनक्षत्राणि अन्ये ये साधनोपकारकास्ते सर्वे उपसेवमाना एवासते। अन्यास्तु यस्मात्स्थानादिमाः प्रजाः समुत्पद्यमाना भवन्ति तल्लोकं वर्णयामि। अनेकशः कोटिब्रह्माण्डकान्यतिशयाविर्भावमापद्यमानानि सन्तितराम्।

तस्मिन् स्थाने मध्ये मध्ये आवरणज्योतिरास्ते। आवरणस्य मध्ये सहस्रयोजनपरिणाहवति गुणगणनाय श्रीराधाकृष्णस्य गुणगणाः सङ्गीयन्ते। प्रथमपरिणाहे गवां गणाः क्रीडापरा एव भवन्ति गोपगोपीभिः। एतानि क्रीडास्थानानि तृणजलौषधीलताफलपुष्पपत्रकोमलान्यासते। मधुघृतदुग्ध-दधिनवनीताद्या रसाः संसिद्धा भवन्तितराम्। यत्रान्नानि खाद्यपेयचोष्य लेह्यविविधपक्वरसानेकसंवलितानि भवन्ति। यत्र वृक्षा अमृतमधुधाराः अतितरामासेदुषां वर्षन्ति। यत्र पुष्करिण्योऽमृतपूर्णा भवन्ति। तत्रामृतं पीत्वा जरामरणगर्भोत्पत्तिविनाशा न भवन्तितराम्। अमृतोदं नाम सरो देवैरुपपीयमानं भवति। तया निकुञ्जदेव्या स्वदृष्टचमृतेन संपूर्यमाणं भवति-तराम्। तस्मिन् स्थाने गोपगोपीगणाः पुलिननिलीनाः सदा क्रीडापराः भवन्ति। द्वितीयपरिणाहे वाटिकाः क्रीडास्थानानि वृक्षाः पक्वफलपुष्पनम्राः पत्रैर्नम्रा धारा आसीदन्ति। क्रीडापराणां गोपीनां गणा निकुञ्जदेव्याः श्रीराधायाः स्वावेशेन क्रीडापराः सुरतानन्देन संभोक्ष्यमाणा भवन्ति। यत्र भक्तास्तत्क्रीडापरास्तद्ध्यानपरास्तद्रूपा आसते। तस्मिंस्स्थाने ये भक्ताः सदा रसमार्गिणस्तेषां सङ्ग आस्ते। अहो भक्तिमार्गरससंवलितोऽनुभवन् तस्य सङ्गं रसिकानन्दस्वरूपो भवति। धर्मः स एव कर्माणि स एव विद्या स एव भवति। ये धर्मास्ते अधर्माः। ये कर्माणि तान्येवाकर्माणि। तृतीयमावरणं महाक्रीडास्थानम्। तस्मिन् स्थाने एकसप्तत्यधिककोटयो निकुञ्जाः शोभायमाना आसते। यस्मिन्नावरणमध्ये रमणस्थलानि कोटिशो राजमानानि। यस्मिन् स्थाने मणीनां वलयाः सुगन्धयुताः राजमाना भवन्ति। पद्मरागमणिलताग्रथिता नीलमणिपुष्पसंवलिता भवन्ति-तरां मध्ये मध्ये। विद्रुमकृता हाटककोटयो लताग्रथिता हाटकभूमिषु रमणस्थानं शोभाढ्यं कुर्वन्तितराम्। रमणानन्दोऽयं सदा भक्तानां

सुखकरो भवति। यस्य लोकस्य कथाश्रवणमात्रात् सर्वे वर्णाः सर्वे धर्माः विधर्माणः प्रतिभान्तितराम्। यस्मिन्नावरणे स्वामिन्याः श्रीराधायाः श्रीरसिकानन्दस्य च सदा क्रीडास्थलं भवति। मणिलतानां सञ्चारे हंसीनां यूथान्यत्यन्तसोल्लासानि पीतग्रीवाणि रक्तचञ्चुपुटानि राजमानानि भवन्ति। ते सुस्वरेण संज्ञिता इव सामगानं कलकण्ठैः कुर्वन्तो भवन्ति। तस्मिन् आवरणे लतायां शुकयूथान्यत्यन्तहरितानि रक्तचञ्चुपुटानि पीतपुच्छपक्षाणि। यैः प्रतिशाखं गान्धर्ववेदो गीयमानो भवति। यस्मिन्नावरणे श्रीराधिकायाः स्वाङ्गात् संभाविताः सख्यः क्रीडापरा भवन्ति। सोत्साहा सोत्कण्ठा प्रेमप्रेक्षणा हास्यवती कटाक्षगुणवती सुस्नेहा मलिना शय्योपकरणा पुष्पवती निःशङ्का निर्लज्जा सुरतोत्कण्ठा सुरतानन्दा मालावती सुखश्रमा कलावती कलाकोविदा गुणज्ञा शृङ्गाररसा कामभाविता भावोत्साहा निद्राजागरिता सरससुखेत्यादिनानासख्यो रतिशृङ्गारमनुभवन्त्यो भवन्ति। निरन्तरं ताः सख्यः क्रीडापराः कुञ्जान्तरे रसिकानन्दं सेवमाना भवन्ति। लतान्तरे भक्ष्यभोज्यानि ताम्बूलाद्या भोगाः कामकेलिरसान्तरे सुखभोगरसक्रीडाः कृतवत्यो भवन्ति। एतां लीलां संसिद्धाः सखीना गणाः पक्षिणां गणाः प्राप्तवन्तो भवन्ति। साधनसिद्धास्तस्मिन्नावरणे क्रीडापराः भवन्ति। सा लक्ष्मीरुवाचेदम्। केन साधनेनेदं स्थानं दृष्टिगोचरं भवति। स होवाच। सृष्टौ त्रयो योगा भवन्ति। ज्ञानयोगः कर्मयोगो भक्तियोगश्चेति। तेषां त्रयाणां योगानां मध्ये प्रेमयोगोऽतिरिक्तो भवतितराम्। येषामेव प्रेमसंपत्तिस्तेषामेव सुरतानन्दसुखं भवति। न धर्मेण नेष्टापूर्तेन न वर्णेन नाश्रमेण न तीर्थेन न व्रतेन न देहशोषणयोगेन न वेदोदितेन कर्मणा न धर्माधर्मविचारसाधनेन तत्स्थानं भवति। यो मनसि निरन्तरं तद्ध्यानापन्नो भवति तस्य भवति। यत्र यत्र स्थितं

तत्र तत्र तमेव धर्मं जानीमहे । तमेव सुखं जानीमहे । तद्धानिः तदन्तरायः । तदेव सुखं यत् तद्भक्तैः सह संभाषणात्तस्यावरणलीला-वार्तायां कालनिर्यापणम् । गृहोत्सवे येषामुपार्जितवस्तुमात्रं तदर्थे विनिहितं भवति ते तल्लोकं प्राप्नुवन्ति । अहो लक्ष्मि इयं सृष्टिस्तु रसरूपिणी भवति । तेषां रसमार्गव्यतिरिक्ता धर्मा बाधका एव भवन्तितराम् । मनःसङ्ग्रहमानीय मनसा भावेनेन्द्रियाणि मनसि धृत्वा मनसा भावेन अहोरात्रं लयमापद्यन्ते । यस्मिन्नावरणे मनो निमग्नतां प्राप्नोति । तया निकुञ्जदेव्यानुगृहीतो रात्रौ दिवा कालेऽकाले तन्मार्गीयस्तल्लोकं सेवमानो भवति । अहो मनसो वृत्तिरतितरां चञ्चलापि ते भक्ताः संसारासक्तिरहिताः लोकेऽनेषणात्मानस्तन्मया अनपेक्षाश्चित्ते संपूर्णाः प्रशान्ताः समदर्शिनो निर्ममा निरहङ्कारा निर्द्वन्द्वा निष्परिग्रहा भवन्ति । तेषु नित्यं महाभागाः अन्यमार्गरहिता हि ये आत्मानं तन्मयं पश्यन्तस्त एवात्मानं सेवन्ते । ये तन्मार्गीयाः सन्तः सदोपासकास्तेषां प्रेमलक्षणकाष्ठाप्रतीक्षा भवति । अहो चतुर्थावरणं महास्थानम् । यस्मिन्नावरणे स्वामिन्याः स्वयं विहारस्थलमस्ति । शतसहस्रकुञ्जा निकुञ्जा लतावती सुवर्णवर्णा विद्रुमलता अमला निर्मला व्यक्तमुक्तालता भ्राजमाना आसां सखीनां सञ्चा-रोऽत्र स्थान आस्ते । सूक्ष्मलतान्तरे शय्योपकरणानि । अनेकलतान्तरे रासक्रीडा भवतितराम् । अयं रासः सहजसंवलितो भवति । तस्मिन्नावरणे अतिक्रीडापराणि रूपाणि कृत्वा रासलीलासुखमनुभवन्ती सा व्रजेश्वरी रसिकानन्देन सह सङ्क्रीडमाना आपद्यते । पञ्चममावरणं तेजोमयम् । अमृतमय्य ओषधयो राजमानाः फलपुष्पयुताः पक्वफलरसयुक्ता भवन्ति । अन्नरसाः सुपच्यमानाः सरसाः कटुतिक्तमाधुर्यमिष्टरससंयुक्ता अनेकशः स्थानेषु तया श्रीराधिकया सेव्यमाना रसिकानन्देन संभोक्ष्यमाणाः

विराजमाना भवन्ति। आत्माविर्भावेन नानासुखं भवति। भोगस्थानं भवतितराम्। स्थाने स्थाने तस्मिन्नावरणे रतिसुखं भवतितराम्। षष्ठमावरणं तेजोमयम्। यस्मिन् हाटकमयानि मन्दिराणि विराजमानानि भवन्ति। शतं मन्दिराणि तेजोमयानि यत्र राजन्ते। सुवर्णजटितमणिभिराक्रान्ताश्चामीकरखचिता मञ्जूषाः शोभायमाना भवन्ति। यत्र राजमानानि हाटकमणिजटितानि भूषणानि यथायोग्यानि वस्त्राणि भवन्तितराम्। यत्रावरणे संभोगस्थाने सखीनां समूहाः शृङ्गारवत्यादयो राजमानाः भवन्ति। आत्मानं शतधा कृत्वा अनेकभोगरसरतिसुखं संभोक्ष्यमाणाः भवन्ति। सप्तमावरणं क्रीडास्थानं सहस्रयोजनायतम्। परितः परितो मणिस्तम्भा अतिरसाढ्याः सुगन्धाढ्या भवन्ति। अतिरसगुणाढ्या भूः हाटकसुगन्धकोमला आविष्टसुखाढ्या भवतितरां संभोक्ष्यमाणैव। यत्र वल्लीनां सञ्चाराः परापरसञ्चारा एवासते। हाटकजटितमणिज्योत्स्नाभिः सर्वं प्रतिबिम्बितं वस्तुमात्रम्। तत्र कलावती गानवती सुगन्धा नृत्यपरा विशदा भोगपरा भोगवती भोगाभिज्ञा रतिकलाभिज्ञा कामसुखा कामातुरा निःशङ्का सदानन्दा सुरतसुखा सुरतानन्दा सुरतमग्ना आसनभेदाभिज्ञा अतिरसदानाभिज्ञा रसदा रसदातृभोगाभिज्ञा एताः सख्यः संसिद्धा अन्याः साधनसिद्धा अनेककलाकोविदा भवन्ति। तत्र मण्डलावरणे महास्थानं सशय्योपकरणम्। कलावती शय्योकरणानि करोति। सुरतोत्साहा सुरतोत्कण्ठां ददाति। निर्लज्जा निश्शङ्कं सुखं ददाति। सुरतोद्गमा आलिङ्गनचुम्बननमितप्रेमभररससुखं ददाति। रतिवती रतिसुखं ददाति। रतिकल्लोला रतिभररसालस्यमुकुलितनयना केलिसुखं ददाति। निभृतनिकुञ्जगृहं गतया तया देव्या सह रसिकानन्दः सुखमनुभवन्नास्ते। तस्मिन्निकुञ्जे सुरचिता सखी प्रतिकुञ्जं शय्यासुखं करोति।

एका कलहंसी निरन्तरं तस्मिन्नावरणे सखीनां मण्डले मध्यस्था सदा क्रीडापरा कलशब्देन तां श्रीराधां रसिकानन्दं च क्रीडमानाऽभ्येति। तस्मिन्समये सुस्वरकण्ठेन सूक्ष्मस्वरं यथा भवति तथा तं गायमाना भवति। मानलीलायां रसिकानन्दवचनात्तां व्रजेश्वरीं प्रसादयति निरन्तर-मतिमनोत्साहं च ददाति। सा व्रजेश्वरी कलहंसीं प्रत्यापद्यमानैव भवतितराम्। सा कलहंसी रसिकानन्दस्यातितरां वल्लभतया सुखमनु-भवन्ती संरोचते। सा सदा जागरिता सा सदा गुणज्ञा सा सदा रससुरतभोगज्ञा भवतितराम्। सा कलहंसी सर्वासां सखीनां मनांसि प्रतिहरति स्वक्रीडया। सा कलहंसी रसिकानन्दस्यातिवल्लभा भवतितराम्। सा कलहंसी साधनसिद्धैवेति। सा लक्ष्मीः पुनरुवाचेदम्। अहो! कलहंसी पूर्वं केन साधनेनेदं स्थानं प्राप्तवती। महास्थानं प्राप्तवती। अत्याश्चर्यम्! निरन्तरं केन साधनेन श्रीराधायाः क्रीडासखी भवतितराम्। स होवाच नारायणोऽयम्। सा कलहंसी सृष्ट्यादौ ब्रह्मणः पुत्री सरस्वती। सर्वविद्याः प्रभवा यस्याः सकाशादुत्पद्यन्ते। चत्वारो वेदा उपवेदाः पुराणानि धर्म-शास्त्राणि पृथिव्यां यानि वर्तिष्यमाणानि तानि तस्या उत्पद्यमानानि भवन्ति। सा ब्रह्मणः पुत्री आप्तयौवनैवास्त। सा एकस्मिन् समये मम लोकं प्राप्ता ममोपासनां चक्रे। स्वसुखार्थं मम ध्यानापन्नाऽभवत्। बहुकालं मामुपसेव-मानाऽभवत्। तस्या भजनेन प्रसन्नोऽहं मम लीलास्थानं वैकुण्ठं दर्शितवान्। तस्मिन् त्वया मया क्रीडितानि स्थानानि संराजन्ते। यत्र वैकुण्ठे अनेकशो भक्ता जयन्तकुमुदजयविजयगरुडाद्याः शतशः पार्षदा राजमाना भवन्ति। यत्र चतुर्धा मुक्तयः सेव्यमाना आसते। यत्र वनानि कोटिशोऽतितरां सन्ति। सा वाग्देव्यतितरामुत्कण्ठमना अत्यन्तं सुखसमाविष्टमना मम कृपादृष्ट्या सुखं प्राप्ता महालीलां प्रार्थयामास। तदा मयोक्ता सा

वाग्देवी —त्वं व्रजवासे व्रज । पृथिव्यामच्छोदं नाम सरः कामवने सुगन्ध-शिलायामस्ति । तत्राच्छोदे मज्जयित्वा सुगन्धशिलायां व्रजेश्वरीं ध्यायमाना रसिकानन्देन सह आपद्यस्व— इति । तत्र तत्स्थाने सर्वात्मभावेन प्रीतिरुत्पद्यमाना भवति । प्रेमानन्दमनुभवन्तो भक्तास्तल्लीलोपयोग्या भवन्ति । सा निरन्तरं बृन्दावनं कामवनं श्रीगोवर्धनमुपसेवमानासेदुषी । अच्छोदेऽप्सरः-पुष्करिण्यां निरन्तरं मज्जमानाऽभवत् । शतं समा व्रजलीलां सेवमानाऽभवत् । एकस्यां कार्तिक्यां पौर्णमास्यां तस्मिन् तद्वासिनो रासलीलां कुर्वन्ति । बहवो भागवतानां समाजे कलहंसीरूपं विधाय तां लीलामदर्शयन् । निशि दिने सा व्रजेश्वरी रसिकानन्देन सह दर्शनदृष्टिगोचरो भवतितराम् । अत्यानन्दरूपे सखीनां समूहमध्यस्थे महाक्रीडापरेऽतिमहामोहनरूपं दृष्ट्वा इन्द्रियशुद्धिप्रेम्णा भावापन्नाऽभवत् । प्रसेदुष्यतिसुकोमललावण्या सा वरं वरयेत्याह । सोवाचेदम् । यदि देयो वरस्तर्हि महालीलायां सदाहं सहचारिणी भवामि । किमन्येन वरेण । अयं तावन्मनोभिलाषो यल्लीला दृश्यते । तथेत्युक्त्वा सा ताभ्यां स्वस्थानं ययौ । या सा तद्दिनमारभ्य क्रीडापरा भवतितराम् । कुञ्जे निकुञ्जे तेनैव कलहंसीरूपेण प्रतिशाखं लीयमाना सामगानेन मनोभावेन स्तौति नानाकौतुकक्रीडामकरोत् । सा महारमणस्थानं प्राप्ता । महालीलायां मग्ना रतिसुखमनुभवन्त्यास्त । सा कलहंसी स्वयूथं विधाय कदाचित्समये रात्रिपरभागे सुरतोत्थितां लीलामगायत् । कदाचिन्मज्जनलीलामागायमाना भवति । श्रृङ्गारलीलायां श्रृङ्गारं प्रति प्रतिक्षणं नूतनस्वाविर्भावरतोद्भवा भवतितराम् । लीलामागायमाना संभोक्ष्यमाणा भवति । भोगावस्थायां स्रक्चन्दनताम्बूलागुरुरसमृगमदकर्पूरकेसरसंवलितान्यास्तरणानि प्रतिक्षणं नूतनानि । अनेकशय्यायाः सुगन्धश्रृङ्गारादुपरिप्रफुल्लितलताग्रथितपरस्परशुभाङ्गशोभनचन्दनवृक्षालम्बिताः

सुवर्णगन्धेन युता लतान्तराः सन्तितराम् । तत्र शृङ्गारे रतिशृङ्गाररसस्थानं सञ्जायमाना भवतितराम् । भूषणस्थानं सुगन्धं सुवर्णम् । सुवर्णजटिता मणयः सुष्ठु गन्धेन पूर्यमाणा भवन्तितराम् । वस्त्राण्यतिसुगन्धेनातिपद्यमानानि परिधापयति । एवं कलहंसी वाग्भिः स्तुतिं चकार । अत्यर्थं सा निकुञ्जदेव्या गानवल्लभा भवति । महाशृङ्गाररसोऽयम् । विधिनिषेधमार्गाननुसारिणी शृङ्गाररसादनन्तरमात्मभावे भवति । रसमग्ना भवति संभाष्यमाणा मनोभव-भावे भवति । आत्मभावेनेयं प्रत्यनुकरणं क्रियमाणमातनोति । वनलीलां मनस्यातनोति । अतिरतिं संयोक्ष्यमाणा कलहंसी रात्रौ दिवा लतान्तरेषु फल-मिष्टं मधु राधाया दत्वान्यदासेवते । तत्रैका षुष्करिणी मिष्टामृतरसपूरिता भवति चतुर्योजनायता । तत्र पद्मषण्डानि सुवर्णसुगन्धसुकोमलानि मनोहराणि भवन्ति । तस्मिन् पद्मवने विहारक्रीडापरा कलहंसी सुरोचमाना भवति । अहो लक्ष्मि तस्मिन् केन भाग्योदयेन तस्या निकुञ्जदेव्या अनुग्रहेण अनन्याश्रयधर्मोत्पत्तिर्यदा भवतितरां तदा रतिराविर्भवति । तावद्देहोपाधिकर्म-क्षुत्तृट्पिपासामोहभयदुःखं तथा सुखानि तथा न भवन्ति यथा देवादीनाम् । व्रतोपवासधर्माधर्माः पितृकार्याकार्याणि यत्किञ्चिद्धर्माः शोभमाना धर्माः अन्यान्युपवासमयानि पापपुण्यानि ज्ञात्वा यः सर्वधर्मातिरिक्तो भवेत् स एव तन्मण्डलं प्राप्नोतीत्याह । अहो रम्यं पुण्यमाचरेत् । अतितरां भावो भवेत् । संभोगलीलायां सुरतानन्दोऽयं लोकः सोऽवशिष्यते । सुरतानन्द-सुखमनुभवन्तो भक्ता आत्मानं तन्मयतां नयन्ति । धर्माधर्मौ त्यक्त्वा समाः सहजभावा भवन्ति । अतिरसमग्ना विद्यातपोध्यानमैत्रीकलागुणसंयुक्ताश्च भवन्ति । अन्यप्रतिपत्तिसहितो नास्तिको न लभते तल्लोकप्राप्तिम् । अहो लक्ष्मि कदाचिन्महाभाग्योदयेन अस्मिन्नावरणे प्रीतिरास्ते । यत्र वृक्षाः फलैर्नम्राः पुष्पमिष्टामृतमयरसमग्ना भवन्ति । यत्र शाखाः पुष्पनम्रा भवन्ति । पद्मभे

आवरणे संसिद्धानि शुकपिकयूथानि संराजमानान्यासते। केचिदाम्रवृक्षाः पक्कफलाः सदा संभोक्ष्यमाणा आसते। अतिरसमग्नः साधनसिद्ध एकः शुकोऽत्यन्तवल्लभोऽस्ति। यस्य पक्षचञ्चुकाः सा ब्रजेश्वरी स्वहस्तेन मार्जयति। रसिकानन्दोऽपि स्वहस्तेन भक्षं ददाति। तस्य सहचारिण्येका शारिका आस्ते। सा साधनसिद्धा भवतितराम्। तच्छुकशारिकामिथुनं रसिकानन्दक्रीडायां सहचार्येव भवतितराम्। तत्र रसिका सा शारिका निरन्तरक्रीडापरा भवति। सुवर्णवर्णासु भूमिषु रत्नपरिधिषु सशय्योपकरणं विहारस्थलम्। तत्र वृक्षसञ्चाराः सुशोभाढ्या भवन्तितराम्। तत्र शुकशारिकाः साधनसिद्धाः क्रीडापरा भवन्ति। अत्यासक्ता महाक्रीडायां संभवन्ति। अहो रसमार्गोऽयं दुर्लभतरोऽप्यासीत्। अहो महाभाग्यवशात्तस्याः निकुञ्जदेव्या अनुग्रहादत्यन्तप्रियतमो भवति। प्रीतिः प्रीत्या भवति भक्तिर्भक्त्या भवति स्नेहः स्नेहेन भवति तस्माद्भाग्योदयाददतितरामासेदुषः। अहो भाग्यवन्तः कृतकृत्यवन्तः सर्वे तीर्थवन्तो भवन्ति। अतिरसमग्नाः अतिभुञ्जाना अत्यन्तसुखमनुभवन्ति। य इमां लीलां संभुञ्जमानाः भवन्ति य इमां लीलामुपासमाना एव भवन्ति ते भक्ता भवन्ति। यदा महाभाग्योदयो भवतितरां तदास्यां लीलायां प्रत्ययो भवेत्। ते धर्मकारिणः, ते व्रतकारिणः। येषां लीलायामुपासनारुचिरास्ते ते व्रतकारिणो भवन्ति। यस्य महालीलायां मनोऽभ्येति। यो विधौ च प्रतिषेधे च निर्विद्य अस्यां लीलायां मनोभावापन्नो भवेत् स एव लीलोपयोग्यो भवेत्। ये प्रत्ययकारिणः तेषामनुग्रहः। सा लक्ष्मीः पुनरुवाचेदम्। रहस्यलीलायां मनो भावापन्नं भवति। अत्यन्तरत्याविष्टचित्ता भावापन्ना भवामि। कः शुकः? का शारिका भावापन्ना? यस्यां रसिकानन्दोऽत्यन्तस्नेहाविष्टमना भवति सा व्रजेश्वरी अत्यन्तं स्नेहं चकार। अतिदुर्लभतरं स्थानं प्राप्तम्। अविच्छिन्ना रतिगति-

योग्यता संयोक्ष्यमाणा भवतितराम्। स होवाच नारायणोऽयम्। शृणु लक्ष्मि आदौ सृष्टेः सुमन्तो नाम ब्राह्मणः कौशिकगोत्रात्समुद्भूतो भवति। स कान्यकुब्जदेशे समुद्भूत आसीत्। अतितरां भावापन्नोऽभवत्। तस्य मनोरमा भवत्यतिशयभक्तिमार्गरता। तौ दम्पती अतिसुभगावतितरस्नेहसंपन्नौ निरन्तरसेवायां संयोक्ष्यमाणरती आसाताम्। तौ दम्पती अतिस्नेहेनाविष्टचित्तौ काले काले तां व्रजेश्वरीं रसिकानन्देन सह उपसेवमानावासाताम्। तावतिवनलीलायामत्यासक्तौ भवतः। कस्मिन् कियद्भाग्योदयेन भक्तानां सङ्गेन वनं बृन्दावनं प्राप्तौ? तत्र बृन्दावने कामवने कदम्बषण्डे वृषभानुपुरे नन्दग्रामे पावनसरसि प्रतिपद्यमानावभवताम्। एवंविधे रहसि क्रीडाविहारे कियत्कालं वासमालम्ब्य तिष्ठन्तावभवताम्? दम्पती साभिलाषौ बने अत्यासक्तावभवताम्। मनोरथेन सह व्रजेश्वरी रसिकानन्देन सह दृष्टिपथमापेदे। महालीलायां क्रीडापरौ संभाषमाणौ संयुञ्जाताम्। तद्दिनमारभ्य तौ दम्पती महालीलायां क्रीडापरावभवताम्। सा लक्ष्मीरुवाचेदं रहस्यम्। व्रजवासिनीसृष्टिः कीदृग्विधा? ये संसिद्धास्ते कीदृग्विधाः? अन्ये के जीवाः सृष्ट्यादौ प्रकटिताः? जीवस्य कीदृग्विधं रूपम्? बन्धमोक्षौ कीदृग्विधौ भवतः? पुनः स होवाच नारायणोऽयम्। अहो! प्रपञ्चोऽयमनादिसंसिद्धो भवति। यथा ब्रह्म त्रिविधात्मकम्। सच्चिदानन्दात्मकम्। सत्तु व्यापकतयास्ति। तेजोमयं चिदस्ति। आनन्दमयस्तु पुरुषोत्तमोऽतिरिच्यते। यथा ब्रह्मानन्दोऽयं लोकः सच्चिदानन्दो भवति तथा जीवसङ्घस्त्रिविधो भवति। सोवाचेदम्। किमयं जीवसङ्घो भवेत्? तेषां का दृष्टिः? कावस्था भवति? स होवाचेदम्। शृणु। अनादिसंसिद्धोऽयं जीवश्चिदंशो भवति। सोवाचेदम्। यदि चिदंशो जीवः कथमज्ञानेन जडतां प्रपद्यते। स होवाच। यथा अनादिसंसिद्धोऽयं

जीवसङ्घस्तथा मायाप्यनादिसिद्धा भवति। सा त्रिविधा व्याप्य तिष्ठति। स एवं जीवस्त्रिविधो भवति। सोवाचेदम्। जीवसङ्घस्त्रिविधस्तिष्ठति। वर्णय। स होवाच। सद्रूपः संसारात्मको भवति। नानाकर्माणि करोति। वर्णाश्चाश्रमाश्च॰ धर्माश्च साधनानि संयुज्यन्ते। तेषामुत्पत्तिः स्थितिः। चिद्रूपो जीवो ज्ञानी भवति। स निष्कर्ममार्गीयो भवति। ये जीवाः आनन्दरूपास्तेषां सर्वधर्मत्यागात् रसानन्दस्वरूपा महालीलोपसेव्यमानाः आसते। तान् धर्माधर्मौ न बाधेते तस्यां महालीलायाम्। सोवाचेदम्। कया मायया संयुज्यमानो जीवः कर्ममार्गरतो भवति? स होवाच। मायारूपं त्रिविधम्। यद्रूपं सद्रूपं तन्मायासंवलितोऽयं जीवसङ्घः कर्मकाण्डरतो भवति। चिद्रूपया मायया संवलितो जीवसङ्घः संन्यासी भवति। आनन्दसंवलितया माययानन्दात्मक एव भवति। आनन्दरसस्तु महालीलायाः कारणं भवतितराम्। तेषां कर्माणि याथातथ्येन वदामि। तेषां ये कर्ममार्गीयाः कर्मप्रतिपादका महावनलीलायामप्रत्ययकारिणोऽसुराः कर्मजडा अन्योपासकास्तदुपाधितयान्यमार्गं न विन्दन्ते। अग्नेरुपासकास्ते यज्ञकर्मवासनात्मकलिङ्गशरीरेषूत्पत्तिं भजन्ते। तेन वासनात्मकेन लिङ्गेनोत्पत्तिस्थितिलयानापद्यन्ते। तस्माल्लिङ्गशरीरात्मकोऽयं जीवस्य स्वभावः। यदा सर्वा वासना विधूय महालीलायां प्रविष्टचित्तो जायते अहो लक्ष्मि लीलां ज्ञात्वा ज्ञात्वा ध्यायमानो देहजनितकामक्रोधलोभमोहभयसुखदुःखलज्जालज्जाज्ञानमोहमत्सरादीनागममन्त्रतन्त्रौषधिरसज्योतिषवाग्विलासप्रपन्नान् नानासंसारजनितानकेशः सात्त्विकराजसतामसान् संराजमानधर्माधर्माननिततरामभिमानगुणान्निरस्यन् महालीलां प्रविष्टो भवेत्। आत्मानं तन्मयमातनोति। अन्यत्र क्वापि विषयान्तरे प्रविष्टचित्तस्तदा तं लिङ्गं प्राप्नोति। सा लक्ष्मीरुवाचेदम्। त्वयोक्तं जीवस्य मायाधीनत्वं जीवो येन वासनालिङ्ग-

शरीरे उत्पद्यमानो भवति। किं बलं येन प्रयत्नवान् भवति? स होवाच। तस्मान्महाभाग्योदयेन यदृच्छया गुरुसहायेन सङ्गेन साधूनामन्यधर्मरहितानां विधूतपापं मनस्तन्मयतया तेन मार्गेण लिङ्गशरीरं विधूय महालीलायां व्रजेश्वरीं रसिकानन्देन सहोपसेवमान आसीदति। सा लक्ष्मीरुवाचेदम्। जीवस्य रूपं कीदृग्विधम्? केन रूपेणोत्पत्तिस्थितिलयानापद्यते? स होवाच। अनिर्वचनीयोऽयं जीवः। नैनं छिन्दन्ति शस्त्राणि नैनं दहत्यग्निर्मारुतो नैनं शोषयत्यापो नैनं क्लेदयन्ति। यां यां वासनां प्राप्नोति तं तं लिङ्गशरीरं प्राप्नुवन्नास्ते। अत्यन्तं वासनाबद्धो जीवः। वासनायुक्तो महालीलायामासक्तः संसारे ननिर्विण्णो नातिसक्तो भवति। संसिद्धोऽयं जीवसङ्घो मायोपाधिभेदेन नानाशरीरभावमाप्नोति। असंसिद्धस्तु रक्तशरीरसंयुक्तो भवति। सोवाचेदम्। शरीरं कीदृग्विधम्? तस्मिन् शरीरे के गुणा के अवगुणाः? केन बन्धः शरीरे? केनैव मुक्तिः तस्मिन् शरीरे? को निरुपाधिः? तस्मिन् किं ज्ञानं भवति? कीदृशेन शरीरेण बन्धः? कीदृशेन मोक्षो भवति? स होवाच। शरीरभेदाः द्विविधाः। शरीरमेव कर्मोपजनितं यदृच्छया चोत्पन्नं तस्या निकुञ्जदेव्याः अनुग्रहाद्भवति। कर्मजडानां कर्मसंभूतवासनाजडात्मकं भवति। येषामनुग्रहात्संभवो भवति तेषां स्नेहमार्गे रुचिरास्ते। येषां निर्वाणमार्गे रुचिर्भवति ते संन्यासिनो भवन्ति। शरीरं तु एकादशेन्द्रियात्मकम्। पञ्च ज्ञानेन्द्रियाणि। पञ्च कर्मेन्द्रियाणि। उभयात्मकं मनो जायते। पञ्च महाभूतानि पञ्च तन्मात्राणि। त्रयो गुणाः। पञ्चविंशत्तमो जीवः। षड्विंशको महाविष्णुः सदा द्रष्टा भवति। इमे जीवाः शरीरोपाधिं भुञ्जानाः सुखं दुःखं प्राप्नुवन्तो भवन्ति। सर्वेषां शरीराणां समानगुणा भवन्ति। रागादयः कामक्रोधलोभमोहजरामरणसुखदुःखान्यनुभवन्त आपद्यन्ते। इदं शरीरं जरया ग्रस्तं गन्धर्वनगरोपमं मनोरथमयं

भवति। ते सर्वे गुणा लिङ्गशरीरोदयादपेता लिङ्गं विधूयात्मानं तन्मयतां नयन्ति। ते रागादयो दोषाः शरीरसंवलिताः। ते कामक्रोधादयस्तदर्थे प्रयुज्यमानाः साधनरूपा भवन्ति। सोवाचेदम्। कथं रागादयः साधनरूपा भवन्ति? येषां संसर्गात् विकलतां प्रपेदिरे। भगवदर्थे प्रयुज्यमानाः रागादयः कथं निष्कर्मतां प्राप्नुवन्ति? एष काम एष क्रोध एष लोभ एषः मोह इत्यात्मलीलार्थे जीवं प्रयोजयति। स होवाच। माया त्रिविधा भवति। सद्रूपया माययोत्पादिताः कामक्रोधादयो गुणाः संसारोत्पत्तिप्रयोजकाः भवन्ति। चिद्रूपे आश्रिता जीवास्ते तान् गुणान् प्रपद्य जडतां प्रपेदिरे। आनन्दरूपे आश्रिता जीवास्तन्मयतां प्रपेदिरे। संसारितोऽयमानन्दमयो रस आत्मानमानन्दमयतया प्रपद्यते। रागादयः कामक्रोधादयो गुणाः साधनरूपा भवन्ति। अहो! रसमार्गे प्रपद्यमानोऽयं जीवसङ्घ आत्मानं तन्मयतया ध्यात्वा वासनात्मकं लिङ्गं विधूयात्मभावमभ्यस्य तन्मयतां प्राप्नोति। यां यां वासनामात्मा विलापयमानो भवति तत्तद्भावेन तत्तल्लिङ्गं विलीयमानं भवति। अत्यन्तासक्तस्तस्मिन् मार्गे लिङ्गं विधूयापपाप्मा भावापन्नो भवेत्। यो मार्गस्ते कथितोऽयं मार्गो देवादिना न ज्ञातः। रुद्रादिना न ज्ञातः। तन्मण्डलमुपासमानस्तन्मयतां प्रपद्यते। इदं रहस्यं कथितम्। न वचनीयं कस्यचित्त्वया। स्वेष्टं हृदि ध्यात्वा तद्भावेन प्रलीयते। अहो लक्ष्मि इमं मार्गं समाश्रितां भक्ताः शरीरोपाधिधर्मान् मुक्त्वा तद्गुणतां प्राप्नुवन्तीति सामगा निरन्तरं रहसि सङ्गायन्तो भवन्ति॥

यदक्षरपदभ्रष्टं मात्राहीनं च यद्भवेत्।
तत्सर्वं क्षम्यतां राधे प्रसीद हरिवल्लभे॥

इति सामरहस्योपनिषत् समाप्ता
[अस्याः "रसिकानन्दोपनिषत्" इत्येव नाम सुवचम्]

---

# सुदर्शनोपनिषत्

यज्ञोपवीती धृतचक्रधारी यो ब्राह्मणो ब्रह्मविद्ब्रह्मविदां मनीषी हिरण्यमादाय सुदर्शनं कृत्वा वह्निसंयुक्तं स्त्रीशूद्रैर्बाहुभ्यां धारयेत् । तस्माद्गर्भेण जायते । ब्राह्मणस्य शरीरं जायते । श्रीविष्णुं सर्वेश्वरं भजन्ति ।

नासादिकेशपर्यन्तमूर्ध्वपुण्ड्रं तु धारयेत् ।
उद्धृतासि वराहेण कृष्णेन शतबाहुना ।

भूमिर्धेनुर्धरणी लोकधारिणी ॥

मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् ॥

तस्माद्द्विरेखं भवति । तं देवकीपुत्रं समाश्रये । अग्निना वै होत्रा चक्रं पाञ्चजन्यं प्रतप्तं द्वयोर्भुजयोर्धारयेत् । आत्मकृतमाचरेत् । आचार्यस्य संमुखं प्रपद्येत । तस्माद्वैकुण्ठं न पुनरागमनं सालोक्यसामीप्यसारूप्यसायुज्यं गच्छति । य एवं वेद । इत्युपनिषत्[1] ।

यजुर्वेदे तृतीयकाण्डे तृतीयप्रश्ने—"कक्षमुपौषेद्यदि दहति पुण्यसमं भवति यदि न दहति पापसममेतेन" । उष दाहे । उपकक्षं भुजः । "चरणं पवित्रं विततं पुराणम् । येन पूतस्तरति दुष्कृतानि । तेन पवित्रेण शुद्धेन पूताः । अतिपाप्मानमरातिं तरेम । लोकस्य द्वारमर्चिमत्पवित्रम् । ज्योतिष्मद्भ्राजमानं महस्वत् । अमृतस्य धारा बहुधा दोहमानम् । चरणं नो लोके सुधितां दधातु" । "पवित्रं ते विततं ब्रह्मणस्पते । प्रभुर्गात्राणि पर्येषि विश्वतः । अतप्ततनूर्न तदामो अश्नुते । शृतास इद्वहन्तस्तत्समाशत ।"

[1] "यज्ञोपवीतोपनिषत्" इत्याख्यया या पूर्वं प्रकाशिता सैवेयमेतदवधीति विभाव्यताम् ।

यो ह वै सुश्लोकमौले धर्माननुतिष्ठमानोऽग्निना चक्रं योऽग्निर्वै सहस्रारस्सहस्रारो नेमिर्नेमिना तप्ततनूस्सायुज्यं सलोकतामाप्नोतीति ।

चक्रं बिभर्ति वपुषाभितप्तं बलं देवानाममृतस्य विष्णोः ।
स एति नाकं दुरिता विधूय विशन्ति यद्यतयो वीतरागाः ॥
चमूषच्छ्येनश्शकुनो बिभृत्वा गोविन्दद्रप्स आयुधानि बिभ्रत् [?]।
अपामूर्मिं सचमानस्समुद्रं तुरीयं धाम महिषो विवक्ति [?] ॥
शङ्खचक्रोर्ध्वपुण्ड्रादिधारणं स्मरणं हरेः ।
तदीयाराधनं चैव भक्तिर्बहुविधा स्मृता ॥
पशुपुत्रादिकं सर्वं गृहोपकरणानि च ।
अङ्कयेच्छङ्खचक्राभ्यां नाम कुर्याच्च वैष्णवम् ॥
पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः ।
तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम् ॥
दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ।
सव्ये तु शङ्खं बिभृयादिति ब्रह्मविदो विदुः ॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ।
अर्चनीयश्च सेव्यश्च नित्ययुक्तैः स्वकर्मसु ॥
ये कण्ठलग्नतुलसीनलिनाक्षमाला
ये बाहुमूलपरिचिह्नितशङ्खचक्राः ।
ये वा ललाटफलके लसदूर्ध्वपुण्ड्राः
श्रीवैष्णवा भुवनमाशु पवित्रयन्ति ॥
पञ्चार्थतत्त्वविदुषां पञ्चसंस्कारसंस्कृतम् ।
पञ्चावस्थास्वरूपं ते विज्ञेयं सततं विभो ॥

पञ्चसंस्कारयुक्तानां वैष्णवानां विशेषतः ।
गृहार्चनविधाने न शङ्खं घण्टारवं त्यजेत् ॥ इति ॥

एतदथर्वशिरो योऽधीते य ऊर्ध्वपुण्ड्रं विधिवद्विदित्वा धारयति स वैदिको भवति । स कर्मार्हो भवति । अनेन तेजस्वी यशस्वी ब्रह्मवर्चस्वी भवति । अनेन कायिकवाचिकमानसपातकेभ्यः पूतो भवति । श्रीविष्णु-सायुज्यमवाप्नोति । श्रीविष्णुसायुज्यमवाप्नोति । य एवं वेद । इत्युपनिषत् ॥

इति सुदर्शनोपनिषत् समाप्ता

———

# ४. शैव-उपनिषदः

## नीलरुद्रोपनिषत्

### नारायणकृतदीपिकाख्यव्याख्योपेता

#### प्रथमः खण्डः

अपश्यं त्वावरोहन्तं दिवितः पृथिवीमवः ।
अपश्यं रुद्रमस्यन्तं नीलग्रीवं शिखण्डिनम् ॥
दिव उग्रोऽवारुक्षत् प्रत्यस्थाद्भूम्यामधि ।
जनासः पश्यतेमं नीलग्रीवं विलोहितम् ॥
एष एत्यवीरहा रुद्रो जलासभेषजीः ।
वित्तेऽक्षेममनीनशद्वातीकारोऽप्येतु ते ॥
नमस्ते भवभामाय नमस्ते भवमन्यवे ।
नमस्ते अस्तु बाहुभ्यामुतो त इषवे नमः ॥
यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ।
शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ॥
शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।
यथा नः सर्वमिज्जगदयक्ष्मं सुमना असत् ॥

या त इषुः शिवतमा शिवं बभूव ते धनुः ।
शिवा शरव्या या तव तया नो मृड जीवसे ॥
या ते रुद्र शिवा तनूरघोराऽपापकाशिनी ।
तया नस्तन्वा शंतमया गिरिशन्ताभिचाकशत् ॥
असौ यस्ताम्रो अरुण उत बभ्रुर्विलोहितः ।
ये चेमे रुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषां हेड ईमहे ॥१॥

नीलरुद्रोपनिषदि षोडश्यां खण्डकत्रयम् ।
श्रुतिरूपेण तं देवं स्तौत्यपश्यमिति क्रमात् ॥

अस्पर्शयोगमुक्त्वा तत्संप्रदायप्रवर्तकं परमगुरुं योगसिद्धिप्रदं नीलरुद्रं स्तौति—अपश्यमिति ॥ दिवितो दिवः पृथिवीं भूमिमवः अवस्तात् अवरोहन्तं त्वामहमपश्यमिति मन्त्रद्रष्टुर्वचः । अस्यन्तं क्षिपन्तं दुष्टान् "असु क्षेपणे" इति धातोः । शिखण्डिनं, "शिखण्डो बर्हचूडयोः" इति विश्वः । तयोरन्यतरदस्यास्तीति शिखण्डी तम् । दिवः सकाशादुग्रो रुद्रः अवारुक्षत् अवतीर्णवान् । प्रत्यस्थात् प्रतिष्ठां स्थितिं कृतवान् । भूम्यामधि, "अधिरीश्वरे" इत्यधिः कर्मप्रवचनीयः "यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी" इति स्वात्सप्तमी । भूमेरीश्वर इत्यर्थः । जनासः "आज्जसेरसुक्", "संबोधने च" इति प्रथमा । एत्यागच्छति । न वीरहा अवीरहा सौम्यः । यद्वा अवीराणि पापानि हन्तीत्यवीरहा । जले आसः क्षेपो यासां ता जलासाः ताश्च ता भेषज्यश्च ता एतीत्यन्वयः । जलक्षिप्तानामोषधीनामक्षेमनिर्णोदकत्वं रुद्रसन्निधानादेव ते तवाक्षेमं व्यनीनशत् । अनेन क्षेमकारित्वमुक्तम् । अलब्धलाभो योगस्तत्कारित्वमप्याह—वातीकार इति ॥ वातिः प्राप्तिः अप्राप्तं प्राप्तं करोतीति वातीकारः सोऽपि ते तवापूर्वलाभकरः

एतु आगच्छतु। योगक्षेमकरोऽभिषेकजले संनिहितो भवत्वित्यर्थः। मन्त्र-लिङ्गादभिषेके विनियोगः। भामः क्रोधः। मन्युः तत्पूर्वावस्था। उतो उत। इषवे बाणरूपाय। अस्तवे "असु क्षेपणे" इति धातोः तवेन्प्रत्ययस्तुमर्थे, अस्तुं क्षेप्तुमित्यर्थः। कं क्षेप्तुं गिरिशन्तं श्यतीति श्यन्, गिरेः श्यन् संबन्धसामान्ये षष्ठ्या समासः, तं गिरिशन्तं, छान्दसो यलोपः। हे गिरित्र गिरिरक्षक। तां शिवां कल्याणीं कुरु। अच्छा वदामसि। अच्छा निर्मलम्। वदामसि वदाम। अच्छशब्दस्य "निपातस्य" इति दीर्घः। "इदन्तो मसि," इदनर्थको निपातः। अयक्ष्मं नीरोगम्। सुमनाः सुमनस्कमसत् भवेत्। लिङर्थे लेट् तिप् इतश्च लोपः। परस्मैपदेषु लेटः प्रभवत्यट्। शरव्या शरसंधात्री ज्या। "शरो दध्यग्रबाणयोः" इति विश्वः। शरमर्हति यत्। अव शरस्य चेत्यवादेशः। शरुवृत्ताद्वा सिद्धं "शरुरायुधकोपयोः"। "उगवादिभ्यो यत्"। जीवसे जीवितुं, मृड मोदय। यद्वा हे मृड। तया तन्वा नः अस्मान् जीवसे जीवयसि। शन्तमया अतिशयेन शं शंतमा तया अभिचाकशत्, कशेर्यङ् उदात्ताल्लेट् तिप् अट्। अतिशयेन प्रकाशयत्विति प्रार्थना। बभ्रुः पिङ्गलः अव एषां ह ईडे स्तुतये ईमहे कामयामहे ॥ १ ॥

इति प्रथमः खण्डः

---

## द्वितीयः खण्डः

अपश्यं त्वावरोहन्तं नीलग्रीवं विलोहितम्।
उत त्वा गोपा अदृशन्नुत त्वोदहार्यः ॥

उत त्वा विश्वा भूतानि तस्मै दृष्टाय ते नमः ।
नमो अस्तु नीलशिखण्डाय सहस्राक्षाय वाजिने ॥
अथो ये अस्य सत्वानस्तेभ्योऽहमकरं नमः ।
नमांसि त आयुधायानातताय धृष्णवे ॥
उभाभ्यामकरं नमो बाहुभ्यां तव धन्वने ।
प्रमुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम् ॥
या श्च ते हस्त इषवः परा ता भगवो वप ।
अवतत्य धनुस्त्वꣳ सहस्राक्ष शतेषुधे ॥
निशीर्य शल्यानां मुखा शिवो नः शंभुराभर ।
विज्यं धनुः शिखण्डिनो विशल्यो बाणवाꣳउत ॥
अनेशन्नस्येषव आभुरस्य निषङ्गथिः ।
परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः ॥
अथो य इषुधिस्तवारे अस्मिन्निधेहि तम् ।
या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः ॥
तया त्वं विश्वतो अस्मानयक्ष्मया परिब्भुज ।
नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु ॥
ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ।
ये वाभिरोचने दिवि ये च सूर्यस्य रश्मिषु ॥
येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः ।
या इषवो यातुधानानां ये वा वनस्पतीनाम् ।
ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥ २ ॥

गोपा गोपाला अदृशन् अपश्यन् । उदहार्यः पानीयहारिण्यः । विश्वा विश्वानि भूतानि अदृशन् । योगिनामप्यदृश्यं त्वां कृपया आविर्भ-

वन्तमादित्यवत्प्रकाशमानं पामरा अपि ददृशुरित्यर्थः । वाजिनेऽन्नवते बाणरूपाय वा । सीदन्तीति सत्वानो गणाः । नमांसि नमस्काराः । न आततायअनातताय । धृष्णवे प्रगल्भाय । बाहुभ्यां कृत्वा धन्वने नमोऽकरवमित्यर्थः । उभयोररिप्रत्यरिभूतयो राज्ञोर्धन्वनो ज्यां प्रमुञ्च अनाततं कुरु । राज्ञोर्विग्रहे लोकानां क्लेशो भवति । ततस्तं शमयेति भावः । हे भगवः । यास्ते हस्त इषवो बाणास्ताः परावप पराङ्मुखान् मुंच । त्वमपि कोपं लोकेषु मा कृथा इति भावः । इन्द्ररूपेण जगद्रक्षेति प्रार्थयते—अवतत्येति । स्वधिज्यं कृत्वा । सहस्राक्ष शक्ररूप । शतमिषुधयस्तूणा यज्ञरूपाः यस्य तत्संबोधने । निशीर्य तीक्ष्णीकृत्य । मुखा मुखानि । नोऽस्मान् । शिवः कल्याणरूपः । शम्भुः सुखहेतुः सन्नाभर धारय पोषय वा । बाणवान् तूणीरः विशल्योऽस्तु भल्लरहितो भवतु । वैरिषु हतेषु तत्प्रयोजनाभावात् । अनेशन् अदृश्या अभूवन् । "नशिगम्योरलघित्वम्" इति वार्तिकेन लुङि घङि एत्वम् । निषङ्गथिः निषङ्गे । विश्वतः सर्वतः । अस्मान् परिवृणक्तु परिवृणातु । अरे सम्बोधने । अथो पश्चाद्रक्षणानन्तरं यस्तव इषुधिरस्मिन्निषुधौ तं बाणं निधेहि स्थापय । हे मीढुष्टम ईडिततमेत्यर्थः । सेचकतम अयक्ष्मया सज्जया तया हेत्या परिब्भुज परिपालय । सदस्कृतं गृहं कृतं यातुधानानां रक्षसां वनस्पतीनां चेषवः सर्पाः । तैर्हि ते जनान् दशन्ति । अवटेषु गर्तेषु ॥ २ ॥

इति द्वितीयः खण्डः

---

## तृतीयः खण्डः

य: स्वजनान्नीलग्रीवो य: स्वजनान्हरिः ।
कल्माषपुच्छमोषधे जम्भयोताश्वरुन्धति ॥
बभ्रुश्च बभ्रुकर्णश्च नीलग्रीवश्च य: शिवः ।
शर्वेण नीलकण्ठेन भवेन मरुतां पिता ॥
विरूपाक्षेण बभ्रुणा वाचं वदिष्यतो हतः ।
शर्व नीलशिखण्ड वीर कर्मणि कर्मणि ॥

इमामस्य प्राशं जहि येनेदं विभजामहे । नमो भवाय । नमश्शर्वाय । नमः कुमाराय शत्रवे । नमः सभाप्रपादिने । यस्याश्वतरौ द्विसरौ गर्दभावभितस्सरौ । तस्मै नीलशिखण्डाय नमः । नीलशिखण्डाय नमः ॥ ३ ॥

केदाराधीशं महिषरूपं स्तौति—य इति । यः शिवः स्वजनान् भक्तान् प्रति नीलग्रीवः । यश्च स्वजनान्भक्तान् प्रति हरिर्हरितवर्णो भक्तवात्सल्येन भवति । महिषस्य हि तादृग्रूपं संभवति । ओषधे अरुन्धति रोधरहिते । तं कल्माषपुच्छं कृष्णपाण्डुरपुच्छम् । आशु शीघ्रम् । जम्भय वीर्यवन्तं कुरु । ओषधीनां पशुभ्यो बलप्रदत्वात् । "कल्माषो राक्षसे कृष्णे कल्माषः कृष्णपाण्डुरे" इति विश्वः । केदारेश्वरस्य महिषरूपत्वात्पुच्छवत्ता संभवति । बभ्रुः क्वचिदवयवे पिङ्गळवर्णः । बभ्रुकर्णः अन्तःपिङ्गलवर्णकर्णः । पितेति तृतीयार्थे प्रथमा । पित्रेत्यर्थः । अथ वाचं वदिष्यतः पिता देहिमात्रस्य जनकः ब्रह्म येनेश्वरेण हतस्तं त्वं पश्येत्यन्वयः । हे वीर कर्मणि कर्मणि विहितनिषिद्धरूपे इमामस्य जनस्याशां पृच्छतीति प्राट् । तां प्राशं पृच्छिकां वाचं जहि । वेदविहितनिषिद्धकर्मविषयं संशयं निराकुर्वित्यर्थः ।

येन कर्मणेदं जगद्विभजामहे कर्मभूमिभोगभूमिरूपेण विभक्तं कुर्महे। कुमाराय कालानभिभूताय। शत्रवे संहर्त्रे। सभाप्रपादिने सभां प्रपद्यते तच्छीलः- सभाप्रपादी तस्मै सभ्यायेत्यर्थः। अश्वतरौ ईषदूनमश्वत्वं ययोस्तौ अश्वतरौ। गर्दभादश्वायां जातौ। द्विसरौ अभितः सरत इत्यभितःसरौ गर्दभौ वर्तेते तस्मै। द्विरुक्तिः समाप्त्यर्था।

नारायणेन रचिता श्रुतिमात्रोपजीविता।
अस्पष्टपदवाक्यानां नीलरुद्रस्य दीपिका ॥ ३ ॥

इति तृतीयः खण्डः

इति नारायणकृतदीपिकाख्यव्याख्योपेता नीलरुद्रोपनिषत् समाप्ता

---

# पारायणोपनिषत्

अथाह वै वेदानां वेदत्वमेतेन शाक्ते शक्तित्वमेति न वेदमातुर्वेदमातृत्वमेतेन तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। परोरजसे सावदोम्। महाकालाय विद्महे श्मशानवासिने धीमहि। तन्नो रुद्रः प्रचोदयात्। रुद्र एवाग्निरिति। अथ प्रकाशः ॐ भूर्भुवः स्वः ॐ ऐं क्लीं सौः। ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। परोरजसे सावदोम्। सौः क्लीं ऐं ह्रौं क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं दक्षिणकालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा। ह्रां ऐं क्लीं श्रीं ॐ ॐ ॐ श्रीं क्लीं ऐं। महाकालाय विद्महे श्मशानवासिने धीमहि। तन्नो रुद्रः प्रचोदयात्। रुद्र एवाग्निरिति संघट्टनाधीशो

भवेत् । तदिदंपारायणवशादानन्दपूर्णो भवेत् । ओघत्रयनामविशिष्टमाकृति-विशिष्टं नवनाथनामविशिष्टं वा नाममयीमाज्ञां दद्यात् । घटिकापारायणं चरेत् । दिनाक्षरयुगाक्षरे तद्दिननित्याहंसस्तदनु मातृकां जपेत् । कालनित्यां जपेत् । द्विशतसाहस्रशीर्षे तरसाग्निजापी भवेत् । मन्त्रपारायणी भवेत् । नामपारायणी भवेत् । चक्रपारायणी भवेत् । स सर्वं पश्यति । स सर्वं जलमयो भवेत् । वह्नौ वह्निमयो भवेत् । चराचरगतिर्भवेत् । पराशतषष्टिवाणीज्ञो भवेत् । षोढान्यासाधिकारी भवेत् । मासतः पक्षतो वारतः पारायणी भवेत् । सर्वाधिकारी भवेत् । दृष्टार्कं चरेत् । तदाचरणी अमृतत्वं गच्छति । ब्रह्मत्वं गच्छति । साक्षात्सप्तमीरूपो भवेदिति प्रोतं वेद ॥

इत्याथर्वणीये सौभाग्यकाण्डे पारायणोपनिषत् समाप्ता

---

# बिल्वोपनिषत्

अथ वामदेवः परमेश्वरं सृष्टिस्थितिलयकारणमुमासहितं स्वशिरसा प्रणम्येति होवाच । अधीहि भगवन् सर्वविद्यां सर्वरहस्यवरिष्ठां सदा सद्भिः पूज्यमानां निगूढाम् । कया च पूजया सर्वपापं व्यपोह्य परात्परं शिव-सायुज्यमाप्नोति ? केनैकेन वस्तुना मुक्तो भवति ? तं होवाच भगवान् सदाशिवः ।

न वक्तव्यं न वक्तव्यं न वक्तव्यं कदाचन ।
मत्स्वरूपस्त्वयं ज्ञेयो बिल्ववृक्षो विधानतः ।
एकेन बिल्वपत्रेण संतुष्टोऽस्मि महामुने ॥

इति ब्रुवन्तं परमेश्वरं पुनः प्रणम्येति होवाच ॥

भगवन् सर्वलोकेश सत्यज्ञानादिलक्षण ।
कथं पूजा प्रकर्तव्या तां वदस्व दयानिधे ॥

इति पुनः पृच्छन्तं वामदेवमालिङ्ग्चेति होवाच ॥

बुद्धिमांस्त्वमिति ज्ञात्वा वक्ष्यामि मुनिसत्तम ।
मम प्रियेण बिल्वेन त्वं कुरुष्व मदर्चनम् ॥
द्रव्याणामुत्तमैर्लोके मम पूजाविधौ तव ।
पत्रपुष्पाक्षतैर्दिव्यैर्बिल्वपत्रैः समर्चय ॥
बिल्वपत्रं विना पूजा व्यर्था भवति सर्वदा ।
मम रूपमिति ज्ञेयं सर्वरूपं तदेव हि ॥
प्रातः स्नात्वा विधानेन सन्ध्याकर्म समाप्य च ।
भूतिरुद्राक्षभरण उदीचीं दिशमाश्रयेत् ॥
सद्योजातादिभिर्मन्त्रैर्नमस्कृत्य पुनः पुनः ।
प्रदक्षिणत्रयं कृत्वा शिवरूपमिति स्फुटम् ॥
देवीं ध्यायेत्तथा वृक्षे विष्णुरूपं च सर्वदा ।
ब्रह्मरूपं च विज्ञेयं सर्वरूपं विभावयेत् ॥
वामदक्षिणमध्यस्थं ब्रह्मविष्णुशिवात्मकम् ।
इन्द्रादयश्च यक्षान्ता वृन्तभागे व्यवस्थिताः ॥
पृष्ठभागेऽमृतं यस्मादर्चयेन्मम तुष्टये ।
उत्तानबिल्वपत्रं च यः कुर्यान्मम मस्तके ॥
मम सायुज्यमाप्नोति नात्र कार्या विचारणा ।
त्रिमूर्तिस्त्रिगुणं बैल्वमग्निरूपं तथैव च ।
ब्रह्मरूपं कलारूपं वेदरूपं महामुने ॥

पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं शिवरूपमस्मि ।
सबिल्वरूपं सगुणात्मरूपं त्रिमूर्तिरूपं शिवरूपमस्मि ॥
पृष्ठभागेऽमृतं न्यस्तं देवैर्ब्रह्मादिभिः पुरा ।
उत्तानबिल्वपत्रेण पूजयेत् सर्वसिद्धये ॥
तस्मात् सर्वप्रयत्नेन बिल्वपत्रैः सदार्चय ।
बिल्वपत्रं विना वस्तु नास्ति किंचित्तवानघ ॥
तस्मात् सर्वप्रयत्नेन बिल्वपत्रैः सदार्चय ।
उत्तानपत्रपूजां च यः कुर्यान्मम मस्तके ॥
इह लोकेऽखिलं सौख्यं प्राप्नोत्यन्ते पुरे मम ।
तिष्ठत्येव महावीरः पुनर्जन्मविवर्जितः ॥
सोदकैर्बिल्वपत्रैश्च यः कुर्यान्मम पूजनम् ।
मम सान्निध्यमाप्नोति प्रमथैः सह मोदते ॥
सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
बिल्वपूजनतो लोके मत्पूजायाः परा न हि ॥
त्रिसुपर्णं त्रिऋचां रूपं त्रिसुपर्णं त्रयीमयम् ।
त्रिगुणं त्रिजगन्मूर्तित्रयं शक्तित्रयं त्रिदृक् ॥
कालत्रयं च सवनत्रयं लिङ्गत्रयं त्रिपात् ।
तेजस्त्रयमकारोकारमकारप्रणवात्मकम् ॥
देवेषु ब्राह्मणोऽहं हि त्रिसुपर्णमयार्चितम् ।
मह्यं वै ब्राह्मणायेदं मया विज्ञप्तकामिकम् ॥
दद्याद्ब्रह्मभ्रूणवीरहत्यायाश्चान्यपातकैः ।
मुक्तोऽखण्डानन्दबोधो ब्रह्मभूयाय कल्पते ॥

त्रिसुपर्णोपनिषदः पठनात्पङ्क्तिपावनः ।
बोधको ह्या सहस्राद्वै पङ्क्तिं पावयते ध्रुवम् ॥
त्रिसुपर्णश्रुतिर्ह्येषा निष्कृतौ त्रिदले रता ।
श्रद्धत्स्व विद्धन्नाद्यं तदिति वेदानुशासनम् ॥
अखण्डानन्दसंबोधमयो यस्मादहं मुने ।
विन्यस्तामृतभागेन सुपर्णेनावकुण्ठय ॥
अमृतं मोक्षवाचन्तु तेनास्मदवकुण्ठनात् ।
प्राप्येते भोगमोक्षौ हि स्थित्यन्ते मदनुग्रहात् ॥
उत्तानभागपर्णेन मूर्ध्नि मे न्युब्जमर्पयेत् ।
मोक्षेऽमृतावकुण्ठोऽहं भवेयं तव कामधुक् ॥
येन केन प्रकारेण बिल्वकेनापि मां यज ।
तीर्थदानतपोयोगस्वाध्याया नैव तत्समाः ॥
बिल्वं विधानतः स्थाप्य वर्धयित्वा च तद्दलैः ।
यः पूजयति मां भक्त्या सोऽहमेव न संशयः ॥

य एतदधीते ब्रह्महाऽब्रह्महा भवति । स्वर्णस्तेय्यस्तेयी भवति । सुरापाय्यपायी भवति । गुरुवधूगाम्यगामी भवति । महापातकोपपातकेभ्यः पूतो भवति । न च पुनरावर्तते । न च पुनरावर्तते । न च पुनरावर्तते । ॐ सत्यम् ॥

इति बिल्वोपनिषत् समाप्ता

---

# मृत्युलाङ्गूलोपनिषत्

अथ मृत्युलाङ्गूलं व्याख्यास्यामः। अस्य मृत्युलाङ्गूलमन्त्रस्य वसिष्ठ ऋषिः। अनुष्टुप् छन्दः। कालाग्निरुद्रो यमश्च देवता। मृत्यूपस्थाने विनियोगः। अथातो योगजिह्वः साधुमतियोजितं स मे वाह कालं पुरुषमूर्ध्वलिङ्गं विरूपाक्षं विश्वरूपाय नमो नमः। पशुपतये नमः। य इदं शृणुयान्नित्यं मृत्युलाङ्गूलं त्रिसन्ध्यं कीर्तयति वा स ब्रह्महत्यां व्यपोहति। सुवर्णस्तेय्यस्तेयी भवति। गुरुदाराभिगाम्यगामी भवति। सर्वेभ्यः पातकेभ्य उपपातकेभ्यश्च सद्यो विमुक्तो भवति। सकृज्जप्तेनानेन गायत्र्याः षष्टिसहस्राणि फलितानि भवन्ति। अष्टौ ब्राह्मणान् ग्राहयित्वा ब्रह्मलोकमवाप्नोति। यः कश्चिन्न ददाति स श्वित्री कुष्ठी कुनखी वा भवेत्। यः कश्चिद्दीयमानं न गृह्णाति सोऽन्धो बधिरो मूको वा भवति। मृत्युमुपस्थितः षण्मासादर्वाक्। बन्धोऽयं नश्यति इत्यनेन मृत्युलाङ्गूलाख्यस्य च महामन्त्रस्य शतकृत्वो जप्तेन भगवान् धर्मराट् मम प्रीयताम्।

ऋतं नष्टं यदा काले षण्मासेन मरिष्यति।
ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्॥
ऊर्ध्वलिङ्गं विरूपाक्षं विश्वरूपं नमाम्यहम्।
सत्यं तु पञ्चमे मासे परं ब्रह्म चतुर्थके॥
पुरुषं च तृतीये वा द्वितीये कृष्णपिङ्गलम्॥
ऊर्ध्वलिङ्गं तु मासेन विरूपाक्षं तदर्धके।
विश्वरूपं तृतीयेऽह्नि सद्यश्चैव नमो नमः॥

इति मृत्युलाङ्गूलोपनिषत् समाप्ता

---

# रुद्रोपनिषत्

विश्वमयो ब्राह्मणः शिवं व्रजति । ब्राह्मणः पञ्चाक्षरमनुभवति । ब्राह्मणः शिवपूजारतः । शिवभक्तिविहीनश्चेत् स चण्डाल उपचण्डालः । चतुर्वेदज्ञोऽपि शिवभक्त्यान्तर्भवतीति स एव ब्राह्मणः । अधमश्चाण्डालोऽपि शिवभक्तोऽपि ब्राह्मणाच्छ्रेष्ठतरः । ब्राह्मणस्त्रिपुण्ड्रधृतः । अत एव ब्राह्मणः । शिवभक्तेरेव ब्राह्मणः । शिवलिङ्गार्चनयुतश्चाण्डालोऽपि स एव ब्राह्मणाधिको वति । अग्निहोत्रभसिताच्छिवभक्तचाण्डालहस्तविभूतिः शुद्धा । कपिशा वा श्वेतजापि धूम्रवर्णा वा । विरक्तानां तपस्विनां शुद्धा । गृहस्थानां निर्मल-विभूतिः । तपस्विभिः सर्वभस्म धार्यम् । यद्वा शिवभक्तिसंपुष्टं सदापि तद्भसितं देवताधार्यम् ।

ॐ अग्निरिति भस्म । वायुरिति भस्म । स्थलमिति भस्म । जलमिति भस्म । व्योमेति भस्म इत्याद्युपनिषत्कारणात् तत् कार्यम् । अन्यत्र "विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् । सं बाहुभ्यां नमति सं पतत्रैर्द्यावापृथिवी जनयन् देव एकः ।" तस्मात्प्राणलिङ्गी शिवः । शिव एव प्राणलिङ्गी । जटाभस्मधारोऽपि प्राणलिङ्गी हि श्रेष्ठः । प्राणलिङ्गी शिवरूपः । शिवरूपः प्राणलिङ्गी । जङ्गमरूपः शिवः । शिव एव जङ्गमरूपः । प्राणलिङ्गिनां शुद्धसिद्धिर्न भवति । प्राणलिङ्गिनां जङ्गमपूज्यानां पूज्यतपस्विनामधिकश्चण्डालोऽपि प्राणलिङ्गी । तस्मात्प्राण-लिङ्गी विशेष इत्याह । य एवं वेद स शिवः । शिव एव रुद्रः प्राणलिङ्गी नान्यो भवति ।

ॐ आत्मा परशिवद्वयो गुरुः शिवः । गुरूणां सर्वविश्वमिदं विश्व-मन्त्रेण धार्यम् । दैवाधीनं जगदिदम् । तद्दैवं तन्मन्त्रात् तनुते । तन्मे दैवं

गुरुरिति । गुरूणां सर्वज्ञानिनां गुरुणा दत्तमेतदन्नं परब्रह्म । ब्रह्म स्वानुभूतिः । गुरुः शिवो देवः । गुरुः शिव एव लिङ्गम् । उभयोर्मिश्रप्रकाशत्वात् । प्राणवत्त्वात् महेश्वरत्वाच्च शिवस्तदैव गुरुः । यत्र गुरुस्तत्र शिवः । शिवगुरुस्वरूपो महेश्वरः । भ्रमरकीटकार्येण दीक्षिताः शिवयोगिनः शिवपूजापथे गुरुपूजाविधौ च महेश्वरपूजनान्मुक्ताः । लिङ्गाभिषेकं निर्माल्यं गुरोरभिषेकतीर्थं महेश्वरपादोदकं जन्ममालिन्यं क्षालयन्ति । तेषां प्रीतिः शिवप्रीतिः । तेषां तृप्तिः शिवतृप्तिः । तैश्च पावनो वासः । तेषां निरसनं शिवनिरसनम् । आनन्दपारायणः । तस्माच्छिवं व्रजन्तु । गुरुं व्रजन्तु । इत्येव पावनम् ॥

इति रुद्रोपनिषत् समाप्ता

---

# लिङ्गोपनिषत्

ॐ धर्मजिज्ञासा । ज्ञानं बुद्धिश्च । ज्ञानान्मोक्षकारणम् । मोक्षान्मुक्तिस्वरूपम् । तथा ब्रह्मज्ञानाद्बुद्धिश्च । लिङ्गैक्यं देहो लिङ्गभेदे न । अज्ञानात् ज्ञानं बुद्धिश्च । चतुर्वर्णानां धारणां कुर्यात् । पशुपक्षिमृगकीटकलिङ्गधारणमुच्यते । पञ्चबन्धस्वरूपेण पञ्चबन्धा ज्ञानस्वरूपाः । पिण्डाज्जननम् । तज्जननकाले धारणमुच्यते । "सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रम्", "अयं मे हस्तो भगवान्" इति धारयेत् । "या ते रुद्र शिवा तनूरघोराऽपापकाशिनी", "रुद्रपते जनिमा चारु चित्रम्", "वयं सोम व्रते तव । मनस्तनूषु बिभ्रतः । प्रजावन्तो अशीमहि ।", "त्रियम्बकं यजामहे" इति धारयेत् । ब्राह्मणानां धारणां कुर्यात् । "पवित्रं ते विततं

ब्रह्मणस्पते", "सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम्। अवस्यतं मुंचतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत्। सोमापूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः। जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम्।" इति प्राकट्यं कुर्यात्। न कुर्यात्पशुभाषणम्। श्रौतानामुपनयनकाले धारणम्। चतुर्थाश्रमः संन्यासः। पञ्चमो लिङ्ग-धारणम्। अत्याश्रमाणां मध्ये लिङ्गधारी श्रेष्ठो भवति। शिरसि महादेव-स्तिष्ठतु इति धारयेत्। अन्यायो न्यायः। पृथिव्यापस्तेजो वायुराकाश इति पञ्चस्वरूपं लिङ्गम्। त्वक्च्छ्रोत्रनेत्रजिह्वाघ्राणपञ्चस्वरूपमिति लिङ्गम्। रेतोबुद्ध्यापमनस्स्वरूपमिति लिङ्गम्। सङ्कल्प इति लिङ्गम्। ज्योतिरहं विरजा विपाप्मा भूयासं स्वरूपमिति लिङ्गम्। व्रतं चरेत्। संतिष्ठेन्नियमेन। सर्वं शाम्भवीरूपम्। शाम्भवी विद्योच्यते। चरेदेतानि सूत्राणि। पञ्चमुखं पञ्चस्वरूपं पञ्चाक्षरं पञ्चसूत्रं ज्ञानम्। सिद्धिर्भवत्येव। ज्ञानाद्धारणं लिङ्गदेह-प्रकार उच्यते। शिरःपाणिपादपायूपस्थं सर्वं लिङ्गस्वरूपम्। ब्राह्मणो वदेत्।

ओङ्कारो बाणः शक्तिरेव पीठं सिन्दूरवर्णं सर्वं लिङ्गस्वरूपम्। कैवल्यं केवलं विद्यात्। व्यवहारपरः स्यात्। प्राण एव प्राणः। पूर्वं ब्रह्मा पीठम्। विष्णुर्बाणः। रुद्रः स्वरूपम्। सर्वभूतैरथापरित्याज्यश्च। विग्रहमनुग्रहलिङ्गेषु शक्तिकपालेषु सर्ववशङ्करं विद्यात्। जातिविषयान् त्यजेत्। श्रौताश्रौतेषु धारणम्। वेदोक्तविधिना श्रौतं तद्रहितमश्रौतम्। सर्ववर्णेषु धारणं कैलाससिद्धिर्भवति। धारणं देहे कैलासस्वरूपम्। धारणं देहे कैवल्यस्वरूपम्। धारणं देहे प्रणवस्वरूपम्। धारणं देहे वेदस्वरूपम्। धारणं देहे ब्रह्मस्वरूपम्। धारणं देहे शिवस्वरूपम्। शिरसि बाणं बाहुनाभिपीठप्रकृतिरूपकं देहे धारणं यस्य न विद्यते तद्देहं न पश्येत्। शिरःकपालं केशान् न कुर्यात्। शिरःपीठं लिङ्गात्मकं सर्वम्।

शाम्भवीविग्रह उच्यते । प्राणादिलिङ्गस्वरूपं गुरोर्लिङ्गम् । गुरुसंभवात्मकं लिङ्गं प्रगुरोः । ततः प्रथमं प्रणिपतति । प्रणवस्वरूपं लिङ्गं ब्रह्मलिङ्गम् । प्रकाशात्मकं लिङ्गं विद्यालिङ्गम् । विद्यालिङ्गं ज्ञानस्वरूपम् । लिङ्गं प्रचरेच्छास्वात् । लिङ्गस्वरूपेयं सिद्धिर्भविष्यति । सर्वदेहेषु लिङ्गधारणं भवति । इति वेदपुरुषो मन्यते । महापुरुषोपेतं यो वेद स एव नित्यपूतस्थः । स एव नित्यपूतस्थः स्यांद्दैवलौकिकः पुरुषः । स एवामुष्मिकपुरुष इति मन्यन्ते । जीवात्मा परमात्मा च स एवोच्यते । इष्टप्राणाभावेषु लिङ्गधारणं वदन्ति । इष्टे धारणम् । तिस्रः पुरस्त्रिपदा विश्वचर्षणी । पुरनाशे लिङ्गस्वरूपाज्ञासिद्धिर्भवत्यवज्ञानेऽसति । संयुक्तं लिङ्गं मोक्ष एव भवत्येव । मोक्षमेव धारणं विद्यात् । उशंतीव मातरं कुर्यात् । इत्येवं वेदेत्युपनिषत् । ॐ तत्सत् ॥

इति लिङ्गोपनिषत् समाप्ता

---

# वज्रपञ्जरोपनिषत्

सह नाववतु— इति शान्तिः ।

वज्रपञ्जरेण भस्मधारणं कुर्यात् । वामकरे भस्म गृहीत्वा सद्योजातमिति पञ्चब्रह्ममन्त्रः । त्रियम्बकं जातवेदसे गायत्र्या मानस्तोकैरभिमन्त्र्य मूलेन सप्तवारमभिमन्त्र्य श्रीविद्येयं शिरसि । ऐं वद वद वाग्वादिनि ह्सैः क्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु । हसकलरी ओं मोक्षं कुरु कुरु । ह्सौः इति मुखे । ओं ओं नमो भगवति ज्वालामालिनि देवदेवि सर्वज्ञानं हारिके

जातवेदसि ज्वलन्ति ज्वलन्ति प्रज्वल प्रज्वल ह्रां ह्रीं ह्रूं र र र र ज्वालामालिनि हुं फट् स्वाहा इति हृदये। जलवासिन्यै नमो नाभौ। ह्रीं वह्निवासिन्यै नमो गुह्ये। ओं सह . . . . नाभ्यादिजान्वन्तम्। ओं ह्रीं श्रीं पशु हुं फट् स्वाहा जान्वादिपादपर्यन्तम्। ओं ह्रीं स्फुर स्फुर प्रस्फुर प्रस्फुर . . . . . रूप तट तट चट चट प्रचट प्रचट कह कह वम वम बन्धय बन्धय घातय घातय हुं फट् स्वाहा इत्यघोरेण शिरसि। ओं वैष्णव्यै नमो हृदये। पुनः अघोरेण पृष्ठे। पुनः सुदर्शनेन जान्वादिनाभ्यन्तम्। पुनः पाशुपतेन पादादिजान्वन्तम्। ह्सौः अ अं क्षं स्हौः . . ओं ह्रीं क्लीं क्ष्रौं श्रीं।

उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम्।
नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम्॥

श्रीं क्ष्रौं श्रीं ह्रीं ओं इति दक्षिणबाहौ। ओं क्षां ओं नमो भगवते नारसिंहाय ज्वालामालिने तीक्ष्णदंष्ट्राग्निनेत्राय सर्वरक्षोघ्नाय सर्वज्वरविनाशाय सर्वभूतविनाशाय दह दह पच पच रक्ष रक्ष हुं फट् स्वाहा इति वामबाहौ। उत्तिष्ठ पुरुष हरितपिङ्गळ लोहिताक्ष देहि मे दापय स्वाहा। ओं ह्रीं दुं उत्तिष्ठ पुरुषि किं स्वपिषि भयं मे समुपस्थितम्। यदि शक्यमशक्यं वा ते भगवति शमय शमय स्वाहा।

मृत्योस्तुल्यं त्रिलोकीं ग्रसितुमतिरसान्निस्सृता किं नु जिह्वा
किं वा कृष्णाङ्घ्रिपद्मद्युतिभिररुणिता विष्णुपद्याः पदव्यः।
प्राप्ताः सन्ध्याः स्मरारेः स्वयमुत नुतिभिस्तिस्र इत्यूह्यमानाः
देवैर्देव्यास्त्रिशूलक्षतमहिषजुषो रक्तधारा जयन्ति॥

इति बडबानलदुर्गामृत्योस्तुल्यवनदुर्गाभिः सर्वाङ्गमुद्धूळयेत्। ततः शेषभस्मनि जलं निक्षिप्य त्रिपुण्ड्रधारणं कुर्यात्।

एता एव महाविद्या विभूतेरभिधारणे ।
कथिताः परमेशानि सतां पूर्वतराघहाः ॥
वज्रपञ्जरनाम्नैव यः कुर्याद्भस्मधारणम् ।
स सर्वभयनिर्मुक्तः साक्षाच्छिवमयो भवेत् ।
एतानि तानि श्रीमन्त्रपवित्रे यानि भस्मनि ॥

दग्धकामाङ्गविभूतित्रैपुण्ड्रितानि कथितानि ललाटपट्टे लोपयन्ति दैवलिखितानि दुरक्षराणि ।

इति वज्रपञ्जरोपनिषत् समाप्ता

---

# वटुकोपनिषत्

अथ वटुकोपनिषदं व्याख्यास्यामः ।

वालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातरूपं वरेण्यम् ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिर्भविता नेतरेषाम् ॥
यो वै वटुकः स भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः ।
यो वै वटुकः स भगवान् यश्च विष्णुस्तस्मै वै नमो नमः ॥
यो वै वटुकः स भगवान् यश्च रुद्रस्तस्मै वै नमो नमः ।
यो वै वटुकः स भगवान् यश्चेन्द्रस्तस्मै वै नमो नमः ॥
यो वै वटुकः स भगवान् यश्चाग्निस्तस्मै वै नमो नमः ।
यो वै वटुकः स भगवान् यश्च वायुस्तस्मै वै नमो नमः ॥
यो वै वटुकः स भगवान् यश्च सूर्यस्तस्मै वै नमो नमः ।
यो वै वटुकः स भगवान् यश्च सोमस्तस्मै वै नमो नमः ॥

यो वै वटुकः स भगवान् यश्च ग्रहास्तस्मै वै नमो नमः ।
यो वै वटुकः स भगवान् यश्चोपग्रहास्तस्मै वै नमो नमः ॥
यो वै वटुकः स भगवान् यश्च भूस्तस्मै वै नमो नमः ।
यो वै वटुकः स भगवान् यश्च भुवस्तस्मै वै नमो नमः ॥
यो वै वटुकः स भगवान् यश्च स्वस्तस्मै वै नमो नमः ।
यो वै वटुकः स भगवान् यश्चान्तरिक्षं तस्मै वै नमो नमः ॥
यो वै वटुकः स भगवान् यश्च द्यौस्तस्मै वै नमो नमः ।
यो वै वटुकः स भगवान् यश्चापस्तस्मै वै नमो नमः ॥
यो वै वटुकः स भगवान् यश्च तेजस्तस्मै वै नमो नमः ।
यो वै वटुकः स भगवान् यश्च कालस्तस्मै वै नमो नमः ॥
यो वै वटुकः स भगवान् यश्च मृत्युस्तस्मै वै नमो नमः ।
यो वै वटुकः स भगवान् यश्चामृत्युस्तस्मै वै नमो नमः ॥
यो वै वटुकः स भगवान् यश्चाकाशस्तस्मै वै नमो नमः ।
यो वै वटुकः स भगवान् यश्च विश्वं तस्मै वै नमो नमः ॥
यो वै वटुकः स भगवान् यश्च शुक्लं तस्मै वै नमो नमः ।
यो वै वटुकः स भगवान् यश्च दम्भस्तस्मै वै नमो नमः ॥
यो वै वटुकः स भगवान् यश्चादम्भस्तस्मै वै नमो नमः ।
यो वै वटुकः स भगवात् यश्च सूक्ष्मं तस्मै वै नमो नमः ॥
यो वै वटुकः स भगवान् यश्च स्थूलं तस्मै वै नमो नमः ।
यो वै वटुकः स भगवान् यश्च कृष्णस्तस्मै वै नमो नमः ॥
यो वै वटुकः स भगवान् यश्चाकृष्णस्तस्मै वै नमो नमः ।
यो वै वटुकः स भगवान् यश्च सत्यं तस्मै वै नमो नमः ।
यो वै वटुकः स भगवान् यश्च सर्वं तस्मै वै नमो नमः ॥

भूस्ते आदिर्मध्यं भुवः स्वस्ते शीर्षं विश्वरूपोऽसि ब्रह्मैकस्त्वं द्विधा त्रिधा बुद्धिस्त्वं शान्तिस्त्वं पुष्टिस्त्वं हुतमहुतं दत्तमदत्तं सर्वमसर्वं विश्वमविश्वं कृतमकृतं परमपरं परायणं च त्वम् । अपाम सोममममृता अभूमागन्म ज्योतिरविदाम देवान् । किं नूनमस्मान्कृणवदरातिः किमु धूर्तिरमृतं मर्त्यस्य । सोमसूर्यपुरस्तात् सूक्ष्मः पुरुषः । सर्वं जगद्धितं वा एतदक्षरं प्राजापत्यं सूक्ष्मं सौम्यं पुरुषं ग्राह्यमग्राह्येण भावं भावेन सौम्यं सौम्येन सूक्ष्मं सूक्ष्मेण वायव्यं वायव्येन ग्रसति स्वेन तेजसा तस्मादुपसंहर्त्रे महाग्रासाय वै नमो नमः ।

हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः ।
हृदि त्वमसि यो नित्यं तिस्रो मात्राः परस्तु सः ॥

तस्योत्तरतः शिरो दक्षिणतः पादौ य उत्तरतः स ओङ्कारो य ओङ्कारः स प्रणवो यः प्रणवः स सर्वव्यापी यः सर्वव्यापी सोऽनन्तो योऽनन्तस्तत्तारं यत्तारं तत्सूक्ष्मं यत्सूक्ष्मं तच्छुक्लं यच्छुक्लं तद्वैद्युतं यद्वैद्युतं तत्परं ब्रह्म यत्परं ब्रह्म स एको य एकः स रुद्रो यो रुद्रः स ईशानो य ईशानः स भगवान् महेश्वरो यो भगवान् महेश्वरः स भगवान् वटुकेश्वरो यो भगवान् वटुकेश्वरः ।

अथ कस्मादुच्यत ओङ्कारो यस्मादुच्चार्यमाण एव प्राणानूर्ध्वमुत्क्रामयति तस्मादुच्यत ओङ्कारः । अथ कस्मादुच्यते प्रणवो यस्मादुच्चार्यमाण एव ऋग्यजुस्सामाथर्वाङ्गिरसं ब्रह्म ब्राह्मणेभ्यः प्रणामयति नामयति च तस्मादुच्यते प्रणवः । अथ कस्मादुच्यते सर्वव्यापी यस्मादुच्चार्यमाण एव सर्वान् लोकान् व्याप्नोति स्नेहो यथा पललपिण्डमिव शान्तरूपमोतप्रोतमनुप्राप्तो व्यतिषक्तश्च तस्मादुच्यते सर्वव्यापी । अथ कस्मादुच्यतेऽनन्तो यस्मादुच्चार्यमाण एव तिर्यगूर्ध्वमधस्ताच्चास्यान्तोः नोपलभ्यते तस्मादुच्यतेऽनन्तः । अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव गर्भजन्मव्याधि-

जरामरणसंसारमहाभयात्तारयति त्रायते च तस्मादुच्यते तारम् । अथ कस्मादुच्यते सूक्ष्मं यस्मादुच्चार्यमाण एव सूक्ष्मो भूत्वा शरीराण्यधितिष्ठति सर्वाणि चाङ्गान्यभिमृशति तस्मादुच्यते सूक्ष्मम् । अथ कस्मादुच्यते शुक्लं यस्मादुच्चार्यमाण एव क्लन्दते क्लामयति च तस्मादुच्यते शुक्लम् । अथ कस्मादुच्यते वैद्युतं यस्मादुच्चार्यमाण एवाव्यक्ते महति तमसि द्योतयति तस्मादुच्यते वैद्युतम् । अथ कस्मादुच्यते परं ब्रह्म यस्मात् परमपरं परायणं च बृहद्बृहत्या बृंहयति तस्मादुच्यते परं ब्रह्म । अथ कस्मादुच्यत एको यः सर्वान् प्राणान् संभक्ष्य संभक्षणेनाजः संसृजति विसृजति तीर्थमेके व्रजन्ति तीर्थमेके दक्षिणाः प्रत्यञ्च उदञ्चः प्राञ्चोऽभिव्रजन्त्येके तेषां सर्वेषामिह सद्गतिः । साकं स एको भूतश्चरति प्रजानां तस्मादुच्यत एकः । अथ कस्मादुच्यते रुद्रो यस्मादृषिभिर्नान्यैर्भक्तैर्द्रुतमस्य रूपमुपलभ्यते तस्मादुच्यते रुद्रः । अथ कस्मादुच्यत ईशानो यः सर्वान् देवानीशत ईशानीभिर्जननी-भिश्च परमशक्तिभिः । अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशानमस्य जगतः सुवर्दृशमीशानमिन्द्र तस्थुषः । तस्मादुच्यत ईशानः । अथ कस्मा-दुच्यते भगवान् महेश्वरो यस्माद्भक्ता ज्ञानेन भजन्त्यनुगृह्णाति च वाचं संसृजति विसृजति च सर्वान् भावान् परित्यज्यात्मज्ञानेन योगैश्वर्येण महति महीयते तस्मादुच्यते भगवान् महेश्वरः । अथ कस्मादुच्यते भगवान् वट्टुकेश्वरो यस्मादन्तर्जलौषधिवीरुधानाविश्येमं विश्वं भुवनानि वा अवते तस्मादुच्यते भगवान् वट्टुकेश्वरः । तदेतद्रुद्रचरितम् ।

एको ह देवः प्रदिशो नु सर्वाः
पूर्वो ह जातः स उ गर्भे अन्तः ।
स एव जातः स जनिष्यमाणः
प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः ॥

एको वटुको न द्वितीयाय तस्मै
य इमान् लोकानीशत ईशनीभिः ।
प्रत्यङ्जनास्तिष्ठति सञ्चुकोचान्तकाले
संसृज्य विश्वा भुवनानि गोप्ता ॥
यस्मिन् क्रोधं यां च तृष्णां क्षमां च
ह्यक्षमां हित्वा हेतुजालस्य मूलम् ।
बुद्ध्या सञ्चितं स्थापयित्वा तु रुद्रे
शाश्वतं वै रुद्रमेकत्वमाहुः ॥
वटुको हि शाश्वतेन पुराणेन
वेषमूर्जेण तपसा नियन्ता ॥

अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वं ह वेदं भस्म मन एतानि चक्षूंषि यस्माद्व्रतमिदं पाशुपतं यद्भस्मनाङ्गानि संस्पृशेत्तस्माद्ब्रह्म तदेतद्वटुकं पशुपाशविमोक्षणाय ।

यस्मिन्निदं सर्वमोतप्रोतं
तस्मादन्यन्न परं किञ्चनास्ति ।
न तस्मात् पूर्वं न परं तदस्ति
न भूतं नोत भव्यं यदासीत् ॥
अक्षराज्जायते कालः कालाद्व्यापक उच्यते ।

व्यापको हि भगवान् वटुको भोगायमानो यदा शेते रुद्रस्तदा संहरते प्रजाः । उच्छ्वासिते तमो भवति तमस आपोऽप्स्वङ्गुल्या मथिते मथितं शिशिरे शिशिरं मथ्यमानं फेनं भवति फेनादण्डं भवत्यण्डाद्ब्रह्मा भवति ब्रह्मणो वायुर्वायोरोङ्कार ओङ्कारात्सावित्री सावित्र्या गायत्री गायत्र्या लोकाः

भवन्ति। एतद्धि परमं तपः। आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवःस्वरों नम इति।

य इमां वटुकोपनिषदं ब्राह्मणोऽधीतेऽश्रोत्रियः श्रोत्रियो भवति। अनुपनीत उपनीतो भवति। स ह्याग्निपूतो भवति। स वायुपूतो भवति। स सूर्यपूतो भवति। स सोमपूतो भवति। स सत्यपूतो भवति। स सर्वपूतो भवति। स सर्वैर्देवैरनुज्ञातो भवति। स सर्वैर्वेदैरनुध्यातो भवति। स सर्वेषु तीर्थेषु स्नातो भवति। स सर्वविद्भवति। स सर्वायुरारोग्यवान् भवति। स कालज्ञानी भवति। स गुर्वनुग्रहभागी भवति। इत्येवं भगवद्वटुकेश्वरं यः स्तौति स वेद्यं वेदेति॥

इत्याथर्वणरहस्ये वटुकोपनिषत् समाप्ता

---

# शिवसङ्कल्पोपनिषत्

यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति।
दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु ॥१॥
येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः।
यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ २ ॥
यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु।
यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥
येनेदं भूतं भुवनं भविष्यत् परिगृहीतममृतेन सर्वम्।
येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु ॥ ४ ॥

यस्मिन्नृचः साम यजूंषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिंश्चित्तं सर्वमोतं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ ५ ॥
सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव ।
हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसङ्कल्पमस्तु ॥ ६ ॥

इति वाजसनेयसंहितायां शिवसङ्कल्पोपनिषत् समाप्ता

---

# शिवसङ्कल्पोपनिषत्

येनेदं भूतं भुवनं भविष्यत् परिगृहीतममृतेन सर्वम् ।
येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु ॥ १ ॥
येन कर्माणि प्रचरन्ति धीरा यतो वाचा मनसा चारु यन्ति ।
यत्संमितमनु संयन्ति प्राणिनस्तन्मे मनः शिवसङ्कल्पमस्तु ॥२॥
येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ ३ ॥
यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥
सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव ।
हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसङ्कल्पमस्तु ॥ ५ ॥
यस्मिन्नृचः साम यजूंषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिंश्चित्तं सर्वमोतं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥६॥
यदत्र षष्ठं त्रिशतं सुवीरं यज्ञस्य गुह्यं नवनावमाय्यम् [?] ।
दश पञ्च त्रिंशतं यत्परं च तन्मे मनः शिवसङ्कल्पमस्तु ॥ ७ ॥

यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति ।
दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु ॥८॥
येन द्यौः पृथिवी चान्तरिक्षं च ये पर्वताः प्रदिशो दिशश्च ।
येनेदं जगद्व्याप्तं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ ९ ॥
येनेदं विश्वं जगतो बभूव ये देवा अपि महतो जातवेदाः ।
तदेवाग्निस्तमसो ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु ॥१०॥
ये मनो हृदयं ये च देवा ये दिव्या आपो ये सूर्यरश्मिः ।
ते श्रोत्रे चक्षुषी सञ्चरन्तं तन्मे मनः शिवसङ्कल्पमस्तु ॥ ११ ॥
अचिन्त्यं चाप्रमेयं च व्यक्ताव्यक्तपरं च यत् ।
सूक्ष्मात्सूक्ष्मतरं ज्ञेयं तन्मे मनः शिवसङ्कल्पमस्तु ॥ १२ ॥
एका च दश शतं च सहस्रं चायुतं च
नियुतं च प्रयुतं चार्बुदं च न्यर्बुदं च ।
समुद्रश्च मध्यं चान्तश्च परार्धश्च
तन्मे मनः शिवसङ्कल्पमस्तु ॥ १३ ॥
ये पञ्च पञ्चदश शतं सहस्रमयुतं न्यर्बुदं च ।
तेऽग्निचित्येष्टकास्तं शरीरं तन्मे मनः शिवसङ्कल्पमस्तु ॥१४॥
वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
यस्य योनिं परिपश्यन्ति धीरास्तन्मे मनः शिवसङ्कल्पमस्तु ॥
यस्येदं धीराः पुनन्ति कवयो ब्रह्माणमेतं त्वा वृणुत इन्दुम् ।
स्थावरं जङ्गमं द्यौराकाशं तन्मे मनः शिवसङ्कल्पमस्तु ॥१६॥
परात् परतरं चैव यत्पराच्चैव यत्परम् ।
यत्परात् परतो ज्ञेयं तन्मे मनः शिवसङ्कल्पमस्तु ॥ १७ ॥

परात् परतरो ब्रह्मा तत्परात् परतो हरिः ।
तत्परात् परतोऽधीशस्तन्मे मनः शिवसङ्कल्पमस्तु ॥ १८ ॥
या वेदादिषु गायत्री सर्वव्यापी महेश्वरी ।
ऋग्यजुस्सामाथर्वैश्च तन्मे मनः शिवसङ्कल्पमस्तु ॥ १९ ॥
यो वै देवं महादेवं प्रणवं पुरुषोत्तमम् ।
यः सर्वे सर्ववेदैश्च तन्मे मनः शिवसङ्कल्पमस्तु ॥ २० ॥
प्रयतः प्रणवोङ्कारं प्रणवं पुरुषोत्तमम् ।
ओङ्कारं प्रणवात्मानं तन्मे मनः शिवसङ्कल्पमस्तु ॥ २१ ॥
योऽसौ सर्वेषु वेदेषु पठ्यते ह्यज ईश्वरः ।
अकायो निर्गुणो ह्यात्मा तन्मे मनः शिवसङ्कल्पमस्तु ॥ २२ ॥
गोभिर्जुष्टं धनेन ह्यायुषा च बलेन च ।
प्रजया पशुभिः पुष्कराक्षं तन्मे मनः शिवसङ्कल्पमस्तु ॥२३॥
त्रियम्बकं यजामहे
सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय
माऽमृतात्तन्मे मनः शिवसङ्कल्पमस्तु ॥ २४ ॥
कैलासशिखरे रम्ये शङ्करस्य शिवालये ।
देवतास्तत्र मोदन्ते तन्मे मनः शिवसङ्कल्पमस्तु ॥ २५ ॥
विश्वतश्चक्षुरुत विश्वतोमुखो
विश्वतोहस्त उत विश्वतस्पात् ।
संबाहुभ्यां नमति संपतत्रैर्द्यावापृथिवी
जनयन् देव एकस्तन्मे मनः शिवसङ्कल्पमस्तु ॥ २६ ॥

चतुरो वेदानधीयीत सर्वशास्त्रमयं विदुः ।
इतिहासपुराणानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ २७ ॥

मा नो महान्तमुत मा नो अर्भकं
मा न उक्षन्तमुत मा न उक्षितम् ।
मा नो वधीः पितरं मोत मातरं प्रिया मा नः
तनुवो रुद्र रीरिषस्तन्मे मनः शिवसङ्कल्पमस्तु ॥ २८ ॥

मा नस्तोके तनये मा न आयुषि
मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तः
नमसा विधेम ते तन्मे मनः शिवसङ्कल्पमस्तु ॥ २९ ॥

ऋतं सत्यं परं ब्रह्म
पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः
तन्मे मनः शिवसङ्कल्पमस्तु ॥ ३० ॥

कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे ।
वोचेम शन्तमं हृदे ।
सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु
तन्मे मनः शिवसङ्कल्पमस्तु ॥ ३१ ॥

ब्रह्म जज्ञानं प्रथमं पुरस्तात्
वि सीमतः सुरुचो वेन आवः ।
स बुध्निया उपमा अस्य विष्ठाः सतश्च योनिं
असतश्च विवस्तन्मे मनः शिवसङ्कल्पमस्तु ॥ ३२ ॥

य: प्राणतो निमिषतो
महित्वैक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पद: कस्मै देवाय
हविषा विधेम तन्मे मन: शिवसङ्कल्पमस्तु ॥ ३३ ॥
य आत्मदा बलदा यस्य विश्वे
उपासते प्रशिषं यस्य देवा: ।
यस्य छायाऽमृतं यस्य मृत्यु: कस्मै देवाय
हविषा विधेम तन्मे मन: शिवसङ्कल्पमस्तु ॥ ३४ ॥
यो रुद्रो अग्नौ यो अप्सु य ओषधीषु
यो रुद्रो विश्वा भुवनाऽऽविवेश ।
तस्मै रुद्राय नमो अस्तु
तन्मे मन: शिवसङ्कल्पमस्तु ॥ ३५ ॥
गन्धद्वारां दुराधर्षो
नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियं
तन्मे मन: शिवसङ्कल्पमस्तु ॥ ३६ ॥
य इदं शिवसङ्कल्पं सदा ध्यायन्ति ब्राह्मणा: ।
ते परं मोक्षं गमिष्यन्ति तन्मे मन: शिवसङ्कल्पमस्तु ॥ ३७ ॥

इति शिवसङ्कल्पोपनिषत् समाप्ता

[इति शिवसङ्कल्पमन्त्रा: समाप्ता:]

---

# शिवोपनिषत्

## प्रथमोऽध्यायः

कैलासशिखरासीनमशेषामरपूजितम् ।
कालघ्नं श्रीमहाकालमीश्वरं ज्ञानपारगम् ॥ १ ॥
संपूज्य विधिवद्भक्त्या ऋष्यात्रेयः सुसंयतः ।
सर्वभूतहितार्थाय पप्रच्छेदं महामुनिः ॥ २ ॥
ज्ञानयोगं न विन्दन्ति ये नरा मन्दबुद्धयः ।
ते मुच्यन्ते कथं घोराद्भगवन् भवसागरात् ॥ ३ ॥
एवं पृष्टः प्रसन्नात्मा ऋष्यात्रेयेण धीमता ।
मन्दबुद्धिविमुक्त्यर्थं महाकालः प्रभाषते ॥ ४ ॥

महादेव उवाच—

पुरा रुद्रेण गदिताः शिवधर्माः सनातनाः ।
देव्याः सर्वगणानां च संक्षेपाद्ग्रन्थकोटिभिः ॥ ५ ॥
आयुः प्रज्ञां तथा शक्तिं प्रसमीक्ष्य नृणामिह ।
तापत्रयप्रपीडां च भोगतृष्णाविमोहिनीम् ॥ ६ ॥
ते धर्माः स्कन्दनन्दिभ्यामन्यैश्च मुनिसत्तमैः ।
सारमादाय निर्दिष्टाः सम्यक्प्रकरणान्तरैः ॥ ७ ॥
सारादपि महासारं शिवोपनिषदं परम् ।
अल्पग्रन्थं महार्थं च प्रवक्ष्यामि जगद्धितम् ॥ ८ ॥
शिवः शिव इमे शान्तनाम चाद्यं मुहुर्मुहुः ।
उच्चारयन्ति तद्भक्त्या ते शिवा नात्र संशयः ॥ ९ ॥

अशिवाः पाशसंयुक्ताः पशवः सर्वचेतनाः ।
यस्माद्विलक्षणास्तेभ्यस्तस्मादीशः शिवः स्मृतः ॥ १० ॥
गुणो बुद्धिरहङ्कारस्तन्मात्राणीन्द्रियाणि च ।
भूतानि च चतुर्विंशदिति पाशाः प्रकीर्तिताः ॥ ११ ॥
पञ्चविंशकमज्ञानं सहजं सर्वदेहिनाम् ।
पाशजालस्य तन्मूलं प्रकृतिः कारणाय नः ॥ १२ ॥
सत्यज्ञाने निबध्यन्ते पुरुषाः पाशबन्धनैः ।
मद्भावाच्च विमुच्यन्ते ज्ञानिनः पाशपञ्जरात् ॥ १३ ॥
षड्विंशकश्च पुरुषः पशुरज्ञः शिवागमे ।
सप्तविंश इति प्रोक्तः शिवः सर्वजगत्पतिः ॥ १४ ॥
यस्माच्छिवः सुसंपूर्णः सर्वज्ञः सर्वगः प्रभुः ।
तस्मात्स पाशरहितः स विशुद्धः स्वभावतः ॥ १५ ॥
पशुपाशपरः शान्तः परमज्ञानदेशिकः ।
शिवः शिवाय भूतानां तं विज्ञाय विमुच्यते ॥ १६ ॥
एतदेव परं ज्ञानं शिव इत्यक्षरद्वयम् ।
विचाराद्याति विस्तारं तैलबिन्दुरिवाम्भसि ॥ १७ ॥
सकृदुच्चारितं येन शिव इत्यक्षरद्वयम् ।
बद्धः परिकरस्तेन मोक्षोपगमनं प्रति ॥ १८ ॥
द्व्यक्षरः शिवमन्त्रोऽयं शिवोपनिषदि स्मृतः ।
एकाक्षरः पुनश्चायमोमित्येवं व्यवस्थितः ॥ १९ ॥
नामसङ्कीर्तनादेव शिवस्याशेषपातकैः ।
यतः प्रमुच्यते क्षिप्रं मन्त्रोऽयं द्व्यक्षरः परः ॥ २० ॥
यः शिवं शिवमित्येवं द्व्यक्षरं मन्त्रमभ्यसेत् ।
एकाक्षरं वा सततं स याति परमं पदम् ॥ २१ ॥

मित्रस्वजनबन्धूनां कुर्यान्नाम शिवात्मकम् ।
अपि तत्कीर्तनाद्याति पापमुक्तः शिवं पुरम् ॥ २२ ॥
विज्ञेयः स शिवः शान्तो नरस्तद्भावभावितः ।
आस्ते सदा निरुद्विग्नः स देहान्ते विमुच्यते ॥ २३ ॥
हृद्यन्तःकरणं ज्ञेयं शिवस्यायतनं परम् ।
हृत्पद्मं वेदिका तत्र लिङ्गमोङ्कारमिष्यते ॥ २४ ॥
पुरुषः स्थापको ज्ञेयः सत्यं संमार्जनं स्मृतम् ।
अहिंसा गोमयं प्रोक्तं शान्तिश्च सलिलं परम् ॥ २५ ॥
कुर्यात् संमार्जनं प्राज्ञो वैराग्यं चन्दनं स्मृतम् ।
पूजयेद्ध्यानयोगेन सन्तोषैः कुसुमैः सितैः ॥ २६ ॥
धूपश्च गुग्गुलुर्देयः प्राणायामसमुद्भवः ।
प्रत्याहारश्च नैवेद्यमस्तेयं च प्रदक्षिणम् ॥ २७ ॥
इति दिव्योपचारैश्च संपूज्य परमं शिवम् ।
जपेद्ध्यायेच्च मुक्त्यर्थं सर्वसङ्गविवर्जितः ॥ २८ ॥
ज्ञानयोगविनिर्मुक्तः कर्मयोगसमावृतः ।
मृतः शिवपुरं गच्छेत्स तेन शिवकर्मणा ॥ २९ ॥
तत्र भुक्त्वा महाभोगान्प्रलये सर्वदेहिनाम् ।
शिवधर्माच्छिवज्ञानं प्राप्य मुक्तिमवाप्नुयात् ॥ ३० ॥
ज्ञानयोगेन मुच्यंते देहपातादनन्तरम् ।
भोगान् भुक्त्वा च मुच्यन्ते प्रलये कर्मयोगिनः ॥ ३१ ॥
तस्मात् ज्ञानविदो योगात्तथाऽज्ञाः कर्मयोगिनः ।
सर्वे एव विमुच्यन्ते ये नराः शिवमाश्रिताः ॥ ३२ ॥
स भोगः शिवविद्यार्थं येषा कर्मास्ति निर्मलम् ।
ते भोगान् प्राप्य मुच्यन्ते प्रलये शिवविद्यया ॥ ३३ ॥

विद्या सङ्कीर्तनीया हि येषां कर्म न विद्यते ।
ते चावर्त्य विमुच्यन्ते यावत्कर्म न तद्भवेत् ॥ ३४ ॥
शिवज्ञानविदं तस्मात्पूजयेद्विभवैर्गुरुम् ।
विद्यादानं च कुर्वीत भोगमोक्षजिगीषया ॥ ३५ ॥
शिवयोगी शिवज्ञानी शिवजापी तपोऽधिकः ।
क्रमशः कर्मयोगी च पञ्चैते मुक्तिभाजनाः ॥ ३६ ॥
कर्मयोगस्य यन्मूलं तद्वक्ष्यामि समासतः ।
लिङ्गमायतनं चेति तत्र कर्म प्रवर्तते ॥ ३७ ॥

इति शिवोपनिषदि मुक्तिनिर्देशाध्यायः प्रथमः

---

## द्वितीयोऽध्यायः

अथ पूर्वस्थितो लिङ्गे गर्भः स त्रिगुणो भवेत् ।
गर्भाद्वापि विभागेन स्थाप्य लिङ्गं शिवालये ॥ १ ॥
यावल्लिङ्गस्य दैर्घ्यं स्यात्तावद्वेद्याश्च विस्तरः ।
लिङ्गतृतीयभागेन भवेद्वेद्याः समुच्छयः ॥ २ ॥
भागमेकं न्यसेद्भूमौ द्वितीयं वेदिमध्यतः ।
तृतीयभागे पूजा स्यादिति लिङ्गं त्रिधा स्थितम् ॥ ३ ॥
भूमिस्थं चतुरश्रं स्यादष्टाश्रं वेदिमध्यतः ।
पूजार्थं वर्तुलं कार्यं दैर्ध्यात् त्रिगुणविस्तरम् ॥ ४ ॥
अधोभागे स्थितः स्कन्दः स्थिता देवी च मध्यतः ।
ऊर्ध्वं रुद्रः क्रमाद्वापि ब्रह्मविष्णुमहेश्वराः ॥ ५ ॥

एत एव त्रयो लोका एत एव त्रयो गुणाः ।
एत एव त्रयो वेदा एतच्चान्यत्स्थितं त्रिधा ॥ ६ ॥
नवहस्तः स्मृतो ज्येष्ठः षड्ढस्तश्चापि मध्यमः ।
विद्यात् कनीयस्त्रैहस्तं लिङ्गमानमिदं स्मृतम् ॥ ७ ॥
गर्भस्यान्तः प्रविस्तारस्तदूनश्च न शस्यते ।
गर्भस्यान्तः प्रविस्तारात्तदुपर्यपि संस्थितम् ॥ ८ ॥
प्रासादं कल्पयेच्छ्रीमान् विभजेत त्रिधा पुनः ।
भाग एको भवेज्जङ्घा द्वौ भागौ मञ्जरी स्मृता ॥ ९ ॥
मञ्जर्या अर्धभागस्थं शुकनासं प्रकल्पयेत् ।
गर्भादर्धेन विस्तारमायामं च सुशोभनम् ॥ १० ॥
गर्भाद्वापि त्रिभागेन शुकनासां प्रकल्पयेत् ।
गर्भादर्धेन विस्तीर्णा गर्भाच्च द्विगुणायता ॥ ११ ॥
जङ्घाभिश्च भवेत् कार्या मञ्जर्यङ्गुलराशिना ।
प्रासादार्धेन विज्ञेयो मण्टपस्तस्य वामतः ॥ १२ ॥
मण्डपात्पादविस्तीर्णा जगती तावदुच्छ्रिता ।
प्रासादस्य प्रमाणेन जगत्या सार्धमङ्गणम् ॥ १३ ॥
प्राकारं तत्समन्ताच्च गोपुराद्दालभूषितम् ।
प्राकारान्तः स्थितं कार्यं वृषस्थानं समुच्छ्रितम् ॥ १४ ॥
नन्दीश्वरमहाकालौ द्वारशाखाव्यवस्थितौ ।
प्राकाराद्दक्षिणे कार्यं सर्वोपकरणान्वितम् ॥ १५ ॥
पञ्चभौमं त्रिभौमं वा योगीन्द्रावसथं महत् ।
प्राकारगुप्तं तत्कार्यं मैत्रस्थानसमन्वितम् ॥ १६ ॥
स्थानाद्दशसमायुक्तं भव्यवृक्षजलान्वितम् ।
तन्महानसमाग्नेय्यां पूर्वतः सत्रमण्डपम् ॥ १७ ॥

स्थानं चण्डेशमैशान्यां पुष्पारामं तथोत्तरम् ।
कोष्ठागारं च वायव्यां वारुण्यां वरुणालयम् ॥ १८ ॥
शमीन्धनकुशस्थानमायुधानां च नैर्ऋतम् ।
सर्वलोकोपकाराय नगरस्थं प्रकल्पयेत् ॥ १९ ॥
श्रीमदायतनं शम्भोर्योगिनां विजने वने ।
शिवस्यायतने यावत्समेताः परमाणवः ॥ २० ॥
मन्वन्तराणि तावन्ति कर्तुर्भोगाः शिवे पुरे ।
महाप्रतिमलिङ्गानि महान्त्यायतनानि च ॥ २१ ॥
कृत्वाऽऽप्नोति महाभोगानन्ते मुक्तिं च शाश्वतीम् ।
लिङ्गप्रतिष्ठां कुर्वीत यदा तल्लक्षणं कृती ॥ २२ ॥
पञ्चगव्येन संशोध्य पूजयित्वाऽधिवासयेत् ।
पालाशोदुम्बराश्वत्थपृषदाज्यतिलैर्यवैः ॥ २३ ॥
अग्निकार्यं प्रकुर्वीत दद्यात् पूर्णाहुतित्रयम् ।
शिवस्याष्टशतं हुत्वा लिङ्गमूलं स्पृशेद्बुधः ॥ २४ ॥
एवं मध्येऽवसाने तन्मूर्तिमन्त्रैश्च मूर्तिषु ।
अष्टौ मूर्तीश्वराः कार्या नवमः स्थापकः स्मृतः ॥ २५ ॥
प्रातः संस्थापयेल्लिङ्गं मन्त्रैस्तु नवभिः क्रमात् ।
महास्नापनपूजां च स्थाप्य लिङ्गं प्रपूजयेत् ॥ २६ ॥
गुरोर्मूर्तिधराणां च दद्यादुत्तमदक्षिणाम् ।
यतीनां च समस्तानां दद्यान्मध्यमदक्षिणाम् ॥ २७ ॥
दीनान्धकृपणेभ्यश्च सर्वासामुपकल्पयेत् ।
सर्वभक्ष्यान्नपानाद्यैरनिषिद्धं च भोजनम् ॥ २८ ॥
कल्पयेदागतानां च भूतेभ्यश्च बलिं हरेत् ।
रात्रौ मातृगणानां च बलिं दद्याद्विशेषतः ॥ २९ ॥

एवं यः स्थापयेल्लिङ्गं तस्य पुण्यफलं शृणु ।
कुलत्रिंशकमुद्धृत्य भृत्यैश्च परिवारितः ॥ ३० ॥
कलत्रपुत्रमित्राद्यैः सहितः सर्वबान्धवैः ।
विमुच्य पापकलिलं शिवलोकं व्रजेन्नरः ।
तत्र भुक्त्वा महाभोगान् प्रलये मुक्तिमाप्नुयात् ॥ ३१ ॥

इति शिवोपनिषदि लिङ्गायतनाध्यायो द्वितीयः

---

## तृतीयोऽध्यायः

अथान्यैरल्पवित्तैश्च नृपैश्च शिवभावितैः ।
शक्तितः स्वाश्रमे कार्यं शिवशान्तिगृहद्वयम् ॥ १ ॥
गृहस्येशानदिग्भागे कार्यमुत्तरतोऽपि वा ।
खात्वा भूमिं समुद्धृत्य शल्यानाकोट्य यत्नतः ॥ २ ॥
शिवदेवगृहं कार्यमष्टहस्तप्रमाणतः ।
दक्षिणोत्तरदिग्भागे किंचिद्दीर्घं प्रकल्पयेत् ॥ ३ ॥
हस्तमात्रप्रमाणं च दृढयट्टचतुष्टयम् ।
चतुष्कोणेषु संयोज्यमर्घ्यपात्रादिसंश्रयम् ॥ ४ ॥
गर्भमध्ये प्रकुर्वन्ति शिववेदिं सुशोभनाम् ।
उदगर्वाक्च्छ्रितां किंचिच्चतुःशीर्षकसंयुताम् ॥ ५ ॥
त्रिहस्तायामविस्तारां षोडशाङ्गुलमुच्छ्रिताम् ।
तच्छीर्षाणीव हस्तार्धमायामाद्विस्तरेण च ॥ ६ ॥
शिवस्थण्डिलमित्येतच्चतुर्हस्तं समं शिरः ।
मूर्तिनैवेद्यदीपानां विन्यासार्थं प्रकल्पयेत् ॥ ७ ॥

शैवलिङ्गेन कार्यं स्यात् कार्यं मणिजपार्थिवैः ।
स्थण्डिलार्धे च कुर्वन्ति वेदिमन्यां सवर्तुलाम् ॥ ८ ॥
षोडशाङ्गुलमुत्सेधां विस्तीर्णां द्विगुणेन च ।
गृहे न स्थापयेच्छैलं लिङ्गं मणिजमर्चयेत् ॥ ९ ॥
त्रिसन्ध्यं पार्थिवं वापि कुर्यादन्यद्दिने दिने ।
सर्वेषामेव वर्णानां स्फाटिकं सर्वकामदम् ॥ १० ॥
सर्वदोषविनिर्मुक्तमन्यथा दोषमावहेत् ।
आयुष्मान् बलवान् श्रीमान् पुत्रवान् धनवान् सुखी ॥ ११ ॥
वरमिष्टं च लभते लिङ्गं पार्थिवमर्चयन् ।
तस्माद्धि पार्थिवं लिङ्गं ज्ञेयं सर्वार्थसाधकम् ॥ १२ ॥
निर्दोषं सुलभं चैव पूजयेत् सततं बुधः ।
यथा यथा महालिङ्गं पूजा श्रद्धा यथा यथा ॥ १३ ॥
तथा तथा महत्पुण्यं विज्ञेयमनुरूपतः ।
प्रतिमालिङ्गवेदीषु यावन्तः परमाणवः ।
तावत्कल्पान्महाभोगस्तत्कर्ताऽऽस्ते शिवे पुरे ॥ १४ ॥

इति शिवोपनिषदि शिवगृहाध्यायस्तृतीयः

---

## चतुर्थोऽध्यायः

अथैकभिन्नावच्छिन्नं पुरतः शान्तिमण्टपम् ।
पूर्वापराष्टहस्तं स्याद्द्वादशोत्तरदक्षिणे ॥ १ ॥
तद्द्वारभित्तिसंबद्धं कपिच्छुकसमावृतम् ।
पटद्वयं भवेत् स्थाप्यं सुवाद्यावारहेतुना ॥ २ ॥

द्वारं त्रिशाखं विज्ञेयं नवत्यङ्गुलमुच्छ्रितम् ।
तदर्धेन च विस्तीर्णं सत्कवाटं शिवालये ॥ ३ ॥
दीर्घं पञ्चनवत्या च पञ्चशाखासुशोभितम् ।
सत्कवाटद्वयोपेतं श्रीमद्वाहनमण्टपम् ॥ ४ ॥
द्वारं पश्चान्मुखं ज्ञेयमशेषार्थप्रसाधकम् ।
अभावे प्राङ्मुखं कार्यमुदग्दक्षिणतो न च ॥ ५ ॥
गवाक्षकद्वयं कार्यमपिधानं सुशोभनम् ।
धूमनिर्गमनार्थाय दक्षिणोत्तरकुडचयोः ॥ ६ ॥
आग्नेयभागात्परितः कार्या जालगवाक्षकाः ।
ऊर्ध्वस्तूपिकया युक्ता ईषच्छिद्रपिधानया ॥ ७ ॥
शिवाग्निहोत्रकुण्डं च वृत्तं हस्तप्रमाणतः ।
चतुरश्रवेदिका श्रीमन्मेखलात्रयभूषितम् ॥ ८ ॥
कुडचं द्विहस्तविस्तीर्णं पञ्चहस्तसमुच्छ्रितम् ।
शिवाग्निहोत्रशरणं कर्तव्यमतिशोभनम् ॥ ९ ॥
जगतीस्तम्भपट्टाद्यं सप्तसंख्यं च कल्पयेत् ।
बन्धयोगविनिर्मुक्तं तुल्यस्थानपदान्तरम् ॥ १० ॥
ऐष्टकं कल्पयेद्यत्नाच्छिवाग्न्यायतनं महत् ।
चतुःप्रेगीवकोपेतमेकप्रेगीवकेन वा ॥ ११ ॥
सुधाप्रलिप्तं कर्तव्यं पञ्चाण्डकविभूषितम् ।
शिवाग्निहोत्रशरणं चतुरण्डकसंयुतम् ॥ १२ ॥
बहिस्तदेव जगती त्रिहस्ता वा सुकुट्टिमा ।
तावदेव च विस्तीर्णा मेखलादिविभूषिता ॥ १३ ॥
कर्तव्या चात्र जगती तस्याश्चाधः समन्ततः ।
द्विहस्तमात्रविस्तीर्णा तदर्धार्धसमुच्छ्रिता ॥ १४ ॥

अन्या वृत्ता प्रकर्तव्या रुद्रवेदी सुशोभना ।
दशहस्तप्रमाणा च चतुरङ्गुलमुच्छ्रिता ॥ १५ ॥
रुद्रमातृगणानां च दिक्पतीनां च सर्वदा ।
सर्वाग्रपाकसंयुक्तं तासु नित्यबलिं हरेत् ॥ १६ ॥
वेद्यन्या सर्वभूतानां बहिः कार्या द्विहस्तिका ।
वृषस्थानं च कर्तव्यं शिवालोकनसंमुखम् ॥ १७ ॥
अग्न्यार्षसवितुर्व्योम वृषः कार्यश्च पश्चिमे ।
व्योम्नश्चाधस्त्रिगर्भं स्यात् पितृतर्पणवेदिका ॥ १८ ॥
प्राकारान्तर्बहिः कार्यं श्रीमद्गोपुरभूषितम् ।
पुष्पारामजलोपेतं प्राकारान्तं च कारयेत् ॥ १९ ॥
मृद्दारुजं तृणच्छन्नं प्रकुर्वीत शिवालयम् ।
भूमिकाद्वयविन्यासादुत्क्षिप्तं कल्पयेद्बुधः ॥ २० ॥
शिवदक्षिणतः कार्यं तद्भक्तेर्योग्यमालयम् ।
शय्यासनसमायुक्तं वास्तुविद्याविनिर्मितम् ॥ २१ ॥
ध्वजसिंहौ वृषगजौ चत्वारः शोभनाः स्मृताः ।
धूमश्वगर्दभध्वाङ्क्षाश्चत्वारश्चार्थनाशकाः ॥ २२ ॥
गृहस्यायामविस्तारं कृत्वा त्रिगुणमादितः ।
अष्टभिः शोधयेदायैः शेषश्च गृहमादिशेत् ॥ २३ ॥
इति शान्तिगृहं कृत्वा रुद्राग्निं यः प्रवर्तयेत् ।
अप्येकं दिवसं भक्त्या तस्य पुण्यफलं शृणु ॥ २४ ॥
कलत्रपुत्रमित्राद्यैः स भृत्यैः परिवारितः ।
कुलैकविंशदुत्तार्य शिवलोकमवाप्नुयात् ॥ २५ ॥
नीलोत्पलदलश्यामाः पीनवृत्तपयोधराः ।
हेमवर्णाः स्त्रियश्चान्याः सुन्दर्यः प्रियदर्शनाः ॥ २६ ॥

ताभिः सार्धं महाभोगैर्विमानैः सार्वकामिकैः ।
इच्छया क्रीडते तावद्यावदाभूतसंप्लवम् ॥ २७ ॥
ततः कल्पाग्निना सार्धं दह्यमानं सुविह्वलम् ।
दृष्ट्वा विरज्यते भूयो भवभोगमहार्णवात् ॥ २८ ॥
ततः संपृच्छते रुद्रांस्तत्रस्थान् ज्ञानपारगान् ।
तेभ्यः प्राप्य शिवज्ञानं शान्तं निर्वाणमाप्नुयात् ॥ २९ ॥
अविरक्तश्च भोगेभ्यः सप्त जन्मानि जायते ।
पृथिव्यधिपतिः श्रीमानिच्छया वा द्विजोत्तमः ॥ ३० ॥
सप्तमाज्जन्मनश्चान्ते शिवज्ञानमवाप्नुयात् ।
ज्ञानाद्विरक्तः संसाराच्छुद्धः खान्यधितिष्ठति ॥ ३१ ॥
इत्येतदखिलं कार्यं फलमुक्तं समासतः ।
उत्सवे च पुनर्ब्रूमः प्रत्येकं द्रव्यजं फलम् ॥ ३२ ॥
सद्गन्धगुटिकामेकां लाक्षां प्राण्यङ्गवर्जिताम् ।
कर्पासास्थिप्रमाणां च हुत्वाग्नौ श्रृणुयात् फलम् ॥ ३३ ॥
यावत्सद्गन्धगुटिका शिवाग्नौ संख्यया हुता ।
तावत्कोट्यस्तु वर्षाणि भोगान् भुङ्क्ते शिवे पुरे ॥ ३४ ॥
एकाङ्गुलप्रमाणेन हुत्वाऽग्नौ चन्दनाहुतिम् ।
वर्षकोटिद्वयं भोगैर्दिव्यैः शिवपुरे वसेत् ॥ ३५ ॥
यावत्केसरसंख्यानं कुसुमस्यानले हुतम् ।
तावद्युगसहस्राणि शिवलोके महीयते ॥ ३६ ॥
नागकेसरपुष्पं तु कुङ्कुमार्धेन कीर्तितम् ।
यत्फलं चन्दनस्योक्तमुशीरस्य तदर्धकम् ॥ ३७ ॥
यत्पुष्पधूपभक्ष्यान्नदधिक्षीरघृतादिभिः ।
पुण्यलिङ्गार्चने प्रोक्तं तद्धोमस्य दशाधिकम् ॥ ३८ ॥

हुत्वाऽग्नौ समिधस्तिस्रः शिवोमास्कन्दनामभिः ।
पश्चाद्द्यात्तिलान्नानि होमयीत यथाक्रमम् ॥ ३९ ॥
पलाशाङ्कुरजारिष्टपालाल्यः समिधः शुभाः ।
पृषदाज्यप्लुता हुत्वा श्रुणु यत्फलमाप्नुयात् ॥ ४० ॥
पलाशाङ्कुरसंख्यानां यावदग्नौ हुतं भवेत् ।
तावत्कल्पान्महाभोगैः शिवलोके महीयते ॥ ४१ ॥
तल्लक्ष्यमध्यसंभूतं हुत्वाग्नौ समिधः शुभाः ।
कल्पार्धसंमितं कालं भोगान् भुङ्क्ते शिवे पुरे ॥ ४२ ॥
शमीसमित्फलं देयमब्दानपि च लक्षकम् ।
शम्यर्धफलवच्छेषाः समिधः क्षीरवृक्षजाः ॥ ४३ ॥
तिलसंख्यान् तिलान् हुत्वा ह्याज्याक्ता यावती भवेत् ।
तावत्स वर्षलक्षांस्तु भोगान् भुङ्क्ते शिवे पुरे ॥ ४४ ॥
यावत्सुरौषधीरज्ञस्तिलतुल्यफलं स्मृतम् ।
इतरेभ्यस्तिलेभ्यश्च कृष्णानां द्विगुणं फलम् ॥ ४५ ॥
लाजाक्षताः सगोधूमा वर्षलक्षफलप्रदाः ।
दशसाहस्रिका ज्ञेयाः शेषाः स्युर्बीजजातयः ॥ ४६ ॥
पलाशेन्धनजे वह्नौ होमस्य द्विगुणं फलम् ।
क्षीरवृक्षसमृद्धेऽग्नौ फलं सार्धाधिकं भवेत् ॥ ४७ ॥
असमिद्धे सधूमे च होमकर्म निरर्थकम् ।
अन्धश्च जायमानः स्याद्दारिद्र्योपहतस्तथा ॥ ४८ ॥
न च कण्टकिभिर्वृक्षैरग्निं प्रज्वाल्य होमयेत् ।
शुष्कैर्नवैः प्रशस्तैश्च काष्ठैरग्निं समिन्धयेत् ॥ ४९ ॥
एवमाज्याहुतिं हुत्वा शिवलोकमवाप्नुयात् ।
तत्र कल्पशतं भोगान् भुङ्क्ते दिव्यान् यथेप्सितान् ॥ ५० ॥

स्रुचैकाहितमात्रेण व्रतस्यापूरितेन च ।
याहुतिर्दीयते वह्नौ सा पूर्णाहुतिरुच्यते ॥ ५१ ॥
एकां पूर्णाहुतिं हुत्वा शिवेन शिवभावितः ।
सर्वकाममवाप्नोति शिवलोके व्यवस्थितः ॥ ५२ ॥
अशेषकुलजैः सार्धं स भृत्यैः परिवारितः ।
आभूतसंप्लवं यावद्भोगान् भुङ्क्ते यथेप्सितान् ॥ ५३ ॥
ततश्च प्रलये प्राप्ते संप्राप्य ज्ञानमुत्तमम् ।
प्रसादादीश्वरस्यैव मुच्यते भवसागरात् ॥ ५४ ॥
शिवपूर्णाहुतिं वह्नौ पतन्तीं यः प्रपश्यति ।
सोऽपि पापैर्नरः सर्वैर्मुक्तः शिवपुरं व्रजेत् ॥ ५५ ॥
शिवाग्निधूमसंस्पृष्टा जीवाः सर्वे चराचराः ।
तेऽपि पापविनिर्मुक्ताः स्वर्गं यान्ति न संशयः ॥ ५६ ॥
शिवयज्ञमहावेद्या जायते ये न सन्ति वा ।
तेऽपि यान्ति शिवस्थानं जीवाः स्थावरजङ्गमाः ॥ ५७ ॥
पूर्णाहुतिं घृताभावे क्षीरतैलेन कल्पयेत् ।
होमयेदतसीतैलं तिलतैलं विना नरः ॥ ५८ ॥
सर्षपेङ्गुदिकाशाम्रकरञ्जमधुकाक्षजम् ।
प्रियङ्गुबिल्वपैप्पलयनालिकेरसमुद्भवम् ॥ ५९ ॥
इत्येवमादिकं तैलमाज्याभावे प्रकल्पयेत् ।
दूर्वया बिल्वपत्रैर्वा समिधः संप्रकीर्तिताः ॥ ६० ॥
अन्नार्थं होमयेत् क्षीरं दधि मूलफलानि वा ।
तिलार्थं तण्डुलैः कुर्याद्दर्भार्थं हरितैस्तृणैः ॥ ६१ ॥
परिधीनामभावेन शरैर्वंशैश्च कल्पयेत् ।
इन्धनानामभावेन दीपयेत् तृणगोमयैः ॥ ६२ ॥

गोमयानामभावेन महत्यम्भसि होमयेत् ।
अपामसंभवे होमं भूमिभागे मनोहरे ॥ ६३ ॥
विप्रस्य दक्षिणे पाणावश्वत्थे तदभावतः ।
छागस्य दक्षिणे कर्णे कुशमूले च होमयेत् ॥ ६४ ॥
स्वात्माग्नौ होमयेत् प्राज्ञः सर्वाग्नीनामसंभवे ।
अभावे न त्यजेत् कर्म कर्मयोगविधौ स्थितः ॥ ६५ ॥
आपत्कालेऽपि यः कुर्याच्छिवाग्नेर्मनसार्चनम् ।
स मोहकञ्चुकं त्यक्त्वा परां शान्तिमवाप्नुयात ॥ ६६ ॥
प्राणाग्निहोत्रं कुर्वन्ति परमं शिवयोगिनः ।
बाह्यकर्मविनिर्मुक्ता ज्ञानध्यानसमाकुलाः ॥ ६७ ॥

इति शिवोपनिषदि शान्तिगृहाग्निकार्याध्यायश्चतुर्थः

---

**पञ्चमोऽध्यायः**

अथाग्नेयं महास्नानमलक्ष्मीमलनाशनम् ।
सर्वपापहरं दिव्यं तपः श्रीकीर्तिवर्धनम् ॥ १ ॥
अग्निरूपेण रुद्रेण स्वतेजः परमं बलम् ।
भूतिरूपं समुद्गीर्णं विशुद्धं दुरितापहम् ॥ २ ॥
यक्षरक्षःपिशाचानां ध्वंसनं मन्त्रसत्कृतम् ।
रक्षार्थं बालरूपाणां सूतिकानां गृहेषु च ॥ ३ ॥
यश्च भुङ्क्ते द्विजः कृत्वान्नस्य वा परिधित्रयम् ।
अपि शूद्रस्य पङ्क्तिस्थः पङ्क्तिदोषैर्न लिप्यते ॥ ४ ॥

आहारमर्धभुक्तं च कीटकेशादिदूषितम् ।
तावन्मात्रं समुद्धृत्य भूतिस्पृष्टं विशुद्धयति ॥ ५ ॥
आरण्यं गोमयक्लृतं करीषं वा प्रशस्यते ।
शर्करापांसुनिर्मुक्तमभावे काष्ठभस्मना ॥ ६ ॥
स्वगृहाश्रमवह्नीभ्यः कुलालालयभस्मना ।
गोमयेषु च दग्धेषु हीष्टकानि च येषु च ॥ ७ ॥
सर्वत्र विद्यते भस्म दुःखापार्जनरक्षणम् ।
शङ्खकुन्देन्दुवर्णाभमादद्याज्जन्तुवर्जितम् ॥ ८ ॥
भस्मानीय प्रयत्नेन तद्रक्षेद्यत्नवांस्तथा ।
मार्जारमूषिकाद्यैश्च नोपहन्येत तद्यथा ॥ ९ ॥
पञ्चदोषविनिर्मुक्तं गुणपञ्चकसंयुतम् ।
शिवैकादशिकाजप्तं शिवभस्म प्रकीर्तितम् ॥ १० ॥
जातिकारुकवाक्कायस्थानदुष्टं च पञ्चमम् ।
पापघ्नं शाङ्करं रक्षापवित्रं योगदं गुणाः ॥ ११ ॥
शिवव्रतस्य शान्तस्य भासकत्वाच्छुभस्य च ।
भक्षणात् सर्वपापानां भस्मेति परिकीर्तितम् ॥ १२ ॥
भस्मस्नानं शिवस्नानं वारुणादधिकं स्मृतम् ।
जन्तुशैवालनिर्मुक्तमाग्नेयं पङ्कवर्जितम् ॥ १३ ॥
अपवित्रं भवेत्तोयं निशि पूर्वमनाहृतम् ।
नदीतडागवापीषु गिरिप्रस्रवणेषु च ॥ १४ ॥
स्नानं साधारणं प्रोक्तं वारुणं सर्वदेहिनाम् ।
असाधारणमेवोक्तं भस्मस्नानं द्विजन्मनाम् ॥ १५ ॥
त्रिकालं वारुणस्नानादनारोग्यं प्रजायते ।
आग्नेयं रोगशमनमेतस्मात् सार्वकामिकम् ॥ १६ ॥

सन्ध्यात्रयेऽर्धरात्रे च भुक्त्वा चान्नविरेचने ।
शिवयोग्याचरेत् स्नानमुच्चारादिक्रियासु च ॥ १७ ॥
भस्मास्तृते महीभागे समे जन्तुविवर्जिते ।
ध्यायमानः शिवं योगी रजन्यन्तं शयीत च ॥ १८ ॥
एकरात्रोषितस्यापि या गतिर्भस्मशायिनः ।
न सा शक्या गृहस्थेन प्राप्तुं यज्ञशतैरपि ॥ १९ ॥
गृहस्थस्त्र्यायुषोङ्कारैः स्नानं कुर्यात् त्रिपुण्ड्कैः ।
यतिः सार्वाङ्गिकं स्नानमापादतलमस्तकात् ॥ २० ॥
शिवभक्तस्त्रिधा वेद्यां भस्मस्नानफलं लभेत् ।
हृदि मूर्ध्नि ललाटे च शूद्रः शिवगृहाश्रमी ॥ २१ ॥
गणाः प्रव्रजिताः शान्ता भूतिमालभ्य पञ्चधा ।
शिरोललाटे हृद्बाह्वोर्भस्मस्नानफलं लभेत् ॥ २२ ॥
संवत्सरं तदर्धं वा चतुर्दश्यष्टमीषु च ।
यः कुर्याद्भस्मना स्नानं तस्य पुण्यफलं शृणु ॥ २३ ॥
शिवभस्मनि यावन्तः समेताः परमाणवः ।
तावद्वर्षसहस्राणि शिवलोके महीयते ॥ २४ ॥
एकविंशकुलोपेतः पत्नीपुत्रादिसंयुतः ।
मित्रस्वजनभृत्यैश्च समस्तैः परिवारितः ॥ २५ ॥
तत्र भुक्त्वा महाभोगानिच्छया सार्वकामिकान् ।
ज्ञानयोगं समासाद्य प्रलये मुक्तिमाप्नुयात् ॥ २६ ॥
भस्म भस्मान्तिकं येन गृहीतं नैष्ठिकव्रतम् ।
अनेन वै स देहेन रुद्रश्चङ्क्रमते क्षितौ ॥ २७ ॥
भस्मस्नानरतं शान्तं ये नमन्ति दिने दिने ।
ते सर्वपापनिर्मुक्ता नरा यान्ति शिवं पुरम् ॥ २८ ॥

इत्येतत्परमं स्नानमाग्नेयं शिवनिर्मितम् ।
त्रिसन्ध्यमाचरेन्नित्यं जापी योगमवाप्नुयात् ॥ २९ ॥
भस्मानीय प्रदद्याद्यः स्नानार्थं शिवयोगिने ।
कल्पं शिवपुरे भोगान् भुक्त्वान्ते स्याद्द्विजोत्तमः ॥ ३० ॥
आग्नेयं वारुणं मान्त्रं वायव्यं त्वैन्द्रपञ्चमम् ।
मानसं शान्तितोयं च ज्ञानस्नानं तथाष्टमम् ॥ ३१ ॥
आग्नेयं रुद्रमन्त्रेण भस्मस्नानमनुत्तमम् ।
अम्भसा वारुणं स्नानं कार्यं वारुणमूर्तिना ॥ ३२ ॥
मूर्धानं पाणिनाऽऽलभ्य शिवैकादशिकां जपेत् ।
ध्यायमानः शिवं शान्तं मन्त्रस्नानं परं स्मृतम् ॥ ३३ ॥
गवां खुरपुटोत्खातपवनोद्धूतरेणुना ।
कार्यं वायव्यकं स्नानं मन्त्रेण मरुदात्मना ॥ ३४ ॥
व्यभ्रेऽर्के वर्षति स्नानं कुर्यादैन्द्रीं दिशं स्थितः ।
आकाशमूर्तिमन्त्रेण तदैन्द्रमिति कीर्तितम् ॥ ३५ ॥
उदकं पाणिना गृह्य सर्वतीर्थानि संस्मरेत् ।
अभ्युक्षयेच्छिरस्तेन स्नानं मानसमुच्यते ॥ ३६ ॥
पृथिव्यां यानि तीर्थानि सरांस्यायतनानि च ।
तेषु स्नातस्य यत्पुण्यं तत्पुण्यं क्षान्तिवारिणा ॥ ३७ ॥
न तथा शुध्यते तीर्थैस्तपोभिर्वा महाध्वरैः ।
पुरुषः सर्वदानैश्च यथा क्षान्त्या विशुद्ध्यति ॥ ३८ ॥
आक्रुष्टस्ताडितस्तस्मादधिक्षिप्तस्तिरस्कृतः ।
क्षमेदक्षममानानां स्वर्गमोक्षजिगीषया ॥ ३९ ॥
यैव ब्रह्मविदां प्राप्तिर्यैव प्राप्तिस्तपस्विनाम् ।
यैव योगाभियुक्तानां गतिः सैव क्षमावताम् ॥ ४० ॥

ज्ञानामलाम्भसा स्नातः सर्वदैव मुनिः शुचिः ।
निर्मलस्सुविशुद्धश्च विज्ञेयः सूर्यरश्मिवत् ॥ ४१ ॥
मेध्यामेध्यरसं यद्वदपि वत्स विभा करैः ।
नैव लिप्यति तद्दोषैस्तद्वद्ज्ञानी सुनिर्मलः ॥ ४२ ॥
एषामेकतमे स्नातः शुद्धभावः शिवं व्रजेत् ।
अशुद्धभावः स्नातोऽपि पूजयन्नाप्नुयात् फलम् ॥ ४३ ॥
जलं मन्त्रं दया दानं सत्यमिन्द्रियसंयमः ।
ज्ञानं भावात्मशुद्धिश्च शौचमष्टविधं श्रुतम् ॥ ४४ ॥
अङ्गुष्ठतलमूले च ब्राह्मं तीर्थमवस्थितम् ।
तेनाचम्य भवेच्छुद्धः शिवमन्त्रेण भावितः ॥ ४५ ॥
यदधः कन्यकायाश्च तत्तीर्थं दैवमुच्यते ।
तीर्थं प्रदेशिनीमूले पित्र्यं पितृविधोदयम् ॥ ४६ ॥
मध्यमाङ्गुलिमध्येन तीर्थमारिषमुच्यते ।
करपुष्करमध्ये तु शिवतीर्थं प्रतिष्ठितम् ॥ ४७ ॥
वामपाणितले तीर्थमौमं नाम प्रकीर्तितम् ।
शिवोमातीर्थसंयोगात् कुर्यात् स्नानाभिषेचनम् ॥ ४८ ॥
देवान् दैवेन तीर्थेन तर्पयेदकृताम्भसा ।
उद्धृत्य दक्षिणं पाणिमुपवीती सदा बुधः ॥ ४९ ॥
प्राचीनावीतिना कार्यं पितॄणां तिलवारिणा ।
तर्पणं सर्वभूतानामारिषेण निवीतिना ॥ ५० ॥
सव्यस्कन्धे यदा सूत्रमुपवीत्युच्यते तदा ।
प्राचीनावीत्यसव्येन निवीती कण्ठसंस्थिते ॥ ५१ ॥

पितणां तर्पणं कृत्वा सूर्यायार्घ्यं प्रकल्पयेत् ।
उपस्थाय ततः सूर्यं यजेच्छिवमनन्तरम् ॥ ५२ ॥

इति शिवोपनिषदि शिवभस्मस्नानाध्यायः पञ्चमः

---

## षष्ठोऽध्यायः

अथ भक्त्या शिवं पूज्य नैवेद्यमुपकल्पयेत् ।
यदन्नमात्मनाऽश्नीयात्तस्याग्रे विनिवेदयेत् ॥ १ ॥
यः कृत्वा भक्ष्यभोज्यानि यत्नेन विनिवेदयेत् ।
शिवाय स शिवे लोके कल्पकोटिं प्रमोदते ॥ २ ॥
यः पक्वं श्रीफलं दद्याच्छिवाय विनिवेदयेत् ।
गुरोर्वा होमयेद्वापि तस्य पुण्यफलं शृणु ॥ ३ ॥
श्रीमद्भिः स महायानैर्भोगान् भुङ्क्ते शिवे पुरे ।
वर्षाणामयुतं साग्रं तदन्ते श्रीपतिर्भवेत् ॥ ४ ॥
कपित्थमेकं यः पक्वमीश्वराय निवेदयेत् ।
वर्षलक्षं महाभोगैः शिवलोके महीयते ॥ ५ ॥
एकमाम्रफलं पक्वं यः शंभोर्विनिवेदयेत ।
वर्षाणामयुतं भोगैः क्रीडते स शिवे पुरे ॥ ६ ॥
एकं वटफलं पक्वं यः शिवाय निवेदयेत् ।
वर्षलक्षं महाभोगैः शिवलोके महीयते ॥ ७ ॥
यः पक्वं दाडिमं चैकं दद्याद्विकसितं नवम् ।
शिवाय गुरवे वापि तस्य पुण्यफलं शृणु ॥ ८ ॥

यावत्तद्वीजसंख्यानं शोभनं परिकीर्तितम् ।
तावदष्टायुतान्युच्चैः शिवलोके महीयते ॥ ९ ॥
द्राक्षाफलानि पक्कानि यः शिवाय निवेदयेत् ।
भक्त्या वा शिवयोगिभ्यस्तस्य पुण्यफलं शृणु ॥ १० ॥
यावत्तत्फलसंख्यानमुभयोर्विनिवेदितम् ।
तावद्युगसहस्राणि रुद्रलोके महीयते ॥ ११ ॥
द्राक्षाफलेषु यत्पुण्यं तत्खर्जूरफलेषु च ।
तदेव राजवृक्षेषु पारावतफलेषु च ॥ १२ ॥
यो नारङ्गफलं पक्कं विनिवेद्य महेश्वरे ।
अष्टलक्षं महाभोगैः क्रीडते स शिवे पुरे ॥ १३ ॥
बीजपूरेषु तस्यार्धं तदर्धं लिकुचेषु च ।
जम्बूफलेषु यत्पुण्यं तत्पुण्यं तिन्दुकेषु च ॥ १४ ॥
पनसं नारिकेलं वा शिवाय विनिवेदयेत् ।
वर्षलक्षं महाभोगैः शिवलोके महीयते ॥ १५ ॥
पुरुषं च प्रियालं च मधूककुसुमानि च ।
जम्बूफलानि पक्कानि वैकङ्कतफलानि च ॥ १६ ॥
निवेद्य भक्त्या शर्वाय प्रत्येकं तु फले फले ।
दशवर्षसहस्राणि रुद्रलोके महीयते ॥ १७ ॥
क्षीरिकायाः फलं पक्कं यः शिवाय निवेदयेत् ।
वर्षलक्षं महाभोगैर्मोदते स शिवे पुरे ॥ १८ ॥
वालुकात्रपुसादीनि यः फलानि निवेदयेत् ।
शिवाय गुरवे वापि पक्कं च करमर्दकम् ॥ १९ ॥
दशवर्षसहस्राणि रुद्रलोके महीयते ।
बदराणि सुपक्कानि तिन्तिडीकफलानि च ॥ २० ॥

दर्शनीयानि पक्वानि ह्यामलक्याः फलानि च ।
एवमादीनि चान्यानि शाकमूलफलानि च ॥ २१ ॥
निवेदयीत शर्वाय शृणु यत्फलमाप्नुयात् ।
एकैकस्मिन् फले भोगान् प्राप्नुयादनुपूर्वशः ॥ २२ ॥
पञ्चवर्षसहस्राणि रुद्रलोके महीयते ।
गोधूमचणकाद्यानि सुकृतं सक्तुभर्जितम् ॥ २३ ॥
निवेदयीत शर्वाय तस्य पुण्यफलं शृणु ।
यावत्तद्बीजसंख्यानं शुभं भ्रष्टं निवेदयेत् ॥ २४ ॥
तावद्वर्षसहस्राणि रुद्रलोके महीयते ।
यः पक्वानीक्षुदण्डानि शिवाय विनिवेदयेत् ॥ २५ ॥
गुरवे वापि तद्भक्त्या तस्य पुण्यफलं शृणु ।
इक्षुपर्णानि चैकैकं वर्षलोकं प्रमोदते ॥ २६ ॥
साकं शिवपुरे भोगैः पौण्ड्रं पञ्चगुणं फलम् ।
निवेद्य परमेशाय शुक्तिमात्ररसस्य तु ॥ २७ ॥
वर्षकोटिं महाभोगैः शिवलोके महीयते ।
निवेद्य फाणितं शुद्धं शिवाय गुरवेऽपि वा ॥ २८ ॥
रसात् सहस्रगुणितं फलं प्राप्नोति मानवः ।
गुडस्य पलमेकं यः शिवाय विनिवेदयेत् ॥ २९ ॥
अब्दकोटिं शिवे लोके महाभोगैः प्रमोदते ।
खण्डस्य पलनैवेद्यं गुडाच्छतगुणं फलम् ॥ ३० ॥
खण्डात् सहस्रगुणितं शर्कराया निवेदने ।
मत्संडिकां महाशुद्धां शङ्कराय निवेदयेत् ॥ ३१ ॥
कल्पकोटिं नरः साग्रं शिवलोके महीयते ।
परिशुद्धं भृष्टमाज्यं सिद्धं चैव सुसंस्कृतम् ॥ ३२ ॥

मांसं निवेद्य शर्वाय श्रृणु यत्फलमाप्नुयात् ।
अशेषफलदानेन यत्पुण्यं परिकीर्तितम् ॥ ३३ ॥
तत्पुण्यं प्राप्नुयात् सर्वं महादाननिवेदने ।
पनसानि च दिव्यानि स्वादूनि सुरभीणि च ॥ ३४ ॥
निवेदयेत्तु शर्वाय तस्य पुण्यफलं श्रृणु ।
कल्पकोटिं नरः साग्रं शिवलोके व्यवस्थितः ॥ ३५ ॥
पिबन् शिवामृतं दिव्यं महाभोगैः प्रमोदते ।
दिने दिने च यस्त्वापं वस्त्रपूतं समाचरेत् ॥ ३६ ॥
सुखाय शिवभक्तेभ्यस्तस्य पुण्यफलं श्रृणु ।
महासरांसि यः कुर्याद्भवेत् पुण्यं शिवाग्रतः ॥ ३७ ॥
तत्पुण्यं सकलं प्राप्य शिवलोके महीयते ।
यदिष्टमात्मनः किञ्चिदन्नपानफलादिकम् ॥ ३८ ॥
तत्तच्छिवाय देयं स्यादुत्तमं भोगमिच्छता ।
न शिवः परिपूर्णत्वात् किञ्चिदश्नाति कस्यचित् ॥ ३९ ॥
किन्त्वीश्वरनिभं कृत्वा सर्वमात्मनि दीयते ।
न रोहति यथा बीजं स्वस्थमाश्रयवर्जितम् ॥ ४० ॥
पुण्यबीजं तथा सूक्ष्मं निष्फलं स्यान्निराश्रयम् ।
सुक्षेत्रेषु यथा बीजमुप्तं भवति सत्फलम् ॥ ४१ ॥
अल्पमप्यक्षयं तद्वत् पुण्यं शिवसमाश्रयात् ।
तस्मादीश्वरमुद्दिश्य यद्यदात्मनि रोचते ॥ ४२ ॥
तत्तदीश्वरभक्तेभ्यः प्रदातव्यं फलार्थिना ।
यः शिवाय गुरोर्वापि रचयेन्मणिभूमिकम् ॥ ४३ ॥
नैवेद्यं भोजनार्थं यः पत्रैः पुष्पैश्च शोभनम् ।
यावत्तत्पत्रपुष्पाणां परिसंख्या विधीयते ॥ ४४ ॥

तावद्वर्षसहस्राणि सुरलोके महीयते ।
पलाशकदलीपद्मपत्राणि च विशेषतः ॥ ४५ ॥
दत्वा शिवाय गुरवे शृणु यत्फलमाप्नुयात् ।
यावत्तत्पत्रसंख्यानमीश्वराय निवेदितम् ॥ ४६ ॥
तावदब्दायुतानां स लोके भोगानवाप्नुयात् ।
यावत्ताम्बूलपत्राणि पूगांश्च विनिवेदयेत् ॥ ४७ ॥
तावन्ति वर्षलक्षाणि शिवलोके महीयते ।
यच्छुद्धं शङ्खचूर्णं वा गुरवे विनिवेदयेत् ॥ ४८ ॥
ताम्बूलयोगसिद्ध्यर्थं तस्य पुण्यफलं शृणु ।
यावत्ताम्बूलपत्राणि चूर्णमानेन भक्षयेत् ॥ ४९ ॥
तावद्वर्षसहस्राणि रुद्रलोके महीयते ।
जातीफलं सकङ्कोलं लताकस्तूरिकोत्पलम् ॥ ५० ॥
इत्येतानि सुगन्धीनि फलानि विनिवेदयेत् ।
फले फले महाभोगैर्वर्षलक्षं तु यत्नतः ॥ ५१ ॥
कामिकेन विमानेन क्रीडते स शिवे पुरे ।
त्रुटिमात्रप्रमाणेन कर्पूरस्य शिवे गुरौ ॥ ५२ ॥
वर्षकोटिं महाभोगैः शिवलोके महीयते ।
पूगताम्बूलपत्राणामाधारं यो निवेदयेत् ॥ ५३ ॥
वर्षकोट्यष्टकं भोगैः शिवलोके महीयते ।
यश्चूर्णाधारसत्पात्रं कस्यापि विनिवेदयेत् ॥ ५४ ॥
मोदते स शिवे लोके वर्षकोटीश्चतुर्दश ।
मृत्काष्ठवंशखण्डानि यः प्रदद्याच्छिवाश्रमे ॥ ५५ ॥
प्राप्नुयाद्विपुलान् भोगान् दिव्याञ्छिवपुरे नरः ।
माणिक्यं कलशं पात्रीं स्थाल्यादीन् भाण्डसंपुटान् ॥ ५६ ॥

दत्वा शिवाग्रजस्त्वेभ्यः शिवलोके महीयते ।
तोयाधारपिधानानि मृद्रत्नतरुजानि वा ॥ ५७ ॥
वंशालाबुसमुत्थानि दत्वाप्नोति शिवं पुरम् ।
पञ्चसंमार्जनीतोयं गोमयाञ्जनकर्पटान् ॥ ५८ ॥
मृत्कुम्भपीठिकां दद्याद्भोगाञ्छिवपुरे लभेत् ।
यः पुष्पधूपगन्धानां दधिक्षीरघृताम्भसाम् ॥ ५९ ॥
दद्यादाधारपात्राणि शिवलोकं स गच्छति ।
वंशतालादिसंभूतं पुष्पाधारकरण्डकम् ॥ ६० ॥
इत्येवमाद्यान् यो दद्याच्छिवलोकमवाप्नुयात् ।
यः स्रुक्स्रुवादिपात्राणि होमार्थं विनिवेदयेत् ॥ ६१ ॥
वर्षकोटिं महाभोगैः शिवलोके महीयते ।
यः सर्वधातुसंयुक्तं दद्याल्लवणपर्वतम् ॥ ६२ ॥
शिवाय गुरवे वापि तस्य पुण्यफलं श्रृणु ।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥ ६३ ॥
स गोत्रभृत्यसंयुक्तो वसेच्छिवपुरे नरः ।
विमानयानैः श्रीमद्भिः सर्वकामसमन्वितैः ॥ ६४ ॥
भोगान् भुक्त्वा तु विपुलांस्तदन्ते स महीपतिः ।
मनःशिलां हरीतालं राजपट्टं च हिङ्गुलम् ॥ ६५ ॥
गैरिकं मणिदन्तं च हेमतोयं तथाष्टमम् ।
यश्च तं पर्वतवरं शालितण्डुलकल्पितम् ॥ ६६ ॥
शिवाय गुरवे वापि तस्य पुण्यफलं श्रृणु ।
कल्पकोटिशतं साग्रं भोगान् भुङ्क्ते शिवे पुरे ॥ ६७ ॥
यः सर्वधान्यशिखरैरुपेतं यवपर्वतम् ।
घृततैलनदीयुक्तं तस्य पुण्यफलं श्रृणु ॥ ६८ ॥

कल्पकोटिशतं साग्रं भोगान् भुङ्क्ते शिवे पुरे ।
समस्तकुलजैः सार्धं तस्यान्ते स महीपतिः ॥ ६९ ॥
तिलधेनुं प्रदद्याद्यः कृत्वा कृष्णाजिने नरः ।
कपिलायाः प्रदानस्य यत्फलं तदवाप्नुयात् ॥ ७० ॥
घृतधेनुं नरः कृत्वा कांस्यपात्रे सकाञ्चनाम् ।
निवेद्य गोप्रदानस्य समग्रं फलमाप्नुयात् ॥ ७१ ॥
द्वीपिचर्मणि यः स्थाप्य प्रदद्याल्लवणाढकम् ।
अशेषरसदानस्य यत्पुण्यं तदवाप्नुयात् ॥ ७२ ॥
मरिचाढेन कुर्वीत मारीचं नाम पर्वतम् ।
दद्याद्यज्जीरकं पूर्वमाग्नेयं हिङ्गुमुत्तमम् ॥ ७३ ॥
दक्षिणे गुडशुण्ठीं च नैर्ऋते नागकेसरम् ।
पिप्पलीं पश्चिमे दद्याद्वायव्ये कृष्णजीरकम् ॥ ७४ ॥
कौबेर्यामजमोदं च त्वगेलाश्चेशदैवते ।
कुस्तुम्बर्याः प्रदेयाः स्युर्बहिः प्राकारतः स्थिताः ॥ ७५ ॥
ककुभामन्तरालेषु समन्तात् सैन्धवं न्यसेत् ।
सपुष्पाक्षततोयेन शिवाय विनिवेदयेत् ॥ ७६ ॥
यावत्तद्दीपसंख्यानं सर्वमेकत्र पर्वते ।
तावद्वर्षशतादूर्ध्वं भोगान् भुङ्क्ते शिवे पुरे ॥ ७७ ॥
कूश्माण्डं मध्यतः स्थाप्य कालिङ्गं पूर्वतो न्यसेत् ।
दक्षिणे क्षीरतुम्बीं तु वृन्ताकं पश्चिमे न्यसेत् ॥ ७८ ॥
पटीसान्युत्तरे स्थाप्य कर्कटीमीशदैवते ।
न्यसेद्गजपटोलांश्च मधुरान् वह्निदैवते ॥ ७९ ॥
कारवेल्लांश्च नैर्ऋत्यां वायव्यां निम्बकं फलम् ।
उच्चावचानि चान्यानि फलानि स्थापयेद्बहिः ॥ ८० ॥

अभ्यर्च्य पुष्पधूपैश्च समन्तात् फलपर्वतम् ।
शिवाय गुरवे वापि प्रणिपत्य निवेदयेत् ॥ ८१ ॥
यावत्तत्फलसंख्यानं तद्दीपानां च मध्यतः ।
तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥ ८२ ॥
मूलकं मध्यतः स्थाप्य तत्पूर्वे वालमूलकम् ।
आग्नेय्यां वास्तुकं स्थाप्य याम्यायां क्षारवास्तुकम् ॥ ८३ ॥
पालक्यं नैर्ऋते स्थाप्य सुमुखं पश्चिमे न्यसेत् ।
कुहद्रकं च वायव्यामुत्तरे वापि तालिकीम् ॥ ८४ ॥
कुसुम्भशाकमैशान्यां सर्वशाकानि तद्बहिः ।
पूर्वक्रमेण विन्यस्य शिवाय विनिवेदयेत् ॥ ८५ ॥
यावत्तन्मूलनालानां पत्रसंख्या च कीर्तिता ।
तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥ ८६ ॥
दत्वा लभेन्महाभोगान् गुग्गुल्वद्रेः पलद्वयम् ।
वर्षकोटिद्वयं स्वर्गे द्विगुणं गुडमिश्रितैः ॥ ८७ ॥
गुडार्द्रकं सलवणमाम्रमंजरिसंयुतम् ।
निवेद्य गुरवे भक्त्या सौभाग्यं परमं लभेत् ॥ ८८ ॥
हस्तारोप्येण वा कृत्वा महारत्नान्वितां महीम् ।
निवेदयित्वा शर्वाय शिवतुल्यः प्रजायते ॥ ८९ ॥
वज्रेन्द्रनीलवैडूर्यपद्मरागं समौक्तिकम् ।
कीटपक्षं सुवर्णं च महारत्नानि सप्त वै ॥ ९० ॥
यश्च सिंहासनं दद्यान्महारत्नान्वितं नृपः ।
क्षुद्ररत्नैश्च विविधैस्तस्य पुण्यफलं श्रृणु ॥ ९१ ॥
कुलत्रिंशकसंयुक्तः सान्तःपुरपरिच्छदः ।
समस्तभृत्यसंयुक्तः शिवलोके महीयते ॥ ९२ ॥

तत्र भुक्त्वा महाभोगान् शिवतुल्यपराक्रमः ।
आमहाप्रलयं यावत्तदन्ते मुक्तिमाप्नुयात् ॥ ९३ ॥
यदि चेद्राज्यमाकाङ्क्षेत्ततः सर्वसमाहितः ।
सप्तद्वीपसमुद्रायाः क्षितेरधिपतिर्भवेत् ॥ ९४ ॥
जन्मकोटिसहस्राणि जन्मकोटिशतानि च ।
राज्यं कृत्वा ततश्चान्ते पुनः शिवपुरं व्रजेत् ॥ ९५ ॥
एतदेव फलं ज्ञेयं मकुटाभरणादिषु ।
रत्नासनप्रदानेन पादुके विनिवेदयेत् ॥ ९६ ॥
दद्याद्यः केवलं वज्रं शुद्धं गोधूममात्रकम् ।
शिवाय स शिवे लोके तिष्ठेदाप्रलयं सुखी ॥ ९७ ॥
इन्द्रनीलप्रदानेन स वैडूर्यप्रदानतः ।
मोदते विविधैर्भोगैः कल्पकोटिं शिवे पुरे ॥ ९८ ॥
मसूरमात्रमपि यः पद्मरागं सुशोभनम् ।
निवेदयित्वा शर्वाय मोदते कालमक्षयम् ॥ ९९ ॥
निवेद्य मौक्तिकं स्वच्छमेकभागैकमात्रकम् ।
भोगैः शिवपुरे दिव्यैः कल्पकोटिं प्रमोदते ॥ १०० ॥
कीटपक्षं महाशुद्धं निवेद्य यवमात्रकम् ।
शिवायाद्यः शिवे लोके मोदते कालमक्षयम् ॥ १०१ ॥
हेम्ना कृत्वा च यः पुष्पमपि माषकमात्रकम् ।
निवेदयित्वा शर्वाय वर्षकोटिं वसेद्दिवि ॥ १०२ ॥
क्षुद्ररत्नानि यो दद्याद्धेम्नि बद्धानि शम्भवे ।
मोदते स शिवे लोके कल्पकोट्ययुतं नरः ॥ १०३ ॥
यथा यथा महारत्नं शोभनं च यथा यथा ।
तथा तथा महत्पुण्यं ज्ञेयं तच्छिवदानतः ॥ १०४ ॥

भूमिभागे सविस्तीर्णे जम्बूद्वीपं प्रकल्पयेत् ।
अष्टावरणसंयुक्तं नगेन्द्राष्टकभूषितम् ॥ १०५ ॥
तन्मध्ये कारयेद्दिव्यं मेरुप्रासादमुत्तमम् ।
अनेकशिखराकीर्णमशेषामरसंयुतम् ॥ १०६ ॥
बहिः सुवर्णनिचितं सर्वरत्नोपशोभितम् ।
चतुःप्रग्रीवकोपेतं चक्षुर्लिङ्गसमायुतम् ॥ १०७ ॥
चतुर्दिक्षु वनोपेतं चतुर्भिः संयुतैः शरैः ।
चतुर्णां पुरयुक्तेन प्राकारेण च संयुतम् ॥ १०८ ॥
मेरुप्रासादमित्येवं हेमरत्नविभूषितम् ।
यः कारयेद्वनोपेतं सोऽनन्तफलमाप्नुयात् ॥ १०९ ॥
भूम्यम्भःपरमाणूनां यथा सङ्ख्या न विद्यते ।
शिवायतनपुण्यस्य तथा सङ्ख्या न विद्यते ॥ ११० ॥
कुलत्रिंशकसंयुक्तः सर्वभृत्यसमन्वितः ।
कलत्रपुत्रमित्रैश्च सर्वस्वजनसंयुतः ॥ १११ ॥
आश्रितोपाश्रितैः सर्वैरशेषगणसंयुतः ।
यथा शिवस्तथैवायं शर्वलोके स पूज्यते ॥ ११२ ॥
न च मानुष्यकं लोकमागच्छेत् कृपणं पुनः ।
सर्वज्ञः परिपूर्णश्च मुक्तः स्वात्मनि तिष्ठति ॥ ११३ ॥
यः शिवाय वनं कृत्वा मुदाब्दसलिलोत्थितम् ।
तद्दण्डकोपशोभं च हस्ते कुर्वीत सर्वदा ॥ ११४ ॥
शोभयेद्भूतनाथं वा चन्द्रशालां क्वचित् क्वचित् ।
वेदीं वाथाभ्यपद्यन्त प्रोन्नताः स्तम्भपङ्क्तयः ॥ ११५ ॥
शातकुम्भमयीं वापि सर्वलक्षणसंयुताम् ।
ईश्वरप्रतिमां सौम्यां कारयेत् पुरुषोच्छ्रिताम् ॥ ११६ ॥

त्रिशूलसव्यहस्तां च वरदाभयदायिकाम् ।
सव्यहस्ताक्षमालां च जटाकुसुमभूषिताम् ॥ ११७ ॥
पद्मसिंहासनासीनां वृषस्थां वा समुच्छ्रिताम् ।
विमानस्थां रथस्थां वा वेदिस्थां वा प्रभान्विताम् ॥ ११८ ॥
सौम्यवक्त्रां करालां वा महाभैरवरूपिणीम् ।
अत्युच्छ्रितां सुविस्तीर्णां नृत्यस्थां योगसंस्थिताम् ॥ ११९ ॥
कुर्यादसंभवे हेम्नस्तारेण विमलेन च ।
आरकूटमयीं वापि ताम्रमृच्छैलदारुजाम् ॥ १२० ॥
अशेषकैः सरूपैश्च वर्णकैर्वा पटे लिखेत् ।
कुड्ये वा फलके वापि भक्त्या वित्तानुसारतः ॥ १२१ ॥
एकां सपरिवारां वा पार्वतीं गणसंयुताम् ।
प्रतीहारसमोपेतां कुर्यादेवाविकल्पतः ॥ १२२ ॥
पीठं वा कारयेद्रौप्यं ताम्रं पित्तलसंभवम् ।
चतुर्मुखैकवक्त्रं वा बहिः काञ्चनसंस्कृतम् ॥ १२३ ॥
पृथक्पृथगनेकानि कारयित्वा मुखानि तु ।
सौम्यभैरवरूपाणि शिवस्य बहुरूपिणः ॥ १२४ ॥
नानाभरणयुक्तानि हेमरौप्यकृतानि च ।
शिवस्य रथयात्रायां तानि लोकस्य दर्शयेत् ॥ १२५ ॥
उक्तानि यानि पुण्यानि सङ्क्षेपेण पृथक् पृथक् ।
कृत्वैकेन ममैतेषामक्षयं फलमाप्नुयात् ॥ १२६ ॥
मातुः पितुः सहोपायैर्दशभिर्दशभिः कुलैः ।
कलत्रपुत्रमित्राद्यैर्भृत्यैर्युक्तः स बान्धवैः ॥ १२७ ॥
अयुतेन विमानानां सर्वकामयुतेन च ।
भुङ्क्ते स्वयं महाभोगानन्ते मुक्तिमवाप्नुयात ॥ १२८ ॥

मण्डपस्तम्भपर्यन्ते कीलयेद्दर्पणान्वितम् ।
अभिषिच्य जना यस्मिन् पूजां कुर्वन्ति बिल्वकैः ॥ १२९ ॥
कालकालाकृतिं कृत्वा कीलयेद्यः शिवाश्रमे ।
सर्वलोकोपकाराय पूजयेच्च दिने दिने ॥ १३० ॥
धूपवेलाप्रमाणार्थं कल्पयेद्यः शिवाश्रमे ।
क्षरन्तीं पूर्यमाणां वा सदाऽऽयामे घटीं नृपः ॥ १३१ ॥
एषामेकतमं पुण्यं कृत्वा पापविवर्जितः ।
शिवलोकं नरः प्राप्य सर्वज्ञः स सुखी भवेत् ॥ १३२ ॥
रथयात्रां प्रवक्ष्यामि शिवस्य परमात्मनः ।
सर्वलोकहितार्थाय महाशिल्पिविनिर्मिताम् ॥ १३३ ॥
रथमध्ये समावेश्य यथा यष्टिं तु कीलयेत् ।
यष्टेर्मध्ये स्थितं कार्यं विमानमतिशोभितम् ॥ १३४ ॥
पञ्चभौमं त्रिभौमं वा दृढवंशप्रकल्पितम् ।
वर्मणा सुनिबद्धं च रज्जुभिश्च सुसंयुतम् ॥ १३५ ॥
पञ्चशालाण्डकैर्युक्तं नानाभक्तिसमन्वितम् ।
चित्रवर्णपरिच्छन्नं पटैर्वा वर्णकान्वितैः ॥ १३६ ॥
लम्बकैः सूत्रदाम्ना च घण्टाचामरभूषितम् ।
बुद्बुदैरर्धचन्द्रैश्च दर्पणैश्च समुज्ज्वलम् ॥ १३७ ॥
कदल्यर्धध्वजैर्युक्तं महाच्छत्रं महाध्वजम् ।
पुष्पमालापरिक्षिप्तं सर्वशोभासमन्वितम् ॥ १३८ ॥
महारथविमानेऽस्मिन् स्थापयेद्गणसंयुतम् ।
ईश्वरप्रतिमां हेम्नि प्रथमे पुरमण्डपे ॥ १३९ ॥
मुखत्रयं च बध्नीयाद्बहिः कुर्यात्तथाश्रितम् ।
पुरे पुरे बहिर्दिक्षु गृहकेषु समाश्रितम् ॥ १४० ॥

चतुष्कं शिववस्त्राणां संस्थाप्य प्रतिपूजयेत् ।
दिनत्रयं प्रकुर्वीत स्नानमर्चनभोजनम् ॥ १४१ ॥
नृत्यक्रीडाप्रयोगेण गेयमङ्गलपाठकैः ।
महावादित्रनिर्घोषैः पौषपूर्णिमपर्वणि ॥ १४२ ॥
भ्रामयेद्राजमार्गेण चतुर्थेऽहनि तद्रथम् ।
ततः स्वस्थानमानीय तच्छेषमपि वर्धयेत् ॥ १४३ ॥
अवधार्य जगद्धात्रीं प्रतिमामवतारयेत् ।
महाविमानयात्रैषा कर्तव्या पट्टकेऽपि वा ॥ १४४ ॥
वंशैर्नवैः सुपक्वैश्च कटं कुर्याद्दृढक्षमम् ।
वृत्तं द्विगुणदीर्घं च चतुरश्रमधः समम् ॥ १४५ ॥
सर्वत्र चर्मणा बद्धं महायष्टिसमाश्रितम् ।
मुखं बद्धं च कुर्वीत वंशमण्डलिना दृढम् ॥ १४६ ॥
कटेऽस्मिंस्तानि वस्त्राणि स्थाप्य बध्नीत यत्नतः ।
उपर्युपरि सर्वाणि तन्मध्ये प्रतिमां न्यसेत् ॥ १४७ ॥
वर्णकैः कुङ्कुमाद्यैश्च चित्रपुष्पैश्च पूजयेत् ।
नानाभरणपूजाभिर्मुक्ताहारप्रलम्बिभिः ॥ १४८ ॥
रथस्य महतो मध्ये स्थाप्य पट्टद्वयं दृढम् ।
अधरोत्तरभागेन मध्ये छिद्रसमन्वितम् ॥ १४९ ॥
कटियष्टेरधोभागं स्थाप्य छिद्रमयं शुभैः ।
आबद्ध्य कीलयेद्यत्नाद्यष्ट्यर्धं च ध्वजाष्टकम् ॥ १५० ॥
कटस्य पृष्ठं सर्वत्र कारयेत् पटसंवृतम् ।
तत्पटे च लिखेत् सोमं सगणं सवृषं शिवम् ॥ १५१ ॥
विचित्रपुष्पस्रग्दाम्ना समन्ताद्भूषयेत् कटम् ।
रवकैः किङ्किणीजालैर्घण्टाचामरभूषितैः ॥ १५२ ॥

महापूजाविशेषैश्च कौतूहलसमन्वितम् ।
वाद्यारम्भोपचारेण मार्गशोभां प्रकल्पयेत् ॥ १५३ ॥
तद्रथं भ्रामयेद्यत्नाद्राजमार्गेण सर्वतः ।
ततः स्वाश्रममानीय स्थापयेत्तत्समीपतः ॥ १५४ ॥
महाशब्दं ततः कुर्यात्तालत्रयसमन्वितम् ।
ततस्तूष्णीं स्थिते लोके तच्छान्तिमिह धारयेत् ॥ १५५ ॥
शिवं तु सर्वजगतः शिवं गोब्राह्मणस्य च ।
शिवमस्तु नृपाणां च तद्भक्तानां जनस्य च ॥ १५६ ॥
राजा विजयमाप्नोतु पुत्रपौत्रैश्च वर्धताम् ।
धर्मनिष्ठश्च भवतु प्रजानां च हिते रतः ॥ १५७ ॥
कालवर्षी तु पर्जन्यः सस्यसंपत्तिरुत्तमा ।
सुभिक्षात् क्षेममाप्नोति कार्यसिद्धिश्च जायताम् ॥ १५८ ॥
दोषाः प्रयान्तु नाशं च गुणाः स्थैर्यं भजन्तु वः ।
बहुक्षीरयुता गावो हृष्टपुष्टा भवन्तु वः ॥ १५९ ॥
एवं शिवमहाशान्तिमुच्चार्य जगतः क्रमात् ।
अभिवर्ध्य ततः शेषामैश्वरीं सार्वकामिकीम् ॥ १६० ॥
शिवमालां समादाय सदासीपरिचारिकः ।
फलैर्भक्षैश्च संयुक्तां गृह्य पात्रीं निवेशयेत् ॥ १६१ ॥
पात्रीं च धारयेन्मूर्ध्ना सोष्णीषां देवपुत्रकः ।
अलङ्कृतः शुक्लवासा धार्मिकः सततं शुचिः ॥ १६२ ॥
ततश्च तां समुत्क्षिप्य पाणिना धारयेद्बुधः ।
प्रब्रूयादपरश्चात्र शिवधर्मस्य भाजकः ॥ १६३ ॥
तोयं यथा घटीसंस्थमजस्रं क्षरते तथा ।
क्षरते सर्वलोकानां तद्वदायुरहर्निशम् ॥ १६४ ॥

यदा सर्वं परित्यज्य गन्तव्यमवशैर्ध्रुवम् ।
तदा न दीयते कस्मात् पाथेयार्थमिदं धनम् ॥ १६५ ॥
कलत्रपुत्रमित्राणि पिता माता च बान्धवाः ।
तिष्ठन्ति न मृतस्यार्थे परलोके धनानि च ॥ १६६ ॥
नास्ति धर्मसमं मित्रं नास्ति धर्मसमः सखा ।
यतः सर्वैः परित्यक्तं नरं धर्मोऽनुगच्छति ॥ १६७ ॥
तस्माद्धर्मं समुद्दिश्य यः शेषामभिवर्धयेत् ।
समस्तपापनिर्मुक्तः शिवलोकं स गच्छति ॥ १६८ ॥
उपर्युपरि वित्तेन यः शेषामभिवर्धयेत् ।
तस्येयमुत्तमा देया यतश्चान्या न वर्धते ॥ १६९ ॥
इत्येवं मध्यमां शेषां वर्धयेद्वा कनीयसीम् ।
ततस्तेषां प्रदातव्या सर्वशोकस्य शान्तये ॥ १७० ॥
येनोत्तमा गृहीता स्याच्छिवशेषा महीयसी ।
प्रापणीया गृहं तस्य तथैव शिरसा वृता ॥ १७१ ॥
ध्वजच्छत्रविमानाद्यैर्महावादित्रनिस्स्वनैः ।
गृहद्वारं ततः प्राप्तामर्चयित्वा निवेशयेत् ॥ १७२ ॥
दद्याद्गोत्रकलत्राणां भृत्यानां स्वजनस्य च ।
तर्पयेच्चानतान् भक्त्या वादित्रध्वजवाहकान् ॥ १७३ ॥
एवमादीयते भक्त्या यः शिवस्योत्तमा गृहे ।
शोभया राजमार्गेण तस्य धर्मफलं शृणु ॥ १७४ ॥
समस्तपापनिर्मुक्तः समस्तकुलसंयुतः ।
शिवलोकमवाप्नोति सभृत्यपरिचारकः ॥ १७५ ॥
तत्र दिव्यैर्महाभोगैर्विमानैः सार्वकामिकैः ।
कल्पानां क्रीडते कोटिमन्ते निर्वाणमाप्नुयात् ॥ १७६ ॥

रथस्य यात्रां यः कुर्यादित्येवमुपशोभया ।
भक्ष्यभोज्यप्रदानैश्च तत्फलं श्रृणु यत्नतः ॥ १७७ ॥
अशेषपापनिर्मुक्तः सर्वभृत्यसमन्वितः ।
कुलत्रिंशकमुद्धृत्य सुहृद्भिः स्वजनैः सह ॥ १७८ ॥
सर्वकामयुतैर्दिव्यैः स्वच्छन्दगमनालयैः ।
महाविमानैः श्रीमद्भिर्दिव्यस्त्रीपरिवारितः ॥ १७९ ॥
इच्छया क्रीडते भोगैः कल्पकोटिं शिवे पुरे ।
ज्ञानयोगं ततः प्राप्य संसारादवमुच्यते ॥ १८० ॥
शिवस्य रथयात्रायामुपवासपरः क्षमी ।
पुरतः पृष्ठतो वापि गच्छंस्तस्य फलं श्रृणु ॥ १८१ ॥
अशेषपापनिर्मुक्तः शुद्धः शिवपुरं गतः ।
महारथोपमैर्यानैः कल्पाशीतिं प्रमोदते ॥ १८२ ॥
ध्वजच्छत्रपताकाभिर्दीपदर्पणचामरैः ।
धूपैर्वितानकलशैरुपशोभा सहस्रशः ॥ १८३ ॥
गृहीत्वा याति पुरतः स्वेच्छया वा परेच्छया ।
संपर्कात् कौतुकाल्लाभाच्छिवलोकं व्रजन्ति ते ॥ १८४ ॥
शिवस्य रथयात्रां तु यः प्रपश्यति भक्तितः ।
प्रसङ्गात् कौतुकाद्वापि तेऽपि यान्ति शिवं पुरम् ॥ १८५ ।
नानायन्त्रादिशेषान्ते नानाप्रेक्षणकानि च ।
कुर्वीत रथयात्रायां रमते च विभूषिता ॥ १८६ ॥
ते भोगैर्विविधैर्दिव्यैः शिवासन्ना गणेश्वराः ।
क्रीडन्ति रुद्रभवने कल्पानां विंशतीर्नराः ॥ १८७ ॥
महता ज्ञानसङ्घेन तस्माच्छिवरथेन च ।
पृथक्जीवा मृता यान्ति शिवलोकं न संशयः ॥ १८८ ॥

श्रीपर्वते महाकाले वाराणस्यां महालये ।
जलपेश्वरे कुरुक्षेत्रे केदारे मण्डलेश्वरे ॥ १८९ ॥
गोकर्णे भद्रकर्णे च शङ्कुकर्णे स्थलेश्वरे ।
भीमेश्वरे सुवर्णाक्षे कालञ्जरवने तथा ॥ १९० ॥
एवमादिषु चान्येषु शिवक्षेत्रेषु ये मृताः ।
जीवाश्चराचराः सर्वे शिवलोकं व्रजन्ति ते ॥ १९१ ॥
प्रयागं कामिकं तीर्थमविमुक्तं तु नैष्ठिकम् ।
श्रीपर्वतं च विज्ञेयमिहामुत्र च सिद्धिदम् ॥ १९२ ॥
प्रसङ्गेनापि यः पश्येदन्यत्र प्रस्थितः क्वचित् ।
श्रीपर्वतं महापुण्यं सोऽपि याति शिवं पुरम् ॥ १९३ ॥
व्रजेद्यः शिवतीर्थानि सर्वपापैः प्रमुच्यते ।
पापयुक्तः शिवज्ञानं प्राप्य निर्वाणमाप्नुयात् ॥ १९४ ॥
तीर्थस्थानेषु यः श्राद्धं शिवरात्रे प्रयत्नतः ।
कल्पयित्वानुसारेण कालस्य विषुवस्य च ॥ १९५ ॥
तीर्थयात्रागतं शान्तं हाहाभूतमचेतनम् ।
क्षुत्पिपासातुरं लोके पांसुपादं त्वरान्वितम् ॥ १९६ ॥
सन्तर्पयित्वा यत्नेन म्लानलक्ष्मीमिवाम्बुभिः ।
पाद्यासनप्रदानेन कस्तेन पुरुषः समः ॥ १९७ ॥
अश्नन्ति यावत्तत्पिण्डं तीर्थनिर्धूतकल्मषाः ।
तावद्वर्षसहस्राणि तद्दातास्ते शिवे पुरे ॥ १९८ ॥
दद्याद्यः शिवसत्रार्थं महिषीं सुपयस्विनीम् ।
मोदते स शिवे लोके युगकोटिशतं नरः ॥ १९९ ॥
आर्ताय शिवभक्ताय दद्याद्यः सुपयस्विनीम् ।
अजामेकां सुपुष्टाङ्गीं तस्य पुण्यफलं शृणु ॥ २०० ॥

यावत्तद्रोमसंख्यानं तत्प्रसूतिकुलेषु च ।
तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥ २०१ ॥
मृदुरोमाञ्चितां कृष्णां निवेद्य गुरवे नरः ।
रोम्णि रोम्णि सुवर्णस्य दत्तस्य फलमाप्नुयात् ॥ २०२ ॥
गजाश्वरथसंयुक्तैर्विमानैः सार्वकामिकैः ।
सानुगः क्रीडते भोगैः कल्पकोटिं शिवे पुरे ॥ २०३ ॥
निवेद्याश्वतरं पुष्टमदुष्टं गुरवे नरः ।
सङ्गतिं सोपकरणं भोगान् भुङ्क्ते शिवे पुरे ॥ २०४ ॥
दिव्याश्वयुक्तैः श्रीमद्भिर्विमानैः सार्वकामिकैः ।
कोटिं कोटिं च कल्पानां तदन्ते स्यान्महीपतिः ॥ २०५ ॥
अपि योजनमात्राय शिबिकां परिकल्पयेत् ।
गुरोः शान्तस्य दान्तस्य तस्य पुण्यफलं शृणु ॥ २०६ ॥
विमानानां सहस्रेण सर्वकामयुतेन च ।
कल्पकोट्ययुतं साग्रं भोगान् भुङ्क्ते शिवे पुरे ॥ २०७ ॥
छागं मेषं मयूरं च कुक्कुटं शारिकां शुकम् ।
बालक्रीडनकानेतानित्याद्यानपरानपि ॥ २०८ ॥
निवेदयित्वा स्कन्दाय तत्सायुज्यमवाप्नुयात् ।
भुक्त्वा तु विपुलान् भोगांस्तदन्ते स्याद्द्विजोत्तमः ॥ २०९ ॥
मुसलोलूखलाद्यानि गृहोपकरणानि च ।
दद्याच्छिवगृहस्थेभ्यस्तस्य पुण्यफलं शृणु ॥ २१० ॥
प्रत्येकं कल्पमेकैकं गृहोपकरणैर्नरः ।
अन्ते दिवि वसेद्भोगैस्तदन्ते च गृही भवेत् ॥ २११ ॥
खर्जूरतालपत्रैर्वा चर्मणा वा सुकल्पितम् ।
दत्वा कोट्यासनं वृत्तं शिवलोकमवाप्नुयात् ॥ २१२ ॥

प्रातर्नीहारवेलायां हेमन्ते शिवयोगिनाम् ।
कृत्वा प्रतापनायाग्निं शिवलोके महीयते ॥ २१३ ॥
सूर्यायुतप्रभादीप्तैर्विमानैः सार्वकामिकैः ।
कल्पकोटिशतं भोगान् भुक्त्वा स तु महीपतिः ॥ २१४ ॥
यः प्रान्तरं विदेशं वा गच्छन्तं शिवयोगिनम् ।
भोजयीत यथाशक्त्या शिवलोके महीयते ॥ २१५ ॥
यश्छत्रं धारयेद्ग्रीष्मे गच्छते शिवयोगिने ।
स मृतः पृथिवीं कृत्स्नामेकच्छत्रामवाप्नुयात् ॥ २१६ ॥
यः समुद्धरते मार्गे मात्रोपकरणासनम् ।
शिवयोगप्रवृत्तस्य तस्य पुण्यफलं शृणु ॥ २१७ ॥
कल्पायुतं नरः साग्रं भुक्त्वा भोगाञ्छिवे पुरे ।
तदन्ते प्राप्नुयाद्राज्यं सर्वैश्वर्यसमन्वितम् ॥ २१८ ॥
अभ्यङ्गोद्वर्तनं स्नानमार्तस्य शिवयोगिनः ।
कृत्वाऽऽप्नोति महाभोगान् कल्पाञ्छिवपुरे नरः ॥ २१९ ॥
अपनीय समुच्छिष्टं भक्तितः शिवयोगिनाम् ।
दशधेनुप्रदानस्य फलमाप्नोति मानवः ॥ २२० ॥
पञ्चगव्यसमं ज्ञेयमुच्छिष्टं शिवयोगिनाम् ।
तद्भुक्त्वा लभते शुद्धिं महतः पातकादपि ॥ २२१ ॥
नारी च भुक्त्वा सत्पुत्रं कुलाधारं गुणान्वितम् ।
राज्ययोग्यं धनाढ्यं च प्राप्नुयाद्धर्मतत्परम् ॥ २२२ ॥
यश्च यां शिवयज्ञाय गृहस्थः परिकल्पयेत् ।
शिवभक्तोऽस्य महतः परमं फलमाप्नुयात् ॥ २२३ ॥
शिवोमां च प्रयत्नेन भक्त्याब्दं योऽनुपालयेत् ।
गवां लक्षप्रदानस्य संपूर्णं फलमाप्नुयात् ॥ २२४ ॥

प्रातः प्रदद्यात् सघृतं सुकृतं वालपिण्डकम् ।
दूर्वां च बालवत्सानां तस्य पुण्यफलं शृणु ॥ २२५ ॥
यावत्तद्बालवत्सानां पानाहारं प्रकल्पयेत् ।
तावदष्टायुतान् पूर्वैर्भोगान् भुङ्क्ते शिवे पुरे ॥ २२६ ॥
विधवानाथवृद्धानां प्रदद्याद्यः प्रजीवनम् ।
आभूतसंप्लवं यावच्छिवलोके महीयते ॥ २२७ ॥
दद्याद्यः सर्वजन्तूनामाहारमनुयत्नतः ।
त्रिः पृथ्वीं रत्नसंपूर्णां यद्दत्वा तत्फलं लभेत् ॥ २२८ ॥
नियमव्रतदानानि यानि सिद्धानि लोकतः ।
तानि तेनैव विधिना शिवमन्त्रेण कल्पयेत् ॥ २२९ ॥
निवेदयीत रुद्राय रुद्राण्याः षण्मुखस्य च ।
प्राप्नुयाद्विपुलान् भोगान् दिव्याञ्छिवपुरे नरः ॥ २३० ॥
पुनर्यः कर्तरीं दद्यात् केशक्लेशापनुत्तये ।
सर्वक्लेशविनिर्मुक्तः शिवलोके सुखी भवेत् ॥ २३१ ॥
नासिकाशोधनं दद्यात् सन्दंशं शिवयोगिने ।
वर्षकोटिं महाभोगैः शिवलोके महीयते ॥ २३२ ॥
नखच्छेदनकं दत्वा सुकृतं शिवयोगिने ।
वर्षलक्षं महाभोगैः शिवलोके महीयते ॥ २३३ ॥
दत्वाञ्जनशलाकां वा लोहाद्यां शिवयोगिने ।
भोगाञ्छिवपुरे प्राप्य ज्ञानचक्षुरवाप्नुयात् ॥ २३४ ॥
कर्णशोधनकं दत्वा लोहाद्यं शिवयोगिने ।
वर्षकोटिं महाभोगैः शिवलोके महीयते ॥ २३५ ॥
दद्याद्यः शिवभक्ताय सूचीं कौपीनशोधनीम् ।
वर्षलक्षं स लक्षार्धं शिवलोके महीयते ॥ २३६ ॥

निवेद्य शिवयोगिभ्यः सूचिकं सूत्रसंयुतम् ।
वर्षलक्षं महाभोगैः क्रीडते स शिवे पुरे ॥ २३७ ॥
दद्याद्यः शिवयोगिभ्यः सुकृतां पत्रवेधनीम् ।
वर्षलक्षं महाभोगैः शिवलोके महीयते ॥ २३८ ॥
दद्याद्यः पुस्तकादीनां सर्वकार्यार्थकर्तृकाम् ।
पञ्चलक्षं महाभोगैर्मोदते स शिवे पुरे ॥ २३९ ॥
शमीन्धनतृणादीनां दद्यात्तच्छेदनं च यः ।
क्रीडते स शिवे लोके वर्षलक्षचतुष्टयम् ॥ २४० ॥
शिवाश्रमोपभोगाय लोहोपकरणं महत् ।
यः प्रदद्यात् कुठाराद्यं तस्य पुण्यफलं शृणु ॥ २४१ ॥
यावत्तत्पलसंख्यानं लोहोपकरणे भवेत् ।
तावन्ति वर्षलक्षाणि शिवलोके महीयते ॥ २४२ ॥
शिवायतनवित्तानां रक्षार्थं यः प्रयच्छति ।
धनुःखड्गायुधादीनि तस्य पुण्यफलं शृणु ॥ २४३ ॥
एकैकस्मिन् परिज्ञेयमायुधे चापि वै फलम् ।
वर्षकोट्यष्टकं भोगैः शिवलोके महीयते ॥ २४४ ॥
यः स्वात्मभोगभृत्यर्थं कुसुमानि निवेदयेत् ।
शिवाय गुरवे वापि तस्य पुण्यफलं शृणु ॥ २४५ ॥
यावदन्योन्यसंबन्धास्तस्यांशाः परिकीर्तिताः ।
वर्षलक्षं स तावच्च शिवलोके प्रमोदते ॥ २४६ ॥
नष्टापहृतमन्विष्य पुनर्वित्तं निवेदयेत् ।
शिवात्मकं शिवायैव तस्य पुण्यफलं शृणु ॥ २४७ ॥
यावच्छिवाय तद्वित्तं प्राङ्निवेद्य फलं स्मृतम् ।
नष्टमानीय तद्भूयः पुण्यं शतगुणं लभेत् ॥ २४८ ॥

देवद्रव्यं हृतं नष्टमन्वेष्यमपि यत्नतः ।
न प्राप्नोति तदा तस्य प्राप्नुयाद्द्विगुणं फलम् ॥ २४९ ॥
ताम्रकुम्भकटाहाद्यं यः शिवाय निवेदयेत् ।
शिवात्मकं शिवायैव तस्य पुण्यफलं शृणु ॥ २५० ॥
यावच्छिवाय तद्वित्तं प्राङ्निवेद्य फलं स्मृतम् ।
नष्टमानीय तद्भूयः पुण्यं शतगुणं लभेत् ॥ २५१ ॥
स्नानसत्रोपभोगाय तस्य पुण्यफलं शृणु ।
यावत्तत्पलसंख्यानं ताम्रोपकरणे स्थितम् ॥ २५२ ॥
पले पले वर्षकोटिं मोदते स शिवे पुरे ।
यः पत्रपुष्पवस्तूनां दद्यादाधारभाजनम् ॥ २५३ ॥
तद्वस्तुदातुर्यत्पुण्यं तत्पुण्यं सकलं भवेत् ।
दत्वोपकरणं किञ्चिदपि यो वित्तमर्थिनाम् ॥ २५४ ॥
यद्वस्तु कुरुते तेन तत्प्रदानफलं लभेत् ।
यः शौचपीतवस्त्राणि क्षाराद्यैः शिवयोगिनाम् ॥ २५५ ॥
स पापमलनिर्मुक्तः शिवलोकमवाप्नुयात् ।
यः पुष्पपट्टसंयुक्तं पटगर्भं च कम्बलम् ॥ २५६ ॥
प्रदद्याच्छिवयोगिभ्यस्तस्य पुण्यफलं शृणु ।
तेषां च वस्त्रतन्तूनां यावत्संख्या विधीयते ॥ २५७ ॥
तावद्वर्षसहस्राणि भोगान् भुङ्क्ते शिवे पुरे ।
श्लक्ष्णवस्त्राणि शुक्लानि दद्याद्यः शिवयोगिने ॥ २५८ ॥
चित्रवस्त्राणि तद्भक्त्या तस्य पुण्यफलं शृणु ।
यावत्तत्सूक्ष्मवस्त्राणां तन्तुसङ्ख्या विधीयते ॥ २५९ ॥
तावद्युगानि संभोगैः शिवलोके महीयते ।
शङ्खपात्रं तु विस्तीर्णं भाण्डं वापि सुशोभनम् ॥ २६० ॥

प्रदद्याच्छिवयोगिभ्यस्तस्य पुण्यफलं शृणु ।
दिव्यं विमानमारूढः सर्वकामसमन्वितम् ॥ २६१ ॥
कल्पकोट्यथुतं साग्रं शिवलोके महीयते ।
शुक्त्यादीनि च पात्राणि शोभनान्यमलानि च ॥ २६२ ॥
निवेद्य शिवयोगिभ्यः शङ्खार्धेन फलं लभेत् ।
स्फाटिकानां च पात्राणां शङ्खतुल्यफलं स्मृतम् ॥ २६३ ॥
शैलजानां तदर्धेन पात्राणां च तदर्धकम् ।
तालखर्जूरपात्राणां वंशजानां निवेदने ॥ २६४ ॥
अन्येषामेवमादीनां पुण्यं वार्क्ष्यार्धसंमितम् ।
वंशजार्धसमं पुण्यं फलपात्रनिवेदने ॥ २६५ ॥
नानापर्णपुटानां च साराणां वा फलार्धकम् ।
यस्ताम्रकांस्यपात्राणि शोभनान्यमलानि च ॥ २६६ ॥
स्नानभोजनपानार्थं दद्याद्यः शिवयोगिने ।
ताम्रां कांर्सी त्रिलोहीं वा यः प्रदद्यात् त्रिपादिकाम् ॥ २६७
भोजने भोजनाधारां गुरवे तत्फलं शृणु ।
यावत्तत्पलसंख्यानं त्रिपाद्या भोजनेषु च ॥ २६८ ॥
तावद्युगसहस्राणि भोगान् भुङ्क्ते शिवे पुरे ।
लोहं त्रिपादिकं दत्वा सत्कृत्वा शिवयोगिने ॥ २६९ ॥
दशकल्पान् महाभोगैर्नरः शिवपुरे वसेत् ।
यः प्रदद्यात् त्रिविष्टम्भं भिक्षापात्रसमाश्रयम् ॥ २७० ॥
वंशजं दारुजं वापि तस्य पुण्यफलं शृणु ।
दिव्यस्त्रीभोगसंपन्नो विमाने महति स्थितः ॥ २७१ ॥
चतुर्युगसहस्रं तु भोगान् भुङ्क्ते शिवे पुरे ।
भिक्षापात्रमुखाच्छादं वस्त्रपर्णादिकल्पितम् ॥ २७२ ॥

दत्वा शिवपुरे भोगान् कल्पमेकं वसेन्नरः ।
संश्रयं यः प्रदद्याच्च भिक्षापात्रे कमण्डलौ ॥ २७३ ॥
कंल्पितं वस्त्रसूत्राद्यैस्तस्य पुण्यफलं शृणु ।
तद्वस्त्रपूततन्तूनां संख्या यावद्विधीयते ॥ २७४ ॥
तावद्वर्षसहस्राणि रुद्रलोके महीयते ।
सूत्रवल्कलवालैर्वा शिक्यभाण्डसमाश्रयम् ॥ २७५ ॥
यः कृत्वा दामनीयोक्तं प्रग्रहं रज्जुमेव वा ।
एवमादीनि चान्यानि वस्तूनि विनिवेदयेत् ॥ २७६ ॥
शिवगोष्ठोपयोगार्थं तस्य पुण्यफलं शृणु ।
यावत्तद्रज्जुसंख्यानं प्रदद्याच्छिवगोकुले ॥ २७७ ॥
तावच्चतुर्युगं देही शिवलोके महीयते ।
यथा यथा प्रियं वस्त्रं शोभनं च यथा यथा ॥ २७८ ॥
तथा तथा महत्पुण्यं तद्दानादुत्तरोत्तरम् ।
यः पन्थानं दिशेत् पृष्टं प्रणष्टं च गवादिकम् ॥ २७९ ॥
स गोदानसमं पुण्यं प्रज्ञासौख्यं च विन्दति ।
कृत्वोपकारमार्तानां स्वर्गं याति न संशयः ॥ २८० ॥
अपि कण्टकमुद्धृत्य किमुतान्यं महागुणम् ।
अन्नपानौषधीनां च यः प्रदातारमुद्दिशेत् ॥ २८१ ॥
आर्तानां तस्य विज्ञेयं दातुस्तत्सदृशं फलम् ।
शिवाय तस्य संरुद्धं कर्म तिष्ठति यद्विना ॥ २८२ ॥
तदल्पमपि यज्ञाङ्गं दत्वा यज्ञफलं लभेत् ।
अपि काशकुशं सूत्रं गोमयं समिदिन्धनम् ॥ २८३ ॥

शिवयज्ञोपयोगार्थं प्रवक्ष्यामि समासतः ।
सर्वेषां शिवभक्तानां दद्याद्यत्किञ्चिदादरात् ।
दत्वा यज्ञफलं विद्यात् किमु तद्वस्तुदानतः ॥ २८४ ॥

इति शिवोपनिषदि फलोपकरणप्रदानाध्यायः षष्ठः

---

## सप्तमोऽध्यायः

अथ स्वर्गापवर्गार्थे प्रवक्ष्यामि समासतः ।
सर्वेषां शिवभक्तानां शिवाचारमनुत्तमम् ॥ १ ॥
शिवः शिवाय भूतानां यस्माद्दानं प्रयच्छति ।
गुरुमूर्तिः स्थितस्तस्मात् पूजयेत् सततं गुरुम् ॥ २ ॥
नालक्षणे यथा लिङ्गे सान्निध्यं कल्पयेच्छिवः ।
अल्पागमे गुरौ तद्वत्सान्निध्यं न प्रकल्पयेत् ॥ ३ ॥
शिवज्ञानार्थतत्त्वज्ञं प्रसन्नमनसं गुरुम् ।
शिवः शिवं समास्थाय ज्ञानं वक्ति न हीतरः ॥ ४ ॥
गुरुं च शिववद्भक्त्या नमस्कारेण पूजयेत् ।
कृताञ्जलिस्त्रिसन्ध्यं च भूमिविन्यस्तमस्तकः ॥ ५ ॥
न विविक्तमनाचान्तं चङ्क्रमन्तं तथाऽऽकुलम् ।
समाधिस्थं व्रजन्तं च नमस्कुर्याद्गुरुं बुधः ॥ ६ ॥
व्याख्याने तत्समाप्तौ च संप्रश्ने स्नानभोजने ।
भुक्त्वा च शयने स्वप्ने नमस्कुर्यात् सदा गुरुम् ॥ ७ ॥

ग्रामान्तरमभिप्रेप्सुर्गुरोः कुर्यात् प्रदक्षिणम् ।
सार्वाङ्गिकप्रणामं च पुनः कुर्यात् तदागतः ॥ ८ ॥
पर्वोत्सवेषु सर्वेषु दद्याद्गन्धपवित्रकम् ।
शिवज्ञानस्य चारम्भे प्रवासगमनागतौ ॥ ९ ॥
शिवधर्मव्रतारम्भे तत्समाप्तौ च कल्पयेत् ।
प्रसादनाय कुपितो विजित्य च रिपुं तथा ॥ १० ॥
पुण्याहे ग्रहशान्तौ च दीक्षायां च सदक्षिणम् ।
आचार्य पदसंप्राप्तौ पवित्रे चोपविग्रहे ॥ ११ ॥
उपानच्छत्रशयनं वस्त्रमासनभूषणम् ।
पात्रदण्डाक्षसूत्रं वा गुरुसक्तं न धारयेत् ॥ १२ ॥
हास्य निष्ठीवनास्फोटमुच्चभाष्यविजृम्भणम् ।
पादप्रसारणं गीतं न कुर्याद्गुरुसन्निधौ ॥ १३ ॥
हीनान्नपानवस्त्रः स्यान्नीचशय्यासनो गुरोः ।
न यथेष्टश्च संतिष्ठेत् कलहं च विवर्जयेत् ॥ १४ ॥
प्रतिवातेऽनुवाते वा न तिष्ठेद्गुरुणा सह ।
असंश्रये च सततं न किञ्चित् कीर्तयेद्गुरोः ॥ १५ ॥
अन्यासक्तो न भुञ्जानो न तिष्ठन्नपराङ्मुखः ।
न शयानो न चासीनः संभाष्येद्गुरुणा सह ॥ १६ ॥
दृष्ट्वैव गुरुमायान्तमुत्तिष्ठेद्दूरतस्त्वरम् ।
अनुज्ञातश्च गुरुणा संविशेच्चानुपृष्ठतः ॥ १७ ॥
न कण्ठं प्रावृतं कुर्यान्न च तत्रावसक्तिकाम् ।
न पादधावनस्नानं यत्र पश्येद्गुरुः स्थितः ॥ १८ ॥
न दन्तधावनाभ्यङ्गमायामोद्वर्तनक्रियाः ।
उत्सर्गपरिधानं च गुरोः कुर्वीत पश्यतः ॥ १९ ॥

गुरुर्यदर्पयेत् किञ्चिद्गृहासन्नं तदञ्जलौ ।
पात्रे वा पुरतः शिष्यस्तद्वक्त्रमभिवीक्षयन् ॥ २० ॥
यदर्पयेद्गुरुः किञ्चित्तन्नम्रः पुरतः स्थितः ।
पाणिद्वयेन गृह्णीयात् स्थापयेत्तच्च सुस्थितम् ॥ २१ ॥
न गुरोः कीर्तयेन्नाम परोक्षमपि केवलम् ।
समानसंज्ञमन्यं वा नाह्वयीत तदाख्यया ॥ २२ ॥
स्वगुरुस्तद्गुरुश्चैव यदि स्यातां समं क्वचित् ।
गुरोर्गुरुस्तयोः पूज्यः स्वगुरुश्च तदाज्ञया ॥ २३ ॥
अनिवेद्य न भुञ्जीत भुक्त्वा चास्य निवेदयेत् ।
नाविज्ञाप्य गुरुं गच्छेद्बहिः कार्येण केनचित् ॥ २४ ॥
गुर्वाज्ञया कर्म कृत्वा तत्समाप्तौ निवेदयेत् ।
कृत्वा च नैत्यकं सर्वमधीयीताज्ञया गुरोः ॥ २५ ॥
मृद्भस्मगोमयजलं पत्रपुष्पेन्धनं समित् ।
पर्याप्तमष्टकं ह्येतद्गुर्वर्थं तु समाहरेत् ॥ २६ ॥
भैषज्याहारपात्राणि वस्त्रशय्यासनं गुरोः ।
आनयेत् सर्वयत्नेन प्रार्थयित्वा धनेश्वरान् ॥ २७ ॥
गुरोर्न खण्डयेदाज्ञामपि प्राणान् परित्यजेत् ।
कृत्वाज्ञां प्राप्नुयान्मुक्तिं लङ्घयन्नरकं व्रजेत् ॥ २८ ॥
पर्यटेत् पृथिवीं कृत्स्नां सशैलवनकाननाम् ।
गुरुभैषज्यसिद्ध्यर्थमपि गच्छेद्रसातलम् ॥ २९ ॥
यदादिशेद्गुरुः किञ्चित्तत् कुर्यादविचारतः ।
अमीमांस्या हि गुरवः सर्वकार्येषु सर्वथा ॥ ३० ॥
नोत्थापयेत् सुखासीनं शयानं न प्रबोधयेत् ।
आसीनो गुरुमासीनमभिगच्छेत् प्रतिष्ठितम् ॥ ३१ ॥

पथि प्रयान्तं यान्तं च यत्नाद्विश्रामयेद्गुरुम् ।
क्षुत्पिपासातुरं स्नातं ज्ञात्वा शक्तं च भोजयेत् ॥ ३२ ॥
अभ्यङ्गोद्वर्तनं स्नानं भोजनष्ठीवमार्जनम् ।
गात्रसंवाहनं रात्रौ पादाभ्यङ्गं च यत्नतः ॥ ३३ ॥
प्रातः प्रसाधनं दत्वा कार्यं संमार्जनाञ्जनम् ।
नानापुष्पप्रकरणं श्रीमद्व्याख्यानमण्डपे ॥ ३४ ॥
स्थाप्यासनं गुरोः पूज्यं शिवज्ञानस्य पुस्तकम् ।
तत्र तिष्ठेत् प्रतीक्षंस्तद्गुरोरागमनं क्रमात् ॥ ३५ ॥
गुरोर्निन्दापवादं च श्रुत्वा कर्णौ पिधापयेत् ।
अन्यत्र चैव सर्पेत्तु निगृह्णीयादुपायतः ॥ ३६ ॥
न गुरोरप्रियं कुर्यात् पीडितस्तारितोऽपि वा ।
नोच्चारयेच्च तद्वाक्यमुच्चार्य नरकं व्रजेत् ॥ ३७ ॥
गुरुरेव पिता माता गुरुरेव परः शिवः ।
यस्यैव निश्चितो भावस्तस्य मुक्तिर्न दूरतः ॥ ३८ ॥
आहाराचारधर्माणां यत् कुर्याद्गुरुरीश्वरः ।
तथैव चानुकुर्वीत नानुयुञ्जीत कारणम् ॥ ३९ ॥
यज्ञस्तपांसि नियमात्तानि वै विविधानि च ।
गुरुवाक्ये तु सर्वाणि संपद्यन्ते न संशयः ॥ ४० ॥
अज्ञानपङ्कनिर्मग्नं यः समुद्धरते जनम् ।
शिवज्ञानात्महस्तेन कस्तं न प्रतिपूजयेत् ॥ ४१ ॥
इति यः पूजयेन्नित्यं गुरुमूर्तिस्थमीश्वरम् ।
सर्वपापविनिर्मुक्तः प्राप्नोति परमं पदम् ॥ ४२ ॥
स्नात्वाम्भसा भस्मना वा शुक्लवस्त्रोपवीतवान् ।
दूर्वागर्भस्थितं पुष्प गुरुः शिरसि धारयेत् ॥ ४३ ॥

रोचनालभनं कुर्याद्धूययेदात्मनस्तनुम् ।
अङ्गुलीयाक्षसूत्रं च कर्णमात्रे च धारयेत् ॥ ४४ ॥
गुरुरेवंविधः श्रीमान्नित्यं तिष्ठेत् समाहितः ।
यस्माद्ज्ञानोपदेशार्थं गुरुरास्ते सदाशिवः ॥ ४५ ॥
धारयेत् पादुके नित्यं मृदुवर्मप्रकल्पिते ।
प्रगृह्य दण्डं छत्रं वा पर्यटेदाश्रमाद्बहिः ॥ ४६ ॥
न भूमौ विन्यसेत् पादमन्तर्धानं विना गुरुः ।
कुशपादकमाक्रम्य तर्पणार्थं प्रकल्पयत् ॥ ४७ ॥
पादस्थानानि पत्राद्यैः कृत्वा देवगृहं विशेत ।
पात्रास्तरितपादश्च नित्यं भुञ्जीत वाग्यतः ॥ ४८ ॥
न पादौ धावयेत् कांस्ये लोहे वा परिकल्पिते ।
शौचयेत्तृणगर्भायां द्वितीयायां तथाचमेत् ॥ ४९ ॥
न रक्तमुल्बणं वस्त्रं धारयेत् कुसुमानि च ।
न बहिर्गन्धमाल्यानि वासांसि मलिनानि च ॥ ५० ॥
केशास्थीनि कपालानि कार्पासास्थितुषाणि च ।
अमेध्याङ्गारभस्मानि नाधितिष्ठेद्रजांसि च ॥ ५१ ॥
न च लोष्टं विमृद्नीयान्न च छिन्द्यान्नखैस्तृणम् ।
न पत्रपुष्पमूल्यानि वंशमङ्गलकाष्ठिकाम् ॥ ५२ ॥
एवमादीनि चान्यानि पाणिभ्यां न च मर्दयेत् ।
न दन्तखादनं कुर्याद्रोमाण्युत्पाटयेन्न च ॥ ५३ ॥
न पद्भ्यामुल्लिखेद्भूमिं लोष्टकाष्ठैः करेण वा ।
न नखांश्च नखैर्विध्यान्न कण्डूयेन्नखैस्तनुम् ॥ ५४ ॥
मुहुर्मुहुः शिरः श्मश्रु न स्पृशेत् करजैर्बुधः ।
न लिक्षाकर्षणं कुर्यादात्मनो वा परस्य वा ॥ ५५ ॥

सौवर्णरौप्यताम्रैश्च शृङ्गदन्तशलाकया ।
देहकण्डूयनं कार्यं वंशकाष्ठीकवीरणैः ॥ ५६ ॥
न विचित्तं प्रकुर्वीत दिशश्चैवावलोकयन् ।
न शोकार्तश्च संतिष्ठेत् धृत्वा पाणौ कपोलकम् ॥ ५७ ॥
न पाणिपादवाक्चक्षुःश्रोत्रशिश्नगुदोदरैः ।
चापलानि न कुर्वीत स सर्वार्थमवाप्नुयात् ॥ ५८ ॥
न कुर्यात् केनचिद्वैरमध्रुवे जीविते सति ।
लोककौतूहलं पापं सन्ध्यां च परिवर्जयेत् ॥ ५९ ॥
न कुद्वारेण वेश्मानि नगरं ग्राममाविशेत् ।
न दिवा प्रावृतशिरा रात्रौ प्रावृत्य पर्यटेत् ॥ ६० ॥
नातिभ्रमणशीलः स्यान्न विशेच्च गृहाद्गृहम् ।
न चाज्ञानमधीयीत शिवज्ञानं समभ्यसेत् ॥ ६१ ॥
शिवज्ञानं परं ब्रह्म तदारभ्य न संत्यजेत् ।
ब्रह्मासाध्य च यो गच्छेद्ब्रह्महा स प्रकीर्तितः ॥ ६२ ॥
कृताञ्जलिः स्थितः शिष्यो लघुवस्त्रमुदङ्मुखः ।
शिवमन्त्रं समुच्चार्य प्राङ्मुखोऽध्यापयेद्गुरुः ॥ ६३ ॥
नागदन्तादिसंभूतं चतुरश्रं सुशोभनम् ।
हेमरत्नचितं वापि गुरोरासनमुत्तमम् ॥ ६४ ॥
न शुश्रूषार्थकामाश्च न च धर्मः प्रदृश्यते ।
न भक्तिर्न यशः क्रौर्यं न तमध्यापयेद्गुरुः ॥ ६५ ॥
देवाग्निगुरुगोष्ठीषु व्याख्याध्ययनसंसदि ।
प्रश्ने वादेऽनृतेऽशौचे दक्षिणं बाहुमुद्धरेत् ॥ ६६ ॥
वशे सततनम्रः स्यात् संहृत्याङ्गानि कूर्मवत् ।
तत्संमुखं च निर्गच्छेन्नमस्कारपुरस्सरः ॥ ६७ ॥

देवाग्निगुरुविप्राणां न व्रजेदन्तरेण तु ।
नार्पयेन्न च गृह्णीयात् किञ्चिद्वस्तु तदन्तरा ॥ ६८ ॥
न मुखेन धमेदग्निं नाधःकुर्यान्न लङ्घयेत् ।
न क्षिपेदशुचिं वह्नौ न च पादौ प्रतापयेत् ॥ ६९ ॥
तृणकाष्ठादिगहने जन्तुभिश्च समाकुले ।
स्थाने न दीपयेदग्निं दीप्तं चापि ततः क्षिपेत् ॥ ७० ॥
अग्निं युगपदानीय धारयेत प्रयत्नतः ।
ज्वलन्तं न प्रदीपं च स्वयं निर्वापयेद्बुधः ॥ ७१ ॥
शिवव्रतधरं दृष्ट्वा समुत्थाय सदा द्रुतम् ।
शिवोऽयमिति संकल्प्य हर्षितः प्रणमेत्ततः ॥ ७२ ॥
भोगान् ददाति विपुलान् लिङ्गे संपूजितः शिवः ।
अग्नौ च विविधां सिद्धिं गुरौ मुक्तिं प्रयच्छति ॥ ७३ ॥
मोक्षार्थं पूजयेत्तस्माद्गुरुमूर्तिस्थमीश्वरम् ।
गुरुभक्त्या लभेद्ज्ञानं ज्ञानान्मुक्तिमवाप्नुयात् ॥ ७४ ॥
सर्वपर्वसु यत्नेन ह्येषु संपूजयेच्छिवम् ।
कुर्यादायतने शोभां गुरुस्थानेषु सर्वतः ॥ ७५ ॥
नरद्वयोच्छ्रिते पीठे सर्वशोभासमन्विते ।
संस्थाप्य मणिजं लिङ्गं स्थाने कुर्याज्जगद्धितम् ॥ ७६ ॥
अन्नपानविशेषैश्च नैवेद्यमुपकल्पयेत् ।
भोजयेद्व्रतिनश्चात्र स्वगुरुं च विशेषतः ॥ ७७ ॥
पूजयेच्च शिवज्ञानं वाचयीत च पर्वसु ।
दर्शयेच्छिवभक्तेभ्यः सत्पूजां परिकल्पिताम् ॥ ७८ ॥
प्रियं ब्रूयात् सदा तेभ्यः प्रदेयं चापि शक्तितः ।
एवं कृते विशेषेण प्रसीदति महेश्वरः ॥ ७९ ॥

छिन्नं भिन्नं मृतं नष्टं वर्धते नास्ति केवलम् ।
इत्याद्यान्न वदेच्छब्दान् साक्षाद्ब्रूयात्तु मङ्गलम् ॥ ८० ॥
अधेनुं धेनुमित्येव ब्रूयाद्भद्रमभद्रकम् ।
कपालं च भगालं स्यात्परमं मङ्गलं वदेत् ॥ ८१ ॥
ऐन्द्रं धनुर्मणिधनुर्दाहकाष्ठादि चन्दनम् ।
स्वर्यातं च मृतं ब्रूयाच्छिवीभूतं च योगिनम् ॥ ८२ ॥
द्विधाभूतं वदेच्छिन्नं भिन्नं च बहुधा स्थितम् ।
नष्टमन्वेषणीयं च रिक्तं पूर्णाभिवर्धितम् ॥ ८३ ॥
नास्तीति शोभनं सर्वमाद्यमङ्गाभिवर्धनम् ।
सिद्धिमद्ब्रूहि गच्छन्तं सुप्तं ब्रूयात् प्रवर्धितम् ॥ ८४ ॥
न म्लेच्छमूर्खपतितैः क्रूरैः संतापवेदिभिः ।
दुर्जनैरवलिप्तैश्च क्षुद्रैः सह न संवदेत् ॥ ८५ ॥
नाधार्मिकनृपाक्रान्ते न दंशमशकावृते ।
नातिशीतजलाकीर्णे देशे रोगप्रदे वसेत् ॥ ८६ ॥
नासनं शयनं पानं नमस्काराभिवादनम् ।
सोपानत्कः प्रकुर्वीत शिवपुस्तकवाचनम् ॥ ८७ ॥
आचार्यं दैवतं तीर्थमुद्धृतोदं मृदं दधि ।
वटमश्वत्थकपिलां दीक्षितोदधिसङ्गमम् ॥ ८८ ॥
यानि चैषां प्रकाराणि मङ्गलानीह कानिचित् ।
शिवायेति नमस्कृत्वा प्रोक्तमेतत्प्रदक्षिणम् ॥ ८९ ॥
उपानच्छत्रवस्त्राणि पवित्रं करकं स्रजम् ।
आसनं शयनं पानं धृतमन्यैर्न धारयेत् ॥ ९० ॥
पालाशमासनं शय्यां पादुके दन्तधावनम् ।
वर्जयेच्चापि निर्यासं रक्तं न तु समुद्भवम् ॥ ९१ ॥

सन्ध्यामुपास्य कुर्वीत नित्यं देहप्रसाधनम् ।
स्पृशेद्वन्देच्च कपिलां प्रदद्याच्च गवां हितम् ॥ ९२ ॥
यः प्रदद्याद्गवां सम्यक् फलानि च विशेषतः ।
क्षेत्रमुद्दामयेच्चापि तस्य पुण्यफलं शृणु ॥ ९३ ॥
यावत्तत्पत्रकुसुमकन्दमूलफलानि च ।
तावद्वर्षसहस्राणि शिवलोके महीयते ॥ ९४ ॥
कृशरोगार्तवृद्धानां त्यक्तानां निर्जने वने ।
क्षुत्पिपासातुराणां च गवां विह्वलचेतसाम् ॥ ९५ ॥
नीत्वा यस्तृणतोयानि वने यत्नात् प्रयच्छति ।
करोति च परित्राणं तस्य पुण्यफलं शृणु ॥ ९६ ॥
कुलैकविंशकोपेतः पत्नीपुत्रादिसंयुतः ।
मित्रभृत्यैरुपेतश्च श्रीमच्छिवपुरं व्रजेत् ॥ ९७ ॥
तत्र भुक्त्वा महाभोगान् विमानैः सार्वकामिकैः ।
स महाप्रलयं यावत्तदन्ते मुक्तिमाप्नुयात् ॥ ९८ ॥
गोब्राह्मणपरित्राणं सकृत्कृत्वा प्रयत्नतः ।
मुच्यते पञ्चभिर्घोरैर्महद्भिः पातकैर्द्रुतम् ॥ ९९ ॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्यमकल्कता ।
अक्रोधो गुरुशुश्रूषा शौचं सन्तोषमार्जवम् ॥ १०० ॥
अहिंसाद्या यमाः पञ्च यतीनां परिकीर्तिताः ।
अक्रोधाद्याश्च नियमाः सिद्धिवृद्धिकराः स्मृताः ॥ १०१ ॥
दशलाक्षणिको धर्मः शिवाचारः प्रकीर्तितः ।
योगीन्द्राणां विशेषेण शिवयोगप्रसिद्धये ॥ १०२ ॥
न विन्दति नरो योगं पुत्रदारादिसङ्गतः ।
निबद्धः स्नेहपाशेन मोहस्तम्भबलीयसा ॥ १०३ ॥

मोहात् कुटुम्बसंसक्तस्तृष्णया शृङ्खलीकृतः ।
बालैर्बद्धस्तु लोकोऽयं मुसलेनाभिहन्यते ॥ १०४ ॥
इमे बालाः कथं त्याज्या जीविष्यन्ति मया विना ।
मोहाद्धि चिन्तयत्येवं परमार्थौ न पश्यति ॥ १०५ ॥
संपर्कादुदरे न्यस्तः शुक्रबिन्दुरचेतनः ।
स पिता केन यत्नेन गर्भस्थः परिपालितः ॥ १०६ ॥
कर्कशाः कठिना भक्षा जीर्यन्ते यत्र भक्षिताः ।
तस्मिन्नेवोदरे शुक्रं किं न जीर्यति भक्ष्यवत् ॥ १०७ ॥
येनैतद्योजितं गर्भे येन चैव विवर्द्धितम् ।
तेनैव निर्गतं भूयः कर्मणा स्वेन पाल्यते ॥ १०८ ॥
न कश्चित् कस्यचित् पुत्रः पिता माता न कस्यचित् ।
यत्स्वयं प्राक्तनं कर्म पिता मातेति तत्स्मृतम् ॥१०९ ॥
येन यत्र कृतं कर्म स तत्रैव प्रजायते ।
पितरौ चास्य दासत्वं कुरुतस्तत्प्रचोदितौ ॥ ११० ॥
न कश्चित् कस्यचिच्छक्तः कर्तुं दुःखं सुखानि च ।
करोति प्राक्तनं कर्म मोहाल्लोकस्य केवलम् ॥ १११ ॥
कर्मदायादसंबन्धादुपकारः परस्परम् ।
दृश्यते नापकारश्च मोहेनात्मनि मन्यते ॥ ११२ ॥
ईश्वराधिष्ठितं कर्म फलतीह शुभाशुभम् ।
ग्रामस्वामिप्रसादेन सुकृतं कर्षणं यथा ॥ ११३ ॥
द्वयं देवत्वमोक्षाय ममेति न ममेति च ।
ममेति बध्यते जन्तुर्न ममेति विमुच्यते ॥ ११४ ॥
द्व्यक्षरं च भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम् ।
ममेति द्व्यक्षरं मृत्युस्त्र्यक्षरं न ममेति च ॥ ११५ ॥

तस्मादात्मन्यहङ्कारमुत्सृज्य प्रविचारतः ।
विधूयाशेषसङ्गांश्च मोक्षोपायं विचिन्तयेत् ॥ ११६ ॥
ज्ञानाद्योगपरिक्लेशं कुप्रावरणभोजनम् ।
कुचर्यां कुनिवासं च मोक्षार्थी न विचिन्तयेत् ॥ ११७ ॥
न दुःखेन विना सौख्यं दृश्यते सर्वदेहिनाम् ।
दुःखं तन्मात्रकं ज्ञेयं सुखमानन्त्यमुत्तमम् ॥ ११८ ॥
सेवायां पाशुपाल्ये च वाणिज्ये कृषिकर्मणि ।
तुल्ये सति परिक्लेशे वरं क्लेशो विमुक्तये ॥ ११९ ॥
स्वर्गापवर्गयोरेकं यः शीघ्रं न प्रसाधयेत् ।
याति तेनैव देहेन स मृतस्तप्यते चिरम् ॥ १२० ॥
यदवश्यं पराधीनैस्त्यजनीयं शरीरकम् ।
कस्मात्तेन विमूढात्मा न साधयति शाश्वतम् ॥ १२१ ॥
यौवनस्था गृहस्थाश्च प्रासादस्थाश्च ये नृपाः ।
सर्व एव विशीर्यन्ते शुष्कस्निग्धान्नभोजनाः ॥ १२२ ॥
अनेकदोषदुष्टस्य देहस्यैको महान् गुणः ।
यां यामवस्थामाप्नोति तां तामेवानुवर्तते ॥ १२३ ॥
मन्दं परिहरन् कर्म स्वदेहमनुपालयेत् ।
वर्षासु जीर्णकटवत्तिष्ठन्नप्यवसीदति ॥ १२४ ॥
न तेऽत्र देहिनः सन्ति ये तिष्ठन्ति सुनिश्चलाः ।
सर्वे कुर्वन्ति कर्माणि विक्रुशाः पूर्वकर्मभिः ॥ १२५ ॥
तुल्ये सत्यपि कर्तव्ये वरं कर्म कृतं परम् ।
यः कृत्वा न पुनः कुर्यान्नानाकर्म शुभाशुभम् ॥ १२६ ॥
तस्मादन्तर्बहिश्चिन्तामनेकाकारसंस्थिताम् ।
संत्यज्यात्महितार्थाय स्वाध्यायध्यानमभ्यसेत् ॥ १२७ ॥

विविक्ते विजने रम्ये पुष्पाश्रमविभूषिते ।
स्थानं कृत्वा शिवस्थाने ध्यायेच्छान्तं परं शिवम् ॥ १२८ ॥
येऽतिरम्याण्यरण्यानि सुजलानि शिवानि तु ।
विहायाभिरता ग्रामे प्रायस्ते दैवमोहिताः ॥ १२९ ॥
विवेकिनः प्रशान्तस्य यत्सुखं ध्यायतः शिवम् ।
न तत्सुखं महेन्द्रस्य ब्रह्मणः केशवस्य वा ॥ १३० ॥
इति नामामृतं दिव्यं महाकालादवाप्तवान् ।
विस्तरेणानुपूर्व्याच्च ऋष्यात्रेयः सुनिश्चितम् ॥ १३१ ॥
प्रज्ञामथा विनिर्मथ्य शिवज्ञानमहोदधिम् ।
ऋष्यात्रेयः समुद्धृत्य प्राहेदमणुमात्रकम् ॥ १३२ ॥
शिवधर्मे महाशास्त्रे शिवधर्मस्य चोत्तरे ।
यदनुक्तं भवेत् किञ्चित्तदत्र परिकीर्तितम् ॥ १३३ ॥
त्रिदैवत्यमिदं शास्त्रं मुनीन्द्रात्रेयभाषितम् ।
तिर्यङ्मनुजदेवानां सर्वेषां च विमुक्तिदम् ॥ १३४ ॥
नन्दिस्कन्दमहाकालास्त्रयो देवाः प्रकीर्तिताः ।
चन्द्रात्रेयस्तथाऽत्रिश्च ऋष्यात्रेयो मुनित्रयम् ॥ १३५ ॥
एतैर्महात्मभिः प्रोक्ताः शिवधर्माः समासतः ।
सर्वलोकोपकारार्थं नमस्तेभ्यः सदा नमः ॥ १३६ ॥
तेषां शिष्यप्रशिष्यैश्च शिवधर्मप्रवक्तृभिः ।
व्याप्तं ज्ञानसरः शार्वं विकचैरिव पङ्कजैः ॥ १३७ ॥
ये श्रावयन्ति सततं शिवधर्मं शिवार्थिनाम् ।
ते रुद्रास्ते मुनीन्द्राश्च ते नमस्याः स्वभक्तितः ॥ १३८ ॥
ये समुत्थाय शृण्वन्ति शिवधर्मं दिने दिने ।
ते रुद्रा रुद्रलोकेशा न ते प्रकृतिमानुषाः ॥ १३९ ॥

शिवोपनिषदं ह्येतदध्यायैः सप्तभिः स्मृतम् ।
ऋष्यात्रेयसगोत्रेण मुनिना हितकाम्यया ॥ १४० ॥

इति शिवोपनिषदि शिवाचाराध्यायः सप्तमः
इति शिवोपनिषत् समाप्ता

---

# सदानन्दोपनिषत्

## तच्छंयोरावृणीमहे— इति शान्तिः

अथैनं सदानन्दः संवर्तो जैगीषव्यश्च नीललोहितं रुद्रमुवाच । भगवन् किमपवर्गं साधयतीति । स एतेभ्यो भगवान् नीललोहितः प्रोवाच । अन्तर्बहिर्धारितं परंब्रह्माभिधेयं शाम्भवं लिङ्गम्,

आधारे दहरेऽव्यक्ते स्वर्णस्फाटिकवैद्रुमम् ।
निरन्तरानुसन्धानात् तदन्तर्धारणे विदुः ॥
चतुर्दलं द्वादशारं द्व्यश्रमव्यक्तकं शिवम् ।
दहरेऽङ्गुष्ठमात्रं तमुमाकान्तमहर्निशम् ।
अनिराकारमात्मानं धृत्वा यान्ति परं पदम् ॥
परात् परतरो ब्रह्मा तत्परात् परतो हरिः ।
तत्परात् परतोऽधीशस्तस्मात् स्यादुत्तरः शिवः ॥
जातवेदसमव्यक्तं व्यक्ताव्यक्तं परं सदा ।
तमात्मस्थं येऽनुपश्यन्ति धीराः
तेषां शान्तिः शाश्वती नेतरेषाम् ॥

अन्तर्धारणशक्तेन ह्यशक्तेन द्विजोत्तमाः ।
संस्कृत्य गुरुणा दत्तं शैवं लिङ्गमुरःस्थले ।
धार्यं विप्रेण मुक्त्यर्थे शिवतत्त्वविदो विदुः ॥
येनाचिरात्सर्वपापं व्यपोह्य परात्परं पुरुषमुपैति विद्वान् ।

अस्य मात्रा अकारो ब्रह्मरूप उकारो विष्णुरूपो मकारः कालकालः अर्धमात्रा परमशिवः ओङ्कारो लिङ्गम् ।

योऽसौ सर्वेषु वेदेषु पठ्यते ह्यज ईश्वरः ।
तस्मात्तद्धारणादेतल्लिङ्गदेहमलौकिकम् ।
मृतेऽपि तन्न दह्येत बिले चैतद्विनिक्षिपेत् ॥
न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः ॥
यो वा स्वहस्तार्चितलिङ्गमेकं परात्परं धारयते नरो वा ।
तस्यैव लभ्यः परमेश्वरोऽसौ निरञ्जनं साम्यमुपैति दिव्यम् ॥
शिवलिङ्गधरं विप्रं विपन्नं तु न दाहयेत् ।
यदि वा दाहयेत्तस्य ब्रह्महत्या तदा भवेत् ॥

यदिदं लिङ्गं सकळं सकळनिष्कळं निष्कलं च स्थूलं सूक्ष्मं च तत्परं स्थूले स्थूलं सूक्ष्मे सूक्ष्मं कारणे तत्परं च ।

आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनादेव पाशं दहति मानवः ।
अन्तर्बहिश्च तल्लिङ्गं विधत्ते यस्तु शाश्वतम् ॥

अविद्याऽऽवरणं भित्त्वा ब्रह्मणः सायुज्यं सलोकतामाप्नोति । तदिदं लिङ्गं ब्रह्म । तदिदं ॐ सत्यम् । यो विद्वान् ब्रह्मचारी गृही वानप्रस्थो यतिर्वा सदानन्दोपनिषदं पठति सोऽग्निपूतो भवति । स सत्यपूतो भवति ।

स्वर्णस्तेयान् पूतो भवति । ब्रह्महत्यायाः पूतो भवति । स सकलभोगभुक् देहं त्यक्त्वा शिवसायुज्यमेति । इत्युपनिषत् ॥

इति सदानन्दोपनिषत् समाप्ता

---

# सिद्धान्तशिखोपनिषत्

ॐ अथ भारद्वाजः कुमारं पप्रच्छ । कोऽयं भवादृशानां परमशिवभक्तानां सिद्धान्तः । कुतः सर्वे न विदन्तीति । तद्गुह्यमुवाच स्कन्दः । भारद्वाज शृणु नाम कचिद्वदन्ति साम्बं सर्वदेवप्रकृष्टं शिवं वरेण्यं पक्कचित्ताः शिवस्य प्रसादतो ज्ञानमात्राद्विदन्ति ।

विश्वाधिकं शङ्करं ये प्रमूढा हीनं विष्णोर्ब्रह्मणो वा वदन्ति ।
न संसारात् प्रमुच्यन्ते कदाचिच्छतैः कल्पैः कोटिभिर्वाऽथ दोषैः ॥
यथा राज्ञे कुर्वन्नमात्यबुद्धिं
देही विन्देद्वाधमस्माद्विनष्टम् ।
सत्यादिरूपं शिवमेवं विदानो
विष्णवादिबुद्ध्या हीयतेऽज्ञानसङ्गात् ॥
महानग्निः काष्ठमार्द्रं च शुष्कं कृत्वा दहेदीश्वरोत्कृष्टबुद्धिः ।
दहेत् पापान्याशु विज्ञानदात्री न संसारे मज्जते वा कदाचित् ॥
महादेवे त्रिपुण्ड्रस्य धारणे भस्मकुण्ठने ।
पुण्यलेशविहीनस्य श्रद्धा नैव प्रजायते ॥

पापपूर्णस्य मर्त्यस्य त्रिपुण्ड्रोद्धूलने शिवे ।
रुद्राक्षधारणे द्वेषः स्वत एव प्रजायते ॥
जन्मान्यनन्तानि विस्तीर्य भूयः शिवप्रसादाद्भुतपुण्यलेशः ।
शिवे भक्तिं प्राप्य तद्भक्तसङ्गाच्च संसृतौ घोरदुःखात् प्रमज्जेत् ॥
योऽज्ञानाद्वा शिवशब्दं गृणानः पापैर्घोरैर्मुच्यते वा कदाचित् ।
को वा वेत्ता महिमानं शिवस्य परात् परस्य ज्ञानगुह्यस्य गुह्यम् ॥
सद्योजाताद्ब्राह्मणाः संबभूवुर्वामदेवात् क्षत्रिया वै विशश्च ।
अघोराच्छूद्रास्तत्पुरुषाच्छिवस्य पञ्चात्मकस्य गणा ईशानोऽस्य ॥
आत्माश्रमित्वाद्गणवंशजाता लिङ्गाङ्गसङ्गस्तत्र जन्मान्तदीक्षा ।
यथा गङ्गा शिवसङ्गात्तथैव न सूतकं वा नाप्यशुचित्वमेषाम् ॥
गच्छंस्तिष्ठन्निमिषन्नुन्मिषन् वा स्वपश्चाप्यालिङ्गधारी शुचिः स्यात् ।
भुञ्जन् मूत्राद्युत्सृजन् वा कदाचिन्न तत्रोच्छिष्टं भजते शुद्धदेही ॥
शीर्षे कण्ठे वक्षसि कक्षदेशे नाभौ हस्ते सर्वदा प्राणलिङ्गम् ।
धार्यं यथासम्प्रदायं पुरस्ताद्गुरोर्विदित्वा हृदये मुख्यमुक्तम् ॥
स्नानं कृत्वा शिवतीर्थे च देहं सर्वं भस्मोद्धूलनात् पावयित्वा ।
त्रिपुण्ड्रं धार्यं भर्त्सनात् पातकौघगिरेर्भस्म प्राहुरस्यार्थमेतत् ॥
स्थानं त्रिपुण्ड्रस्य शिरोललाटवक्षःस्कन्धमणिबन्धेषु कूर्पे ।
नाभिप्रदेशे पार्श्वयोर्गण्डदेशे गुदप्रदेशे गुल्फयोश्च क्रमात् स्यात् ॥
वह्नित्रयं तच्च जगत्त्रयं यद्गुणत्रयं तच्च शक्तित्रयं स्यात् ।
धृतं त्रिपुण्ड्रं यदि कोपि दैवात् तद्दृष्ट्वान्यः पातकौघाद्विमुक्तः ॥
निमीलिताक्षस्य पुरत्रयाणि
दग्धाः शंभोर्नयनेभ्योऽथ ये तु ।
जाता रुद्राक्षा जलबिन्दवोऽस्य
सद्योजातादीन् पञ्च वक्त्राणि विन्द्यात् ॥

द्वात्रिंशद्रुद्राक्षाः कण्ठमालाप्रयुक्ताः
शिखायामेको द्विचत्वारिंशदुक्ताः ।
शिरोधार्याः कर्णयोर्द्वादशाऽथ
शतत्रयं तूपवीतं च बाह्वोः ॥

द्वात्रिंशदुक्ता मणिबन्धयोश्च चतुर्विंशाः शतमष्टौ जपार्थम् ।
पुरा लीनाः सृष्टिकालाच्छिवस्य पञ्चाक्षरे मन्त्रवर्ये समस्ताः ।
भूतानि पञ्च वेदा आगमाश्च शिवाल्लब्धोऽभून्मन्त्रवर्यो विधात्रा ॥

देहिनो देहमायान्ति न यावन्मन्त्रनायकः ।
तावत्पापानि गर्जन्ति सत्यं सत्यं पुनः पुनः ॥

योऽयं नकारः सोऽयमकारः स सद्योजातो भूर्ऋग्वेदः संपुटमुच्यते । योऽयं मकारः सोऽयमुकारः स वामदेव आपो यजुर्वेदो वक्त्रमुच्यते । योऽयं शिकारः सोऽयं मकारः स घोरः स वायुः सामवेदो गुण उच्यते । योऽयं वकारः सोऽयं नादः स तत्पुरुषः स तेजोऽथर्ववेदोऽघोरमुच्यते । योऽयं यकारः तदिदं समस्तमोमिति निर्विशेषप्रणवः स सर्वोत्तम ईशान आकाश आगमो लिङ्गमुच्यते । इत्येतत्तत्त्वं यो विजानाति स नित्यं शुद्ध-बुद्धपरमानन्दपरमशिवस्वरूपः ।

पुरा देवाः पशुपाशाद्विमुक्ताः शिवं पूज्यैव हरिपद्मादयोऽपि ।
ऐन्द्रनीलं पूजितं विष्णुनासील्लिङ्गं वैडूर्यं विधिना पद्मरागम् ॥
शक्रेण हैमं यक्षराजेन विश्वेदेवै रौप्यं वसुभिः कांस्यकं च ।
यद्दारुकूटं वायुना पार्थिवं तदश्विभ्यामासीत् स्फाटिकं पाशिनाथ ॥
आदित्यैस्ताम्रं मौक्तिकं देवतैस्तैरनन्ताद्यैः फणिभिश्च प्रवालम् ।
दैत्यैर्जालं राक्षसैश्च त्रिलोहं गणैः शैलं सैकतं मातृकाभिः ॥

दारूद्भवं निर्ऋतिना यमेन सुपूज्यमासीन्मारकतं च रुद्रैः ।
सुभस्मरूपं सूक्ष्मरूपं च लक्ष्म्या शैलान्येव मुनयो भेजिरेऽथ ॥
सरस्वती रत्नरूपं च दुर्गा हैमं लिङ्गं पूजयामास भक्त्या ।
जलैरुष्णैः शीतलैर्वा कदाचित्‌ज्ञानाद्वा पतितैः पत्रपुष्पैः ।
तुष्टो यच्छेद्वाञ्छितार्थं महेशः किं दुर्लभं शिवभक्तस्य लोके ॥
अत्यल्पमपि नैवेद्यं फलं वा जलमेव वा ।
तदेव प्राशयित्वाथ ब्रह्मभूयाय कल्पते ॥
किमन्यैर्धार्यैर्भस्मनि शुद्धपुण्ड्रे स्थिते किमन्यैर्मन्त्रवर्येऽथ मन्त्रैः ।
शिवे स्थिते सर्वदेवाधिराजे भारद्वाज निर्जरैः किं तथाऽन्यैः ॥
सिद्धान्तोऽयं निश्चितोऽस्माभिरेष भारद्वाज गुह्यमेतन्न वाच्यम् ।
सदा प्रशान्ताय न नास्तिकाय परीक्ष्याथ ब्रूहि सर्वार्थवेत्रे ॥

इत्याह भगवान् स्कन्दः । तामेनां सिद्धान्तशिखां प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायमधीयानोऽह्निकृतं पापं नाशयति । सार्वकालं प्रयुञ्जानः पापैरपापो भवतीति विज्ञायते । इति वेदवचनं भवति । इति वेदवचनं भवति । ॐ सत्यमित्युपनिषत् ॥

इति सिद्धान्तशिखोपनिषत् समाप्ता

---

# सिद्धान्तसारोपनिषत्

## भद्रं कर्णेभिः—इति शान्तिः

### प्रथमावरणम

अथ भारद्वाजः कुमारं पप्रच्छ । भगवन् मे ब्रूहि परमतत्त्वकैलासरहस्यम् । तद्गुह्यमुवाच स्कन्दः । साधु पृष्टं सर्वं निवेदयामि यथाज्ञातं

मया । हे भारद्वाज श्रृणु वाक्यमेतत् । परमकैवल्यः स एव कैलासः । ईश्वरकृपया परमपरिपक्वचित्ता जानन्ति । नान्ये जानन्ति गुह्यमिदमनिर्वाच्यममितबोधसागरममितानन्दसमुद्रमखण्डानन्दरूपन्निरवयवं निराधारं निर्विकारं निरञ्जनमनन्तं ब्रह्मानन्दसमष्टिकन्दं तैरानन्दपुरुषैश्चिद्रूपैरधिष्ठितं ब्रह्मानन्दमयानन्तनिरतिशयानन्दसागराकारमात्मसमानानन्दविभूतिपुरुषानन्तानन्दमण्डितं नित्यमङ्गलमनन्तविभवम् । ब्रह्मानन्दमयानन्तप्राकारप्रासादतोरणविमानोपवनावलीभिर्ज्वलच्छिखरैरुपलक्षितो निरुपमनित्यनिरवद्यनिरतिशयनिरवधिकब्रह्मानन्दाचलो विराजते । तदुपरि ज्वलति निरतिशयानन्ददिव्यतेजोराशिः । तदभ्यन्तरसंस्थाने शुद्धबोधानन्दलक्षणं विभाति । तदन्तराले चिन्मयवेदिकाऽऽनन्दवेदिकाऽऽनन्दवनविभूषिता । तत्र वेदकल्पतरुवनं यज्ञकल्पतरुवनं योगकल्पतरुवनम् । तदभ्यन्तरे अमिततेजोराशिस्वात्मज्योतिर्ज्वलति । तत्र परममङ्गलासनं विराजते । तस्योपरि समासीनानन्तपरिपालकनन्द्यादिगणपाः सन्ति । अनन्तोत्कटजलदमण्डलं निरतिशयदिव्यतेजोमण्डलबृन्दाकारपरमानन्दशुद्धबोधस्वरूपमनन्तानन्दसौदामिनीपरमविलासं निरतिशयानन्तपरमानन्दपारावारजालम् ॥

इति प्रथमावरणम्

———

## द्वितीयावरणम्

तन्मध्ये कल्याणाचलो विभाति । अनन्तानन्दपर्वतशिखरैरभिव्याप्तमनन्तबोधानन्दव्यूहैरभितस्ततं ब्रह्मविद्याप्रवाहैरानन्दरसनिर्भरैः क्रीडानन्दपर्वतैरनन्तैरभिव्याप्तं ब्रह्मविद्यामयैरनन्तप्राकारैरानन्दामृतमयैर्दिव्यगन्धैः स्व-

भावचिन्मयैरनन्तब्रह्मवनैरतिशोभितमपरब्रह्मविद्यासाम्राज्याधिदैवतमनन्तमोक्ष - साम्राज्याद्वितीयमेकं परमकल्याणमनन्तविभवममितबोधानन्दाचलोपरिस्थितं शुद्धबोधमयानन्तप्रासादैः संवृतमानन्दमयानन्तविमानावलीभिर्विराजितमत्याश्चर्यानन्तविभूतिसममनन्तशुद्धानन्दपरिघैः समावृतमनन्तदिव्यतेजोज्वालाजालैरभितोऽनिशं प्रज्वलन्तमत्याश्चर्यानन्तविभूतिसमष्ट्याकारमानन्दरसप्रवाहैरलङ्कृतममितविज्ञानतरङ्गिण्याः प्रवाहैरतिमङ्गलं ब्रह्मतेजोविशेषाकारैरनन्तब्रह्मवनैरभितस्ततं ब्रह्मविद्याकल्पतरुवनैः सुशोभितं बोधकल्पतरुवनैः परिवेष्टितमनन्तनित्यमुक्तैरभिव्याप्तं तदभ्यन्तरेऽनन्तदिव्यमङ्गलासनं विराजते। तदुपरि नित्यज्ञानानन्दरूपा अद्वैतशिवपूजकास्तिष्ठन्ति ॥

इति द्वितीयावरणम्

---

## तृतीयावरणम्

तन्मध्ये चिदानन्दाचलो विभाति। तदुपरि ब्रह्मतेजोमयानन्तशिखराः सन्ति। तत्र ब्रह्मविद्यामयानन्तपरिघाः सन्ति। वाचामगोचरानन्तचिन्मयानन्दवनैः परिवेष्टितं ब्रह्मकल्पतरुवनैः समावृतं अमृतकल्पतरुवनैरुपशोभितं ब्रह्मतेजोमयानन्दरसप्रवाहैरतिशोभितं ब्रह्मविद्यातरङ्गिण्याः प्रवाहैः सुमङ्गलं निरतिशयानन्तदिव्यानन्दतेजोज्वालाराशिमण्डलं ज्वलति। परमानन्दमयानन्तविमानावलिभिः संकुलमनन्तचिन्मयप्रासादजालसंकुलमनन्तब्रह्मानन्दानुभवपताकाध्वजतोरणैरलङ्कृतमनन्तनित्यमुक्तैरभिव्याप्तं तदभ्यन्तरसंस्थानेऽनन्तचिन्मयासनं विराजते। तस्योपरि नित्यशुद्धबुद्धमुक्तशिवैक्यभक्तास्तिष्ठन्ति ॥

इति तृतीयावरणम्

---

## चतुर्थावरणम्

तन्मध्येऽमितबोधानन्दाचलो विभाति । तदुपरि परमकैवल्यानन्दरूपानन्तशिखराः सन्ति । तत्र परमानन्दामृतमयैर्दिव्यानन्तप्राकारो ज्वलति । दिव्यगन्धैः स्वभावचिन्मयैरनन्तब्रह्मवनैरतिशोभितमानन्दकल्पतरुवनैरावृतं मुक्तिकल्पतरुवनैः सुशोभितं पारावारानन्दरसनिर्भरैरतिशोभितं स्वात्मानन्दानुभवतरङ्गिण्याः प्रवाहैरतिमङ्गलं परमकल्याणमनन्तविभवममिततेजोराश्याकारमनन्तब्रह्मतेजोराशिसमष्ट्याकारमनन्तदिव्यतेजोज्वालाजालैरभितोऽनिशं प्रज्वलितमनन्तदिव्यापारब्रह्मविद्यासाम्राज्याधिदैवतममोघनिजमन्दकटाक्षचिदानन्दमयानेकप्रासादविशेषैः परिवेष्टितं ब्रह्मविद्यामयैरनन्तप्रकारानन्दामृतदिव्यमङ्गलविमानैः सुशोभितं चिद्रूपविलासनिभचिन्मयासनं विराजते । अधितिष्ठन्ति तेजोराशिं तदन्तर्गतदिव्यतेजोविशेषमखिलपवित्राणां परमं पवित्रं चिद्रूपपरानन्तनित्यमुक्तैरभिव्याप्तं सच्चिदानन्दरूपाः शिवात्मैक्योपासकाः ॥

इति चतुर्थावरणम्

---

## पञ्चमावरणम्

अनन्तानन्दपर्वतैः परमकौतुकमाभाति । तदुपरि ज्वलति निरतिशयानन्ददिव्यतेजोराशिमण्डलम् । चिदानन्दमयानन्तप्राकारविशेषैः परिवेष्टितम् । तच्च परमकल्याणविलासविशेषम् । तदखण्डदिव्यतेजोमण्डलाकारं परमानन्दसौदामिनीचयोज्ज्वलम् । तच्चामितपरमतेजःपरमविहारसंस्थानविशेषं परमतेजोमण्डलविशेषं परमानन्दामृतब्रह्मविद्यामयानन्तसमुद्रं चिदानन्दतरङ्गा-

कारम् । तन्मध्ये अनन्तदिव्यतेजःपर्वतसमष्ट्याकारमपरिच्छिन्नानन्तशुद्ध-बोधानन्दमण्डलं वाचामगोचरानन्दब्रह्मतेजोराश्याकारमनन्तशिखरोज्ज्वलम-खण्डतेजोमण्डलविशेषं नित्यानन्दमूर्तिमद्भिः परममङ्गलैः परिधीकृतम-परिच्छिन्नानन्दसागराकारं ब्रह्मानन्दरसक्रीडावनैः सुशोभितमनन्तसहस्रान-न्दप्राकारैः समुज्ज्वलितं मुक्तिकल्पतरुवनैः परिवेष्टितं विभूतिकल्प-तरुवनैरभितस्ततमनन्तानन्दविमानजालसंकुलमनन्तबोधसौधविशेषैरभितोऽनिशं प्रज्वलितं क्रीडानन्तमण्डपविशेषैर्विशेषितं बोधानन्दमयानन्तपरमछत्रध्वज-चामरवितानतोरणैरलङ्कृतं शुद्धानन्दविशेषसमष्टिमण्डलविशेषानन्तप्रासादोन्न-तोज्ज्वलमखण्डचिद्घनानन्दविशेषं परमानन्दव्यूहैर्नित्यमुक्तैरभितस्ततमनन्त-दिव्यतेजःपर्वतसमष्ट्याकारमपरिच्छिन्नानन्तशुद्धबोधानन्दमण्डलं परमानन्द-लहरीवनशोभितमसङ्ख्याकानन्दसमुद्रमनन्तज्वालाजालैरलङ्कृतं चिदानन्द-तरङ्गिण्याः प्रवाहैरतिमङ्गलं स्वात्मानन्दानुभवामृतकल्लोलरसप्रवाहैरलङ्कृतं स्व-प्रकाशानन्तानन्दतेजोज्वालाजालैरावृतम् । तदभ्यन्तरे चिन्मयानन्दासन-मुज्ज्वलम् । तदुपरि विभात्यखण्डानन्दतेजोमण्डलम् । तदभ्यन्तरसमासीनाः आनन्दसागरनित्यतृप्ताः शिवाद्वैतोपासकाः स्वात्मलिङ्गार्चकास्तिष्ठन्ति । निरतिशयदिव्यतेजोमण्डलाकारा आनन्दघनसागराः परमकैवल्यस्वरूपानन्त-गणाः परिसेवन्ते ॥

इति पञ्चमावरणम्

---

## षष्ठावरणम

परमचिद्विलाससमष्ट्याकारं निर्मलं निरवद्यं निराश्रयमतिनिर्मला-नन्तकोटिरविप्रकाशैकोज्ज्वलमनन्तोपनिषदर्थस्वरूपमखिलप्रमाणातीतं मनो-

वाचामगोचरं नित्यमुक्तस्वरूपं कैवल्यानन्दरूपं परमानन्दलक्षणापरिच्छिन्नानन्तज्योतिः शाश्वतं शश्वद्विभाति । तदभ्यन्तरसंस्थानेऽमितानन्दचिद्रूपाचलमखण्डपरमानन्दविशेषं बोधानन्दमहोज्ज्वलमनन्तचित्सागरकल्लोलजालशिखराकारं नित्यमङ्गलमन्दिरमनन्तानन्दबोधसौधविशेषैरभितोऽनिशं प्रज्वलितं चिदानन्दानन्तचित्सागरैः परिधीकृतं ब्रह्मसाक्षात्कारानुभवविशेषबोधसारतरानन्तप्राकारैः समुज्ज्वलितमनन्तसहस्रकैवल्यानन्दवनोपवनैः सुशोभितमनन्तानन्दविभूतिदिव्यतेजःपर्वतसमष्ट्याकारं स्वात्मानन्दानुभवविज्ञानघनरुद्राक्षकल्पतरुवनैरतिमङ्गलमनन्तानन्दचित्सागरमथनोद्भूतरसप्रवाहैरलङ्कृतमद्वितीयं स्वयंप्रकाशमनिशं ब्रह्मानन्दामृतरसाम्भोनिधितरङ्गिण्याः प्रवाहैरतिमङ्गलं निरुपमनिरवद्यनित्यशुद्धबुद्धनिरतिशयतेजोराशिविशेषानन्तानन्दविमानजालावलिभिः समाकुलं क्रीडानन्तमण्टपविशेषैर्विशेषितं बोधानन्दमयानन्तदिव्यतेजोराशिविशेषचैतन्यप्रासादैः परिवेष्टितमनन्तपरमानन्दामृतरसाब्धिकल्लोलतरङ्गावलिभिर्दिव्यतेजोमयछत्रचामरध्वजपताकावितानतोरणादिभिरलङ्कृतं परमानन्दव्यूहैर्नित्यमुक्तैरभितस्ततं तच्चानन्तब्रह्मतेजोमयबिल्वकल्पतरुवनैराकुलं वेदान्तसारभूतसिद्धान्तानन्तस्कन्धैर्विराजितं महावाक्यार्थस्वरूपानन्तशाखासमन्वितं सच्चिदानन्दस्वरूपानन्तानन्दपत्रैस्सुमङ्गलमद्वितीयात्मचैतन्यवृन्तैः सुसंलग्नं विज्ञानघनमानन्दामृतकल्लोलानन्तपुष्पैरलङ्कृतमखण्डानन्दाह्लादानन्तप्रवाहदिव्यसुगन्धैः समाकुलं निरतिशयानन्दामृतसारसागरानन्तमकरन्दाकारं निश्शङ्कानन्दमोक्षसाम्राज्यचिन्तामणिफलानन्तैर्विराजितं वाचामगोचरमनोन्मनानन्दाम्बुधिदिव्यतेजोमयज्वालाजालदीपितात्यन्तोन्नतानन्तशिखराकारं शिवालयं शिवानन्दमयदिव्यनानालीलाविग्रहविलासविलसितानन्दाविर्भावचरित्रचित्रीकृतचित्रैरलङ्कृतं मूर्तिमद्भिः शिवधर्मानन्तोन्नतगोपुरद्वाराकारैरसंख्यैरावृतं शिवधर्मानन्दमूर्तिवृक्षभावलिभिः

सुमङ्गलं शिवविज्ञानानन्दसागरतीर्थाकारं पुरतःस्थितानन्तदिव्यतीर्थानां निजमन्दिरं विज्ञानानन्दघनस्वरूपानन्तसोपानमण्डलमालयमध्यगतं स्वात्मज्योतिर्मयचिद्रूपवेदिकास्थानविशेषं तदुपरि चैतन्यशक्त्यालङ्कृतस्वात्मचैतन्यकैलासेश्वरलिङ्गाकारं सुपूजितं तत्सन्निधौ शिवविज्ञानानन्दघनशैवधर्ममूर्तिमासाद्य वृषभाकृतिविराजितं शिवानन्दनन्दिसेनबाणरावणाद्यनन्तनानामय।नन्तानन्दमूर्तिमासाद्य गणेशकुमारनन्दिभृङ्गिचण्डिरिटिकीर्तिमुखवीरभद्रभैरवमहाकालशोभनन्दिसुनन्दनन्दिसेनबाणरावणाद्यनन्तनानागणरूपमासाद्यानन्तगणसेवितशिवालयस्य समन्तात् स्वस्वस्थाने सुशोभितं बोधानन्दमयैरनन्तनित्यमुक्तैः परिसेवितं शुद्धबोधपरमानन्दाकारवनं सन्ततामृतपुष्पवृष्टिभिः परिवेष्टितं परमानन्दप्रवाहैरभिव्याप्तं मूर्तिमद्भिः परममङ्गलैः परमकौतुकापरिच्छिन्नानन्दसागराकारं क्रीडानन्दपर्वतैरभिशोभितं वाचामगोचरानन्दब्रह्मतेजोराशिमण्डलमखण्डतेजोमण्डलविशेषं दिव्यनानामङ्गलवाद्यैरलङ्कृतं प्रणवात्मकध्वन्याकारं विज्ञानघनस्वरूपमनन्तचिदादित्यसमष्ट्याकारं शिवाद्वैतोपासका भजन्ते ॥

इति षष्ठावरणम्

इति सिद्धान्तसारोपनिषत् समाप्ता

---

# हेरम्बोपनिषत्

## सह नाववतु इति—शान्तिः

अथातो हेरम्बोपनिषदं व्याख्यास्यामः । गौरी सा सर्वमङ्गला सर्वज्ञं परिसमेत्योवाच ।

अधीहि भगवन्नात्मविद्यां प्रशस्तां यया जन्तुर्मुच्यते मायया च ।
यतो दुःखाद्विमुक्तो याति लोकं परं शुभ्रं केवलं सात्त्विकं च ॥
तां वै स होवाच महानुकम्पासिन्धुर्बन्धुर्भुवनस्य गोप्ता ।
श्रद्धस्वैतद्गौरि सर्वात्मना त्वं मा ते भूयः संशयोऽस्मिन् कदाचित् ॥
हेरम्बतत्त्वे परमात्मसारे नो वै योगान्नैव तपोबलेन ।
नैवायुधप्रभावतो महेशि दग्धं पुरा त्रिपुरं दैवयोगात् ॥ ३ ॥
तस्यापि हेरम्बगुरोः प्रसादाद्यथा विरिञ्चिर्गरुडो मुकुन्दः ।
देवस्य यस्यैव बलेन भूयः स्वं स्वं हितं प्राप्य सुखेन सर्वम् ॥
मोदन्ते स्वे स्वे पदे पुण्यलब्धे सर्वैर्देवैः पूजनीयो गणेशः ।
प्रभुः प्रभूणामपि विघ्नराजः सिन्दूरवर्णः पुरुषः पुराणः ॥ ५ ॥
लक्ष्मीसहायोऽद्वयकुञ्जराकृतिश्चतुर्भुजश्चन्द्रकलाकलापः ।
मायाशरीरो मधुरस्वभावस्तस्य ध्यानात् पूजनात्तत्स्वभावाः ॥
संसारपारं मुनयोऽपि यान्ति स वा ब्रह्मा स प्रजेशो हरिः सः ।
इन्द्रः स चन्द्रः परमः परात्मा स एव सर्वो भुवनस्य साक्षी ॥
स सर्वलोकस्य शुभाशुभस्य तं वै ज्ञात्वा मृत्युमत्येति जन्तुः ।
नान्यः पन्था दुःखविमुक्तिहेतुः सर्वेषु भूतेषु गणेशमेकम् ॥८॥

विज्ञाय तं मृत्युमुखात् प्रमुच्यते स एवमास्थाय शरीरमेकम् ।
मायामयं मोहयतीव सर्वं स प्रत्यहं कुरुते कर्मकाले ॥ ९ ॥
स एव कर्माणि करोति देवो ह्येको गणेशो बहुधा निविष्टः ।
स पूजितः सन् सुमुखोऽभिभूत्वा दन्तीमुखोऽभीष्टमनन्तशक्तिः ॥
स वै बलं बलिनामग्रगण्यः पुण्यः शरण्यः सकलस्य जन्तोः ।
तमेकदन्तं गजवक्त्रमीशं विज्ञाय दुःखान्तमुपैति सद्यः ॥ ११ ॥
लम्बोदरोऽहं पुरुषोत्तमोऽहं विघ्नान्तकोऽहं विजयात्मकोऽहम् ।
नागाननोऽहं नमतां सुसिद्धः स्कन्दाग्रगण्यो निखिलोऽहमस्मि ॥
न मेऽन्तरायो न च कर्मलोपो न पुण्यपापे मम तन्मयस्य ।
एवं विदित्वा गणनाथतत्त्वं निरन्तरायं निजबोधबीजम् ॥१३॥
क्षेमङ्करं सन्ततसौख्यहेतुं प्रयान्ति शुद्धं गणनाथतत्त्वम् ।
विद्यामिमां प्राप्य गौरी महेशादभीष्टसिद्धिं समवाप सद्यः ।
पूज्या परा सा च जजाप मन्त्रं शम्भुं पतिं प्राप्य मुदं ह्यवाप ॥

य इमां हेरम्बोपनिषदमधीते स सर्वान् कामान् लभते । स सर्वपापैर्मुक्तो भवति । स सर्वैर्वेदैर्ज्ञातो भवति । स सर्वैर्देवैः पूजितो भवति । स सर्ववेदपारायणफलं लभते । स गणेशसायुज्यमवाप्नोति य एवं वेद । इत्युपनिषत् ॥

इति हेरम्बोपनिषत् समाप्ता

---

# ५. शाक्त-उपनिषद:

## अल्ला-उपनिषत्

दिव्यानि धत्ते धत्तं दिव्यानि दिव्यानि धत्ते। धत्त इलल इलले धत्ते धत्त इलले। धत्त इति धत्ते। इलले वरुणो वरुण इलल इलले वरुणः। इलल इति इलले। वरुणो राजा राजा वरुणो वरुणो राजा। राजा पुनर्दुः पुनर्दू राजा राजा पुनर्दुः। पुनर्दुरिति पुनः दुः। ह्वयामि मित्रो मित्रो ह्वयामि ह्वयामि मित्रः। मित्र इलामिलां मित्रो मित्र इलाम्। इलामिलल इलल इलामिलामिलल्ले। इलल इलामिलामिलल इलल इलाम्। इलां वरुणो वरुण इलामिलां वरुणः। वरुणो मित्रो मित्रो वरुणो वरुणो मित्रः। मित्रस्तेजस्कामस्तेजस्कामो मित्रो मित्रस्तेजस्कामः। तेजस्काम इति तेजः कामः ॥१॥ अयामिलामिलामयामयामिलाम्। इलां त्वं त्वमिलामिलां त्वम्। त्वमर्यममर्यमं त्वं त्वमर्यमम्। अर्यमं वरुणो वरुणोऽर्यममर्यमं वरुणः। वरुणो दध्म दध्म वरुणो वरुणो दध्म। दध्म दीर्घायुर्दीर्घायुर्दध्म दध्म दीर्घायुः। दीर्घायुर्वहते वहते दीर्घायुर्दीर्घायुर्वहते। दीर्घायुरिति दीर्घ आयुः। वहते सुयः सुयो वहते वहते सुयः। सुय इति सुयः। होतारमिन्द्र इन्द्रो होतारं होतारमिन्द्रः। इन्द्रो होतारं होतारमिन्द्र इन्द्रो

होतारम् । इन्द्रो महासुरेन्द्रो महासुरेन्द्र इन्द्र इन्द्रो महासुरेन्द्रः । महासुरेन्द्रः सप्तऋषयः सप्तऋषयो महासुरेन्द्रो महासुरेन्द्रः सप्तऋषयः । सप्तऋषयः सं सं सप्तऋषयः सप्तऋषयः सम् । सप्तऋषय इति सप्त ऋषयः । सं तुष्ट तुष्ट सं सं तुष्ट । तुष्ट देवा देवास्तुष्ट तुष्ट देवाः । देवा इति देवाः ॥ २ ॥

इलामिलामिलामिलामिलाम् । इलेलाकबर्होऽकबर्ह इलेलाकबर्होऽकबर्ह इलेलाकबर्होऽकबर्ह इलेलाकबर्होऽकबर्ह इलेलाकबर्होऽकबर्हः । अकबर्होऽस्म्यकबर्होऽस्म्यकबर्होऽस्म्यकबर्होऽस्म्यकबर्होऽस्मि ॥ ३ ॥

इति अल्ला-उपनिषत् समाप्ता

---

# आथर्वणद्वितीयोपनिषत्

ह्रीं श्रीं या वै शिवा भगवती अणिमासिद्ध्यादिदशकं तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती अणिमासिद्धिस्तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती लघिमासिद्धिस्तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती महिमासिद्धिस्तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती ईशित्वसिद्धिस्तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती वशित्वसिद्धिस्तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती प्राकाम्यसिद्धिस्तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती भुक्तिसिद्धिस्तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती इच्छासिद्धिस्तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती प्राप्तिसिद्धिस्तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती प्रकामसिद्धिस्तस्यै वै नमो

नमः। ह्रीं श्रीं या वै शिवा भगवती ब्राह्म्यष्टकं तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती आं ब्राह्मीशक्तिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती ईं माहेश्वरीशक्तिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती ऊं कौमारीशक्तिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती ॠं वैष्णवीशक्तिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती ॡं वाराहीशक्तिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती ऐं इन्द्राणीशक्तिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती औं चामुण्डाशक्तिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती महालक्ष्मीशक्तिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती मुद्रादशकं तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती द्रां सर्वसंक्षोभिणीमुद्रा तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती द्रीं द्राविणीमुद्रा तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती क्लीं सर्वाकर्षिणीमुद्रा तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती ब्लूं सर्ववशङ्करीमुद्रा तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती सः उन्मादिनीमुद्रा तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती क्रों महाङ्कुशमुद्रा तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती ह्स्ख्फ्रें खेचरीमुद्रा तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती ह्सौं बीजमुद्रा तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती ऐं सर्वयोनिमुद्रा तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती ह्सौं त्रिखण्डमुद्रा तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती प्रथमचक्रेश्वरी त्रिपुरा देवी तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती अणिमादिसिद्धिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती सर्वसंक्षोभिणीमुद्रा तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती कामाकर्षिण्यादिषोडशकं

तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती कामाकर्षिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती बुद्ध्याकर्षिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती अहङ्काराकर्षिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती शब्दाकर्षिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती स्पर्शाकर्षिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती रूपाकर्षिणी तस्यै वै नमो नमः । ह्रीं श्रीं या शिवा भगवती रसाकर्षिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती गन्धाकर्षिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती चित्ताकर्षिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती धैर्याकर्षिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती स्मृत्याकर्षिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती नामाकर्षिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती बीजाकर्षिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती आत्माकर्षिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती अमृताकर्षिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती शरीराकर्षिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती द्वितीय-चक्रेश्वरी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती ऐं क्लीं सौः त्रिपुरेश्वरी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती द्रीं सर्वविद्राविणीमुद्रा तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती अनङ्गकुसुमाष्टकं तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती कं खं गं घं ङं अनङ्गकुसुमा तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती चं छं जं झं ञं अनङ्गमेखला तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती टं ठं डं ढं णं अनङ्गमदना तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती तं थं दं धं नं अनङ्गमदनातुरा तस्यै वै नमो नमः ।

ह्रीं श्रीं या वै शिवा भगवती पं फं बं भं मं अनङ्गरेखा तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती यं रं लं वं अनङ्गवेगा तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती शं षं सं हं अनङ्गाङ्कुशा तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती ळं क्षं अनङ्गमालिनी तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती ह्रीं क्लीं सौः तृतीयचक्रेश्वरी त्रिपुरसुन्दरी देवी तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती क्लीं सर्वाकर्षिणीमुद्रा तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती सर्वसंक्षोभिण्यादिचतुर्दशकं तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती सर्वसंक्षोभिणीशक्तिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती सर्वविद्राविणीशक्तिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती सर्वाकर्षिणीशक्तिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती सर्वाह्लादिनीशक्तिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती सर्वसंमोहिनीशक्तिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती सर्वस्तंभिनीशक्तिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती सर्वजृंभिणीशक्तिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती सर्वरञ्जनी तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती सर्ववशङ्करी तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती सर्वोन्मादिनी तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती सर्वार्थसाधकी तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती सर्वसंपत्तिपूरणी तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती सर्वमन्त्रमयी तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती सर्वद्वन्द्वक्षयङ्करी देवी तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती ऐं क्लीं सौः त्रिपुरवासिनी देवी तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती ईशित्वसिद्धिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती

ब्लूं सर्ववशङ्करीमुद्रा तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वसिद्धिप्रदादिदशकं तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वसिद्धिप्रदा तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वसंपत्प्रदा तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वप्रियङ्करी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वमङ्गलकारिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वकामप्रदा तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वदुःखविमोचनी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वमृत्युप्रशमनी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वविघ्ननिवारणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वाङ्गसुन्दरी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वसौभाग्यदायिनी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती ह्सैं ह्स्क्लीं ह्सौः पञ्चमचक्रेश्वरी त्रिपुराश्रीस्तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती वशित्वसिद्धिस्तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती उन्मादिनीमुद्रा तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वज्ञादिदशकं तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वज्ञशक्तिस्तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वशक्तिदेवी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वैश्वर्यप्रदायिनी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वज्ञानमयी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वव्याधिविनाशिनी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वाधारस्वरूपिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वपापहरा तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वानन्दमयी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती सर्वरक्षास्वरूपिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती

सर्वेप्सितफलप्रदा तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती ह्रीं क्लीं ब्लें त्रिपुरामालिनी नित्या तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती प्राकाम्यसिद्धिस्तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती क्रों महाङ्कुशमुद्रा तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती वशिन्याद्यष्टकं तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः वशिनी वाग्वादिनी देवता तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती कं खं गं घं ङं क्लह्रीं कामेश्वरी वाग्देवता तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती चं छं जं झं ञं क्लीं मोदिनी वाग्देवता तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती टं ठं डं ढं णं ह्लूं विमला वाग्देवता तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती तं थं दं धं नं अरुणा वाग्देवता तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती पं फं बं भं मं हसलव्यूं जयिनी वाग्देवता तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती यं रं लं वं ह्स्म्यों सर्वेश्वरी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती शं षं सं हं क्ष्वीं कौलिनी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती ह्रीं श्रीं सौः सप्तमचक्रेश्वरी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती त्रिपुरा सिद्धा नित्या तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती भुक्तिसिद्धिस्तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती ह्स्ख्फ्रें खेचरी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती यां रां लां वां शां द्रां द्रीं क्लीं ब्लूं सः बाणस्तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती धं थं सं मोहनकोदण्डरूपिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती आं ह्रीं पाशरूपिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती क्रों अङ्कुशरूपिणी तस्यै वै नमो नमः । ह्रीं श्रीं या वै शिवा भगवती ह्सैं

ह्स्लीं ह्सौः त्रिपुरजननी तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती इच्छासिद्धिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती ह्सौं बीजमुद्रा तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती कामेश्वर्यादिदेवतात्रयं तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती वाग्भवकूटे कामेश्वरी तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती कामराजकूटे वज्रेश्वरी तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती शक्तिकूटे भगमालिनी तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती हसकलरडैं हसकलरडीं हसकलरडैं तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती प्राप्तिसिद्धिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती ऐं योनिमुद्रा तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती ओङ्कारपीठदेवता तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती सर्वात्मकेन सर्वेश्वरी देवी तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती सर्वकामसिद्धिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती त्रिपुरसुन्दरी त्रिपुरवासिनी त्रिपुराश्रीस्त्रिपुरमालिनी त्रिपुरासिद्धिस्त्रिपुरजननी त्रिपुरभैरवी ताभ्यो वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती सर्वकामसिद्धिस्तस्यै वै नमो नमः। ह्रीं श्रीं या वै शिवा भगवती ह्सौं त्रिखण्डमुद्रा तस्यै वै नमो नमः।

ब्रह्मब्रह्मविदित्येतैर्मन्त्रैर्भगवतीं यजेत्।

इत्याह भगवान्। ततो देवी स्वात्मानं दर्शयति। तस्माद्य एतैर्मन्त्रैर्यजति स ब्रह्म पश्यति। स सर्वं पश्यति। सोऽमृतत्वं च गच्छति। य एवं वेद। इति महोपनिषत्॥

इत्याथर्वणद्वितीयोपनिषत् समाप्ता

---

# कामराजकीलितोद्धारोपनिषत्

अथोवाच कामराजम् । तदुपासनात् कुशलं लभेत् । श्रियं लभेत् । गुर्वीं वाणीं लभेत् । सर्वयुवतीनां प्रियो भवेत् । प्रथमं कामस्ततः शक्तिस्तदनु तुरीयं द्वावेतौ परैतानि पञ्चाक्षराणि भवन्ति । ततः शून्यं च द्वौ दिवाकरहरौ । तदनु गोत्रभृन्माया । एतानि षडक्षराणि भवन्ति । ततश्चन्द्रः प्रजापतिशक्रौ । ततो माया । एतानि चतुरक्षराणि भवन्ति । आद्यं वाग्भवं द्वितीयं कामराजं तृतीयं शक्तिबीजं शुक्लं तरुणदिवाकराभं शशिकान्तं क्रमेण स्मरेत् । कफारादित्वात्कीलिता । कोटिजपात् सिद्धिर्न जायते । यदा मन्मथकलादेर्भवति तदा निष्कीलिता भवेत् । सिद्धिदा भवेत् । सा वीर्यवती भवेत् । त्रैलोक्यं वशमानयेत् । पूजनाद्दौर्भाग्यनाशो भवेत् । जपात् सिद्धीश्वरो भवेत् । इति शिवम् ।

अथाद्यं शाम्भवं द्वितीयं शाक्तं चेति गुरुमुखात् ज्ञातव्यम् । अन्यथा शापमाप्नुयात् । उपासना द्विविधा । शाम्भवं शाक्तं चेति । एवं लोपनाल्लोपा । प्रथमं शंभुचन्द्रौ । तदनु दिवाकरेन्द्रौ । ततः पराबीजं वाग्भवम् । तत कामराजं शिवचन्द्रकामशम्भुहरयः । पराबीजं शक्तिः । कामपरामध्ये देवराजमेतच्छक्तिकूटम् । एतेन पञ्चदशाक्षराणि भवन्ति । शम्भुप्रधानत्वाच्छाम्भवम् । पूर्णोऽहं शिवोऽहमद्वैतरूपोऽहं नित्यानन्दरूपोऽहं इति स्मरेत् । नापि पूजायां व्रतनियमः । सर्वदा जपं चरेत् । विनोदतः कामिनीमध्ये कामिनीर्दृष्ट्वा च सदानन्दरूपो भवेत् । दिव्याङ्गरागैर्देहं भूषयेत् सुगन्धमाल्याम्बरालङ्काराद्यैः । मांसाद्यैः शुद्धैः सुमधुरैर्भोजयेत् । मपञ्चकेन पूजा कार्या । सदा कौलिको भवेत् । कुलाचारात् सर्वसिद्धीश्वरो भवेत् । एकाकी शक्तियुक्तो भवेत् । मादनं भुक्त्वा शक्तिभुग्भवेत् । शक्तिचक्रं पूजयेत् ।

भोगेन मोक्षमाप्नुयात् । शक्तिहर्षोत्पादनाच्छक्तिः प्रीता भवति । इति शिवम् ॥ २ ॥

अथ वकुलैरर्चयेत् । रक्तपुष्पैरर्चयेत् । तदभावे जलैस्तदभावे मानसीं भक्तिमाचरेत् । इति शिवम् ॥ ३ ॥

इत्याथर्वणशाखायां कामराजकीलितोद्धारोपनिषत् समाप्ता

---

# कालिकोपनिषत्

ॐ अथ हैनं ब्रह्मरन्ध्रे ब्रह्मरूपिणीमाप्नोति । सुभगां त्रिगुणितां मुक्तासुभगां कामरेफेन्दिरासमस्तरूपिणीमेतानि त्रिगुणितानि तदनु कूर्चबीजं व्योमषष्ठस्वरां बिन्दुमेलनरूपां तद्द्वयं मायाद्वयं दक्षिणे कालिके चेत्यभिमुखगतां तदनु बीजसप्तकमुच्चार्य बृहद्भानुजायामुच्चरेत् । स तु शिवमयो भवेत् । सर्वसिद्धीश्वरो भवेत् । गतिस्तस्यास्तीति । नान्यस्य गतिरस्तीति । स तु वागीश्वरः । स तु नारीश्वरः । स तु देवेश्वरः । स तु सर्वेश्वरः । अभिनवजलदसङ्काशा घनस्तनी कुटिलदंष्ट्रा शवासना कालिका ध्येया । त्रिकोणं पञ्चकोणं नवकोणं पद्मम् । तस्मिन् देवीं सर्वाङ्गेऽभ्यर्च्य तदिदं सर्वाङ्गं ओं काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी विप्रचित्ता उग्रा उग्रप्रभा दीप्ता नीला घना बलाका मात्रा मुद्राऽमिता चैव पञ्चदशकोणगाः । ब्राह्मी नारायणी माहेश्वरी कौमारी अपराजिता वाराही नारसिंहिका चेत्यष्टपत्रगाः । षोडशस्वरभेदेन प्रथमेन मन्त्रविभागः । तन्मूलेनावाहनं तेनैव पूजनम् । य एवं मन्त्रराजं नियमेन वा लक्षमावर्तयति स पाप्मानं हन्ति । स ब्रह्मत्वं भजति । सः

अमृतत्वं भजति । स आयुरारोग्यमैश्वर्यं भजति । सदा पञ्चमकारेण पूजयेत् । सदा गुरुभक्त भवेत् । सदा देवभक्तो भवेत् । धर्मिष्ठतां पुष्टिमहतवाचं विप्रा लभन्ते । मन्त्रजापिनो ह्यात्मा विद्याप्रपूरितो भवति । स जीवन्मुक्तो भवति । स सर्वशास्त्रं जानाति । स सर्वपुण्यकारी भवति । स सर्वयज्ञयाजी भवति । राजानो दासतां यान्ति । जप्त्वा स सर्वमेतं मन्त्रराजं स्वयं शिव एवाहमित्यणिमादिविभूतीनामीश्वरः कालिकां लभेत् ।

आवयोः पात्रभूतः सन् सुकृती त्यक्तकल्मषः ।
जीवन्मुक्तः स विज्ञेयो यस्मै लब्धा हि दक्षिणा ॥

दशांशं होमयेत्तदनु तर्पयेत् । अथ हैके यज्ञान्कामानद्वैतज्ञानादीन-निरुद्धसरस्वतीति । अथ हैषः कालिकामनुजापी यः सदा शुद्धात्मा ज्ञानवैराग्ययुक्तः शाम्भवीदीक्षासु रक्तः शाक्तासु । यदि वा ब्रह्मचारी रात्रौ नग्नः सर्वदा मधुनाऽशक्तो मनसा जपपूजादिनियमवान् । योषित्प्रियकरो भगोदकेन तर्पणं तेनैव पूजनं कुर्यात् । सर्वदा कालिकारूपमात्मानं विभावयेत् । स सर्वदा योषिद्वासक्तो भवेत् । स सर्वहत्यां तरति तेन मधुदानेन । अथ पञ्चमकारेण सर्वमायादिविद्यां पशुधनधान्यं सर्वशत्वं च कवित्वं च । नान्यः परमः पन्था विद्यते मोक्षाय ज्ञानाय धर्माधर्माय । तत्सर्वं भूतं भव्यं यत्किञ्चिद्दृश्यमानं स्थावरजङ्गमं तत्सर्वं कालिकातन्त्रे ओतं प्रोतं वेद । थ एवं मनुजापी स पाप्मानं तरति । स भ्रूणहत्या तरति । सोऽगम्यागमनं तरति । स सर्वसुखमाप्नोति । स सर्वं जानाति । स सर्वसंन्यासी भवति । स विरक्तो भवति । स सर्ववेदाध्यायी भवति । स सर्वमन्त्रजापी भवति । स सर्वशास्त्रवेत्ता भवति । स सर्वज्ञानकारी भवति । स आवयोर्मित्रभूतो भवति । इत्याह भगवान् शिवः । निर्विकल्पेन मनसा स वन्द्यो भवति ।

अथ हैनां.

मूलाधारे स्मरेद्दिव्यं त्रिकोणं तेजसां निधिम् ।
शिखा आनीय तस्याग्नेरथ तूर्ध्वं व्यवस्थिता ॥
नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा ।
नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा ॥
तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ।
स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ॥
स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः ।
इति कुण्डलिनीं ध्यात्वा सर्वपापैः प्रमुच्यते ॥

महापातकेभ्यः पूतो भूत्वा सर्वमन्त्रसिद्धिं कृत्वा भैरवो भवेत् । महाकालभैरवोऽस्य ऋषिः । अनुष्टुप् छन्दः (उष्णिक् छन्दः) कालिका देवता । ह्रीं बीजं हूं शक्तिः क्रीं कीलकं अनिरुद्धसरस्वती देवता । कवित्वे पाण्डित्यार्थे (धर्मार्थकाममोक्षार्थे) जपे विनियोगः । इत्येवमृषिच्छन्दोदैवतं ज्ञात्वा मन्त्रसाफल्यमश्नुते । अथर्वविद्यां प्रथममेकं द्वयं त्रयं वा नामद्वयसंपुटितं कृत्वा योजयेत् । गतिस्तस्यास्तीति । नान्यस्य गतिरस्तीति । ॐ सत्यम् । ॐ तत्सत् ।

अथ हैनं गुरुं परितोष्यैनं मन्त्रराजं गृह्णीयात् । मन्त्रराजं गुरुस्तमपि शिष्याय सत्कुलीनाय विद्याभक्ताय सुवेषां स्त्रियं स्पृष्ट्वा स्वयं निशायां निरुपद्रवः परिपूज्य एकाकी शिवगेहे लक्षं तदर्धं वा जपित्वा दद्यात् । ॐ ॐ ॐ सत्यं सत्यं सत्यम् । नान्यप्रकारेण सिद्धिर्भवति । अथाह वै कालिकामनोस्तारामनोस्त्रिपुरामनोः सर्वदुर्गामनोर्वा स्वरूपसिद्धिरेवमिति शिवम् ॥

इत्याथर्वणे सौभाग्यकाण्डे कालिकोपनिषत् समाप्ता

---

# कालीमेधादीक्षितोपनिषत्

अथाह वै देवानां पत्नीं भजते। तस्योपासकोऽन्यां गच्छन् ॐ अथैनां मेधादीक्षितरूपिणीं भावयेत्। स शिवो भवेत्। स कालीरूपो भवेत्। सोऽयं मेधास्पर्शमणिकालीं दीक्षयेत्। ततश्चिन्तामणिकालीं दीक्षयेत्। ततः सिद्धकाल्यधिकारी भवेत्। ततो विद्याराज्ञीं जपेत्। ततः कामकलाकालीं परारूपिणीं जपेत्। ततश्चरणदीक्षारूपिणीं हंसकालीं यजेत्। रक्तशुक्लमिश्रनिर्वाणरूपिणीं यजेत्। सर्वनिर्वाणदीक्षितो भवेत्। ततः शाम्भवीदीक्षितो भवेत्। गुह्यकाल्यधिष्ठितो भवेत्। शिवो भवेत्। स परारूपो भवेत्। परात् पररूपो भवेत्। परात् परातीतरूपो भवेत्। चित्परारूपो भवेत्। चित्परात् परारूपो भवेत्। चित्परात् परातीतरूपो भवेत्। ब्रह्मविष्णुरुद्रेश्वरसदाशिवमहाकालचित्पराम्बारूपो भवेत्। स ब्रह्मत्वं गच्छति। मेधादीक्षां लभेत्। मेधादीक्षातः परा दीक्षा न विद्यत इत्याह भगवान् शिवः। स्पर्शविद्यया देहशुद्धिर्भवेत्। ततश्चिन्तामणिविद्याधिकारी विद्याराज्ञीं लभेत्। विद्याराज्ञ्यधिकारी तु षोढां जपेत्। तुर्याषोढाधिकारी कामकलां जपेत्। कामकलाधिकारी चरणरूपिणीं जपेत्। हंसदीक्षितो भवेत्। चरणाधिकारी षट्छाम्भवसंपन्नो भवेत्। गुह्यकाल्यधिष्ठितो भवेत्। ततो मेधां चरेत्। जीवको हि भृङ्गत्वं गच्छति। भृङ्गीभूत्वा षट् चक्राणि निर्भिन्द्यात्। ततः परागभुग्भवेत्। परकायप्रवेशवान् वयस्स्थैर्यं चरेत्। कामरूपत्वं गच्छति। षष्टिसिद्धीश्वरो भवेदिति शिवप्रोक्तं वेद ॥

इत्याथर्वणे सौभाग्यकाण्डे कालीमेधादीक्षितोपनिषत् समाप्ता

---

# गायत्रीरहस्योपनिषत्

ॐ स्वस्ति सिद्धम् । ॐ नमो ब्रह्मणे । ॐ नमस्कृत्य याज्ञवल्क्यः ऋषिः स्वयंभुवं परिपृच्छति । हे ब्रह्मन् गायत्र्या उत्पत्तिं श्रोतुमिच्छामि । अथातो वसिष्ठः स्वयंभुवं परिपृच्छति । यो ब्रह्मा स ब्रह्मोवाच । ब्रह्मज्ञानोत्पत्तेः प्रकृतिं व्याख्यास्यामः । को नाम स्वयंभूः पुरुष इति । तेनाङ्गुलीमथ्यमानात् सलिलमभवत । सलिलात् फेनमभवत् । फेनाद्बुद्बुदमभवत् । बुद्बुदादण्डमभवत् । अण्डाद्ब्रह्माभवत् । ब्रह्मणो वायुरभवत् । वायोरग्निरभवत् । अग्नेरोङ्कारोऽभवत् । ओङ्काराद्व्याहृतिरभवत् । व्याहृत्याः गायत्र्यभवत् । गायत्र्याः सावित्र्यभवत् । सावित्र्याः सरस्वत्यभवत् । सरस्वत्याः सर्वे वेदा अभवन् । सर्वेभ्यो वेदेभ्यः सर्वे लोका अभवन् । सर्वेभ्यो लोकेभ्यः सर्वे प्राणिनोऽभवन् ।

अथातो गायत्री व्याहृतयश्च प्रवर्तन्ते । का च गायत्री काश्च व्याहृतयः । किं भूः किं भुवः किं सुवः किं महः किं जनः किं तपः किं सत्यं किं तत् किं सवितुः किं वरेण्यं किं भर्गः किं देवस्य किं धीमहि किं धियः किं यः किं नः किं प्रचोदयात् । ॐ भूरिति भुवो लोकः । भुव इत्यन्तरिक्षलोकः । स्वरिति स्वर्गलोकः । मह इति महर्लोकः । जन इति जनोलोकः । तप इति तपोलोकः । सत्यमिति सत्यलोकः । तदिति तदसौ तेजोमयं तेजो ग्निर्देवता । सवितुरिति सविता सावित्रमादित्यो वै । वरेण्यमित्यत्र प्रजापतिः । भर्ग इत्यापो वै भर्गः । देवस्य इतीन्द्रो देवो द्योतत इति स इन्द्रस्तस्मात् सर्वपुरुषो नाम रुद्रः । धीमहीत्यन्तरात्मा । धिय इत्यन्तरात्मा परः । य इति सदाशिवपुरुषः । नो इत्यस्माकं स्वधर्मे । प्रचोदयादिति प्रचोदितकाम इमान् लोकान् प्रत्याश्रयते यः परो

धर्म इत्येषा गायत्री। सा च किंगोत्रा कत्यक्षरा कतिपादा। कति कुक्षयः। कानि शीर्षाणि। सांख्यायनगोत्रा सा चतुर्विंशत्यक्षरा गायत्री त्रिपादा चतुष्पादा। पुनस्तस्याश्चत्वारः पादाः षट् कुक्षिकाः पञ्च शीर्षाणि भवन्ति। के च पादाः काश्च कुक्षयः कानि शीर्षाणि। ऋग्वेदोऽस्याः प्रथमः पादो भवति। यजुर्वेदो द्वितीयः पादः। सामवेदस्तृतीयः पादः। अथर्ववेदश्चतुर्थः पादः। पूर्वा दिक् प्रथमा कुक्षिर्भवति। दक्षिणा द्वितीया कुक्षिर्भवति। पश्चिमा तृतीया कुक्षिर्भवति। उत्तरा चतुर्थी कुक्षिर्भवति। ऊर्ध्वं पञ्चमी कुक्षिर्भवति। अधः षष्ठी कुक्षिर्भवति। व्याकरणोऽस्याः प्रथमः शीर्षो भवति। शिक्षा द्वितीयः। कल्पस्तृतीयः। निरुक्तश्चतुर्थः। ज्योतिषामयनमिति पञ्चमः। का दिक् को वर्णः किमायतनं कः स्वरः किं लक्षणं कान्यक्षर-दैवतानि क ऋषयः कानि छन्दांसि काः शक्तयः कानि तत्त्वानि के चावयवाः। पूर्वायां भवतु गायत्री। मध्यमायां भवतु सावित्री। पश्चिमायां भवतु सरस्वती। रक्ता गायत्री। श्वेता सावित्री। कृष्णा सरस्वती। पृथिव्यन्तरिक्षं द्यौरायतनानि। अकारोकारमकाररूपोदात्तादिस्वरात्मिका। पूर्वा सन्ध्या हंसवाहिनी ब्राह्मी। मध्यमा वृषभवाहिनी माहेश्वरी। पश्चिमा गरुडवाहिनी वैष्णवी। पूर्वाह्णकालिका सन्ध्या गायत्री कुमारी रक्ता रक्ताङ्गी रक्तवासिनी रक्तगन्धमाल्यानुलेपनी पाशाङ्कुशाक्षमालाकमण्डलुवर-हस्ता हंसारूढा ब्रह्मदैवत्या ऋग्वेदसहिता आदित्यपथगामिनी भूमण्डल-वासिनी। मध्याह्नकालिका सन्ध्या सावित्री युवती श्वेताङ्गी श्वेतवासिनी श्वेतगन्धमाल्यानुलेपनी त्रिशूलडमरुहस्ता वृषभारूढा रुद्रदैवत्या यजुर्वेद-सहिता आदित्यपथगामिनी भुवोलोके व्यवस्थिता। सायं सन्ध्या सरस्वती वृद्धां कृष्णाङ्गी कृष्णवासिनी कृष्णगन्धमाल्यानुलेपना शङ्खचक्रगदाभयहस्ता गरुडारूढा विष्णुदैवत्या सामवेदसहिता आदित्यपथगामिनी स्वर्गलोकव्यव-

स्थिता । अग्निवायुसूर्यरूपाऽऽहवनीयगार्हपत्यदक्षिणाग्निरूपा ऋग्यजुःसाम-रूपा भूर्भुवःस्वरिति व्याहृतिरूपा प्रातर्मध्याह्नतृतीयसवनात्मिका सत्त्व-रजस्तमोगुणात्मिका जाग्रत्स्वप्नसुषुप्तरूपा वसुरुद्रादित्यरूपा गायत्री-त्रिष्टुब्जगतीरूपा ब्रह्मशङ्करविष्णुरूपेच्छाज्ञानक्रियाशक्तिरूपा स्वराड्विराड्व-षड्ब्रह्मरूपेति । प्रथममाग्नेयं द्वितीयं प्राजापत्यं तृतीयं सौम्यं चतुर्थमीशानं पञ्चममादित्यं षष्ठं गार्हपत्यं सप्तमं मैत्रमष्टमं भगदैवतं नवममार्यमणं दशमं सावित्रमेकादशं त्वाष्ट्रं द्वादशं पौष्णं त्रयोदशमैन्द्राग्नं चतुर्दशं वायव्यं पञ्चदशं वामदेवं षोडशं मैत्रावरुणं सप्तदशं भ्रातृव्यमष्टादशं वैष्णवमेको-नविंशं वामनं विंशं वैश्वदेवमेकविंशं रौद्रं द्वाविंशं कौबेरं त्रयोविंशमाश्विनं चतुर्विंशं ब्राह्ममिति प्रत्यक्षरदैवतानि । प्रथमं वासिष्ठं द्वितीयं भारद्वाजं तृतीयं गार्ग्यं चतुर्थमौपमन्यवं पञ्चमं भार्गवं षष्ठं शाण्डिल्यं सप्तमं लौहितम-ष्टमं वैष्णवं नवमं शातातपं दशमं सनत्कुमारमेकादशं वेदव्यासं द्वादशं शुकं त्रयोदशं पाराशर्यं चतुर्दशं पौण्ड्रकं पञ्चदशं क्रतुं षोडशं दाक्षं सप्त-दशं काश्यपमष्टादशमात्रेयमेकोनविंशमगस्त्यं विंशमौद्दालकमेकविंशमाङ्गिरसं द्वाविंशं नामिकेतुं त्रयोविंशं मौद्गल्यं चतुर्विंशमाङ्गिरसं वैश्वामित्रमिति प्रत्यक्षराणामृषयो भवन्ति । गायत्रीत्रिष्टुब्जगत्यनुष्टुप्पङ्क्तिर्बृहत्युष्णिगदिति-रिति त्रिरावृत्तेन छन्दांसि प्रतिपाद्यन्ते । प्रह्लादिनी प्रज्ञा विश्वभद्रा विलासिनी प्रभा शान्ता मा कान्तिः स्पर्शा दुर्गा सरस्वती विरूपा विशालाक्षी शालिनी व्यापिनी विमला तमोऽपहारिणी सूक्ष्मावयवा पद्मालया विरजा विश्वरूपा भद्रा कृपा सर्वतोमुखीति चतुर्विंशतिशक्तयो निगद्यन्ते । पृथिव्यप्तेजोवाय्वाकाशगन्धरसरूपस्पर्शशब्दवाक्यानि पादपायूपस्थत्वक्चक्षुः-श्रोत्रजिह्वाघ्राणमनोबुद्ध्यहङ्कारचित्तज्ञानानीति प्रत्यक्षराणां तत्त्वानि प्रतीयन्ते । चम्पकातसीकुङ्कुमपिङ्गलेन्द्रनीलाग्निप्रभोद्यत्सूर्यविद्युत्तारकसरोजगौरमरकतशुक्ल

कुन्देन्दुशङ्खपाण्डुनेत्रनीलोत्पलचन्दनागुरुकस्तूरीगोरोचनघनसारसन्निभं प्रत्यक्षरमनुस्मृत्य समस्तपातकोपपातकमहापातकागम्यागमनगोहत्याब्रह्महत्याभ्रूणहत्यावीरहत्यापुरुषहत्याऽऽजन्मकृतहत्यास्त्रीहत्यागुरुहत्यापितृहत्याप्राणहत्याचराचरहत्याऽभक्ष्यभक्षणप्रतिग्रहस्वकर्मविच्छेदनस्वाम्यार्तिहीनकर्मकरणपरधनापहरणशूद्रान्नभोजनशत्रुमारणचण्डालीगमनादिसमस्तपापहरणार्थं संस्मरेत् ।

मूर्धा ब्रह्मा शिखान्तो विष्णुर्ललाटं रुद्रश्चक्षुषी चन्द्रादित्यौ कर्णौ शुक्रबृहस्पती नासापुटे अश्विनौ दन्तोष्ठावुभे सन्ध्ये मुखं मरुतः स्तनौ वस्वादयो हृदयं पर्जन्य उदरमाकाशो नाभिरग्निः कटिरिन्द्राग्नी जघनं प्राजापत्यमूरू कैलासमूलं जानुनी विश्वेदेवौ जङ्घे शिशिरः गुल्फानि पृथिवीवनस्पत्यादीनि नखानि महती अस्थीनि नवग्रहा असृक्केतुर्मासमृतुसन्धयः कालद्वयास्फालनं संवत्सरो निमेषोऽहोरात्रमिति वाग्देवीं गायत्रीं शरणमहं प्रपद्ये ।

य इदं गायत्रीरहस्यमधीते तेन क्रतुसहस्रमिष्टं भवति । य इदं गायत्रीरहस्यमधीते दिवसकृतं पापं नाशयति । प्रातर्मध्याह्नयोः षण्मासकृतानि पापानि नाशयति । सायं प्रातरधीयानो जन्मकृतं पापं नाशयति । य इदं गायत्रीरहस्यं ब्राह्मणः पठेत् तेन गायत्र्याः षष्टिसहस्रलक्षाणि जप्तानि भवन्ति । सर्वान् वेदानधीतो भवति । सर्वेषु तीर्थेषु स्नातो भवति । अपेयपानात् पूतो भवति । अभक्ष्यभक्षणात् पूतो भवति । वृषलीगमनात् पूतो भवति । अब्रह्मचारी ब्रह्मचारी भवति । पङ्क्तिषु सहस्रपानात् पूतो भवति । अष्टौ ब्राह्मणान् ग्राहयित्वा ब्रह्मलोकं स गच्छति । इत्याह भगवान् ब्रह्मा ॥

इति गायत्रीरहस्योपनिषत् समाप्ता

# गायत्र्युपनिषत्

ॐ भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराणि। अष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हास्या एतत्स यावदेतेषु लोकेषु तावद्ध जयति। योऽस्या एतदेवं पदं वेद ऋचो यजूंषि सामानीत्यष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हास्या एतत्स यावतीयं त्रयी विद्या तावद्ध जयति। योऽस्या एतदेवं पदं वेद प्राणोऽपानो व्यान इत्यष्टावक्षराण्यष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हास्या एतत्स यावदिदं प्राणिति तावद्ध जयति। योऽस्या एतदेवं पदं वेदाथास्या एतदेव तुरीयं दर्शितं पदं परोरजाय एष तपतीति यद्वै चतुर्थं तत्तुरीयं दर्शितं पदमिति ददर्श इव ह्येष परोरजा इति सर्वमु ह्येष रज उपर्युपरि तपत्येवं ह वा एष श्रिया यशसा तपति। योऽस्या एतदेवं पदं वेद सैषा गायत्री एतस्मिंस्तुरीय दर्शिते पदे परोरजसि प्रतिष्ठिता तद्वै सत्सत्ये प्रतिष्ठितं चक्षुर्हि वै सत्यं तस्माद्यदिदानीं द्वौ विवदमानावेयातां अहमद्राक्षमहमश्रौषमिति। य एव ब्रूयादहमद्राक्षमिति तस्या एव श्रद्धव्या य एतद्वै तत् सत्यं बलं प्रतिष्ठितं तस्मादाहुर्बलं सत्यादौ ज्ञेय एवं वैषा गायत्र्यध्यात्मं प्रतिष्ठिता सा हैषा गायंस्तते प्राणा वै गायास्तान् प्राणांस्तते उद्यद्गायंस्तते तस्माद्गायत्री नाम स यामेवामूं मत्वा हैषैवमास यस्मा इत्याह तस्य प्रमाणं त्रायते तां हैके सावित्री-मनुष्टुभमन्वाहुरनुष्टुभैतद्वाचमनुब्रूम इति न तथा कुर्याद्गायत्रीमेवानु-ब्रूयाद्यदि ह वापि बह्विव प्रतिगृह्णाति। इहैवं तद्गायत्र्या एकंचन पदं प्रति य इमांस्त्रीन् लोकान् पूर्णान् प्रतिगृह्णीयात् सोऽस्या एतत्प्रथमं पदमाप्नुयात् अथ यावतीयं त्रयी विद्या यस्तावत् प्रतिगृह्णीयात् सोऽस्या एतद्द्वितीयमाप्नुयात्। अथ यावदिदं प्राणिति यस्तावत् प्रतिगृह्णीयात्।

तस्या उपस्थाना गायत्र्यैकपदी द्विपदी त्रिपदी चतुष्पद्यपदा सा न हि पद्यते । यस्ते तुरीयाय पदाय दर्शिताय परोरजसे सावदोमिति समधीयीत वा न हैवास्मै सकामः समृद्ध्यते । यस्मा एवमुपतिष्ठते ह मदः प्रापमिति वा एतद्ध वै तज्जनको वैदेहो बुरिलमाश्वितराश्विमुवाच । यत्तु होतर्गायत्रीं कथं हलीभूतो वहसीति । मुखं ह्यस्याः ससंभ्रमं विदांचकारेति होवाच । तस्या अग्निरेव मुखं यदिह वापि वह्निमानआवभ्यादधाति सर्वमेतत्सन्द-हत्येवंविद्ययपवहीव पापं करोति सर्वमेवैतत्सम्यग्विशुद्धो यतोऽजरोऽमृतः स भवतीति ॥

इति गायत्र्युपनिषत् समाप्ता

---

# गुह्यकाल्युपनिषत्

अथर्ववेदमध्ये तु शाखा मुख्यतमा हि षट् ।
स्वयंभुवा याः कथिताः पुत्रायाथर्वणे पुरा ॥ १ ॥
तासु गुह्योपनिषदस्तिष्ठन्ति वरवर्णिनि ।
नामानि शृणु शाखानां तत्राद्या वारतन्तवी ॥ २ ॥
मौञ्जायनी द्वितीया तु तृतीया तार्णबैन्दवी ।
चतुर्थी शौनकी प्रोक्ता पञ्चमी पैप्पलादिका ॥ ३ ॥
षष्ठी सौमन्तवी ज्ञेया सारात् सारतमा इमाः ।
गुह्योपनिषदो गूढाः सन्ति शाखासु षट्स्वपि ॥ ४ ॥
ता एकीकृत्य सर्वास्तु मयाऽस्यां विनिवेशिताः ।
संहितायां साधकानामुद्धाराय वरानने ॥ ५ ॥

तास्ते वदामि यत् प्रोक्तं ध्यानं कुर्वन्ति देवताः ।
विराट्ध्यानं हि तज्ज्ञेयं महापातकनाशनम् ॥ ६ ॥
ब्रह्माण्डाद्बहिरूर्ध्वे हि महत्तत्त्वमहङ्कृतिः ।
रूपाणि पञ्च तन्मात्राः पुरुषः प्रकृतिर्नव ॥ ७ ॥
महापातालपादान्तलम्बा तस्या जयं स्मरेत् ।
ब्रह्माण्डार्धं कपालं हि शिरस्तस्या विभावयेत् ॥ ८ ॥
देवलोको ललाटं च षट्त्रिंशल्लक्षयोजनम् ।
मेरुः सीमन्तदण्डोऽस्या ग्रहरत्नसमाकुलः ॥ ९ ॥
अन्तर्वीथी नागवीथी भ्रुवावस्याः प्रकीर्तिते ।
शिवलोकश्च वैकुण्ठलोकः कर्णावुभौ मतौ ॥ १० ॥
लोहितं तिलकं ध्यायेन्नासा मन्दाकिनी तथा ।
चक्षुषी चन्द्रसूर्यौ च पक्ष्माणि किरणास्तथा ॥ ११ ॥
गण्डौ स्यातां तपोलोकसत्यलोकौ यथाक्रमम् ।
जनोलोकमहर्लोकौ कपोलौ परिकीर्तितौ ॥ १२ ॥
स्यातां हिमाद्रिकैलासौ तस्या देव्यास्तु कुण्डले ।
स्वर्लोकश्च भुवर्लोको देव्या ओष्ठाधरौ मतौ ॥ १३ ॥
दिक्पतीनां ग्रहाणां च लोकाश्चाथ रदावली ।
गन्धर्वसिद्धसाध्यानां पितृकिन्नररक्षसाम् ॥ १४ ॥
पिशाचयक्षाप्सरसां मरीचीयायिनां तथा ।
विद्याधराणामाज्योष्मपाणां सोमैकपायिनाम् ॥ १५ ॥
सप्तर्षीणां ध्रुवस्यापि लोका ऊर्ध्वरदावली ।
मुखं च रोदसी ज्ञेयं द्यौर्लोकश्चिबुकं तथा ॥ १६ ॥
ब्रह्मलोको गलः प्रोक्तो वायवः प्राणरूपिणः ।
वनस्पतय ओषध्यो लोमानि परिचक्षते ॥ १७ ॥

विद्युद्दृष्टिरहोरात्रं निमेषोन्मेषसंज्ञकम् ।
विश्वं तु हृदयं प्रोक्तं पृथिवी पाद उच्यते ॥ १८ ॥
तलं तलातलं चैव पातालं सुतलं तथा ।
रसातलं नागलोकाः पादाङ्गुल्यः प्रकीर्तिताः ॥ १९ ॥
वेदा वाचः स्यन्दमाना नदा नद्योऽमिता मताः ।
कलाः काष्ठा मुहूर्ताश्च ऋतवोऽयनमेव च ॥ २० ॥
पक्षा मासास्तथा चाब्दाश्चत्वारोऽपि युगाः प्रिये ।
कफोणिर्मणिबन्धश्च तद्धूरुकटिबन्धनाः ॥ २१ ॥
प्रपदाश्च स्फिचश्चैव सर्वाङ्गानि प्रचक्षते ।
वैश्वानरः कालमृत्युर्जिह्वात्रयमिदं स्मृतम् ॥ २२ ॥
आब्रह्मस्तम्बपर्यन्तं तनुमस्याः प्रचक्षते ।
प्रलयो भोजने कालस्तृप्तिस्तेन च नासिका ॥ २३ ॥
ज्ञेयः पार्श्वपरीवर्तो महाकल्पान्तरोद्भवः ।
विराड्रूपस्य ते ध्यानमिति संक्षेपतोऽर्पितम् ॥ २४ ॥
तस्याः स्वरूपविज्ञानं सपर्या परिकीर्तिता ।
तदेव हि श्रुतिप्रोक्तमवधारय पार्वति ॥ २५ ॥
यथोर्णनाभिः सूत्राणि सृजत्यपि गिलत्यपि ।
यथा पृथिव्यामोषध्यः संभवन्ति गिलन्त्यपि ॥ २६ ॥
पुरुषात् केशलोमानि जायन्ते च क्षरन्त्यपि ।
उत्पद्यन्ते विलीयन्ते तथा तस्यां जगत्यपि ॥ २७ ॥
ज्वलतः पावकाद्यद्वत् स्फुलिङ्गाः कोटिकोटिशः ।
निर्गत्य च विनश्यन्ति विश्वं तस्यास्तथा प्रियं ॥ २८ ॥
ऋचो यजूंषि सामानि दीक्षा यज्ञाः सदक्षिणाः ।
अध्वर्युर्यजमानश्च भुवनानि चतुर्दश ॥ २९ ॥

ब्रह्मविष्ण्वादिका देवा मनुष्याः पशवो यतः ।
प्राणापानौ व्रीहयश्च सत्यं श्रद्धा विधिस्तपः ॥ ३० ॥
समुद्रा गिरयो नद्यः सर्वे स्थावरजङ्गमाः ।
विसृज्यमानि सर्गादौ त्वं प्रकाशयसे ततः ॥ ३१ ॥
जङ्गमानि विधायान्ते विशत्यप्रतिभूतकम् ।
नवद्वारं पुरं कृत्वा गवाक्षाणीन्द्रियाण्यपि ॥ ३२ ॥
सा पश्यत्यत्ति वहति स्पृशति क्रीडतीच्छति ।
शृणोति जिघ्रति तथा रमते विरमत्यपि ॥ ३३ ॥
तया मुक्तं पुरं तद्धि मृतमित्यभिधीयते ॥ ३४ ॥
ये तपः क्षीणदोषास्ते नैव पश्यन्ति भाविताम् ।
ज्योतिर्मयीं शरीरेऽन्तर्ध्यायमानां महात्मभिः ॥ ३५ ॥
बृहच्च तद्दिव्यमचिन्त्यरूपं
सूक्ष्माच्च तत् सूक्ष्मतरं विभाति ।
दूरात् सुदूरे तदिहास्ति किञ्चित्
पश्येत्त्विहैतन्निहितं गुहायाम् ॥ ३६ ॥
न चक्षुषा गृह्यते नापि वाचा
नान्यैर्योगैर्न हि सा कर्मणा वा ।
ज्ञानप्रसादेन विशुद्धसत्त्वः
ततस्तु तां पश्यति निष्कलां च ॥ ३७ ॥
यथा नद्यः स्यन्दमानाः समुद्रे
गच्छन्त्यस्तं नामरूपे विहाय ।
तथा विद्वान् नामरूपाद्विमुक्तः
परात् परां जगदम्बामुपैति ॥ ३८ ॥

सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि ॥ ३९ ॥

सैषैतत् ॥

एषैवालम्बनं श्रेष्ठं सैषैवालम्बनं परम् ।
एषैवालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ ४० ॥
इन्द्रियेभ्यः परा ह्यर्था ह्यर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ ४१ ॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषात्तु परा देवी सा काष्ठा सा परा गतिः ॥ ४२ ॥
यथोदकं गिरौ सृष्टं समुद्रेषु विधावति ।
एवं धर्मान् पृथक् पश्यंस्तामेवानुविधावति ॥ ४३ ॥
एका गुहा सर्वभूतान्तरात्मा
एकं रूपं बहुधा या करोति ।
तामात्मस्थां येऽनुपश्यन्ति धीराः
तेषां सुखं शाश्वतं नेतरेषाम् ॥ ४४ ॥
न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तामेव भान्तीमनुभाति सर्वं
तस्या भासा सर्वमिदं विभाति ॥ ४५ ॥
यस्याः परं नापरमस्ति किञ्चित्
यस्या नाणीयो न ज्यायोऽस्ति किञ्चित् ।
वृक्ष इव स्तब्धा दिवि तिष्ठत्येका
यदन्तः पूर्णमवगत्य पूर्णः ॥ ४६ ॥

सर्वाननशिरोग्रीवा सर्वभूतगुहाशया ।
सर्वत्रस्था भगवती तस्मात् सर्वगता शिवा ॥ ४७ ॥
सर्वतः पाणिपादान्ता सर्वतोऽक्षिशिरोमुखा ।
सर्वतः श्रुतिमत्येषा सर्वमावृत्य तिष्ठति ॥ ४८ ॥
सर्वेन्द्रियगुणाभासा सर्वेन्द्रियविवर्जिता ।
सर्वेषां प्रभुरीशानी सर्वेषां शरणं सुहृत् ॥ ४९ ॥
नवद्वारे पुरे देवी हंसी लीलायतां बहिः ।
ध्येया सर्वस्य लोकस्य स्थावरस्य चरस्य च ॥ ५० ॥
अपाणिपादा जननी ग्रहीत्री
पश्यत्यचक्षुः सा श्रृणोत्यकर्णा ।
सा वेत्ति वेद्यं न च तस्यास्तु वेत्ता
तामाहुरग्र्यां महतीं महीयसीम् ॥ ५१ ॥
सा चैवाग्निः सा च सूर्यः सा वायुः सा च चन्द्रमाः ।
सा चैव शुक्रः सा ब्रह्म सा ऽऽपः सा प्रजापतिः ।
सा चैव स्त्री सा च पुमान् सा कुमारः कुमारिका ॥ ५२ ॥
ऋचो अक्षरे परमे व्योमन्
यस्यां देवा अधिरुद्रा निषेदुः ।
यस्तां न वेद किमृचा करिष्यति
ये तां विदुस्त इमे समासते ॥ ५३ ॥
छन्दांसि यज्ञाः क्रतवो व्रतानि
भूतं भव्यं यच्च वेदा वदन्ति ।
सर्वं देवी सृजते विश्वमेतत्
तस्याश्चान्यो मायया संनिरुद्धः ॥ ५४ ॥

मायां तु प्रकृतिं विद्यात् प्रभुं तस्या महेश्वरीम् ।
अस्या अवयवैः सूक्ष्मैर्व्याप्तं सर्वमिदं जगत् ॥ ५५ ॥

या देवानां प्रभवा चोद्भवा च
विश्वाधिपा सर्वभूतेषु गूढा ।
हिरण्यगर्भं जनयामास पूर्वं
सा नो बुद्धया शुभया संयुनक्तु ॥ ५६ ॥

सूक्ष्मातिसूक्ष्मं पलिलस्य मध्ये
विश्वस्य स्रष्ट्रीमनेकाननाख्याम् ।
विश्वस्य चैकां परिवेष्टयित्रीं
ज्ञात्वा गुह्यां शान्तिमत्यन्तमेति ॥ ५७ ॥

सा ह्येव काले भुवनस्य गोप्त्री
विश्वाधिपा सर्वभूतेषु गूढा ।
यस्यां मुक्ता ब्रह्मर्षयोऽपि देवाः
ज्ञात्वा तां मृत्युपाशाञ्छिनत्ति ॥ ५८ ॥

घृतात् परं मण्डमिवातिसूक्ष्मं
ज्ञात्वा कालीं सर्वभूतेषु गूढाम् ।
कल्पान्ते वै सर्वसंहारकर्त्रीं
ज्ञात्वा गुह्यां मुच्यते सर्वपापैः ॥ ५९ ॥

एषा देवी विश्वयोनिर्महात्मा
सदा जनानां हृदि सन्निविष्टा ।
हृदा मनीषा मनसाभिक्लृप्ता
ये तां विदुरमृतास्ते भवन्ति ॥ ६० ॥

यदा तमस्तत्र दिवा न रात्रिः
न सन्न चासद्भगवत्येव गुह्या ।
तदक्षरं तत्सवितुर्वरेण्यं
प्रज्ञा च तस्याः प्रसृता परा सा ॥ ६१ ॥
नैनामूर्ध्वं न तिर्यक् च न मध्यं परिजग्रभत् ।
न तस्याः प्रतिमाभिश्च तस्या नाम महद्यशः ॥ ६२ ॥
न संदृशे तिष्ठति रूपमस्याः
न चक्षुषा पश्यति कश्चिदेनाम् ।
हृदा मनीषा मनसाभिक्लृप्तां
य एनां विदुरमृतास्ते भवन्ति ॥ ६३ ॥
भूयश्च सृष्ट्वा त्रिदशानशेषी
सर्वाधिपत्यं कुरुते भवानी ।
सर्वा दिशश्चोर्ध्वमधश्च तिर्यक्
प्रकाशयन्ती भ्राजते गुह्यकाली ॥ ६४ ॥
नैव स्त्री न पुमानेषा नैव चेयं नपुंसका ।
यद्यच्छरीरमादत्ते तेन तेनैव युज्यते ॥ ६५ ॥
धर्मावहां पापनुदां भगेशीं
ज्ञात्वात्मस्थाममृतां विश्वमातरम् ।
तामीश्वराणां परमां महेश्वरीं
तां देवताना परदेवतां च ।
पतिं पतीनां परमां पुरस्तात्
विद्यावतां गुह्यकालीं मनीषाम् ॥ ६६ ॥

तस्या न कार्यं करणं च विद्यते
न तत्समा चाप्यधिका च दृश्यते ।
परास्याः शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ॥ ६७ ॥

कश्चिन्न तस्याः पतिरस्ति लोके
न चेशिता नैव तस्याश्च लिङ्गम् ।
सा कारणं कारणकारणाधिपा
नास्याश्च कश्चिज्जनिता न चाधिपः ॥ ६८ ॥

एका देवी सर्वभूतेषु गूढा
व्याप्नोत्येतत् सर्वभूतान्तरस्था ।
कर्माध्यक्षा सर्वभूताधिवासा
साक्षिण्येषा केवला निर्गुणा च ॥ ६९ ॥

वशिन्येका निष्क्रियाणां बहूनां
एकं बीजं बहुधा या करोति ।
नानारूपा दशवक्त्रं विधत्ते
नानारूपान् या च बाहून् बिभर्ति ॥ ७० ॥

नित्या नित्यानां चेतना चेतनानां
एका बहूनां विदधाति कामान् ।
तत्कारणं साङ्ख्ययोगाधिगम्यं
ज्ञात्वा देवीं मुच्यते सर्वपाशैः ॥ ७१ ॥

या वै विष्णुं पालने संनियुङ्क्ते
रुद्रं देवं संहृतौ चापि गुह्या ।
तां वै देवीमात्मबुद्धिप्रकाशां
मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ ७२ ॥

निष्कलां निष्क्रियां शान्तां निरवद्यां निरञ्जनाम् ।
बह्वाननकरां देवीं गुह्यामेकां समाश्रये ॥ ७३ ॥
इयं हि गुह्योपनिषत् सुगूढा
यस्या ब्रह्मा देवता विश्वयोनिः ।
एतां जपंश्चान्वहं भक्तियुक्तः
सत्यं सत्यं ह्यमृतः संबभूव ॥ ७४ ॥
वेदवेदान्तयोर्गुह्यं पुराकल्पे प्रचोदितम् ।
नाप्रशान्ताय दातव्यं नाशिष्याय च वै पुनः ॥ ७५ ॥
यस्य देव्यां परा भक्तिर्यथा देव्यां तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ ७६ ॥

महाकाल उवाच—

गुह्योपनिषदित्येषा गोप्यात् गोप्यतरा सदा ।
चतुर्भ्यश्चापि वेदेभ्य एकीकृत्यात्र योजिता ॥ ७७ ॥
उपदिष्टा च सर्गादौ सर्वानेव दिवौकसः ।
एवंविधं च यद्ध्यानमेवंरूपं च कीर्तितम् ॥ ७८ ॥
सा सपर्या परिज्ञेया विधानमधुना शृणु ।
सोऽहमस्मीति प्रथमं सोऽहमस्मि द्वितीयकम् ॥ ७९ ॥
तदस्म्यहं तृतीयं च महावाक्यत्रयं भवेत् ।
आद्यान्येतानि वाक्यानि छन्दांसि परिचक्षते ॥ ८० ॥
देवता गुह्यकाली च रजःसत्त्वतमोगुणाः ।
सर्वेषां प्रणवो बीजं हंसः शक्तिः प्रकीर्तिता ॥ ८१ ॥
मकारश्चाप्यकारश्च ह्युकारश्चेति कीलकम् ।
एभिर्वाक्यत्रयैः सर्वं कर्म प्रोतं विधानतः ॥ ८२ ॥

अनुक्षणं जपंश्चैव निश्चयः परिकीर्तितः ।
द्वितीयोपासकानां हि परिपाटीयमीरिता ॥ ८३ ॥
एवं चाप्यातुरो यस्तु मनुष्यो भक्तिभावितः ।
विमुक्तः सर्वपापेभ्यः कैवल्यायोपकल्पते ।
सर्वाभिः सिद्धिभिस्तस्य किं कार्यं कमलानने ॥ ८४ ॥

इति श्रीमहाकालसंहितायां गुह्यकाल्युपनिषत् समाप्ता

---

# गुह्यषोढान्यासोपनिषत्

अथ गुह्यां न्यसेत् । शिवो भवेत् । शक्तिरूपो भवेत् । विद्याराज्ञीन्यासमेवं चरेत् । न जपो न पूजा न साधनं न कालनियमो न दिवा न रात्रिः । सर्वकालं न्यसेत् । शक्तियुक्तो भवेत् । यथाधिकारवान् न्यसेत् । पूर्णदीक्षां लभेत् । षोढारूपो भवेत् । चिन्तामणिर्भवेत् । क्रीं मातृस्थाने न्यसेत् । परात् परतरो भवेत् । शिवो भवेदित्येकः । अथ ताराद्वयपुटितां मातृकां मातृकापुटितां तां मातृकास्थाने न्यसेत । परातीतारूपो भवेदिति द्वितीयः । अथ शक्तिकाद्वयपुटितां मातृकां मातृकापुटितां तां न्यसेत् । तुर्यारूपो भवेत् । तृतीयकलारूपो भवेत् । कालसंकलनात् काली । सहेलं सलीलं वा स्मरणाद्वरदानेषु चतुरा । तेनेयं दक्षिणा । संबोधनद्वयपुटितां मातृकां मातृकापुटितं नामद्वयं लिपिस्थाने न्यसेत् । तुर्यात् परारूपो भवेत् । चतुर्थीकलारूपो भवेत् । लोकपालसंवादिनी चतुर्थी । अथ पञ्चमीं कलां न्यसेत् । पञ्चमीकलारूपो भवेत् । सुभगात्रयं कूर्चवह्निललनां वह्नेस्त्रिकोणदैवतस्य

लांलनाच्छ्रीकण्ठरूपस्तुर्या परातीता । एतत्पुटितमातृकापुटितमेतन्मन्त्रं मातृकास्थाने न्यसेदिति पञ्चमी । शिवत्वं गच्छति । स सर्वरूपो भवेत् । अथ षष्ठीं कलां न्यसेत् । पूर्णो विद्याराज्ञीं लिपिस्थाने न्यसेद्व्यापयेत् । स शिवो भवेत् । स सर्वज्ञत्वं गच्छति । स कविर्भवेत् । स सन्न्यासी भवेत् । देवो ह वै भवेत् । विश्वरूपो भवेत् । अयुतं न्यसेत् । ऋषिच्छन्दादि पूर्ववद्भवेत् । ब्रह्माण्डगोलकेऽपि या जगतीतले तां सर्वो भुनक्ति । यस्याः स्मरणात् सिद्धो निदेशवर्ती च भवेत् तां न्यसेत् । न्यसनं न्यासः । सम्यक् न्यासः संन्यासः । न तु मुण्डितमुण्डः । तस्य देवादयो नमस्यन्तीति प्रोतं वेद । ॐ शिवम् ॥

इत्याथर्वणे सौभाग्यकाण्डे गुह्यषोढान्यासोपनिषत् समाप्ता

---

# पीताम्बरोपनिषत्

ॐ अथ हैनां ब्रह्मरन्ध्रे सुभगां ब्रह्मास्त्रस्वरूपिणीमाप्नोति । ब्रह्मास्त्रां महाविद्यां शाम्भवीं सर्वस्तम्भकरीं सिद्धां चतुर्भुजां दक्षाभ्यां कराभ्यां मुद्गरपाशौ वामाभ्यां शत्रुजिह्वावज्रे दधानां पीतवाससं पीतालङ्कारसंपन्नां दृढीभूतपीनोन्नतपयोधरयुग्माढ्यां तप्तकार्तस्वरकुण्डलद्वयविराजितमुखाम्भोजां ललाटपट्टोल्लसत्पीतचन्द्रार्धमनुंबिभ्रतीमुद्यद्दिवाकरोद्योतां स्वर्णसिंहासनमध्यकमलसंस्थां धिया संचिन्त्य तदुपरि त्रिकोणषट्कोणवसुपत्रवृत्तान्तः षोडशदलकमलोपरि भूबिम्बत्रयमनुसंधाय तत्राद्ययोन्यन्तरे देवीमाहूय ध्यायेत् । योनिं जगद्योनिं समायमुच्चार्य शिवान्ते भूमाग्रबिन्दुमिन्दुखण्डमग्निबीजं ततो वरुणाङ्कगुणार्णमत्रियुतं स्थिरामुखि इति सम्बोध्य सर्वदुष्टानामिदं

चाभाष्य वाचमिति मुखमिति पदमिति स्तम्भयेति वोच्चार्य जिह्वां वैशारदीं कीलयेति बुद्धिं विनाशयेति प्रोच्चार्य भूमायां वेदाद्यं ततो यज्ञभूगुह्यायां योजयेत् । स महास्तम्भेश्वरः सर्वेश्वरः । स सेनास्तम्भं करोति । किं बहुना विवस्वद्भूतिस्तम्भकर्ता सर्ववातस्तम्भकर्तेति । किं दिवाकर्षयति । स सर्वविद्येश्वरः सर्वमन्त्रेश्वरो भूत्वा पूजाया आवर्तनं त्रैलोक्यस्तम्भिन्याः कुर्यात् । अङ्गमाद्यं द्वारतो गणेशं वटुकं योगिनीं क्षेत्राधीशं च पूर्वादिकमभ्यर्च्य गुरुपङ्क्तिमीशासुरान्तमन्तः प्राच्यादौ क्रमानुगता बगला स्तम्भिनी जृम्भिणी मोहिनी वश्या अचला चला दुर्धरा अकल्मषा आधारा कल्पना कालकर्षिणी भ्रमरिका मदगमना भोगा योगिका एता ह्यष्ट-दलानुगताः पूज्याः । ब्राह्मी माहेश्वरी कौमारी वैष्णवी वाराही नारसिंही चामुण्डा महालक्ष्मीश्च । षड्योनिगर्भोता डाकिनी राकिनी लाकिनी काकिनी शाकिनी हाकिनी वेद्याद्यस्थिरमायाद्याः समभ्यर्च्य शक्राग्नियमनिर्ऋतिवरुण-वायव्यधनदेशानप्रजापतिनागेशाः परिवाराभिमताः स्थिरादिवेदाद्याः सवाहनाः सदस्त्रका बाह्यतोऽभ्यर्च्य तां योनिं रतिप्रीतिमनोभवा एताः सर्वाः समाः पीतांशुका ध्येयाः । तदन्तमूलायां बलादिषोडशानुगताः पूज्याः नीराजनैः । स हैश्वर्ययुक्तो भवति । य एनां ध्यायति स वाग्मी भवति । सोऽमृतमश्नुते । सर्वसिद्धिकर्ता भवति । सृष्टिस्थितिसंहारकर्ता भवति । स सर्वेश्वरो भवति । स तु ऋद्धीश्वरो भवति । स शाक्तः स वैष्णवः स गणपः स शैवः । स जीवन्मुक्तो भवति । स संन्यासी भवति । न्यसनं न्यासः । सम्यङ्न्यासः संन्यासः । न तु मुण्डितमुण्डः । षट्त्रिंशदस्त्रेश्वरो भवेत् सौभाग्यार्चनेनेति प्रोतं वेद । ॐ शिवम् ॥

इति पीताम्बरोपनिषत् समाप्ता

---

# राजश्यामलारहस्योपनिषत्

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥
ॐ शान्तिः शान्तिः शान्तिः ।

ॐ रत्नसानुशिखरेष्वासीनं श्रीराजश्यामलारहस्योपनिषद्वेत्तारं मतङ्ग-ऋषिं गुरुं कूचिमारः प्रोवाच । मतङ्ग भगवन् गुरो राजश्यामलारहस्योपनिषदं मेऽनुब्रूहि । मतङ्गभगवान् कूचिमारं स होवाच । ते राजश्यामलारहस्योपनिषदमुपदिशामि ।

अथातः श्रीराजश्यामलारहस्योपनिषदं व्याख्यास्यामः । मन्त्रजपाधिकरणन्यासाधिकरणस्तोत्राधिकरणपूजाधिकरणमैथुनाधिकरणैः पञ्चभिर्ब्राह्मणो भोगमोक्षमाप्नोति । गुरोरनुज्ञया श्रीराजश्यामलामन्त्रं नित्यं सहस्रसङ्ख्यया त्रिशतेन वाऽष्टाविंशदुत्तरशतेन वा जप्त्वा मन्त्रसिद्धिर्भवति । शुक्रवारे भार्याजगन्मोहनचक्रे त्रिशतं मन्त्रजपेन मन्त्रसिद्धिः । पुरश्चरणसिद्धिर्भवति । नवाशीतिन्यासानां न्यसनेन देवताशरीरी भवति । नवाशीतिन्यासानां न्यसनेन सर्वदेवैर्नमस्कृतो भवति । नवाशीतिन्यासानां शरीरे न्यसनेन गन्धर्वकन्याभिः पूजितो भवति । नवाशीतिन्यासानां न्यसनेन देवस्त्री-भोगमाप्नोति । रम्भासंभोगमाप्नोति । नवाशीतिन्यासानां न्यसनेन देवता-रूपमाप्नोति । देवताशरीरी भूत्वा विमानवान् भवति । विमानमारुह्य स्वर्गं गच्छति । स्वर्गं प्राप्य तद्भोगमाप्नोति । जगन्मोहनचक्रे पाटलकुसुमैः सहस्रसङ्ख्यया पूजिता श्रीराजश्यामला कामितार्थप्रदा मङ्गलप्रदा भवति । वर्षर्तौ श्रावणे मासि सर्वरात्रिषु भार्याजगन्मोहनचक्रे चम्पककुसुमैः सहस्र-सङ्ख्यया पूजिता श्रीराजश्यामलाऽऽरोग्यप्रदा भवति । तत्र शुक्रवारे पूजिता

महालक्ष्मीप्रदा भवति। शुक्रवारयुतायां पौर्णमास्यां भार्याजगन्मोहनचक्रे शतसङ्ख्यया श्रीराजश्यामलाम्बां पूजयन् देहान्तरे रम्भासंभोगमश्नुते। भाद्रपदे मासि महालक्ष्मीव्रतदिनेषु भार्याजगन्मोहनचक्रे श्रीराजश्यामलाम्बां जाजीकुसुमैः पूजयन् मानवो महदैश्वर्यमाप्नोति। शरत्काले सर्वरात्रिषु भार्याजगन्मोहनचक्रे नीलोत्पलैः सहस्रसङ्ख्यया श्यामलां पूजयन् महाभोगमश्नुते। शुक्रवारयुतायां पौर्णमास्यां भार्याजगन्मोहनचक्रे श्रीराजश्यामलां पूजयन् कल्हारैः शचीभोगमश्नुते। हेमन्तकाले सर्वरात्रिषु भार्याजगन्मोहनचक्रे जवन्तीकुसुमैः सहस्रसङ्ख्यया पूजयन् वरुणदेवेन कनकच्छत्री भवति। मार्गशीर्षे पौर्णमास्यां भार्याजगन्मोहनचक्रे कुसुम्भपुष्पैः पूजयन् मानवो देवेन्द्रैश्वर्यमाप्नोति। माघ्यां शुक्रवारयुक्तायां भार्याजगन्मोहनचक्रे द्वन्द्वमल्लिकाकुड्मलैः सहस्रसङ्ख्यया पूजयन् मानवो राजस्त्रीसंभोगमाप्नोति। सर्वदा पुष्पिण्यां भार्यायां जगन्मोहनचक्रे वसन्तपुष्पैः पूजयन् मानवो देवतात्वमश्नुते। चतुर्थ्यां शुक्रवारयुक्तायां भार्याजगन्मोहनचक्रे देवतां श्यामलां जपन् परशिवत्वमाप्नोति। श्रीराजश्यामलाम्नायाः पञ्चदशस्तोत्राणां पारायणेन देवतासन्तुष्टिर्भवति। मङ्गलप्रदा राजवशंकरी च भवति। देवतासान्निध्यमाप्नोति। सन्निधानेन सर्वनिवृत्तिर्भवति। सर्वमङ्गलमाप्नोति। सर्वदेवनमस्कृतो भवति। सर्वे राजानो वश्या भवन्ति। रम्भादिभिः पूजितो भवति। स्वर्गभोगमाप्नोति। गुरोरनुज्ञया शुक्रवारे दिवा रात्रौ च चम्पकतैलाद्यैः कृतस्नातां सर्वालङ्कारभूषितां शुभ्रवस्त्रधरां श्रीचन्दनविलिप्ताङ्गीं कस्तूरीतिलकोपेतां कुङ्कुमलिप्तकुचभारां पुष्पदामयुक्तधम्मिल्लां ताम्बूलपूरितमुखीं स्वेदबिन्दूल्लसन्मुखीं बिम्बोष्ठीं कुन्दरदनां कम्बुकण्ठीं मन्जुहासां यौवनोन्मत्तां कञ्जलोचनां पृथुनितम्बां राजरम्भोरुं संपूर्णचन्द्रवदनां संभोगेच्छां शुकवाणीं सङ्गीतरसिकां कुरवकरसाञ्चितपाणिपादां वशवर्तिनीं भार्यां पुष्पशय्या-

यामुत्तानशायिनीं कृत्वा दर्पणवन्निर्मलं जगन्मोहनचक्रं गन्धद्रव्येण धूपदीपैश्च परिमलीकृतं कुङ्कुममिलितैर्मल्लिकाकुड्मलैः शरसङ्ख्यया पूजयन् ब्राह्मणो देवभोगमाप्नोति । वसन्तनवरात्रिषु भार्याजगन्मोहनचक्रे मल्लिकाकुड्मलैः सहस्रनामभिः रहस्यनामभिश्च पूजिता राजश्यामला राजवशङ्करी भवति । शुक्रवासरयुक्तायां सप्तम्यां रात्रौ भार्याया जगन्मोहनचक्रे प्रथमयामे कल्हारपुष्पैः सहस्रनामभिर्देवतां पूजयन् देवतासालोक्यमाप्नोति । तस्यामेव द्वितीययामे भार्याजगन्मोहनचक्रे पारिजातपुष्पैः सहस्रनामभिः पूजयन् देवतासामीप्यमाप्नोति । तस्यामेव तृतीययामे भार्याजगन्मोहनचक्रे मन्दारपुष्पैः सहस्रनामभि पूजयन् देवतासारूप्यमाप्नोति । तस्यामेव चतुर्थयामे जगन्मोहनचक्रे चम्पकपुष्पैः सहस्रनामभिः पूजयन् देवतासायुज्यमाप्नोति । सर्वरात्रिषु जगन्मोहनचक्रे मल्लिकाकुड्मलैः पूजिता श्यामला कामितार्थप्रदा भवति । ग्रीष्मकाले सर्वरात्रिषु श्रीचन्दनविलिप्तभार्याजगन्मोहनचक्रं पूजयन् सर्वसिद्धिमाप्नोति । दूर्वाभिः पूजयन् महदायुष्यमश्नुते । अष्टम्यां शुक्रवासरयुक्तायां रात्रौ जगन्मोहनचक्रे राजश्यामलाम्बां श्रीचन्दनेन पूजयन् मानवो गन्धलिप्तो जगन्मोहको भवति । महानवम्यां शुक्रवासरयुक्तायां रात्रौ जगन्मोहनचक्रं कुङ्कुमाक्षतैर्देवता पूजयित्वा पूजिताक्षतान् राज्ञे निवेदयेत् । राजा दासभावमाप्नोति । त्रयोदश्यां शुक्रवासरयुक्तायां रात्रौ भार्याजगन्मोहनचक्रं पूजयन् मानवः कामसुन्दरो भवति । चन्द्रदर्शनयुक्तायां द्वितीयायां शुक्रवारयुक्तायां भार्याजगन्मोहनचक्रे राजश्यामलाम्बां श्वेतगन्धाक्षतैः श्वेतपुष्पैश्च पूजयन् साधको देहान्ते राजा भवति । सर्वभोगप्रदा सर्वसौभाग्यप्रदा दीर्घायुष्यप्रदा महाभोगप्रदा महामङ्गलप्रदा काम्यप्रदा श्रीराजश्यामला देवेन्द्रभोगप्रदा भवति । सर्वकाम्यरहस्यपूजान्ते मैथुनं देवताप्रीतिकरं भवति । मोक्षप्रदं भवति । स एव भोगापवर्गः ।

गुर्वनुज्ञया गुप्तः क्षपणको मुक्तो भवति । एवं कान्तायाः पूजिता स्वर्णचक्रे श्यामला मङ्गलप्रदा भवति । द्रोहिणां नोपदेशः । क्षपणकानां पञ्चाधिकरणैः परो मोक्षो नान्यथेति य एवं वेद । इत्युपनिषत् ॥

इति राजश्यामलारहस्योपनिषत् समाप्ता

---

# वनदुर्गोपनिषत्

ॐ अस्य श्रीवनदुर्गामहामन्त्रस्य किरातरूपधर ईश्वर ऋषिः । अनुष्टुप् छन्दः । अन्तर्यामी नारायण ईश्वरो वनदुर्गा गायत्री देवता । दुं बीजम् । स्वाहा शक्तिः । क्लीं कीलकम् । मम वनदुर्गाप्रसादसिद्ध्यर्थे धर्मार्थकाममोक्षार्थे जपे विनियोगः । मूलेन व्यापकत्रयं कुर्यात् । ह्रीं इति व्यापकत्रयम् । ॐ हंसिनी ह्रां अङ्गुष्ठाभ्यां हृदि । ॐ शिखिनी ह्रीं तर्जनीभ्यां शिरसि । ॐ चक्रिणी ह्रूं मध्यमाभ्यां शिखायाम् । ॐ त्रिशूलधारिणी ह्रैं अनामिकाभ्यां कवचम् । ॐ पद्मिनी ह्रौं कनिष्ठिकाभ्यां नेत्रयोः । ॐ गदिनी ह्रः करतलकरपृष्ठाभ्यामस्त्रम् । ॐ भूर्भुवः स्वरोमिति दिग्बन्धः । अथ ध्यानम्--

अरिशङ्खकृपाणखेटबाणान् सधनुश्शूलकतर्जनीर्दधानाम् ।
भज तां महिषोत्तमाङ्गसंस्थां नवदूर्वासदृशी श्रियेऽस्तु दुर्गा ॥१॥
हेमप्रख्यामिन्दुखण्डान्तमौलिं शङ्खारिष्टाभीतिहस्तां त्रिणेत्राम् ।
हेमाब्जस्थां पीतवस्त्रां प्रसन्नां देवीं दुर्गां दिव्यरूपां नमामि ॥२॥

उद्यद्भास्वत्समाभां विधृतनवजपामिन्दुखण्डावबद्धां
ज्योतिर्मौलिं त्रिणेत्रां विविधमणिलसत्कुण्डलां पद्मकाञ्चीम् ।
हारग्रैवेयभूषां मणिगुणवलयाद्यैर्विचित्राम्बराढ्यां
अम्बां पाशाङ्कुशाढ्यामभयवरकरां मञ्जुकान्तां नमामि ॥

सिद्धलक्ष्मी राजलक्ष्मीर्जयलक्ष्मीः सरस्वती ।
श्रीलक्ष्मीर्वरलक्ष्मीश्च प्रसन्ना मम सर्वदा ॥ ४ ॥

मायाकुण्डलिनी क्रिया मधुमती काली कलामालिनी
मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी ।
शक्तिः शङ्करवल्लभा त्रिणयना वाग्वादिनी भैरवी
ह्रींकारी त्रिपुरा परापरमयी माता कुमारीत्यसि ॥ ५ ।

सौवर्णाम्बुजमध्यगां त्रिणयनां सौदामिनीसन्निभां
शङ्खं चक्रवराभयानि दधतीमिन्दोः कलां बिभ्रतीम् ।
ग्रैवेयाङ्गदहारकुण्डलधरामाखण्डलाद्यैः स्तुतां
ध्यायेद्विन्ध्यनिवासिनीं शशिमुखीं पार्श्वस्थपञ्चाननाम् ॥

सिंहारूढां श्यामकान्तिं शङ्खचक्रधरां हृदा ।
दुर्गां देवीं तथा ध्यायेच्छरचापौ च बिभ्रतीम् ॥ ७ ॥

मनुः—हास्वा यमश यमश तिवगभ न्मेत वा क्यंशमक्यश विय तंस्थिपमुस मे यंभ षिपिस्व किं षिरुपु ष्ठन्तिउ ओं क्लीं श्रीं ह्रीं ऐं ॐ । ॐ ह्रीं महाभीषणे करालवदने विन्ध्यवासिनि ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः । नादयक्षयोगिनीपरिवृते दुष्टग्रहनाशिनि हुं फट् स्वाहा । जम्भिनि मोहिनि स्तम्भिनि पूर्वद्वारं बन्धय बन्धय । ढं भ्रद्युं अग्निद्वारं बन्धय बन्धय । ढ ढ ढ भ्रों यमद्वारं बन्धय बन्धय । खं घ्यं निर्ऋतिद्वारं बन्धय बन्धय । ठं ब्लौं वरुणद्वारं बन्धय बन्धय । यं श्लीं वायुद्वारं बन्धय बन्धय । क्लीं म्लौं

कुबेरद्वारं बन्धय बन्धय। ओं हं ईं ईशानद्वारं बन्धय बन्धय। ॐ हं कं स्वें ऊर्ध्वद्वारं बन्धय बन्धय। ग्लौं ग्रों पातालद्वारं बन्धय बन्धय। ईं ईं अधोद्वारं बन्धय बन्धय। सर्वग्रहान् बन्धय बन्धय। सर्पराजचोरदुष्ट-मृगादिसकलभयं बन्धय बन्धय। परप्रयोगभूतप्रेतपिशाचभैरवदुर्गाहनुम-द्गणेश्वरादिसकलकिल्बिषंबन्धय बन्धय। भञ्जय भञ्जय। अमुकं मेह-स्तम्भनं वाक्कायसर्वाङ्गं बन्धय बन्धय। सर्वक्षुद्रोपद्रवं छिन्धि छिन्धि। रे रे घे घे हुं फट् स्वाहा। ॐ श्रीं ह्रीं क्लीं सौः ॐ नमो भगवति माहेश्वरि अन्नपूर्णेश्वरि मां पालय पालय स्वाहा। सं सहस्रबाहवे नमः। पूर्वदिशं चोरान्छत्रून् बन्धय बन्धय। ॐ फ्रों त्रीं क्लीं ब्लूं आं ह्रीं क्रों श्रीं हुं सं सहस्रार हुं फट् स्वाहा। सं सहस्रबाहवे नमः। आग्नेयदिशं चोरान्छत्रून् बन्धय बन्धय। ॐ फ्रों त्रीं क्लीं ब्लूं आं ह्रीं क्रों श्रीं हुं सं सहस्रार हुं फट् स्वाहा। सं सहस्रबाहवे नमः। याम्यदिशं चोरान्छ-त्रून् बन्धय बन्धय। ॐ फ्रों त्रीं क्लीं ब्लूं आं ह्रीं क्रों श्रीं हुं सं सहस्रार हुं फट् स्वाहा। सं सहस्रबाहवे नमः। निर्ऋतिदिशं चोरान्छत्रून् बन्धय बन्धय। ॐ फ्रों त्रीं क्लीं ब्लूं आं ह्रीं क्रों श्रीं हुं सं सहस्रार हुं फट् स्वाहा। सं सहस्रबाहवे नमः। वरुणदिशं चोरान्छत्रून् बन्धय बन्धय। ॐ फ्रों त्रीं क्लीं ब्लूं आं ह्रीं क्रों श्रीं हुं सं सहस्रार हुं फट् स्वाहा। सं सहस्रबाहवे नमः। वायव्यदिशं चोरान्छत्रून् बन्धय बन्धय। ॐ फ्रों त्रीं क्लीं ब्लूं आं ह्रीं क्रों श्रीं हुं सं सहस्रार हुं फट् स्वाहा। सं सहस्रबाहवे नमः। कुबेरदिशं चोरान्छत्रून् बन्धय बन्धय। ॐ फ्रों त्रीं क्लीं ब्लूं आं ह्रीं क्रों श्रीं हुं सं सहस्रार हुं फट् स्वाहा। सं सहस्रबाहवे नमः। ईशानदिशं चोरान्छत्रून् बन्धय बन्धय। ॐ फ्रों त्रीं क्लीं ब्लूं आं ह्रीं क्रों श्रीं हुं सं सहस्रार हुं फट् स्वाहा। सं सहस्रबाहवे नमः। आकाश-

दिशं चोराञ्छत्रून् बन्धय बन्धय। ॐ फ्रों त्रीं क्लीं ब्लूं आं ह्रीं क्रों श्री हुं सं सहस्रार हुं फट् स्वाहा। सं सहस्रबाहवे नमः। पाताल-दिशं चोराञ्छत्रून् बन्धय बन्धय। ॐ फ्रों त्रीं क्लीं ब्लूं आं ह्रीं क्रों श्रीं हुं सं सहस्रार हुं फट् स्वाहा। सं सहस्रबाहवे नमः। अवान्त-रदिशं चोराञ्छत्रून् बन्धय बन्धय। ॐ फ्रों त्रीं क्लीं ब्लूं आं ह्रीं श्रीं हुं सं सहस्रार हुं फट् स्वाहा। सं सहस्रबाहवे नमः। ॐ ऐं ह्रीं श्रीं गं गग गल ह्रीं ऐं क ए ई ल ह्रीं क्लीं ह स क ह ल ह्रीं सौः स क ल ह्रीं गं क्षिप्रप्रसादगणपतये वर वरद आं ह्रीं क्रों सर्वजनं मे वशमानय स्वाहा।

गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम्।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम्॥

ॐ ऐं ह्रीं श्रीं गं ग ग ग ल ह्रीं ऐं क ए ई ल ह्रीं क्लीं ह स क ह ल ह्रीं सौः स क ल ह्रीं गं क्षिप्रप्रसादगणपतये वर वरद आं ह्रीं क्रों सर्वजनं मे वशमानय स्वाहा। ॐ ऐं ह्रीं श्रीं यदंति यच्च दूरके भयं विन्दति मामिह। पवमान वितज्जहि। यदुत्थितं भगवति तत्सर्वं शमय शमय स्वाहा। ॐ ऐं ह्रीं श्रीं गं ग ग ग ल ह्रीं ऐं क ए ई ल ह्रीं क्लीं ह स क ह ल ह्रीं सौः स क ल ह्रीं गं क्षिप्रप्रसादगणपतये वर वरद आं ह्रीं क्रों सर्वजनं मे वशमानय स्वाहा।

ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।
धियो यो नः प्रचोदयात्॥

ॐ ऐं ह्रीं श्रीं गं ग ग ग ल ह्रीं ऐं क ए ई ल ह्रीं क्लीं ह स क ह ल ह्रीं सौः स क ल ह्रीं गं क्षिप्रप्रसादगणपतये वर वरद आं ह्रीं क्रों सर्वजनं मे वशमानय स्वाहा।

त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥

ॐ ऐं ह्रीं श्रीं गं ग ग ग ल ह्रीं ऐं क ए ई ल ह्रीं क्लीं ह स क ह ल ह्रीं सौः स क ल ह्रीं गं क्षिप्रप्रसादगणपतये वर वरद आं ह्रीं क्रों सर्वजनं मे वशमानय स्वाहा ।

ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरिताऽत्यग्निः ॥

ॐ ऐं ह्रीं श्रीं गं ग ग ग ल ह्रीं ऐं क ए ई ल ह्रीं क्लीं ह स क ह ल ह्रीं सौः स क ल ह्रीं गं क्षिप्रप्रसादगणपतये वर वरद आं ह्रीं क्रों सर्वजनं मे वशमानय स्वाहा । ॐ नमो भस्माङ्गरागाय उग्रतेजसे हन हन दह दह पच पच मथ मथ विध्वंसय विध्वंसय हल हल भञ्जय भञ्जय शूलिनि जय जय तेजसा पूर्वां सिद्धिं कुरु कुरु समुद्रं पूर्वादिष्टं शोषय शोषय स्तम्भय स्तम्भय परमन्त्रपरयन्त्रपरतन्त्रपरभूतप्रकटिनि छिन्धि छिन्धि ह्रीं फट् स्वाहा ।

हेतुकं पूर्वपीठे तु ह्याग्नेय्यां त्रिपुरान्तकम् ।
दक्षिणे चाग्निवेतालं नैर्ऋत्यां यमजिह्वकम् ॥
कालाख्यं वारुणे पीठे वायव्यां च करालिनम् ।
उत्तरे ह्येकपादं च त्वीशान्यां भीमरूपिणम् ॥
आकाशे तु निरालम्बं पाताले बडबानलम् ।
यथा ग्रामे यथा क्षेत्रे रक्षेन्मां वटुकस्तथा ॥

ॐ ह्रीं वटुकाय आपदुद्धरणाय कुरु कुरु वटुकाय ह्रीं ॐ वटुकाय स्वाहा ।

सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥

ॐ ह्रीं श्रीं दुं दुर्गायै नमः । ॐ ह्रीं प्रयोगविषये ब्रह्माण्यै नमः । ॐ ह्रीं वारुणि स्वल्विनि माहेश्वर्यै नमः । ॐ ह्रीं कुल्यवासिन्यै कुमार्यै नमः । ॐ जयन्तपुरवाहिनि वाराह्यै नमः । ॐ अष्टमहाकालि रुद्राण्यै नमः । ॐ चित्रकूट इन्द्राण्यै नमः । ॐ एकवृक्षशुम्भिन्यै महालक्ष्म्यै नमः । ॐ त्रिपुरहरब्रह्माण्डनायिकायै नमः । ॐ त्रिपुरहरब्रह्मचारिण्यै नमः । एतानि क्षं क्षं क्षं त्रैलोक्यवशङ्करीबीजाक्षराणि । ॐ ह्रीं कुरु कुरु स्वाहा । ॐ ह्रां ह्रीं ह्रूं जय जय चामुण्डे चण्डिके त्रिदशमुकुटकोटिरत्नसङ्घट्टितचरणारविन्दे गायत्रि सावित्रि सरस्वति माहेश्वरि ब्रह्माण्डभाण्डोदररूपधारिणि प्रकटितदंष्ट्रोग्ररूपवदने घोरघोरानने नयनोज्ज्वलज्वालासहस्रपरिवृते महाट्टहासधवलीकृतदिगन्तरे कोटिदिवाकरसमप्रभे कामरूपिणि महाविद्यासञ्चयप्रभाभासितसकलदिगन्तरे सर्वायुधपरिपूर्णे कपालहस्ते गजाननोत्तरीये भूतवेतालपरिवृते प्रकटितवसुन्धरे मधुकैटभमहिषासुरधूम्रलोचनचण्डमुण्डप्रचण्डरक्तबीजशुम्भनिशुम्भदैत्यनिकृन्तके कालरात्रि महामाये शिवदूति इन्द्राणि शाङ्करि आग्नेयि यामि नैर्ऋति वारुणि वायवि कौबेरि ईशानि ब्रह्माणि विष्णुवक्षःस्थिते त्रिभुवनधराधरे ज्येष्ठे रौद्रे चाम्बिके ब्राह्मि माहेश्वरि वैष्णवि वाराहि इन्द्राणि शाङ्करि चण्डिके शूलिनि महोग्रविषोग्रभक्षितदंष्ट्रिणि हरितहयबद्धबहुकठोरोत्तमाङ्गनवरत्ननिधिकोशे तत्र बहुजिह्वापाणिपादशब्दस्पर्शरूपरसगन्धचक्षुष्मति महाविन्ध्यस्थिते महाज्वालामणिमहिषोपरि स्थिते गन्धर्वविद्याधरस्तुते ऐंकारिह्रींकारिश्रींकारिक्लींकारिहस्ते आं ह्रीं क्रों यज्ञपात्रं प्रवेशय प्रवेशय । द्रां प्रवेशय प्रवेशय । श्रीं कुसुमापय कुसुमापय । श्रीं सर्वं प्रवेशय प्रवेशय । त्रैलोक्यान्तर्वर्तिन्ये-

काम्यचित्तवशीकृते ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः फ्रां फ्रीं फ्रूं फ्रैं फ्रौं फ्रः हुं हुं ह्रीं ह्रीं फट् फट् । एता महाशक्तयः । एताभिररिष्टकारिभूतप्रेतपिशाचान् विध्वंसय विध्वंसय । अष्टादशबीजयन्त्रनामानि । ॐ नमो भगवति महाविद्ये मदनराज्ये क्लीं उपनिद ॐ ह्रीं शिवं कुरु स्वाहा । ॐ ऐं ह्रीं सकलनरमुखभ्रमरि ॐ क्लीं ह्रीं श्रीं सकलराजमुखभ्रमरि ॐ क्रौं सौं ह्रीं सकलदेवतामुखभ्रमरि ॐ ह्रीं क्लीं सकलकामिनीमुखभ्रमरि मनोभञ्जनि ॐ ग्लौं सकललोकमुखभ्रमरि ॐ ईं सौं सकलदेवतामुखभ्रमरि ॐ ह्रीं क्लीं सकलकामिनीमुखभ्रमरि मनोभञ्जनि ॐ ग्लौं सकललोकमुखभ्रमरि ॐ इं सौं सकलदेशमुखभ्रमरि ह्स्ख्फ्रें त्रैलोक्यचित्तभ्रमरि ॐ क्षं क्षां क्षिं क्षीं क्षुं क्षूं क्षें क्षैं क्षों क्षौं क्षं क्षः दिग्भवायुप्रभैरवादिभूतप्रेतपिशाचचित्तभ्रमरि दुष्टग्रहमन्त्रयन्त्रतन्त्रभ्रमरि ह्स्ख्ह्स्रौं त्रैलोक्यान्तरभ्रमरि ॐ हुं क्षूं हुं क्लीं राजमन्त्रयन्त्रतन्त्रभ्रमरि ॐ हुं क्षूं हुं क्लीं परमन्त्रयन्त्रतन्त्रभ्रमरि ॐ हुं क्षूं हुं क्लीं सिद्धमन्त्रयन्त्रतन्त्रभ्रमरि ॐ ऐं ईं सौं सकलसुरासुरसर्वमन्त्रयन्त्र-तन्त्रभ्रमरि सर्वक्षोभिणि सर्वक्लेदिनि सकलमनोन्मादिनि भक्तत्राणपरायणि ॐ ह्रीं रक्तचामुण्डि अमुकमाकर्षयाकर्षय । आं ह्रीं क्रों परमयोगिनि परमकल्याणि पवित्रि ईश्वरि स्वाहा । गायत्रि हुं फट् स्वाहा ।

अक्षिस्पन्दं च दुःस्वप्नं भुजस्पन्दं च दुर्मतिम् ।
दुश्चित्तं दुर्गतिं रोगं सदा नाशय शाङ्करि ॥
महाविद्यां प्रवक्ष्यामि महादेवेन निर्मिताम् ।
चिन्तितां च किरातेन मातृणां चित्तनन्दिनीम् ॥
उत्तमां सर्वविद्यानां सर्वभूतवशङ्करीम् ।
सर्वपापक्षयकरीं सर्वशत्रुनिवारणीम् ॥

कुलगोत्रकरीं विद्याधनधान्ययशस्करीम् ।
जृम्भिणीं स्तम्भिनीं देवीमुत्साहबलवर्धनीम् ॥
सर्वज्वरोच्चाटनीं च सर्वमन्त्रप्रभञ्जनीन् ।
सनातनीं मोहिनीं च सर्वविद्याप्रभेदिनीम् ॥
विश्वयोनिं महाशक्तिमायुःप्रज्ञाविवर्धनीम् ।
मातङ्गीं मदिरामोदां वन्दे तां जगदीश्वरीम् ॥
मोहिनीं सर्वलोकानां तां विद्यां शाम्बरीत्रयाम् ।
अभीष्टफलदां देवीं वन्दे तां जगदीश्वरीम् ॥

परकृताभिचारभस्मनां यन्त्रीकृतदुष्टत्रिकोणयन्त्रमध्ये पदन्यासारिष्टं जिघ्रं छिन्धि छिन्धि । अरिष्टकारिणं हन हन । कृष्णपक्षरिक्तसन्ध्यामरिष्टयुक्तप्रकृतिकाले योगिनीकालाशनिकृतारिष्टं कृतदृष्टिं जिघ्र छिन्धि छिन्धि । अरिष्टकारिणीविभाविनीपरकृतदुष्टग्रहमन्त्रयन्त्रतन्त्रोच्चाटनीप्रेरितब्रह्मराक्षसशाकिनीडाकिनीछायावासिनीकङ्कालीहिरण्याक्षसन्धिग्रहमुक्तकेश्यादिपिशाचेभ्यो महाभयं छिन्धि छिन्धि । अरिष्टकारिणीछेदिनीपरकृतसर्वोपद्रवेभ्यः सर्पोलूककाककङ्कपोतादिवृश्चिकाग्निज्वालामण्डलाग्रेण नवकारश्मशानभस्मना परवश्ययन्त्रतन्त्रादिदुष्टवाक्स्तम्भनं च सभाजयं ब्लूं फट् फट् ॐ नमो महाविद्यायै स्वाहा । ऐकाहिकं द्व्याहिकं त्र्याहिकं चातुर्थिकं पञ्चाहिकं षष्ठाहिकं सप्ताहिकमष्टाहिकं नवाहिकं दशाहिकमेकादशाहिकं द्वादशाहिकं त्रयोदशाहिकमर्धमासिकं मासिकं द्विमासिकं त्रिमासिकं षाण्मासिकं सांवत्सरिकं वातिकं पैत्तिकमापस्मारिकं ब्राह्मीकं श्लैष्मिकं सान्निपातिकं संततज्वरं शीतज्वरमुष्णज्वरं विषमज्वरं गण्डपित्ततालुकविस्फोटकादित्वग्रोगादिसर्वरोगान् सर्वविषं जहि जहि ।

आद्यन्तशून्याः कवयः पुराणाः सूक्ष्मा बृहन्तो ह्यनुशासितारः ।
सर्वान् ज्वरान् घ्नन्तु ममानिरुद्धप्रद्युम्नसङ्कर्षणवासुदेवाः ।
आद्यानिरुद्धाखिलविश्वरूप त्वं पाहि नः सर्वभयादजस्रम् ॥
त्रिपाद्भस्मप्रहरणस्त्रिशिरा रक्तलोचनः ।
स मे प्रीतः सुखं दद्यात् सर्वामयपतिर्ज्वरः ॥

भस्मायुधाय विद्महे तीक्ष्णदंष्ट्राय धीमहि । तन्नो ज्वरः प्रचोदयात् । शिरश्शूलाक्षिशूलकर्णशूलनासिकाशूलगण्डशूलकपोलशूलतालुशूलौष्ठशूलजिह्वाशूलमुखशूलकण्ठशूलकूर्परशूलावरगलशूलस्कन्धशूलबाहुशूलकक्षशूलप्रकोष्ठशूलमणिबन्धशूलकरशूलकरपृष्ठशूलकराङ्गुलीशूलहृदयशूलमनःशूलस्तनशूलपार्श्वशूलकुक्षिशूलनाभिशूलकटिशूलगुदशूलगुह्यशूलमूलशूलोरुशूलजानुशूलजङ्घाशूलगुल्फशूलपादशूलपादाङ्गुलीशूलविस्फोटकप्रभेदिनि ह्रीं ॐ नमो भगवति परच्छेदमंत्रायत्ते भो भो भो दृष्टिशूलमुष्टिशूलमुष्टिपृष्ठशूलमुष्टिपार्श्वशूलसर्वशूलपारावारङ्गमनायै स्वाहा । ॐ नमो भगवते नायकाय छिन्धि छिन्धि आवेशयावेशय परमेश्वराय अघोररूपाय ह्रीं ज्वल ज्वल मुलूटूमुलूटू ह्रीं फट् फट् स्वाहा । आत्मरक्षापररक्षाप्रत्यक्षरक्षाऽग्निरक्षावायुरक्षोदकरक्षामहान्धकारोल्काविद्युदग्न्यनिलचोरशस्त्रास्त्रेभ्यो भयान्मां रक्ष रक्ष । पथगतांश्चोरान् शत्रून् बन्धय बन्धय । ॐ फ्रों त्रीं क्लीं ब्लूं आं ह्रीं क्रों श्रीं हुं फट् स्वाहा । ॐ नमो भगवते कार्तवीर्यार्जुनाय महाभुजपरिवारितसप्तद्वीपाय । अस्मद्वसुविलुम्पकान् चोरसमूहान् सहस्रभुजैर्दशदिक्षु बन्धय बन्धय । चोरान् ध ध ध ठः ठः ठः हुं फट् स्वाहा । महादेवस्य तेजसा भयङ्करादिष्टदेवतां बन्धयामि । महागणेन पञ्चशीर्षेण पाणिना ॐ ब्लूं ग्लौं हं गं ग्लौं हरिद्रागणपतये वरवरदाय सर्वजनहृदयं स्तम्भय स्तम्भय स्वाहा । कलहलपिङ्गलकण्ठमयीं रुद्राङ्गीं रुद्रजटीं महावृक्षनिवासिनीं महामत्तमातङ्गीं

स्वरबीजैर्बन्धयामि । ॐ श्रीं ह्रीं ऐं ॐ नम उच्छिष्टचाण्डालि मातङ्गि सर्वजनवशङ्करि क्लीं स्वाहा । ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ नमो भगवति मातङ्गि सर्वजनमनोहारिणि सर्वदुःखरञ्जनि क्लीं ह्रीं श्रीं सर्वराजवशङ्करि सर्वस्त्रीपुरुषवशङ्करि सर्वदुष्टमृगवशङ्करि सर्वसत्त्ववशङ्करि सर्वलोकवशङ्करि अमुकं वशमानय स्वाहा । ॐ ऐं ह्रीं श्रीं अं आं मातङ्गि ॐ ऐं ह्रीं श्रीं इं ईं मातङ्गि ॐ ऐं ह्रीं श्रीं उं ऊं मातङ्गि ॐ ऐं ह्रीं श्रीं ऋं ॠं मातङ्गि ॐ ऐं ह्रीं श्रीं ऌं ॡं मातङ्गि ॐ ऐं ह्रीं श्रीं एं ऐं मातङ्गि ॐ ऐं ह्रीं श्रीं ओं औं मातङ्गि ॐ ऐं ह्रीं श्रीं अं अः मातङ्गि ॐ स्वर स्वर । ब्रह्मदण्ड विस्फुर विस्फुर विष्णुदण्ड विस्फोटय विस्फोटय । रुद्रदण्ड प्रज्वल प्रज्वल । वायुदण्ड प्रहर प्रहर । इन्द्रदण्ड भक्षय भक्षय । निर्ऋतिदण्ड हिलि हिलि । यमदण्ड रक्ष रक्ष । कुबेरदण्ड प्रज्वल प्रज्वल । अग्निदण्ड शमय शमय । वरुणदण्ड एह्येहि । नित्यानन्दिनि हंसिनि चक्रिणि शङ्खिनि गदिनि पद्मिनि त्रिशूलधारिणि हुं फट् । क्रीं क्रीं क्रीं ह्रीं ह्रीं ह्रीं ।

आयुः प्रज्ञां च सौभाग्यं धान्यं च धनमेव च ।
सदा शिवं पुत्रवृद्धिं देहि मे चण्डिके शुभे ॥

अथातो मन्त्रपदानि भवन्ति । ॐ छां छायायै स्वाहा । ॐ चं चतुरायै स्वाहा । ॐ कुं कुलि स्वाहा । ॐ खुं खुलि स्वाहा । ॐ हिं हिलि स्वाहा । ॐ जं जलि स्वाहा । ॐ झं झलि स्वाहा । ओं ऐं पिलि स्वाहा । ओं ऐं पिलि पिलि स्वाहा । ॐ हरं स्वाहा । ॐ हरहरं स्वाहा । ओं गं गन्धर्वाय स्वाहा । ॐ यं यक्षाय स्वाहा । ॐ यं यक्षाधिपतये स्वाहा । ॐ रं रक्षसे स्वाहा । ॐ रं रक्षोऽधिपतय स्वाहा । ॐ भूः स्वाहा । ॐ भुवः स्वाहा । ॐ स्वः स्वाहा । ॐ उल्कामुखि स्वाहा । ॐ रुं रुद्रजटि स्वाहा । ॐ अं ऊं मं ब्रह्मविष्णुरुद्रतेजसे स्वाहा । ॐ ह्रीं

श्रीं क्लीं नमश्चण्डिकायै महासिद्धलक्ष्म्यै ममेष्टार्थसिद्धये धीमहि। तन्नः शक्तिः प्रचोदयात्। ॐ ऐं वद वद वाग्वादिनि क्लीं सौं महाक्षेमं कुरु कुरु ज्वाला-मालिनि वह्निवासिनि विद्याया नाभौ हुं फट् स्वाहा। वर्णात्मिकायै ब्रह्माण्यै नमः। ॐ ऐं ह्रीं श्रीं ऐं अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं क्षं नमः स्वाहा। ॐ ऐं ह्रीं श्रीं ङं ञं णं नं मं स्वाहा। ॐ ऐं ह्रीं श्रीं गायत्रि सावित्रि सरस्वति हुं फट् स्वाहा। ये भूतप्रेतपिशाचब्रह्मराक्षसनवग्रहभूतवेतालशाकिनीडाकिनी-कूश्माण्डवासवाश्वत्वरराजपुरुषकलहपुरुषाः कुसुमाम्भोवासिनस्तेषां बाधकं कण्टकं बध्नामि। हस्तौ बध्नामि। चक्षुषी बध्नामि। श्रोत्रे बध्नामि। मुखं बध्नामि। घ्राणं बध्नामि। जिह्वां बध्नामि। गतिं बध्नामि। मतिं बध्नामि। बुद्धिं बध्नामि। आकाशं बध्नामि। पातालं बध्नामि। अन्तरिक्षं बध्नामि। पार्श्वौ बध्नामि। सर्वाङ्गं बध्नामि। ॐ क्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय। जिह्वां कीलय। बुद्धिं विनाशय। ह्रीं ॐ स्वाहा। ॐ नमो भगवति पुण्यपवित्रि महाविद्यासर्वार्थसाधिनि सिद्धलक्ष्मि वागीश्वरि परमसुन्दरि मां रक्ष रक्ष। ॐ ह्रीं फट् स्वाहा। ॐ हुं ह्रीं श्रीं क्लीं सौं ऐं ह्रीं ॐ नमो भगवति महामाये कालि कङ्कालि महाकालि शाङ्करि परमकल्याणि पवित्रि शाम्भवि परंज्योतिःपरमात्मिके आदिभवान्यानन्दयोगिन्यनादियोगिन्यादिपतियोगिनि रेणुकायोगिन्येकाक्षरि परब्रह्मणि महाकालि सिद्धिकारिणि शिवरूपिणि सरस्वति मत्तकालि मन्मथमनोन्मादिन्यादिभवान्यखिलाण्डकोटिब्रह्माण्डनायकि ब्रं ब्रं ब्रह्माण्ड-निलयं मां मां माहेश्वरि महामाये वैं वैं वैष्णवि वरमुनिदेवि वां वां वाराह्यादिभेदिनि वं वं वनदुर्गे वरत्रिवेदि स्थं स्थं स्थलदुर्गे स्थलत्रिवेदि

जं जं जलदुर्गे जलत्रिवेदि अं अं अग्निदुर्गे आनन्दवेदि चं चं चण्डदुर्गे चण्डकपालिनि सां सां सकलदुरितनिवारणि हं हं हंसरूपिण्यट्टहासिनि ऊं ऊं उत्तिष्ठ पुरुषि दुं दुं ह्रीं ह्रीं क्रों क्रों मां मां महाविद्ये दुं ह्रीं दुर्गायै नमः। नमस्ते अस्तु मा मा हिंसीः। द्विषन्तं मे नाशय। तं मृत्यो मृत्यवे नय। इष्टं रक्ष रक्ष। अरिष्टं मे भञ्जय भञ्जय स्वाहा।

ॐ ऐं ह्रीं श्रीं आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च। हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्। ॐ सूर्याय स्वाहा। ॐ ऐं ह्रीं श्रीं आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य सङ्गथे। ॐ सोमाय स्वाहा। ॐ ऐं ह्रीं श्रीं अग्निर्मूर्धा दिवः ककुत् पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वति। ॐ अङ्गारकाय स्वाहा। ॐ ऐं ह्रीं श्रीं उद्बुध्यध्वं समनसः सखायः समग्निमिन्ध्वं बहवः सनीळाः। दधिक्रामग्निमुषसं च देवीमिन्द्रावतोऽवसे नि ह्वये वः। ॐ बुधाय स्वाहा। ॐ ऐं ह्रीं श्रीं बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणं धेहि चित्रम्। ॐ बृहस्पतये स्वाहा। ॐ ऐं ह्रीं श्रीं शुक्रः शुशुक्वाँ उषो न जारः पप्रा समीची दिवो न ज्योतिः। परि प्रजातः क्रत्वा बभूथ भुवो देवानां पिता पुत्रः सन्। ॐ शुक्राय स्वाहा। ॐ ऐं ह्रीं श्रीं शमग्निरग्निभिः करच्छं नस्तपतु सूर्यः। शं वातो वात्वरपा अप स्रिधः। ॐ शनैश्चराय स्वाहा। ॐ ऐं ह्रीं श्रीं कया नश्चित्र आ भुवदूती सदावृधः सखा। कया शचिष्ठया वृता। ॐ राहवे स्वाहा। ॐ ऐं ह्रीं श्रीं केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे। समुषद्भिरजा-यथाः। ॐ केतवे स्वाहा। ॐ ऐं ह्रीं श्रीं अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं क्षं नमः स्वाहा।

ॐ अश्विन्यै स्वाहा। ॐ भरण्यै स्वाहा। ॐ कृत्तिकायै स्वाहा। ॐ रोहिण्यै स्वाहा। ॐ मृगशीर्षाय स्वाहा। ॐ आर्द्रायै स्वाहा। ॐ पुनर्वसवे स्वाहा। ॐ पुष्याय स्वाहा। ॐ आश्रेषायै स्वाहा। ॐ मघाय स्वाहा। ॐ पूर्वफल्गुन्यै स्वाहा। ॐ उत्तरफल्गुन्यै स्वाहा। ॐ हस्ताय स्वाहा। ॐ चित्रायै स्वाहा। ॐ अभिजित्यै स्वाहा। ॐ विशाखायै स्वाहा। ॐ अनूराधाय स्वाहा। ॐ ज्येष्ठायै स्वाहा। ॐ मूलाय स्वाहा। ॐ पूर्वाषाढायै स्वाहा। ॐ उत्तराषाढायै स्वाहा। ॐ श्रोणायै स्वाहा। ॐ श्रविष्ठायै स्वाहा। ॐ शतभिषजे स्वाहा। ॐ पूर्वप्रोष्ठपदाय स्वाहा। ॐ उत्तरप्रोष्ठपदाय स्वाहा। ॐ रेवत्यै स्वाहा। ॐ नमो भगवते रुद्राय नमः।

ॐ नमो भगवते रुद्राय। यममुखेन पञ्चयोजनविस्तीर्णेन रुद्रो बध्नातु रुद्रमण्डलम्। रुद्र सपरिवार देवताप्रत्यधिदेवतासहितं रुद्रमण्डलं मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय। सर्वतो मां रक्ष रक्ष। अचल-मचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राजचोरसर्पसिंहव्याघ्राग्न्याद्युपद्रवं नाशय नाशय। ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं फ्रों आं ह्रीं क्रों हुं फट् स्वाहा। त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माम्‌तात्। यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु। वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः। रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि। ॐ नमो भगवते रुद्राय नमः।

ॐ नमो भगवते रुद्राय। प्राच्यां दिशीन्द्रो देवता। ऐरावतारूढो हेमवर्णो वज्राङ्कुशहस्त इन्द्रो बध्नात्विन्द्रमण्डलम्। इन्द्र सपरिवार देवता-प्रत्यधिदेवतासहितमिन्द्रमण्डलं मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय।

सर्वतो मां रक्ष रक्ष । अचलमचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राजचोरसर्पसिंहव्याघ्राग्न्याद्युपद्रवं नाशय नाशय । ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं व्लूं फ्रों आं ह्रीं क्रों हुं फट् स्वाहा । त्रियम्बकं यजामहे सुगन्धि पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् । इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । आग्नेय्यां दिश्यग्निर्देवता । मेषारूढो रक्तवर्णो ज्वालाहस्तोऽग्निर्बध्नात्वग्निमण्डलम् । अग्ने सपरिवार देवताप्रत्यधिदेवतासहितमग्निमण्डलं मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय । सर्वतो मां रक्ष रक्ष । अचलमचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राजचोरसर्पसिंहव्याघ्राग्न्याद्युपद्रवं नाशय नाशय । ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं व्लूं फ्रों आं ह्रीं क्रों हुं फट् स्वाहा । त्रियम्बकं यजामहे सुगन्धि पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् । अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । याम्यां दिशि यमो देवता । महिषारूढो नीलवर्णः कालदण्डो यमो बध्नातु यममण्डलम् । यम सपरिवार देवताप्रत्यधिदेवतासहितं यममण्डलं मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय । सर्वतो मां रक्ष रक्ष । अचलमचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राजचोरसर्पसिंहव्याघ्राग्न्याद्युपद्रवं नाशय नाशय । ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं व्लूं फ्रों आं ह्रीं क्रों हुं फट् स्वाहा । त्रियम्बकं यजामहे सुगन्धि पुष्टिवर्धनम ।

उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । यमाय सोमं सुनुत यमाय जुहुता हविः । यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । नैर्ऋत्यां दिशि निर्ऋतिर्देवता । नरारूढो नीलवर्णः खड्गहस्तो निर्ऋतिर्बध्नातु निर्ऋतिमण्डलम् । निर्ऋते सपरिवार देवताप्रत्यधिदेवतासहितं निर्ऋतिमण्डलं मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय । सर्वतो मां रक्ष रक्ष । अचलमचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राजचोरसर्पसिंहव्याघ्राग्न्याद्युपद्रवं नाशय नाशय । ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं फ्रों आं ह्रीं क्रों हुं फट् स्वाहा । त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । मोषुणः परापरा निर्ऋतिर्दुर्हणावधीत् । पदीष्ट तृष्णया सह । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । वारुण्यां दिशि वरुणो देवता । मकरारूढः श्वेतवर्णः पाशहस्तो वरुणो बध्नातु वरुणमण्डलम् । वरुण सपरिवार देवताप्रत्यधिदेवतासहितं वरुणमण्डलं मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय । सर्वतो मां रक्ष रक्ष । अचलमचलमाक्रम्याक्रम्य महावज्र-कवचैरस्त्रैः राजचोरसर्पसिंहव्याघ्राग्न्याद्युपद्रवं नाशय नाशय । ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं फ्रों आं ह्रीं क्रों हुं फट् स्वाहा । त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके । तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशंस

मा न आयुः प्र मोषीः। वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः। रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि। ॐ नमो भगवते रुद्राय नमः।

ॐ नमो भगवते रुद्राय। वायव्यां दिशि वायुर्देवता। मृगारूढो धूम्रवर्णो ध्वजहस्तो वायुर्बध्नातु वायुमण्डलम्। वायो सपरिवार देवता-प्रत्यधिदेवतासहितं वायुमण्डलं मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय। सर्वतो मां रक्ष रक्ष। अचलमचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राज-चोरसर्पसिंहव्याघ्राग्न्याद्युपद्रवं नाशय नाशय। ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं क्रों आं ह्रीं क्रों हुं फट् स्वाहा। त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माम्रृतात्। तव वायवृतस्पते त्वष्टुर्जामा-तरद्भुत। अवां स्या वृणीमहे। वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः। रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि। ॐ नमो भगवते रुद्राय नमः।

ॐ नमो भगवते रुद्राय। कौबेर्यां दिशि कुबेरो देवता। अश्वा-रूढः पीतवर्णो गदाङ्कुशहस्तः कुबेरो बध्नातु कुबेरमण्डलम्। कुबेर सपरिवार देवताप्रत्यधिदेवतासहितं कुबेरमण्डलं मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय। सर्वतो मां रक्ष रक्ष। अचलमचलमाक्रम्याक्रम्य महावज्र-कवचैरस्त्रैः राजचोरसर्पसिंहव्याघ्राग्न्याद्युपद्रवं नाशय नाशय। ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं क्रों आं ह्रीं क्रों हुं फट् स्वाहा। त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माम्रृतात्। सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति। सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै। वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः। रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि। ॐ नमो भगवते रुद्राय नमः।

ॐ नमो भगवते रुद्राय। ईशान्यां दिशीशानो देवता। वृषभारूढः श्वेतवर्णस्त्रिशूलहस्त ईशानो बध्नात्वीशानमण्डलम्। ईशान सपरिवार देवताप्रत्यधिदेवतासहितमीशानमण्डलं मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय। सर्वतो मां रक्ष रक्ष। अचलमचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राजचोरसर्पसिंहव्याघ्राग्न्याद्युपद्रवं नाशय नाशय। ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं फ्रों आं ह्रीं क्रों हुं फट् स्वाहा। त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्। तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये। वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः। रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि। ॐ नमो भगवते रुद्राय नमः।

ॐ नमो भगवते रुद्राय। ऊर्ध्वायां दिशि ब्रह्मा देवता। हंसारूढो रक्तवर्णः कमण्डलुहस्तो ब्रह्मा बध्नातु ब्रह्ममण्डलम्। ब्रह्मन् सपरिवार देवताप्रत्यधिदेवतासहितं ब्रह्ममण्डलं मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय। सर्वतो मां रक्ष रक्ष। अचलमचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राजचोरसर्पसिंहव्याघ्राग्न्याद्युपद्रवं नाशय नाशय। ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं फ्रों आं ह्रीं क्रों हुं फट् स्वाहा। त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्। ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम्। श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन्। वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः। रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि। ॐ नमो भगवते रुद्राय नमः।

ॐ नमो भगवते रुद्राय। अधस्ताद्दिशि वासुकिर्देवता। कूर्मारूढो नीलवर्णः पद्महस्तो वासुकिर्बध्नातु वासुकिमण्डलम्। वासुके सपरिवार देवता-

प्रत्यधिदेवतासहितं वासुकिमण्डलं मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय। सर्वतो मां रक्ष रक्ष। अचलमचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राजचोर-सर्पसिंहव्याघ्राग्न्याद्युपद्रवं नाशय नाशय। ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं फ्रौं आं ह्रीं क्रों हुं फट् स्वाहा। त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्। नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः। वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः। रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि। ॐ नमो भगवते रुद्राय नमः।

ॐ नमो भगवते रुद्राय। अवान्तरस्यां दिशि विष्णुर्देवता। गरुडारूढः श्यामवर्णः शङ्खचक्राङ्कितहस्तो विष्णुर्बध्नातु विष्णुमण्डलम्। विष्णो सपरिवार देवताप्रत्यधिदेवतासहितं विष्णुमण्डलं मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय। सर्वतो मां रक्ष रक्ष। अचलमचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राजचोरसर्पसिंहव्याघ्राग्न्याद्युपद्रवं नाशय नाशय। ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं फ्रौं आं ह्रीं क्रों हुं फट् स्वाहा। त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्। इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे। वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः। रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि। ॐ नमो भगवते रुद्राय नमः।

ॐ नमो भगवते रुद्राय। खिक् च खीहितिश्च खिहितिश्च। उष्णा च शीता च। उग्रा च भीमा च। सदाम्नी सेदिरनिरा। एतास्ते अग्ने घोरास्तनुवः। ताभिरमुं गच्छ स्वाहा।

अष्टापिधाना नकुली दन्तैः परिवृता पविः।
सर्वस्यै वाच ईशाना चारु मामिह वादयेत्॥

ऐं वद वद वाग्वादिनि स्वाहा । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । प्राच्यां दिशीन्द्रः सपरिवारो देवता प्रत्यधिदेवता । तद्दिक्षु त्रिशूलको नाम राक्षसः । तस्याष्टादशकोटिभूत-प्रेतपिशाचब्रह्मराक्षसशाकिनीडाकिनीकाकिनीहाकिनीयाकिनीराकिनीलाकिनी-वेतालकामिनीग्रहान् बन्धयामि मम सपरिवारकस्य । सर्वतो मां रक्ष रक्ष । अचलमचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राजचोरसर्पसिंहव्याघ्रा-म्याद्युपद्रवं नाशय नाशय । ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं फ्रों आं ह्रीं क्रों हुं फट् स्वाहा । त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । लं इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । आग्नेय्यां दिश्यग्निः सपरिवारो देवता प्रत्यधिदेवता । तद्दिक्षु मारीचको नाम राक्षसः । तस्याष्टादशकोटिभूत-प्रेतपिशाचब्रह्मराक्षसशाकिनीडाकिनीकाकिनीहाकिनीयाकिनीराकिनीलाकिनी-वेतालकामिनीग्रहान् बन्धयामि मम सपरिवारकस्य । सर्वतो मां रक्ष रक्ष । अचलमचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राजचोरसर्पसिंहव्याघ्रा-म्याद्युपद्रवं नाशय नाशय । ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं फ्रों आं ह्रीं क्रों मां हुं फट् स्वाहा । त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । याम्यां दिशि यमः सपरिवारो देवता प्रत्यधिदेवता । तद्दिक्ष्वेकपिङ्गलको नाम राक्षसः । तस्याष्टादशकोटि-

भूतप्रेतपिशाचब्रह्मराक्षसशाकिनीडाकिनीकाकिनीहाकिनीयाकिनीराकिनी लाकिनीवेतालकामिनीग्रहान् बन्धयामि मम सपरिवारकस्य । सर्वतो मां रक्ष रक्ष । अचलमचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राजचोरसर्पसिंहव्याघ्राग्न्याद्युपद्रवं नाशय नाशय । ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं क्रों आं ह्रीं क्रों यां हुं फट् स्वाहा । त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । यमाय सोमं सुनुत यमाय जुहुता हविः । यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । नैर्ऋत्यां दिशि निर्ऋतिः सपरिवारो देवता प्रत्यधिदेवता । तद्दिक्षु सत्यको नाम राक्षसः । तस्याष्टादशकोटिभूतप्रेतपिशाचब्रह्मराक्षसशाकिनीडाकिनीकाकिनीहाकिनी याकिनीराकिनीलाकिनीवेतालकामिनीग्रहान् बन्धयामि मम सपरिवारकस्य । सर्वतो मां रक्ष रक्ष । अचलमचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राजचोरसर्पसिंहव्याघ्राग्न्याद्युपद्रवं नाशय नाशय । ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं क्रों आं ह्रीं क्रों सां हुं फट् स्वाहा । त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धानान्मृत्योर्मुक्षीय मामृतात् । मोषुणः परापरा निर्ऋतिर्दुर्हणावधीत् । पदीष्ट तृष्णया सह । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । वारुण्यां दिशि वरुणः सपरिवारो देवता प्रत्यधिदेवता । तद्दिक्षु यत्वलो नाम राक्षसः । तस्याष्टादशकोटिभूतप्रेतपिशाचब्रह्मराक्षसशाकिनीडाकिनीकाकिनीहाकिनी याकिनीराकिनीलाकिनीवेतालकामिनीग्रहान् बन्धयामि मम सपरिवारकस्य ।

सर्वतो मां रक्ष रक्ष। अचलमचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राजचोरसर्पसिंहव्याघ्राग्न्याद्युपद्रवं नाशय नाशय। ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं क्ष्रौं आं ह्रीं क्रौं वां हुं फट् स्वाहा। त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्। इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके। तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः। वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः। रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि। ॐ नमो भगवते रुद्राय नमः।

ॐ नमो भगवते रुद्राय। वायव्यां दिशि वायुः सपरिवारो देवता प्रत्यधिदेवता। तद्दिक्षु प्रलम्बको नाम राक्षसः। तस्याष्टादशकोटिभूतप्रेत-पिशाचब्रह्मराक्षसशाकिनीडाकिनीकाकिनीहाकिनीयाकिनीराकिनीलाकिनी वेतालकामिनीग्रहान् बन्धयामि मम सपरिवारकस्य। सर्वतो मां रक्ष रक्ष। अचलमचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राजचोरसर्पसिंहव्याघ्राग्न्याद्युपद्रवं नाशय नाशय। ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं क्ष्रौं आं ह्रीं क्रौं ह्रां हुं फट् स्वाहा। त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्। तव वायवृतस्पते त्वष्टुर्जामातरद्भुत। अवां स्या वृणीमहे। वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः। रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि। ॐ नमो भगवते रुद्राय नमः।

ॐ नमो भगवते रुद्राय। कौबेर्यां दिशि कुबेरः सपरिवारो देवता प्रत्यधिदेवता। तद्दिक्ष्वश्वालको नाम राक्षसः। तस्याष्टादशकोटिभूतप्रेतपिशाच-ब्रह्मराक्षसशाकिनीडाकिनीकाकिनीहाकिनीयाकिनीराकिनीलाकिनीवेताल कामिनीग्रहान् बन्धयामि मम सपरिवारकस्य। सर्वतो मां रक्ष रक्ष। अचलमचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राजचोरसर्पसिंहव्याघ्राग्न्याद्युपद्रवं

नाशय नाशय । ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं फ्रों आं ह्रीं क्रों सां हुं फट् स्वाहा । त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति । सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जाहे । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । ईशान्यां दिशीशानः सपरिवारो देवता प्रत्यधिदेवता । तद्दिक्षून्मत्तको नाम राक्षसः । तस्याष्टादशकोटिभूतप्रेतपिशाच-ब्रह्मराक्षसशाकिनीडाकिनीकाकिनीहाकिनीयाकिनीराकिनीलाकिनीवेताल कामिनीग्रहान् बन्धयामि मम सपरिवारकस्य । सर्वतो मां रक्ष रक्ष । अचलमचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राजचोरसर्पसिंहव्याघ्राग्न्याद्युपद्रवं नाशय नाशय । ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं फ्रों आं ह्रीं क्रों ॐ हुं फट् स्वाहा । त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम् । पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । ऊर्ध्वायां दिशि ब्रह्मा सपरिवारो देवता प्रत्यधिदेवता । तद्दिक्ष्वाकाशवासी नाम राक्षसः । तस्याष्टादशकोटिभूतप्रेत-पिशाचब्रह्मराक्षसशाकिनीडाकिनीकाकिनीहाकिनीयाकिनीराकिनीलाकिनी - वेतालकामिनीग्रहान् बन्धयामि मम सपरिवारकस्य । सर्वतो मां रक्ष रक्ष । अचलमचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राजचोरसर्पसिंहव्याघ्राग्न्याद्युपद्रवं नाशय नाशय । ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं फ्रों आं ह्रीं क्रों ॐ हुं

फट् स्वाहा। त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्। ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम्। श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन्। वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः। रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि। ॐ नमो भगवते रुद्राय नमः।

ॐ नमो भगवते रुद्राय। अधस्ताद्दिशि वासुकिः सपरिवारो देवता प्रत्यधिदेवता। तद्दिक्षु पातालवासी नाम राक्षसः। तस्याष्टादशकोटिभूतप्रेत-पिशाचब्रह्मराक्षसशाकिनीडाकिनीकाकिनीहाकिनीयाकिनीराकिनीलाकिनी-वेतालकामिनीग्रहान् बन्धयामि मम सपरिवारकस्य। सर्वतो मां रक्ष रक्ष। अचलमचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राजचोरसर्पसिंहव्याघ्राग्न्याद्यु-पद्रवं नाशय नाशय। ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं फ्रों आं ह्रीं क्रों लां हुं फट् स्वाहा। त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्। नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः। वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः। रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि। ॐ नमो भगवते रुद्राय नमः।

ॐ नमो भगवते रुद्राय। अवान्तरस्यां दिशि विष्णुः सपरिवारो देवता प्रत्यधिदेवता। तद्दिक्षु भीमको नाम राक्षसः। तस्याष्टादशकोटिभूतप्रेतपिशाचब्रह्मराक्षसशाकिनीडाकिनीकाकिनीहाकिनी याकिनीराकिनीलाकिनीवेतालकामिनीग्रहान् बन्धयामि मम सपरिवारकस्य। सर्वतो मां रक्ष रक्ष। अचलमचलमाक्रम्याक्रम्य महावज्रकवचैरस्त्रैः राजचोर-सर्पसिंहव्याघ्राग्न्याद्युपद्रवं नाशय नाशय। ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं फ्रों आं ह्रीं क्रों ॐ हुं फट् स्वाहा। त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्।

उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । ॐ कालि हुं कालि मं कालि पुलकिते पुलकिते उच्चाटन्युच्चाटनि ॐ कालि भवानि राजपुरुषस्त्रीपुरुषवशङ्करि स्वाहा । ॐ नमो भगवति इन्द्राक्षि मम शत्रुप्राणिनां रक्तपायिनि ह्रां ग्रस ग्रस । गृह्ण गृह्ण । दुष्टग्रहज्वालामालिनि मोहिनि स्तम्भय स्तम्भय । सर्व-दुष्टप्रदुष्टान् शोषय शोषय । मारय मारय । मम शत्रूणां शिरोलुण्ठनं कुरु कुरु । ठः ठः ठः स्वाहा । हुं झटि स्वाहा । त्रियम्बकं यजामहे सुगन्धि पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । उत्त्वा मदन्तु स्तोमाः कृणुष्व राधो अद्रिवः । अव ब्रह्म द्विषो जहि । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । प्राच्यां दिशि ॐ नमो भगवति इन्द्राणि वज्रहस्ताभ्यां मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय । सर्वतो मां रक्ष रक्ष । ह्रां ग्रस ग्रस । गृह्ण गृह्ण । हुं झटि स्वाहा । त्रियम्बकं यजामहे सुगन्धि पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । आग्नेय्यां दिशि ॐ नमो भगवति आग्नेयि ज्वालाहस्ताभ्यां मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय । सर्वतो

मां रक्ष रक्ष । ह्रां ग्रस ग्रस । गृह्ण गृह्ण । हुं झटि स्वाहा । त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । याम्यां दिशि ॐ नमो भगवति यामि कालदण्डहस्ताभ्यां मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय । सर्वतो मां रक्ष रक्ष । ह्रां ग्रस ग्रस । गृह्ण गृह्ण । हुं झटि स्वाहा । त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । यमाय सोमं सुनुत यमाय जुहुता हविः । यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । नैर्ऋत्यां दिशि ॐ नमो भगवति निर्ऋति खड्गहस्ताभ्यां मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय । सर्वतो मां रक्ष रक्ष । ह्रां ग्रस ग्रस । गृह्ण गृह्ण । हुं झटि स्वाहा । त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । मोषुणः परापरा निर्ऋतिर्दुर्हणावधीत् । पदीष्ट तृष्णया सह । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । वारुण्यां दिशि ॐ नमो भगवति वारुणि पाशहस्ताभ्यां मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय । सर्वतो मां रक्ष रक्ष । ह्रां ग्रस ग्रस । गृह्ण गृह्ण । हुं झटि स्वाहा । त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ।

इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके । तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । वायव्यां दिशि ॐ नमो भगवति वायवि ध्वजहस्ताभ्यां मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय । सर्वतो मां रक्ष रक्ष । ह्रां ग्रस ग्रस । गृह्ण गृह्ण । हुं झटि स्वाहा । त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । तव वायवृतस्पते त्वष्टुर्जामातरद्भुत । अवां स्या वृणीमहे । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । कौबेर्यां दिशि ॐ नमो भगवति कौबेरि गदाङ्कुशहस्ताभ्यां मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय । सर्वतो मां रक्ष रक्ष । ह्रां ग्रस ग्रस । गृह्ण गृह्ण । हुं झटि स्वाहा । त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति । सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । ईशान्यां दिशि ॐ नमो भगवति ईशानि त्रिशूलहस्ताभ्यां मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय । सर्वतो मां रक्ष रक्ष । ह्रां ग्रस ग्रस । गृह्ण गृह्ण । हुं झटि स्वाहा । त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । तमीशानं

जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम् । पूषा नो यथा वेदसाम-
रक्षिता पायुरदब्धः स्वस्तये । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । ऊर्ध्वायां दिशि ॐ नमो भगवति ब्रह्माणि स्रुक्स्रुवकमण्डल्वक्षसूत्रहस्ताभ्यां मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय । सर्वतो मां रक्ष रक्ष । ह्रां ग्रस ग्रस । गृह्ण गृह्ण । हुं झटि स्वाहा । त्रियम्बकं यजामहे सुगन्धि पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । अधस्ताद्दिशि ॐ नमो भगवति पातालवासिनि विषगलहस्ताभ्यां मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय । सर्वतो मां रक्ष रक्ष । ह्रां ग्रस ग्रस । गृह्ण गृह्ण । हुं झटि स्वाहा । त्रियम्बकं यजामहे सुगन्धि पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । अवान्तरस्यां दिशि ॐ नमो भगवति महालक्ष्मि पद्मारूढे पद्महस्ताभ्यां मम सपरिवारकस्य प्रत्यक्षं बन्धय बन्धय । सर्वतो मां रक्ष रक्ष । ह्रां ग्रस ग्रस । गृह्ण गृह्ण । हुं झटि स्वाहा । त्रियम्बकं यजामहे सुगन्धि पुष्टिवर्धनम् । उर्वारुकमिव

बन्धनान्मृत्योर्मुक्षीय मामृतात् । इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । ॐ नमो भगवति कौमारि शक्तिहस्तेन सर्वतो मां रक्ष रक्ष । हुं झटि स्वाहा । त्रियम्बकं यजामहे सुगन्धि पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माम्रृतात् । इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । ॐ नमो भगवति वाराहि असिहस्तेन सर्वतो मां रक्ष रक्ष । हुं झटि स्वाहा । त्रियम्बकं यजामहे सुगन्धि पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । ॐ नमो भगवति सिद्धचामुण्डेश्वरि शङ्खचक्रहस्ताभ्यां सर्वतो मां रक्ष रक्ष । हुं झटि स्वाहा । त्रियम्बकं यजामहे सुगन्धि पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । यमाय सोमं सुनुत यमाय जुहुता हविः । यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । ॐ नमो भगवति गणेश्वरि परशुहस्तेन सर्वतो मां रक्ष रक्ष । हुं झटि स्वाहा । त्रियम्बकं यजामहे सुगन्धि

पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । मोषुणः परापरा निर्ऋतिर्दुर्हणावधीत् । पदीष्ट तृष्णया सह । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । ॐ नमो भगवति क्षेत्रपालिनि विषज्वाला-हस्ताभ्यां सर्वतो मां रक्ष रक्ष । हुं झटि स्वाहा । त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके । तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । ॐ नमो भगवति नारसिंहि दशननखाग्रैः सर्वतो मां रक्ष रक्ष । हुं झटि स्वाहा । त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । तव वायवृतस्पते त्वष्टुर्जामातरद्भुत । अवां स्या वृणीमहे । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । ॐ नमो भगवति बगळामुखि ब्रह्मास्त्रेण सर्वतो मां रक्ष रक्ष । हुं झटि स्वाहा । त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति । सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै । वर्षन्तु ते विभावरि

दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय । ॐ नमो भगवत्यन्नपूर्णेश्वरि कनकदर्विहस्तेन सर्वतो मां रक्ष रक्ष । हुं झटि स्वाहा । त्रियम्बकं यजामहे सुगन्धि पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम् । पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये । वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय ।

भगवति भवरोगात् पीडितं दुष्कृतौघात्
सुतदुहितृकळत्रोपद्रवैर्व्याप्यमानम् ।
विलसदमृतदृष्ट्या वीक्ष्य विभ्रान्तचित्तं
सकलभुवनमातस्त्राहि मां त्वं नमस्ते ॥

ॐ ह्रीं श्रीं भगवत्यै नमः । ॐ नमो भगवति पद्मारूढे पद्महस्ताभ्यां सर्वतो मां रक्ष रक्ष । हुं झटि स्वाहा ।

लक्ष्मीं क्षीरसमुद्रराजतनयां श्रीरङ्गधामेश्वरी
दासीभूतसमस्तदेववनितां लोकैकदीपाङ्कुराम् ।
श्रीमत्कामकटाक्षलब्धविभवब्रह्मेन्द्रगङ्गाधरां
तां त्रैलोक्यकुटुम्बिनीं सरसिजां वन्दे मुकुन्दप्रियाम् ॥

ॐ ह्रीं श्रीं क्लीं श्रीं सिद्धलक्ष्म्यै स्वाहा । सुवर्णे घर्मं परिवेद वेनम् । इन्द्रस्यात्मानं दशधा चरन्तं स्वाहा । ॐ नमो भगवत्यै सर्वतो भूर्भुवः स्वरोमिति दिग्बन्धः । ॐ ह्रीं दुर्गे स्वाहा ।

वन्दे रुद्रप्रियां नित्यमुत्पन्नां कामरूपिणीम् ।
उल्कामुखीं रुद्रजटीं नागपुष्पशिरोरुहाम् ॥

मं महिषमर्दिनि स्वाहा । ॐ ह्रीं दुं हुं फट् स्वाहा । प्रयोगबीजानि । ॐ क्लीं ह्रीं श्रीं ऐं ग्लौं ॐ ह्रीं क्रौं गं ॐ नमो भगवते महागणपतये स्मरणमात्रसन्तुष्टाय सर्वविद्याप्रकाशकाय सर्वकामप्रदाय भवबन्धविमोचनाय ह्रीं सर्वभूतबन्धनाय क्रों साध्याकर्षणाय क्लीं जगत्त्रयवशीकरणाय सौः सर्वमनःक्षोभणाय श्रीं महासंपत्प्रदाय ग्लौं भूमण्डलाधिपत्यप्रदाय महाज्ञानप्रदाय चिदानन्दात्मने गौरीनन्दनाय महायोगिने शिवप्रियाय सर्वानन्दवर्धनाय सर्वविद्याप्रकाशनप्रदाय द्रां चिरंजीविने ब्लूं संमोहनाय ॐ मोक्षप्रदाय । फट् वशीकुरु वशीकुरु । वौषडाकर्षणाय हुं विद्वेषणाय विद्वेषय विद्वेषय । फट् उच्चाटयोच्चाटय । ठः ठः स्तम्भय स्तम्भय । खें खें मारय मारय । शोषय शोषय । परमन्त्रयन्त्रतन्त्राणि छेदय छेदय । दुष्टग्रहान्निवारय निवारय । दुःखं हर हर । व्याधिं नाशय नाशय । नमः संपन्नाय संपन्नाय स्वाहा । सर्वपल्लवस्वरूपाय महाविद्याय गं गणपतये स्वाहा ।

यन्मन्त्रेक्षितलाञ्छिताभमनघं मृत्युश्च वज्राशिषो
भूतप्रेतपिशाचकाः प्रति हता निर्घातपातादिव ।
उत्पन्नं च समस्तदुःखदुरितं ह्युच्चाटनोत्पादकं
वन्देऽभीष्टगणाधिपं भयहरं विघ्नौघनाशं परम् ॥

ॐ गं गणपतये नमः । ॐ ह्रीं ऐं ईं स्वाहा ।

ईंकारप्रथमाक्षरश्च वदने द्रां द्रीं कुचावेष्टिते
क्लीं नाभिस्थमनङ्गराजसदने ब्लूंकारमूरुद्वये ।
सः पादेऽपि च पञ्चबाणसदने बन्धूकपुष्पद्युतिं
ध्यायेन्नमनिवर्तितेन पुलको गङ्गाप्रवाहो द्रवः ॥

ॐ नमो भगवते कामदेवाय द्रां द्रां द्रावणबाणाय द्रीं द्रीं सन्दीपनबाणाय क्लीं क्लीं संमोहनबाणाय ब्लूं ब्लूं सन्तापनबाणाय सः सः वशीकरणबाणाय ह्रीं ह्रीं मदनावेशबाणाय सकलजनचिन्तितं द्रावय द्रावय। कम्पय कम्पय। हुं फट् स्वाहा। ॐ क्लीं नमो भगवते कामदेवाय श्रीं सर्वजनप्रियाय सर्वसंमोहनाय ज्वल ज्वल प्रज्वल प्रज्वल हन हन वद वद तप तप संमोहय संमोहय सर्वजनं मे वश्यं कुरु कुरु स्वाहा। ॐ ह्रीं श्रीं क्ष्म्रीं क्ष्म्रैं ह्स्रैं सहस्रार हुं फट् स्वाहा। ॐ नमो विष्णवे। ॐ नमो नारायणाय। ॐ नमो जय जय गोपीजनवल्लभाय स्वाहा। सहस्रारज्वालावर्त क्ष्मीं हन हन हुं फट् स्वाहा। ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। ॐ श्रीनारायणस्य चरणौ शरणं प्रपद्ये। श्रीमते नारायणाय नमः।

उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम्।
नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम्॥

ॐ ऐं ह्रीं श्रीं दुं हुं फट् कनकवज्रवैडूर्यमुक्तालङ्कृतभूषणे एह्येहि आगच्छागच्छ मम कर्णे प्रविश्य प्रविश्य भूतभविष्यद्वर्तमानकालज्ञानदूरदृष्टिदूरस्थश्रवणं ब्रूहि ब्रूहि। अग्निस्तम्भनं शत्रुमुखस्तम्भनं शत्रुबुद्धिस्तम्भनं शत्रुगतिस्तम्भनं परेषां गतिमतिवाग्जिह्वास्तम्भनं कुरु कुरु। शत्रुकार्यं हन हन। मम कार्यं साधय साधय। शत्रूणामुद्योगविध्वंसनं कुरु कुरु। वीरचामुण्डि असिकण्टकधारिणि नगरपुरीपट्टणराजधानीसंमोहिनि असाध्यसाधनि ॐ ह्रीं श्रीं देवि हन हन हुं फट् स्वाहा। ॐ अमरदुर्गे ॐ आं ह्रां सौं ऐं क्लीं हुं सौः ग्लौं श्रीं क्रों एह्येहि अमराम्ब सकलजगन्मोहिनि सकलाण्डजपिण्डजान् भ्रामय भ्रामय। राजप्रजावशङ्करि संमोहय संमोहय। महामाये अष्टादशपीठरूपिणि अमलवरयूं स्फुर स्फुर।

प्रस्फुर प्रस्फुर । कोटिसूर्यप्रभाभासुरे चन्द्रजटे मां रक्ष रक्ष । मम शत्रून् भस्मीकुरु भस्मीकुरु । विश्वमोहिनि हुं फट् स्वाहा । ॐ नमो भगवते रुद्राय नमः ।

ॐ नमो भगवते रुद्राय ।
शिरो रक्षतु वाराही चैन्द्री रक्षेद्भुजद्वयम् ।
चामुण्डा हृदयं रक्षेत् कुक्षिं रक्षतु वारुणी ॥
वैष्णवी पादमाश्रित्य पृष्ठदेशे धनुर्धरा ।
यथा ग्रामे तथा क्षेत्रे रक्षेन्मां च पदे पदे ॥
सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥

ब्राह्मि माहेश्वरि कौमारि वैष्णवि वाराहि इन्द्राणि चामुण्डे सिद्धिचामुण्डे क्षेत्रपालिके नारसिंहि महालक्ष्मि सर्वतो दुर्गे हुं फट् स्वाहा ।

भगवन् सर्वविजय सहस्रारापराजित ।
शरणं त्वां प्रपन्नोऽस्मि श्रीकरं श्रीसुदर्शनम् ॥
अरुणी वारुणी रक्षेत् सर्वग्रहनिवारणी ।
सर्वदारिद्र्यशमनी सर्वराजवशङ्करी ॥

सर्वकर्मकारिणि ॐ भूः स्वाहा । ॐ भुवः स्वाहा । ॐ स्वः स्वाहा । ॐ भूर्भुवः स्वः स्वाहा । ॐ आं ह्रीं क्रों ।

फट् फट् जहि महाकृत्ये विधूमाग्निसमप्रभे ।
हन शत्रूंस्त्रिशूलेन क्रुद्धास्ये पिब शोणितम् ॥

देवि देवि महादेवि ह्रीं मम शत्रून् विनाशय विनाशय । अहं न जाने न च पार्वतीशः । अष्टौ ब्राह्मणान् ग्राहयित्वा ततो महाविद्या सिध्यति । अशिक्षिताय नोपयच्छेत् ।

एकविंशतिवाराणि परिजप्य शुचिर्भवेत् ।
पत्रं पुष्पं फलं दद्यात् स्त्रियो वा पुरुषस्य वा ।
अवश्यं वशमित्याहुरात्मना च परेण वा ॥
महाविद्यावतां पुंसां मनःक्षोभं करोति यः ।
सप्तरात्रौ व्यतीतायां स च शत्रुर्विनश्यति ॥
कुबेरं ते मुखं रौद्रं नन्दिमानन्दमावह ।
ज्वरं मृत्युभयं घोरं द्विषं नाशय नाशय ॥

ॐ नमो भगवतेऽमृतवर्षाय रुद्राय हृदयेऽमृताभिवर्षणाय । मम ज्वरदाहशान्तिं कुरु कुरु स्वाहा । ॐ हौं जूं सः मां पालय पालय सः जूं हौं ॐ । ॐ नमो भगवते । भो भोः सुदर्शन दुष्टं दारय दारय । दुरितं हन हन । पापं मथ मथ । आरोग्यं कुरु कुरु । द्विषन्तं हन हन । ठः ठः सहस्रार हुं फट् । भस्मायुधाय विद्महे तीक्ष्णदंष्ट्राय धीमहि । तन्नो ज्वरः प्रचोदयात् ।

समुद्रस्योत्तरे तीरे द्विविदो नाम वानरः ।
चातुर्थिकं ज्वरं हन्ति लिखित्वा यस्तु पश्यति ॥

यस्ते मन्योरिति च चतुर्दशर्चस्य सूक्तस्य रुद्रो दुर्वासास्तपनपुत्रो मन्युर्देवता । अपनिलयन्तामिति बीजम् । संसृष्टमिति शक्तिः । शत्रुं क्षपयेति कीलकम् । मम शत्रुक्षयार्थे जपे विनियोगः । अथ ध्यानम्—

दंष्ट्राकरालवदनं ज्वालामालाशिरोरुहम् ।
कपालकर्तिकाहस्तं रुद्रं मन्युं नमाम्यहम् ॥
यस्ते मन्योऽविधद्वज्र सायक सह ओजः पुष्यति विश्वमानुषक् ।
साह्याम दासमार्यं त्वया युजा सहस्कृतेन सहसा सहस्वता ॥ १ ॥

मन्युरिन्द्रो मन्युरेवास देवो मन्युर्होता वरुणो जातवेदाः ।
मन्युं विश ईळते मानुषीर्याः पाहि नो मन्यो तपसा सजोषाः ॥
अभीहि मन्यो तवसस्तवीयान् तपसा युजा वि जहि शत्रून् ।
अमित्रहा वृत्रहा दस्युहा च विश्वा वसून्या भरा त्वं नः ॥ ३ ॥
त्वं हि मन्यो अभिभूत्योजाः स्वयंभूर्भामो अभिमातिषाहः ।
विश्वचर्षणिः सहुरिः सहावानस्मास्वोजः पृतनासु धेहि ॥ ४ ॥
अभागः सन्नप परेतो अस्मि तव क्रत्वा तविषस्य प्रचेतः ।
तं त्वा मन्यो अक्रतुर्जिहीळाहं स्वा तनूर्बलदेयाय मेहि ॥ ५ ॥
अयं ते अस्म्युप मेह्यर्वाङ् प्रतीचीनः सहुरे विश्वधायः ।
मन्यो वज्रिन्नभि मामा ववृत्स्व हनाव दस्यूनुत बोध्यापेः ॥ ६ ॥
अभि प्रेहि दक्षिणतो भवा मेऽधा वृत्राणि जङ्घनाव भूरि ।
जुहोमि ते धरुणं मध्वो अग्रमुभा उपांशु प्रथमा पिबाव ॥ ७ ॥
त्वया मन्यो सरथमारुजन्तो हर्षमाणासो धृषिता मरुत्वः ।
तिग्मेषव आयुधा संशिशाना अभि प्र यन्तु नरो अग्निरूपाः ॥
अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि ।
हत्वाय शत्रून् विभजस्व वेद ओजो मिमानो वि मृधो नुदस्व ॥
सहस्व मन्यो अभिमातिमस्मे रुजन् मृणन् प्रमृणन् प्रेहि शत्रून् ।
उग्रं ते पाजो नन्वा रुरुध्रे वशी वशं नयस एकज त्वम् ॥१०॥
एको बहूनामसि मन्यवीळितो विशं विशं युधये सं शिशाधि ।
अकृत्तरुक् त्वया युजा वयं द्युमन्तं घोषं विजयाय कृण्महे ॥११॥
विजेषकृदिन्द्र इवानवब्रवोऽस्माकं मन्यो अधिपा भवेह ।
प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आ बभूथ ॥

आभूत्या सहजा वज्र सायक सहो बिभर्ष्यभिभूत उत्तरम् ।
क्त्वा नो मन्यो सह मेद्येधि महाधनस्य पुरुहूत संसृजि ॥१३॥
संसृष्टं धनमुभयं समाकृतमस्मभ्यं दत्तां वरुणश्च मन्युः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अपनिलयन्ताम् ॥

हुं फट् ।

जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरिताऽत्यग्निः ॥
तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् ।
दुर्गां देवीं शरणमहं प्रपद्ये सुतरसि तरसे नमः ॥ २ ॥
अग्ने त्वं पारया नव्यो अस्मान् स्वस्तिभिरति दुर्गाणि विश्वा ।
पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः ॥३॥
विश्वानि नो दुर्गहा जातवेदस्सिन्धुं न नावा दुरिताऽतिपर्षि ।
अग्ने अत्रिवन्मनसा गृणानोऽस्माकं भूत्ववविता तनूनाम् ॥ ४ ॥
पृतनाजितं सहमानमग्निमुग्रं हुवेव परमात् सधस्थात् ।
स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अति दुरिताऽत्यग्निः ॥
प्रत्नोषि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि ।
स्वां चाग्ने तनुवं पिप्रियस्वास्मभ्यं च सौभगमा यजस्व ॥ ६ ॥
गोभिर्जुष्टमयुजो निषिक्तं तवेन्द्र विष्णोरनु सं चरेम ।
नाकस्य पृष्ठमभि सं वसानो वैष्णवीं लोक इह मादयन्ताम् ॥

भास्कराय विद्महे महाद्युतिकराय धीमहि । तन्नो आदित्यः प्रचोदयात् । घृणिः सूर्य आदित्यो न प्रभावात्यक्षरम् । मधु क्षरन्ति तद्रसम् । सत्यं वै तद्रसमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवःस्वरोम् ।

श्रीं श्रीं सोऽहमर्कमहमहं ज्योतिरहं शिवः ।
आत्मज्योतिरहं शुक्रः सर्वज्योतिरसोऽहमोम् ॥
आदित्यं भास्करं भानुं रविं सूर्यं दिवाकरम् ।
नामषट्कं स्मरेन्नित्यं महापातकनाशनम् ॥

कात्यायनाय विद्महे कन्यकुमारि धीमहि । तन्नो दुर्गिः प्रचोदयात् । ॐ नमो भगवति माहेश्वरि ह्रीं श्रीं क्लीं कल्पलते ममाभीष्टफलं देहि । प्रतिकूलं मे नश्यतु । अनुकूलं मे अस्तु । महादेव्यै च विद्महे विष्णुपत्न्यै च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् । ॐ ब्लूं ह्रीं श्रीं क्लीं ब्रह्मेशानि मां रक्ष रक्ष ।

पञ्चम्यां च नवम्यां च पञ्चदश्यां विशेषतः ।
पठित्वा तु महाविद्यां श्रीकामः सर्वदा पठेत् ॥
गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥

श्रीर्मे भजतु । अलक्ष्मीर्मे नश्यतु ।

यां कल्पयन्ति नोऽरयः क्रूरां कृत्यां वधूमिव ।
तां ब्रह्मणे च निर्णुमः प्रत्यक्कर्तारमृच्छतु ॥

यदन्ति यच्च दूरके भयं विन्दति मामिह । पवमान वि तज्जहि ॥

क्षिप्रं कृत्ये निवर्तस्व कर्तुरेव गृहान् प्रति ।
नाशयास्य पशूंश्चैव वीरांश्चास्य निबर्हय ॥

ॐ स्वाहा । यदुदितं भगवति तत्सर्वं शमय शमय स्वाहा । ॐ गायत्र्यै स्वाहा । ॐ सावित्र्यै स्वाहा । ॐ सरस्वत्यै स्वाहा । ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः । तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्तिः

प्रचोदयात् । तत्पुरुषाय विद्महे महासेनाय धीमहि । तन्नः षण्मुखः प्रचोदयात् । तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि । तन्नो गरुडः प्रचोदयात् । वेदात्मनाय विद्महे हिरण्यगर्भाय धीमहि । तन्नो ब्रह्म प्रचोदयात् । नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् । वज्रनखाय विद्महे तीक्ष्णदंष्ट्राय धीमहि । तन्नो नारसिंहः प्रचोदयात् । भास्कराय विद्महे महाद्युतिकराय धीमहि । तन्नो आदित्यः प्रचोदयात् । वैश्वानराय विद्महे लालीलाय धीमहि । तन्नो अग्निः प्रचोदयात् । कात्यायनाय विद्महे कन्यकुमारि धीमहि । तन्नो दुर्गिः प्रचोदयात् । सदाशिवाय विद्महे सहस्राक्षाय धीमहि । तन्नः साम्बः प्रचोदयात् । क्षेत्रपालाय विद्महे तीक्ष्णदंष्ट्राय धीमहि । तन्नो भैरवः प्रचोदयात् । रघुवंश्याय विद्महे सीतावल्लभाय धीमहि । तन्नो रामः प्रचोदयात् । कुलकुमार्यै विद्महे कौलदेवाय धीमहि । तन्नः कौलः प्रचोदयात् । कालिकायै विद्महे श्मशानवासिन्यै धीमहि। तन्नोऽघोरः प्रचोदयात् । ॐ ऐं ह्रीं श्रीं आनन्देश्वराय विद्महे सुधादेव्यै च धीमहि । तन्नो अर्धनारीश्वरः प्रचोदयात् । एं वागीश्वर्यै च विद्महे क्लीं कामेश्वर्यै च धीमहि । तन्नः क्लीं प्रचोदयात् । ऐं त्रिपुरादेव्यै च विद्महे क्लीं कामेश्वर्यै च धीमहि । सौः तन्नः शक्तिः प्रचोदयात् । हंसहंसाय विद्महे सोऽहं हंसाय धीमहि । तन्नो हंसः प्रचोदयात् । यन्त्रराजाय विद्महे महायन्त्राय धीमहि । तन्नो यन्त्रः प्रचोदयात् । तन्त्रराजाय विद्महे महातन्त्राय धीमहि । तन्नस्तन्त्रः प्रचोदयात् । मन्त्रराजाय विद्महे महामन्त्राय धीमहि । तन्नो मन्त्रः प्रचोदयात् ।

यत इन्द्र भयामहे ततो नो अभयं कृधि ।
मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि ॥

स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी ।
वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयंकरः ॥
सहस्रपरमा देवी शतमूला शताङ्कुरा ।
सर्वं हरतु मे पापं दूर्वा दुःस्वप्ननाशिनी ॥
काण्डात्काण्डात्प्ररोहन्ती परुषः परुषः परि ।
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥
या शतेन प्रतनोषि सहस्रेण विरोहसि ।
तस्यास्ते देवीष्टके विधेम हविषा वयम् ॥
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरा ।
शिरसा धारयिष्यामि रक्षस्व मां पदे पदे ॥
ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः ॥

ॐ ह्रीं फट् स्वाहा । खण्फण्म्रसि । ब्रह्मणा त्वा शपामि । ब्रह्मणस्त्वा शपथेन शपामि। घोरेण त्वा भृगूणां चक्षुषा प्रेक्षे । रौद्रेण त्वाङ्गिरसां मनसा ध्यायामि । अघस्य त्वा धारया विध्यामि । अधरो मत्पद्यस्वासौ । उत्तुद शिमिजावरि । तल्पेजे तल्प उत्तुद । गिरीꣳ रनु प्रवेशय । मरीचीरुप संनुद। यावदितः पुरस्तादुदयाति सूर्यः । तावदितोऽमुं नाशय । योऽस्मान् द्वेष्टि । यं च वयं द्विष्मः । खट् फट् जहि । छिन्धी भिन्धी हन्धी कट् । इति वाचः क्रूराणि । नमस्ते अस्तु मा मा हिंसीः । द्विषन्तं मेऽभिराय । तं मृत्यो मृत्यवे नय । संसृष्टं धनमुभयं समाकृतमस्मभ्यं दत्तां वरुणश्च मन्युः । भियं दधाना हृदयेषु शत्रवः पराजितासो अपनिलयन्तां हुं फट् । ॐ ह्रीं कृष्णवाससे नारसिंहवदने महाभैरवि विद्युज्ज्वालाजिह्वे करालवदने प्रत्यङ्गिरे क्ष्म्रीं क्ष्म्रौं ज्वल ज्वल । ॐ नमो नारायणाय । घृणिः सूर्य आदित्यों सहस्रार

हुं फट् । इष्टं रक्ष रक्ष । अरिष्टं भञ्जय भञ्जय स्वाहा । ब्रह्मा नारदाय नारदो बृहत्सेनाय बृहत्सेनो बृहस्पतये बृहस्पतिरिन्द्रायेन्द्रो भारद्वाजाय भारद्वाजो जीवितुकामेभ्यः शिष्येभ्यः प्रायच्छत् क्ष्मीं स्वाहा । नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि । ॐ नमो भगवते श्रीं श्रीमन्महागरुडायामृतकलशोद्भवाय वज्रनखाय वज्रतुण्डवज्रपक्षालङ्कृताय एह्येहि महागरुड हुं फट् स्वाहा । ॐ ह्रीं दुं सर्पोलूककाककपोतवृश्चिकदंष्ट्राग्निविषं नो भयं भूतप्रेतपिशाचब्रह्मराक्षस-सकलकिल्बिषादिमहारोगविषं निर्विषं कुरु कुरु स्वाहा । विन्ध्यस्योत्तरे तीरे मारीचो नाम राक्षसः । तत्र मूत्रपुरीषाभ्यां हुताशनं शमय शमय स्वाहा । ॐ आं ह्रीं क्रों एह्येहि दत्तात्रेयाय स्वाहा । महाविद्यां ज्ञातवतो योऽस्मान् द्वेष्टि योऽरिः स्मरति यावदेकविंशतिं कृत्वा तावदधिकं नाशय ।

ब्रह्मविद्यामिमां दिव्यां नित्यं सेवेत यः सुधीः ।
ऐहिकामुष्मिकं सौख्यं प्राप्नोत्येव न संशयः ॥
अनवद्यां महाविद्यां यो दूषयति मानवः ।
सोऽवश्यं नाशमाप्नोति षण्मासाभ्यन्तरेण वै ॥
अग्रतः पृष्ठतः पार्श्वे ऊर्ध्वतो रक्ष सर्वतः ।
चन्द्रघण्टाविरूपाक्षि त्वां भजे जगदीश्वरीम् ॥
एवं विद्यां महाविद्यां त्रिसन्ध्यं स्तौति मानवः ।
दृष्ट्वा दुष्टजनाः सर्वे तस्य मोहवशं गताः ॥
तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् ।
दुर्गां देवीं शरणमहं प्रपद्ये सुतरसि तरसे नमः ॥
मातर्मे मधुकैटभघ्नि महिषप्राणापहारोद्यमे
हेलानिर्मितधूम्रलोचनवधे हे चण्डमुण्डार्दिनि ।

निश्शेषीकृतरक्तबीजदनुजे नित्ये निशुम्भापहे
शुम्भध्वंसिनि कालि सर्वदुरितं दुर्गे नमस्ते हर ॥
कालदण्डां करालास्यां रक्तलोचनभीषणाम् ।
कालदण्डपरं मृत्युं विजयां बन्धयाम्यहम् ॥
पञ्चयोजनविस्तीर्णे मृत्योश्च मुखमण्डलम् ।
तस्माद्रक्ष महाविद्ये भद्रकालि नमोऽस्तु ते ॥

अव ब्रह्म द्विषो जहि ।

वारिजलोचनसहाये वारिगतिं वारयासुकरनिकरैः ।
पीडितमत्र भ्रान्तं मामनिशं पालय त्वमनवद्ये ॥

अव ब्रह्म द्विषो जहि । ॐ ह्रीं श्रीं क्लीं सिद्धलक्ष्मि स्वाहा । ॐ क्लीं ह्रीं श्रीं ॐ आवहन्ती वितन्वाना । कुर्वाणा चीरमात्मनः । वासांसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमावह । लोमशां पशुभिः सह स्वाहा ।

श्रिये जातः श्रिय आ निरियाय श्रियं वयो जरितृभ्यो दधाति ।
श्रियं वसाना अमृतत्वमायन् भवन्ति सत्या समिथा मितद्रौ ॥

ॐ ह्रीं श्रीं क्लीं ब्लूं फ्रों आं ह्रीं क्रों हुं फट् स्वाहा । सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै ।

देहमध्यगतो वह्निर्वह्निमध्यगता द्युतिः ।
द्युतिमध्यगता दीप्तिर्दीप्तिमध्यगतः शशी ॥
शशिमध्यगतं देव्याश्चक्रं परमशोभनम् ।
तन्मध्ये च गतो बिन्दुर्बिन्दुमध्यगतं मनः ॥

मनोमध्यगतो नादो नादमध्यगताः कलाः ।
कलामध्यगतो जीवो जीवमध्यगता परा ।
जीवः परः परो जीवः सर्वं ब्रह्मेति भावयेत् ॥

ॐ शान्तिः शान्तिः शान्तिः

इत्याथर्वणरहस्ये वनदुर्गोपनिषत् समाप्ता

---

# श्यामोपनिषत्

ॐ क्रीं अथ हैनां ब्रह्मरन्ध्रे ब्रह्मस्वरूपिणीमाप्नोति सुभगां शुभधातुकामरेफेन्दिरासमष्टिरूपिणीमेतत्त्रिगुणमादौ तदनु कूर्चबीजद्वयं व्योमषष्ठस्वरबिन्दुमेलनरूपं तदनु भुवनेशीद्वयं भवतु व्योमज्वलनेन्दिराशून्यमेलनरूपं ततो दक्षिणे कालिके चेत्यपि ततो मुखबीजसप्तकमुच्चार्य बृहद्भानुजायामुच्चरेत् । अयं स मन्त्रोत्तमः । य इमां सकृज्जपन् स तु देवेश्वरः । स तु विश्वेश्वरः । स तु नारीश्वरः । स तु सर्वगुरुः । स तु सर्वनमस्यः । स तु सर्ववेदैरधीतो भवति । स सर्वेषु तीर्थेषु स्नातो भवति । स स्वयं सदाशिवः । त्रिकोणं त्रिकोणं त्रिकोणं त्रिकोणं पुनश्चैव त्रिकोणं साष्टपत्रं सकेसरं भूपुरैकेण संयुतं तस्मिन्देवीं हृल्लेखामङ्के विन्यस्य ध्यायेत् । अभिनवजलदनीला कुटिलदंष्ट्रावराभयखड्गमुण्डसहितहस्ता कालिका ध्येया । काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी विप्रचित्तेति बहिः षट्कोणगाः । उग्रा उग्रप्रभा दीप्ता नीला घना वलाका मात्रा मुद्रा अमितेति नवकोणगाः । ब्राह्मी नारायणी माहेश्वरी चामुण्डा वाराही नारसिंही कौमारी चापरा-

जितेत्यष्टपत्रगाः । चतुष्कोणेषु चत्वारो माधवरुद्रविनायकसौराः । दिक्षु दिक्पालाः । देवीं सर्वाङ्गेणादौ संपूज्य भगोदकेन तर्पणं पञ्चमकारेण पूजनमेतस्याः । एवं द्वित्रिक्रमेण कुर्वाणा मुनयो भवन्ति । नारिमित्रादि-लक्षणमस्यवर्तते । अमुष्या मन्त्रपाठकस्य गतिरस्ति । नान्यस्येह गतिरस्ति । एतस्यास्तारामनोर्दुर्गामनोस्सुन्दरीमनोर्वा सिद्धिरिदानीम् । सर्वाः सुप्ता भूताः । असिताङ्गी जागर्ति । इमामसिताङ्ग्युपनिषदं योऽधीते अपुत्री पुत्री भवति । योऽन्यस्य वरदो दृष्ट्या जगन्मोहयेत् । गङ्गादितीर्थक्षेत्राणामग्निष्टो-मादियज्ञानां फलभागीयते ।

इत्याथर्वणे सौभाग्यकाण्डे श्यामोपनिषत् समाप्ता

---

# श्रीचक्रोपनिषत्

ॐ अथाह वै श्रीचक्रे नित्याक्रान्ते ।

गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥

इति प्रत्यहं ससङ्गति सहस्रं कलशान् स्थाप्य शतं वा नव वा सर्वाभावे पूर्णाभिषेकं चरेत् । अष्टाष्टकं चरेत् । पञ्चपञ्चकं वा चरेत् । सर्वाभावे शतं पूजयेत् । अमृतत्वं गच्छति । श्रीचक्रन्यासं चरेत् । स व्यापकत्वं गच्छति । मूलाधाराद्बिलान्तं क्रमेण न्यसेत् । स्वराट्चक्रं विराट्चक्रं सम्राट्चक्रं विराज्यचक्रं विश्वरूपचक्रं शत्रुजिच्चक्रं क्रमेण सप्तकलामयं न्यसेत् । स शिवो भवेत् । स कविर्भवेत् । स सर्वसिद्धीश्वरो भवेत् । स नवनाथाधिष्ठितो

भवेत् । स भुवनाराधितो भवेत् । निर्विकल्पेन मनसा यश्चरेच्छक्तिदेहे स कालीरूपो भवेत् । विना शक्तिं न मोक्षो न ज्ञानं न सत्यं न धर्मो न तपो न हरिर्न हरो न विरिञ्चिः । सर्वं शक्तियुक्तं भवेत् । तत्संयोगात् सिद्धीश्वरो भवेत् । इति शिवम् ॥

इत्याथर्वणे सौभाग्यकाण्डे श्रीचक्रोपनिषत् समाप्ता

---

# श्रीविद्यातारकोपनिषत्

## शं नो मित्रः शं वरुणः—इति शान्तिः

### प्रथमः पादः

अथैनमगस्त्यः पप्रच्छ हयग्रीवं किं तारकं किं तरति । स होवाच हयग्रीवः । तारदीर्घानुलम्बिपूर्वकं प्रथमं खण्डं ततो द्वितीयं खण्डं ततस्तृतीयं खण्डं ततश्चतुर्थं खण्डं ब्रह्मात्मसच्चिदानन्दात्मकमन्त्रमित्युपासितव्यम् । अकारः प्रथमकूटाक्षरो भवति । उकारो द्वितीयकूटाक्षरो भवति । मकारस्तृतीयकूटाक्षरो भवति । अर्धमातृका चतुर्थकूटाक्षरो भवति । बिन्दुः पञ्चमकूटाक्षरो भवति । नादः षष्ठकूटाक्षरो भवति । तारकत्वात्तारको भवति । तदेव मन्त्रतारकं भवति । तदेव मन्त्रतारकब्रह्म त्वं विद्धि । तदेवोपासितव्यम् । गर्भजन्ममरणसंसारमहद्भयात्तं तारयति । तारकमित्येतत्तारकं ब्राह्मणो नित्यं महीयते । स पाप्मानं तरति । स मृत्युं तरति । स ब्रह्महत्यां तरति । स भ्रूणहत्यां तरति । स वीरहत्यां तरति । स सर्वं तरति । स संसारं तरति । सोऽविमुक्तमाश्रितो भवति ।

अकाराक्षरसंभूता वाग्भवा विश्वभाविता ।
उकाराक्षरसंभूता तेजसः कामराजका ॥
प्राज्ञो मकारसंभूता तार्तीया च तृतीयका ।
अर्धमात्रा षोडशी च ब्रह्मानन्दैकविग्रहा ॥
तस्याः सान्निध्यवशतो जगदानन्ददायिनी ।
उत्पत्तिस्थितिसंहारकारिणी सर्वदेहिनाम् ॥
त्रिकूटा भवति ज्ञेया मूलप्रकृतिसञ्ज्ञता ।
प्रकृतिः प्रणवत्वाच्च सा त्रिकूटत्रयात्मिका ॥

एवं यच्चान्यत् त्रिकालातीतम् । चतुष्कूटात्मिकैव सर्वकूटात्मिका ब्रह्ममयी । तुर्यात्मब्रह्मा सोऽयमात्मा चतुष्पाज्जगतः स्थानं न बहिःप्रज्ञं नोभयतःप्रज्ञं सप्ताङ्ग एकोनविंशतिमुखः । स्थूलभुग्वैश्वानरात्मिकां कामपीठालयां मित्रेशनाथात्मिकां जाग्रद्दशाधिष्ठायिनीमिच्छाशक्त्यात्मिकां कामेश्वरीं प्रथमकूटां मन्यन्ते ।

इति प्रथमः पादः

---

### द्वितीयः पादः

स्वप्नस्थानेऽनन्तः संज्ञासप्ताङ्ग एकोनविंशतिमुखः प्रविभक्तोऽभूत् । तैजसात्मिकां जालन्धरपीठालयां षष्ठीशनाथात्मिकां वज्रेश्वरीं विष्ण्वात्मिकां क्रियारूपां स्वप्नावस्थानस्थितिरूपामिच्छाशक्तिस्वरूपिणीं द्वितीयकूटां मन्यन्ते ।

इति द्वितीयः पादः

---

## तृतीयः पादः

यत्र सुप्तो न कञ्चन कामं कामयते तत्सुषुप्तम् । पश्यन्ति यत् सुषुप्तिस्थान एकीभूतप्रज्ञानघन एवानन्देऽभूत् । इच्छाशक्तिरूपां स्वप्नावस्थानसुषुप्तिदशाधिष्ठायिनीं सानन्दकलां तृतीयकूटां मन्यन्ते ।

इति तृतीयः पादः

---

## चतुर्थः पादः

एषा सर्वेश्वर्येषा सर्वोत्तमैषान्तर्याम्येषा योनिः सर्वेषां प्रभवाप्ययौ हि भूतानाम् । नोभयतःप्रज्ञां प्रज्ञानघनां न प्रज्ञां नाप्रज्ञामदृष्टामव्यवहार्यामग्राह्यामलक्षणामचिन्त्यामव्यपदेश्यामेकात्मप्रत्ययसारां प्रपञ्चोपशमनीं शान्तां शिवामद्वैतां षोडशाक्षरीं स्फुरत्तादशाधिष्ठायिनीं चतुर्थखण्डात्मिकां मन्यन्ते । सात्मा विज्ञेया । सदोज्ज्वलाविद्या । तत्कार्यहीना स्वात्मबन्धहरा सर्वदाद्वैतानन्दरूपा सर्वाधिष्ठानसन्मात्रा निरस्ताविद्यातमोमोहाहमेवेति संभाव्याहमों तत्सद्यत् परंब्रह्म चतुष्कूटा परंज्योतिस्साहमोमित्यात्मानमादाय मनसा चतुष्कूटामेककार्यों तदा चतुष्कूटाहमिति तत्पराः प्रवदन्ति । येन ते संसारिण आत्मना विरागा एव । न संसारिणः । य एवं वेद स मुक्तो भवति स मुक्तो भवति इत्यगस्त्यः । इत्युपनिषत् ।

इति चतुर्थः पादः

इति श्रीविद्यातारकोपनिषत् समाप्ता

---

# षोडोपनिषत्

अथाह वै श्म शवः शानं शयनं शवानां शयनं श्मशानं तदधिष्ठानो महाकालस्तत्पर्यङ्कसमासीनां विश्वव्यापकरूपिणीं कालीं कालादिसंत्रासात् कालीं चतुर्युगाधिष्ठात्रीं स्वस्मिन् भाव्य षोढां न्यसेत् । स्थानशुद्धिन्यासं विधाय षोढां न्यसेत् । अथ षोढान्यासी षट्कालित्वं गच्छति । सेयं षट्कला परा परात्परा परात्परातीता चित्परा चित्परात्परा चित्परात्परातीता । षण्णां योगे षोढा भवेत् । वैष्णवकलायुक्तां मातृकायुक्तां वैष्णवीं न्यसेदिति प्रथमः । स परारूपो भवेत् । स भूमिं जयति । स शक्तिरूपो भवेत् । अथ वै कामकलापुटितां श्रीकलां श्रीकलापुटितां कामकलां लिपिस्थाने न्यसेत् । द्वितीयारूपो भवेत् । सोऽमृतत्वं गच्छति । स जलं तरतीति वै यज्ञे गीर्णं भवति । आदिकलापुटितां श्रीकलां श्रीकलापुटितामादिकलां मातृस्थाने न्यसेत् । स सिद्धीश्वरो भवेत् । स वह्निं जयति । दिवारात्रि-व्यापी भवेत् । कूर्चं चन्द्रं कूर्चं चन्द्रमन्तर्दंष्ट्रिमद्दीपनमन्त्रं राज्ञीपुटितमेतेन पुटितां राज्ञीं न्यसेत् । स खेचरो भवेत् । स वायुपुरगामी भवेत् । स कलावान् भवेत् । चतुर्थीरूपो भवेत् । अनुलोमविलोमेन मूलमन्त्रं केवलं न्यसेत् । विद्यान्यासरूपो भवेत् । सर्वं जयति । स पञ्चमीरूपो भवेत् । स चाकाशं जयति । अष्टोत्तरशतानुलोमविलोमाकृतिक्रमेण देवतां व्यापयेत् । स ध्वनिरूपो भवेत् । सर्वं जयति । सर्वं जरति । महापात-कोपपातकानि तरति । वयःस्थैर्यकरो भवेत् । अष्टसिद्धिदाता भवेत् । तद्दर्शनेन देवत्वं भवेत् । षष्ठीकलावान् भवेत् । विश्वरूपो भवेत् । यं पश्यति तं शिवं कुरुते । नमस्कारान्मूर्तिस्फोटो भवेत् । स गारूपनाशको भवेत । स महेन्द्रजालदर्शको भवेत् । तद्दर्शनात् सिद्धीश्वरो भवेत् । पुटिति

छिन्नाकल्पासुन्नायामङ्गषोढां न्यसेत् । तत्स्पर्शादष्टलोहस्पर्शो भवेत् । शक्तिकुण्डे जिह्वां नाडीं वा न्यस्य यो जपेत् स कालीरूपो भवेत् । इति शिवम् ॥

इत्याथर्वणे सौभाग्यकाण्डे षोढोपनिषत् समाप्ता

---

# सुमुख्युपनिषत्

अथैनामावाहयाम्यनवद्यां शवाधिरूढां रक्तवस्त्रालङ्कारयुक्तां रक्तपीठोपविष्टां गुञ्जाहारविभूषितहृदयां षोडशसमासमाकारां युवतीं पीनोन्नतघनस्तनीं स्वहृदये चिन्तयित्वोच्छिष्टपदमाभाष्य चण्डालिनीमभिमतां सुमुखीं तदन्ते देवीं चोक्त्वा महापिशाचिनीं तस्माद्धरामग्निमायां बिन्दुमौलिनीं समुच्चार्य ठान्तत्रयं सविसर्गं समुद्धृत्य देवीं हृदये विभाव्य ईङ्कारस्वरूपं सबिन्दुमुखं युग्मस्तनपदान्तं भावयित्वा यन्त्रं योनिं तदुपरि शिववक्त्रयोनिमष्टपत्रं षोडशाब्जकं वृत्तमेकं चतुरश्रं यन्त्रराजं विचिन्त्यादौ देवीमावाह्य बिन्दौ गन्धाक्षतपुष्पधूपदीपान् संस्कृतान्नं नानाविधं निवेद्याद्यं पलं मीनाद्यन्नं मूलेन मूलां सन्तर्प्य संस्कृतां पुरस्कृतां योनिं देवतायै निवेदयेत् । सुकृती चतुरश्रान् देवानिन्द्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानान् वामावर्तेन संपूज्य षोडशाब्जके कलावती कपालिनी कल्याणी नित्या कमला क्रिया कृपा आकुला कुलीना कुमारी कुण्डला आकरा किशोरी कोमला कल्पा कुमुदा एताः पूजयेत् । अष्टाब्जे ब्राह्मी माहेश्वरी कौमारी वैष्णवी वाराही इन्द्राणी चामुण्डा महालक्ष्मीः । ततो योनिपञ्चके चन्द्रा चन्द्रानना चारुमुखी चामीकरप्रभा चतुरा । ततो योनौ वामा ज्येष्ठा रौद्री । तदन्ते रतिप्रीति-

मनोभवाः पूज्याः । प्रान्ते पूजां सन्तर्प्य पुनर्नैवेद्यं बहुगुणं निवेद्यारात्रिकं निवेद्य परां पूजयन् महाछत्रचामरादिसर्वदेवैर्नमस्कृतामाद्यशक्तिमष्ट-जातीयां स्वयं भैरवो भूत्वा कुलाकुलामृतैर्देवीं सन्तर्प्य स्वहृदये तां परां विसृज्य सुखेनैव शिवशक्त्यात्मको भावयन् विहरेत् । स सिद्धीश्वरो भवेत् । स सर्वेश्वरो भवेत् । स लोकाध्यक्षो भवेत् । भवो भूत्वा विभावयति ॥

इत्याथर्वणे सौभाग्यकाण्डे सुमुख्युपनिषत् समाप्ता

---

# हंसषोढोपनिषत्

अथाह वै हंसषोढान्यासी शिवो भवेत् । सर्वसिद्धीश्वरो भवेत् । एतत्फलं वक्तुं सदाशिवोऽपि न समर्थः । षोढान्यासस्य विरूपाक्षमहाकाल ऋषिः । अनुष्टुप् छन्दः । काली देवता । कालीदेहार्थे विनियोगः । हंसेनाङ्ग-षट्कम् । स निर्वाणरूपो भवेत् । हंसः कं खं गं घं ङं महामुण्डमालाधारिणि महाकालप्रिये मां रक्ष रक्ष । षट्चक्रवासिनि वागीश्वरि जिह्वाग्रे वस । हं नमः शिरसि प्रोतं वेद शिवो भवेत् । हंसः चं छं जं झं ञं महात्रि-पुरभैरवि पुस्तकाक्षमालाधारिणि शत्रुमुखस्तम्भनं कुरु कुरु स्वाहेति महा-पद्मे । हंसः टं ठं डं ढं णं डां डीं डं डाकिनि मां रक्ष रक्ष स्वाहेत्य-नाहते न्यसेत् । तृतीयारूपो भवेत् । हंसः तं थं दं धं नं महामारि मार-हारिणि हुं हुं दारिद्र्यं हर हर स्वाहा । गुं न्यसेत् । स ब्रह्मकालीत्वं गच्छति । चतुर्थत्वं गच्छति । हंसः पं फं बं भं मं मार्जारि वीरावलि ममालस्यं नाशय नाशय । हंसः यं रं लं वं शं षं सं हं लम्बोदरि मातर्महामङ्गलप्रिये

मम जाड्यं छेदय छेदय । भ्रंश भ्रंश । भगवति मां रक्ष रक्ष । भुवनधारिणि मां धारय धारय । स्वाहापदद्वयं न्यस्य शिवो भवेत् । अथ वै षष्ठीं न्यसेत् । हंसः लं क्षं महालक्ष्मि राजराजेश्वरि महाकालप्रिये कालखण्डिनि खण्डिनि खण्डय खण्डय खां खीं खूं खैं खौं खौं खः खनित्रि समे स्वाहेति सर्वाङ्गे न्यसेत् । हंसः पञ्चाशत् व्यापकं कुर्यात् । इति षष्ठी । स शिवो भवेत् । स सोमयाजी भवेत् । स विरक्तो भवेत् । स सर्वदीक्षितो भवेत् । सोऽमृतत्वं गच्छति । स सर्वकालत्वं गच्छति । स सर्वन्यासकारी भवेत् । अनधीतगतिर्विद्यां लभेत् । कर्तव्याकरणादिकर्ता भवेत् । सर्वसिद्धीश्वरो भवेत् । कालीरूपो भवेत् । सोऽहं हंस इत्याह भगवान् सदाशिव इति प्रोतं वेद ॥

इत्याथर्वणे सौभाग्यकाण्डे हंसबोढोपनिषत समाप्ता

---

# हमारे महत्त्वपूर्ण प्रकाशन

**भारतीय दर्शन शास्त्र : न्याय-वैशेषिक**
—धर्मेन्द्रनाथ शास्त्री ३.००
**भारतीय तर्कबोध : न्याय**—अनिरुद्ध झा १.२५
**दर्शन और चिंतन**—सुखलाल संघवी ७.००
**धर्मदर्शन की रूपरेखा**—हरेन्द्र प्रसाद सिन्हा **प्रेस में**
**धर्मदर्शन**—बसंत कुमार लाल ,,
**हठयोगप्रदीपिका**— ३.५०
**हिन्दू आचार दर्शन**—डी० एन० सहाय १-६०
**जातकमाला**—सूर्यनारायण चौधरी १२.५०
**न्यायसिद्धान्तमुक्तावली, प्रत्यक्षखंड**
—धर्मेन्द्रनाथ शास्त्री १५.००
**पाश्चात्यदर्शन**—अशोक कुमार वर्मा ५.५०
**पाश्चात्य आगमन तर्कशास्त्र**
—मसीह तथा झा ६.५०
**पाश्चात्य निगमन तर्कशास्त्र**—अनिरुद्ध झा ७.७५
**पातञ्जल योगदर्शन**—हरिहरानन्द ३०.००
**प्रारम्भिक आचार शास्त्र**
—अशोक कुमार वर्मा १३.००
**प्रारम्भिक समाज दर्शन**
—अशोक कुमार वर्मा ७.००
**प्रत्यभिज्ञाहृदयम्**—ठाकुर जयदेव सिंह १२.००
**सांख्यकारिका तत्त्वकौमुदी सहित,** (हिन्दी टीका)
—रमाशंकर भट्टाचार्य (सजिल्द) २५.००
**संक्षिप्त सामान्य दर्शन**—अशोक कुमार वर्मा ५.५०
**सरल आगमन तर्कशास्त्र**
—अशोक कुमार वर्मा ८.५०
**सरल निगमन तर्कशास्त्र**
—अशोक कुमार वर्मा १२.००
**सरल तर्कशास्त्र (निगमन और आगमन)**
—अशोक कुमार वर्मा ६.५०
**तर्कसंग्रह** (सम्पूर्ण)—दयानन्द भार्गव १५.००
**वैदिक धर्म एवं दर्शन**—दो भागों में
—कीथ, अनु० सूर्यकान्त ५०.००
**योगसारसंग्रह** (मूल तथा हिन्दी) २.००

**मोतीलाल बनारसीदास**
दिल्ली :: वाराणसी :: पटना

# एकादशोपनिषद्

अमरदास जी

विषय की दृष्टि से महत्त्वपूर्ण ग्यारह उपनिषदों का यह संग्रह है। इन पर ईश, केन, कठ, प्रश्न, मुण्डक, माण्डूक्य, तैत्तिरीय और ऐतरेय उपनिषदों पर स्वामी अमरदास जी उदासीन की उपनिषन्मणिप्रभा, छान्दोग्य और बृहदारण्यक पर नित्यानन्दाश्रम की मिताक्षरा और कैवल्य उपनिषद् पर शंकरानन्द की दीपिका भी दी गई है।

रु. १५

# ईशादि-दशोपनिषद्

उपनिषदों में ईश, केन, कठ, प्रश्न, मुण्डक, माण्डूक्य, तैत्तिरीय, ऐतरेय, छान्दोग्य और बृहदारण्यक प्रसिद्ध हैं। इन पर श्री शंकराचार्य ने भाष्य भी किया है। यह पुस्तक इन दस उपनिषदों का शांकरभाष्य सहित संग्रह है।

अजिल्द रु. ३० सजिल्द रु. ४५

# केनोपनिषद्

यमुनाप्रसाद त्रिपाठी

इस उपनिषद् में मंत्र, पदच्छेद, अन्वय, शब्द, शब्दार्थ, भावार्थ, हिन्दी व्याख्या और अंग्रेजी रूपान्तर है। परिशिष्टों में डा० राधाकृष्णन्, स्वामी गम्भीरानन्द, गया प्रसाद, सर्वानन्द और अरविन्द द्वारा किये गये अंग्रेजी रूपान्तर हैं। स्वामी दयानन्द के एवं दामोदर सातवलेकर के हिन्दी अनुवाद भी जोड़े गये हैं।

रु. १०